# रस्वती सुषमा

## न्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका




## स्वर्णजयन्ती-विशेषा

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका



## संस्कृतवर्षे

## स्वर्णजयन्ती-विशेषाङ्कः

प्रधानसम्पादकः

**प्रो. राममूर्तिशर्मा**

कुलपतिः

सम्पादकः

**डॉ. हरिश्चन्द्रमणित्रिपाठी**

निदेशकः, प्रकाशनसंस्थानस्य

५१ वर्षे

१-४ अङ्काः

वार्षिकं मूल्यम् - १०० रूप्यकाणि

जून-सितम्बर-दिसम्बर-मार्च, १९९६-९७

# परामर्शदातृसम्पादकमण्डलम्



* * *

*प्रकाशकः —*

**डॉ॰ हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

*मुद्रकः —*

**श्रीजी-कम्प्यूटर प्रिण्टर्स**
नाटी इमली,
वाराणसी–२२१००२

*प्राप्तिस्थानम् —*

**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी–२२१००२

# प्रस्तावना

अद्य खलु महान्तमानन्दकन्दसन्दोहमनुबोभवीतितरां मे चेतो यत्सम्प्रति सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रतिनिधिभूता अनुसन्धानपत्रिका त्रैमासिकी **'सारस्वती सुषमा'** अन्वर्थनाम्नी लोकत्रयसुषमां स्वसुषमयोपहसन्ती पञ्चाशतो वर्षेभ्यः श्रीमतां धीमतां सारस्वतीः सेवाः सम्पाद्य, सपदि एकपञ्चाशद्वार्षिकी सती स्वर्णजयन्तीवर्षे हर्षवर्षप्रकर्षोत्कर्षं स्पर्शं स्पर्शं पुनस्तरां भवतां सेवासूपतिष्ठति। एकपञ्चाशद्वार्षिकी अपीयं चिरयौवनेव नितरां नवनवायमाना वाङ्माधुरीधुरीणा पदविन्यासमेदुरा नानाध्वनिसमुद्भूतसरसार्थसुभगा भावाभिव्यञ्जनलास्यलालिता गूढार्थप्रकाशविभवा वीणागुणक्वणनरणमयी हंसकझङ्कारनिनादन्यक्कृतकल-हंसरवनन्दिता कोकिलकाकलीधना भागीरथीप्रवाहाद्भुता सततं विराराजीतितमां नितमामिति सत्सम्मतं मतमिति निर्विवादो वादोऽस्तीति मदीयं मनः।

सारस्वत्याः सुषमायाः काचिन्महती पारम्परी विलसतीति भूतार्थं वचः। इयं पारम्परी न केवलमस्याः शोधपत्रिकायाः, अपि तु विदुषाम्, शोधकर्तॄणाम्, काशिकराजकीयसंस्कृतमहाविद्यालयस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, सरस्वतीभवनस्य, प्रकाशनस्य, हस्तलिखितग्रन्थसङ्ग्रहस्य, संस्कृतवाङ्मयस्येति सर्वसामस्त्येन भारतस्य परम्परेति व्याहर्तुं शाशक्यतेरूपमिति बोध्यम्।

कदाचित् काशीविद्यासुधानिधिः, दि पण्डित पत्रिका, सरस्वतीभवनस्टडीज़, सरस्वतीभवनाध्ययनमाला-सरस्वतीभवनग्रन्थमाला इति तैस्तैरभिरूपैर्नामभी राजिता सेयं साक्षात् सरस्वतीव **'सारस्वती सुषमा'** सुधियां सविधे शोभते साम्प्रतमिति सर्वं साम्प्रतमेव। पूर्वमप्यस्या बहवो विशेषाङ्काः प्रकाशिताः, तेषु म.म. गोपनीथ-कविराजविशेषाङ्कः, शङ्कराचार्यविशेषाङ्कः, रजतजयन्तीविशेषाङ्कश्च नितरां प्रसिद्धिं गता इति पारेगिरां गौरवमास्माकीनम्। अतः परमपि पद्मभूषणबलदेवोपाध्याय-महाकविश्रीवसन्तत्र्यम्बकशेवडेमहोदयविषयकौ विशेषाङ्कौ सङ्कल्पितौ, सम्प्रति स्वर्णजयन्तीविशेषाङ्कोऽयं स्ववैशिष्ट्येन श्रीमतां मनोविनोदायालमिति निश्चिनोमि।

सम्प्रति पण्डितराज-पद्मभूषण-श्रीराजेश्वरशास्त्रिमहोदयानां शताब्दीसमारोहाः प्रचलन्ति, तद्विषयकोऽपि कश्चन विशेषाङ्को हि सङ्कल्पित इति सुधीभिर्विभावनीयम्।

**'सारस्वती सुषमा'** इति काचित् पत्रिका एव न, अपि तु काचिद् ग्रन्थमाला इति मदीया मतिः। निखिलं संस्कृतवाङ्मयमधीत्य यल्लब्धुं शक्यम्, तत्सर्वमत्र लब्धुं शक्यम्, तत्तद्विषयलेखानां न्यक्षेणात्र सङ्ग्रहात्, अत एवेयं **'सारस्वती सुषमा'** इत्यन्वर्थनाम्नी नितरामभिचाकशीति।

अत एतद्विश्वविद्यालयीयानां तद्भिन्नानामपि विदुषां लेखाः सङ्गृहीता इति दर्शं दर्शं सारस्वत्यां सुषमायां समेषां सङ्ख्यावतां सामस्त्येन ऐक्यमेव, तत्र काचिद् भेदकोटिर्नावगाहते, इत्यप्यन्यत् परमं प्रमोदास्पदं पदमिति निरीक्षकाणां प्रत्यक्षेवेत्यलं क्षोदक्षेमेण।

एतत्सम्पादने प्रकाशननिदेशकानां सामस्त्येन साहाय्यमारचयन्त एतद्विश्वविद्यालयस्य सहायकच्छात्रकल्याणसङ्कायाध्यक्षा वरिष्ठनव्यव्याकरण-प्राध्यापकाः **श्रीमनुदेवभट्टाचार्याः** प्रतिलेखं दर्शं दर्शम्, तेषां परिष्करण-शोधना-दिकर्म सम्पाद्य, यथास्थानं यथाकालमुपस्थाय, स्वर्णजयन्तीविशेषाङ्के यथाविषयं वस्तुजातं निवेश्य महदानुकूल्यमाचरन्तोऽपि सततं धन्यवादास्पदमिति।

किञ्च, विश्वविद्यालयीयाः सर्वेऽपि अधिकारिशिक्षकच्छात्रकर्मचारि-परिचारकरूपपरिवारजनाः कारणभूतमिति निश्चितमेव, तत्रापि प्रकाशनसंस्थान-निदेशका **डॉ. हरिश्चन्द्रमणित्रिपाठिमहोदयाः**, तत्सहायकौ **डॉ. हरिवंशकुमार-पाण्डेय-डॉ. ददन-उपाध्यायौ,** प्रकाशनविभागीयान्यसहयोगिनश्च विशेषतो धन्यवादार्हाः। तत्क्रम एव विशेषाङ्कस्यास्य मुद्रकः 'श्रीजी-कम्प्यूटर-प्रिन्टर्स' इत्याख्यमुद्रणालयसञ्चालकः **श्री-अनूपकुमारनागर**महोदयोऽपि धन्यवादार्हः। ये च लेखकाः, कवयः स्वकृतिसमर्पणेन सारस्वतीं सुषमां वर्धयन्ते, ते नितरां स्वजनाः, सरस्वतीपुत्राः, विश्वविद्यालयेन समं तादात्म्यं बिभ्राणाः सर्वेऽपि अस्मत्पक्षतः सततं धन्यवादास्पदमिति विज्ञापयामि।

अन्ते च शासनस्य, प्रशासनस्य यथाऽऽनुकूल्यं पूर्वमपि तथैवाग्रेऽपि लभ्यं स्यात्, येन इतोऽपि अधिकतरं प्रकाशनं विश्वविद्यालयो विदध्यादिति निवेद्य, काशीश्वरं भवानीजानिं विश्वनाथं शिरसा प्रणम्य विरमामि।

रामर्मूतिशर्मा

**वारणस्याम्**
श्रीकृष्णजन्माष्टम्याम्,
वि.सं. २०५६

**राममूर्तिशर्मा**
*कुलपतिः*
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# सम्पादकीयम्

**कूजद्वसन्त-ऋतुपञ्चमसञ्चितश्रीः**
**वीणागुणक्वणनरागरसातिहृद्या।**
**झङ्कारनूपुररवाद्भुतशिञ्जिताढ्या**
**सारस्वतीह सुषमाऽस्त्यसमा समेषाम्।।**

अथेह प्रस्तूयते सारस्वत्यास्सुषमायाः स्वर्णजयन्तीविशेषाङ्कोऽयं सहृदयानां शयकुशेशयेषूपहारस्तवस्तबकपुष्पस्वच्छगुच्छायमानः।

अस्ति किल सारस्वत्यास्सुषमायाः कश्चन महान् इतिहासः। ब्रिटिशशासनसमये गवर्नमेण्टसंस्कृतकालेजः खलु एकनवत्युत्तरसप्तदशशततमखीष्टाब्दे स्थापितः, ततः केभ्यश्चिद् वर्षेभ्यः पश्चात् **'सरस्वतीभवन'-पुस्तकालयः** स्थापितः, यत्र डॉ॰ ए॰ वेनिसमहोदयस्य कृतित्वं सर्वथा सर्वैस्स्वीकार्यमित्यत्रार्याः प्रमाणम्, काले गते बहुतिथे संस्कृतस्वाभाव्यात् संस्थेयं काशिराजस्य सुमहासहयोगजीवातुरूपा सती काशिकराजकीयसंस्कृतमहाविद्यालयेति महनीयनाम्नाऽऽम्नायते स्म।

गच्छत्सु कालेषु वैदेशिकैर्देशिकैरत्रत्याध्यक्षैः **'दि पण्डित-पत्रिका' 'काशीविद्यासुधानिधिः', 'सरस्वतीभवनाध्ययनमाला', 'सरस्वतीभवन-ग्रन्थमाला'** इत्यादिभिर्नामभिः पत्रिका प्राकाश्यत।

**सरस्वतीभवनं** पाण्डुलिपिपुस्तकालयः खलु समस्तशास्त्ररत्ननिकषोपलायमानो महार्णव इति विदुषां समयः।

ततः परं द्वाचत्वारिंशदधिकैकोनविंशे खीष्टाब्दे पूर्वोक्तानां समेषां पत्रिकाग्रन्थमालाप्रभृतीनां समष्टिरूपा एषाऽभिरूपा साक्षात् सरस्वतीव **'सारस्वती सुषमा'** पत्रिका प्रारब्धाऽबोभवीत्।

तदानीन्तनस्य श्रीकाशिकराजकीयसंस्कृतमहाविद्यालयस्य वैदेशिका देशिका एव प्राचार्या अबोभवुः, भारतीयेषु **म.म. गङ्गानाथझामहोदयाः** प्रथमे प्राचार्याः,

**म.म.श्रीगोपीनाथकविराजमहाशयाश्च** सरस्वतीभवनग्रन्थाध्यक्षा अबोभुवत्, तदानीं संस्थाया अस्याः स्वर्णयुगसमय आसीत्, अद्य स्वर्णजयन्तीसमारोहानेहसि स कालः सततं स्मर्तव्यः, यतो हि अद्यापि श्रीश्रीमत्कविराजमहाशयकर-कमलाङ्कितततत्पाण्डुलिपिविशेषस्थलगतरेखाङ्कितहस्तलिखितग्रन्थराजयः सरस्वती-भवनग्रन्थालयमलमलञ्चेक्रीयन्ते इत्यत्रानुसन्धित्सवो विद्वांस एव प्रमाणम्।

**'कालो ह्ययं निरवधिः.....'** इत्युक्तदिशा ततः परं **डॉ. मङ्गलदेवशास्त्रि**-महोदयेषु प्राचार्यपदं प्रसाधयत्सु द्वाचत्वारिंशदधिकैकोनविंशे ख्रीष्टवर्षे एषा **'सारस्वती सुषमा'** सकलविद्वन्मनोरञ्जनानुकूलव्यापारमयी अनुसन्धानपत्रिका प्रकाशयितुमारब्धा।

अहो नु खलु स कालः कथन्तरां वर्ण्यतान्देश्यमपि, यदा सकल-जगत्सहृदयसमाजश्लाघ्यचरितैकमहाधनस्तत्रभवान् सततदेध्मीयमानमहायशःपटह-समुद्बोभूयमानकर्णकण्डूतिमुद्यमानसकलदिग्दन्तावलवलय उत्तरप्रदेशमन्त्रिमणि-महामालासुमेरुर्वदान्य उदात्तचरितः **डॉ. सम्पूर्णानन्दमहोदयः** स्वतन्त्रताप्राप्तेः पश्चात् चिकीर्षितकार्यजातेषु ऐदम्प्राथम्येन अहमहमिकया करणीयविषयीभूतमभि-लक्ष्य **काशिकराजकीय-संस्कृतमहाविद्यालयं वाराणसेयसंस्कृतविश्व-विद्यालयीकृतवान्**, यश्चाधुना **'सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः'** इत्यभिख्य-याऽऽख्यया विख्यातां विख्यातिं लभतेतमाम्।

एषा **'सारस्वती सुषमा'** पूर्ववद् अविच्छिन्ना सती सम्प्रति सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन प्रकाश्यत इति। अदसीया सम्पादकपारम्परी किल मल्लिकामतल्लिकामालिकेव सुमनोवृन्दानि सदातरां सद्यस्तरां स्वाभिमुखं समाकर्षयतीति भूतार्थकथनम्, अतश्चास्यां वैदेशिकानां देशिकानां समेषामेषामशेषविशेषशेमुषीजुषां सुजनुषां विदुषां समस्तशास्त्रगता लेखा अराजन्त, राजन्ते, राजिष्यन्ते चेत्यत्र श्रीमतां लेखकानां पत्रिकाम्प्रति स्नेह एव हेतुरिति विनम्रेण चेतसा वचसा च स्वीकरोमि।

न खलु स्वगौरवमाविष्कर्तुं मेऽस्ति साहसम्; परन्तु सारस्वतीसुषमास्वरूपं समीक्ष्य इदं व्याहर्तुं शक्यते यद् मन्ये आ च वेदात्, आ च साहित्यम्; कोऽपि तादृशो विषयलवलेशो नास्ति, यस्य कस्याश्चिद् शाखोपशाखानां कस्याप्यंशस्य, भागस्य, प्रकरणस्य वा विषयेऽमुष्यां पत्रिकायां लेखाः प्रकाशिता न भवेयुः, एवञ्च सकलवाङ्मयीयं श्रीमतां **सारस्वती सुषमा**।

एतस्याः सकलसुधीसमुदायसमादृतायाः सारस्वत्याः सुषमायाः सम्पादकानां काचिद् महनीया परम्परा वर्तते, येषां शुभनामानि स्वर्णजयन्तीविशेषाङ्क-प्रकाशनावसरेऽस्मिन् सश्रद्धं समुल्लेख्यानीति वदतो मम हृदयं निरतिशय-हर्षवर्षप्रकर्षेण निरवधिसुखैकास्पदं समुच्छलतीति यत्किञ्चिदेतत्। आ च प्रारम्भाद् यथाक्रमं तेषां नामानि—

१. **डॉ. मङ्गलदेवशास्त्री** (आदितस्तृतीयवर्षं यावत्)
२. **म.म. नारायणशास्त्रिखिस्ते** (चतुर्थवर्षस्य)
३. **आचार्यश्रीजगन्नाथोपाध्यायः** (पञ्चमवर्षस्य)
४. **म.म. नारायणशास्त्रिखिस्ते** (पञ्चमवर्षस्य)
५. **श्री को.अ. सुब्रह्मण्य-अय्यरः** (पञ्चमवर्षस्य)
६. **श्रीत्रिभुवनप्रसाद-उपाध्यायः** (षष्ठसप्तमाष्टमवर्षाणाम्)
७. **पण्डितश्रीकुबेरनाथशुक्लः** (आ नवमाद् द्वादशवर्षं यावत्)
८. **पण्डितश्रीक्षेत्रेशचन्द्रचट्टोपाध्यायः** (त्रयोदशचतुर्दशवर्षयोः)
९. **श्री टी.वी. रामचन्द्रदीक्षितः** (पञ्चदशषोडशवर्षयोः)
१०. **श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायः** (सप्तदशत ऊनविंशवर्षं यावत्)
११. **श्रीसुरतिनारायणमणित्रिपाठी** (ऊनविंशवर्षस्य)
१२. **श्रीबलदेव-उपाध्यायः** (विंशतस्त्रयोविंशवर्षं यावत्)
१३. **श्रीबदरीनाथशुक्लः** (त्रयोविंशात् पञ्चविंशं वर्षं यावत्)
१४. **डॉ. भागीरथप्रसादत्रिपाठी (वागीशः शास्त्री)** (पञ्चविंशात् सप्तविंशं वर्षं यावत्)
१५. **श्रीविश्वम्भरनाथत्रिपाठी** (ऊनत्रिंशवर्षस्य)
१६. **डॉ. भागीरथप्रसादत्रिपाठी (वागीशः शास्त्री)** (त्रिंशवर्षादष्टचत्वारिंशवर्षं यावत्)
१७. **डॉ. आद्याप्रसादमिश्रः** (ऊनपञ्चाश-पञ्चाशवर्षयोः)

प्रसङ्गेऽत्र काले काले सहायकसम्पादका अपि बहवो विद्वांसो बभूवुरिति तेऽपि सश्रद्धं प्रणम्यन्ते। यदि कस्यचिन्नामात्र कदाचिद् भ्रान्त्याऽनवधानेन वा विस्मृतम्, तर्हि तदर्थं नितरां क्षम्योऽयं जन इति साञ्जलि प्रार्थये।

**विशेषाङ्काः**

इतः पूर्वमपि, अस्या विशेषाङ्काः प्रकाशिताः, यथा— रजतजयन्ती-विशेषाङ्कः, गोपीनाथकविराजविशेषाङ्कः, विश्वसंस्कृतसम्मेलनविशेषाङ्कः, शङ्करा-चार्यविशेषाङ्क इति।

**अयं विशेषाङ्कः**

विशेषाङ्केऽस्मिन् तत्तच्छास्त्रसारगर्भास्ते ते लेखा निवेशिता भवतां मनोविनोदायेति। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य त्रैमासिक्या एतस्याः सारस्वत्याः सुषमाया अनुसन्धानपत्रिकाया एकपञ्चाशे वर्षेऽयं स्वर्णजयन्ती-समारोहविशेषाङ्को ग्रन्थरूपेण भवत्करकमलेषूपाह्रियत एतद्विश्वविद्यालयीय-प्रकाशनसंस्थानेनेति विनयावगुण्ठितं वचो मामकीनम्।

पर्यन्ते चैतत्पुनरपि निवेद्यते यत् सर्वञ्चैतत् कुलपतिमहोदयानां विश्वविश्रुतमनीषिधौरेयाणां **प्रो. राममूर्तिशर्ममहोदयानां** सत्प्रेरणाऽऽशीर्वादैः, शासनस्य, शिक्षामन्त्रालयस्य, वित्तमन्त्रालयस्य, लेखकानां पाठकानां च अविस्मरणीयसहयोगेनैव समबीभवदिति सर्वेषामाधमर्ण्यं शिरसा बिभर्मि।

सर्वमङ्गलमयावसरेऽस्मिन् येषां स्मरणं सर्वथा पुण्यास्पदं प्रेरणास्पदमुत्साहा-स्पदञ्च, तेषां नामानि अहमहमिकयाऽत्र समुल्लेख्यानीति, तद्यथा—

तेषु सर्वथाऽऽदौ संस्कृतसर्वस्वहृदयानां देशे विदेशे च संस्कृतसंस्था-सङ्घटनाकार्यतत्पराणां **श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालस्य** च कुलपतिचराणां **म.म. आचार्यश्रीमण्डन-मिश्र**महोदयानामनुपमकृतित्वं स्मारं स्मारं रोमाञ्चितीभवामि यत्तदीयहस्ताक्षराङ्कितस्य एकस्य पत्रस्य प्रेषणेनैव परितः सर्वतश्च लेखानां वृष्टिरिवाभवत्, इति तदीयचरण-कमलयोरसकृत्प्रणामाञ्जलिं निवेदये।

पुनश्च वैयाकरणसार्वभौमाणां **म.म. आचार्यश्रीरामप्रसादत्रिपाठि-**महोदयानामप्युपकारं सततं स्मरामि, सति प्रयोजने, झटित्येव प्रकाशनाय यैरसकृद् विपुला सामग्री सारस्वत्यै सुषमायै प्रेषिता इति तदीयचरणाब्जयोरपि भूयः प्रणामाञ्जलिं समर्पयामि।

सविशेषमत्र विज्ञापनीयमास्ते यद् यदा यदा सारस्वत्याः सुषमायाः कृते निबन्धानाम्, पद्यमयसामग्रीणां प्रयोजनमजायत, तदा तदा पुष्कलनिबन्ध-

रचनाप्रदानेन यैरहमसकृदुपकृत:, तेषामालङ्कारिकालङ्काराणां महाकवीनां सहृदयसुहृद्वराणां साहित्यविभागाध्यक्षाणां **पण्डितश्रीशिवजी-उपाध्याय**महोदया-नामाधमर्ण्यं शिरसा बिभर्मि।

एतस्य सम्पूर्णस्य स्वर्णजयन्तीविशेषाङ्कस्य लेखानां समेषां परिष्करणे आद्यन्तनिरीक्षणे प्रतिलेखं विषयानुरूपसज्जीकरणे महत् साहाय्यमाचरितवद्भ्योऽस्य विश्वविद्यालयस्य वरिष्ठनव्यव्याकरणप्राध्यापकेभ्य: **पण्डितश्रीमनुदेवभट्टाचार्ये-भ्यो**ऽपि सततं धन्यवादशतं समर्प्य अमन्दमानन्दमनुबोभवीमि। विशेषाङ्केऽस्मिन् सौन्दर्याधाने चित्रादिनिवेशने यथास्थानं श्लोकादिसंयोजने च एभि: स्वत एव मया सह सर्वमसकृत् परामृश्य आनुकूल्यमाचरितमिति। किञ्च, अस्य विश्वविद्यालयस्य प्रेयान् विक्रयाधिकारी **श्रीपद्माकरमिश्रो**ऽपि क्रियासमभिहारं धन्यवादै: साधुवादैश्च सभाज्यते, य: खलु 'सारस्वत्या: सुषमाया:' प्रचारे प्रसारे विक्रये च अहर्निशं भृशं प्रयतमानोऽस्तीति।

एतस्य सम्पादने प्रकाशने च विश्वविद्यालयस्य प्रकाशनसंस्थानस्य महदानुकूल्यं मयाऽवापि, विशेषतो **डॉ. हरिवंशकुमारपाण्डेय:, डॉ. ददन-उपाध्याय:, श्रीकन्हईसिंहकुशवाहा, श्री-अशोककुमारशुक्ल:, श्री-अतुल-कुमारभाटिया, श्री-ओमप्रकाशवर्मा, श्रीदिवाकरप्रसादमिश्र:, श्रीरविशङ्कर:,** विविधछायाचित्राणां संयोजने सुप्रसिद्धछायाकार: **श्रीदिनेशसेठमहोदय:,** मुद्रणविषये च श्रीजीकम्प्यूटर-प्रिण्टर्स-संस्थाध्यक्ष: **श्री-अनूपकुमारनागर-**महोदय:, तत्कार्यकर्तारोऽपि साधुवादास्पदम्, यै रात्रिन्दिवं महान्तं श्रमं कृत्वा यथाकालं सर्वं सम्पादितम्।

अन्ते च, सर्वस्य चैत्रस्य जगतो मङ्गलास्पदं सर्वकार्यजातजीवातुभूतं सकलवाङ्मयैकाधिष्ठातारं काशीनिवासरसिकं भगवन्तं भवानीजानिं श्रीविश्वनाथं भूयोऽप्येतदुत्तमविशेषाङ्कप्रकाशनाय कृपालाभाय असकृत् स्तुत्वा प्रणम्य च तदीयचरणकमलयो: ग्रन्थरत्नपुष्पगुच्छमिमं निवेद्य, विदुषां करारविन्दयो: समर्पयामि।

विदुषां स्नेहपात्रम्

**हरिश्चन्द्रमणित्रिपाठी**

*निदेशक:, प्रकाशनस्य*

**वाराणस्याम्**
राधाष्टम्याम्,
वि.सं. २०५६




विश्वविद्यालयप्राङ्गणस्था विश्वविद्यालयसंस्थापकानां
**डॉ. सम्पूर्णानन्दमहाशयानां मूर्तिः**

# विषयानुक्रमणी

## ज्यौतिषी सुषमा



## दार्शनिकी सुषमा

## *साहित्यिकी सुषमा*

## *पौराणिकी सुषमा*



## *सांस्कृतिकी सुषमा*



## *प्राकीर्णिकी सुषमा*



●

# सारस्वती-सुषमा-मङ्गलाभिनन्दनम्

**पण्डितश्रीमनुदेवभट्टाचार्यः**
वरिष्ठप्राध्यापकः, व्याकरणविभागः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

❀ ❀ ❀

कालिन्दीकलकेलिकूलनिलये शृङ्गारसाराम्बुधि-
प्राचुर्यप्रसरद्विलासरसिकानन्दप्रमोदास्पदे।
उद्यद्यौवनराजिसुन्दरतनुश्रीकृष्णबाहुद्वयं
श्रीराधाकुचकुम्भसम्भ्रमपरीरम्भार्थमुज्जृम्भते।।१।।

कालिन्दीकूलकुञ्जोत्सवमधुमधुपः कोऽप्यसौ कृष्णचन्द्रो
हित्वा ता गोपबाला निरतिशयमनोज्ञाढ्यलीलाविलासाः।
यामालिङ्ग्य प्रकामं विहरति रतिसङ्ग्रामसेनापतिस्तु
सौन्दर्योद्यानलीलाव्रततिसुकलिका काऽप्यसौ भाति राधा।।२।।

एतत्सुन्दरहेमकोकनदभाभास्वत्प्रभाभासुरं
किं वा पल्लवतल्लजालिदललालित्यैकलीलागृहम्।
आहो, नन्दनरक्तचन्दनगलद्धाराप्रवाहाद्भुतं
देव्याः पादसरोरुहं मम ददात्वानन्दथुं सन्ततम्।।३।।

श्रीमत्प्राच्यमहामहीधरतटीधातुद्रवालोहित-
प्रोद्यद्भास्करचण्डरश्मिविसरप्रोद्भिन्नपाथोरुहाम्।
राजत्कुड्मलसम्भवारुणिममारत्नाकरैकाग्रजं
दुर्गापादपयोजयामलमलं वन्दामहेऽहर्निशम्।।४।।

प्रत्यूषेऽपि प्रदोषे सकलभुवनजन्मस्थितिह्रासशील:
सप्ताश्वः प्रत्यहं ध्यानमहिमवशतो हन्त ! तद्वर्णपूर्णः।
भूयो भृङ्गायमाणत्रिदशनिकरतोष्टूय्यमानः समोदं
देव्या वोऽव्यात्सदाऽसावहमहमिकया पादपद्मद्वयश्रीः।।५।।

एषा नित्यापि या कल्पितपदनिचयैर्ज्ञायते देशिकेन्द्रैः
सर्वार्थाढ्याऽपि वृद्धव्यवहरणवशान्निश्चितार्थं ब्रवीति।
आवापोद्वापितप्रत्ययप्रकृतिलसत्कल्पनाकल्पवल्ली
पास्पर्धीति प्रकामं त्रिजगति सुषमासारसारस्वतीयम्।।६।।

आसृष्टेरालयं यावदपि जगति वक्तव्यकोटिप्रविष्टाः
शब्दा न्यक्षेण नित्या इति विलसति येषां स्वसिद्धान्तपक्षः।
स्वीकृत्या गर्वमाप्ता यदुदितविषयं सर्ववैज्ञानिकेन्द्रा
एषा श्रीशाब्दिकी साऽधिधरणि सुषमा सास्ति सारस्वतीयम्।।७।।

संस्काराङ्कुरसम्भवा स्वगुरुपत्सेवालवालोदया
सद्वैदुष्यदला यशःफलकला सौजन्यकेदारभूः।
शुद्धाचारविचारसौरभभरैः संवासयन्ती दिशः
सा विद्याव्रततिर्द्विजैस्तु सुषमा सारस्वती सेव्यताम्।।८।।

तत्त्वाम्भोनिधिमन्थनोद्भवसुधाभाण्डं वहन्त्यादरात्
संसारोषरभूमिपान्थनिचयानाश्वासयन्ती सदा।
प्रत्यक्षानुमितिश्रुतित्रिनयनैर्द्रष्ट्री पदार्थानहो
सत्पात्रस्थितिभृच्चकास्ति सुषमा सारस्वती सर्वदा।।९।।

किं ध्यानेन? सुराऽर्चया? त्रिपथगास्नानेन वानेन किं?
किं वा स्यादसकृत्कृतश्रुतिरवोद्घोषेण तेनाप्यहो।
रे धीराः, शृणुतास्मदीयवचनं चेदिच्छथ स्वं हितं
हित्वा व्यर्थपरम्परां च सुषमा सारस्वती सेव्यताम्।।१०।।

श्रीमत्संस्कृतवाङ्मयोन्नतिलतामूलालवालोपमा
नानालेखविशुद्धमुद्रणलसत्सम्पादनप्राञ्जला।
पञ्चाशच्छरदन्वितोऽद्भुतवपुश्शोभाप्रकर्षोज्ज्वला
धीरैश्शान्तमनोभिरत्र सुषमा सारस्वती सेव्यताम्।।११।।

सङ्ख्यावत्समुदायशीलितसुधाऽसन्देहसन्दोहसुत्
श्रीसारस्वतसारसागरसुधानिष्यन्दसम्पूरिता।
सम्प्रोद्यत्सुमनोमनोगतमहाशीधूत्सवैकास्पदं
संसेव्या सुधियाङ्गणैस्तु सुषमा सारस्वती सन्ततम्।।१२।।

भूसृष्टिश्च कदाऽभवद्? जलमयं वाऽतिष्ठदेतज्जगत्?
सूर्याचन्द्रमसोर्गतिश्च कियती? शब्दादिकानां गुणाः?।
वस्तूनां परमाणु-पीलुपिठरादीनां समेषामपि
ज्ञानार्थं सुधिया सदैव सुषमा सारस्वती सेव्यताम्।।१३।।

के वा भारतपूर्वपश्चिमदिशौ? का दक्षिणा? कोत्तरा?
के वा भारतवर्षसीमनि पुराऽभूवंश्च देशास्तथा?।
राज्ञां का च विदेशनीतिरभवत्? किं भारतं साम्प्रतं?
तज्ज्ञानाय सदा सताऽत्र सुषमा सारस्वती श्रीयताम्।।१४।।

चिन्तासन्ततिसन्ततोत्सवमहासन्तानवैतानिकी
पञ्चाशत्तु समा अतीत्य सुषमासन्दर्शनैकास्पदम्।
प्राचीनास्तिकनास्तिकद्वयविदिग्दिग्दर्शनैकोल्लसत्-
तत्तद्दर्शनदर्शनाय सुषमा सारस्वती दृश्यताम्।।१५।।

वेदाः श्रौतमहाविधानविततव्याख्यानविख्यापिता-
स्तानि व्याकरणानि कोटिविलसच्छास्त्रार्थगर्भाण्यपि।।
तर्काः कर्कशकूटकोटिकपरिष्कारप्रभासंस्कृताः
सर्वं यत्र चकास्ति सास्ति सुषमा सारस्वती पत्रिका।।१६।।

नानादर्शनकाव्यसञ्चयवनीसञ्चारपञ्चाननै-
राम्नायादिकशास्त्रसिन्धुमथनव्यापारमन्थाचलैः।
काशीमण्डनपण्डितैः शमयितुं या संश्रिता लेखनी-
कण्डूतिं भुवि भाति हन्त! सुषमा सारस्वती पत्रिका।।१७।।

नानाऽलङ्कृतिरीतिनीतिगुणभृत् सा साहिती नायिका
भावोल्लासविलासलास्यविलसद्दिव्यावदातश्रमा।
भूयो नेतृमनोमनोज्ञहृदया भव्या रसैकातुरा
मुग्धा साप्यनुकूलिताऽत्र सुषमा सारस्वती सेव्यताम्।।१८।।

आङ्ग्लानामिह शासने खलु तदा वैदेशिकैर्देशिकै-
र्दीव्यद्दर्शनदर्शनास्पदमहादिव्यावदातश्रमैः।
प्राच्यस्मार्तविधीरिताखिलविवादव्रातनिर्णायकैः
श्रीमत्काशिकराजकीयसुरगीर्विद्यालयः स्थापितः।।१९।।

ग्रन्थैर्लेखकहस्तपद्मलिखितैरन्वेषणैकव्रतैः
स्थानेभ्योऽप्यथ सञ्चितैर्यदधुना सङ्ग्राहकैस्सन्ततम्।
पारेलक्षमहो महोविलसितैस्सम्भूषिता राजति
यत्रैवास्ति 'सरस्वतीति भवनं' सारस्वती पत्रिका।।२०।।

इन्द्रद्वीपात्तथा सिंहलवरुणककश्मीरवर्मप्रदेशात्
सम्पूर्णादामहीमध्यसलिलनिधितोऽप्या च गोलान्तराद् वा।
आ च प्राच्यप्रतीच्यक्षितिधरयुगलादाहिमाद्रेश्च चीनात्
सर्वं जित्वा चकास्ति त्रिजगति सुषमा साऽस्ति सारस्वतीयम्।।२१।।

सर्वस्मिन् किल वाङ्मयेऽत्र सततं भात्येव तत्त्वं मधु
भूयो यत्र बहुत्र तत्र नितरामत्राप्यमुत्राधुना।
विश्वत्रापि समत्र कुत्रचिदिहानेकत्र नान्यत्र यत्
श्रीमद्भ्यो ददती सतीह सुषमा सारस्वती वर्धताम्।।२२।।

तत्तच्छास्त्रसमुद्रमन्थनभवत्पीयूषयूषालया
नानालेखकलेखया सुलिखितैर्लेखैः सदालेखिता।
लेखाधीश्वरमौलिचन्द्रकलिकालेखाऽलकाऽलङ्कृता
सेयं सम्प्रति भाति सम्प्रतितरां सारस्वती पत्रिका।।२३।।

सम्पूर्णानन्दनामान्वितविबुधवचोविश्वविद्यालयेन
येयं सम्पाद्यमाना सुचिरसमयतो या प्रकाशं गताऽपि।
प्रोद्यत्पाण्डित्यरत्नाकरवलयधियामक्षरैरक्षरश्री
राराजीति प्रकामं त्रिजगति सुषमा काऽपि सारस्वतीयम्।।२४।।

शब्दाशब्दविचारबीजजनना स्फोटालवालोदया
धातुप्रत्ययकाण्डयुग्मलसिता वाक्यार्थसत्त्वोत्सवा।
भूयः साधुविमर्शपत्रसहिता शास्त्रार्थविद्याकरा
मामण्डीति जगत्त्रयं हि सुषमा सारस्वती पत्रिका।।२५।।

पृथ्व्यां पण्डितमण्डितो विजयतेऽयं विश्वविद्यालयो
विश्वस्याखिलधीमताञ्च विजयी शङ्खं स देध्मीयते।
तत्रेयं खलु मुद्रिता निरुपमा त्रैमासिकी पत्रिका
विद्वद्धीनिकषोपमाऽस्ति सुषमा सारस्वती भास्वती।।२६।।

प्राच्यन्यायशुभालया मुहुरहो मीमांसकैश्शीलिता
नव्यन्यायहृदि स्थिता समधिकं तैः शाब्दिकैश्शब्दिता।
सत्काव्यार्थचमत्कृतीरितपदा श्रौतश्रुतिस्त्रङ्मयी
सैषाऽनन्वयभूतिभृत्तु सुषमा सारस्वती पत्रिका।।२७।।

विद्वन्मानसराजहंससुपदन्यासस्वरूपान्विता
वीणाझङ्कृतिनादशब्दसुभगब्राह्मीविभासाऽद्भुता।
सर्वश्वेतमयातिसत्त्वविषयप्राचुर्यसाद्गुण्यधी-
रेषा हन्त! सरस्वतीव सुषमा सारस्वती स्तूयताम्।।२८।।

आजन्मब्रह्मचर्यव्रतनियममहाशेमुषीमण्डितानां
छात्राणां पाठनायै प्रतिदिवसमहो जाग्रतां पण्डितानाम्।
भूलेखानां स्वलेखैः करकजलिखितैर्लेखया लेख्यमाना
शान्तस्वान्तेन मान्याऽधिधरणि सुषमा हन्त! सारस्वती श्रीः।।२९।।

प्रोद्यत्प्राञ्जलपर्वतोपममहापाण्डित्यपारम्परी-
प्राथम्यप्रतिभाप्रभावपरिषत्पावित्र्यसम्पूरिता।
प्राचुर्यप्रसरत्प्रथाप्रथितसत्प्रज्ञानपूतप्रभा
पृथ्वीं पाति पुनः पुनः प्रतिपलं सारस्वती पत्रिका ।।३०।।

कीलत्कश्मल-कोटि-कोटिकठिनप्राकट्यकष्टोत्कटैः
कीटत्कूटक-कूटकूटक-कटाहोट्टङ्कटङ्काकरैः।
वादिव्रातकठोरकाष्ठफणितैः पक्षा विपक्षोद्गता
न्यक्षेण क्षपिता ययाऽत्र सुषमा सारस्वती पत्रिका।।३१।।

काव्यालाप-कला-कलाप-कलना-लालित्य-लीलामयी
कूजत्कोकिल-काकली-कुहु-कुहू-काराविकाराङ्कुरा।
कल्याणाकर-सत्कवीन्द्र-कविता-माकन्द-कामायनी
कामं कूजति कुत्र कौ न सुषमा सारस्वती कामिनी।।३२।।

सद्वैदग्ध्यवलद्विलासविलसद्विज्ञानविद्योद्वलद्-
विद्या-व्रात-वर-व्रताम्बर-वलद्विद्वद्-हृदाकर्षिका।
नाना-वर्णन-वर्ण-वीथि-पथिक-व्याख्यान-विख्यापिताऽ-
स्त्येषा सा वरवर्णिनीव सुषमा सारस्वती सेव्यताम्।।३३।।

भ्राजद्भारत-भूमि-भूति-विभवालङ्कार-भूषामणी
राजद्राष्ट्रिकराष्ट्ररत्नरचनागोरोचनाचर्चिता।
किं वा राष्ट्रिय-राजनीति-रमणी-श्रीरल्लकोद्भासिनी
सैषा भाति निरन्तरं हि सुषमा सारस्वती भामिनी।।३४।।

साङ्ख्ये सङ्ख्यावदीशा कविकृतिकृतिनी बौद्धबोधप्रबुद्धा
वेदान्तोदन्तदान्ता जिनजनजयिनी या पुराणे पुराणी।
मीमांसामर्ममायाप्रमथनमहिमा नव्यकाव्यैकभव्या
भूयो भाति प्रकामं त्रिजगति सुषमासारसारस्वती श्रीः।।३५।।

यत्सम्पूर्णसुधांशुरात्रिसुरते यन्मानिनीमानने
गानोद्गीर्णकलासु कौशलमहो सङ्गीतनाट्योत्सवे।
नीवीबन्धनमोचने चरणयोरालक्तकालेपने
सर्वं कुत्र तु लभ्यतां ? नु सुषमां सारस्वतीं तां विना!!३६।।

वेदव्याकरणागमार्हतमतप्राङ्न्यायवैशेषिक-
प्रस्थानत्रयभाष्यभास्वरयशोराजीवराजीवृता।
नव्यन्यायपुराणसौगतमहासाहित्यविद्याधुनी
राराजीति सदा मुदाऽत्र सुषमा सारस्वती पत्रिका।।३७।।

रिङ्गत्तुङ्गतरङ्गरिङ्गणगणव्यासङ्गगङ्गाङ्गनाऽ-
पाङ्गोत्सङ्गशुभाङ्गमङ्गलगलत्सत्प्राङ्गणालिङ्गिता।
सा काशी स्वमुखाब्जसङ्गतमहाभृङ्गारबिन्दूत्सवाद्
मुक्तिं यच्छति मानमत्र सुषमा सारस्वती शास्त्रिणी।।३८।।

सारासारविसारसाररचनासौन्दर्यसीमन्तिनी-
सीमन्तोत्सवसान्द्रसुन्दरमहासिन्दूरबिन्दूत्सवा ।
सत्साहित्यसमुद्रमन्थनभवत्पीयूषयूषाश्रया
साऽऽसृष्टेः सततं चकास्ति सुषमा सारस्वती सुन्दरी।।३९।।

आदेशादपि चाविदेशवलयादासेविता विद्वरै-
र्भूयो यत्तदपौरुषेयनिगमख्यातप्रमाणान्विता।
श्रीमच्छाम्भवपाणिपद्मडमरुध्वानोक्तिसंवादभू-
र्भूयो भाति समत्र हन्त सुषमा सारस्वती चिन्मयी।।४०।।

भाषावल्लभपाणिपल्लवदलालङ्कारसल्लेखनी-
लेखालेखितलेखलेखकमहालेखैककारुण्यभृत्।
पाण्डित्याद्भुतपर्वपर्वतकुलालङ्कारमुक्तामणिः
सैषाऽर्च्या विबुधैः सदैव सुषमा सारस्वती पार्वती।।४१।।

एषा हन्त! महाशयाद्भुतवचश्शस्त्रास्त्रसन्धारिणी
वादिव्रातगजेन्द्रनाशविलसत्सिंहासनाधिष्ठिता।
या पञ्चास्यबुधेन्द्रभावमहितश्रीमानसोल्लासिनी
संस्तुत्यास्ति सुधीभिरत्र सुषमा सारस्वती पार्वती।।४२।।

येयं धीरगणेशसंस्तुतपदा कौमारभावार्चिता
भूयः कर्कशतर्कतक्षणमहाशूलाहतारिव्रजा।
उद्यत्कोटिकचक्रकूटविकटदुर्वादशत्रूत्कटा
संसेव्या विबुधैरमुत्र सुषमा सारस्वती पार्वती।।४३।।

या सङ्ख्यावदसङ्ख्यसङ्ख्यजयकृच्छङ्खध्वनिं बिभ्रती
भूयो याऽपि विपक्षपक्षदलने दक्षा तथैव क्षणात्।
पक्षाणामपि रक्षणे क्षणवती जाड्यं यया ताड्यते
मोदं सा वितरीतरीतु सुषमा सारस्वती सैनिकी।।४४।।

या बौद्धध्वान्तविध्वंसनधनधिषणाधूतदुर्बोधबाधा
भूयो दोधूयमानध्वजविजयमहावैजयन्ती जयन्ती।
उद्यज्ज्ञानप्रकर्षाद्भुतविभवपराभूतवादीन्द्रभूता
सैदम्प्राथम्यभूता बुधहृदि सुषमा भाति सारस्वती श्रीः।।४५।।

येयं सम्प्रति शुक्लकृष्णदिशया वेदार्थविख्यापिका
या न्यायालयदायभागविधिभिर्वादस्य निर्णायिका।
या शिक्षास्मृतिकारिका निजगुरोर्या भास्वरैकस्वरा
नूनं सा खलु याज्ञवल्क्यधिषणा सारस्वती पत्रिका।।४६।।

किं शारीरकशोषणैः किमु महाभाष्यैकसम्भाषया
भट्टाचार्यमतेन किं गुरुगिरा काव्यप्रकाशेन किम् ?।
ग्रन्थग्रन्थनमन्थनेन किमथो हित्वा समस्तं जगद्
धीरैः शान्तमनोभिरेव सुषमा सारस्वती पठ्यताम्।।४७।।

येयं वेदचतुष्टयस्तनधना तत्त्वामृतस्यन्दिनी
दुस्सिद्धान्तकठोरकोटिदलने सद्युक्तिशृङ्गोन्नता।
स्वास्थ्यप्राणपरम्परापरिवृढैस्संसेव्यमाना मुहु-
र्नूनं राजति कामधेनुरिह सा सारस्वती पत्रिका।।४८।।

प्राज्ञम्मन्यमनोभिरत्र भयतो या दूरतो वर्जिता
श्रद्धाराद्धमहागुरोः करुणया प्रेम्णा सदा स्वीकृता।
छात्राध्यापकशेमुषीकृतमहाशोधप्रबन्धोद्धवा
सा वैविध्यसमाकुलाऽत्र सुषमा सारस्वती वर्धताम्।।४९।।

भट्टाचार्यप्रभाकरोभयमताह्लादैकसँल्लापिनी
भूयः श्रीशबरार्यभाषणसुधास्रोतस्विनी स्यन्दिनी।
कार्याकार्यविधानलेखनमयी सूत्रानुसारं सदा
मीमांसेव जगद्विभाति सुषमा सारस्वती पत्रिका।।५०।।

येयं चिन्मयवाङ्मयी श्रुतिरसास्वादैकदीक्षामयी
बोधानन्दमयी स्वशास्त्रविगलन्माध्वीकधारामयी ।
शान्तस्वान्तमनोमनोज्ञधिषणाशास्त्रार्थलीलामयी
भूयो भाति भुवं विजित्य सुषमा सारस्वती श्रीमयी।।५१।।

शास्त्राम्भोनिधितत्त्वमन्थनकरी शास्त्रार्थविद्याकरी
धूलिक्षेपतमोनिवारणकरी सत्काव्यरत्नाकरी ।
ज्ञानानन्दकरी कुधीक्षयकरी सत्पक्षरक्षाकरी
सानन्दं च चरीकरीति सुषमा सारस्वती किङ्करी।।५२।।

नानालङ्कृतिझङ्कृतिप्रमुदिता सुश्लोक्यसल्लक्षणा
प्रोद्यल्लेखमयूखचारुकिरणप्राकाश्यरूपोद्गमा।
साहित्योदिंतरीतिनीतिसुभगा शैलीलताशीलिता
चन्द्रालोकमयी विभाति सुषमा सारस्वती पत्रिका।।५३।।

भावोल्लासविलासलास्यललितालङ्कारलीलामणिः
सत्काव्योक्तविभावभावसरणी सञ्चारिभावाद्भुता।
वक्रोक्तीरितदोषहीनरचनानृत्तादिवृत्तोज्वला
भायात् सा रसिकोत्सवेषु सुषमा काव्यप्रकाशोपमा।।५४।।

पूर्वाचार्यमतं मतं भुवि ततं तत्सन्ततं सान्ततः
सातत्येन ततो निरस्य च कणेहत्यात्र सत्यातुरैः।
सिद्धान्तं निजमुत्तमोत्तममतं संस्थाप्य लोकोत्तरं
सैषा पण्डितराजगीर्व सुषमा सारस्वती सेव्यताम्।।५५।।

पक्षापक्षमहाघटस्तनधना सिद्धान्तवक्त्राम्बुजा
प्रामाण्याक्षिविलासिनी सुमधुरश्रीनूपुरैकस्वना।
आकर्षद्वयबाहुचारुसुभगा गाम्भीर्यनाभिस्सदा
चित्तं कर्षति कस्य नात्र सुषमा सारस्वती सुन्दरी !!५६।।

दुर्बोधाविलकूटकल्मषदिवाभीतं पदाऽऽक्रम्य या
विद्वन्नागशिरोऽधिवासनमहापीठं समारुह्य तत्।
सत्सिद्धान्तमहार्हरत्नगुटिकाहारावलीलालिता
सा लक्ष्मीव विचित्रितात्र सुषमा सारस्वती श्रीरियम्।।५७।।

तत्तज्ज्ञानसहस्त्ररश्मिविसरप्रोद्भिन्नतत्त्वाम्बुजा
श्रीमत्पण्डितमण्डलोदितमहास्तोत्रावलीसंस्तुता।
काकोलूकविपक्षसन्तततमोराशिप्रणाशव्रता
भायात् सूर्यतनुर्यथात्र सुषमा सारस्वती भास्करी।।५८।।

या वैयाकरणाम्बुजाम्बरमणी साहित्यरक्षामणी
या नैयायिकनायिका श्रुतिशिखाचिन्तैकचिन्तामणी।
मीमांसामतमेदुरा सुगतवाक्सिद्धाऽऽर्हतालम्बिनी
तत्तच्छास्त्रकदम्बिताऽस्ति सुषमा सारस्वती वाङ्मयी।।५९।।

हंहो किं मिष्टमिष्टं? क्वचिदपि च भवेदिक्षुदण्डस्तु दण्ड्यः
क्षीरं क्षारं तथा स्याद् घृतमपि च हृतं नो सुधायाः क्षुधाऽपि!
द्राक्षाऽभक्ष्याऽथ रामारतमपि विरतं गीतमासीद्विगीतं
यावत् पीयूषयूषं वितरति सुषमाऽऽसारसारस्वती श्रीः।।६०।।

यद्द्वैपायनवक्त्रपद्मगलितं यच्छ्रीशुकेनोदितं
यद्वा जैमिनिसंस्कृतं यदथवा श्रीमत्कणादेरितम्।
भूयो यत्कपिलोद्धृतं पुनरहो यद्गौतमाविष्कृतं
सर्वं यत्र तु लभ्यतेऽस्ति सुषमा सारस्वती पञ्जिका।।६१।।

लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशो
व्याख्यायामुभयत्रयीषु सततं श्रीमल्लिनाथो जगौ।
तत् सर्वं ध्रुवमेव यत्र घटते न्यक्षेण साक्षादहो
व्याख्याख्यानमयी ममास्ति सुषमा सारस्वती स्वर्णदी।।६२।।

प्रोक्तं श्रीमनुयाज्ञवल्क्यलिखितापस्तम्बशङ्खोशना-
हारीताङ्गिरसात्रिविष्णुयमदक्षव्यासकात्यायनैः।
श्रीशातातपगौतमप्रभृतिभिर्यत् स्मार्ततत्त्वं मधु
स्वादाय भ्रमरायितैस्तु सुषमा सारस्वती पीयताम्।।६३।।

यच्छ्रीशङ्करसम्मतं मतमहो तौतातिकं सन्ततं
सच्छिष्योक्तमथापि यद् गुरुमतं विद्वत्समाजादृतम्।
भाष्यं हन्त! प्रशस्तपादकथितं विज्ञानभिक्षूदितं
लेखेषु स्थितमत्र साऽस्ति सुषमा सारस्वती सारगीः।।६४।।

वाचस्पत्यमहो महोविलसितं श्रीभामतीभूषितं
श्रीकाश्मीरकशैवदर्शनमतं माहेश्वरेणेरितम्।
यत्तत्त्वं किल शम्भुनाथकथितं श्रीभास्करांशूदितं
सर्वं लेखगतं तु यत्र सुषमा सारस्वती वर्धताम्।।६५।।

किं ग्रन्थालयधावनेन ? च मुधा किं पुस्तकान्वेषणैः ?
किं भूयोऽपि दुरक्षराविलबिलैः पञ्जीसमालोकनैः ?
हा हा हन्त ! मुधैव हस्तलिखितस्यावेष्टनोद्घाटनैः ?
चेज्जागर्ति बुधां पुरोऽत्र सुषमा सारस्वती पत्रिका।।६६।।

वर्णानुक्रमणीविलोकनवशात् कालक्षयैः किं भवेद् ?
हा ! हा !! पाण्डुलिपिप्रकाशितमहासूची विसूचीव सा।
सर्वैर्हन्त ! मनीषिभिः प्रतिदिनं स्वान्तेन शान्तेन सा
श्रीसं.सं.वि.वि.काशिताऽत्र सुषमा सारस्वती सेव्यताम्।।६७।।

कश्मीराच्च हिमालयाच्च मगधादङ्गाद् गयापत्तनाद्
नेपालादपि वङ्गभूमिवलयादाकामरूपादपि।
आगोमान्तकतश्च केरलभुवश्चान्ध्रात् पुनर्द्राविडात्
सर्वस्मात्समवाप्यतेऽत्र सुषमा सारस्वती माधुरी।।६८।।

तत्त्वं यत्किल रत्नकीर्तिकथितं यद्धर्मकीर्त्यादृतं
ज्ञानश्रीभणितं च युक्तिजटिलं श्रीहेमचन्द्रेरितम्।
दिङ्नागार्यसमीक्षितं निरुपमं श्रीकुन्दकुन्दोद्गतं
लभ्यं तद्यदि धीधनैर्हि सुषमा सारस्वती पठ्यते।।६९।।

यद् धन्वन्तरिशोधितं पुनरहो यद्वाग्भटाविष्कृतं
यच्छ्रीसुश्रुतसंस्कृतं प्रथमतः शल्यक्रियाप्रक्रियम्।
आयुर्वेदनिदानमत्र विपुलं नाडीपरीक्षामृतं
लेखेषूक्तममुत्र हन्त ! सुषमा सारस्वती मृग्यताम्।।७०।।

राष्ट्रे शासनतस्तु संस्कृतमयास्ते विश्वविद्यालयाः
सन्दृब्धाश्च ततश्चकासतितमां ग्रन्थालयास्तेष्वहो।
भ्रामं भ्राममहो बहुत्र बहुधा यल्लभ्यते, तत्पुन-
र्हन्तैकत्र मिलत्यमुत्र सुषमा सारस्वती पठ्यताम्।।७१।।

स्यात् कान्ताधरपल्लवे ननु सुधा किं वा सुराणां गृहे
किं वा पक्वरसालसे ननु फले, फुल्लारविन्दे मधौ!
किन्त्वन्यद् वितथेतरन्मृदु लघु ब्रूमो न चेत् कुप्यसि
पिण्डीभूतसुधातिशायिसुषमं सारस्वतेयं मधु।।७२।।

वासन्तेऽत्र रसालसातिमधुरं निश्च्यूतचूतद्रवं
किं वा केकिकलाकलापकलनासत्कल्पनाजल्पनम्।
आहो मुग्धवधूमनोज्ञमणितातिस्वानलीलाधनं
भूयो भाति मधुस्वरैस्तु सुषमा सारस्वती माधवी।।७३।।

सद्यो यो भुवि राजते सुरगिरोऽयं विश्वविद्यालयः
सासीत् काशिकराजकीयसुरगीर्विद्यालयः प्राक्तनः।
तत्रत्याखिलपण्डितेन्द्रमुकुटीलेखावलीभूषिता
सासीत् पण्डितपत्रिका निरुपमा धीमत्समूहोत्सवा।।७४।।

श्रीकाशीदेशिकेशावलिमुकुटपुटीप्रोज्ज्वलद्रत्नभाभिः
सच्छास्त्रज्ञैस्समस्तैर्लिखितनवनवोन्मेषविद्याप्रकाशैः।
आङ्ग्लज्ञैर्लब्धवर्णैर्बुधपरिषदि वैदेशिकैर्देशिकेन्द्रैः
सेयं भाति प्रकामं सपदि तु सुषमा हन्त! सारस्वतीयम्।।७५।।

काशीविद्यासुधानिधिरिति भुवि विख्यापिता या समन्ताद्
एतस्याः पूर्वरूपं खलु भजतितरां तत्प्रकामं प्रसिद्धम्।
यस्यां विद्वद्वराणां स्वरचितरचनामुद्रितास्तास्समस्ता
ज्योत्स्ना नव्या हि सद्यः किरति च सुषमा साद्य सारस्वतीयम्।।७६।।

पूर्वं हन्त ! सरस्वतीभवनतो या ग्रन्थमालात्मिका
प्राकाश्यन्तु गता बुधेन्द्रमहिता सम्पादिता साग्रहम्।
एतस्मात् परतस्तु साऽध्ययनमालानामभृत् पत्रिका
सञ्जाता विदुषां मुदे तु पुरतः पुर्यां च विश्वेशितुः।।७७।।

एषा पण्डितपत्रिका भवतु वा प्राथम्यभूता पुरा
पश्चात् सैव सरस्वतीभवननामग्रन्थमालाऽभवत्।
पश्चादत्र बभूव साऽध्ययनमालानामयुक्ता पुरा
सर्वं सम्प्रति राजतेऽत्र सुषमा सारस्वती पत्रिका।।७८।।

आसीद् यो राजकीयत्रिदिववचनसंयुक्तविद्यालयोऽसौ
पश्चाद् वाराणसेयामरनगरवचोविश्वविद्यालयोऽभूत्।
सम्पूर्णानन्दनामान्वितसुरपुरवाग्विश्वविद्यालयोऽयं
सद्यो जातस्तथायं विलसति सुषमा सापि सारस्वतीह।।७९।।

तत्तत्कालवशाद् यथेयमभवत् संस्था त्रिरूपात्मिका
तस्माद्धेतुवशात् त्रिरूपमहिता जाताऽप्यसौ पत्रिका।
आत्माऽस्याः समभूत्सदैव नितरां शास्त्रार्थतत्त्वात्मक-
स्तस्माद्भेदविवर्जिताऽस्ति सुषमा सारस्वती शाश्वती।।८०।।

संसेव्यस्तु सरस्वतीभवनयुग्ग्रन्थालयोऽसौ महान्
पारेलक्षमिहास्ति हस्तलिखिता ग्रन्थास्तु रत्नापणाः।
तेषां सम्प्रति येऽधुना कतिपये सम्पादितास्सश्रमं
नूनं मूलमिहास्ति तत्र सुषमा सारस्वती सर्वदा।।८१।।

जैकोबी ग्रिफिथश्च वेनिसबुधः थीबोऽथ विद्वन्मणि-
वैंलेण्टाइन इत्युदीरितयशास्सर्वेऽपि वैदेशिकाः।
गङ्गानाथकृती पुनश्च कविराजोऽयं मनीषीश्वरः
सर्वेषां कृपया विभाति सुषमा सारस्वती पत्रिका।।८२।।

तत्तत्पण्डितहस्तपद्मलिखितग्रन्थास्तु लक्षाधिका-
स्तेष्वद्यावधि मुद्रिताः श्रमधनैस्सम्पादिताः संस्थया।
सङ्ख्यैषान्तु निभाल्यतां मतिधनैः पारेसहस्रं गता
तन्मूलं ननु निश्चितं हि सुषमा सारस्वती भास्वती।।८३।।

सम्मान्योऽयमहर्निशं प्रयतते चारुस्वभावोज्ज्वलः
काशीस्थामितमुद्रणालयमहो गत्वा मुहुः स्वश्रमात्।
सोऽयं मेदुरमानसो ननु हरिश्चन्द्रो मणिर्वर्धतां
सा सम्पाद्यत एव तेन सुषमा सारस्वती साम्प्रतम्।।८४।।

ग्रन्थानामिह मुद्रणे पुनरहो सम्पादने प्रेरणे
सोऽयं विद्वदुपासको भुवि हरिश्चन्द्रो मणिः शोभते।
एतत्प्रौढमहाश्रमात्पुनरियं त्रैमासिकी कालतः
कामं काशति काशितस्तु सुषमा सारस्वती काशिकी।।८५।।

लुप्तासीत्तु सरस्वती निरुपमा श्रीतीर्थराजे पुरा
नैर्विण्यं समभूत्ततस्तु विदुषां शास्त्रार्थतत्त्वात्मनाम्।
श्रीमत्काशिकपण्डितेन्द्रकृपया श्रीविश्वनाथेच्छया
नूनं सा प्रकटीबभूव सुषमा सारस्वती वाङ्नदी।।८६।।

नानावर्णनवर्णपुष्पसुभगा तत्तत्त्वमाध्वीकभू-
र्गुञ्जन्मञ्जुलशिञ्जिताढ्यमधुपप्राज्ञप्रकाशोत्सवा।
सत्सामाजिकसज्जनोत्सवमहाह्लादैकलीलामयी
वासन्तीव सदा विभाति सुषमा सारस्वती शाश्वती।।८७।।

प्रत्यङ्कं विषया विभान्त्यविशयास्साशाशयास्स्वाशया
भूयो मान्यमहाशयाशयशयाः सौशब्द्यशय्याशयाः।
आचार्याऽऽचरणार्यवर्यचरिताचर्यप्रचर्याचरा
यस्यास्सास्ति विजित्वरीह सुषमा सारस्वती शेमुषी।।८८।।

आदेशागम-सम्प्रसारण-गुण-श्नु-स्थानिवद्-वृत्तिमत्-
तृज्वत्-सद्-व्यपदेशिवत्-प्रकृतिवद्-वा-षत्व-णत्वादयः।
सर्वे पाणिनिसम्मता हि विषया ते प्रक्रियाढ्या पुन-
र्लभ्यन्ते ननु यत्र साऽस्ति सुषमा सारस्वती शाब्दिकी।।८९।।

संस्थानानि च सन्ति सन्ति शतधा सर्वत्र सर्वाण्यहो
सर्वैः स्वस्वविभागतो बहुविधा सम्पाद्यते पत्रिका।
किन्त्वेतद् हृदि धार्यतां! मतिमतां सन्तोष एवास्ति नो
लेखः स्वीक्रियतेऽत्र चेन्न सुषमा सारस्वती सास्त्यहो।।९०।।

प्रेङ्खत्पुङ्खानुपुङ्खप्रखरखचितसत्सख्यसौख्यप्रमुख्यैः
साम्मुख्यख्यापिताख्यापनविवरलसत्शङ्खसङ्ख्यैकसङ्ख्यैः।
सङ्ख्यासङ्ख्यातसङ्ख्यावदखिलखलपूखातविख्यातखेलैः
खेलन्ती मूर्खशत्रुः प्रखरति सुषमा हन्त सारस्वती धीः।।९१।।

चायञ्चायमहो प्रशस्तविदुषामाशीर्वचांस्यादराद्
गायं गायमहो तदीययशसां पात्रं हरित्कामिनीः।
पायम्पायमहो तदीरितसुधामाधुर्यबिन्दूत्सवान्
दाधर्ति प्रतिलोकमेव सुषमा सारस्वती भामिनी।।९२।।

एतस्याः प्रसरीसरीति भुवने दिव्यं यशोमण्डलं
स्वानन्दं वितरीतरीति सततं सामाजिकेभ्यः स्वयम्।
पीयूषं विभरीभरीति हृदये या भावुकानामहो
वैदुष्यं प्रचरीकरीति सुषमा सारस्वती भारती।।९३।।

श्रीमच्छङ्करदेशिकेन्द्रमुकुटैर्विख्यापितं यद्भुवि
ज्ञानश्रीवरपण्डितेन्द्रमणिभिः संस्थापितं यत्पुरा।
दिङ्नागश्रुतकीर्तिसायणजगन्नाथादिभिः कीर्तितं
लभ्यं यत्र तु तत्समं हि सुषमा सारस्वती पेटिका।।९४।।

हंहो मेरुहिमालयादिगिरयो नङ्क्ष्यन्ति ते कालतो
जम्बूप्लक्षकुशाख्यशाल्मलिमहाद्वीपानि नङ्क्ष्यन्त्यहो।
किन्तु प्रस्तुतवाङ्मयातिवलयीभूतप्रभाभूषिता
साकल्यं तु नरीनरीति सुषमा सारस्वती नर्तकी।।९५।।

इष्टापूर्तमुखा मखाश्च सकलाश्चित्रामुखा इष्टयो
ये सौत्रामणिवाजिमेधविधयः पुत्रेष्टिकारीरिकाः।
सर्वे सौमिकपाशुकाश्श्रुतिगताश्शास्त्रेष्वहो जाग्रति
तत्सर्वं विविनक्ति हन्त! सुषमा सारस्वती वैदिकी।।९६।।

नर्नर्तीह तु कालिदासकवितामुग्धाङ्गना निर्दयं
चर्कर्तीह तु हर्षपण्डितमहातर्काटवी दुर्मतीन्।
सर्सर्तीह तु विष्णुगुप्तधिषणानीतिस्तु दुस्सद्मनि
जर्हर्तीह विपक्षमेव सुषमा सारस्वती पुस्तकी।।९७।।

वर्वर्ति प्रतिवासरं हि सुषमा सारस्वती शाश्वती
बर्भर्ति प्रतिवत्सरं हि सुषमा सारस्वती मानसें।
दर्धर्ति प्रतिवेलमेव सुषमा सारस्वतीभिर्गिरं
चर्कर्ति प्रतिपालनं हि सुषमा सारस्वती धीमताम्।।९८।।

जर्झर्ति प्रतिपक्षमेव सुषमा सारस्वती दुर्धियां
जर्गर्ति प्रतिपाठशालमखिलं मौर्ख्यं विषैकोल्वणम्।
तोतोर्ति प्रतिमानवं हि सुषमा सारस्वती दुर्मदं
दाधर्ति प्रतिलोकमेव सुषमा सारस्वती स्वं यशः।।९९।।

वेदव्याकरणार्हतागमपुराणन्यायवैशेषिकै-
र्मीमांसानिगमान्तयोगतुलनज्ञादर्शनज्यौतिषैः।
गम्भीराध्ययनप्रकाशनवृतिव्याख्यानसम्भाषणै-
र्जित्वा हन्त! महीं चकास्ति सुषमा सारस्वती पुस्तिका।।१००।।

शेषाशेषगवीनवीनमतकृन्नागेशभट्टेरिता
श्रीमत्पण्डितराजपण्डितजगन्नाथैकलीलालया ।
श्रीगङ्गेशकृपाकटाक्षविलसत्तर्कालिखड्गाद्भुता
सैषा सम्प्रति चाकशीति सुषमा सारस्वती पण्डिता।।१०१।।

पञ्चाशच्छरदामतीत्य नितरां या सेवते कोविदान्
पारेकोटि समाप्नुयादियमिहायुः पूर्वकामोज्ज्वला।
श्रीविश्वेश्वरपादपङ्कजसुधासारद्विरेफोत्सवै-
र्विद्वद्भिः परिभूषिताऽस्ति सुषमा सारस्वतीयं मुहुः।।१०२।।

राजारामस्य वैयाकरणमृगपतेर्योऽस्ति पौत्रः कनिष्ठो
वीणापाणौ तथा श्रीपशुपतिबुधतो लब्धजन्मा द्विजोऽयम्।
सम्पूर्णानन्दनामान्वितविबुधवचोविश्वविद्यालयीय-
श्चक्रे प्राध्यापकोऽसौ शतमथ सुषमां हन्त सारस्वतीं ताम्।।१०३।।

श्रीश्रीमत्कविराजराजिमुकुटालङ्कारमुक्ताप्रभा-
गोपीनाथमहागुरूदितकृपापीयूषयूषाश्रयः।
एष श्रीमनुदेवशाब्दिककविः कारुण्यतः सद्गुरोः
पद्यानां तु शतेन तेन सुषमां सारस्वतीं निर्ममे।।१०४।। इति।।

।। इति श्रीमत्सकलसतीमण्डलसार्वभौमवीणापाणिदेवी-निखिलतन्त्रापरतन्त्र-
पण्डितेन्द्रश्रीपशुपतिभट्टाचार्यसुत-सम्पूर्णानन्दसंस्कृतविश्वविद्यालयाधीतशास्त्र-
तत्रत्यनव्यव्याकरणवरिष्ठप्राध्यापक-सहायकच्छात्रकल्याणसङ्घायाध्यक्ष-
श्रीमनुदेवभट्टाचार्य-व्याकरणाचार्यव्याकरणकेसरि-शास्त्रभूषण-
शास्त्रार्थमहारथविरचितं सारस्वती-
सुषमाशतकं सम्पूर्णम् ।।

।। इति शुभम् ।।

# वैदिकी सुषमा

श्रौतस्मार्तविधानसञ्चयमहापारम्परीसँल्लसद्-
वैधावैधविवेचनामृतमहावैदुष्यलीलाखनिः।
नानावादमहासुरद्रुमलतासन्दोहकेदारभू
राराजीति सतां मुदेऽत्र सुषमा सा वैदिकी सन्ततम्।।

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५१ वर्षे | ज्येष्ठ-भाद्र-मार्ग.-फा.पू., वि.सं. २०५३ | १-४ अङ्काः |
|---|---|---|



# अथर्ववेदस्य सार्वभौमहितभावना


**डॉ. मण्डनमिश्रः**

कुलपतिः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी


❀ ❀ ❀

**मीमांसामतमर्मभेदनपटोः पट्टाभिरामाद् गुरोः**

**श्रद्धाराद्धपदद्वयाम्बुजधनो मिश्रान्वितो मण्डनः।**

**श्रीश्रीमद्गुरुदेवचारुकरुणापीयूषयूषाश्रयाद्**

**वेदेऽथर्वणि सार्वभौमहितकृत्तत्त्वं वदत्यादरात्।।**

अथर्ववेदः खलु 'ब्रह्मवेदः' इति कथ्यते। श्रौतप्रयोगेषु चतुर्गणविभक्त-ऋत्विक्षु ब्रह्मगणः खलु आथर्वणः, तत्र प्रधानऋत्विग् 'ब्रह्मा' इति कथ्यते, आतश्च— आथर्वण-ऋत्विक्कर्म 'ब्राह्मकर्म' इति वैदिकानां समयः।

वेदो नाम यद्यपि परमार्थसाधनीभूतोऽलौकिकोपायः, तदुक्तम्—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।

एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता।।[१]

---

१. द्र. ऋग्वेदभाष्यभूमिका।

परमथापि बहुत्र बहुधा बहुवारं लौकिकविषया अपि वेदेषूपलभ्यन्ते, विशेषतश्च—अथर्ववेदे बहवो लौकिकविषयाः प्रतिपादिता इति प्रतीयते।

अथर्ववेदोक्तविषयेषु सार्वभौमहितभावना खलु प्रकामं वर्णिता, अत्र केचन तथाविधा मन्त्रा वर्ण्यन्ते। पश्यन्तु सुधियः— अथर्ववेदस्य पृथिवीसूक्तं[१] प्रसिद्धमस्ति। पृथिवीशब्दः नैव कस्यचिद् राज्यस्य राष्ट्रस्य देशस्य शासनस्य वा वाचकः, अपि तु भूमिमात्रस्य वाचकः, भूमिशब्दोऽपि वेदे न भूम्येकदेशाभिधायी, अपि तु 'भूगोल'रूपषष्ट्युत्तरत्रिशताक्षांशात्मकस्य सम्पूर्णस्य भूमण्डलस्य वाचकः, एवञ्च तत्सम्बन्धि यत् सूक्तम्, तत् सार्वभौममेव, तत्र निहिता या हितभावना, साऽवश्यमेव 'सार्वभौमहितभावना' इति मदीयसमयः। तत्र कतिपये मन्त्रा मननीयाः, यत्र कीदृशी उदात्तता स्फुटाऽस्ति, यथा—

सत्यं बृहदृतमुग्रं दीक्षा तपो
ब्रह्म यज्ञः पृथिवीं धारयन्ति।
सा नो भूतस्य भव्यस्य पत्न्युरुं
लोकं पृथिवी नः कृणोतु।।[२]

अत्र पृथिवीधारकाणि तत्त्वानि यानि निरूपितानि, तानि तु— बृहत्, सत्यम्, उग्रम्, ऋतम्, दीक्षा, तपः, ब्रह्म, यज्ञ इमानि सन्ति। सत्यम्, ऋतम्, दीक्षा, तपः, ब्रह्म (ब्रह्मचर्यम्), यज्ञश्चेति सर्वाण्यपि सार्वभौमहितभावनाप्रयोजकानि सन्ति। अग्रेऽत्रैव मन्त्रे—

एवम्भूतसर्वभूतहितभावात्मकसात्त्विकभावनामयी पृथिवी एवास्माकं भूतस्य भविष्यतश्च कालस्य उन्नतेर्विधात्री, एवं सार्वभौमहितभावनामयी पृथिवी लोके व्यापिका भवेदिति।

तत्रैव मन्त्रान्तरं यथा—

असम्बाधं वध्यतो मानवानां
यस्या उद्वतः प्रवतः समं बहु।
नानावीर्या ओषधीर्या बिभर्ति
पृथिवी नः प्रथतां राध्यतां नः।।[३]

---

१. द्र. अथर्ववेदे – १२।१;   २. द्र. अथर्व. शौनकीया शाखा – १२।१।१।
३. तत्रैव – १२।१।२।

मन्त्रेऽस्मिन् मानवेषु वैषम्यमपास्य साम्यस्थापना, अथ च विषमप्रदेशेष्वपि आवागमनसिद्धिः, किञ्च पृथिव्या विविधविधवीर्यमयौषधिधारणं वर्णयित्वा तस्याः पृथिव्या अस्माकं कृते शुभास्पदत्वं प्रार्थितम्।

एवञ्च न केवलमेकस्य देशस्य प्रान्तस्य राष्ट्रस्य वा, अपि तु सम्पूर्णस्य भूमण्डलस्य उदात्तरूपं वर्णितमिति स्पष्टमेव।

अग्रेऽपि—

यस्यां समुद्रा उत सिन्धुरापो
यस्यामन्नं कृष्टयः सम्बभूवुः।
यस्यामिदं जिन्वति प्राणदेजत्
सा नो भूमिः पूर्वपेये दधातु।।[१]

अस्मिन् मन्त्रे पर्यावरणशुद्धताया वर्णनं सर्वोत्कृष्टं स्पष्टमस्ति। अत्र तु— समुद्रस्य, सिन्धूनाम् (सरिताम्), अन्नस्य, कृषेः, उद्योगस्य च समग्रस्य व्यवस्थितरूपता वर्णिता, येन पर्यावरणप्रदूषणनिवारणं साधु सम्भवेत्, किञ्च तादृशी (पर्यावरणशुद्धा) एव पृथिवी अस्मिन् मन्त्रे शुद्धं पेयादिकमुपस्थापयितुं प्रार्थिता, इत्यहो, प्रजानां कृते कीदृशी स्वास्थ्यप्रदभावना सर्वलोकहितात्मिका सार्वभौमहितभावनारूपा निहिता वेदे इति स्पष्टमेव।

अतः परमपि—

यस्याश्चतस्रः प्रदिशः पृथिव्या
यस्यामन्नं कृष्टयः सम्बभूवुः।
या बिभर्ति बहुधा प्राणदेजत्
सा नो भूमिर्गोष्वप्यन्ने दधातु ।।[२]

अत्र न केवलं पृथिव्याः पर्यावरणशुद्धिः, अपि तु दिशामपि निर्मलीकरणं विहितम्, तत्रापि न केवलमेका, अपि तु सर्वाश्चतस्रो दिशा एव, याः पृथिवीं परितः सन्ति, यादृश्याम् अन्नं कृषिर्वा भवति। अत्र दिक्पदेन अवकाशः (रिक्तं स्थानम्) धर्तुं शक्यः, अन्यथा आकाशवाय्वादीनां शुद्धिः कथं स्यात्? एवम्भूतायां पृथिव्यां प्राणदायिनी शक्तिर्गोषु अन्नेषु स्यादिति अथर्ववेदस्य सार्वभौमहितभावना स्पष्टैव। दिशश्चतस्रः कस्यापि एकस्य राष्ट्रस्य नहि, अपि तु सम्पूर्णस्य भूमण्डलस्य सम्पत्तयः सन्तीति निर्विवादमेव।

१-२. द्र. अथर्व. शौनकीया शाखा – १२।१।४-५।

सार्वभौमहितभावनायां कृतिमतामुल्लेखोऽपि अनुपेक्ष्य इति आथर्वणी श्रुतिराह—

यस्यां पूर्वे पूर्वजना विचक्रिरे
यस्यां देवा असुरानभ्यवर्तन्।
गवामश्वानां वयसश्च विष्ठा
भगं वचः पृथिवी नो दधातु ।।[१]

मन्त्रेऽस्मिन् पूर्वेषां कर्तृत्वं प्रथमपादे, अत्याचारिणां पराजयः साधुपुरुषकर्तृको द्वितीयपादे वर्णितः, तथा सती एव पृथिवी गवाश्वप्रभृतीनां पशूनां पक्षिणां च कृते तेजस्विनी भूत्वा अस्माकं कल्याणास्पदं भविष्यतीति।

इयं धरित्री विश्वम्भरेति गीयते, अस्या विश्वम्भरारूपं वर्णयन्नृषिः प्रस्तौति—

विश्वम्भरा वसुधानी प्रतिष्ठा
हिरण्यवक्षा जगतो निवेशिनी।
वैश्वानरं बिभ्रती भूमिरग्नि-
मिन्द्रमृषभा द्रविणे नो दधातु ।।[२]

अत्रेदं दृश्यतां कीदृशी सार्वभौमहितभावना वर्तते, सा च पर्यावरणशुद्ध्यैव साधयितुमलमिति मत्वर्षिः पृथिवीनाम्नां योगार्थमाश्रित्य रहस्यं प्रकाशयति यद् एषा पृथिवी विश्वम्भरा = विश्वधारणपोषणक्षमा (डुभृञ् धारणपोषणयोः) वसुधानी = वसुपुरी ( 'प्रधाननगरी राज्ञां राजधानीति कथ्यते' इत्युक्त्या ) वसुमतीत्यर्थः।[३] अथ चेयं पृथिवी प्रतिष्ठा = प्रतिष्ठापिका समेषां जीवानाम् (अन्तर्भूतण्यर्थः) हिरण्यवक्षा = हिरण्यखनिमयी, जगतः = लोकस्य निवेशिनी = यथायथं निवेशिका, अत एव वैश्वानरम् = ऋत्वनुरूपमौष्ण्यम् (अन्यूनानतिप्रसक्तरूपम्) बिभ्रती 'पाला''लू'वर्जितेत्यर्थः। एवम्भूता पृथिवीयमस्माकं कृते सौभाग्यदात्री स्यात्।

पर्यावरणशुद्धौ अस्याः पृथिव्या वसुमती-वसुन्धरारूपात्मिकाया महान् महिमा सर्वजनस्वीकृत एव, यदि अस्या वसुमतीरूपं व्याहन्येत, तदेयं 'वसुन्धरा' कथं स्यात्? ततश्च चौर-लुण्टक-तस्कर-पाटच्चर-जाल्मप्रभृतिकूटमतीनां वृद्धिर्भवेत्, येन मानसिकप्रदूषणवृद्धिपूर्वं प्राकृतिकप्रदूषणवृद्धिरपि नितरां सम्भवेत्,

१-२. द्र. अथर्व. शौनकीया शाखा – १२।१।५-६।

३. अत्र 'भूमनिन्दाप्रशंसासु......' इत्यादिरीत्या भूम्नि, अतिशायने वाऽर्थे मतुब् युक्तः।

येन पर्यावरणहानिः प्रभवेत्, ततश्च सर्वभूतहितभावना खपुष्पायितैव स्यादिति वेदपुरुषः सङ्केतयति।

'माता भूमिः पुत्रोऽहं पृथिव्याः' इति प्रसिद्ध एव अथर्ववेदस्योद्‌घोषः, अत्र पृथिव्याः पुत्रत्वेन ऋषिरात्मानं प्रस्तौति, न तु कस्यचिद् देशस्य, प्रान्तस्य, राज्यस्य, राष्ट्रस्य, ग्रामस्य, नगरस्य, पुरस्य, क्षेत्रस्य वा। एतावता पृथिवीपुत्र एव सार्वभौमहितभावनां साधयितुमीष्ट इति सिद्धम्, सा च अथर्ववेदे स्पष्टैव, अनयैव दिशा अग्रेऽपि—

भूमे मातर्निधेहि मा भद्रया सुप्रतिष्ठितम्।
संविदाना दिवा कवे श्रियां मा धेहि भूत्याम्।।[१]

अत्र ऋषिर्भूमिं मातृत्वेन सम्बोध्य[२] कथयति— हे भूते मातः! एतेन पृथिवीयमस्माकं कृते न केवलं जडा भौतिकी एव, अपि तु चेतना, तत्रापि मातृवत् पूज्या दिव्या देवीस्वरूपेति स्पष्टमेव, अत एव तां सम्बोध्य कथनं सङ्गच्छते। पृथिवी तु सुप्रतिष्ठितैव, सा अस्माकं प्रतिष्ठां विदधातु, येनास्माकं श्रीर्भूतिश्च वर्धेतामिति। अत्रापि समग्रपृथिवीवासिनां कृते प्रतिष्ठा-श्री-भूतयश्च प्रार्थिता इति सार्वभौमहितभावना सुतरां स्पष्टेति। किञ्च—

'लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः' इत्युक्त्या सप्त समुद्राः पुराणोक्ताः प्रसिद्धा एव, तेषु दुग्धोदधिरन्यतमः, अस्माभिः सोऽवाप्तुं न शक्यः, परं वैदिक-ऋषिरिमां पृथिवीमेव दुग्धमयीं प्रस्तुत्य स्वीयां सर्वभूतहितभावनां पुनरपि प्रस्तौति, यथा—

शान्ति वा सुरभिः स्योना कीलालोघ्नी पयस्वती।
भूमिरधि ब्रवीतु मे पृथिवी पयसा सह।।[३]

मन्त्रेऽमुष्मिन् ऋषिस्तावत् पृथिवीमिमां सार्वभौमहितभावनाभिभूतः सन् शान्तिमयीम्, सुगन्धमयीम्, सजलाम्, सदुग्धाम् इत्थं प्रस्तूय, पृथिवी पयसा सह

१. द्र. शौनक., १२।१।६३।

२. सम्बोध्येति। अत्रेदं बोध्यम्—पृथिव्यां मातृत्वमत्र नारोप्यते, किन्तु मातृत्वं पूर्वतः सिद्धमेव, अत एव तत्त्वेन सम्बोधनं सङ्गच्छते, यतो हि सिद्धस्यैव सम्बोधनं भवति, न तु साध्यमानस्य, सेत्स्यमानस्य वेति वैयाकरणसम्प्रदायः, तदुक्तं वाक्यपदीये आचार्यश्रीमद्भर्तृहरिश्रीचरणैः—

'सम्बोधनं न लोकेऽस्ति विधातव्येन वस्तुना।
यथेन्द्रशत्रुर्वर्धस्व यथा राजा भवेति च'।। इति।

३. द्र. शौनक., १२।१।५९।

मां 'पयः' 'पयः' इति वचोभिराकारयेदित्यूचे । अहो तादात्म्यं पृथिवीपुत्रस्य मात्रा सह। मन्ये, ईदृशी उदात्तभावनाऽन्यत्र कुत्रापि भूयोऽन्वेषणेनापि न लभ्येत।

स्वस्तिवाचनमन्त्रसमूहेऽपि—

'पयः पृथिव्याम्, पय ओषधीषु, पयो दिव्यन्तरिक्षे पयोधाः। पयस्वतीः प्रदिशः सन्तु मह्यम्'।

इत्यत्रापि पृथिव्यामोषधीषु[१] दिवि, अन्तरिक्षे सर्वत्र पयांसि भवेयुरित्युक्त्या अथर्ववेदस्य सार्वभौमहितभावना स्फुटैव। पृथिव्यन्तरिक्षौषधिप्रभृतिग्रहणेन कस्यापि देशस्य, क्षेत्रस्य, राष्ट्रस्य, प्रान्तस्य, राज्यस्य, ग्रामस्य, पुरस्य, नगरस्य वा न, अपि तु सामस्त्येन सार्वभौमहितभावनाऽत्रानुसन्धीयतामिति न पूर्वोक्तं विस्मर्तव्यम्।

किञ्च, पयः पयो जरयतीतिवत् पयश्शब्दोऽयं जले दुग्धे वा स्यात्, इष्टापत्तिरेव, पृथिव्यादीनां जलात्मकत्वं दुग्धात्मकत्वं च स्यादिति वैदिको गूढोऽभिप्रायः। दुग्धस्येव जलस्यापि महन्महत्त्वं चिकित्सादिशा वर्तत एव, तदुक्तम्— 'अजीर्णे भेषजं वारि, जीर्णे वारि बलप्रदम्'। इति।

अत्र इदमपि सर्वथा स्मर्तव्यमेव यद् अस्माकं यद्राष्ट्रगीतमाश्रित्य सर्वे स्वतन्त्रतासङ्ग्रामे मृत्युरूपममृतमालिङ्गितवन्तः, तदपि एतदात्मकमेव, अत एव— 'सुजलां सुफलां शस्यश्यामलाम्' इत्यादि स्पष्टमेव।

किञ्च— इदमप्यवधेलिमं यद् यथा प्राकृतिकं यान्त्रिकं ध्वनिगतं प्रदूषणं वा हेयम्, तद्वद् वाचिकं प्रदूषणमपि सर्वथा हेयमेव, अर्थात् सर्वदा सर्वत्र सर्वथा माङ्गलिकं वच एव व्याहरणीयम्। 'सत्यं ब्रूयात् प्रियं ब्रूयात्' इति स्मार्तसमयोऽप्यत्रानुकूल इति मन्तव्यम्, तदाह भगवानथर्वा—

यद्वदामि मधुमत्तद्वदामि तदीक्षे तद्वनन्ति मा ।
त्विषीमानस्मि जूतिमानवान्यान् हन्मि दोधत ।।[२] इति।

किञ्च— यदुक्तं प्राक् 'माता भूमिः.....', तत्र यथा माता पुत्रवत्सला भवति, तथैव पुत्रोऽपि मातृवत्सल एव भवेदिति वैदिकी आथर्वणी स्थितिः, अतोऽस्मत्कर्तृकं भूखननादि तस्यै न रोचत इति विभावनीयम्, अतो वैदिकऋषिः खननादिरूपपृथिवीविदारणं निषेधयन्, तत्पूर्तिमभिलषति—

---

१. ओषधिः फलपाकान्ता। (द्र. नामलिङ्गानुशासनम्, द्वितीयकाण्डे वनौषधिवर्गः)

२. द्र. शौनक., १२।१।५८।

यत्ते भूमिं निखनामि क्षिप्रं तदपि रोहतु।
मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम्॥[१]

अत्रेदमपि न विस्मर्तव्यम्—

भूमिखननस्य पूर्तिर्न केवलं भावनामयी, अपि तु स्वास्थ्यलाभदिशा इयं परमावश्यकी, यतो हि खातेऽपूरिते, तत्र जलावरोधश्चिराय स्यात्, तेन जलं मलिनं दूषितमतोऽपेयमतोऽग्राह्यम्, पूतियुक्तं पर्युषितं मलवाहि च स्यात्, तथा च सति मशकादिरूपरोगकीटाणूत्पत्त्या प्रजाजनानां स्वास्थ्यहानिः, ततश्चायुष्यहानिरपि प्रभवेत्, अतः खातेषु जलावरोधो यथा न स्यात्, तदर्थं खाता एव अथर्ववेदोक्तदिशा क्षिप्रं पूरणीया इति, अहो पर्यावरणशुद्धता पूर्वजैस्सङ्केतितेति सार्वभौमहितभावनाबुद्धिः स्पष्टैवेति बुद्धिमद्भिर्निभाल्यताम्।

पर्यावरणरक्षणेनैव सार्वभौमहितभावना सेत्स्यति, पर्यावरणरक्षणञ्च वनरक्षणेनैव प्रकामं सेत्स्यतीति सार्वजनीनः सिद्धान्त इत्यद्यत्वे स्पष्टमेव; परन्तु वनरक्षणेन वन्याः पशवः क्रूराः सन्तः कदाचित् प्रजाजनानां दुःखाय प्रभवेयुः? इत्याशङ्कां मनसि निधाय, ततो रक्षणार्थं प्रार्थनां प्रस्तौति—

ये त आरण्याः पशवो मृगा वने
हिताः सिंहा व्याघ्राः पुरुषादश्चरन्ति।
उलं वृकं पृथिवि दुच्छुनामिव
ऋक्षीकां रक्षो अपबाधयास्मत्॥[२]

एतेन वन्यपशूनां रक्षणम्, अथ च तेषाम् अस्मत्तः पृथक् स्थितिः, एतद्द्वयमपि विशेषेण समीक्षणीयम्, अत्र वन्यपशूनाम्, नागरमनुष्याणाम्, उभयेषां स्थितिर्यथायथं साधिता, तेन न केवलं मानवानाम्, अपि तु प्राणिमात्रस्य जीवनयापनं निर्विघ्नं सदेव वेदानुगतं मन्तव्यम्, येन च 'सिंहेन रक्षितं वनम्, वनेन रक्षितः सिंहः' इति प्रामाणिकाभाणकभणितिश्चरितार्था भवतीत्यवधेलिमम् इति।

सार्वभौमहितभावनायां 'सूनृता वाक्' किमपि महत्त्वपूर्णं स्थानमधिकरोतीति सर्वप्रत्यक्षमेव, अतश्च— 'न ब्रूयात् सत्यमप्रियम्' इति सञ्ज्ञाघटीतितमामिति बोध्यम्, आह च आथर्वणी श्रुतिः—

१. द्र. शौनक., १२।१।३५;   २. तत्रैव – १२।१।४९।

ये ग्रामा यदरण्यं याः सभा अधिभूम्याम्।
ये सङ्ग्रामाः समितयस्तेषु चारु वदेम ते[१]।।

अत्र न केवलमेकत्र यत्र कुत्रचित्, अधिभूम्यां सर्वत्र ग्रामे, अरण्ये, सभायाम्, सङ्ग्रामे, समितौ वा सर्वत्र चारु कथनं वेदेनादिष्टम् इति बुध्यताम्। अत्रेदमवधेयं यद् **वेदस्तावदयं प्रभुसम्मतोपदेशभागपि कान्तासम्मितोपदेशमयीं काव्यकृतिं निर्माति—**

मनस्तु **साधुध्वनिभिः** पदे पदे हरन्ति सन्तो मणिनूपुरा इव[२]।

**यथा वा—**

पदविन्यासमात्रेण **यया न हरितं मनः।**[३] इति।

अन्ते च 'काले वर्षतु पर्जन्यः पृथिवी शस्यशालिनी' इति माङ्गलिक-श्लोकानुसारमेकं मन्त्रं प्रस्तौमि—

'यस्यामन्नं व्रीहियवौ यस्या इमाः पञ्च कृष्टयः।
भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे'।।[४]

तदेवमथर्ववेदस्य सार्वभौमहितभावना व्यक्तैवेति अलं पल्लवितेन। इदं तु स्वतन्त्रभारते परमावश्यकं यद् ईदृशानां ग्रन्थरत्नानामध्ययनाध्यापनादि सर्वथाऽपरिहार्यं भवेद् इति, तदर्थं संस्कृतभाषा सर्वविषयपाठ्यक्रमेषु अनिवार्या स्यादिति संस्कृतवर्षे भारतशासनं निवेद्य विरमामि।

**ब्रह्मवेद इह राजतेऽखिलः सार्वभौमहितभावनाविधिः।**
**यत्र भान्ति सततं ततो धरावारिवह्निककुभः शुभप्रदाः।।** इति।

●

---

१. द्र. शौनक., १२।१।५६;
२. द्र. कादम्बरी, कविवंशवर्णनात् पूर्वम्।
३. द्र. नलचम्पूप्रारम्भः;
४. अथर्व., शौनक. १२।१।४२।

# वेदमूर्तिसातवलेकरमहाभागानां व्यक्तित्वं कर्तृत्वं च

**डॉ. श्रीधरभास्करवर्णेकरः 'प्रज्ञाभारती'**
८१, अभ्यङ्करनगरम्,
नागपुरम्

❀ ❀ ❀

भारतस्य परदास्यकाले राष्ट्रस्यास्य समुद्धारार्थं, विशेषतः समाजस्य प्रबोधनार्थं दयानन्द-विवेकानन्द-लोकमान्यतिलक-अरविन्द-गान्धीप्रभृतिभिर्महानुभावैर्महान्तः प्रयत्नाः कृताः। एतेषु राष्ट्रोद्धारकेषु महाराष्ट्रे लब्धजन्मना वेदमूर्तिना पण्डितसातवलेकरमहाभागेन यदसाधारणं कर्तृत्वमाविष्कृतं तत् सर्वथा संस्कृतज्ञैर्विशेषतश्च वेदनिष्ठैश्चिरस्मरणीयं मन्यामहे। पारतन्त्र्यकाले ये स्वनामधन्या देशभक्ता अस्मिन् राष्ट्रे आविरभूवन्, तेषु संस्कृतपण्डितो वेदशास्त्रज्ञो वा कोऽपि नास्तीति केचन संस्कृतविद्याप्रतिकूलाः क्वचिद् वदन्ति। पण्डितसातवलेकर-महाभागस्य देशभक्तिप्रवणं जीवनचरितं ह्यस्य आक्षेपस्य प्रत्युत्तरमेव। प्रथमं तावत् सङ्क्षेपतोस्य महानुभावस्य चरित्रं निवेद्य ततस्तदीयं वेदप्रचाराधिष्ठितं राष्ट्रकार्यमत्र निवेद्यते।

अस्ति खलु महाराष्ट्रे सह्यगिरेरुपत्यकायां सावन्तवाडीमण्डले कोलगाँव इत्याख्यं खर्वटम्। तत्र लक्ष्मीबाई-दामोदरभट्टयोर्दम्पत्योः १८६७ खिस्ताब्दे सितम्बरमासे (१९ दिनाङ्के) जातस्य तनूजस्य श्रीपाद इति नामकरणं जातम्। जन्मग्रामे प्राथमिकं शिक्षणं किञ्चित् संस्कृताध्ययनं च समाप्य यौवने मुम्बई-मध्ये 'स्कूल ऑफ आर्ट्स्' इत्यत्र चित्रकलाध्ययनं कृत्वा १९०० तमे खिस्ताब्दे तत्रैव महाविद्यालये चित्रकलाध्यापकपदं श्रीपादः प्राप्तवान्। ततश्च शीघ्रमेव हैदराबादराज्ये चित्रकारोद्योगार्थं गत्वा, प्रभूतं धनार्जनं तेन कृतम्; किन्तु लोकप्रबोधनार्थं वैदिकमन्त्राधारेण ऊर्जस्वलविचारप्रचारः, सार्वजनीनव्याख्यानैः, व्यायामशाला-स्थापनेन चेत्येवं तेन राष्ट्रकार्यं समारब्धम्। ततश्च शासनाधिकारिणामुपद्रवं

परिहर्त्तुमयं चित्रकारोत्तमो हरिद्वारस्थे काँगडी-गुरुकुले चित्रकलाध्यापकपदं स्वीकृतवान्। तत्र निवसताऽप्यनेन महाभागेन वेदमन्त्राधारेण राष्ट्रप्रबोधनात्मकं स्वकार्यं यथापूर्वं प्रवर्तितम्। वेदमन्त्रेषु कोऽपि ऊर्जस्वलः प्रोत्साहकश्च सन्देशो वर्तते, तद्विस्मरणेनैव भारतीयसमाजे काऽपि ग्लानिरागतेत्यस्य वेदज्ञस्य श्रद्धा आसीत्। तामनुसृत्य कोल्हापुरे प्रकाश्यमानायां 'विश्ववृत्त' इत्याख्यायां मराठी-मासिकपत्रिकायां ''वैदिकप्रार्थनानां तेजस्विता'' तथा ''वैदिकं राष्ट्रगीतमि''ति लेखमाला प्राकाश्यत। अनेन लेखप्रकाशनेन आंग्लशासनाधिकारिणः प्रकुपिताः।

शासनस्य प्रकोपं ज्ञात्वाऽयं चित्रकारः काँगड़ीगुरुकुलं परित्यज्य आत्मरक्षणार्थं कर्णाटकस्थे अनगोक इत्याख्ये ग्रामे मित्रगृहे न्यवसत्। ततश्च शासनोपद्रवं परिहर्तुमान्ध्रप्रदेशे पीठापुरम् इत्यत्र वर्षमेकं यापितवान्। तत्रत्यं शासनोपद्रवं परिहर्तुं पुनश्च काँगडीगुरुकुलम् आगतं विज्ञाय, राजद्रोहनिमित्तं तं निग्रहीतुं शताधिकाः सशस्त्रा रक्षिणो गुरुकुलं प्राप्ताः। तैश्चायं वेदसन्देशप्रचारकः चित्रकारो विजनौरकारालये मासमेकं क्रूरकर्मभिः चौरलुण्ठाकैः सह निगडैर्निबद्ध आसीत्। ततश्च कोल्हापुरन्यायालये न्यायमूर्तिना पण्डितरावमहाभागेन अदण्ड्योऽयं पण्डित इति निर्णय उद्घोषितः।

एवं क्लेशमयं निर्वासितत्वमनुभूय १९०९ तमे ख्रिस्ताब्दे अयं वेदपण्डितः चित्रकलोद्योगेन जीविकार्जनार्थं लाहोरनगरं प्रति निवासार्थं गतः। तत्र प्रबलेन आर्यसमाजेन सह सम्पर्कं प्राप्य वेदप्रचारोत्साहः प्राप्तः। तत्र दशवर्षाणि चित्रकलाव्यवसायं राष्ट्रभक्तिप्रचारकार्यं च सोत्साहं कृत्वा प्रथममहायुद्धकाले (१९१८ ख्रिस्ताब्दे) महाराष्ट्रे औन्धशासनाधिपतेर्निमन्त्रणं प्राप्य वेदमूर्तिः सातवलेकरमहाभाग औन्धनगरे निवासार्थं सकुटुम्बपरिवारम् आयातः। औन्धनगरे उषित्वा वेदसन्देशप्रचारात्मकं महनीयं राष्ट्रोद्धारकार्यं स्वस्थतया कर्तुं स्वीयो मुद्रणालयः पण्डितवरेण संस्थापितः।

अत्र राज्ये निवसता अनेन प्रजापरिषदः, राष्ट्रसेवादलस्य, राष्ट्रीय-स्वयंसेवकसंघस्य तथा अन्यच्च बहुविधं राष्ट्रप्रबोधनात्मकं कार्यं यथापूर्वं सञ्चालितम्। वेदप्रचारात्मकं स्वीयं प्रियकार्यं प्रवर्तयितुं ''स्वाध्यायमण्डलम्'' इत्याख्या स्वीया संस्था च पण्डितसातवलेकरमहाभागेन संस्थापिता आसीत्। अत्र १९१८ तः आरभ्य १९४८ पर्यन्तं त्रिंशद्वर्षाणि वेदविषयकं प्रभूतं ग्रन्थलेखनं .वेदसंहितामुद्रणं वेदानुवादलेखनं च इत्येवंविधं प्रभूतं कार्यं पण्डितवर्येण कृतम्। १९४८ तमे ख्रिस्ताब्दे स्वराज्योदयानन्तरं गान्धी-महात्मनो वधेन महाराष्ट्रे

ब्राह्मणविरोधमयः कोऽपि लोकप्रक्षोभः समुद्दीपितः। तदानीमेव औन्धराज्यस्य विलयनं जातम्। एवं तस्यां प्रतिकूलपरिस्थितौ औन्धनगरे निवासमसम्भवं मत्वा स्ववयसः ८० तमे वर्षे महाराष्ट्रं परित्यज्य गुजरातराज्ये सूरतमण्डलान्तर्गते किल्लापारडी इत्याख्ये ग्रामे निवसितुं वेदमूर्तिः सपरिवारं प्रस्थितः।

तत्र किल्लापारडीग्रामे ख्रिस्तसाम्प्रदायिकानामेकं प्रार्थनामन्दिरम् उद्यानभवनादिभिः परिवृतमासीत्। श्रीसातवलेकरमहाभागैस्तानि सर्वाणि भवनानि क्रीत्वा तत्र स्थाने स्वीय आनन्दाश्रमः संस्थापितः। स्थानत्यागावसरे ते ख्रैस्ताः स्वीयं प्रार्थनामन्दिरं विनाश्य गन्तुं प्रवृत्ताः। तदा सातवलेकरमहाभागैस्ते प्रार्थिताः यत्— 'अहो तिष्ठतु भवदीयमेतत्प्रार्थनामन्दिरमत्रैव। ख्रिस्तोपासका अत्र आगत्य कुर्वन्तु सुखेन ईशप्रार्थनाम्। वयं हिन्दुधर्मीया न मन्दिरभङ्गं द्रष्टुं समीहामहे'। परमयं सदुपदेश ऊषरवर्षणवद् विफलतां गतः। ख्रैस्त्यप्रचारकैस्तन्मन्दिरं निपात्य तदिष्टकाद्वारवातायनानि अप्यन्यत्र नीतानि। एवमानन्दाश्रमोद्याने स्थितस्य मन्दिरस्य विनाशं दृष्ट्वा व्यथितहृदयैः सातवलेकरमहाभागैस्तस्मिन्नेव चर्चस्थाने मन्दिरस्य पुनर्निर्माणार्थं प्रयत्नः समारब्धः। तदर्थं पर्याप्तं धनसंग्रहं कृत्वा १९५४ तमे ख्रिस्ताब्दे अभिनवं वेदमन्दिरं निर्मितम्। अस्मिन् वेदमन्दिरे वेदप्रमुखाः सकलधर्मग्रन्थाः संस्थापिताः सन्ति।

एवं नानाविधं स्वधर्मसमाजहितकरं कुर्वतां सातवलेकरमहाभागानां सर्वप्रधानं कार्यं हि वेदप्रचारो नाम। तदर्थं संस्कृतभाषापरीक्षा इव, वेदपरिचय-वेदप्रवेश-वेदप्राज्ञ-वेदविशारद-वेदपारङ्गत-वेदाचार्य इति संज्ञा वेदपरीक्षास्तैः स्वाध्यायमण्डलस्य संचालकत्वे प्रवर्तिताः। चत्वारोऽपि वेदग्रन्थाः स्थूलाक्षरैः, सूक्ष्माक्षरैश्च स्वीये मुद्रणालये मुद्रिताः। देवतामन्त्रसङ्ग्रहाः, अष्टादशवेदर्षीणां दर्शनानि, दशोपनिषदां भाष्याणि, श्रीमद्भगवद्गीतायाः पुरुषार्थबोधिनी-नाम्नी टीका, गोज्ञानकोशः, वेदसम्बद्धानि त्रिंशदधिकानि व्याख्यानानि इत्यादि बहुविधं वाङ्मयं तैर्दीर्घकालसंशोधनपरिश्रमेण मुद्रयित्वा सर्वत्र प्रचारितम्। वैदिकविषयाऽधिष्ठितानि द्विशताधिकानि विविधानि तदीयानि व्याख्यानानि धनाभावेन मुद्रणसंस्कारं नालभन्त।

एवं महर्षेर्दयानन्दस्य चरित्रतः सन्देशतश्च प्राप्तप्रबोधैः सातवलेकरमहाभागैरस्मिन् वेदविद्याप्रतिकूले काले यन्महनीयं कार्यं कृतं तत् सर्वथा अभूतपूर्वम्। वैदिकधर्मस्य वैदिकविचाराणां वैदिकसमाजव्यवस्थाया वैदिकधारणायाश्च सर्वत्र प्रचारो यावन्न भवेत्, तावद् भारतीयानां दौर्भाग्यं नैवाऽस्तं

यास्यतीति सातवलेकरमहाभागानां सिद्धान्त आसीत्। अत एव यैः कैश्चिद् वेदोत्सादनार्थं प्रचारः कृतस्तान् प्रति तेषां हृदये महान् विरोधः प्रास्फुरत्। वैदिकादर्शवादविस्मरणेन एव भारतराष्ट्रस्य सर्वाङ्गीणा अधोगतिः सञ्जाता। वैदिकमार्गत्यागेनैव भारतीया मोहम्मदीयानां ख्रैस्तानां चाक्रमणकाले पराजयं भेजिरे। पुनरपि— "अहमिन्द्रो न पराजिग्ये", "कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः", "कृण्वन्तो विश्वमार्यम्", "नायमात्मा बलहीनेन लभ्यः", "न मृत्यवे अवतस्थे कदाचन", "अदीनाः स्याम शरदः शतम्" इत्येतादृशानां वैदिकसन्देशानां दृढसंस्कारेणैव राष्ट्रमिदं पुनरपि स्वीयां प्राक्तनीं प्रतिष्ठां निखिले राष्ट्रमण्डले सम्प्राप्नुयादिति सातवलेकरमहाभागानां सर्वत्र प्रतिपादनमासीत्।

वेदवाङ्मयस्य संस्कृतभाषायाश्च पुरस्कारार्थं यद् महनीयं कार्यं सातवलेकरमहाभागैः स्वीये सङ्घर्षमये प्रदीर्घजीवने अव्याहतं कृतम्, तदर्थं सर्व एव भारतीयास्तेषामाधमर्ण्यं नूनं धारयन्ति। अनेन महाकार्येण समं यद् हिन्दीवाङ्मयसेवाकार्यमनेनं महाराष्ट्रीयेण पण्डितेन कृतं तदर्थं १९५२ तमे ख्रिस्ताब्दे राष्ट्रभाषासमित्या महात्मागान्धीपुरस्कारप्रदानेन ते सम्मानिताः। अहिन्दीभाषीयेषु येषां हिन्दीसेवाकार्यं प्रशंसार्हं भवति, तेभ्योऽयं पुरस्कारः प्रदीयते।

"कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः" इति वेदादेशाऽनुसारमहं समग्रं पुरुषायुषं जीविष्यामीत्ययं वेदपण्डितः स्वव्याख्यानेषु भूयो भूय उद्घोषयति स्म। स्वीयामाकांक्षामनुसृत्य १०२ वर्षमितमायुर्वेदमूर्तिना कर्मनिष्ठतया यापितम्। १८६७ सितम्बरमासे लब्धजन्मा अयं विद्वद्धुरीणः १९६७ तमे ख्रिस्ताब्दे जुलाई-मासस्य ३१ दिनाङ्के देवभूयं गतः।

## वेदमूर्तिसातवलेकरमहाभागानां ग्रन्थसम्पत्

| | ग्रन्थाः | पृष्ठ-संख्या |
|---|---|---|
| १. | अथर्ववेदः | ५६७ |
| २. | ऋग्वेदसंहिता | ९५२ |
| ३. | यजुर्वेदः (काण्व-तैत्तिरीय-मैत्रायणी-काठक-सं.) | १६६३ |
| ४. | सामवेदसंहिता | ६२१ |
| ५. | उपनिषद्भाष्यग्रन्थमाला | १०५३ |
| ६. | ऋग्वेदमन्त्रसूची | १४६ |

| | | |
|---|---|---|
| ७. | गीतालेखमाला | १४३४ |
| ८. | दैवतसंहिता भागः-१ | ८११ |
| ९. | दैवतसंहिता भागः-२ | ८३२ |
| १०. | दैवतसंहिता भागः-३ | ११५४ |
| ११. | पुरुषार्थबोधिनी (गीताव्याख्या) | ९७८ |
| १२. | भगवद्गीता-निबन्धमाला (सप्तभागात्मिका) | १३४४ |
| १३. | महाभारतम् | २२३८ |
| १४. | विष्णुसहस्रनाम-व्याख्या | १४५ |
| १५. | वेद-परिचयः | ५७२ |
| १६. | वैदिकव्याख्यामाला (४८ व्याख्यानानि) | ७७७ |
| १७. | वाल्मीकिरामायणम् | ४५५० |
| १८. | वैदिक-अग्निविधा | २१६ |
| १९. | वैदिक-धर्मखण्डः | २७८ |
| २०. | भारतीय-संस्कृतिः | २८८ |
| २१. | गोज्ञानकोशः (भागः-१) | ३०३ |
| २२. | गोज्ञानकोशः (भागः-२) | २०१ |
| २३. | जीवनप्रकाशः | २६७ |
| २४. | वैदिक-चिकित्सा | १६० |
| २५. | सन्ध्योपासना | १७६ |
| २६. | संस्कृतस्वयंशिक्षकः (२४ भागात्मकः) | १२४६ |
| २७. | अथर्ववेद का सुबोध अनुवाद | १६३९ |
| २८. | अथर्ववेद का सुबोध भाष्य | २०६८ |
| २९. | ऋग्वेद का सुबोध भाष्य | १४९६ |
| ३०. | यजुर्वेद का सुबोध भाष्य | ७१३ |
| ३१. | वेद का स्वयं शिक्षक (भाग१) | १३८ |
| ३२. | वेद का स्वयं शिक्षक (भाग२) | २२४ |

वेदमूर्तिसातवलेकरमहाभागानां सकलग्रन्थसंख्या चतुःशताधिका (४०९) वर्तते। तेषु बृहदाकाराणां केषाञ्चन एव ग्रन्थानां नामावली अत्र स्थालीपुलाकन्यायेन

ग्रन्थस्वरूपपरिचयार्थं मया प्रदत्ता। एतदतिरिक्ता लघ्वाकारा मराठी-हिन्दीनिबन्धा अपि पुस्तकरूपेण तैः प्राकाश्यन्त। तेषु अग्निदेवता, अशोकचक्र, अक्षरविज्ञान (पृ.१७०), राष्ट्रभाषेचा प्रश्न, ईशोपनिषदातीत राजकारण, एकादशी वा उपवास, देवेमन्त्रांचा अर्थ, मन्युसूक्त, वेद में रोगजन्तुशास्त्र, पुरुषसूक्त, पौराणिककथा-विवेचन, प्राचीन आर्यांचे राजकीय विचार, प्राणसूक्त, मरुद्देवतामन्त्रसङ्ग्रह, मराठी-हिन्दुस्थानी-कोश, वायुदेवता, विजयादशमी, वैदिकचिकित्सा (पृ. १६०), वैदिकधर्मखण्ड (पृ. २७८), वैदिकराष्ट्रगीत, वैदिकसर्पविद्या, वैदिकस्वराज्य-महिमा, सनातनधर्माचे स्वरूप, स्वराज्यसम्बन्धाने ऋषीचे सन्देश, सूर्यभेदन व्यायाम, आर्यों का भगवा ध्वज, रुद्रदेवता, छूत और अछूत (पृ. २५२), दीर्घायु कैसे प्राप्त हो (पृ. १५९), बालकों की धर्मशिक्षा, योग के आसन, विश्वराज्य में देवताओं का कार्य, वेद में कृषिविद्या, वेद में चर्खा, इत्येते निर्देशमर्हन्ति।

वेदमूर्तीनां महाप्रयाणानन्तरं तदीयं सर्वमेव कार्यजातं खण्डितमिवासीत्। १९४८ तमे खिस्ताब्दे तैर्यत्र किल्लापारडी-ग्रामे चर्चस्थाने वेदमन्दिरस्य संस्थापना कृता, तत्रैव तदीयं कार्यं पुनः प्रवर्तयितुं कैश्चिद् महानुभावैर्नवोत्साहेन प्रयत्नः समारब्धः। नचिरेण तत्र आधुनिकं मुद्रणालयं संस्थाप्य जीर्णतां गतानां दुर्लभाणां च ग्रन्थानां पुनर्मुद्रणं प्रारभ्यते। सम्प्रति २५ मितानां ग्रन्थानां पुनर्मुद्रणं जातम्। तेषु चतुर्णां वेदसंहितानां मूल्यं १५३० रूप्यकमितं वर्तते।

पञ्चाशद्वर्षेभ्यः प्राक् किल्लापारडी-ग्रामे स्वाध्यायमण्डलस्य पुनः प्रतिष्ठापना स्ववयः ८० तमे वर्षे वेदमूर्तिना सातवलेकरमहाभागेन कृता आसीत्। अस्मिन् १९९८ तमे वर्षे तन्निमित्तं स्वर्णजयन्तीमहोत्सवो मुम्बई-पुणे-नागपुर-प्रभृतिषु नगरेषु समपद्यत।

●

# वेदेषु विकृतिपाठानां विचारः

**श्रीमान् आमोदवर्धनः कौण्डिन्न्यायनः**
च. २/४१९, स्वाद्ध्यायशाला, सरस्वतीमार्गः,
लाजिम्पाट्, काष्ठमण्डपनगरम्,
नेपालदेशः

❀ ❀ ❀

**प्रस्तावना**

अनादिरपौरुषेय ऋग्-यजुः-सामाऽथर्वसु विभक्तो गुरुशिष्यपरम्परयाऽऽगतो मन्त्रब्राह्मणरूपश्च शब्दराशिर्वेद इति तदभियुक्तैरुक्तं दृश्यते। आत्मन इष्टस्य प्राप्त्यै अनिष्टस्य च परिहाराय अलौकिकस्योपायस्य प्रदर्शको ग्रन्थो वेद इति च शास्त्रस्याऽऽधारे प्राचीनैराचार्यैरेव प्रतिपादितं विद्यते। 'विद ज्ञाने' 'विद विचारणे' 'विद सत्तायाम्' 'विद्लृ लाभे' इत्येतेभ्यो धातुभ्योऽच्प्रत्ययस्य घञ्प्रत्ययस्य वा योगेन वेदशब्दः पाणिनीयव्याकरणेन व्युत्पाद्यते। तदनुसारं 'विदन्ति जानन्ति धर्मादिपुरुषार्थान् मनुष्या यैस्ते' इति 'विद्यन्ते सन्ति धर्मादिपुरुषार्थोपाया येषु ते' इति, 'विन्दन्ते लभन्ते धर्मादिपुरुषार्थान् मनुष्या यैस्ते' इति वा वेदा इति वेदशब्दस्य व्युत्पत्तिर्भवितुमर्हति[१]। वेदशब्दस्यार्थो ज्ञानमिति च भवति। चतुर्षु पुरुषार्थेषु मध्ये वेदेषु मुख्यतया धर्मस्य मोक्षस्य च विषयः प्रतिपादितो वर्तते। तत्रार्थस्य कामस्य च विषयो गौणरूपेणैवाऽऽगतो दृश्यत इति तदभिज्ञैः स्पष्टीकृतं दृश्यते[२]।

वेदस्यैव पर्यायभूताः श्रुतिः, अनुश्रवः, त्रयी, आम्नायः, समाम्नायः, आगमः, निगमः, अध्याय इत्येते शब्दाः संस्कृतवाङ्मय उपलभ्यन्ते। वेदानां

---

१. विद्यते ज्ञायते लभ्यते वैभिर्धर्मादिपुरुषार्थ इति वेदाः' इति ऋग्वेदप्रातिशाख्यवृत्त्यारम्भे विष्णुमित्रेण वेदशब्दस्य व्युत्पत्तिः कृता दृश्यते।

२. 'तेन सर्वस्मृतीनां प्रयोजनवती प्रामाण्यसिद्धिः। तत्र यावद् धर्ममोक्षसम्बन्धि तद् वेदप्रभवम्, यत्त्वर्थसुखविषयं तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यम्। एषैवेतिहासपुराणयोरपि उपदेशवाक्यानां गतिः' इति कुमारिलभट्टेन तन्त्रवार्तिके (१।३।१२) उक्तमस्ति।

मन्त्रभागो ब्राह्मणभागश्चेति द्वौ भागौ भवतः। तत्र प्रायो यज्ञकर्मणां स्मारकाणि तत्र प्रयोज्यानि च वेदवाक्यानि मन्त्रा इत्युच्यन्ते। मन्त्राणां सङ्ग्रहो मन्त्रसंहितेति कथ्यते। मन्त्राः प्रायेण त्रिविधाः सन्ति। तत्र च्छन्दोबद्धा मन्त्रा ऋचः, गद्यमया मन्त्रा यजूंषि, गीतिमया मन्त्राश्च सामानीति सङ्क्षेपेण वक्तुं शक्यते। यज्ञकर्मणां स्वरूपाणां साङ्गोपाङ्गं विवेचकाः, यज्ञानां विधायकाः, यज्ञाधिकारिफल-द्रव्यदेवतादीनां प्रकाशकाः, विधेयार्थानां प्रशंसकाः, निषेध्यार्थानां निन्दकाश्च वेदभागा ब्राह्मणानीत्युच्यन्ते। ब्राह्मणेष्वेव प्रायेण प्रसिद्धानि आरण्यकानि उपनिषदश्चाऽन्तर्भवन्ति।

भारतवर्षीयाणां जनानां कृते सर्वविधज्ञानस्य स्रोतोभूतो वेदराशिरतीव महत्त्वपूर्णोऽस्ति। धर्मार्थकाममोक्षपुरुषार्थानां मध्ये मुख्यतया धर्ममोक्षयोः प्रतिपादको वेदोऽस्मिन् विषये निरपेक्षप्रमाणतयाऽङ्गीक्रियते। सर्वविधस्य संस्कृतवाङ्मयस्य स्रोतस्त्वेन स्थितो वेदो भूमण्डले सर्वप्राचीनो ग्रन्थश्च स्वीक्रियते। वेदादेव भारतवर्षीयाणां जनानां धर्मः, संस्कृतिः, आचारः, विचारः, दर्शनम्, जीवनपद्धतिः, कृषिः, वाणिज्यमित्यादयो विषया मूलरूपेण सम्यग् ज्ञातुं शक्यन्ते। अद्य यावद् वेदाध्ययनाध्यापनस्याऽविच्छिना परम्पराऽपि वेदस्य महिमानमेव स्पष्टं करोति। अत एवेदृग्महत्त्वपूर्णस्य वेदस्य संरक्षणाय पतञ्जलिनाऽपि पाणिनीयव्याकरणभाष्ये पस्पशाह्निके "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति आगममुल्लिख्य वेदाध्ययने बलं दत्तमस्ति। वैदिकधर्मे वेदाध्ययनस्य महिमाऽद्वितीयो वर्तत इति वेदाध्ययनस्याऽऽवश्यकत्वं महत्त्वं च विविधरूपेण शास्त्रेषु बहुधा वर्णितं निर्दिष्टं च दृश्यते। तथा हि—

(क) "स्वाद्ध्यायोऽद्ध्येतव्यः" इति माध्यन्दिनीयवाजसनेयिशतपथब्राह्मणे (११।५।६।३)।

(ख) "स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः, तद्धि तपस्तद्धि तपः" इति तैत्तिरीयारण्यके (७।९)।

(ग) "ये ह वै के च श्श्रमा इमे द्द्यावापृथिवी अन्तरेण स्स्वाद्ध्यायो हैव तेषाम्परमता काष्ट्ठा" इत्यादि मा.वा. शतपथब्राह्मणे (११।५।७।२)।

(घ) "नित्यस्वाध्यायः पितृभ्यश्चोदकदानम्, यथोत्साहमन्यत्" इति गौतमधर्मसूत्रे (१।५।४-५)।

(ङ) "योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः"।। इति। (मनुस्मृतौ-२।१६८)

(च) "त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते।
तपसश्च परस्येह नित्यं स्वाध्यायवान् द्विजः"।। इति।
(याज्ञवल्क्यस्मृतौ-१।४८)

(छ) "परिनिष्ठितकार्यस्तु स्वाध्यायेनैव ब्राह्मणः।
कुर्यादन्यन्न वा कुर्यान् मैत्रो ब्राह्मण उच्यते"।। इति महाभारते शान्तिपर्वणि
(चित्रशालासंस्करणे-१२।६०।१२, १२।२३८।१३)।

प्राचीनकाले समग्रस्य वेदस्य सैकत्रिंशच्छताधिकसहस्रमिताः (११३१) शाखा बभूवुरिति पाणिनीयव्याकरणभाष्यकारस्य पतञ्जलेरुल्लेखाद् ज्ञायते[1]। तासु वेदशाखासु मध्ये बह्व्यः शाखाः कालक्रमेण लुप्ता अभूवन्। एतर्हि प्रमुखतया ऋग्वेदस्य शाकलशाखा, आश्वलायनशाखा, शाङ्खायनीयशाखा, कौषीतकिशाखा च; कृष्णयजुर्वेदस्य कठशाखा, कपिष्ठलकठशाखा, मैत्रायणीयशाखा, तैत्तिरीयशाखा च; शुक्लयजुर्वेदस्य माध्यन्दिनीयशाखा काण्वशाखा च; सामवेदस्य जैमिनीयशाखा, कौथुमशाखा च; अथर्ववेदस्य पैप्पलादशाखा शौनकिशाखा चोपलभ्यन्त इति वदन्ति। वेदशाखाशब्देन कस्याऽपि वेदस्य मन्त्रसंहिता, ब्राह्मणम् (ब्राह्मणम्, आरण्यकम्, उपनिषदश्च), श्रौतसूत्रम्, गृह्यसूत्रम्, धर्मसूत्रम्, परिशिष्टानि, प्रातिशाख्यं चेति ग्रन्थाः सामान्येन बोध्यन्ते, विशेषतया च मन्त्रसंहिता ब्राह्मणं चेत्येव बोध्यते।

ऋग्वेदस्य बहुप्रचारिताया मुद्रितायाः शाकलशाखाया मन्त्रसंहिताया गुरुशिष्यपरम्परयाऽध्येतारोऽधुनापि महाराष्ट्रे, कर्णाटके, आन्ध्रप्रदेशे, द्रविडदेशे च सन्तीत्यवगम्यते। अस्याः शाखाया नाम शैशिरीयशाकलशाखेति भवितुमर्हतीति विदुषां निष्कर्षो दृश्यते। ऋग्वेदस्यैव आश्वलायनीयशाखाया अध्येतारः कर्णाटकप्रदेशे सन्तीति बुध्यते। एतस्याः शाखाया मन्त्रसंहिताया द्वे पुस्तके लण्डननगरस्य इण्डिया-ऑफिस-ग्रन्थालये स्त इति चिन्तामणिगणेश-काशीकरेणोल्लिखितं वर्तते[2]। अतो बलदेवोपाध्यायेन 'अद्य त्वस्याः शाखाया

---

१. "चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाऽऽथर्वणो वेदः" इति पाणिनीयव्याकरणमहाभाष्ये पस्पशाह्निके।

२. "लण्डननगरे इण्डिया-ऑफिस-ग्रन्थालये आश्वलायनमन्त्रसंहितायाः पुस्तकद्वयम् (३७८, ३७९ क्रमाङ्कितम्) अस्ति" इति ऋग्वेदखिलानां प्रास्ताविके चिन्तामणि-गणेश-काशीकरेणोक्तं दृश्यते (वैदिकसंशोधनमण्डलम्, चतुर्थो भागः, १९४६, पृ. ९११)।

गृह्यसूत्रं श्रौतसूत्रं चैवोपलभ्येते'[१] इत्याद्युक्तं वस्तुस्थितिमूलकं न वेति परिचिन्तनीयं प्रतिभाति। ऋग्वेदस्यैव शाङ्खायनीयशाखाया अध्येतारो गुर्जरप्रदेशे वर्तन्त इति ज्ञायते। अस्याः शाखाया मन्त्रसंहिता मुद्रिता न दृश्यते, पुस्तकालयेषु हस्तलिखितरूपेण स्थिताऽवगम्यते। ऋग्वेदस्यैव कौषीतकिशाखाया मन्त्रसंहिताऽपि मुद्रिता नाऽस्ति। अस्याः शाखाया अध्येतारः केरलप्रदेशे प्राप्यन्ते।

कृष्णयजुर्वेदस्य तैत्तिरीयशाखाया अध्येतारो महाराष्ट्रे दक्षिणभारते च प्रभूता उपलभ्यन्ते। शुक्लयजुर्वेदस्य माध्यन्दिनीयशाखाया अध्येतारः प्रमुखरूपेणोत्तरभारते सन्ति। महाराष्ट्रे, गुर्जरप्रदेशे, नेपालदेशे चास्याः शाखाया अध्येतारो वर्तन्ते। शुक्लयजुर्वेदस्य काण्वशाखायाः कतिपयेऽध्येतारो वाराणस्यामुपलभ्यन्ते।

सामवेदस्य जैमिनीयशाखाया अध्येतारो द्रविडदेशे, कौथुमशाखाया अध्येतारश्च राजस्थाने, गुर्जरप्रदेशे, महाराष्ट्रे, कर्णाटके, द्रविडदेशे, आन्ध्रप्रदेशे, उत्कलदेशे, बङ्गदेशे, मिथिलायां च प्राप्यन्ते।

अथर्ववेदस्य पैप्पलादशाखाया अध्येतार उत्कलप्रदेशे शौनकिशाखाया अध्येतारश्च गुर्जरप्रदेशे सन्तीति वदन्ति।

किन्तु यथाविध्याचार्यकृतोपनयनसंस्कारस्त्रैवर्णिको वटुर्यथाकालमध्यायोपाकर्म कृत्वा यथाविधि वेदोऽध्यापनीयो भवति[२], अन्यथाऽधीतोऽध्यापितो वापि वेद इष्टाऽदृष्टोत्पादनार्थमसमर्थोऽपर्याप्तो वा लौकिकदृष्ट्यैव सामान्यज्ञानार्थमेवोपयोगी भवतीति एतद्विषये विशेषतोऽवधेयं वर्तते। अधुना सम्पूर्णेऽपि भारतवर्षे शास्त्रीयरूपेण शुद्धरूपेण विधिपूर्णा वेदाध्ययनपरम्पराऽत्यन्तं क्षीणा प्रतीयते। अध्यायोपाकर्मपूर्वकं वेदाध्ययनमतीव विरलमवगम्यते। अतो भारतवर्षीयैर्ब्राह्मणैर्वेदाध्ययनाऽध्यापनस्य मुख्यां शास्त्रीयां परम्परां सुरक्षितां कर्तुं विस्तारयितुं च विशेषतोऽवधानं दातुमुचितं दृश्यते।

---

१. "आज तो इस शाखा के केवल गृह्य तथा श्रौत सूत्र ही उपलब्ध होते हैं। अर्थात् आश्वलायन गृह्य तथा आश्वलायन श्रौत के अतिरिक्त इस शाखा के अन्य अंश उपलब्ध नहीं होते" इति 'वैदिक साहित्य और संस्कृति' इति ग्रन्थे बलदेवोपाध्यायेनोल्लिखितं दृश्यते (१९६७, वाराणसी, पृ.१२८)।

२. ब्रह्मतेजोऽभिवृद्ध्यर्थं पञ्चमेऽब्दे व्रतं ददौ।
उपाकर्म ततः कृत्वा वेदानध्यापयत् सुधीः"।।
इति स्कन्दपुराणे काशीखण्डे (११।४०-४१)।

## वेदेषु प्रकृतिपाठ-विकृतिपाठयोर्विचारः

उक्तविधस्यातीव महत्त्वपूर्णस्य वेदस्य मन्त्राणां शुद्धतायाः सुरक्षणाय शुद्धतया कण्ठस्थीकरणाय च प्राचीनैर्ऋषिभिराचार्यैश्च विविधा उपाया अवलम्बिता दृश्यन्ते। तत्र वेदमन्त्राणां पाठस्य मुख्यौ प्रकारौ द्विविधौ निर्दिष्टौ स्तः, प्रकृतिपाठो विकृतिपाठश्चेति। तत्र संहितापाठः पदपाठः क्रमपाठश्च प्रकृतिपाठान्तर्गता भवन्तीति केचन मन्यन्ते। किन्तु संहितापाठ एक एव पदपाठादीनां प्रकृतिभूतः पाठो मन्तव्यः। अन्ये सर्वेऽपि पाठप्रकारा विकृतिपाठान्तर्गता मन्तव्याः[1]। यतो हि साक्षात्कृतधर्मभिर्ऋषिभिरपौरुषेयाः संहितारूपा मन्त्रा एव दृष्टा उपदिष्टाश्च[2]। मन्त्रसंहितानामेवाऽऽधारे मुनिभिः शाकल्यादिभिः पदपाठानां रचनाः कृताश्चेत्यवगम्यते। यद्यपि वेदाङ्गशिक्षारूपैः प्रातिशाख्यैः पदपाठं प्रकृतिपाठमिव कृत्वा पदपाठात् संहितापाठरचनाया नियमा लोपागमवर्णविकाररूपा उपदिष्टास्तथापि पदपाठः पदेषु लोपागमवर्णविकारकल्पनेन मन्त्रपदस्वरूपनिरूपणाय प्रवृत्तानां प्रातिशाख्यानां कृत एव प्रकृतिपाठः, नाऽन्येषां कृत इत्यवगन्तव्यम्[3]। यद्यपि पतञ्जलिना पाणिनीयव्याकरणभाष्ये पदकारैर्यथालक्षणमेव पदपाठः कर्तव्य इत्युक्तं वर्तते[4], तथापि पदपाठानां पाणिनीयव्याकरणात् पूर्वमेव वृत्तत्वाद् मुनिप्रणीतत्वाच्च तत्र वैदिकैरादरो नैव क्रियते। अतः पदपाठानुसारमेव तन्नियमानामन्वाख्यानं व्याकरणेन कर्तव्यमिति वैदिका मन्यन्ते।

अत एव वस्तुतो विकृतिपाठेषु एव पदपाठ-क्रमपाठावपि गणयितुमुचिताववगम्येते[5]। पङ्क्तिपावनब्राह्मणत्वसिद्ध्यर्थं जटादिविकृतीनां पाठः

---

१. संहिता प्रकृतिः प्रोक्ता पदस्यैतत् क्रमस्य तु।
जटायाः प्रकृतिस्त्वेष इति नित्यं निबोधत।। इति कौहलीयशिक्षायाम् (श्लो. ५५)।

२. "साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः, उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च' इति निरुक्ते (१।६।४) यास्कः।

३. "पदप्रकृतीनि सर्वचरणानां पार्षदानि" इति निरुक्ते (१।६।१) यास्कः।

४. "न लक्षणेन पदकारा अनुवर्त्याः। पदकारैर्नाम लक्षणमनुवर्त्यम्। यथालक्षणं पदं कर्तव्यम्" इति (३।१।१०९, द्वितीये वार्तिके)।

५. "पदादिविकृतीनां ये पारायणपरायणाः।
महात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः पङ्क्तिपावनाः"।। (श्लो. २१) इति कौण्डिन्यशिक्षायाः श्लोकेऽपि पदपाठक्रमपाठसमेतानां पाठानां विकृतिपाठत्वेनोल्लेखो दृश्यते।

करणीय इति पुराणे उल्लिखितमित्युच्यते[१]। ततः प्रेरणां गृहीत्वा केचन वैदिका ब्राह्मणाः कस्यचिद् वेदभागस्य जटादिकाः काश्चन विकृतीरधुनापि पठन्ति। ताश्च विकृतयो व्याडिकृतायां विकृतिवल्यामधोनिर्दिष्टप्रकारेणोल्लिखिताः सन्ति—

> "शैशिरीये समाम्नाये व्याडिनैव महर्षिणा ।
> जटाद्या विकृतीरष्टौ लक्ष्यन्ते नातिविस्तरम् ।।
> जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ।
> अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः"।। इति (श्लो. ४-५)।

जटादीनां क्रमपूर्वकत्वात् 'क्रमजटः, क्रमदण्डः' इत्यादेः प्रयोगाच्च 'क्रमजटा, क्रममाला' इत्यादीनि मुख्यानि नामानीति ज्ञायते। एतासां विकृतीनां मध्ये क्रमशिखायाः क्रमजटानुसारित्वम्, क्रमलेखा-क्रममाला-क्रमध्वज-क्रमरथानां क्रमदण्डानुसारित्वम्, क्रमघनस्य च क्रमजटाक्रमदण्डोभयानुसारित्वं च दृश्यते। अत एतासु विकृतिषु क्रमजटा-क्रमदण्डयोर्मुख्यत्वमन्यासां तदनुसारित्वं चावगम्यते[२]। एवं च विकृतीनां व्याडिनिर्दिष्टः क्रमो लिङ्गानुरोधात् श्लोकानुरोधाच्चाऽऽश्रितः प्रतीयते। विकृतिसम्बन्धविशेषानुरोधाद् विकृतीनां विशिष्टः क्रमः कौण्डिन्न्यायन-शिक्षायामेवं प्रदर्शितः—

> "जटा शिखा च दण्डश्च लेखा माला ध्वजो रथः।
> घनश्च क्रमपूर्वा हि अष्टौ विकृतयः स्मृताः"।। इति (७।३००)।

### विकृतिपाठेषु पदपाठ-क्रमपाठयोर्मुख्यत्वम्

वेदमन्त्राणां पाठेषु संहितापाठस्याऽनादित्वादपौरुषेयत्वाच्च मुख्यत्वं सर्वाधिकं महत्त्वं च विद्यत एव। वेदानामध्ययनमनादिकालात् संहितापाठरूपेणैव प्रचलदागतं दृश्यते[३]। संहितारूपाणां वेदमन्त्राणामर्थज्ञाने यदाऽध्येतृभिः काठिन्य-मनुभूतं तदा मन्त्रगतपदानां विकाररहितस्वरूपाणां प्रदर्शने तदर्थस्पष्टीकरणाय

---

१. "वैदिकैः पठ्यमानत्वात् प्रत्यक्षस्मृतिमूलतः।
जटाद्यध्ययनं कार्यं पङ्क्तिपावनकारणात्।।
जटादिविकृतीनां ये पारायणपरायणाः।
महात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः पङ्क्तिपावनाः"।। इति मत्स्यपुराण इति पुरोगमाचार्यः।

२. कौण्डिन्न्यायनशिक्षायाम् (स्वाद्ध्यायशालाकुटुम्बम्, काष्ठमण्डपनगरम्, नेपालदेशः, वि.सं. २०४९, पृ. ७६८)।

३. "मन्त्रो ह्यभिव्यज्यमानः पूर्वमृषेर्मन्त्रदृशः संहितयैवाऽभिव्यज्यते, न पदैः, अतश्च संहितामेव पूर्वमध्यापयन्त्यनूचाना ब्राह्मणाः, अधीयन्ते चाध्येतारः" इति निरुक्तस्य (१।१७) व्याख्यायां दुर्गाचार्यः।

ऋषिकल्पैराचार्यैर्वेदमन्त्राणां पदपाठानां रचनाः कृता इति ज्ञायते[१]। यथा स्वाध्यायाध्ययने यज्ञेषु च मन्त्रसंहिताया उपयोगो भवति, तथैव संहितार्थज्ञानाय पदपाठानामुपयोगो भवति[२]। अतः संहितापाठानन्तरं पदपाठस्य स्थानं महत्त्वपूर्णं दृश्यते। प्रातिशाख्य एव पदपाठस्यापि नियमाः प्रदर्शिताः सन्ति। शुक्लयजुर्वेदप्रातिशाख्ये 'पदविच्छेदोऽसंहितः'[३] इत्युक्तत्वात् पदानां मध्ये सन्धिं कृत्वा पठितस्य संहितापाठस्य मुख्यतया सन्धिविश्लेषं कृत्वा पठनीयः पाठः पदपाठः कथ्यते। पदपाठेऽवग्रह-स्थितोपस्थित-सङ्क्रमेति करणादीनां निश्चिता व्यवस्था च वर्तते। अधुना ऋग्वेदस्य शाकलशाखायाः शाकल्यकृतः पदपाठः, कृष्णयजुर्वेदस्य तैत्तिरीयशाखाया आत्रेयकृतः, शुक्लयजुर्वेदस्य माध्यन्दिनीय-शाखाया अज्ञातकृतः, सामवेदस्य कौथुमशाखाया गार्ग्यकृतः, अथर्ववेदस्य शौनकिशाखाया अज्ञातकृतश्चेति पदपाठाः प्रकाशिता उपलभ्यन्ते। पदपाठेषु कुत्रचिद् वेदशाखानुसारं व्यवस्थितविकल्पत्वेनाश्रिता व्यवस्था अपि दृश्यन्ते। ते सर्वेऽपि तत्तच्छाखासम्बद्धेभ्यः प्रातिशाख्येभ्यो ज्ञातुं शक्यन्ते। माध्यन्दिनीय-वाजसनेयिशुक्लयजुर्वेदसंहितायाः पदपाठस्योदाहरणं यथा—

समिधेति सम् इधा। अग्निम्। दुवस्यत। घृतैः। बोधयत। अतिथिम्।।
आ। अस्मिन्। हव्या। जुहोतन।।३।१ इति।

संहितापाठ-पदपाठयोर्दृढस्मरणार्थं बाभ्रव्यपाञ्चालाद्यैर्मुनिभिः क्रमपाठस्य रचना कृता इत्यवगम्यते[४]। तदेवोक्तं शुक्लयजुर्वेदप्रातिशाख्येऽपि—'क्रमः स्मृति-

---

१. ''पदान्तस्थपदादिस्थवर्णानां निश्चयाय च।
पदस्वरानुपूर्वीणां विज्ञानाय पृथक् पृथक्।।
आर्षोपदेशविज्ञातमन्त्रवाक्यार्थगुप्तये।
शाकल्याऽऽत्रेयगार्ग्याद्यैः पदपाठः प्रवर्तितः''।।
इति कौण्डिन्न्यायनशिक्षायाम् (७।२६६-२६७)।

२. ''संहिताध्ययने प्रयोजनं सिद्धम्। यज्ञे स्वाध्याये च संहितायाः सम्बन्धात् पदाध्ययने संहितार्थपरिज्ञानं प्रयोजनमिति गम्यते। उक्तं च भाष्यकारेण— 'पदानि स्वं स्वमर्थं गमयन्ती'ति। पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराण्यर्थमवगमयन्ति। अथेदानीं पदार्था अवगता वाक्यार्थमवगमयन्तीति पदपूर्वकं पदार्थपरिज्ञानं पदार्थपरिज्ञानपूर्वकं वाक्यार्थपरिज्ञानं दर्शयति। एवं संहितापाठे पदपाठे च प्रसिद्धं प्रयोजनम्'' इति शुक्लयजुर्वेदप्रातिशाख्यभाष्ये (४।१८२) उव्वटः।

३. १।१५६।

४. ''पदानां संहितायाश्च दृढायै प्रतिपत्तये।
निश्चित्यै संहितायाश्च द्वैपदेषु स्वरस्य च।।

प्रयोजनः'[१] इति। द्वयोर्द्वयोः पदयोर्वर्णसंहिताया उदात्तादिस्वरसंहितायाश्च ज्ञानं क्रमपाठेनैव भवति। तथैव संहिताया अवसानमपि क्रमपाठाज् ज्ञायते। क्रमपाठज्ञः शिष्टानां मध्ये सम्मानार्हश्च भवति। अत एव व्याकरणेन क्रमपाठके पदपाठके च प्रत्ययो विधीयते 'तदधीते तद् वेद'[२] इत्युपक्रम्य 'क्रमादिभ्यो वुन्'[३] इति। ततश्च क्रममधीत इति क्रमकः, पदमधीत इति पदक इति पदे अन्वाख्याते भवतः। एवं च संहितापाठ-पदपाठानन्तरं क्रमपाठस्य महत्त्वपूर्णं स्थानं दृश्यते। क्रमपाठस्य नियमा अपि प्रातिशाख्य एव निर्दिष्टाः सन्ति। द्वयोः पदयोः संहितापाठं कृत्वा पूर्वं पदं त्यक्त्वोत्तरं पदं तदुत्तरपदेन सह संयोज्य पठनीयः पाठप्रकारः क्रमपाठः कथ्यते। तदुक्तं शुक्लयजुर्वेदप्रातिशाख्ये—'द्वे द्वे पदे सन्दधात्युत्तरेणोत्तर-मावसानादपृक्तवर्जम्'[४] इत्यादि। तथैव कौण्डिन्न्यायनशिक्षायामपि क्रमपाठस्य नियमाः प्रदर्शिता विद्यन्ते[५]।

पदपाठ-क्रमपाठयोः कतिपये नियमाः समाना भवन्ति[६]। क्रमपाठस्योदाहरणं यथा—

सहस्रशीर्षा पुरुषः। सहस्रशीर्षेति सहस्रऽ-शीर्षा। पुरुषः सहस्राक्षः। सहस्राक्षः सहस्रपात्। सहस्राक्षऽ इति सहस्रऽ-अक्षः। सहस्रपादिति सहस्रऽ-पात्।। स भूमिम्। भूमिꣳ सर्व्वतः। सर्व्वत स्पृत्त्वा। स्पृत्त्वाति। अत्त्यतिष्ट्ठत्। अतिष्ट्ठद् दशाङ्गुलम्। दशाङ्गुलमिति दशऽ-अङ्गुलम्।।

इति मा.वा.शु.य.वे. ३१।२।

---

बृंहणाय च मानाय ऋचा च यजुषां तथा।
बाभ्रव्यपाञ्चालाद्यैर्हि क्रमपाठः प्रवर्तितः''।।

इति कौण्डिन्न्यायनशिक्षायाम् (७।२८२-२८३)।

१. ४।१८२।

२. अष्टाध्याय्याम्-४।२।५९।

३. पूर्ववत्-४।२।६१।

४. ४। १८३।

५. ''प्राक् पदाभ्यामभिक्रम्य प्रत्यादायोत्तरं तयोः।
सन्धायैकेनोत्तरेण पदेन द्वे पदे पुनः ।।
उच्चारयेदेवमेवाऽवसानं प्राप्नुयात् ततः।
अवसानपदं कुर्य्यात् स्थितोपस्थितकं तथा।।
अवगृह्यं प्रगृह्यं च पदं चाऽन्यद् यथाऽऽगमम्।
स्थितोपस्थितकं कुर्यात् क्रमपाठे विचक्षणः''।। इत्यादि (७।२८४-२८६)।

६. ''क्रमोक्ता वृत्तिः पदेषु' इति वाजसनेयिप्रातिशाख्ये (४।२१)।

एतेन प्रकारेण पदपाठस्य क्रमपाठस्य च विषयः प्रातिशाख्येषु मुख्येषु शिक्षाग्रन्थेषु[1] चोल्लिखितः, अन्येषां विकृतिपाठानां विषयस्तत्राऽप्रतिपादित इति विकृतिपाठेषु पदपाठस्य क्रमपाठस्य चैव मुख्यत्वं स्पष्टं भवति।

## क्रमजटादीनामष्टानां विकृतिपाठानां सङ्क्षिप्तः परिचयः

क्रमजटादिविकृतिपाठानां प्रतिपादनं प्रातिशाख्येषु मुख्यशिक्षाग्रन्थेषु च नोपलभ्यते, तथापि जटादिविकृतिपाठानां प्रवर्तका मुनय एवेति वैदिकनिकाये प्रसिद्धिरस्ति[2]। एतस्य विषयस्य प्रतिपादक उपलभ्यमानः प्राचीनतमो ग्रन्थो व्याडिकृता विकृतवल्ली वर्तते[3]। अस्यैव जटाप्रतिपादको विंशति-श्लोकात्मको भागो जटापटलमिति चोच्यते। एष ग्रन्थः शैशिरीयशाकल-ऋग्वेदशाखाया अस्तीति एतस्मादेव ग्रन्थाद् ज्ञायते[4]। एतस्य विषयस्य प्रतिपादको द्वितीयो महत्त्वपूर्णो ग्रन्थ एकादशपद्यात्मकं हयग्रीवकृतं जटापटलं वर्तते[5]। तत्राऽन्या विकृतयः प्रतिपादिता न सन्ति, केवलं जटैव प्रतिपादिताऽस्ति। तत्र व्याडिसिद्धान्ताद् हयग्रीवसिद्धान्ते किञ्चिदन्तरमपि विलोक्यते। एष ग्रन्थः कस्याः शाखाया इति न ज्ञायते। ऋग्वेदस्यैव कस्याश्चन शाखाया भवेत्। एतस्मिन् विषये तृतीयो महत्त्वपूर्णो ग्रन्थश्च शौनककृतमष्टविकृतिलक्षणं विकल्पकौमुद्यन्तर्गतमवगम्यते। एतस्मिन् ग्रन्थे व्याडिमहर्षेरुल्लेखादेष ग्रन्थ ऋग्वेदसम्बद्धो

---

१. ''संहितासारबहुलः पदसंज्ञासमाकुलः।
क्रमसन्धिसमाकीर्णो दुस्तरो मन्त्रसागरः''।। इति याज्ञवल्क्यशिक्षायाम् (१।३०)।

२. भगवान् संहितां प्राह पदपाठं तु रावणः।
बाभ्रव्यर्षिः क्रमं प्राह जटां व्याडिरवोचत।।
मालापाठं वसिष्ठश्च शिखापाठं भृगुस्तथा।
अष्टावक्रोऽब्रवीद् रेखां विश्वामित्रोऽब्रवीद् ध्वजम्।।
दण्डं पराशरोऽवोचत् कश्यपो रथमब्रवीत्।
घनमत्रिर्मुनिः प्राह विकृतीनामयं क्रमः।। इति वेदविकृतिविवरणे दामोदरन्-नम्बूदरिकृते (कोचिनसत्रम्, केदारघट्टः, वाराणसी, १९५५ खैस्ताब्दः, पृ. २)।

३. व्याडिकृताया विकृतिवल्ल्या जटानिरूपणान्तो विंशतिश्लोकात्मको भागो गङ्गाधरभट्टाचार्यकृतव्याख्यासहितः सत्यव्रतसामश्रमिमहाभागेन १८८९ खैस्ताब्दे कालिघट्टनगरे उषाख्यपत्रिकायां प्रथमे भागे द्वितीये खण्डे प्रकाशितः, सम्पूर्णः सप्तविंशतिश्लोकात्मको विकृतिवल्लीग्रन्थस्तु व्याख्यासहितो भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरेण १९७८ खैस्ताब्दे वेदविकृतिलक्षणसङ्ग्रहे प्रकाशितो दृश्यते।

४. शैशिरीये समाम्नाये व्याडिनैव महर्षिणा।
जटाद्या विकृतीरष्टौ लक्ष्यन्ते नातिविस्तरम्।। इति (श्लो.४)।

५. एष ग्रन्थो वेदविकृतिलक्षणसङ्ग्रह एव मुद्रितो वर्तते।

विकृतिवल्ल्युपजीवीति विज्ञायते। किन्तु एष ग्रन्थो मुद्रितो न दृश्यते। एतस्मिन् विषये महत्त्वपूर्णश्चतुर्थो ग्रन्थो मधुसूदनमस्करिकृता चतुष्पञ्चाशत्पद्यात्मिकाऽष्ट-विकृतिविवृतिर्वर्तते। अस्याः पुरोगमाचार्यकृता प्रकाशव्याख्या चोपलभ्यते[१]। अत्र विकृतिवल्ल्यामदृष्टं' घनलक्षणविशेषादिकमपि प्रतिपादितं दृश्यते। एतस्मिन् विषये महत्त्वपूर्णः पञ्चमो ग्रन्थः श्रीरामकृत-वाजसनेयि-प्रातिशाख्यवृत्तिज्योत्स्नाऽन्तर्गतमष्ट-विकृतिलक्षणं सप्तदशश्लोकात्मकं वर्तते। उक्तो ग्रन्थः केन विरचित इति तु निश्चेतुं न शक्यते। अत्र व्याडिकृत-विकृतिवल्ल्या मधुसूदनमस्करिकृताष्टविकृतिविवृतेश्च रचनागतः प्रभावो दृश्यते। युगलकिशोरपाठकेनाऽप्येतदष्टविकृतिलक्षणं व्याडिहयग्रीवादिग्रन्थोपजीवीति स्वीकृतं प्रतीयते[२]। एतेनैष ग्रन्थ ऋग्वेदीयग्रन्थमूलक इति ज्ञायते। एतेभ्य एव ग्रन्थेभ्यः सारमाकृष्य कौण्डिन्न्यायनशिक्षायामप्यष्टानां विकृतिपाठानां निरूपणं कृतं दृश्यते। एतेषामेव ग्रन्थानामाधारे क्रमजटादिविकृतिपाठानां सङ्क्षिप्तः परिचयोऽत्र प्रस्तूयते।

**क्रमजटापाठपरिचयः**

प्रातिशाख्यप्रदर्शितं द्वित्रिचतुःक्रमरूपं क्रमपदमुक्त्वा, तदेव वैपरीत्येन पुन-रुक्त्वा, पुनश्च तृतीयवारे क्रमेण पठेत्; क्रमेण पठितानां वैपरीत्येन पठितानां च पदानां पदान्तपदादिसन्धिषु सर्वत्र यथालक्षणं लोपागमवर्णविकारप्रकृतिभावान् पठेदित्येष पाठप्रकारः क्रमजटा वा जटा वेति सङ्क्षेपेणोच्यते। तदुक्तं विकृतिवल्ल्याम्—

'ब्रूयात् क्रम-विपर्यास-क्रममीदृग्विधिं दिशेत् ।
जटाख्यां विकृतिं धीमान् विज्ञाय क्रमलक्षणम्''।। इति (श्लो. ६)।

हयग्रीवकृते जटापटलेऽपि—

''क्रमे यथोक्ते पदजातमेव द्विरभ्यसेदुत्तरमेव पूर्वम् ।
अभ्यस्य पूर्वं च तथोत्तरे पदेऽवसानमेवं हि जटाऽभिधीयते''।।
इति (श्लो. १)।

---

१. एष ग्रन्थः प्रथमं सत्यव्रतसामश्रमिमहाभागेन १८८९ खैस्ताब्दे कालिघट्टनगरे उषाख्य-पत्रिकायाः प्रथमे भागे प्रथमे खण्डे प्रकाशितः, वेदविकृतिलक्षणसङ्ग्रहे च पुनर्मुद्रितो दृश्यते।

२. ''जटादिविकृतीनां तु सम्यग् ज्ञानं यथाऽऽप्यते।
महर्षिणा व्याडिना यज्जटापटलंसञ्ज्ञकम्।।
तद्भावं समनुज्ञाय हयग्रीवेण भाषितम्।
दौर्मित्रिणा गौतमेन रामेणाऽपि सुभाषितम्''।। इति शुक्लयजुःप्रातिशाख्यसंलग्ने जटादिविकृतिलक्षणभागे (१८८८ खैस्ताब्दम्, वाराणसी, पृ. ४९३)।

तथैवोक्तमष्टविकृतिलक्षणनामकग्रन्थे च—

"क्रमं यथोक्तं प्रब्रूयाद् व्युत्क्रमेण क्रमेण च।
सलक्षणं सर्वसन्धौ जटा सा प्रोच्यते बुधैः"।। इति (श्लो. २)।

क्रमजटापाठोदाहरणं यथा—

सहस्रशीर्षा पुरुषः पुरुषः सहस्रशीर्षा सहस्रशीर्षा पुरुषः।
सहस्रशीर्षेति सहस्रऽ-शीर्षा।
पुरुषः सहस्राक्षः सहस्राक्षः पुरुषः पुरुषः सहस्राक्षः।
सहस्राक्षः सहस्रपात् सहस्रपात् सहस्राक्षः सहस्राक्षः सहस्रपात्।
सहस्राक्ष इति सहस्रऽ-अक्षः। सहस्रपादिति सहस्रऽ-पात्।।
स भूमिम् भूमिᳪ स स भूमिम्।
भूमिᳪ सर्व्वतः सर्व्वतो भूमिम् भूमिᳪ सर्व्वतः।
सर्व्वत स्पृत्त्वा स्पृत्त्वा सर्व्वतः सर्व्वत स्पृत्त्वा।
स्पृत्त्वा-ऽत्यति स्पृत्त्वा स्पृत्त्वाऽति।
अत्यतिष्ठ्ठदतिष्ठ्ठदत्यत्यतिष्ठ्ठत्।
अतिष्ठ्ठद् दशाङ्गुलम् दशाङ्गुलमतिष्ठ्ठदतिष्ठ्ठद् दशाङ्गुलम्।
दशाङ्गुलमिति दशऽ-अङ्गुलम्।।
इति मा.वा.शु.य.वे. ३१।१ (द्र.-ऋ.सं. १०।९०।१)।

**क्रमशिखापाठपरिचयः**

क्रमजटापदादुत्तरमग्रिममेकं पदमपि पठ्यते चेत् स एव क्रमजटापाठः क्रमशिखापाठ इत्युच्यते। यतो हि क्रमजटापदात् पश्चात् शिखारूपेणाऽग्रिममेकं पदमत्र स्थितं भवति। शिखालक्षणं यथा कौण्डिन्न्यायनशिक्षायाम्—

"पदोत्तरं जटामेव शिखामार्याः प्रचक्षते।
जटापदोपरि पदं शिखेवाऽत्र भवेद् यतः"।। इति (७।३०२)।

क्रमशिखापाठोदाहरणं यथा—

अन्तश्च्चरति चरत्यन्तरन्तश्च्चरति रोचना। अन्तरित्यन्तः।
चरति रोचना रोचना चरति चरति रोचनाऽस्य।

रोचनाऽस्याऽस्य रोचना रोचनाऽस्य प्राणात् ।

अस्य प्राणात् त्राणादस्या-ऽस्य प्राणादपानती ।

प्राणादपानत्यपानती प्राणात् त्राणादपानती । अपानतीत्यपऽ-अनती ।।

व्यक्ख्यदक्ख्यद् द्विव्व्यक्ख्यन् न्महिषः ।

अक्ख्यन् न्महिषो महिषो-ऽक्ख्यदक्ख्यन् न्महिषो दिवम् ।

महिषो दिवम् दिवम् महिषो महिषो दिवम्। दिवमिति दिवम्।।

इति मा.वा.शु.य.वे. ३।७ (ऋ.सं. १०।१८९।२)।

**क्रमदण्डपरिचयः**

प्रथममेकं क्रमपदमुक्त्वा ततस्तदेव क्रमपदं वैपरीत्येन पठेत्, ततः पुनस्तदेव क्रमपदमुक्त्वा यथायथमवग्रहादिकं च प्रदर्श्य द्वितीयं क्रमपदमप्युक्त्वा द्वितीयक्रमपदपर्यन्तानि सर्वाणि पदानि वैपरीत्येन पठेत्, ततः प्रथमत एव तृतीय-क्रमपदपर्यन्तं क्रमेण पठित्वा तृतीयक्रमपदपर्यन्तानि सर्वाणि पदानि प्रतिलोमतया पठेदित्यनेनैव प्रकारेणाऽर्धर्चं समाप्याऽन्तिमं पदमुपस्थापयेत् (स्थितोपस्थितकं कुर्यात्)। तत उत्तरार्धर्चमप्यनेनैव प्रकारेण पठेत्। अनेन प्रकारेण पठितः पाठप्रकारः क्रमदण्डो वा दण्डो वेत्युच्यते। विकृतिवल्ल्यादिषु क्रमदण्डपाठ-प्रकारोऽस्फुटतया प्रतिपादितो यथा—

"क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तरम् ।

आर्धर्चादेवमुक्तोऽयं (क्तः स) क्रमदण्डोऽभिधीयते"।। इति।

अस्य श्लोकस्य व्याख्यास्वपि क्रमदण्डपाठप्रकारः स्पष्टतया प्रतिपादितो न दृश्यते। किन्तु कौण्डिन्न्यायनशिक्षायां तद्व्याख्याने चैष विषयः सोदाहरणं स्फुटतया व्याख्यातो दृश्यते। तद्यथा—

"एकं क्रमपदं प्रोच्य विपर्यस्याऽपि तत्पठेत् ।

अनुलोमं तत्पुनश्च प्रोच्येङ्ग्यं चेत्तदिङ्गयेत् ।।

ततो द्वितीयं तत्प्रोच्योक्तानि सर्वपदानि च ।

विपर्यस्य पठित्वा चाऽऽदितो ब्रूयात्पुनः क्रमम् ।।

ततस्तृतीयं च क्रमपदं प्रोच्य विपर्ययात् ।

पदान्युक्तानि सर्वाणि पठित्वा चाऽऽदितः पुनः ।।

क्रममुक्त्वा चतुर्थं च ब्रूयात् क्रमपदं बुधः ।
रीत्याऽनया समाप्यार्धामृचमन्त्यं पदं खलु ।।
स्थितोपस्थितकं कृत्वा प्रारभेतोत्तरार्धकम् ।
तत्र चेमां क्रियां कुर्यात् क्रमदण्डोऽयमुच्यते''।। इति।

(७।३०३-३०७)

क्रमदण्डपाठोदाहरणं यथा—

यजा नः। नो यज। यजा नः ।

नो मित्रावरुणा। मित्रावरुणा नो यज। यजा नः। नो मित्रावरुणा ।

मित्रावरुणा यज। यज मित्रावरुणा नो यज। यजा नः। नो मित्रावरुणा। मित्रावरुणा यज। यजा देवान्। देवान् न्यज मित्रावरुणा नो यज। यजा नः। नो मित्रावरुणा। मित्रावरुणा यज। यजा देवान्।

देवाँ२।।ऽऋतम्। ऋतन् देवान् न्यज मित्रावरुणा नो यज। यजा नः। नो मित्रावरुणा। मित्रावरुणा यज। यजा देवान्। देवाँ२।।ऽऋतम्।

ऋतम् बृहत्। बृहदृतन् देवान् न्यज मित्रावरुणा नो यज। यजा नः। नो मित्रावरुणा। मित्रावरुणा यज। यजा देवान्। देवाँ२।।ऽऋतम्। ऋतम् बृहत्। बृहदिति बृहत्।।

अग्ग्ने यक्षि। यक्ष्यग्ग्ने। अग्ग्ने यक्षि ।

यक्षि स्वम्। स्वयँ यक्ष्यग्ग्ने। अग्ग्ने यक्षि। यक्षि स्वम् ।

स्वन् दमम्। दमꣳस्वयँ यक्ष्यग्ग्ने। अग्ग्ने यक्षि। यक्षि स्वम्। स्वन् दमम्। दममिति दमम्।।

इति मा.वा.शु.य.वे. ३३।३ (ऋ.सं. १।७५।५)।

क्रमदण्डपाठ एव ऋग्वेदाध्यायिषु केरलब्राह्मणेषु रथपाठत्वेन प्रसिद्धोऽस्तीति ज्ञायते[१]।

**क्रमरे(ले)खापाठपरिचयः**

प्रथमं द्विपदक्रममुक्त्वा ततस्तमेव व्युत्क्रमेण पठित्वा पुनस्तमेव क्रमेण पठेत्, ततस्तदुत्तरं त्रिपदक्रममुक्त्वा तं व्युत्क्रमेणापि पठित्वा पुनस्तमेव त्रिपदक्रमं

१. कौण्डिन्न्यायनशिक्षा, पूर्ववत् (पृ. ७७४)।

द्विपदक्रमं कृत्वा पठेत्, ततस्तदुत्तरं चतुष्पदक्रममुक्त्वा तं व्युत्क्रमेणापि पठित्वा पुनस्तमेव चतुष्पदक्रमं द्विपदक्रमं कृत्वा पठेत्, ततस्तदुत्तरं पञ्चपदक्रममुक्त्वा तं व्युत्क्रमेणापि पठित्वा पुनस्तमेव पञ्चपदक्रमं द्विपदक्रमं कृत्वा पठेदित्यनेन प्रकारेण पठितो विकृतिपाठः क्रमरे(ले)खापाठो वा रे(ले)खापाठो वेत्येव कथ्यते। एष पाठप्रकारः स्फुटतया[१] कौण्डिन्न्यायनशिक्षायां प्रतिपादितो यथा—

"द्विपदं प्राक् क्रमपदमुक्त्वा तद् व्युत्क्रमात् पठेत्।
पुनः क्रमं तस्य प्रोच्योत्तरं त्रिपदकं क्रमम् ।।
पठेत् तद् व्युत्क्रमाच्चास्य प्रब्रूयाद् द्वैपदं क्रमम्।
ततः क्रमपदं ब्रूयादुत्तरं तु चतुष्पदम् ।।
तदप्युक्त्वा व्युत्क्रमेणाऽस्य पठेद् द्वैपदं क्रमम्।
ततः परं पञ्चपदं ब्रूयात् क्रमपदं बुधः ।।
व्युत्क्रमेण च तत् प्रोच्य क्रमं द्विपदकं पठेत्।
रीत्याऽनया कण्डिकान्तं यायाल्लेखा त्वियं स्मृता"।।

इति (७।३०८-३११)।

क्रमरेखापाठोदाहरणं[२] यथा—

मधु नक्क्तम्। नक्क्तम् मधु। मधु नक्क्तम्।
नक्क्तमुतोषसः। उषसऽ उत नक्क्तम्। नक्क्तमुत। उतोषसः।
उषसो मधुमत् त्पार्त्थिवं रजः। रजः पार्त्थिवम् मधुमदुषसः। उषसो मधुमत्। मधुमत् त्पार्त्थिवम्। मधुमदिति मधुऽ-मत्। पार्त्थिवं रजः। रज ऽ इति रजः।
मधु द्द्यौरस्तु नः पिता। पिता नोऽस्तु द्द्यौर्म्मधु। मधु द्द्यौः। द्यौरस्तु। अस्तु नः। नः पिता। पितेति पिता।। इति।

मा.वा.शु.य.वे. १३।२८ (ऋ.सं. १।९०।७)।

---

१. एष पाठप्रकारो विकृतिवल्ल्यादिष्वस्फुटतयैवं प्रतिपादितः—
"क्रमाद् द्वित्रिचतुःपञ्चपदक्रममुदाहरेत्।
पृथक् पृथग् विपर्यस्य ले(रे)खामाहुः पुनः क्रमात्"।। इति।

२. दामोदरसातवलेकरसम्पादित-ऋग्वेदसंहितापुस्तके प्रदर्शितः क्रमरेखापाठप्रकारः किञ्चिद् भिन्नो विचारणीयश्च दृश्यते।

**क्रममालापाठपरिचयः**

मालापाठः क्रममाला पुष्पमाला चेति द्विविधो भवतीति केचन कथयन्ति। क्रममालाया लक्षणम्—

"ब्रूयात् क्रमविपर्यासावर्धर्चस्याऽऽदितोऽन्ततः।
अन्तं चाऽऽदिं नयेदेवं क्रममालेति गीयते"।। इति श्लोकोक्तम्।

पुष्पमालाया लक्षणं च—

"माला मालेव पुष्पाणां पदानां ग्रन्थिनी हि सा।
आवर्तन्ते त्रयस्तस्यां क्रमव्युत्क्रमसङ्क्रमाः"।।

इति श्लोकोक्तं मन्यन्ते। यद्यपि व्याडिना विकृतिवल्ल्यां क्रममाला-लक्षणानन्तरं "माला मालेव पुष्पाणाम्" इत्यादिकः श्लोक उल्लिखितस्तथाऽप्यनेन श्लोकेन मालापाठस्य प्रकारान्तरं प्रतिपादितमिति मन्तुं न शक्यत इति कौण्डिन्न्यायन-शिक्षाकारस्य निष्कर्षो दृश्यते[१]। अस्य श्लोकस्य चतुर्थे पादे केचन 'पदमाला प्रकीर्तिता' इति, केचन च 'क्रमव्युत्क्रमसङ्क्रमाः' इति पठन्ति। एवं चात्र पाठेऽपि विगानं दृश्यते। द्वितीयः पाठो बहुभिर्गृहीतो दृश्यते। एवं चायं श्लोकः पूर्वोक्तायाः क्रममालाया मालात्वस्यैवोपपादनाय पठितः प्रतीयत इति कौण्डिन्न्यायनशिक्षाया-मुल्लिखितं दृश्यते[२]। अन्यैः पुष्पमालात्वेनोदाहृतेयं माला सर्वथा जटया तुल्या विरामप्रयोगविशेषमात्रेणैव भिन्ना दृश्यते। क्रमजटापाठे 'वायव स्थ स्थ वायवो वायव स्थ' इत्यादिरूपेण पठ्यते। किन्तु पुष्पमालायाम् 'वायव स्थ। स्थ वायवः। वायव स्थ' इत्यादिरूपेण पठ्यते। अतो जटापाठाद् विशेषतोऽभिन्नेयं पुष्पमाला उपेक्षितुं शक्या च दृश्यते।

अर्धर्चस्याऽऽदितः क्रममन्ततश्च विपर्यासं पर्यायेण पठेत्, आदितोऽन्त-पर्यन्तमन्ततश्चाऽऽदिपर्यन्तं च पाठं समापयेदित्यनेन प्रकारेण पठितः पाठः क्रममालापाठ इत्युच्यते। तदुक्तं विकृतिवल्ल्याम्—

"ब्रूयात् क्रमविपर्यासावर्धर्चस्याऽऽदितोऽन्ततः।
अन्तं चाऽऽदिं नयेदेवं क्रममालेति कीर्तिता"।। इति (श्लो. २१)।

क्रममालापाठलक्षणं स्फुटतया कौण्डिन्न्यायनशिक्षायां प्रतिपादितं यथा—

"अर्धर्चस्याऽऽदितो ब्रूयादनुलोमं क्रमं बुधः।
अन्ततः प्रतिलोमं तु क्रममुच्चारयेत् तथा।।

---

१. कौण्डिन्न्यायनशिक्षा, पूर्ववत्, पृ. ७७६।
२. पूर्ववत्।

एकैकं खलु पर्यायात् तयोः क्रमपदं पठेत्।
तौ नयेदन्तमादिं च क्रममाला भवेदियम्।।
प्रातिलोम्यं क्रमपदेषु स्याच्च पदयोरपि।
पाठेऽन्ततः स्यात् प्रथमं स्थितोपस्थितकं पदम्''।। इति।
(७।३१२-३१४)।

क्रममालापाठोदाहरणं यथा—

| | |
|---|---|
| १. त्रिꣳशद् धाम। | २. धीयत इति धीयते। |
| ३. धाम वि। | ४. धीयते पतङ्गाय। |
| ५. वि राजति। | ६. पतङ्गाय वाक्। |
| ७. राजति वाक्। | ८. वाग् ग्राजति। |
| ९. वाक् क्पतङ्गाय। | १०. राजति वि। |
| ११. पतङ्गाय धीयते। | १२. वि धाम। |
| १३. धीयत इति धीयते। | १४. धाम त्रिꣳशत्। |
| १५. प्रति वस्तोः। | १६. द्युभिरिति द्युऽ-भिः। |
| १७. वस्तोरह। | १८. द्युभिरह। |
| १९. अह द्द्युभिः। | २०. अह वस्तोः। |
| २१. द्युभिरिति द्द्युऽ-भिः।। | २२. वस्तोः प्प्रति।। इति। |

मा.वा.शु.य.वे. ३।८ (ऋ.सं. १०।१८९।३)।

**क्रमध्वजपाठपरिचयः**

ऋचो वर्गस्य वाऽऽदितः क्रममन्ततश्चाऽप्यविपर्यस्तं क्रममेव पर्यायेण पठेत्, आदिक्रममन्तपर्यन्तमन्तक्रमं चाऽऽदिपर्यन्तं पठेदित्यनेन प्रकारेण पठितः पाठः क्रमध्वजो ध्वजो वोच्यते। तदेवोक्तं विकृतिवल्ल्याम्—

''ब्रूयादेव क्रमं सम्यगन्तादुत्तारयेदिति।
वर्गे वा ऋचि वा यत्र पठनं स ध्वजः स्मृतः''।। इति (श्लो. २५)।

अयमेवाऽर्थः स्पष्टतयोक्तः कौण्डिन्न्यायनशिक्षायां यथा—

''क्रमध्वजे क्रमं ब्रूयादृचो वर्गस्य वाऽऽदितः।
अन्ततोऽप्यविपर्यस्तपदं ब्रूयात् क्रमं बुधः।।
एकैकं खलु पर्यायात् तयोः क्रमपदं पठेत्।
आदिक्रमं नयेदन्तमादिमन्तक्रमं नयेत्''।। इति (७।३१५-३१६)।

क्रमध्वजपाठोदाहरणं यथा—

| | |
|---|---|
| १. विष्णोः कर्म्माणि । | २. सखेति सखा । |
| ३. कर्म्माणि पश्श्यत । | ४. युज्ज्यः सखा । |
| ५. पश्श्यत यतः । | ६. इन्द्रस्य युज्ज्यः । |
| ७. यतो व्व्रतानि । | ८. पस्प्पश ऽ इति पस्प्पशे । |
| ९. व्रतानि पस्प्पशे । | १०. व्रतानि पस्प्पशे । |
| ११. पस्प्पश ऽ इति पस्प्पशे । | १२. यतो व्व्रतानि । |
| १३. इन्द्रस्य युज्ज्यः । | १४. पश्श्यत यतः । |
| १५. युज्ज्यः सखा । | १६. कर्म्माणि पश्श्यत । |
| १७. सखेति सखा । | १८. विष्णोः कर्म्माणि।। इति। |

मा.वा.शु.य.वे. ६।४, १३।३३ (ऋ.सं. १।२२।१९)।

**क्रमरथपाठपरिचयः**

क्रमरथपाठो मुख्यतया त्रिविधो दृश्यते-द्विचक्रो द्विपाद् वा, त्रिचक्रस्त्रिपाद् वा, चतुश्चक्रश्चतुष्पाद् वा चेति। तत्र समसङ्ख्याकपदकयोरर्धर्चयोर्द्विचक्रो द्विपाद् वा रथो भवति। तथैव समसङ्ख्याकपदस्य ऋग्द्वयस्य सहोक्त्याऽपि द्विचक्र एव रथो भवति[१]। समसङ्ख्यपदपादायास्त्रिपदाया गायत्र्या एव त्रिचक्रस्त्रिपाद् वा रथो भवति। समसङ्ख्यपदपादायाश्चतुष्पदाया ऋचश्चतुश्चक्रश्चतुष्पाद् वा रथो भवति। एतेन प्रकारेण कासाञ्चिदृचामेव रथपाठः पठितुं शक्यते। अत एव ऋग्वेदाध्यायिनः केरलब्राह्मणाः क्रमरथपाठ उदासत इति वेदविकृतिविवरणे दामोदरन् नम्पूतिरिपाट् कथयति[२]। क्रमरथस्य लक्षणम्—'पादशोऽर्धर्चशो वाऽपि सहोक्त्या दण्डवद् रथः' इति विकृतिवल्ल्यामुक्तमस्ति। कौण्डिन्न्यायनशिक्षायां तल्लक्षणं स्फुटतया प्रतिपादितं यथा—

> "अर्धर्चयोर्वा पादानां समत्वे यत्र पठ्यते ।
> दण्डः सहाऽऽरभ्य चैकैकं पर्वाऽऽदाय हि क्रमात् ।।
> स प्रोच्यते क्रमरथो विद्वद्भिर्वेदपारगैः ।
> एष द्विचक्रस्त्रिचक्रश्चतुश्चक्रश्च पठ्यते"।। इति (७।३१७-३१८)।

---

१. दामोदरसातवलेकरसम्पादित ऋग्वेदसंहितापुस्तक ऋग्द्वयस्य सहोक्त्या पठनीयो द्विचक्रो रथो द्विधा पठितो दृश्यते (पृ. ८०२-८०३)।

२. वेदविकृतिविवरणम्, कोचिनसत्रम्, वाराणसी, खैस्ताब्दः १९५५, पृ. १४।

क्रमरथपाठप्रकारा दामोदरसातवलेकरसम्पादित ऋग्वेदसंहिता-पुस्तकेऽष्ट-विकृतिलक्षणग्रन्थे ज्योत्स्नावृत्तियुते वाजसनेयिप्रातिशाख्यग्रन्थे कौण्डिन्न्यायन-शिक्षायां चेति ग्रन्थेषु प्रदर्शिता दृश्यन्ते। तेऽत्र सर्वे निबन्धगौरवभयान्न प्रदर्श्यन्ते। दिङ्मात्रं तु प्रदर्श्यते। तत्र पादशः प्रयुक्तस्त्रिचक्रस्त्रिपाद् वा क्रमरथो यथा—

१. विष्णोः कर्म्माणि। कर्म्माणि विष्णोः ।

२. यतो व्रतानि । व्रतानि यतः ।

३. इन्द्रस्य युज्यः । युज्य इन्द्रस्य।

१. विष्णोः कर्म्माणि। कर्म्माणि पश्श्यत। पश्श्यत कर्म्माणि विष्णोः ।

२. यतो व्रतानि। व्रतानि पस्पशे। पस्पशे व्रतानि यतः ।

३. इन्द्रस्य युज्यः। युज्यः सखा। सखा युज्य इन्द्रस्य।

१. विष्णोः कर्म्माणि। कर्म्माणि पश्श्यत। पश्श्यतेति पश्श्यत ।

२. यतो व्रतानि। व्रतानि पस्पशे। पस्पश इति पस्पशे ।

३. इन्द्रस्य युज्यः। युज्यः सखा। सखेति सखा।। इति।

मा.वा.शु.य.वे. ६।४ (ऋ.सं. १।२२।१९)।

**घनपाठपरिचयः**

अष्टसु विकृतिपाठेषु मध्ये प्रसिद्धतमो विकृतिपाठो घनपाठो वर्तते। अत एवेदानीं घनपाठीति वैदिकानां सम्मानसूचक उपाधिर्मन्यते। मुख्यतया घनपाठो द्विविधो दृश्यते—क्रमघनः शिखाघनश्चेति। अन्यः पञ्चसन्धियुक्तो घनवल्लभाभिधो घनोऽपि कुत्रचिद् व्यवहारे दृश्यते। तत्र क्रमघनस्य लक्षणं विकृतिवल्ल्यामुक्तं यथा—

'अन्तक्रमं पठेत् पूर्वमादिपर्यन्तमानयेत् ।
आदिक्रमं नयेदन्तं घनमाहुर्मनीषिणः''।। इति (श्लो. २७)।

अत्राऽर्धर्चान्ताद् वा ऋगन्ताद् वा पाठारम्भ इति नोक्तं तथाप्यन्यैरर्धर्चादेव पाठप्रारम्भ इति स्फुटं प्रतिपादितं प्राचीनैस्तथोदाहृतं च दृश्यते। क्रमघनलक्षणं स्फुटतया प्रतिपादितं कौण्डिन्न्यायनशिक्षायां यथा—

"अर्धर्चस्याऽन्तात् क्रमं प्राक् पठित्वा ह्यादिमानयेत् ।
आदितश्च नयेदन्तमिति पाठो घनः स्मृतः''।। इति (७।३१९)।

क्रमघनपाठोदाहरणं यथा—

राज्ञेति राज्ञा। सह राज्ञा। सोमेन सह। अवदन्त सोमेन। समवदन्त। ओषधयः सम्। (इति ऋक्पूर्वार्धस्याऽन्तादादिपर्यन्तं पाठः)

(ओषधयः सम्।)[1] समवदन्त। अवदन्त सोमेन। सोमेन सह। सह राज्ञा। राज्ञेति राज्ञा। (इति ऋक्पूर्वार्धस्याऽऽदितोऽन्तपर्यन्तं पाठः)

पारयामसीति पारयामसि। राजन् न्पारयामसि। तं राजन्। ब्राह्मणस्तम्। कृणोति ब्राह्मणः। यस्मै कृणोति। (इति ऋगुत्तरार्धस्याऽन्तादादिपर्यन्तं पाठः)

(यस्मै कृणोति)[2] कृणोति ब्राह्मणः। ब्राह्मणस्तम्। तं राजन्। राजन् न्पारयामसि। पारयामसीति पारयामसि। (इति ऋगुत्तरार्धस्याऽऽदितोऽन्तपर्यन्तं पाठः)

इति। मा.वा.शु.य.वे. १२।९६ (द्र.-ऋ.सं. १०।९७।२२)।

घनस्याऽन्यः प्रकारः शिखाघनस्तु व्याडिना प्रतिपादितो नास्ति। व्याडिमनुसरताऽपि मधुसूदनमस्करिणा तु 'शिखामुक्त्वा विपर्यस्य पुनस्त्रिपद-मुच्चरेत्। शिखाजटाघनः प्रोक्त इत्यष्टौ विकृतीः पठेत्' इत्युक्त्वाऽष्टविकृतिविवृतौ स प्रतिपादितो दृश्यते। तथैवाऽष्टविकृतिलक्षणेऽपि—

"शिखामुक्त्वा विपर्यस्य तत्पदानि पुनः पठेत्[3] ।
अयं घन इति प्रोक्त इत्यष्टौ विकृतीः पठेत्"।। इत्युक्तं दृश्यते ।

अस्यार्थः— प्रथममेकपदाधिकजटारूपां शिखां पठित्वा वैपरीत्येनाऽन्तिमानि त्रीणि पदान्युच्चार्य पुनस्तान्येव त्रीणि पदानि क्रमेण पठेदित्यनेन प्रकारेण पठितो विकृतिपाठो घन इति शिखाघन इति वोच्यते। अनेन प्रकारेणाऽष्टौ विकृतीः पठेदिति। अयमेव घनप्रकारः केरलब्राह्मणेष्वन्येषु यजुर्वेदाध्यायिषु च वैदिकेषु प्रसिद्धो दृश्यते।

शिखाघनस्य लक्षणं कौण्डिन्न्यायनशिक्षायां स्फुटतया प्रतिपादितं यथा—

"शिखापर्व प्रोच्य तस्य त्रीण्यन्तिमपदानि तु।
विपर्यस्य पठित्वाऽथाऽऽनुलोम्येन पठेत्पुनः।।

१. लक्षणवचनात् कोष्ठगतोऽपि पाठः प्राप्तो भवति। तथाऽप्यन्यैरेवं नोल्लिख्यत इति ज्ञेयम्।

२. पूर्ववत् ।

३. 'पुनस्त्रिपदमाहरेत्' इति पाठान्तरम्।

विरामान्ते विपर्यासपाठं न विदधीत च।
विरामान्ते वेष्टनं स्यात्पदस्य च यथार्हतः।।
शिखापर्व द्वितीयं चाऽऽदाय तद्वत्पठेत्ततः ।
एवमेव तृतीयादि पर्वाऽऽदाय पठन् बुधः ।।
गच्छेदन्तं कण्डिकाया लोकेऽयं घन उच्यते ।
शिखाघनश्चोच्यतेऽयं याजुषैश्च प्रयुज्यते''।। इति (३२०-३२३)।

शिखाघनपाठस्योदाहरणं यथा—

चन्द्रमा मनसो मनसश् च्चन्द्रमाश् च्चन्द्रमा मनसो जातो
जातो मनसश् च्चन्द्रमाश्
च्चन्द्रमा मनसो जातः ।

मनसो जातो जातो मनसो मनसो जातश् च्चक्षोश्
च्चक्षोर् ज्जातो मनसो
मनसो जातश् च्चक्षोः ।

जातश् च्चक्षोश् चक्षोर् ज्जातो जातश् च्चक्षोः सूर्य्यः
सूर्य्यश् च्चक्षोर् ज्जातो
जातश् च्चक्षोः सूर्य्यः ।

चक्षोः सूर्य्यः सूर्य्यश् च्चक्षोश् चक्षोः सूर्य्योऽअजायता-
ऽजायत सूर्य्यश् चक्षोश्
च्चक्षोः सूर्य्योऽअजायत ।

सूर्य्योऽअजायताऽ-जायत सूर्य्यः सूर्य्योऽअजायत। अजायतेत्त्यजायत।।

श्रोत्राद् द्वायुर् व्वायुः श्रोत्राच् छ्रोत्राद् द्वायुश् च्च
च वायुः श्रोत्राच्
छ्रोत्राद् द्वायुश् च्च।

वायुश् च्च च वायुर् व्वायुश् च्च प्राणः
प्राणश् च्च वायुर्
व्वायुश् च्च प्राणः ।

च प्राणः प्राणश् च्च च प्राणश् च्च
च प्राणश् च्च
च प्राणश् च्च।

प्राणश् च्च च प्राणः प्राणश् च्च मुखान्
न्मुखाच् च प्राणः
प्राणश् च्च मुखात्।

च मुखान् न्मुखाच् च च मुखाद-ग्गिन-
रग्गिनर् म्मुखाच् च
च मुखाद-ग्गिनः।

मुखाद-ग्गिन-रग्गिनर्म्मुखान् न्मुखाद-ग्गिन-रजायताऽ-
जायता-ऽग्गिनर् म्मुखान्
न्मुखाद-ग्गिन-रजायत।

अग्गिन-रजायता-ऽजायता-ऽग्गिन-रग्गिन-रजायत। अजायतेत्त्यजायत।।

क्रमघनात् शिखाघनाच्च भिन्नः पञ्चसन्धियुक्तो घनवल्लभाभिधोऽन्यो घनप्रकारो दाक्षिणात्येषु वैदिकेषु प्रसिद्धो वर्तत इति ज्ञायते। एतस्य घनस्य लक्षणं विकृतिवल्ल्यष्टविकृतिलक्षणादिग्रन्थेषु प्रतिपादितो न दृश्यते। दामोदरसातवलेकर-सम्पादितऋग्वेदसंहितापुस्तके प्रदर्शितस्योदाहरणस्याऽनुरूपेणोदाहरणेनाऽयं घनपाठ-प्रकारो ज्ञातुं शक्यते[१]। तद्यथा—

चन्द्रमा मनसः। मनसो मनसः। मनसश्च्चन्द्रमाः। चन्द्रमाश्च्चन्द्रमाः। चन्द्रमा मनसः। चन्द्रमा मनसो मनसश् च्चन्द्रमाश् च्चन्द्रमा मनसो जातो
जातो मनसश् च्चन्द्रमाश्
च्चन्द्रमा मनसो जातः।

मनसो जातः। जातो जातः। जातो मनसः। मनसो मनसो। मनसो जातः।

मनसो जातो जातो मनसो मनसो जातश् च्चक्षोश्
च्चक्षोर् ज्जातो मनसो
मनसो जातश् च्चक्षोः।

---

१. कौण्डिन्न्यायनशिक्षायां प्रदर्शित एतद्घनपाठोदाहरणे तु किञ्चिद् भिन्नः पाठप्रकारो दृश्यते। स च शौनकोक्तचरणव्यूहसूत्रटिप्पण्यां (पृ. ५३) वेदाचार्येण अनन्तरामशास्त्रिणा डोगरोपनामकेन उल्लिखितेन पञ्चसन्धिघनमालापाठप्रकारेण तुल्योऽस्ति। तत्र च पञ्चसन्धिकजटाक्रमपर्व-शिखाघनपर्व-पाठानन्तरं पूर्वपदद्वयस्यैव क्रमव्युत्क्रमसङ्क्रमान् पठित्वा द्वितीयं पञ्चसन्धिकघनमालापाठपर्व गृह्यत इति विशेषो द्रष्टव्यः।

जातश् च्चक्षोः। चक्षोश् च्चक्षोः। चक्षोर् ज्जातः। जातो जातः। जातश् च्चक्षोः।

जातश् च्चक्षोश् चक्षोर् ज्जातो जातश् च्चक्षोः सूर्य्यः
सूर्य्यश् च्चक्षोर् ज्जातो
जातश् च्चक्षोः सूर्य्यः।

चक्षोः सूर्य्यः। सूर्य्यः सूर्य्यः। सूर्य्यश् च्चक्षोः। चक्षोश् च्चक्षोः। चक्षोः सूर्य्यः।

चक्षोः सूर्य्यः सूर्य्यश् च्चक्षोश् चक्षोः सूर्य्यो ऽ अजायता-
ऽजायत सूर्य्यश् चक्षोश्
च्चक्षोः सूर्य्यो ऽ अजायत।

सूर्य्यो ऽ अजायत। अजायताऽजायत। अजायत सूर्य्यः। सूर्य्यः सूर्य्यः। सूर्य्यो ऽ अजायत।

सूर्य्यो ऽ अजायता-ऽजायत सूर्य्यः सूर्य्यो ऽ अजायत। अजायतेत्त्यजायत।।

श्रोत्राद् द्वायुः। वायुर्व्वायुः। वायुश्श्रोत्रात्। श्रोत्राच् छ्रोत्रात्। श्रोत्राद् द्वायुः।

श्रोत्राद् द्वायुर् व्वायुः श्रोत्राच् छ्रोत्राद् द्वायुश् च्च
च वायुः श्रोत्राच्
छ्रोत्राद् द्वायुश् च्च।

वायुश् च्च। च च। च वायुः। वायुर्व्वायुः। वायुश् च्च।

वायुश् च्च च वायुर् व्वायुश् च्च प्राणः
प्राणश् च्च वायुर्
व्वायुश् च्च प्राणः।

च प्राणः। प्राणः प्राणः। प्राणश् च्च। च च। च प्राणः।

च प्राणः प्राणश् च्च च प्राणश् च्च
च प्राणश् च्च
च प्राणश् च्च।

प्राणश् च्च। च च। च प्राणः। प्राणः प्राणः। प्राणश् च्च।

प्राणश् च्च च प्राणः प्राणश् च्च मुखान्
न्मुखाच् च प्राणः
प्राणश् च्च मुखात्।

च मुखात्। मुखान् मुखात्। मुखाच् च। च च। च मुखात्।

च मुखान् न्मुखाच् च च मुखाद-ग्गिन-
रग्गिनर् म्मुखाच् च
च मुखादग्गिनः।

मुखादग्गिनः। अग्गिनरग्गिनः। अग्गिनर्म्मुखात्। मुखान् मुखात्। मुखादग्गिनः।

मुखाद-ग्गिन-रग्गिनर् मुखान् न्मुखाद-ग्गिन-रजायता-
ऽजायता-ऽग्गिनर् म्मुखान्
न्मुखाद-ग्गिन-रजायत।

अग्गिनरजायत। अजायताऽजायत। अजायता-ऽग्गिनः। अग्गिनरग्गिनः। अग्गिनरजायत।

अग्गिनरजायता-ऽजायता-ऽग्गिनरग्गिनरजायत। अजायतेत्त्यजायत।।

**उपसंहारः**

"स्वाद्ध्यायोऽद्ध्येतव्यः" इत्यादिभिर्विधिवाक्यैरेव यथा संहितापाठस्याऽध्ययनं स्वाध्यायाध्ययनरूपेणाऽवश्यं कर्तव्यतया निर्दिष्टं न तथा पदपाठादीनामध्ययनं निर्दिष्टम्। तथापि वेदाङ्गरूपेषु प्रातिशाख्यशिक्षाग्रन्थेषु पदपाठ-क्रमपाठयोः प्रतिपादनात् संहितापाठानन्तरमनयोः महत्त्वपूर्णं स्थानं वर्तते। प्रातिशाख्येषु प्रमुखशिक्षासु चाऽष्टविकृतीनां कोऽप्युल्लेखो न दृश्यते। अतः क्रमजटादीनामष्टानां विकृतिपाठानां विधायिकाऽधुनोपलभ्यमाना प्राचीनतमा कृतिस्तु व्याडिकृता सप्तविंशतिश्लोकात्मिका विकृतिवल्ल्येव दृश्यते। एषा ऋग्वेदप्रातिशाख्यस्य परिशिष्टतया स्वीकर्तुं शक्याऽवगम्यते। विकृतिवल्ल्या ऋग्वेदसम्बद्धता च 'नत्वाऽऽदौ शौनकाचार्यं गुरुं वेदमहानिधिम्।....नमामि शाकलाचार्यं शाकल्यं स्थविरं तथा।..... शैशिरीये समाम्नाये व्याडिनैव महर्षिणा। जटाद्या विकृतीरष्टौ लक्ष्यन्तें नाऽतिविस्तरम्'' इत्येतदारम्भस्थश्लोकैरेव स्पष्टतया बोध्यते। अन्येऽष्टविकृतिसम्बद्धाः सर्वेऽपि ग्रन्थाः प्रायेण विकृतिवल्लीमनुसरन्त-स्तदुपजीविनः प्रायेण दृश्यन्ते। अतोऽष्टानामेव विकृतीनां मुख्यतया ऋग्वेदसम्बद्धत्वं स्फुटं ज्ञायते।

यद्यपि कातीयचरणव्यूहसूत्रस्य मुद्रिते पुस्तके यजुर्वेदखण्डे—

"मन्त्रः पदः क्रमश्चैवं चतुर्थं स्याज्जटा तथा।
क्रममाला शिखा रेखा ध्वजो दण्डो रथो घनः।।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः"[१]।।

इति पाठो दृश्यते, तथाप्यस्य ग्रन्थस्य हस्तलिखिते पुस्तकेऽस्माभिर्दृष्टे तस्य पाठस्याभावात्, गोत्रचरणपृच्छाप्रतिज्ञासूत्रे च तस्य विषयस्याऽनुल्लेखात्, शुक्लयजुर्वेदसम्बद्धासु प्राचीनासु शिक्षासु च तस्य विषयस्याभावात्, शौनकीयचरणव्यूहस्य ऋग्वेदखण्ड एव तस्य विषयस्योल्लेखाच्च क्रमजटादिविकृतिपाठाः प्रमुखतया ऋग्वेदसम्बद्धा एवेति निश्चेतुं शक्यते।

शुक्लयजुर्वेदसम्बद्धासु प्राचीनासु याज्ञवल्क्यशिक्षादिषु क्रमजटादिविकृतिपाठानां कुत्राऽप्युल्लेखो न दृश्यते। अर्वाचीनायां १९३७ तमे वैक्रमाब्दे रचितायां सङ्ग्रहात्मिकायां प्रातिशाख्यप्रदीपशिक्षायामेवाऽनन्तकृतिप्रभावाज्ज्योत्स्नाकारप्रभावाच्च क्रमजटादिविकृतयः प्रतिपादिताः प्रतीयन्ते। अनन्तेन तु—

"याज्ञवल्क्यमुनिं नत्वा कात्यायनमुनीनपि।
नागदेवात्मजः श्रीमान् अनन्ताचार्यसंज्ञकः।।
आद्यशाखी स्वशाखायां जटाद्यष्टसुलक्षणम्।
ब्रूते विचार्य बहुशो मतं व्याडेः समाश्रयन्।।
स्वप्रातिशाख्यग्रन्थस्थाज्जटालक्षणवर्जनात्।
पारक्यमपि तद् ग्राह्यं यन्नाम्नातमिति स्मृतेः"।।

इति प्रतिज्ञां कृत्वा जटापटलकारिका व्याख्याताः सन्ति। एवं चाऽनन्तेन स्वशाखीयग्रन्थत्वाभावेऽपि जटापटलकारिकाया व्याख्यानं कृत्वा काण्वशाखायामपि क्रमजटादिपाठः कर्तव्य इति प्रतिपादितत्वात् तद्गतानुगतिकतया शुक्लयजुर्वेदप्रातिशाख्यज्योत्स्नाकारेण श्रीरामेण च स्ववृत्त्यन्ते (१८७२ तमे वैक्रमाब्दे) जटादिविकृतिलक्षणानि लिखितानि सङ्गृहीतानि वेत्यनुमीयते। एतान्येव युगलकिशोरपाठकेनाऽपि स्वसम्पादिते शुक्लयजुर्वेद-प्रातिशाख्यसंस्करणेऽन्ते संयोजितानि सन्ति। एतादृशीं स्थितिं दृष्ट्वा केचन प्राचीनैः

१. "वेदशाखापर्यालोचनम्' इति ग्रन्थेन सह मुद्रिते कात्यायनकृतचरणव्यूहे (श्रीकिशोरमिश्रः, वाराणसी, वै. २०४६, पृ. ६६)।

शुक्लयजुर्वेदप्रातिशाख्यपरिशिष्टत्वेन कुत्राऽप्यनुल्लिखितमपि जटाद्यष्टविकृतिलक्षणं तथात्वेन स्वीकुर्वन्ति; किन्तु तद् निष्प्रमाणत्वाद् विवेकशीलैर्विद्वद्भिर्विशेषतो विचारणीयं दृश्यते। अस्मिन् प्रसङ्गे 'पारक्यमपि तद् ग्राह्यं यन् नाऽऽम्नातमिति स्मृते:' इति यदनन्तेनोक्तं तदपि—

'बह्वल्पं वा स्वसूत्रोक्तं यस्य कर्म प्रचोदितम्।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्''[१]।।

इत्यादिस्मृतिवचनस्य दर्शनात् सहसाऽङ्गीकर्तुं न शक्यते।

तैत्तिरीयशाखायामपि जटादिविकृतीनां प्रातिशाख्यविषयत्वाभावं संहिता-पद-क्रमाणामेव तद्विषयत्वं तद्व्याख्यात्रा वैदिकाभरणकारेण स्पष्टीकृतं दृश्यते। शौनकीयचरणव्यूहेऽपि यजुर्वेदखण्डे तैत्तिरीयाणां क्रमान्तमेवाऽध्ययनमुल्लिखितं वर्तते। तैत्तिरीयशाखाया: शिक्षासु तु बहुष्वेव जटाया उल्लेखो दृश्यते। तथा हि व्यासशिक्षायाम्[२], शम्भुशिक्षायाम्[३], कौहलीयशिक्षायाम्[४], आत्रेयशिक्षायां[५] च जटाया उल्लेखो वर्तते, अन्यासां विकृतीनां तु तत्रोल्लेखो न दृश्यते। साम्प्रदायिकैरुल्लिखितासु कृष्णयजुर्वेदसम्बद्धासु नवसु शिक्षासु तिसृसूपशिक्षासु चागणितायां कौण्डिन्न्यशिक्षायां च जटाया घनस्य चेति द्वयोरेवोल्लेखो वर्तते[६]।

सामवेदसम्बद्धासु नारदीयशिक्षादिषु अथर्ववेदसम्बद्धायां माण्डूक्यां शिक्षायां च क्रमजटादीनां विकृतीनां कोऽप्युल्लेखो न दृश्यते।

पुराणेषु पदपाठ-क्रमपाठयोर्महत्त्वं प्रतिपादितं दृश्यते, क्रमजटादीनां विकृतीनां तु सर्वासां नाममात्रमपि नोपलभ्यत इति तद्विमर्शका: कथयन्ति[७]। वाराहपुराणवचनत्वेनाऽन्यैरुल्लिखित:—

'संहितापाठत: पुण्यं द्विगुणं पदपाठत:।
त्रिगुणं क्रमपाठेन जटापाठेन षड्गुणम्'।।

---

१. स्मृतिसन्दर्भे षष्ठे भागे, लौगाक्षिस्मृतौ (मनसुखराय मोर, कलकत्ता, १९५७, पृ. २७५)।
२. द्रष्टव्यम्— सू. ३७-४०, सू. ९७, सू. ९९-१००, सू. ५२१-५२२।
३. द्रष्टव्यम्— सू. ११, सू. २३-२४।
४. द्रष्टव्यम्— श्लो. ५३-५७।
५. द्रष्टव्य:— आत्रेयशिक्षाहस्तलिखितग्रन्थ:।
६. द्रष्टव्यम्— श्लो. १३-२६।
७. 'पुराणगत वेदविषयक सामग्री का समीक्षात्मक अध्ययन' इति पुस्तके (डा. रामशङ्कर-भट्टाचार्य, हिन्दी साहित्य सम्मेलन, प्रयाग, १९६५, पृ. ४००)।

इति श्लोकोऽपि मुद्रितेषु वाराहपुराणपुस्तकेषु नोपलभ्यत इति त एव कथयन्ति[१]। मत्स्यपुराणवचनत्वेनोल्लिखितः 'जटादिविकृतीनां ये' इत्यादिकः श्लोकोऽपि मुद्रितमत्स्यपुराणपुस्तके न दृश्यते। अत एतादृशानां पुराणवचनानां सर्वथादरणीयत्वं न भवतीति च मेधातिथि-गोविन्दराज-कुल्लूकभट्टवचनादितोऽप्यवगम्यते[२]। एतेषां वचनानामादरणीयत्वेऽपि ते ऋग्वेदमन्त्रसम्बद्धतयैव चरितार्था भवितुमपि शक्नुवन्ति।

अष्टसु विकृतिषु मध्ये क्रमदण्ड-क्रममाला-क्रमध्वज-क्रमरथ-क्रमघनानां पाठ ऋच्येव कर्तुं शक्यते, यतो हि अर्धर्चऋग्वर्गाणामाधार एव तेषां लक्षणान्युक्तानि सन्ति। अतस्तेषां लक्षणानुरूपतया यजुष्षु प्रवृत्तिर्भवितुमेव नाऽर्हति। एवं च यजुर्वेदाध्यायिभिः स्वशाखीयसंहितापदक्रमानामेवाध्ययने विशेषेणाऽऽदरः कर्तव्य इत्यवगम्यते। अथवा यजुर्वेदादिषु यस्यां शाखायां प्रातिशाख्यशिक्षादिग्रन्थेषु या विकृतयः स्वशाखायां पठनीयत्वेन निर्दिष्टास्ता एव विकृतयस्तासु शाखासु पठनीया न तदतिरिक्ता इति व्यवस्था मन्तव्या प्रतीयते। तैत्तिरीयशाखाध्येतारो दाक्षिणात्या वैदिका अपि प्रायेण कासाञ्चनैव परिमितानां स्वल्पानां कण्डिकानामृचां वैव क्रमजटां पञ्चसन्धिकघनं चैव पठन्तीति श्रूयते। अतः शास्त्रस्य सम्यगालोडनं कृत्वा तदाशयं बुद्ध्वा वेदाध्ययनस्य मुख्यं प्रयोजनं साधयितुमेव यथाशास्त्रं वैधोपाकर्मपूर्वकं वेदस्याऽध्यापनेऽध्ययने चैव विवेकशीलैर्विद्वद्भिर्वैदिकैर्विशेषतोऽधुना स्वकीयः श्रमः सर्वांशेनोपयोक्तव्योऽवगम्यत इति शम्।

---

१. 'पुराणगत वेदविषयक सामग्री का समीक्षात्मक अध्ययन' इति पुस्तके (डा. रामशङ्कर-भट्टाचार्य, हिन्दी साहित्य सम्मेलन, प्रयाग, १९६५, पृ. ४०१)।

२. मनुस्मृतेर्व्याख्यायां मन्वर्थमुक्तावल्याम् (५।६६)।

# वैदिक-सन्ध्योपासन-पद्धति-विचारः

**श्रीशिवराज आचार्यः कौण्डिन्न्यायनः**
च. २/४१९, स्वाध्यायशाला, सरस्वतीमार्गः,
लाजिम्पाट्, काष्ठमण्डपनगरम्,
नेपालदेशः

❀ ❀ ❀

वैदिके सनातने वर्णाश्रमधर्मे नित्यसदाचारस्य अतीव प्रभूतं माहात्म्यं वर्तते। तदुक्तं वासिष्ठधर्मसूत्रे—

आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः।
छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः[१]।। इति।

तत्र धर्मस्य मूलं स्रोत एव सदाचारः स्वीकृतोऽस्ति। तथा हि मनुस्मृतौ—

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः ।।
आचाराद्विच्युतो विप्रो न वेदफलमश्नुते।
आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत्।।
एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम्।
सर्वस्य तपसो मूलमाचारं जगृहुः परम्[२]।। इति।

सदाचारे श्रद्धायां सत्यामेव सदाचारपालनपूर्वकं नियमानुसारं वेदादिशास्त्रस्याध्ययनं क्रियते। तथाऽधीतेभ्य एव वेदादिशास्त्रेभ्यो धर्मस्य यथार्थरूपेण ज्ञानं भवति। तथा ज्ञात्वाऽऽचरितो धर्म एव फलवान् भवति। एतस्मिन् विषये शास्त्र-शिष्टवचनानि चोपलभ्यन्ते। तथा हि व्यासवचनम्—

---

१. श्रीवासिष्ठधर्मशास्त्रम्, भाण्डारकर-प्राच्यविद्या-शोध-मन्दिरम्, पूना, १९३० सन्; ६।३, पृ. १९।

२. मनुस्मृतिः, निर्णयसागर-प्रेस, मुम्बई, १९४६ सन्; १।१०८-११०।

ऋक्पादमप्यधीयीत मार्गेणोक्तेन धर्मवित्।
न त्वेव चतुरो वेदानन्यायेन कदाचन[१]।। इति।

लघुव्याससमृतिवचनञ्च—

संस्कारवद्भिः कर्तव्यं वेदस्याध्ययनं द्विजैः।
शुद्धस्य फलवत्तत्स्यादन्यथा निष्फलं स्मृतम्[२]।। इति।

कूर्मपुराणवचनम्—

कृतोपनयनो वेदानध्यैष्ट भगवान् हरिः।
सदाचारं भरद्वाजात्त्रिलोकाय प्रदर्शयन्[३]।। इति।

कुमारिलभट्टपादवचनम्—

तस्माद् यान्येव शास्त्राणि वेदमूलानतिक्रमात्।
अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः ।।
यथैवाऽन्यायविज्ञाताद् वेदाल्लेख्यादिपूर्वकात्।
शूद्रेणाऽधिगताद्वाऽपि धर्मज्ञानं न सम्मतम् ।।
तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम्।
संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता[४]।। इति।

अत एव 'सदाचारादेव धर्मस्य गतिः प्रवर्तते', 'सदाचार एव सर्वस्य तपसो मूलम्' इति मनुस्मृतावुक्तम्[५]।

तत्र सदाचारेषु सन्ध्योपासनस्याऽतीव महत्त्वपूर्णं स्थानमस्ति। तथापि सन्ध्योपासनपद्धतिविषये सुबहोः कालात् पूर्वत एव समाजे भ्रमः प्रवर्तमानोऽवगम्यत इति स्वाध्यायशालायां गुरुकुलदेश्यायां तद्विषये गभीररूपेण शास्त्रीयं विचारं प्रवर्त्य ततः प्राप्तो निष्कर्षरूपेण स्थिरीभूतो विचारो धार्मिकाणां वैदिकानां विदुषां प्रमोदाय सङ्क्षेपेणाऽत्र प्रस्तूयते।

---

१. वीरमित्रोदयसंस्कारप्रकाशः, वाराणसीसंस्करणम्, पृ. ५२६।
२. तत्रैव, पृ. ५१७।
३. कूर्मपुराणम्, नाग पब्लिसर्स, दिल्ली, १९८३ सन्; १।१७।४४।
४. तन्त्रवार्तिकम्, मीमांसादर्शनम्, आनन्दाश्रममुद्रणालयः, १।३।७, द्वितीयभागः, पृ. १२३।
५. मनुस्मृतिः, निर्णयसागर-प्रेस, १।११०।

सन्ध्योपासनं शास्त्रेऽत्यन्तमेवाऽऽवश्यकमुक्तमस्ति। सन्ध्योपासनहीनस्याऽन्यस्मिन् धर्मकर्मणि अधिकार एव न भवति। तदुक्तं दक्षस्मृतौ[१] स्कन्दपुराण-काशीखण्डे[२] च—

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत् ।। इति ।

सन्ध्योपासनहीनस्य परिभाषा च देवीभागवते—

करोत्यशुद्धां सन्ध्यां वा न सन्ध्यां वा करोति च ।
त्रिसन्ध्यं वर्जयेद् यो वा सन्ध्याहीनश्च स द्विजः[३] ।। इति।

अन्यानि च सन्ध्योपासनहीननिन्दावचनानि शास्त्रेषु बहूनि दृश्यन्ते । तथा हि भारद्वाजस्मृतौ—

सन्ध्योपास्तिं विना विप्रः पुण्यान्यन्यानि चाऽऽचरेत् ।
यस्तस्य तानि पापानि भवन्त्येव न संशयः[४] ।। इति।

वीरमित्रोदये आह्निकप्रकाशे—

यस्तु तां केवलां सन्ध्यामुपासीत स पुण्यभाक् ।
तां परित्यज्य कर्माणि कुर्वन् प्राप्नोति किल्बिषम्[५] ।। इति।

लघुव्याससस्मृतौ[६] गरुडपुराणे[७] च—

योऽन्यतः कुरुते यत्नं धर्मकार्ये द्विजोत्तमः ।
विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ।। इति।

---

१. स्मृतीनां समुच्चयः, आनन्दाश्रमः, १९२९ सन्; २।२७; पृ. ७४।

२. स्कन्दपुराणान्तर्गतः काशीखण्डः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, २०४९ वै., ३५।१११-११२।

३. देवीभागवतम्, ठाकुर प्रसाद एण्ड सन्स बुक्सेलर, वाराणसी; ९।३४।८२।

४. स्मृतिसन्दर्भः पञ्चमो भागः, मनसुखराय मोर, कलकत्ता, २०१२ वै., ६।१६१, पृ. ४०२२ (३१२२)।

५. व्यासवचनं योगियाज्ञवल्क्यवचनं वा, वाराणसीसंस्करणम्, पृ. २५८।

६. स्मृतिसन्दर्भः, तृतीयो भागः, मनसुखराय मोर, कलकत्ता, २००९ वै., लघुव्याससंहिता, १।२९, पृ. १६२१।

७. गरुडपुराणम्, नाग पब्लिसर्स, दिल्ली, १९८४, १।५०।२३-२४।

कूर्मपुराणे[१] पद्मपुराणे[२] च—

सायम्प्रातर्द्विजः सन्ध्यामुपासीत समाहितः ।
कामाल्लोभाद्भयाद् मोहात् त्यक्त्वैनां पतितो भवेत् ।। इति ।

बृहन्नारदीयपुराणे[३]—

नोपास्ते यो द्विजः सन्ध्यां धूर्तबुद्धिरनापदि ।
पाषण्डः स हि विज्ञेयः सर्वधर्मबहिष्कृतः ।।
यस्तु सन्ध्यादिकर्माणि कूटयुक्तिविशारदः ।
परित्यजति तं विद्यान् महापातकिनां वरम् ।।
ये द्विजा अभिभाषन्ते त्यक्तसन्ध्यादिकर्मणा ।
ते यान्ति नरकान् घोरान् यावच्चन्द्रार्कतारकम् ।। इति ।

दक्षस्मृतौ[४] स्कन्दपुराणे[५] च—

यो न सन्ध्यामुपासीत ब्राह्मणो हि विशेषतः ।
स जीवन्नेव शूद्रस्तु मृतः श्वा जायते ध्रुवम् ।। इति ।

मनुस्मृतौ[६]—

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ।। इति ।

भविष्यपुराणे[७] महाभारते[८] च—

उपासन्ते ये न पूर्वां द्विजाः सन्ध्यां न पश्चिमाम् ।
सर्वांस्तान् धार्मिको राजा शूद्रकर्मणि योजयेत् ।। इति।

---

१. कूर्मपुराणम्, नाग पब्लिसर्स, दिल्ली, १९८३, २।१२।१६।
२. पद्मपुराणम्, आनन्दाश्रममुद्रणालयः, ग्रन्थाङ्कः १३१, आदिखण्डः (स्वर्गखण्डः) ५१।२० (सन् १८९४)।
३. नारदीयपुराणम्, नाग पब्लिसर्स, दिल्ली, १९८४, १।२७।६७-६९।
४. स्मृतीनां समुच्चयः, आनन्दाश्रममुद्रणालयः, १९२९, २।२६, पृ. ७४।
५. स्कन्दपुराणान्तर्गतः काशीखण्डः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, २०४९ वै., ३५।११०-१११।
६. मनुस्मृतिः, निर्णयसागर प्रेस, मुम्बई, १९४६ सन्, २।१०३।
७. भविष्यपुराणम्, नाग पब्लिसर्स, दिल्ली, १९८४, ४।२०५।३३-३४।
८. श्रीमन्महाभारतम्, चित्रशालामुद्रणालयः, पूना, १९३३, अनुशासनपर्व, १०४।१९-२०।

बृहद्योगियाज्ञवल्क्यस्मृतौ[१] देवीभागवते[२] च—

सन्ध्या येन न विज्ञाता सन्ध्या येनाऽनुपासिता ।

जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते ।। इति ।

ब्रह्मवैवर्तपुराणे[३]—

पूर्वां सन्ध्यां परित्यज्य मध्यमां पश्चिमां तथा ।

ब्रह्महत्यामात्महत्यां प्रत्यहं लभते द्विजः ।। इति ।

सन्ध्योपासनस्य माहात्म्यमपि अतीव प्रभूतं वर्तते। अन्यद् धर्मकर्म-कर्तुमसमर्थो ब्राह्मणः खलु सन्ध्योपासनमात्रेणाऽपि संसारसागरं तर्तुं समर्थो भवति। तथा चोक्तं लौगाक्षिस्मृतौ[४]—

ब्राह्मणः सर्वयत्नेन सायम्प्रातः समाहितः ।

सन्ध्यामात्रपरो भूयात् तावन्मात्रात् तरिष्यति ।। इति ।

लघुव्यासस्मृतौ[५] च—

अनन्यचेतसः शान्ता ब्राह्मणा वेदपारगाः ।

उपास्य विधिवत्सन्ध्यां प्राप्ताः पूर्वे परां गतिम् ।। इति ।

विश्वामित्रस्मृतौ[६] च—

स्नानं सन्ध्यामुक्तकाले द्विजो यः कुर्यान्नित्यं सर्वदोषं निहन्यात् ।

त्रयस्त्रिंशत्कोटिदेवप्रभावस्तेनाऽवश्यं प्राप्यते सद्विवेकः ।। इति ।

ब्राह्मणत्वपरिपालनाय च सन्ध्योपासनमेव केवलं समर्थमित्युक्तं बृहद्योगियाज्ञवल्क्यस्मृतौ[७]। तथा हि—

---

१. स्मृतिसन्दर्भः, चतुर्थो भागः, मनसुखराय मोर, कलकत्ता, २०१० वै., ६।२, पृ. २२७९।

२. देवीभागवतम्, ठाकुर प्रसाद एण्ड सन्स बुक्सेलर, वाराणसी, ११।१६।७।

३. ब्रह्मवैवर्तपुराणम्, आनन्दाश्रममुद्रणालयः, पूना, १९३५ सन्, प्रथमभागः, ब्रह्मखण्डः, २६।५३-५४।

४. स्मृतिसन्दर्भः, मनसुखराय मोर, कलकत्ता, षष्ठो भागः, २०१३ वै., पृ. २८५।

५. स्मृतिसन्दर्भः, तृतीयो भागः, २००९ वै.; १।२८ (लघुव्याससंहिता, पृ. १६२१)।

६. स्मृतिसन्दर्भः, पञ्चमो भागः, २०१२ वै., ३।७५ (पृ. २६७०)।

७. स्मृतिसन्दर्भः, चतुर्थो भागः, २०१० वै., ६।४ (पृ. २२८०)।

सर्वावस्थोऽपि यो विप्रः सन्ध्योपासनतत्परः ।
ब्राह्मण्याच्च न हीयेत सोऽन्यजन्मगतोऽपि सन् ।। इति ।

एवं सन्ध्योपासनस्याऽऽवश्यकत्वे माहात्म्ये चाऽवगते सन्ध्योपासनं कया पद्धत्या कर्तव्यमिति प्रश्न उपस्थितो भवति ।

तत्र वैदिक-सनातन-वर्णाश्रम-धर्मे सर्वेषु धर्मकर्मसु कर्तुर्गोत्र-प्रवर-वेदशाखा-सूत्राणां विचारो भवति। अत एव अनिर्ज्ञात-गोत्र-प्रवरवेदशाखासूत्राणां जनानां ब्राह्मणत्वमेव सन्देहास्पदतां प्राप्नोति। तस्माद् ब्राह्मणैः स्वगोत्रप्रवरवेदशाखासूत्राणां सम्यग् ज्ञानं कृत्वा तदनुसारं वैदिकं धर्मकर्म कर्तव्यम्। अत एव वैदिका आर्या अनादेरपौरुषेयस्य वेदस्य गुरुशिष्यपरम्परया अविच्छेदेन धारणं कृत्वा स्वशाखावेदादिशास्त्रनिचयस्य यथार्थस्य स्वरूपस्य रक्षां कर्तुं स्वशाखावेदादिशास्त्रनिचयस्याऽर्थं बोधयित्वा धर्ममोक्षपुरुषार्थसाधनं कर्तुं मार्गं दर्शयितुं च द्विजातिकुमाराणामुपनयनादिकं कुर्वन्ति। तत्रापि संस्कारसम्पादन-पालन-शिखायज्ञोपवीतधारणशौचस्नानसन्ध्योपासनादिनियमपालनपरायणात् लशुन-पलाण्डु-गृञ्जन-क्याकु-ग्रामकुक्कुट-ग्राम्यशूकर-हट्टालयदालभक्ताऽशुचिस्पृष्टजल-लवणपक्वान्नाद्यभक्ष्यपरिहारशीलात् मद्याद्यपेयपानपरिवर्जकात् शास्त्रसम्मताधिकार-सम्पन्नात् शुद्धकुलीनादनपाश्रित्यजीविनः स्वतन्त्राद् गृहस्थाद् ब्राह्मणाद् गुरोः शास्त्रसम्मतेनाऽधिकारिणा यथानियमं "वेदं समाप्य स्नायात्[१]" इत्यादिकं विधिमनुसृत्याऽधीतस्य स्वशाखावेदादिशास्त्रनिचयस्यैव धर्मे मोक्षे च मुख्यं प्रामाण्यमिति वैदिकानां शास्त्रप्रामाण्यसिद्धान्तः। अत एव वैदिके धर्मे स्वशाखाया वेदमन्त्रसंहिता, ब्राह्मणग्रन्थः, श्रौतसूत्रम्, गृह्यसूत्रम्, धर्मसूत्रम्, श्रौतगृह्यपरिशिष्टानि च मुख्यानि प्रमाणानि; अन्येऽनुस्मृतिपुराणादिग्रन्थास्तु स्वशाखावेदमन्त्रसंहिता-दीनामनुकूलत्वे अविरोधित्वे चैव प्रमाणपदवीमारोहन्ति।

उक्तरूपायां च वस्तुस्थितौ वेदाध्ययनविधिक्रमानुसारं सपरिशिष्टं स्वगृह्यसूत्रं धर्मसूत्रं वाऽधीतवता आस्तिकेन वैदिकजनेन स्वगृह्यपरिशिष्टादितो ज्ञातयैव सन्ध्योपासनपद्धत्या सन्ध्योपासनं कर्तव्यमिति स्वतः स्फुटं भवति। 'धर्मज्ञानं कृत्वा यथाशक्ति यथाधिकारञ्च धर्मकर्म करिष्यामीति नित्यस्वाध्यायाध्ययनविध्यनुसरणेन धृतान् स्वशाखावेदमन्त्रसंहिता-ब्राह्मण-श्रौतसूत्र-गृह्यसूत्र-धर्मसूत्र-परिशिष्टादिग्रन्था-ननादृत्य इतरेभ्यो ग्रन्थेभ्यो धर्मज्ञानं कृत्वा धर्मकर्म कर्तव्यमित्यत्र कीदृशमौचित्यं स्यात्'? भावं प्रकटयन्तः कुमारिलभट्टपादा अपि आहुः—

१. पारस्करगृह्यसूत्रम्-२।६।१।

कक्ष्यावलम्बिनं नित्यं को नाम करकं वहन्।
तदनादृत्य शौचार्थमन्यतः कर्तुमर्हति[१]।। इति।

स्वशाखोक्तमेव धर्मकर्म कर्तव्यं न परशाखोक्तमित्यर्थस्य प्रतिपादकानि ऋषिमुनिवचनानि चानेकानि दृश्यन्ते। तथा हि वसिष्ठवचनम्—

न जातु परशाखोक्तं बुधः कर्म समाचरेत्।
आचरन् परशाखोक्तं शाखारण्डः स उच्यते।।
यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत्।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति[२]।। इति।

बौधायनवचनम्—

स्वशास्त्रे विद्यमाने यः परशास्त्रेण वर्तते।
भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यतः[३]।। इति।

स्मृतिसङ्ग्रहकारवचनम्—

सर्वेषामेव पक्षाणां स्वगृह्योक्तं विधीयते।
स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत्[४]।। इति।

बृहन्नारदीयपुराणवचनम्—

स्वगृह्यचोदितं कर्म द्विजः कुर्वन् कृती भवेत्।
अन्यथा पतितो भूयात् सर्वधर्मबहिष्कृतः[५]।। इति।

प्रातिस्विकतया सन्ध्योपासनस्यैव विषयेऽपि स्वसूत्रोक्तपद्धतेरेवाऽनुसरणीयताया बोधकानि वचनानि च दृश्यन्ते। तथा हि—

---

१. तन्त्रवार्त्तिकम्, मीमांसादर्शनम्, आनन्दाश्रममुद्रणालयः, पूना, १९७० सन्, १।३।२४ (द्वितीयभागः, पृ. १९५)।

२. संस्कारगणपतिः, चौखम्बा संस्कृत सीरिज आफिस, वाराणसी, १९९५ वै., पृ. १०।

३. बौधायनश्रौतसूत्रम्, मुन्सीराम मनोहरलाल पब्लिसर्स, दिल्ली, १९८२ सन्; २९।८ (तृतीयः खण्डः, पृ. ३८०)।

४. पारस्करगृह्यसूत्रम्, भाष्यपञ्चकोपेतम्, गुजरातीमुद्रणालयः, मुम्बई, १९७३ वै., पृ. ४८३ (श्राद्धकाशिकायाम्)।

५. नारदीयपुराणम्, नाग पब्लिसर्स, दिल्ली, १९८४, १।२४।१०।

विश्वामित्रस्मृतिवचनम्—

स्वसूत्रोक्तविधानेन सन्ध्यावन्दनमाचरेत्।
अन्यथा यस्तु कुरुते आसुरीं तनुमाप्नुयात्[१]।। इति।

स्कन्दपुराणवचनम्—

ततः सन्ध्यामुपासीत स्वसूत्रोक्तेन वर्त्मना।
ततः कार्यो जपो देव्या यावदर्कोदयो भवेत्[२]।। इति।

महाभारतवचनञ्च—

त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः ।
स्वशाखाविहितैर्मन्त्रैरर्चन्त्यृषिगणार्चितम्[३]।। इति।

स्वशाखागृह्यसूत्रेण विहिते कर्मणि परशाखागृह्यसूत्रे, अनुस्मृतिषु, पुराणेषु वाऽपि विहितानां कर्मणां समुच्चयो मिश्रणं वाऽपि च न भवतीत्येतस्यार्थस्य बोधकानि वचनानि चानेकानि समुपलभ्यन्ते। तथा हि कातीयवचनम्—

स्वशाखोक्तं परित्यज्य परशाखोक्तमाचरेत् ।
मिश्रितं वा प्रकुर्वीत सोऽन्धे तमसि मज्जति[४]।। इति।

अन्यच्च—

स्वगृह्योक्तमनल्पं वाऽप्यल्पं यस्य प्रचोदितम् ।
तावदेव तु कर्तव्यं तेन सर्वं कृतं भवेत् ।।
यावदुक्तं स्वस्वगृह्ये न कृतं तावदेव तत् ।
परोक्तं वा विमिश्रं वा कृतमप्यकृतं भवेत्[५]।। इति।

---

१. स्मृतिसन्दर्भः, मनसुखराय मोर, कलकत्ता, पञ्चमो भागः, २०१२ वै., १।१११।

२. स्कन्दपुराणम्, नाग पब्लिसर्स, दिल्ली, १९८६, वैष्णवखण्डः, कार्त्तिकमासमाहात्म्यम्, ५।२०।

३. श्रीमन्महाभारतम्, चित्रशालामुद्रणालय, पूना, १९३० सन्, वनपर्व ३।३९।

४. शुक्लयजुर्विधानसूत्रम्, जदुराम-रविशंकर-त्रिवेदी, मुम्बई, १९४३ सन्, मन्त्रभ्रान्तिहर-सूत्रम्, श्लो. १२ (पृ. ६४९)।

५. तत्रैव, श्लो. ९२,९३ (पृ. ६६१)।

लौगाक्षिवचनम्—

बह्वल्पं वा स्वसूत्रोक्तं यस्य कर्म प्रचोदितम्।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्[१]।। इति।

अन्यच्च—

कल्पमेकं समाश्रित्य प्रवृत्तेऽपि च कर्मणि।
न मिश्रयेत् प्रयोगाँस्तान् कल्पयोरव्यवस्थयोः[२]।। इति।

गृह्यविधिषु गृह्यान्तरविधिसमुच्चयस्याकरणीयत्वं धर्मशास्त्रनिबन्धकारो लक्ष्मीधरोऽपि प्रतिपादयत्येव। तथा हि—

शाखान्तराधिकरणन्यायेन सर्वस्मृतिषु यथाप्रत्ययं गृह्येष्वपि प्रसक्तेष्वपवादमाह गृह्यपरिशिष्टकारः— "बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्[३]।।" इति।

छन्दोगगृह्यपरिशिष्टे चोक्तम्—

प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परैः।
प्रयोगशास्त्रताहानेरनारम्भविधानतः।।
बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म्म प्रकीर्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्[४]।। इति।

शिष्टानां वचनं च—

प्रयोगः सूत्रकारोक्तो न समुच्चयमर्हति।
समुच्चये यतस्तस्य न निष्पत्तिर्न च क्रमः[५]।। इति।

उक्तानां छन्दोगपरिशिष्टादिवचनानां व्याख्याने प्रभाकारेण चोक्तम्—

"न च परोक्तगुणानुपसंहारे शाखान्तराधिकरणन्यायविरोध इति वाच्यम्, तन्न्यायस्य श्रौतविषयत्वात्, वाचनिकेऽर्थे न्यायानवताराच्च। किञ्च नाम्नोऽभेदेऽपि

१. स्मृतिसन्दर्भः, मनसुखराय मोर, कलकत्ता, २०१३ वै., षष्ठो भागः, पृ. २७५।
२. निर्णयसिन्धुटीका कृष्णम्भट्टी, चौखम्भा संस्कृत सीरिज आफिस, वाराणसी, पृ. ११७१।
३. कृत्यकल्पतरुः, प्रथमो भागः, ब्रह्मचारिकाण्ड, बडोदरा-प्राच्यविद्या-मन्दिर, १९४८ सन्, पृ. ५२।
४. कर्मप्रदीपः (छन्दोगपरिशिष्टापरनामधेयः), एसियाटिक सोसाइटी, बङ्गाल, १९०९ सन्, पृ. ५२।
५. तत्रैव।

यथासम्भवं रूपभेदादिभ्यस्तस्य तस्य कर्मान्तरत्वमेवेति कुत्र कस्य गुणोपसंहारः? न हि कर्मान्तरे कर्मान्तरगुणानामुपसंहारः शास्त्रानुमतः, अत एव 'नैकस्मिन् कर्मणि तते कर्माऽन्यत् तायते यतः'' इत्यनेन वैश्वदेवबलिकर्मणोः सामान्ययोः विशेषोक्ताभ्यां ताभ्यां कर्मान्तरत्वं स्वयमेव वक्ष्यति। यच्च पुराणोक्तं साधारणं तद् यद्यपि न पारक्यं तथापि स्वशास्त्रोक्तप्रयोगे न तस्य गुणोपसंहारः, तस्य कर्मान्तरत्वात्, कर्मान्तरे च कर्मान्तरगुणोपसंहारायोगात्, पूर्वोक्तगृह्यपरिशिष्टे अनारम्भविधानादन्यैर्गृह्यादेः समुच्चयनिषेधाच्च; किन्तु स्वशास्त्रोक्तप्रयोगा-नुष्ठानानन्तरं फलभूयस्त्वार्थमिच्छया तस्याऽप्यनुष्ठानं भवेदित्यपि वैश्वदेव-बलिकर्मणोः स्वयमेव वक्ष्यति। अनारम्भविधानैः समुच्चयेऽप्येषैव गतिः, तेषामनुष्ठाने फलभूयस्त्वमननुष्ठानेऽपि गृह्योक्तमात्रस्यानुष्ठानात् फलसिद्धिः, तथा चोक्तं बह्वल्पं वा स्वगृह्योक्तमित्यादि। मदनपारिजातेऽप्युक्तम्—

'असमर्थश्चेत् स्वगृह्योक्तमात्रमेव करोति, तावतैव तस्य शास्त्रार्थसिद्धे-रुक्तत्वात्' इति। तस्मात् श्रौतेषु पारशाखिकं कर्तव्यम्, गृह्योक्तेषु तन्न कर्तव्यम्। अनारभ्यविहितं तु गृह्योक्तेऽपि कर्तव्यम्, परमेषामकरणेऽपि गृह्योक्तमात्रकरणात् फलसिद्धिः, अनारभ्यविहितानां करणे तु फलातिशयः। सामान्यस्तु प्रयोगः स्वशास्त्रोक्तप्रयोगात् परत इच्छया कर्तव्यः, तत्रापि फलभूमा बोद्धव्यः''[१] इति।

वैदिकशास्त्रार्थवस्तुस्थितावुक्तविधायां सत्यामपि भारतवर्षे कलियुगप्रारम्भ-कालात् प्रभृत्येव स्वस्वसमये प्रबलत्वं प्राप्तानां चार्वाक-वैष्णव-शैव-शाक्त-जैन-बौद्धादीनां क्रियाकलापानां प्रभावाद् वैदिकेऽध्ययने धर्माचरणे च शिथिलीभवति सति, कलियुगाब्दानामष्टात्रिंशत्तमे शतके सिन्धुप्रदेशे अरबमुसल्मानानां प्रवेशे जाते, एकचत्वारिंशत्तमे शतके तुरुष्कमुसल्मानेन मोहमदगजनिना भारतवर्षस्य पश्चिमे भागे बहुशो लुण्ठिते, विशेषतश्च त्रिचत्वारिंशत्तमस्य शतकस्योत्तरार्धे तुरुष्कमुसल्मानेन मोहमदगोरिणा भारतवर्षप्रमुखशक्तिस्थाने दिल्लीप्रदेशे स्वाधीने कृते च सति, वैदिकचातुर्वर्ण्यसमाजे प्रायेण विशृङ्खलतां गते कोलाहलपूर्णे च जाते, वैदिकेऽध्ययने धर्माचरणे चातीव शिथिले, प्रायेण श्रौतधर्मानधिकारिणं राजानं सामन्तं वा समाश्रिता विज्ञानेश्वर-गोविन्दराज-लक्ष्मीधर-श्रीधर-हेमाद्रि-कुल्लूकभट्ट-चण्डेश्वर-माधव-श्रीदत्त-शूलपाणि-रुद्रधर-रघुनन्दन-नन्द-पण्डित-कमलाकरभट्ट-नीलकण्ठ-मित्रमिश्र-काशीनाथोपाध्यायादयो धर्मशास्त्र-व्याख्याकार-निबन्धकारा अपि तत्तद्वेदशाखासूत्रविहितानामपि स्नान-सन्ध्योपासन-तर्पण-

१. कर्मप्रदीपः (छन्दोगपरिशिष्टापरनामधेयः), एसियाटिक सोसाइटी, बङ्गाल, १९०९ सन्, पृ. ५२।

पञ्चमहायज्ञ(बलिवैश्वदेव)गर्भाधानादिसंस्कारान्त्येष्ट्याशौचपालन-श्राद्धादिकर्मणामपि प्रतिपादने वैदिकधर्मप्रमुखस्थानभूतान् मन्त्रसंहिता-ब्राह्मण-श्रौतसूत्र-गृह्यसूत्र-धर्मसूत्र-श्रौतगृह्यपरिशिष्टादिग्रन्थानुपेक्ष्य अनुस्मृति-पुराणोपपुराणादिग्रन्थानेव विशेषतोऽनुगम्य प्रवृत्ताः सन्तोऽपि स्वस्य निबन्धग्रन्थस्य सर्वेषामेव वेदशाखा-विशेषाध्यायिकुलजत्वेन ज्ञायमानानां जनानां समादरणीयत्वं साधयितुमिच्छन्तश्च अनेकवेदशाखोक्त-स्मार्त-पौराण-विधिमिश्रप्रयोगपरतया तेषां कर्मणां प्रतिपादने ग्रन्थविस्तरमुपयोजयन्तः स्वकीयान् महाकायान् ग्रन्थान् प्रदर्शयन्तः समाजे प्रभावशालिनो लब्धप्रचाराश्चाऽभूवन्निति तदनुसरणपरायणा हरिहर-गदाधर-विश्वनाथ-रामकृष्णादयो गृह्यसूत्रादिव्याख्याकाराः कर्मकाण्डबाह्यस्वरूपविस्तारेण स्वमाहात्म्यं प्रदर्शयितुं वाञ्छन्तोऽन्ये च कर्मकाण्डपद्धतिकारा आह्निकाचारपद्धतिकाराश्च स्वस्वगृह्योक्तस्नान-सन्ध्योपासन-स्वाध्यायाध्ययन-तर्पण-श्राद्धादिविधीनां च शाखान्तरगृह्योक्तस्मृत्यन्तरोक्त-पुराणोक्तविधिभिः समुच्चयं प्रदर्शयितुं संलग्नाः प्रतीयन्ते।

तत्रोदाहरणरूपेण कात्यायनत्रिकण्डिकस्नानसूत्रस्थसन्ध्योपासनकण्डिका-व्याख्यानावसरे अग्निहोत्रिहरिहरमिश्रेण प्रदर्शितः सन्ध्योपासनप्रयोगः समालोच्यते।

तत्र भगवता कात्यायनेन प्रणीतं सन्ध्योपासनविधिसूत्रं तावत्—

'त्रिरायम्यासून् पुष्पाण्यम्बुमिश्राण्यूर्ध्वं क्षिप्त्वोर्ध्वबाहुः सूर्यमुदीक्षन्नुदुद्वयमुदु-त्यञ्-चित्रन्-तच्चक्षुरिति गायत्र्या च यथाशक्ति विभ्राडित्यनुवाकपुरुषसूक्तशिव-सङ्कल्पमण्डलब्राह्मणैरित्युपस्थाय प्रदक्षिणीकृत्य नमस्कृत्योपविशेत्''[१] इति।

उक्तकातीयसन्ध्योपासनसूत्रव्याख्यायामग्निहोत्रिहरिहरेणोक्तम्—

''एवं त्रिरायम्यासूनित्यारभ्योपविशेदित्यन्तेन सूत्रसन्दर्भेण कात्यायनाचार्येण सन्ध्योपासनमुक्तं तत् काण्वमाध्यन्दिनानां स्वगृह्योक्तत्वात् शास्त्रानुष्ठानसिद्धिकरम्। यत् पुनः शाखान्तराधिकरणन्यायेनेदमेव कल्पतरुकारप्रभृतिभिर्निबन्धकारैराह्निक-पद्धतिकारैश्च स्मृत्यन्तरोक्तसन्ध्योपासनविधिसमुच्चितं लिखितं तत् सर्वशाखाध्येतृ-साधारणत्वात् सर्वशाखिनामनुष्ठातुमुचितम्''[२] इति।

कात्यायनोक्तसन्ध्योपासनविधौ कृत्यकल्पतरुकारादिगतानुगतिकतया स्मृत्यन्तरविहितपदार्थानां समुच्चयं प्रदर्शयता अग्निहोत्रिहरिहरमिश्रेण सन्ध्योपासन-

---

१. पारस्करगृह्यसूत्रम्, भाष्यपञ्चकसमलङ्कृतम्, मुन्सीराम मनोहरलाल पब्लिसर्स, दिल्ली, १९८२ सन्, ४१५।

२. तत्रैव, पृ. ४१५-४१६।

प्रयोगे प्राणायाम-प्रतिज्ञा-सन्ध्याऽऽवाहनाऽऽचमन-शिरोभिषेक-द्विविधजलोत्सर्गाऽम्बुमिश्रपुष्पप्रक्षेप-सूर्योपस्थान-गायत्र्युपस्थान-गायत्रीजप-सूर्योपस्थान-प्रदक्षिणीकरण-नमस्कारान् पदार्थान् प्रदर्श्य[1] तदन्ते चोक्तम्—

"इति स्मृत्यन्तरोक्तसमुच्चयेन कात्यायनसूत्रविहितं मध्याह्नसन्ध्योपासनम्। केवलकात्यायनसूत्रविहितं तु प्राणायामाञ्जलिप्रक्षेपादित्योपस्थानं त्रिकण्डिकसूत्रमात्रानुसारिणां शास्त्रार्थानुष्ठानमात्रकरम्, बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्त्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेदिति स्मृतेः"[2] इति।

एवं च समुच्चयवादिना हरिहरमिश्रेण सूत्रकारकात्यायनोक्तयोः प्राणायामाऽम्बुमिश्रपुष्पप्रक्षेपयोर्मध्ये प्रतिज्ञा-सन्ध्याऽऽवाहनाऽऽचमन-शिरोभिषेक-द्विविधजलोत्सर्गाः प्रक्षिप्ताः, सूत्रकारकात्यायनोक्तं सूर्योपस्थानरूपमेकं पदार्थं भित्त्वा तन्मध्ये गायत्र्युपस्थान-गायत्रीजपौ द्वौ पदार्थौ प्रक्षिप्तौ, सूर्योपस्थाने सूत्रकारविहितो बृहद्योगियाज्ञवल्क्यस्मृतौ[3] लघुव्याससंहितायां[4] च दृश्यमानोऽपि गायत्र्याः प्रयोगो निरस्तः, सूत्रकारेणार्भकप्राणायामपक्षमाश्रितवताऽनुक्तः स्वशाखायामनधीतः शाखान्तरस्थः प्राणायाममन्त्रः, स्वशाखासम्बद्धशालिहोत्रशाखानुगतकौथुमशाखाग्रन्थरूपषड्विंशब्राह्मणविधिमनुसरतेव सूत्रकारेण भगवता कात्यायनेनाऽनुपदिष्टोऽम्बुमिश्रपुष्पप्रक्षेपणमन्त्रश्च प्रयुक्तौ, प्रयोगमध्यगे आचमने च सूत्रकारानुपदिष्टे, मन्त्रा अपि स्वशाखायामनधीताः कृष्णयजुर्वेदशाखास्था उपात्ताः, ऋतञ्च सत्यञ्चेत्यादिक आदित्यब्रह्मसम्प्रदायानुगयाज्ञवल्क्यसम्प्रदायानुसारिभिर्वाजसनेयिभिरप्रयोज्यत्वेन मन्त्रार्थदीपिकायां[5] शत्रुघ्नमिश्रेण प्रतिपादितः स्वशाखायामनधीतः शाखान्तरस्थो मन्त्रश्च सन्ध्योपासनप्रयोगे परशाखाप्रत्ययेन हठादानीत इति तदुक्तोऽनाकाङ्क्षितशाखान्तरविधि-स्मृत्यन्तरविधिसमुच्चययुतः सन्ध्योपासनप्रयोगः पूर्वोपदर्शितवैदिकशास्त्रशिष्टवचनव्यवस्थाविरुद्धः, स्वसूत्रकारोक्तसन्ध्योपासनपदार्थक्रमभङ्गात् स्वसूत्रकारोपदिष्टसन्ध्योपासनकर्मनिष्पत्त्यभावप्रसङ्गाच्च स्वसूत्रकारोपदिष्टसन्ध्योपासनविधानस्याऽतीव प्रतिकूल इति काण्वमाध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदशाखाध्यायिनां कृते तु सर्वथा हेय एव प्रतीयते।

---

१. पारस्करगृह्यसूत्रम्, भाष्यपञ्चकसमलङ्कृतम्, पृ. ४१६-४१७।

२. तत्रैव, पृ. ४१७।

३. "गायत्र्या तु यथाशक्ति चोपस्थाय दिवाकरम्" इति स्फुटमुक्तं तत्र ७।५३ (स्मृतिसन्दर्भे, पृ. २२८८)।

४. "हंसः शुचिषदित्येतत् सावित्र्या च विशेषतः" इत्युक्तं तत्र २।२७ (स्मृतिसन्दर्भे, पृ. १६२४)।

५. मन्त्रार्थदीपिका, चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, २०२४ वै., पृ. १६।

एतेन हरिहरमिश्रानुयायिनेव आचारादर्शकारेण श्रीदत्तोपाध्यायेन, पारस्करगृह्यसूत्रव्याख्याकारेण विश्वनाथेन, संस्कारगणपतिकारेण रामकृष्णेन, धर्मसिन्धुकारेण काशीनाथोपाध्यायेन, आह्निकसूत्रावलिकारेण वैद्यनारायणशर्मणा, गीताप्रेसमुद्रितसन्ध्योपासनविधिकारेण वेदाचार्येण विद्याधरगौडेन, वाजसनेयि-सन्ध्योपासनपद्धतिकारेण उग्रानन्दझामहोदयेन, नित्यकर्मपूजाप्रकाशकारेण रामभवनमिश्रेण, शुक्लयजुश्शाखीयकर्मकाण्डप्रदीपकारेण अण्णाशास्त्रिणा तदनुसारिभिरन्यैश्च प्रदर्शिताः शिक्षिताश्च सन्ध्योपासनप्रयोगा व्याख्याताः।

एतद्विषयेऽस्मत्पूर्ववर्तिभिर्महद्भिः पण्डितैर्महामहोपाध्यायैर्विद्वच्छिरोमणिभिः पण्डितराजै राजगुरुभिर्विविधशास्त्रनिष्णातैश्च जनैरपि समुचितो विचारः कृतो नोपलभ्यते। पण्डितश्यामनारायणचतुर्वेदमहोदयेन सन्ध्याभाष्ये एतस्यां दिशि स्वल्पो विचारः कृतो दृश्यते। तद्ग्रन्थभूमिकायां पण्डितहरिहरकृपालुमहाशयेन चोक्तम्—

"इदानीं दैवदुर्विपाकोदयादस्मद्देशे मनीषिणोऽपि स्वस्वशाखाविहितं सन्ध्योपासनमेवाऽनुष्ठेयमित्यजानानाः सुखोपलब्धमयाजुषमपि याजुषं सन्ध्योपासन-मनुतिष्ठन्तः कृतकृत्यतां मन्यन्तेऽत एव का मदीया शाखा तत्र सन्ध्योपासनादि-नित्यं कर्म कीदृशं विहितं कथमवाप्तं भवेत् तदेवाऽनुष्ठेयमित्यादिविमर्शायाप्यु-दासते। अधीतवेदानां विपश्चितामियं दयनीया दशा का कथा शास्त्रान्तरं विदुषां तत्परिष्कारपरिष्कृतधिषणानाम्"[१] इति।

भगवता कात्यायनेनोपदिष्टे सन्ध्योपासनस्वरूपे काऽपि न्यूनता, गृह्यान्तर-स्मृत्यन्तरविहितसन्ध्योपासनपदार्थविशेषाकाङ्क्षा च नैवाऽस्तीति तत्र गृह्यान्तर-स्मृत्यन्तरविहितसन्ध्योपासनपदार्थविशेषसमुच्चयस्य कोऽप्यवसरो नास्त्येव।

सन्ध्योपासने श्रुति-स्मृति-पुराणप्रतिपादितं मुख्यं कर्म च सन्ध्याकाले सूर्यं योधयतां मन्देहानां रक्षसां नाशनाय जलस्य सूर्यं प्रति प्रक्षेपणमेवास्ति। तथा हि षड्विंशब्राह्मणे—

"यदपः प्रयुङ्क्तो ता विप्रुषो वज्रीभवन्ति ता विप्रुषो वज्रीभूत्वाऽसुरान-पाघ्नन्ति"[२] इति।

---

१. सन्ध्याभाष्यम्, श्रीपण्डितश्यामनारायणचतुर्वेदविरचितम्, हितचिन्तक प्रेस, रामघाट, वाराणसी, १९९८ वै.।

२. षड्विंशब्राह्मणम्, केन्द्रीय-संस्कृत-विद्यापीठम्, तिरुपतिः, १९६७ सन्, ५।५।४।

तैत्तिरीयारण्यके च—

"तानि ह वा एतानि रक्षांसि गायत्रियाऽभिमन्त्रितेनाऽम्भसा शाम्यन्ति। तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्रियाऽभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति"[१]। इति।

बृहद्योगियाज्ञवल्क्यस्मृतौ च—

त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः।
प्रद्रवन्ति सहस्रांशुमुदयन्तं दिने दिने।।

अहन्यहनि ते सर्वे सूर्यमिच्छन्ति खादितुम्।
अथ सूर्यस्य तेषां च युद्धमासीत् सुदारुणम्।।

ततो देवगणाः सर्वे ऋषयश्च तपोधनाः।
सन्ध्येति समुपासीना यत् क्षिपन्ति महज्जलम्।।

ओङ्कारब्रह्मसंयुक्तं गायत्र्या चाऽभिमन्त्रितम्।
तेन दह्यन्ति ते दैत्या वज्रीभूतेन वारिणा।।

एतद्विदित्वा यो विप्र उपास्ते संशितव्रतः।
दीर्घमायुः स विन्देत सर्वपापैश्च मुच्यते[२]।। इति।

विष्णुपुराणे च—

सन्ध्याकाले तु सम्प्राप्ते रौद्रे परमदारुणे।
मन्देहा राक्षसा घोराः सूर्यमिच्छन्ति खादितुम्।।

प्रजापतिकृतः शापस्तेषां मैत्रेय रक्षसाम्।
अक्षयत्वं शरीराणां मरणं च दिने दिने।।

ततः सूर्यस्य तैर्युद्धं भवत्यत्यन्तदारुणम्।
ततो द्विजोत्तमास्तोयं यत् क्षिपन्ति महामुने।।

---

१. तैत्तिरीयारण्यकम्, प्रथमो भागः, आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम्, १९६७ सन्, २।२।१-२ (पृ. १४२)।

२. स्मृतिसन्दर्भः, चतुर्थो भागः, बृहद्योगियाज्ञवल्क्यस्मृतिः, ६।१२-१६.(पृ. २२८०-८१)।

ओङ्कारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम्।
तेन दह्यन्ति ते पापा वज्रभूतेन वारिणा[1]।। इति।

काशीखण्डे च—

विवस्वतः सहायार्थं यो द्विजो नाऽञ्जलित्रयम्।
क्षिपेन् मन्देहनाशाय सोऽपि मन्देहतां व्रजेत्[2]।। इति।

एवं च शालिहोत्रसामवेदशाखायाः परिग्राहकेण तत्रभवता भगवता कात्यायनेन सन्ध्याकाले ब्राह्मणस्य दक्षिणहस्तेनोर्ध्वं क्षिप्तं पुष्पसंसृष्टं जलमेव सूर्यं योधयितुं तत्पराणामसुराणां नाशनाय पर्याप्तमिति स्वीकृतमिति शालिहोत्रशाखानुगकौथुमशाखासामवेदषड्विंशब्राह्मणवाक्यादवसीयते। यद्यपि ब्रह्मसम्प्रदायागताऽऽश्वलायन-ऋग्वेदशाखाध्यायिनां गृह्यपरिशिष्टे आत्रेयतैत्तिरीयकृष्णयजुर्वेदशाखाध्यायिबौधायनधर्मसूत्रादिषु च सन्ध्योपासने मुख्यं कर्म गायत्रीजप इति स्वीक्रियत इत्यपि वदन्ति, तथापि कातीयैस्तु नैतत् स्वीक्रियते। सूर्यं प्रति अम्बुमिश्रपुष्प-प्रक्षेपणं तु भगवता कात्यायनेनोपदिष्टमेवास्ति। अतो नास्ति तदुपदेशे मुख्यकर्मन्यूनता।

गायत्रीजपस्तु कातीयैः सन्ध्योपासनकर्मणः सूर्योपस्थानस्य वा मध्ये नैव कर्तव्यः, सन्ध्योपासनकर्मणि समाप्ते पवित्रजपयज्ञरूपेण पृथगेव गायत्रीजपो यथौचिति सायम्प्रातः कर्तव्यः। एतस्य पक्षस्यानुकूलानि वचनानि च स्मृतिषु पुराणेषु च बहूनि दृश्यन्ते। तथा हि मनुस्मृतौ—

एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते।। इति।
आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः।
शुचौ देशे जपञ्जप्यमुपासीत यथाविधि[3]।। इति च।

---

१. विष्णुपुराणम्, नाग पब्लिसर्स, दिल्ली, १९८५, २।८।४९-५२।
२. काशीखण्डः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, २०४९ वै., ३५।१५४ (द्र. काशीखण्डः ९।४५; स्कन्दपुराण-ब्रह्मखण्डः २।५।९१)।
३. मनुस्मृतिः, निर्णयसागर प्रेस, मुम्बई, १९४६ सन्, २।७८, २।२२२।

याज्ञवल्क्यस्मृतौ—

वेदाथर्वपुराणानि सेतिहासानि शक्तितः।
जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत्[१]।। इति।

विष्णुधर्मसूत्रे—

स्नातश्च पवित्राणि यथाशक्ति जपेत्, विशेषतः सावित्रीम्, पुरुषसूक्तं च, नैताभ्यामधिकमस्ति[२]। इति।

शङ्खस्मृतौ—

ततो जपेत्पवित्राणि पवित्रं वाऽथ शक्तितः।
ऋषयो दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुयुः।।
सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम्।
येषां जपैश्च होमैश्च पूयन्ते मानवाः सदा[३]।। इति।

विश्वामित्रस्मृतौ—

प्रत्यहं प्रातरुत्थाय स्नानं सन्ध्यां समाप्य च।
यथाशक्ति जपेद्विद्वान् स मुक्तो नात्र संशयः[४]।। इति।

बृहद्योगियाज्ञवल्क्यस्मृतौ—

एतज्जपेदूर्ध्वबाहुः सूर्यमीक्षन् समाहितः।
गायत्र्या च यथाशक्ति चोपस्थाय दिवाकरम्।।
विभ्राडित्यनुवाकेन सूक्तेन पुरुषस्य तु।
शिवसङ्कल्पेन तथा मण्डलब्राह्मणेन तु।।
दिवाकीर्त्यैस्तथाऽन्यैश्च सौरैर्मन्त्रैश्च शक्तितः।
जपयज्ञोऽपि कर्तव्यः सर्ववेदप्रणीतकैः।।

---

१. याज्ञवल्क्यस्मृतिः, चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, १९६७ सन्, १।१०१।
२. विष्णुस्मृतिः, केशववैजयन्तीसंहिता, अड्यार, मद्रास, १९६४ सन्, ६४।३६-३९।
३. स्मृतीनां समुच्चयः, आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम्, १९२९ सन्, १०।२०,२१।
४. स्मृतिसन्दर्भः, मनसुखराय मोर, कलकत्ता, (पञ्चमो भागः), २०१२ वै., १।१६-१७ (पृ. २६४६)।

पवित्रैर्विविधैश्चान्यैर्गुह्योपनिषदा तथा।
अध्यात्मविद्या विविधा जप्तव्या जपसिद्धये[१]।। इति।

लघुव्याससमृतौ—

अथोपतिष्ठेताऽऽदित्यमूर्ध्वं पुष्पं जलान्वितम्।
प्रक्षिप्य देवमादित्यमृग्यजुःसामरूपिणम्।।
उदुत्त्यञ्चित्रमित्येतत् तच्चक्षुरिति मन्त्रतः।
हंसः शुचिषदित्येतत् सावित्र्या च विशेषतः।।
अन्यैश्च वैदिकैर्मन्त्रैः सर्वपापप्रणाशनैः।
सावित्रीं वै जपेत्पश्चाज्जपयज्ञः प्रकीर्तितः[२]।। इति।

बाधूलस्मृतौ—

यत्र सन्ध्यां प्रकुर्वीत तत्रैव जपमाचरेत्।
अन्यत्र तु जपं कुर्वन् पुनः सन्ध्यां समाचरेत्[३]।। इति।

स्कन्दपुराणे—

गायत्रीं तु जपेद् देवीं यः सन्ध्यानन्तरं द्विजः।
सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति[४]।। इति।

अन्यच्च—

ततः सन्ध्यामुपासीत स्वसूत्रोक्तेन वर्त्मना।
ततः कार्यो जपो देव्या यावदर्कोदयो भवेत्[५]।। इति।

स्मृतिचन्द्रिकायां नरसिंहपुराणवचनम्—

उपास्य पश्चिमां सन्ध्यां सादित्यां वै यथाविधि।
गायत्रीमभ्यसेत् तावद् यावदृक्षाणि पश्यति।।

---

१. स्मृतिसन्दर्भः (चतुर्थो भागः), ७।५३-५६ (पृ. २२८८)।
२. तत्रैव (तृतीयो भागः), लघुव्याससंहिता, २।२५-२८ (पृ. १६२४)।
३. तत्रैव (पञ्चमो भागः), श्लो. १२६-१२७ (पृ. २६३४-२६३५)।
४. स्कन्दपुराणम्, नाग पब्लिसर्स, दिल्ली, सन् १९८६, आवन्त्यखण्डः, ३।२००।१८।
५. तत्रैव, वैष्णवखण्डः, कार्त्तिकमासमाहात्म्यम्, ५।२०-२१।

पूर्वां सन्ध्यां सनक्षत्रामुपक्रम्य यथाविधि ।
गायत्रीमभ्यसेत् तावद् यावदादित्यदर्शनम्[१] ।। इति।

नरसिंहपुराणे—

जपयज्ञं ततः कुर्याद् गायत्रीं वेदमातरम्।
त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत[२] ।। इति।

एवञ्चोपर्युक्तां शास्त्रव्यवस्थां सम्यग् विचार्य किं विधिवाक्यमनुसृत्य कीदृशेनाऽधिकारिणा कस्मै फलाय कया सामग्र्या कस्मिन् देशे कस्मिन् काले केन पदार्थक्रमेण कया रीत्या सन्ध्योपासनादिकं कर्म कर्तव्यमिति पूर्वं शास्त्रवचनैर्निश्चयं कृत्वा शास्त्रमनुसृत्य धर्मकर्मणि कृते एव कर्ता तस्य कर्मणः पूर्णस्य फलस्य भोक्ता भवतीति ज्ञात्वा स्वशास्त्रोक्तरूपं सन्ध्योपासनादिकं विद्वद्भिः कर्तव्यम्। तदुक्तं धर्मतत्त्वज्ञैः—

पूर्वं निश्चित्य शास्त्रार्थं यथावत्कर्मकारकः ।
अवेदनिन्दको धीमानधिकारी व्रतादिषु[३] ।। इति।

एवमेवाऽन्यास्वपि स्नानतर्पणजातकर्मादिसंस्कारान्त्येष्टिश्राद्धादिगृह्यकर्मपद्धतिषु विचाराः प्रवर्तनीयाः। अन्याय्यः समुच्चयो निरसनीयः। कर्मकाण्डे कालापेक्षिता सरलता च यथाशास्त्रं वर्धनीया।

वैदिकपरम्परायामधीति-बोधाऽऽचरण-प्रचारणक्रमस्य मान्यत्वे प्राचीनकालात् प्रभृत्येव स्थितेऽपि[४] वेदादिशास्त्राध्ययनबोधयोरेवाऽर्वाचीने काले दौर्बल्याद् वैदिककर्मकाण्डप्रयोगाणां यथाशाखं व्यवस्थिततायाः सकलस्मृतिपुराणशिष्टादिसम्मतत्वेऽपि प्रयोगे महतामपि पण्डितानां मोहस्य प्रमादस्य च दर्शनात्, तस्य

---

१. स्मृतिचन्द्रिका (प्रथमो भागः), नाग प्रकाशक, दिल्ली, १९८८, पृ. ३५३।
२. श्रीनरसिंहपुराणम्, नाग पब्लिसर्स, दिल्ली, १९८७, ५८।७७।
३. चतुर्वर्गचिन्तामणिः, हेमाद्रिविरचितः, व्रतखण्डः, चौखम्भा-संस्कृत-संस्थानम्, वाराणसी, १९८५ सन्, पृ. ३२५।
४. (क) चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवत्यागमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति। —पाणिनीयव्याकरणभाष्यम्, प्रथमाह्निकम् (व्याकरणमहाभाष्यम्, कीलहोर्न्, पूना, १९६२ सन्, पृ. ५-६)।
(ख) अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः।
चतुर्दशत्वं कृतवान् कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम्।।
(नैषधीयचरितम्-१।४)

मोहस्य प्रमादस्य च बहोः कालात् पूर्वत एवाऽनुवृत्तत्वस्य चाऽवगम्यमानत्वाच्च आस्तिकानां वैदिकानां विदुषां विचारस्य प्रवर्तनाय प्रचलितकर्मकाण्डस्य यथार्हं संशोधनस्यावश्यकताया बोधनाय च "वादे वादे जायते तत्त्वबोधः" इति न्यायमवलम्ब्य उपस्थापितोऽयं निबन्धो निर्मत्सरैः सद्भिर्वेदवेदाङ्गोपाङ्गस्मृति-पुराणकुशलैः शास्त्ररसिकैर्वैचक्षण्यचणैरास्तिकैर्विद्वद्भिः सम्यक् परीक्ष्याऽऽ-कलनीयः, अत्राऽस्माकं विवेचने काऽपि त्रुटिर्दृश्यते तर्हि परया कृपयाऽस्मदीया मतिः शास्त्रयुक्तिप्रदर्शनेन परिशोधनीया चेति शम्।

●

# वैदिकवाङ्मये वाक्तत्त्वविमर्शः

**डॉ. कपिलदेवपाण्डेयः**
अध्यक्षचरः, संस्कृतविभागस्य
आर्यमहिलामहाविद्यालये
वाराणसी

❀ ❀ ❀

तैत्तिरीयब्राह्मणं व्याचक्षाणेन आचार्यसायणेनोक्तम्—'यद्धि मनसा ध्यायति, तद् वाचा वदति, तत्कर्मणा करोति'। अनेन सुतरां सिध्यति यज्ज्ञेयरूपस्य बाह्यजगतः, ज्ञानरूपस्य वाग्जगतः, ज्ञातृरूपस्य अन्तर्मनोजगतश्च त्रिकं वृत्तं नित्यं गतिमत् सन् मिथः सङ्क्रान्तं भवति। बाह्यं स्थूलं जगद् वाग्जगतो माध्यमेन आन्तरं मानसं जगत् प्रविशति, आन्तरं मानसं जगच्च वाग्जगन्माध्यमेन बाह्यं स्थूलं जगत् प्रकाशयति। बाह्यस्य कर्मजगतो व्याख्यानं ब्राह्मण-पुराण-स्मृति-कल्पादिभिर्ग्रन्थैः, वाग्जगतो व्याख्यानं शिक्षा-प्रातिशाख्य-निरुक्त-व्याकरण-च्छन्दः-प्रभृतिभिर्ग्रन्थैः, आन्तरजगतो व्याख्यानं चोपनिषदारण्यक-षड्दर्शनादिग्रन्थैः सविशेषं कृतमस्ति। इमान्येव कर्मज्ञानोपासनाशब्दैर्व्यवह्रियन्ते। आधुनिकैरेतानि क्रमशः पदार्थविज्ञानम्, भाषाविज्ञानम्, आत्मविज्ञानं चाभिधीयन्ते। अत्र भूयसा व्यपदेश इति नियमोऽपि समाश्रितो मन्तव्यः। एतेषां सर्वेषां विज्ञानानां मूलं स्रोतो वेदा एवेति सम्यगालोचनेन समास्थीयते।

वैदिकवाङ्मये सर्वत्र संहिताब्राह्मणारण्यकोपनिषद्भागेषु उत च शिक्षाकल्पादिषु वेदाङ्गेषु न्यूनाधिकरूपेण त्रयाणामुपर्युक्तानां विज्ञानानां विमर्शो विहितोऽस्ति। यद्यपि संहितादिचतुर्भागविभक्तायाः श्रुतेर्मुख्यं प्रतिपाद्यं परं ब्रह्मास्ति, तथापि ब्रह्मस्वरूपाया वाचोऽपि ध्वनि-निर्वचन-पद-वाक्य-तदर्थेषु क्वचित् प्रामुख्येन साक्षात् क्वचिच्च नान्तरीयकतया प्रतिपादनं कृतं विद्यते। अत एव वाग्ब्रह्मेति संज्ञया तदुल्लेखो बहुत्रोपलभ्यते। यदि पदार्थविज्ञानं कोषपञ्चके अन्नमयं कोषं विवृणोति, आत्मविज्ञानं चानन्दमयं कोषम्, तर्हि वाग्विज्ञानं प्राणमयं मनोमयं विज्ञानमयं चेति अवशिष्टं कोषत्रयं स्वस्मिन् समावेश्य विमृशति। वागियं

वैदिकसाहित्ये क्वचित्प्राणरूपेण, क्वचिन्मनोरूपेण क्वचिच्च बुद्धिरूपेण संज्ञाताऽस्ति। वस्तुतो वाच उत्पत्तिप्रसङ्गे एषां त्रयाणां क्रमिकसम्बन्धो वाग्विद्भिरुदीर्यते—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्।।

प्राणमनोबुद्धिप्रसूतमान्तरं ज्ञानं सूक्ष्मवाग्रूपेण स्थितं सत् स्वरूपस्याभि-व्यक्तये शब्दरूपतां याति। यथोक्तं वाक्यपदीये—

अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम्।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते।।

शब्दश्चार्थरूपेण विवर्तते—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।

अर्थोऽपि स्थूलविश्वरूपेण विवर्तमानो भवति—

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथमं विश्वमेतद् व्यवर्तत।।

अर्थात् सृष्टेर्विकासो वाग्ब्रह्मरूपबीजादेवाभवत्। अत्र श्रुतिरपि प्रमाणम्—'एकोऽहं बहु स्याम्' इति।

वाक्तत्त्वाधिगमेन उभयं सिध्यति—इहलोकः, परलोकश्च। भगवता पतञ्जलिना महाभाष्यस्य पस्पशाह्निके शब्दज्ञानस्य महत्त्वं विवेचयता स्फुटमुक्तं यत्—'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति'। शब्दस्य सम्यग् ज्ञानं वाक्तत्त्वं विना अर्थज्ञानं च विना असम्भवि। ब्रह्मबिन्दूपनिषत् परब्रह्माधिगमेऽपि शब्दब्रह्मज्ञानस्य हेतुतां मनुते—

द्वे विद्ये वेदितव्ये तु शब्दब्रह्म परं च तत्।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।

ऋग्वेदे बहूनि सूक्तानि अनेके मन्त्राश्च वाक्तत्त्वविषयकाणि सन्ति। संहितासु, ब्राह्मणग्रन्थेषु, आरण्यकेषु, उपनिषत्सु च प्रतिशाखं वाक्तत्त्वरूपस्य

शब्दब्रह्मणः चर्चा सङ्केतो वा वर्तत एव, षट्सु वेदाङ्गेषु शिक्षा-निरुक्त-व्याकरण-च्छन्दस्सु चतुर्षु वेदाङ्गेषु शब्दब्रह्मण एव विवेचनं विविधं कृतं वर्तते। ऋग्वेदकालादारभ्य अद्य यावद् भारतीयैर्मनीषिभिर्वाग्ब्रह्मणो मननं क्रियमाणमस्ति। दर्शनग्रन्थेष्वपि शब्दखण्डं विशेषं महत्त्वं भजते। अन्येषु परवर्तिषु ग्रन्थेषु यथास्थानं शब्दानां विशिष्टा निरुक्तयो निर्दिष्टाः सन्ति।

यत्र तत्र वाक्तत्त्वज्ञानस्यावश्यकत्वविषयेऽप्युल्लेखो वरीवर्ति। ताण्ड्यमहाब्राह्मणस्य प्रथमाध्याये त्रयोदशे खण्डे आख्यायिकैका वर्तते, यदनुसारेण असुरैः सह सङ्ग्रामे देवानां विजयो वाचो नैपुण्येनाभवत्। एतद्विषये महाभाष्योद्धरणद्वयं निदर्शनकोटिमाटीकते—'तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः' इति। 'दुष्टः शब्दः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्'।। इति च। इन्द्रशत्रुर्वृत्र उच्चारणे स्वरवैगुण्यमात्राद् विनाशमगात्। अतो भारतीयसंस्कृतौ वाचः शुद्धिविषये महान् संरम्भः कृतो विद्यते। न केवलं कर्मगतं वैगुण्यं चिन्तनगतं वैगुण्यं वा हानिकरम्, अपि तु वाग्गतं वैगुण्यमपि हानये एव कल्पते। अत एव षडङ्गसहितानां वेदानां तत्रापि व्याकरणस्याध्ययनं वाग्वैभवसम्भृतानां ब्राह्मणानां कृते धर्मत्वेनाभ्युपगतमस्ति—

'ब्राह्मणेन निष्कारणं धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च। प्रधानं च षट्सु अङ्गेषु व्याकरणम्'। इति।

रामायणकालेऽपि वाक्तत्त्वज्ञानविषये महान् आग्रह आसीत्। भगवान् रामो हनुमता सह साक्षात्कारे तद्व्याहृतां वाचं श्रुत्वा तं प्रशंसितवान्—

'नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहु व्याहरतानेन न किञ्चिदपभाषितम्'।।

छान्दोग्योपनिषच्छ्रुतिरपि वाचो महत्त्वविषये व्याहरति—'यद् वै वाङ् नाभविष्यत्, न धर्मो नाधर्मो व्यज्ञापयिष्यत्, न सत्यं नानृतं, न साधु नासाधु। वागेवैतत् सर्वं विज्ञापयति वाचमुपास्स्व'।

वस्तुतो वाक्तत्त्वे सत्येव समाजे धर्माधर्मयोः, सत्यानृतयोः, साध्वसाध्वोर्व्यवस्थास्ति। तदभावे निश्चयेन समाजस्य महती विनष्टिः। तदुपनिषदनुसारेणैव—'पुरुषस्य वाग्रसः, वाचः ऋग् रसः, ऋचः साम रसः, साम्नः उद्गीथो रसः, ओमित्येकाक्षरम् उद्गीथम् उपासीत'। बृहदारण्यकोपनिषद् व्याहरति—'वाग् वै सम्राट् परमं ब्रह्म'। एवमेव बहुषु ब्राह्मणग्रन्थेषु उपनिषद्ग्रन्थेषु

च वाक्तत्त्वं परब्रह्मरूपेण वर्णितमस्ति। एक ऋङ्मन्त्रस्तु वाक्तत्त्वमेव सर्वेषां भुवनानां जनकं सर्वमयं च वर्णयति—

'वागेव विश्वा भुवनानि जज्ञे, वाच इत् सर्वममृतं यच्च मर्त्यम्'। अतो वागेव अक्षरः प्रणवो नित्यं नवीनः प्रतिक्षणं परिवर्तमानं विश्वम्, सृष्टिस्थिति-संहारहेतवो ब्रह्माच्युतशङ्करास्तामेव वन्दन्ते। भारतीयो वाक्तत्त्वविमर्शो न केवलं सत्यान्वेषणपरः, अपि तु चिदानन्दपर्यवसायी चास्ति।

यद्यपि ऋग्वेदे वाचस्त्रीणि रूपाणि चर्चितानि सन्ति— अस्पष्टा, अर्द्धस्पष्टा, सुस्पष्टा चेति; किन्तु शतपथब्राह्मणे वाचः सोपानचतुष्टयं वर्णितमस्ति—सरीसृपी, वयसां = पक्षिणां, पशूनां, मनुष्याणां च। ताण्ड्यमहाब्राह्मणे तु वनस्पतीनामपि वाग् उल्लिखितास्ति—'या वनस्पतिषु वाक् तामेव तज्जयन्ति'। वागेव देवानामनीकरूपेणावर्तत, तयैव तेऽसुरान् पराजितवन्तः। वाचि महती शक्तिर्वर्तते।

इमां वाचं कोऽप्यज्ञः पश्यन्नपि न पश्यति, शृण्वन्नपि न शृणोति। वाचा सर्वं व्यवहारजातमनुतिष्ठन्नपि तद्रहस्याधिगमेऽसौ अक्षमो भवति। अन्यस्मै वाग्विदे तु वाक् स्वकीयां तनुं विवृणोति यथा पतिं कामयमाना सुवासाः जाया तस्मै आत्मानं विवृत्य समर्पयति।

यथा पूर्वमुक्तम् ऋग्वेदेऽनेकानि पूर्णानि सूक्तानि वाग्विषयकाणि सन्ति, येषु इडा-सरस्वती-ज्ञान-भारती-मही-वाक्-बृहस्पतिप्रभृतीनां विषये किमपि तथ्यं संवर्ण्य वाक्तत्त्वस्य कोऽपि पक्षो विवृतो विद्यते। एषु सरस्वतीसूक्तं, बृहस्पतिसूक्तं, ज्ञानसूक्तं, वागाम्भृणीसूक्तं चैतद्विषये विशेषतो महत्त्वपूर्णानि सन्ति। प्रो. सेस-(Sayce)महोदयेन Science of Language नामके स्वीये ग्रन्थे वागाम्भृणीसूक्तस्य भाषावैज्ञानिकं महत्त्वं स्फुटतया स्वीकृतम्। अस्य सूक्तस्य ऋषिः वागाम्भृणी देवता च वागस्ति। अत्र वाग् विश्वरूपदर्शनं कारयन्तीव वर्तते।

अत्र भारतीयमनीषिभिः 'चत्वारि वाक्परिमिता पदानि,......गुहा त्रीणि निहिता नेङ्गयन्ति, तुरीयं वाचो मनुष्या वदन्ति' ऋचं व्याचक्षाणैर्वाचश्चत्वारः प्रकारा वर्णिताः सन्ति— परा, पश्यन्ती, मध्यमा, वैखरी च। वाचः सूक्ष्मतमं रूपं मूलचक्राद् उद्भवद् अस्पष्टं भवति। तदेव परा इत्युच्यते। ततो नाभिस्थानस्था सती अर्द्धस्पष्टा सूक्ष्मतरा पश्यन्ती इत्युच्यते। तत उपरि उत्थाय हृद्देशं प्राप्ता वाग् मध्यमेति व्यपदिश्यते। अत्र सा स्पष्टतरा जायते। ततश्च प्राणवायोः संसर्गेण कण्ठदेशं प्राप्य पूर्णस्पष्टा स्थूला च जायते। इयमेव वैखरी वाग् यां मनुष्या वदन्ति। यथा चोक्तं मञ्जूषायां स्फोटविचारप्रसङ्गे—

परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा।।

क्षितीशचन्द्रचैटर्जीमहाभागाः Technical terms of Sanskrit Grammar इति स्वग्रन्थस्य भूमिकायामिमां व्याख्यां परवर्तिनीं मत्वा न स्वीकुर्वन्ति। ते तु शतपथब्राह्मणोक्तां मनुष्य-पशु-पक्षि-सरीसृपानां वाचां स्तरचतुष्टयं सङ्केतयन्ति। व्याख्याभेदे मम कोऽपि आग्रहो नास्ति। उभयत्र वैदिकत्वमित्येवात्राभिप्रेतम्। चतुर्थी वैखरीवागेव मनुष्यव्यवहारविषया। अन्यासां तिसृणां वाचां ज्ञानन्तु योगिभिर्मनुष्यमूर्द्धन्यैर्मनीषिभिः साध्यम्। ऐतरेयब्राह्मणानुसारेण 'तं मध्यमया वाचा शंसति, आत्मानमेव तत् संस्कुरुते'। मध्यमा वाग् हृदयस्थचिन्तनरूपा विचारात्मिकाऽस्ति।

'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश'।।

इति ऋङ्मन्त्रे मनुष्यव्यवहृताया वैखरीवाचो विभिन्ना विषया सङ्केतिताः सन्ति। चत्वारि शृङ्गाणि— नामाख्यातोपसर्गनिपातरूपः पदविभागः, त्रयः पादाः— भूत-भविष्यद्वर्तमानरूपः कालभेदः, द्वे शीर्षे—नित्यकार्यरूपः शब्दस्वरूपभेदः, सप्त हस्तासः— सप्त विभक्तयः। त्रिधा बद्धः— उरसि, कण्ठे, मूर्ध्नि च। एतैः सर्वैः पदविज्ञानविषयाः सिध्यन्ति।

वेदेषु यत्र तत्र निर्वचनान्यपि उपलभ्यन्ते, यानि शब्दव्युत्पत्तिविषये सहायकानि भवन्ति। युधिष्ठिरमीमांसकमहोदयेन शब्दनिर्वचनोपयोगिनः केचन मन्त्रा उदाहृताः सन्ति। यथा—

यज्ञेन यज्ञमयजन्त देवाः— यज्ञशब्दः यज्धातोः निष्पन्नः।
ये सहां सि सहसा सहन्ते— सहस्शब्दः सह्धातोः निष्पन्नः।
पूर्वीरश्नन् तावश्विना— अश्विन्शब्दः अश्धातोः निष्पन्नः।
स्तोतृभ्यो महते मघम्— मघशब्दः मह्धातोः निष्पन्नः।
धान्यमसि धिनुहि देवान्— धान्यशब्दः धिन्व्धातोः निष्पन्नः।
केतपूः केतं नः पुनातु— केतपूशब्दः केत+पूधातोः निष्पन्नः।
येन देवाः पवित्रेणात्मानं पुनते सदा— पवित्रशब्दः पूधातोः निष्पन्नः।
तीर्थैस्तरन्ति— तीर्थशब्दः तृधातोः निष्पन्नः।

एवमेव 'नदी'शब्दः 'नद्'धातोः, 'अप्'शब्दः 'आप्'धातोः निष्पन्नः। आनुषङ्गिकरूपेण वैदिकमन्त्रैः शब्दानां व्युत्पत्तिः प्रदर्शितास्ति। पण्डितरामाज्ञापाण्डेयसदृशा विद्वांसः ७.८७.४ संख्याके ऋङ्मन्त्रे पदेषु वर्णविभागं पश्यन्ति।

वैदिकमन्त्राणां श्रौती मौखिकी वा परम्परा सर्वविदिता। मानवसुलभविस्मृत्या, रुचीनां पार्थक्येन देशभेदेन च मन्त्रेषु तदानुपूर्वीषु च पाठभेदो न जायेत इत्याशङ्क्य महत्सु पदपाठ-क्रमपाठ-घनपाठादिषु प्रयत्नेषु कृतेष्वपि शाखाभेदस्तु जात एव। किन्तु मन्त्राः प्रत्यक्षरं शुद्धाकारेणानुवर्तेरन् इत्यस्य महान् प्रयत्नो व्यधायि वेदविद्भिः ऋषिभिः। अन्यथा रामायण-महाभारत-पुराणस्मृति- ग्रन्थेष्विव वेदमन्त्रेष्वपि पाठभेदाः प्रक्षेपाश्च सञ्जायेरन्। वाग्विषयाया जागरूकताया एव सुफलमिदं यदनादिकालादनुवर्तमाना वेदमन्त्राः प्रत्यक्षरं यथापूर्वमद्यापि उपलभ्यमानाः सन्ति।

अर्थविज्ञान (Semantics) महत्त्वविषयका अपि मन्त्राः ऋग्वेदे समुपलभ्यन्ते। शब्दज्ञानं ततश्चार्थबोधः, तदनुसारेण कर्मानुष्ठानं स्वजीवने आचरणं वा, इत्येष क्रमः। वाचः पूर्वं रूपं मनः, उत्तरं रूपं कर्म। 'मनसो रेतः वाक्, वाचो रेतः कर्म। अर्थज्ञानं वाचः पुष्पं, कर्म च तत्फलम्। अतो यदि मन्त्रज्ञानम्, अर्थज्ञानरहितमस्ति, तर्हि अफलम्— 'वाचं शुश्रुवान् अफलामपुष्पाम्'।

वैदिकमन्त्राणां पदविच्छेदः, सन्धिविच्छेदः, पदपाठः, अन्ये चोपायाः शब्दज्ञानशब्दोच्चारणफलकाः। तेषां मन्त्राणां विनियोगपूर्वकं व्याख्यानं तु ब्राह्मणग्रन्थेषु कृतमस्ति। उभावपि प्रयत्नौ परस्परमुपकारकौ। पदपाठेन व्याख्यायां सौकर्यं भवति, व्याख्यया पदपाठः सम्यक्तया क्रियते। पदपाठेन सन्धिसमासकृतपदरूपपरिवर्तनं निरस्य पदस्य शुद्धं रूपं प्रस्तूयते। पदपाठकृता स्वरज्ञेन मात्राज्ञेन चावश्यं भाव्यम्। ब्राह्मणग्रन्थेषु मन्त्रार्थव्याख्यानसन्दर्भे पदेषु प्रकृतिप्रत्यययोर्विभागविषयकं ज्ञानमपेक्षितं भवति। अतो वाक्तत्त्वविमर्शसंरम्भे मन्त्रा वाक्येषु विभक्ताः, वाक्यानि पदेषु, पदानि च प्रकृतिप्रत्ययेषु विभक्तानि। अस्मिन् विभाजने वर्णज्ञानम्, वर्णोच्चाणम्, उच्चारणस्थानानि च विवेचितानि सन्ति। ततश्च अर्थविज्ञानं वाग्विषये शीर्षण्यतां प्राप्तम्। यतो हि 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्'। यस्य ज्ञानं शब्दमात्रकमर्थरहितं स स्थाणुरिवास्ति। अतो मन्त्राणां शब्दज्ञानेन सहार्थज्ञानमपि परमापेक्षितम्। अद्य एवंविधा वाग्विश्लेषणगभीरता भाषाविज्ञाने नोपलभ्यते। भाषाविज्ञानस्य एकैकस्मै

पक्षाय पृथक् पृथग् एकं वेदाङ्गं रचितमस्ति। वर्णानां तदुच्चारणानां च शिक्षणाय शिक्षावेदङ्गम्, पदानां निर्वचनात्मकाध्ययनाय निरुक्तम्, वाक्यानाम् अध्ययनाय व्याकरणम्। वाक्यमपि द्विविधं भवति— गद्यात्मकं पद्यात्मकञ्च। पद्याकारानुशासनार्थं छन्दोनामकं वेदाङ्गमस्ति। एतेषां वेदवाक्यानां कर्मानुष्ठानेष्वन्वयनाय कल्पो वेदाङ्गमस्ति। संहितापाठ-पदपाठसन्दर्भे ध्वनिविज्ञानं चरमं विकासं प्राप्तवानिति श्रोत्रिया वेदपाठिनः सुतरां जानन्ति।

ब्राह्मणग्रन्थेषु केचन मन्त्रा एवं व्याख्याताः, यथा वाग्ब्रह्मणः कश्चिद् महत्त्वपूर्णः पक्षः साक्षात् परम्परया वा प्रतिपादितो भवति। यथा तैत्तिरीय-ब्राह्मणे—

'वाचं देवा उपजीवन्ति, वाचं गन्धर्वाः पशवो मनुष्याः।
वाचीमा विश्वा भुवनान्यर्पिता...............'।।

सम्पूर्णस्य जीवजातस्य कार्यनिर्वाहो वाचा एव भवति। पश्यन्तु आधुनिका भाषातत्त्वविदो वैदिकवाक्तत्त्वस्य सार्वभौमत्वम्। ऐतरेयारण्यकमपि एतदेव तथ्यं समर्थयति—'वाक्तन्तिर्नामानि दामानि, वाचा तन्व्या नामभिर्दामभिः सर्वं सितम्'। निखिलं ब्रह्माण्डं वाग्दाम्ना सितं बद्धम्। ब्राह्मणग्रन्थेषु कृतेषु व्याख्यानेष्वपि बहुत्र शब्दनिर्वचनानि लभ्यन्ते। यथा—

अञ्जन्ति एतेन इति आज्यम्।
न्यङ् रोहति—न्यग्रोहः न्यग्रोधो वा।
देवैः रातः— देवरातः।
यदस्यां पुनः जायते तज्जाया भवति।

एतान्युदाहरणानि ऐतरेयब्राह्मणस्य। ऐतरेयारण्यकेऽपि एवंविधान्यनेकान्युदाहरणानि प्राप्यन्ते। यथा—

अशीर्यत इति शरीरम्।
एभ्यः सर्वेभ्यो भूतेभ्योऽर्चते इति ऋक्।
मधुच्छन्दति इति मधुच्छन्दाः।
देवानां वामः वामदेवः।
गृत्सः (प्राणः) चासौ मदः (अपानः) गृत्समदः।
प्रजा वै वाजस्ता एव बिभर्ति भरद्वाजः।

अर्थानुरोधेन काश्चिद् निरुक्तयः असङ्गता इव प्रतिभान्ति। यथा— हृ=अभिहरन्ति अस्मै, द=ददत्यस्मै, यम्=एति स्वर्गं लोकमर्थाद् हृदयम् (शतपथब्राह्मणे)। ऐतरेयब्राह्मणे ऐतरेयारण्यके च 'विश्वामित्र'शब्दे षष्ठीतत्पुरुष-समासः स्वीकृतोऽस्ति; किन्तु अस्मिन्नेवारण्यकेऽन्यत्र बहुव्रीहिः स्वीकृतोऽस्ति— विश्वं मित्रं यस्य, तस्माद् विश्वामित्रः। तत्पुरुषस्वीकारे नपुंसकलिङ्गत्वादनुपपन्नेयं व्युत्पत्तिः।

ऐतरेयारण्यके वर्णविचारो लभ्यते। यथा— 'यानि व्यञ्जनानि तच्छरीरं, यो घोषः स आत्मा, य ऊष्माणः स प्राणः'। अत्र व्यञ्जनशब्देन स्पर्शवर्णा गृहीताः सन्ति । घोषशब्देन च स्वराः अर्द्धस्वराः अन्तःस्थवर्णाश्च। इदमन्यत्र स्पष्टमस्ति— पृथिव्या रूपं स्पर्शाः, अन्तरिक्षस्योष्माणः, सामवेदस्य स्वराः। चक्षुषो रूपं स्पर्शाः, श्रोत्रस्योष्माणः, मनसः स्वराः। प्राणस्य रूपं स्पर्शाः, अपानस्योष्माणः, व्यानस्य स्वराः। अत्र अन्तःस्थाः स्वरेष्वन्तर्भूताः अर्द्धस्वरत्वात्।

छान्दोग्योपनिषद् व्याहरति— 'सर्वे स्वरा घोषवन्तो बलवन्तश्च वक्तव्याः'। ऐतरेयारण्यकस्य प्रथमाध्याये पञ्चमखण्डे सन्धिविषयकं विवेचनमस्ति। यथा— 'पूर्वम् अक्षरं पूर्वरूपम्, उत्तरम् उत्तररूपम्, योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहिता'। अत्र माण्डूकेयेण ऋषिणा किमपि संशोधनं कृतम्। तत्र तत्पुत्रेणापि किञ्चित् संशोधनं कृतम्। संहिताविश्लेषणे माण्डूकेयाणां महत्त्वपूर्णं योगदानमस्ति। माण्डूकेयपुत्रेणैव अन्तःस्थाः पृथक्कृत्य वर्णानां विभाजनं चतसृषु श्रेणीषु कृतम्। संहिताया आध्यात्मिकं विश्लेषणमपि कृतमस्ति। तथा हि— पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेयः। वाक् पूर्वरूपं, मनः उत्तररूपं, प्राणः संहितेति।

यद्यपि उपनिषत्सु ब्रह्मतत्त्वमेव मुख्यतया प्रतिपादितम्, तथापि वाक्तत्त्वविषयका विचारा उपनिषत्स्वपि विकीर्णरूपेण यत्र तत्र लभ्यन्ते। तैत्तिरीयोपनिषदः 'शिक्षावल्ली' सांहिती उपनिषदिति नाम्ना प्रसिद्धा।

अनेन विवरणेन स्पष्टमिदं यत् संहिता-ब्राह्मणारण्यकोपनिषत्सु षडङ्गेषु, अनुक्रमणी-बृहद्देवता-प्रातिशाख्यादिषु वैदिकवाङ्मयेषु वाक्तत्त्वविषयका विचारा भूयो विमृष्टाः सन्तीति।

●

# वेदेषु एकेश्वरवादः

**डॉ. राममूर्त्तिचतुर्वेदी**
वेदविज्ञानसंकायाध्यक्षः
महर्षिमहेशयोगीवैदिकविश्वविद्यालयस्य
जबलपुरम् (मध्यप्रदेशः)

वेदा न केवलं भारतवर्षस्य अपि तु निखिलस्यापि विश्वस्य निधयः, समस्तप्राणिनामनुग्राहकाश्च वर्तन्ते। अखिलब्रह्माण्डनायकेन परमेश्वरेण नित्यसनातना वेदा ब्रह्मणो हृदि प्रहिताः[१]। तस्मादिहैव भारतभूमौ सततं चिन्तनपरायणानां तपः-पूतचरितानां साक्षात्कृतधर्माणां वसिष्ठादिमहर्षीणां समाधिवेलायां वेदानामाविर्भावो जातः। वेदानां भारतीयवसुन्धरायामाविर्भूतत्वाद् अत्र भारतीयभौतिकवातावरणे वाङ्मये च वेदानामतीवप्रतिष्ठा महत्त्वपूर्णं स्थानञ्च वरीवर्ति।

**वेदस्य प्रतिपाद्यम्**

समासतो मुख्यतश्च वेदस्य द्वे प्रतिपाद्ये वर्तेते, तत्र प्रथमो धर्मः, द्वितीयो ब्रह्मेति[२]। तत्र संस्कृतवाङ्मये धर्मब्रह्मणोर्जिज्ञासया दर्शनद्वयं प्रादुर्भूयते, तत्र प्रथमतो धर्ममधिकृत्य पूर्वमीमांसादर्शनं प्रवर्तते, तस्यादिमं प्रतिज्ञासूत्रम्—'अथातो धर्मजिज्ञासा' (जै.मी.सू. १।१।१)। ततो ब्रह्माधिकृत्य उत्तरमीमांसादर्शनं प्रवर्तते, तस्यादिमं प्रतिज्ञासूत्रम्—'अथातो ब्रह्मजिज्ञासा' (ब्र.सू. १।१)। अत्र मीमांसा नाम पूजितविचारवचनः, दर्शनं नाम दृश्यतेऽनेनेति व्युत्पत्त्या यथार्थतत्त्वावबोधकं शास्त्रमुच्यते। पूर्वोत्तरमीमांसे एव क्रमशो मीमांसादर्शनं वेदान्तदर्शनञ्चेति व्यवह्रियेते। एतावता इदं ज्ञायते यत् पूर्वमीमांसादर्शनेन धर्मोऽवबोध्यते, तथैवोत्तरमीमांसादर्शनेन ब्रह्मावबोध्यत इति।

---

१. यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। ( श्वेता. ६।१८ )

२. धर्मब्रह्मणी वेदैकवेद्ये। ( पुरुषार्थानुशासनम् )

**यागादिरेव धर्मः**

अत्र पुनर्जिज्ञास्यते—अथ को धर्मः? किं तस्य लक्षणमिति? पूर्वमीमांसा-दर्शनेनात्र समाधीयते यद् यागादिरेव धर्मः, तल्लक्षणञ्च वेदप्रतिपाद्यप्रयोजनवेदार्थो धर्म इति। विश्वस्मिन् विश्वे सर्वविधस्य धर्मस्य मूलस्रोतांसि वेदा एव वर्तन्ते। तद्यथा—

वेदोऽखिलो धर्ममूलम्। (मनु.२।६)

धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण पापमपनुदति, धर्मे प्रतिष्ठितं तस्माद् धर्मं परमं वदन्ति।। (तै.आ.१०।६३)

यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः।। (मनु.२।७)

**यज्ञस्वरूपम्**

'यागादिरेव धर्मः' इत्यत्र यागो हि यज्ञस्य नामान्तरमस्ति। शाब्दिक-निर्वचनदृष्ट्या 'देवपूजासंगतिकरणदानेषु' इत्यर्थकात् 'यज्'धातोः 'यजयाज....... रक्षो नङ्' (पा.३।३।९०) इतिसूत्रेण नङ्प्रत्यये कृते यज्ञशब्दो निष्पद्यते। एतावता अयं भावो ज्ञायते यद् यज्ञो नाम देवानामर्चनम्, देवैः सह संगतिकरणं[१] देवेभ्यो दानञ्च स्वाहा-वषट्कारादिना।

तत्र श्रौतसूत्रकारेण महर्षिणा कात्यायनेन 'अथ यज्ञं व्याख्यास्यामः' इति प्रतिज्ञातेन 'द्रव्यं देवतात्यागः' इत्यादिना सूत्रेण त्रितयं यज्ञस्वरूपं प्रतिपादितम्। अर्थाद् अग्न्यादिदेवतोद्देश्येन आज्यपुरोडाशादिहविर्द्रव्याणामग्नौ त्यागः प्रक्षेपो यागः कथ्यते। भाट्टदीपिकाकारेणापि यागपदार्थस्तथैव निरूपितः। तद्यथा—यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागोऽनुष्ठीयते, स यागपदार्थः।

(भाट्टदीपिका-४।२।२)

**प्रथमो धर्मः**

'यज्ञो वै श्रेष्ठतमं कर्म' (श.ब्रा.१।७।१।५) इति श्रुत्या यज्ञः क्वचिद् वेदोक्तकर्मविशेषः। तथा 'यज्ञो वै विष्णुः' (श.ब्रा.१।१।२।३, तै.सं.१।७।४) इति श्रुत्या क्वचिद् देवदेवो विष्णुर्निरूप्यते। देवताः सर्वतःप्रथमं यद् यज्ञं

---

१. देवो भूत्वा देवं यजेत इति विधिना। अहमनृतात्सत्यमुपैमि। (य.वे. १।५) इत्यादि।

सम्पादयामासुः स एव यज्ञः प्रथमो धर्मः कथ्यते। अत्र प्रमाणबाहुल्यमवलोक्यते। तद्यथा—

'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्'।

(ऋ.सं. १०।९०।१६, शु.य. ३१।१६)

'यज्ञेन वै तद्देवा यज्ञमयजन्त'। (ऐ. ब्रा.१।१६)

अत्र मन्त्रयोः 'यज्ञेन' इति तृतीयान्तं पदं यज्ञकर्मवाचकम्। यज्ञमिति द्वितीयान्तं पदं विष्णुदेवतावाचकम्। मन्त्रब्राह्मणयोरयं भावः—इन्द्रादयो देवाः श्रेष्ठतमेन यज्ञकर्मणा तं देवदेवं विष्णुं सर्वतः प्रथमम् अयजन्त-अर्चयामासुः, तान्येव कर्माणि प्रथमधर्मरूपाण्यासन्।

**यज्ञार्थमेव वेदानामाविर्भावः**

वेदस्य प्रथमः प्रतिपाद्यो धर्मो यज्ञद्वारा निष्पद्यते, द्वितीयः प्रतिपाद्यो ब्रह्म- 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनु'रिति स्मृत्या यज्ञक्षपितकल्मषैरेव पुरुषैः साक्षात्कर्तुं शक्यते। अत उभयत्र यज्ञस्यैव प्राधान्याद् यज्ञार्थमेव वेदानां प्राकट्यं समजनि। तद्यथा—

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्।। (मनुस्मृ. १।२३)
ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये। (ब्र.पु. १।४२)
वेदास्तु यज्ञार्थमभिप्रवृत्ताः। (वि. धर्मोत्तरपु. ९।१०४)

इत्यादीनि स्मृतिपुराणोक्तवचनानि वेदानां यज्ञार्थमेवाविर्भावं प्रमाणयन्ति।

अपि च यज्ञविद्या सृष्टिप्रपञ्चस्य आधारशिला प्रकल्प्यते। सृष्ट्यादौ विधात्रा प्रजापतिना प्रजानां सर्जनावसरे ताभिस्सह यज्ञविधानमपि संसृज्य ताः प्रति प्रोक्तं यदनेन यागकर्मणा यूयं देवान् प्रीणयत, प्रीणिताश्च देवा युष्मानिष्टप्रदानेनोपकुर्वन्तु, तथा च प्रसन्नैर्देवैर्दत्तान् भोगान् प्रथमतस्तेभ्यः प्रदाय पश्चात् स्वयमपि भुञ्जीत। तद्यथा प्रोक्तं भगवता कृष्णेन गीतायाम्—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्।।
देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।।

इष्टान्भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ।।

अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ।।

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ।।

(श्रीमद्भगवद्गीता-३।१०-१५)

**देवमनुष्ययोर्मिथः साकाङ्क्षत्वम्**

सृष्टिप्रपञ्चे परमेश्वरेण प्रत्येकस्य चेतनपदार्थस्य जडपदार्थेन सह उपकार्योपकारकभावसम्बन्धः प्रतिष्ठापितः। पौराणिकमान्यतानुसारं सृष्टिकर्त्रा विधात्रा दिव्यशक्तिसमन्वितान् देवान् संसृज्य तेभ्यो द्युलोकस्य दिव्यमनन्त-सौख्यसाम्राज्यं प्रदत्तम्। ततो मानवाश्चोत्पाद्य तेभ्यो व्रीहियवादिहविर्द्रव्योत्पादयित्र्याः पृथिव्याः साम्राज्यं प्रदत्तम्। पुनश्च देवमनुष्ययोः पारस्परिकं सापेक्ष्यं भवेदिति हेतोर्द्युलोकः पृथिवीलोकाधीनः, पृथिवीलोकश्च द्युलोकाधीनः कृतः। द्युलोके वसन्तो देवा दिव्यानन्तवैभवसम्पन्ना अपि स्वात्मजीवनाय मानवैर्दीयमानं यज्ञीयं हविरन्नञ्च सततं कामयन्ते। तथा च पृथिवीलोकस्था मानवा अपि देवेभ्योऽन्नरसनिष्पादनक्षमां सुधामयीं जलवृष्टिं वनस्पत्यौषधसम्पत्तये नितरामभिलषन्ति। तद्यथा शतपथब्राह्मणे—

"इतः प्रदानाद् हि देवा उपजीवन्ति। यदात्रं होमान् जुहोति देवानेव तत्प्रीणाति"। (श.ब्रा. १३।२।१।१)

अपि च—

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।।

(मनुस्मृ. ३।७६)

एवं रीत्या देवमनुष्यौ मिथः साकाङ्क्षौ परस्परं मनोऽभिलाषं पूरयतः। देवमनुष्ययोरेतादृशो मैत्रीभावस्तेनोभयलोकयोः संवर्धनभावश्च 'यज्ञ'पदाभिधेयो भवति। अयमेव वैदिकः सनातनधर्मः कथ्यते।

**यागस्य द्विधा प्रकारः**

ब्राह्मणग्रन्थानुशीलनेनेदं ज्ञायते यद् मूलरूपेण यागस्य द्विधा प्रकारो विद्यते। तत्र प्रथमः प्राकृतो यागः, द्वितीयोऽनुकृतियागः। प्राकृतो यागः सृष्टिसमकालादेव इन्द्रादिदेवैः सूर्यचन्द्रादिग्रहनक्षत्राभिमानिदेवताभिश्चानुष्ठीयमानो निरन्तरं प्रचलति। अनुकृतियागश्च प्रथमं वसिष्ठादिमहर्षिभिः पश्चाद् वेदविद्भिर्द्विजातिभिर्यथाधिकारमनुष्ठीयते।

शास्त्रेषु वर्गद्वयेऽनुकृतियागो विभक्तः। तत्र प्रथमः श्रौतयागः, द्वितीयः स्मार्तयागः। साक्षात् श्रुतिवाक्यैः संप्रचोदिता यागाः श्रौताः, तथा वेदानुमोदित-स्मृति-पुराणादिभिः प्रतिपादिता यागाः स्मार्ता उच्यन्ते।

**श्रौतयागपरिचयः**

वेदेषु नित्य-नैमित्तिक-काम्यानुरोधेन नैके श्रौतयागा विहिताः प्राप्यन्ते, परन्तु तेषां समेषां यागानां प्रकृतिभूतेषु पञ्चयागेष्वन्तर्भावो दरीदृश्यते। ते च सन्ति प्रकृतिभूता यागाः—अग्निहोत्रम्, दर्शपूर्णमासः, चातुर्मास्यम्, पशुयागः, सोमयागश्चेति।

पुनः कल्पसूत्रकारैः श्रौतयागानां यत्किञ्चित् स्वरूपसाम्यमधिकृत्य समुदायद्वये विभाजनं कृतमस्ति। तत्र प्रथमो हविर्यज्ञसमुदायः, द्वितीयः सोमयज्ञसमुदायश्चेति। तत्राद्ये आज्यं पुरोडाशो वा हविर्द्रव्यं भवति, तेषां यज्ञानां संख्या सप्त भवति, तद्यथा—अग्न्याधेयम्, अग्निहोत्रम्, दर्शपूर्णमासः, आग्रायणम्, चातुर्मास्यम्, निरूढ-पशुबन्धः, पिण्डपितृयज्ञश्चेति। द्वितीये सोमयज्ञसमुदाये सोमाख्यलता-विशेषस्य रस एव हविर्द्रव्यं भवति। अत्रापि मुख्यतया सप्तयागा भवन्ति, तद्यथा—अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशीवाजपेयः, अतिरात्रः, आप्तोर्यामश्चेति। एतदतिरिक्तमपि नैके श्रौतयागाः, यथा—अश्वमेधः, राजसूयः, वाजपेयः, वैश्यस्तोमः, अग्निचयनप्रभृतयो वेदप्रतिपादिताः सोमयागेष्वेवान्तर्भूता भवन्ति।

**श्रौतयागाधिकारः**

श्रौतयागेषु न सर्वेषामविशेषेणाधिकारो वेदसम्मतः, अपि तु गृहीताग्निकस्य द्विजातिमात्रस्याधिकारो निरूपितः। तत्रापि न सर्वविधयागेषु द्विजातेरधिकारोऽङ्गीकृतः, अपि तु केषुचिद् यागविशेषेषु साग्नीकानां ब्राह्मणादीनामप्यधिकारो निराकृतः। तद्यथा—वेदप्रतिपादिते 'राजसूय'नामके यागे केवलमाहिताग्ने राज्ञः क्षत्रियस्यैवाधिकारः शास्त्रसम्मतः, न तत्राग्निहोत्रिणो ब्राह्मणस्य वैश्यस्य वाधिकारो

विहितः। क्षत्रियस्यापि राज्याधिष्ठितस्यैवाधिकारोऽङ्गीकृतः, न वा केवलं क्षत्रियस्य, न वा केवलं राज्ञोऽधिकारो वेदसम्मतः। एवमेव वैश्यस्तोमनामके यागे केवलं वैश्यस्याधिकारो विहितः, न तत्र ब्राह्मणः क्षत्रियो वाधिकृतो भवति। एवमेव गावेधुकेष्टौ केवलं निषादस्थपतिरधिकृतो भवति, न तत्र ब्राह्मणः, क्षत्रियः, वैश्यो वाऽधिकृतो भवति। एवमेव रथकारस्याधानमात्रेऽधिकारो निरूपितः। रथकारस्तु 'माहिष्येण करण्यान्तु रथकारः प्रजायते' इति स्मृत्या जातिविशेषः। ब्राह्मणेन क्षत्रियायां जातो माहिष्यः, क्षत्रियेण वैश्यायां जाता कन्या करणी उच्यते।

**स्मार्तयागः**

स्मार्तयागानां विधानं मुख्यतस्तत्तद्वेदशाखासम्बद्धैर्गृह्यसूत्रैः क्रियते, तदनन्तरं विभिन्नैः स्मृतिपुराणैश्चापि क्रियते। गृह्यसूत्रोक्तयागेषु चरुपाकविधानात् केचन स्मार्तयागाः पाकयज्ञाभिधानेनापि व्यवह्रियन्ते। पारस्करगृह्यसूत्रे ग्रन्थकारेण हुत-अहुत, प्रहुत-प्राशित इति प्रकारचतुष्टयेन पाकयज्ञानां विभाजनं कृतमस्ति। अन्यैश्च गृह्यसूत्रकारैः पाकयज्ञानां प्रकृतिरूपेण सप्तसंख्या निर्धारिता। तद्यथा— औपासनहोमः, वैश्वदेवः, पार्वणम्, अष्टकामासिकश्राद्धम्, श्रवणाकर्म, शूलगव इति। एतेषु केचन एव सम्प्रति अनुष्ठीयन्ते। सम्प्रति श्रौतयागानां दुरवबोधतया दुस्सम्पाद्यतया चानुष्ठानमत्यल्पं क्वाचित्कमेव श्रूयते, परन्तु स्मार्तयागानुष्ठानन्तु अद्यापि बहुत्र दृश्यते श्रूयते च।

**यज्ञाङ्गानि**

ब्राह्मणग्रन्थेषु यज्ञानां पञ्चाङ्गानि वर्णितानि सन्ति। तानि यथा—देवता, द्रव्यम्, मन्त्रः, ऋत्विक्, दक्षिणा चेति। एतेष्वन्यतमाभावेन न हि यज्ञो साधुविधिना सम्पादयितुं शक्यते। तत्र देवतास्तु दिव्यैश्वर्यसम्पन्ना वर्गत्रये विभक्ता भवन्ति। तत्र प्रथमो वर्ग आजानदेवतानाम्, द्वितीय आजानजदेवतानाम्, तृतीयः कर्मदेवतानाम्। तत्र पृथिवी-जल-तेज-वाय्वाकाशादयः सूर्यचन्द्रादयो ग्रहाश्चाजानदेवता भवन्ति, एताः, सृष्टिसमकालमेव परमेश्वरेण सृष्टिसञ्चालनार्थमाविर्भाविताः। वेदोक्तकर्मानुष्ठानजन्यपुण्यप्रभावेण देवत्वमधिगताः कर्मदेवता भवन्ति[१]। यथा दिव्यपितरो मरुद्गणाश्च। पुनश्चैता एव कर्मदेवता नैजपुण्यप्रभावेण आजानदेवताप्रसादेन च दिव्योन्नतिं गता आजानजदेवता भवन्ति, यथा— इन्द्रकुबेरादयः।

---

१. द्रष्टव्यम्—ऋ.सं. ५।३५।८, १०।७७।२।

**देवताः**

देवता अलौकिकशक्तिसम्पन्ना एका सत्यपि स्वसामर्थ्यादेककालावच्छेदेन नैकत्र नैकरूपेणात्मानमुपस्थापयितुं प्रभवति। तद्यथा निरुक्तशास्त्रे दैवतकाण्डे यास्काचार्येण निर्दिष्टं यत्—

"तासां महाभाग्यादेकस्या अपि बहूनि नामधेयानि भवन्ति। महाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवा प्रत्यङ्गानि भवन्ति"। (नि. ७।२)

अत्र ब्रह्मसूत्रभाष्यकर्त्रा आद्यशङ्कराचार्येणापि देवतानामलौकिकं सामर्थ्यं प्रकटीकृतम्। तद्यथा—

"एकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गतां गच्छतीति परैश्च न दृश्यते, अन्तर्धानक्रियायोगात्"। (ब्र.सू, शा.भा. १।३।२७)

**द्रव्यम्**

यज्ञेषु देवताभ्योऽन्नरसादितत्त्वरूपं (प्राणतत्त्वरूपं) प्रापणार्थम् अग्नौ प्रक्षेपणीयं वेदविहितं वस्तु हविर्द्रव्यमुच्यते। तद्यथा—आज्यम्, चरुः, पुरोडाशः, तिलाः, तण्डुलाः, सोमरसादयश्च। अग्नौ दीयमानं हविर्देवेभ्योऽमृतरूपेण प्राप्यते, तदेवामृतधर्माणां देवानां जीवनाधारकं जायते। यथा हि शतपथब्राह्मणे— इतः प्रदानाद्धि देवा उपजीवन्ति। यदन्नं होमान् जुहोति, देवानेव तत्प्रीणाति[१]।

**मन्त्रः**

मन्त्रो हि यज्ञस्य तृतीयमङ्गं मन्यते। मीमांसकरीत्या मन्त्रा अनुष्ठेयद्रव्यदेवताक्रियास्मारकाश्चैतन्यदेवताविग्रहाश्च भवन्ति। यज्ञेषु शुद्धोच्चारितमन्त्रप्रभावेण कर्तुरिष्टप्राप्तिरनिष्टपरिहारश्च जायते। कदाचिद् अशुद्धोच्चारणेन फलवैगुण्यमपि जायते। तद्यथा महाभाष्ये महर्षिणा पतञ्जलिना प्रोक्तमस्ति—

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥
(म.भा. पस्पशाह्निके)

१. श. ब्रा. १३।२।१।१।

## ऋत्विक्

वेदोक्तकर्मणां विभिन्नयागविधीनाञ्च सम्पादनकुशलो ब्राह्मण एव ऋत्विग् भवति। प्राधान्येन होताऽध्वर्युर्ब्रह्मोद्गातेति चत्वार ऋत्विजो क्रमशः ऋगादिचतुर्वेदसम्बद्धा भवन्ति। सोमयागे प्रत्येकम् एकैको गणो भवति, प्रत्येकं गणे चत्वार ऋत्विजो विविधनामधेया भवन्ति। सर्वमाहत्यैतेषां संख्या षोडश भवति।

## दक्षिणा

वैदिकसाहित्ये दक्षिणा यज्ञपत्नीत्वेन सम्मता। यज्ञान्ते दीयमाना ऋत्विग्भ्यो दक्षिणा क्वचिद् गोरूपा, क्वचिद् हिरण्यरूपा, हिरण्यशतमानं रजतशतमानं क्वचिद् अन्वाहार्यपचनरूपा बहुविधा दृश्यते। 'निर्दक्षिणो हतो यक्षः' इति स्मृत्योक्त्या दक्षिणारहितो यज्ञो न फलाय कल्पते, अपि त्वङ्गवैगुण्याद् यज्ञो निष्फलायते।

एवं रीत्या वेदप्रतिपादितेषु विविधयज्ञेषु विभिन्ना देवता इज्यन्ते अर्च्यन्ते च। तत्र तत्तद्देवताप्रीत्यर्थं तत्प्रीतिद्वारा स्वात्मेप्सितकामनासंसिद्ध्यर्थं तत्तद्देवता-भिधायकैर्मन्त्रैः ऋत्विजो देवान् स्तुवन्ति। यथा हि निरुक्ते यास्काचार्येण किञ्चिदाकूतम्—

''यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुक्ते, यद्दैवतः स मन्त्रो भवति।'' (नि. ७।१)

## देवानां क्रमिकविकासपरिणाम एकेश्वरवादः

दार्शनिकदृष्ट्या वेदमन्त्रेष्वभिव्यक्तानां देवानां वादचतुष्टये विभाजनं कर्तुं शक्यते। तत्र प्रथमो बहुदेवतावादः, द्वितीयः पुरुषवादः, तृतीय एकाधिदेववादः, चतुर्थ एकेश्वरवादस्तत्त्ववादो वा।

## बहुदेवतावादः

यज्ञेषु बहूनां देवानां स्तवनं क्रियते, तच्च प्रायेण ऋग्वेदमन्त्रैः साममन्त्रैश्च क्रियते। ऋग्वेदमन्त्रैः कृतं देवस्तवनं याज्ञिकपरिभाषायां शस्त्रमुच्यते[१]। तथा सामवेदकृतं देवस्तवनं स्तोत्रमुच्यते[२]। ''ऋच्यध्यूढः साम गीयते'' इति परिभाषया

---

१. शस्त्रलक्षणम्— अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्।

२. स्तोत्रलक्षणम्— प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्।

वस्तुतः ऋचामेव गानवैलक्षण्यात् स्तोत्ररूपेण गेयता जायते। अतो ह्यत्र ऋग्वेदस्यैव देवस्तावकत्वं प्रमाणीयते। तत्र ऋग्वेदे शास्त्रस्तोत्राभ्यां स्तुत्या देवा बहवः समाम्नातास्तेषु सन्ति प्रमुखाः— अग्निः, इन्द्रः, वरुणः, रुद्रः, सविता, मरुद्गणः, वायुः, सोमः, द्यावा-पृथिवी, मित्रः, पूषा, उषा, पर्जन्यः, अश्विनौ, यमप्रभृतयः। इतः परमपि 'अभिमानिव्यपदेशस्तु विशेषानुगतीभ्यामिति' सूत्रानुरोधेन यज्ञेषु यत्र पाषाण-काष्ठादीनां स्थावरपदार्थानामपि काचिद् अभिमानी देवता स्तूयते। तद्यथा—"ओषधे त्रायस्वैनम्", "स्वधिते मैनं हिंसि", "धिषणासि पार्वतेयी प्रतित्वा पर्वतीवेतु"[१]। अद्रिरपि वानस्पत्यो ग्रामवासिपृथुबुध्वः प्रतित्वादित्यास्त्वग्वेत्तु[२]।

**पुरुषवादः**

ऋग्वेदस्य दशममण्डले नवतितमे सूक्ते पुरुषाख्यो देवो महदैश्वर्यानन्तशक्तिसम्पन्नः, विश्वरूपो विश्वव्यापको विश्वेश्वरश्च प्रकल्पितः। स्वल्पशब्दान्तरेण प्रायश्चतुर्ष्वपि वेदेषु पुरुषसूक्तं प्राप्यते। तत्र "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि। ततो विराडजायत विराजोऽधिपूरुषः"। इत्यादिभिर्मन्त्रैरतीतानागतवर्तमानरूपं यावज्जगदस्ति, तत्सर्वं तस्यैव पुरुषाख्यस्य देवस्य एकः पादश्चतुर्थोऽश इत्यर्थः। अस्य त्रिपाद् अंशत्रयं द्योतनात्मके स्वप्रकाशेऽमृतरूपेण तिष्ठति। अयं हि देवो सहस्रशीर्षा, सहस्राक्षरूपेण विश्वरूपो विश्वव्यापकश्च वर्तते, एतस्मादेव देवाद् हिरण्यगर्भाख्यो विराट्पुरुष उत्पद्यते। स एव सर्वतः प्रथममुत्पन्नः सन् सर्वस्य जगत उत्पादयिता पालकश्च सञ्जातः।

**एकाधिदेववादः**

ऋग्वेदस्य दशममण्डले शताधिकैकविंशतितमे सूक्ते प्रजापतिनाम हिरण्यगर्भाख्यो देवः सर्वदेवाधिपतिरूपः समाम्नातः। विकासक्रमेण पुरुषाख्यदेवादुत्पन्नो विराट्पुरुष एवात्र हिरण्यगर्भाख्यः प्रजापतिरस्ति। स एव समग्रसृष्टिप्रपञ्चोत्पत्तेः प्राक् समजायत, तथा जातमात्र एव अद्वितीयः सन् उत्पत्स्यमानस्य समग्रस्य जगतो भूतस्य च पतिरीश्वरो भवति। तद्यथा—

---

१. शुक्लयजुर्वेदः-१।१९।

२. तदेव-१।१४।

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
(ऋ. १०।१२१।१)

ततो देवानां समवर्ततासुरेकः। (ऋ. १०।१२१।७)

यो देवेष्वधिदेव एक आसीत्। (ऋ. १०।१२१।८)

यो देवानां नामधा एक एव। (ऋ. १०।८२।३)

इत्यादिमन्त्रैर्बहुदेवतानामधिदेवः शासकश्चायं प्रजापतिः प्रतीयते।

**एकेश्वरवादः**

ऋग्वेदस्य दशममण्डले शताधिकैकोनत्रिंशत्तमे नासदीयसूक्ते—

आनीदवातं स्वधया तदेकम्। (ऋ. १०।१२९।२)

तपसस्तन्महिना जायतैकम्। (ऋ. १०।१२९।३)

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः। (शु. यजु. ३२।१)

यो अस्याध्यक्षः परमे व्योमन्। (ऋ. १०।१२९।७)

इत्यादिमन्त्रेषु तत्पदं पूर्वपरामर्शकमस्ति। तदेकं पुरुषाख्यं परं ब्रह्म प्राणवायुं विना स्वशक्त्या जीवन्नासीदित्याशयः प्रतीयते। तदानीं सृष्ट्यग्रे विराट्पुरुषोत्पत्तेः प्राग् न मृत्युरासीत्, न वामृतं जीवनमासीत्। जीवनमरणयोः सृष्टिसम्बद्धत्वात् सृष्टेः पूर्वं प्रलयकाले वा एतयोरभाव आसीत्। तदानीं 'तपसस्तन्महिना जायतैकम्' इति श्रुत्या तदेकं वेदैकवेद्यं परं ब्रह्म निर्गुणं निराकारं सदपि सगुणतां साकारतां गच्छति, तथा सहस्रशीर्षा पुरुषः सन् हिरण्यगर्भाख्यं विराट्पुरुषमुत्पाद्य तेनैव रूपेण जगन्निर्मीति।

वैदिकदर्शनपरम्परायां तदेकं परं तत्त्वमेव वेदान्तदर्शने ब्रह्मपदेन निरूप्यते। तदेकं सदपि अग्निमित्रादिरूपेण अनेकरूपतां बिभर्ति। तद्यथा—

एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वभुवनं विचष्टे।
(ऋ. १०।११४।४)

सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति।
(ऋ. १०।११४।५)

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।

एकं सद् विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः।
(ऋ. १०।१६४।६)

तदेकं तत्त्वं तत्पदेनाभिधेयत्वाद् बुद्धिस्थपरामर्शकत्वाद् वाल्मीकिव्यासादयो महर्षयो वेदैकवेद्यं रामाख्यं कृष्णाख्यञ्च तत्त्वं सगुणसाकारतया उद्भावयामासुः। स एको देवः कदाचिद् रामरूपः कदाचिच्च कृष्णरूपो भवति। सोऽपि वेदैकवेद्यो निरूप्यते। तद्यथा—

वेदवेद्ये परे पुंसि जाते दशरथात्मजे। (वा.रा.)

वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाहम्। (गीता-१५।१५)

आसामहो........भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्।

(श्रीमद्भागवत-१०।४७।६१)

इत्यादिप्रामाण्यवचनैः स एकेश्वरः कृष्ण एव सगुणसाकाररूपेण अस्माभिरुपास्यः। स एव शब्दात्मना वेदरूपः, क्रियात्मना यज्ञरूपो द्रव्यदेवतारूपश्च जायते। तद्यथा—

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्।।
पिताहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोङ्कारम् ऋक्सामयजुरेव च।। (गी. ९।१६-१७)

वेदवेद्यो धर्मो यागादिरूपो विविधविधिनिषेधाभ्यामतीवजटिलः, अतः सर्वथा वेदविदा पुरुषेणैवानुष्ठेयो भवति। एतावता वेदानुमोदितपुराणादिभिर्ज्ञायमानं कृष्णाख्यं परं ब्रह्म सर्वैः सर्वत्र सर्वदैव स्मरणीयतामञ्चति। यथा हि तपोज्ञाननिष्ठैर्मधुसूदनसरस्वतीस्वामिपादैः सत्यमेवोक्तम्—

ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनेषु यत्किमपि तन्नीलं महो धावति।। इति।

●

# वैदिकदेवतासु उषस्

**डॉ. गोपीनाथपण्डा**
उपाचार्योऽध्यक्षश्च, संस्कृतविभागे
रभेन्सास्नातकोत्तरमहाविद्यालयस्य
कटकमण्डले, उत्कलस्य

❀ ❀ ❀

ऋग्वेदस्य त्रिचतुर्थांशेभ्योऽधिकसूक्तेषु देवाः सम्बोध्यन्ते ऋषिभिः। द्विविधो मन्त्रः परिदृष्टः सूक्तेष्वेषु। प्रथमं तावद् विभिन्नदेवानां स्वरूपबोधकम्, अपरं तु धनम्, सन्तानम्, आयुः, आरोग्यम्, विजयादि-लौकिक-समृद्धि-निमित्तं कृतं स्तोत्रम्। येषां देवानां स्तुतिः क्रियते तेषु अग्निः, इन्द्रः, वरुणः, विष्णुः, अश्विनौ, उषस्, सवितृ, पूषन्, रुद्रः, मित्रप्रभृतयश्च मुख्याः।

पर्याप्तमतभेदः परिलक्ष्यते एषां देवानां स्वरूपविषये। एके कथयन्ति इमे देवा मानव इव एको जातिविशेषः। ते स्वर्गे निवसन्ति, मनुष्य इव तेषां हस्तपादाद्यवयवाः सन्ति, तेऽपि भोजनप्रिया भ्रमणशीलाः, तेऽपि स्त्री-पुत्रादिपारिवारिकबन्धने तिष्ठन्ति।

अपरे केचन कथयन्ति इमे देवा मानसिकाध्यात्मिकशक्तेः प्रतीकाः। अग्निः प्राणानाम्, इन्द्रो मनसः, मरुद् मनःसम्बन्धीन्द्रियाणाम्, विष्णुश्च प्रतीक आत्मतत्त्वस्य; परन्तु सामान्यस्वीकृतसिद्धान्तोऽयं यद् देवाः प्रायशः प्रतीका भवन्ति प्राकृतिकशक्तेः।

अग्नि-वायु-विद्युत्-सूर्य-पृथिवी-चन्द्र-आकाशादिप्राकृतिकतत्त्वानां मानवी-कृतं तथा दैवीकृतं रूपं हि अग्निप्रभृतयो देवाः। निरुक्तकारयास्कस्य मतेन येषां पदार्थानां स्तुतिः क्रियते, तानि हि दैवतानि। अनेन मतानुसारेण श्रद्धा-मन्यु-प्रभृतयो भावा हि मानवीकरणेन देवतात्वं लभन्ते।

वैदिककालादारभ्य देवतातत्त्वं सङ्घटितम्। मानवानां सृष्टि-स्थिति-लयाश्च इदं देवतातत्त्वमाधारीकृत्य वर्णिताः। तस्मिन् समये देवानां संख्याविषये वक्तुं

यादृक् कठिनम्, अद्यापि तदेवावधारणं तादृग् दुरूहव्यापारं भवति, तथापि देवास्त्रयस्त्रिंशत्सहस्राणि, त्रयस्त्रिंशच्छतानि, त्रयस्त्रिंशच्च संख्याका इति महाभारते वर्ण्यते।

निरुक्तकारयास्कः सर्वान् वैदिकदेवान् त्रिषु वर्गेषु विभक्तं करोति। पृथिवीस्थानीयः, अन्तरिक्षस्थानीयः; द्युस्थानीय इति ते परिचिताः; परन्तु पृथिवीं त्वष्टारं च त्रिषु वर्गेषु स्थानं दत्त्वा, अग्निम् उषसं च पृथिवीस्थानीयदेवतावर्गे गृहीत्वा पुनरन्तरिक्षवर्गे ग्रहणं, वरुणं, यमं, सवितारं च उभयमन्तरिक्षस्तथा द्युस्थानीयदेवतेति कथनमतिव्याप्तिदोषं जनयति। फलतो यास्ककृतं वर्गीकरणं समीचीनं न भवति।

Vadic Mythology–ग्रन्थस्य प्रणेता Macdonell–महाभागोऽपि वैदिकदेवतानां स्वभावं चरित्रं च पर्यालोच्य तान् नववर्गेषु विभक्तं करोति।

A.A. Keith–महोदयोऽपि वैदिकदेवान् चतुर्धा विभजयति। बृहत् प्रकृतिदेवता—अत्र द्युः, अन्तरिक्षस्तथा पृथिवीस्थानीयदेवा गृह्यन्ते।

लघुप्रकृतिदेवता, भावदेवता (Abstract-deities), दिव्यप्राणिवर्गदेवता चेति।

M.Bloomfield–महाभागोऽपि वैदिकदेवान् पञ्चधा विभक्तं करोति। ते प्रागैतिहासिकः, पारदर्शकः, अल्पपारदर्शकः, अपारदर्शकः, भावपरकश्चेति ज्ञायन्ते।

वैदिकदेवानां चरित्रविश्लेषणे प्रकाशकत्वं, शक्तिमत्त्वं, परोपकारित्वं, बुद्धिमत्त्वं, सर्वज्ञत्वं, सर्वव्यापकत्वम्, अमरत्वं, दयादाक्षिण्यादिगुणास्तेषु समभावेन दृश्यन्ते। सर्ग-स्थिति-लयेन सह प्रायशः सर्वे सम्पर्किताः। वैदिकदेवतासु पारस्परिक-शक्तिविनिमयं परिलक्ष्यते। अग्नेर्वज्रधारणं, गवां जलानां च विमोचनं, "वृत्रहन्" इति कथनमित्यस्य निदर्शनम्। उपर्युक्तकार्यं इन्द्रस्येति विदितम्; पन्त्वेवंविधं कार्यमग्निः सम्पादयति। विष्णुः, इन्द्रश्च परस्परं शक्तिविनिमयं कुरुत इति वर्णितम्। बृहस्पतिरपि इन्द्र इव वज्रं धारयति, बलं हन्ति, गा मोचयतीति अपरं निदर्शनम्।

समानगुणोपाधिधारणाद् वैदिकदेवतासु तदात्मभावो दृश्यते। द्वितीयमण्डले प्रथमसूक्ते अग्नेः द्यु-इन्द्र-ब्रह्म-वरुण-मित्र-अर्यमन्-त्वष्टृ-रुद्र-भगप्रभृतिभिर्देवैः सह तदात्मभावस्योल्लेखो लक्ष्यते।

प्रत्येकं वैदिकदेवता अन्येभ्यः सर्वश्रेष्ठा इति वर्णितम्। अग्निः, इन्द्रः, वरुणश्च पर्यायक्रमेण जगतः स्रष्टेति मन्यते। एवंविधा प्रवृत्तिः Maxmuller–

महोदयेन Henotheism इति कथ्यते। सर्वश्रेष्ठप्रवृत्तित्वेऽपि वैदिकदेवताः परस्परं निर्भरशीलाः। वरुणः सूर्यश्च इन्द्रान्न्यूनौ। वरुणः, अश्विनीकुमारौ विष्णोः शक्तिं स्वीकुर्वन्ति। इन्द्रः, मित्रावरुणौ, रुद्रश्च सवितुर्नियमं नोल्लंघयन्ति।

वैदिकदेवाः पृथिव्याः, स्वर्गात्, समुद्राद् वा जन्म लेभे। ऋग्वेदस्य चतुर्थमण्डले अष्टादशसूक्ते इन्द्रस्य जन्म शैशवं च वर्णितम्। अग्नेर्जन्म सर्वविदितम्। समुद्रस्यातले गर्भे अजनि वाग्देवी।

वैदिकदेवा यज्ञस्थानमागत्य हविः गृह्णन्ति, सोमं पिबन्ति च। देवान् यज्ञस्थलीमागमनार्थमग्निः स्तूयते ऋत्विग्भिः। अग्निरपि यज्ञेषु प्रदत्तं हविर्देवेभ्यः प्रददाति।

वैदिकदेवाः परोपकारिणः, दानशीलाः, वदान्या इति वर्णिताः। यजमानेभ्यः प्रददति ते धनानि, पुत्रादिकं च। शत्रून् हत्वा अभयं ददति स्तावकेभ्यः।

वैदिकदेवाः सत्यनिष्ठा नीतिसम्पन्नाश्च। सत्यपालनं धर्मरक्षणं च तेषां प्रधानं व्रतम्। नीतिहीनमनैतिकं पुरुषं कठोरं दण्डयन्ति। नैतिकताया मुख्य इति वरुणो बहुशः स्तूयते। उषा द्युस्थानीया देवीति विदिता। ऋग्वेदे विंशतिसूक्तेषु स्तूयते सा। उषसो वर्णनप्रसङ्गे कायिकसौन्दर्यस्य नवीनकल्पना नितरां मनोहारिणी। बहुषु मन्त्रेषु सुन्दरयुवतीरूपेण वर्ण्यते सा। तस्याः कमनीयरूपमाधुर्यान्मुदिता भवन्ति प्राणिनः, स्वस्वव्यापारे प्रवृत्ता भवन्ति जना उषसः शुभागमने। सा पुनः सुन्दरी नर्त्तकीव भास्वराम्बरं परिधाय स्वकीयनैसर्गिकलावण्यं प्रकाशयति। उषा सुभगेति उच्यते। सा प्रत्यहं सुवर्णरथमारुह्य मर्त्यधाम आगच्छति। तस्या आगमनेन प्राणिनो जीवनम्, अन्नं, धनं च लभन्ते। सा मघोनी, अश्वावती, गोमतीति उच्यते। प्रातः प्रबोधयन् उपासकान् ऋत्विजः अग्निहोत्रादिकार्येषु प्रेरयति सा। गृहस्थान् भिक्षुकान् च स्वस्वव्यापारे प्रवर्तयति। निर्धारितं नियमं परिपालयति, देवानामाज्ञां च न लङ्घयति उषा। यथाकालं सोमपानाय देवान् आह्वयति। अतः सा ''ऋतावरीति'' कथ्यते। सा कदाचिन्न विश्रमति। अनुदिनं प्राणिनो जरयति।

सूर्यस्य माता, पत्नी, भगिनीरूपेण च वर्णिता उषा। सा दिवो दुहितेति ऋग्वेदे कथिता। यथा कश्चित् प्रणयीजनः प्रणयिनीमनुगच्छति, तद्वद् उषसमनुगच्छति सविता। कदाचिद् रात्रेर्ज्येष्ठा भगिनीति सा वर्णिता। उषसः कामुकप्रणयीत्युच्यते अग्निः। ''बृहस्पतिराविष्करोति उषसम्'' इति ऋग्वेदे दृश्यते।

# षट्त्रिंशद् भार्गवाणां वेदोपबृंहणे सहयोगस्तेषां परिचयश्च

**डॉ. केशवप्रसादमिश्रः**
आचार्योऽध्यक्षचरश्च, संस्कृतविभागस्य
महाराजामहाविद्यालये, छतरपुरम्
(मध्यप्रदेशः)

❀ ❀ ❀

भृगुगोत्रे समुत्पन्नाः षट्त्रिंशद् भार्गवाः समुपलभ्यन्ते वैदिकवाङ्मये। तेषां वेदोपबृंहणे सहयोगः प्रदर्श्यते समाहृत्य वैदिकवाङ्मयतः। सन्ति वेदे बहव ऋषयो येषामेकत्र स्वरूपं नहि दरीदृश्यते। स्वीकृत्य शीर्षकमिदं विवेच्यते तेषां भृगुगोत्रीयाणामृषीणां मन्त्रद्रष्टॄणां प्रतिपदं सप्रमाणं स्वरूपम्।

तत्र ये खलु भार्गवा ऋषयो विराजन्तेऽत्र निबन्धे नामानि तेषां प्रदर्श्यन्ते— १. मूलपुरुषस्तत्र भृगुर्वारुणिः, २. च्यवनो भार्गवः, ३. और्वः, ४. ऋचीकः, ५. जमदग्निः, ६. परशुरामो जामदग्न्यः। षडेते पुत्रपरम्परया सम्प्राप्ता वेदेषु पुराणेषु च संपठिता भागद्वये, परञ्चात्र वैदिक्येव चर्चा संविधीयते। षण्णामधिका भार्गवाः समुपलभ्यन्ते, ते यथा— ७. इटो भार्गवः, ८. कविर्भार्गवः ९. कृत्नुर्भार्गवः, १०. गृत्समद आङ्गिरसः शौनहोत्रः, पश्चाद् गृत्समदो भार्गवः शौनकः, ११. नेमो भार्गवः, १२. प्रयोगो भार्गवः, १३. वेनो भार्गवः, १४. सोमाहुतिर्भार्गवः, १५. स्यूमरश्मिर्भार्गवश्चेति। तदधिका २१ आचार्याः प्रवराश्च। तत्र मूलपुरुषत्वादादौ भृगोर्मन्त्रद्रष्टृत्वं प्रवर्ण्यते। स चायं वरुणपुत्रो भृगुर्ऋग्वेदस्य नवममण्डलस्य पञ्चषष्टितमसूक्तस्य सकलां त्रिंशत्संख्याकां तथा दशममण्डलस्योनविंशतितमसूक्तस्य अष्टानामृचां संहत्याष्टात्रिंशद् ऋचां द्रष्टा ऋषिः। चतुर्ण्णां वेदानां प्रकाशितास्वेकादशसंहितासु नवतिसङ्ख्याकानि नामान्यापतितानि।

**भृगोरुत्पत्तिः**

ऐतरेयब्राह्मणे (१३।३२-३४) प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिव-मित्यन्य आहुरुषसमित्यन्ये तामृश्यो भूत्वा रोहितभूतामभ्यैत्तं देवा अपश्यन्नकृतं वै प्रजापतिः करोतीति ते तमैच्छन्य एनमारिष्यत्येतमन्योन्यस्मिन्नाविन्दंस्तेषां या एव घोरतमास्तन्व आसंस्ता एकधा समभरंस्ताः सम्भूता एष देवोऽभवत्तदस्यैतद्-भूतवन्नाम।......तं रुद्रं देवा अब्रुवन्निमं विध्येति। स तथेत्यब्रवीत्...... रुद्रस्तमभ्यायत्याविध्यत्सविद्ध ऊर्ध्वमुदप्रपतत्तमेतं मृग इत्याचक्षते य उ एव मृगव्याधः स उ एव स या रोहित् सा रोहिणी। तद् वा इदं प्रजापते रेतःसिक्तमधावत्तत्सरोऽभवत्। तदग्निना पर्यादधुस्तन्मरुतोऽधून्वंस्तद् वैश्वानरः प्राच्यावयत्। तस्य पिण्डीभूतस्य रेतसो यत्प्रथमं पिण्डरूपं तत आदित्यो जातः। द्वितीयपिण्डतो भृगुः। तं वरुणो न्यगृह्णीत तस्मात्स भृगुर्वारुणिः।

**भृगोरुत्पत्तिस्वरूपं ताण्ड्यब्राह्मणे** (१८-९१)—वरुणस्य वै सुषुवाणस्य भर्गोऽपाक्रामत्, स त्रेधापतद् भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयमपस्तृतीयं प्राविशत्। दशपेये अर्थवादः अभिषेचनक्रतावभिषिक्तस्य वरुणस्य भर्ग इन्द्रियसामर्थ्यं तस्माद् वरुणादपगतं त्रेधा पतितमभूत्। तत्तृतीयमंशरूपं तद्भृगुनामक ऋषिरभवत्। अत एव भृगोर्वरुणपुत्रत्वमन्यत्र श्रूयते भृगुर्वै वारुणिर्वरुणं पितरमुपससार। दशपेयक्रतौ भृगुगोत्रोत्पन्नो होता भवति।

**तैत्तिरीयब्राह्मणे भृगोरुत्पत्तिस्वरूपम्** (१.८.२५)—इन्द्रस्य सुषुवाणस्य त्रेधेन्द्रियं वीर्यं परापतत्। भृगुस्तृतीयमभवत्......भार्गवो होता। तै.आ. ९।१।१ भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति।

**भृगोरुत्पत्तिप्रकारो गोपथब्राह्मणे** (१.१.३.४)—ब्रह्म वा इदमग्र आसीत्। तपसा स्वेदमविन्दत्। आभिर्वा अहमिदं सर्वं धारयिष्यामि। आपो अभवन्। ता द्विधा। अपेयाः पेयाश्च। पेयासु श्रान्ताभ्यस्तप्ताभ्यः सन्तप्ताभ्यो यद्रेत आसीत् तदभृज्यत यदभृज्यत तस्माद् भृगुः समभवत्। तद्भृगोर्भृगुत्वम्। भृगुरिव वै स सर्वेषु लोकेषु भवति य एवं वेद। स भृगुं सृष्ट्वान्तरधीयत।

**भृगोरुत्पत्तिस्वरूपं बृहद्देवतायाम्** (५.९७-९९)—

त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः।
आहरत्सहितैः साध्यैर्विश्वेदेवैः सहेति च।।

तत्र वाग्दीक्षणीयायामाजगाम शरीरिणी।
तां दृष्ट्वा युगपत्तत्र कस्याथ वरुणस्य च।।
शुक्रं चस्कन्द तद् वायुरग्नौ प्रास्यद् यदृच्छया।
ततोऽर्चिभ्यो भृगुर्जज्ञे (अङ्गारेष्वङ्गिरा ऋषिः)।।

**नाम-व्युत्पत्तिः**

नि. ५.५ अत्र भृगवः समायाताः। भृगवो भृज्यमाना महत्तेजस्वित्वात्। शब्दसिद्धिः—भ्रस्ज पाके (तु.उ.) 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' (उ. १.२७) इत्युप्रत्ययः, न्यङ्क्वादित्वात् कुत्वम्। भृगुः।

या. ३.१७ अर्चिषि भृगुः सम्बभूव। भृगुर्भृज्यमानोनदेहे। भृगुगोत्रोत्पन्नाः पापस्य भर्जकाः (ऋ. १.१४३.४)।

**भृगवः अग्नेराविष्कारकाः**

सर्वप्रथममग्नेर्दीपयितारोऽरणिभ्योऽग्नेरुत्पादयितारो भृगव एव। अप्नवान ऋषिर्भृगुगोत्रजस्तथा भृगवो वनेषु चित्रविचित्ररूपेणाग्निं दीपितवन्तः। तद्विषयकमन्त्रः—

"अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽध्वरेष्वीड्यः।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे"[१]।।

अन्यत्र भृगोरपत्यानि पितरस्तेषां शोभनबुद्धौ तेषां कल्याणकारिणि शोभनमनस्त्वेऽपि वयं स्याम[२]।

एकस्मिन् मन्त्रे भृगुगोत्रोत्पन्नैर्विप्रैः प्रीतिमन्तो यजमानाः स्युरित्याशंसनम्[३]। अत्र भृगुभिर्भृगुगोत्रविप्रैः सजोषाः समानो जोषः प्रीतिर्येषां ते। भृगुग्रहणमनूचान-ब्राह्मणोपलक्षणम्। उत्तमविप्रैः प्रीतिमन्त इति महीधरः। एतेन सिद्ध्यति यद् भृगुगोत्रोत्पन्ना ब्राह्मणा उत्तमविप्रा इत्युच्यन्ते। भृगुगोत्रस्य महत्त्वमेतत्। अपरत्र हे द्रविण त्वं तस्य यजमानस्य गृहे गच्छ यस्य यज्ञो भृगुगोत्रैर्ब्राह्मणैः सम्पादितः। अत्रापि भृगूणां ब्राह्मणानां प्राशस्त्यं वर्णितम्[४]।

---

१. ऋ. ४.७.१, ६.१५.२; मा. ३.१५।१५-२६, ३३.६; का. ३.३.५, १६.५.७, ३२.१.६; काठ. ६.९; क. ४.८; ऋ. १०.४६.९, अग्निमविन्दन्; ऋ. १०.१२२.५।
२. भृगवः सोम्यासः। तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम। मा. १९.५०; ऋ. १०.१४.६; तै. २.६.१२.६; शौ. १८.१.५८; ऋ. ७.६.१४।
३. इयक्षमाणा भृगुभिः सजोषाः। मा. १७.६९; का. १८.६.५; काठ. २१.९।
४. इष्टो यज्ञो भृगुभिराशीर्दा वसुभिः। तस्य न इष्टस्य प्रीतस्य द्रविणे हागमः। मा. १८.५६; काठ. १८.१८.११२, ३२.४; तै. ५.६.८.६; का. ५.४.१६,२०.३.६; क. २९.६।

**भृगूणामुत्कृष्टं तपः**

एतेषामुत्कृष्टतपवर्णनप्रसङ्गे कपालानां (दर्शपूर्णमासेष्टौ) प्रतपने वैशिष्ट्यं निरूप्यते। हे कपालानि, यूयं भृगूणामङ्गिरसां भृगुनामकानामङ्गिरोनामकानां देवर्षीणां तपसा तपोरूपेणाग्निनानेन तप्यध्वं तप्तानि भवत। अनेन मन्त्रेण प्रकटीभवति यद् भृगूणामुत्कृष्टं तप आसीत्[१]।

**भृगवो होतृपदभाजः**

प्रकृतौ यः कोऽपि होतेत्यत्रापि। तत्प्राप्तौ भृगुगोत्रोत्पन्न एवेति विशेष्यते—भार्गवो होतेति[२]। दशपेये भार्गवो होता।

**महर्त्विजोऽप्येते**

वासिष्ठभार्गवाङ्गिरसा अस्या महर्त्विजः क्रमशो भवन्ति। शेषाः काश्यपा भारद्वाजा भार्गवा आङ्गिरसो वा। वैश्वामित्रो होतेत्येके[३]।

**भृगवोऽप्सु विलीनस्याग्नेरन्वेषणकर्तारः पदचिह्नज्ञातारश्च**

इममग्निमुदकानां सह स्थाने उपचारं वदन्तो वा ऋषयः पदैः पलायनमार्गव्यञ्जकैर्नष्टं चोरादिभिरपहृतं पशुमिव अनुग्मन् अनुजग्मुः, तेषु मध्ये अप्सु विलीनं स्तोत्रैर्धीरा धीमन्तो भृगवः अविन्दन् लब्धवन्तः[४]। अप्सु विलीनस्याग्नेराविष्कारकाः प्रकटकर्तारो भृगव एव। भृगवस्तु वनस्थित-काष्ठस्थिताग्नेराविष्कारका अभूवन्निति पुरैव प्रोक्तम्।

**भृगोः पराक्रमः**

अङ्गिरसां सत्रमासीनानां यज्ञसाधनभूता गा अपहृत्य स्थितं बलनामानमसुरमिन्द्रो भृगुरिव विदारितवान्। अत्र मन्त्रे भृगुरिव-ग्रहणेन भृगोः पराक्रमः प्रदर्श्यते। अतो भृगोः पराक्रमः प्रशस्यो वर्तते[५]।

---

१. भृगूणामङ्गिरसां तपसा तप्यध्वम्। मा. १.१८; का. १.६.४; तै. १.१.७.२; काठ. १.७.२२, ३१.६; क. १.७; खि. ३.१५.३०; आप. श्रौ. ४.१२.१२; का.श्रौ. २.४.३७।

२. तै. १.८.१८.१।

३. वै.श्रौ. १२.१.१९।

४. इमं विधन्तो अपां सधस्थे पशुं न नष्टं पदैरनुग्मन्।
गुहा च तन्तमुशिजो नमोभिरिच्छन्तो धीरा भृगवोऽविन्दन्।। (ऋ. १०.४६.२)

५. इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न।
बिभेद बलं भृगुर्न ससहे शत्रून्मदे सोमस्य।। (शौ. ४.१४.५; कौ. २.३०४)

**अग्नेः संस्कारो भृगुभिर्निष्पादितः**

हे अग्ने त्वां भृगव एतत्संज्ञा महर्षयो मानुषेषु देवत्वप्राप्तये समस्कुर्वन्[१]।

**भृगवस्तक्षणकर्मकर्तारोऽपि**

भृगवो दीप्तास्तक्षाणः। 'भृगवो न रथम्'। एतेन ज्ञायते यदेते रथनिष्पादका आसन्[२]। 'भृगवो न रथम्'। रथकारा भृगवः। कर्मयोगाद् ऋभवो भृगव[३] उच्यन्ते। मन्त्रद्रष्टा सोमाहुतिनामको भार्गवो ब्रवीति यद् भृगवः अस्मत् पूर्वे महर्षय आसन्। एतेन भृगूणां प्राग्भवत्वं सोमाहुतेश्चार्वाग्भवत्वं संसूच्यते[४]।

भृगवो भृगुपुत्राः पापस्य भर्जका यमग्निं स्थापितवन्तः[५]।

**भृगोर्महत्त्वम्**

सर्वमापोमयं भूतं सर्वं भृग्वङ्गिरोमयम्।
अन्तरैते त्रयो वेदा भृगूनङ्गिरसः श्रिताः ।।

**भृगोर्महिमा**

ऐतरेयब्राह्मणे (२।२०) पूर्वेद्युः संपादिता वसतीवर्यः प्रातः संपादिता एकधना आपो यज्ञनिर्बहणे स्पर्धमाना वयं पूर्वं वयमिति ता भृगुनामक ऋषिरपश्यत्। स भृगुः 'समन्यायन्ती'-त्येतया ऋचा ता उभयीरपः परस्परमेकमत्यं प्रापयत्। अत्र तदभिमानिनी देवता अस्पर्धन्त इत्यवगन्तव्यम्। एष महिमा भृगोरेकमतीकर्तुम्।

एतद् वै तेजिष्ठं तेजो यद् भृग्वङ्गिरसाम्। (श.१.२.१.१३, तै.३.२.७.६)
महर्षीणां भृगुरहम्। (गीता)

**भृगु-प्रवराः**

भृगूनेवाग्रे व्याख्यास्यामः। जामदग्न्या वत्सास्तेषां पञ्चार्षेयो भार्गव-च्यावन-अप्नवान-और्व-जामदग्न्य इति (जामदग्न्याः) त्र्यार्षेयमुहैके भार्गवौर्वजामदग्न्येति।

एष एवाविकृतो जामाल्य ऐतिशायनविरोहितमाण्डव्यावटमण्डुवैदरेतवाह-प्राचीनयोग्यानामथार्ष्टिषेणानां पञ्चार्षेयः अर्ष्टिषेणानूपस्तेषां मुख्यौ। अथ वीतहव्या

---

१. भृगवः (ऋ. १.५८.६) नोधा द्रष्टा, दधुष्ट्वा भृगवो मानुषेष्वा।
२. ऋ. ४.१६.२०। ३. ऋ. १०.३९.१४।
४. ऋ. २.४.२। ५. या. ४.२३।

यास्कवाधूलमौनमौकरजातवाहास्तेषां त्र्यार्षेयो वैतहव्यसावेदसमुख्यौ। अथ वैन्याः पार्थास्तेषां त्र्यार्षेयो भार्गववैन्यपार्थेति। अथ गार्त्समदाः शुनकास्तेषामेकार्षेयो गार्त्समदेति होता गृत्समदवदित्यध्वर्युः। अथ बाध्र्यश्वा मित्रयुवस्तेषामेकार्षेयो बाध्र्यश्वेति होता बध्र्यश्ववदित्यध्वर्युः। लेखेऽस्मिन् षट्त्रिंशद् भार्गवाः सन्ति, एकश्च ऋचत्कः (ऋचीकः) इति। पुराणतो ज्ञायते यद् ऋचीक और्वस्य पुत्रः। तस्य नाम वेदे ऋचत्क इति। एतेषु ये खलु मन्त्रद्रष्टारस्तेषां नामानि मन्त्रसङ्ख्या च विलिख्यते—

| ऋषि-नाम | मन्त्र-संख्या | ऋषि-नाम | मन्त्र-संख्या |
|---|---|---|---|
| १. भृगुः | ३८ | ११. प्रयोगो भार्गवः | २२ |
| २. च्यवनः | ८ | १२. वेनो भार्गवः | २० |
| ३. और्वः (औरवः) | ६ | १३. सोमाहुतिर्भार्गवः | ३१ |
| ४. जमदग्निः | ५७ | १४. स्यूमरश्मिर्भार्गवः | १६ |
| ५. जामदग्न्यः (परशुरामः) | ११ | १५. आर्ष्टिषेणदेवापिः | १२ |
| ६. इटो भार्गवः | ४ | १६. सुमित्रबाध्र्यश्वः | ११ |
| ७. कविर्भार्गवः | ३५ | १७. पृथुर्वैन्यः | ५ |
| ८. कृत्नुर्भार्गवः | ९ | १८. पार्थस्तान्वः | १५ |
| ९. गृत्समदो भार्गवः शौनकः | ४०५ | १९. एतशो वातरशनः | १ |
| १०. नेमो भार्गवः | १० | | ७१६ |

अन्येषामाचार्याणां प्रवराणां नामानि—

२०. ऋचीकः
२१. अप्नवानः
२२. जामाल्यः
२३. ऐतिशायनः (एतशः)
२४. विरोहितः
२५. माण्डव्यः
२६. अवटः
२७. मण्डुः
२८. वैदः
२९. रेतवाहः
३०. प्राचीनयोग्यः
३१. अनूपः
३२. यास्कः
३३. वाधूलः
३४. मौनः
३५. मौकः
३६. रजातवाहा सावेदसः

**भार्गव-साम**—प्रायणीयायामिष्टौ प्रवद्भार्गवं साम गायेत्।
(ला.श्रौ. १.६.२०)

भृगवो मन्त्रस्य देवता:—बृ दे. १.१२८, ६.१५६, ८.१२५ स्थलत्रये द्युभक्तयो भृगुगणाः संस्तूयन्ते। आग्निवेश्यगृह्यसूत्रे १.२.२, ११ भृगुभ्य:, तत्रैव २.५.३, ३२ भृगून् पदद्वयं समायातम्।

अथर्वपरिशिष्टे ४८.१३४, १३९ भृगव: अन्यैर्देवै: सह समागता:। भृगव: नाम पठितम्।

अथर्वपरिशिष्टे ४३.३.१७ भृगुं तर्पयामि। तर्पणप्रसङ्गे समायात:।

अथर्वपरिशिष्टे ६९.१.१ उपसंगम्य मुनय: सर्वज्ञं शान्तमानसम्।
अपृच्छन्गतमात्सर्यं भृगुं ब्रह्मविदं परम्।।

अथर्वपरिशिष्टे ७०.१.१ संपूज्य विधिवत्प्राज्ञं विद्वांसो मुनय: पुरा।
अपृच्छन्भृगुमव्यग्रं सर्वसत्त्वहिते रतम्।।

अत्र परिशिष्टे भृगु: सर्वज्ञ:, शान्तमानस:, गतमात्सर्य:, ब्रह्मविद्, प्राज्ञ:, अव्यग्र:, सर्वसत्त्वहिते रत: प्रमाणित:।

**भार्गवविषये किमपि वैशिष्ट्यम्**

अथर्वपरिशिष्टे २५.१.२ भार्गवाय कुण्डलक्षणमाचष्टे।

अथर्वपरिशिष्टे ४६.२.३. भार्गवैर्विपर्यस्तां जुहुयात्।

अथर्वपरिशिष्टे ५१.१.४ **भार्गवस्य जन्मस्थानम्**—महाराष्ट्रे तु भार्गवो जात:।

अथर्वपरिशिष्टे ६३.४.४—धान्यार्थं च प्रियं कुर्यात् परिविष्टो भृगो: सुत:।
ताराग्रहपरिवेषा नक्षत्राणां च केवलम्।।

भार्गव: शुक्रो ग्रह: परिवेषयुक्तो धान्यमूल्यं वर्धयति।

**मित्रकरणम्**—मातरिश्वा वायुर्भृगवे अग्निं मित्रमकरोत्। (ऋ. १.६०.१)

**नाकस्तम्भनम्**—मातरिश्वा वायु: भृगुभ्य: आदित्यस्य रश्मिभ्य: अग्निं समैन्ध तदा नाकमस्तभ्नात्। (ऋ. ३.५.१०)

अयं भृगुर्भृगुगोत्रीयै: प्रवरैस्सह पठित:। अप्नवानवदौर्ववद् भृगुवज्जमदग्निवत्। (खि. ४.९.२)

**देवापिः आर्ष्टिषेणः**—ऋष्टिषेणपुत्रः (ऋ. १०.९८) पृष्टिकामो देवां- स्तुष्टाव। ऋ. ७. १८.६: यज्ञकुशलः पुरोगामी तुर्वशो नाम राजासीत्। स तुर्वशो राये धनप्राप्तये इन्द्रस्य सखायं सुदासं जगाम। जालनिहता मत्स्या इव नियन्त्रिता अपि भृगवो द्रुह्यवश्च योधाश्च सुदासस्य तुर्वशस्य च आशुप्राप्तिं चक्रुः। विष्वगञ्चतोरुभयोर्मध्ये सखा सुदासश्चेन्द्रः सखायं सुदासमतारयत् तुर्वशं चावधीत्।

"पुरोडा इत्तुर्वशो यक्षुरासीद्राये मत्स्यासो निशिता अपीव।
श्रुष्टिं चक्रुर्भृगवो द्रुह्यवश्च सखा सखायमतरद्विषूचोः"।।

(ऋ. ७.१८.६)

प्रसुन्वानस्यान्धसो मर्तो न वृत तद्वचः।
अप श्वानमराधसं हता मखं न भृगवः।। (ऋ. ९.१०१.१३)

सुन्वानस्य सोमस्य तत्प्रसिद्धं वचः घोषं मर्तः मारकः कर्मविघ्नकारी श्वा न प्र वृत न भजताम्। न श्रृणोत्विति यावत्। हे स्तोतारः, अराधसं संसाधककर्मरहितं तं श्वानम् अपहत। तत्र दृष्टान्तः मखं न। यथा पुरापराद्धं मखमेतन्नामानं भृगवः अपहतवन्तः, तथापहतेत्यर्थः। ऋ. १०.९२.१० ते हि प्रजाया अभरन्तविश्रवो बृहस्पतिर्वृषभः सोमजामयः यज्ञैरथर्वा प्रथमो विधारयद् देवा दक्षैर्भृगवः सं चिकित्रिरे। अथर्वणा कृतं यज्ञं गत्वा पशून् संज्ञातवन्तः।

ऋ. ६.१५.२ मित्रं न यं सुधितं भृगवो दधुर्वनस्पतावीड्यमूर्ध्वशोचिषम्। स त्वं प्रीतो वीतहव्ये अद्भुतप्रशस्तिभिर्मह्यसे दिवे दिवे। दत्तहविष्के, एतत्संज्ञ ऋषौ। अत्र वीतहव्यनामा ऋषिर्दृश्यते। इत्थं भृगोर्वैशिष्ट्यं बहुधोपवर्णितम्।

**षट्त्रिंशद् भृगूणां वेदोपबृहंणे योगस्तेषां परिचयश्च**

**१.** तेषु सर्वप्रथमं **भृगोर्योगः परिचयश्च** प्राग् निरूपितौ।

**२. च्यवनस्य भार्गवस्य योगो**ऽपि पूर्वमेव 'सारस्वती सुषमा'-पत्रिकायां ४५ वर्षे ३-४ अङ्कयोर्मार्गशीर्ष-फाल्गुनपूर्णिमे दिसम्बर-मार्च १९९०-९१ ई. "वेदवेदाङ्गेषु भार्गवस्य च्यवनर्षेः स्वरूपविवेचनम्" इति शीर्षकमाश्रित्य १७३- १७६ पृष्ठेषु प्रकाशितः।

अथ सर्वप्रथमं मूलपुरुषादारभ्य पुत्रपरम्परया प्राप्तानां षण्णामृषीणां मन्त्रसंख्या निर्दिश्यते—

| | | दृष्ट-मन्त्रसंख्या | | मन्त्र-संख्या |
|---|---|---|---|---|
| | १. भृगुः (मूलपुरुषः) | ३८ | कविर्भार्गवः | ३५ |
| कविः | २. च्यवनो भार्गवः | ८ | उशना-काव्यः | ३३ |
| उशना-काव्यः | ३. और्वः और्वः | ६ | | ६८ |
| | ४. ऋचीकः (ऋचत्कः) | ० | | |
| | ५. जमदग्निः (भार्गवः) | ५७ | | |
| | ६. परशुरामः (जामदग्न्यः) | ११ | | |
| | | १२० | | |

उशना काव्यस्तु गोतमेषु संपठितः।

[महर्षीणां भृगुरहम् (गीता-१०।२५), कवीनामुशना कविः (गीता-१०।३७)]

| | | | |
|---|---|---|---|
| ७. इटो भार्गवः | ४ | १६. आर्ष्टिषेणदेवापिः | १२ |
| ८. कृत्नुर्भार्गवः | ९ | १७. सुमित्र-बाध्र्यश्वः | ११ |
| ९. सोमाहुतिर्भार्गवः | ३१ | १८. पृथुवैन्यः | ५ |
| १०. स्यूमरश्मिर्भार्गवः | १६ | १९. पार्थस्तान्वः | १५ |
| ११. प्रयोगो भार्गवः | २२ | २०. एतशो वातरशनः | १ |
| १२. गृत्समदभार्गवः शौनकः | ४०५ | | ५९६ |
| १३. कविर्भार्गवः | ३५ | | + १२० |
| १४. वेनो भार्गवः | २० | | ७१६ |
| १५. नेमो भार्गवः | १० | | |

## ३. और्वर्षेर्वेदोपबृंहणे सहयोगस्तेषां परिचयश्च

ऋषेरस्याष्टस्थानेषु संहितासु नामानि समायान्ति।

तत्र तै. ७.१.८.१ : 'अत्रिरददादौर्वाय प्रजां पुत्रकामाय'। उर्वस्य पुत्र और्वः। स च पुत्रकामोऽत्रिं याचितवान्। तस्मै सोऽत्रिः स्वकीयां प्रजां ददौ। अत्रास्य नाम्नः समायातेन पूर्वतनोऽयमृषिः। ऋ ८.१०२.४ समानम्। तै. ३.१.११.३३ अत्र और्वभृगुवद् अप्नवानवत् समुद्रवाससं शुचिमग्निमाहुवे। और्वस्य भृगोश्च नामान्यत्र समागते। अग्नेराह्वाने तेषां वैशिष्ट्यं द्योत्यते, प्राग्भवत्त्वञ्च। विश्वेदेवा ऋषयः कथयन्ति। अयमेव मन्त्रः काठ. सं. ४०.१४.१२५ समायातः।

कौ. १.१८ समानम्। खि. ४.९.२ समानम्। ऐतरेयब्राह्मणे ६।३३ यस्मात् पित्रा शापो दत्तस्तस्मात् कारणात् तद्वृत्तान्ताभिज्ञा जना एवमाहुः। और्वाणां और्वगोत्रोत्पन्नानां पुरुषाणां मध्ये ऐतशायना एतशस्य मुनेः सम्बन्धिनोऽभ्यग्नयोऽभ्यग्निमुखाः पुरुषाः पापिष्ठा अत्यन्तपापयुक्ताः। तस्मादाहुरभ्यग्नय ऐतशायना और्वाणां पापिष्ठा इति। एतेन ज्ञायते यद् और्वेषु ऐतशायनाः पापिष्ठा आसन्, नान्ये और्वाः। और्वाणां महती समृद्धिरासीत्। वै.श्रौ. ३.९.५ समानम्।

हि. श्रौ. १.४.९ : और्वो गौतमो भारद्वाजः शुश्रुवान् ग्रामणी राजन्य इति सर्वत्र कामं महेन्द्रं यजेरन्। एते षड् गतश्रियः। गता प्राप्ता श्रीर्येन स गतश्रीः। एतेन और्वाणां गतश्रियत्वं प्राप्यते। अर्थाद् महदैश्वर्यम्।

हि. श्रौ. २२.६.२१ : और्वभृगुवच्छुचिमिति संयाज्ये।

आप. श्रौ. १.१४.१० : और्वो गौतमो भरद्वाजस्तेऽनन्तरं सोमे ज्याया महेन्द्रं यजेरन्।

वै.श्रौ. ३.९.५ और्वो भारद्वाजो गौतमः शुश्रुवान् ग्रामणी राजन्य इति सर्वत्र कामं महेन्द्रं यजेरन्। हि.श्रौ. १.४.९ समानम्।

हि.श्रौ. ११.५.७ ऊर्व-उसं जुषस्व मधुमन्तमूर्व।

या. ६.७ : ऊर्व इव पप्रथे कामो अस्मे—हे इन्द्र अस्माकं कामः अभिलाषः ऊर्व इव वडवामुखेऽवस्थितोऽनवाप्तकामोऽपां पानेऽग्निरिव पप्रथे प्रथते विस्तीर्यते।

अङ्ग औरवः 'तव त्ये' इति षड् ऋचं दशमं सूक्तमुरुनाम्नः पुत्रस्याङ्गाख्यस्यार्षं जागतमैन्द्रम्। तथा चानुक्रान्तम् 'तव त्ये' षडङ्ग औरवो जागतम्।

## ४. ऋचत्कः (ऋचीकः)

शरस्य चिदार्चत्कस्यावतादानीचादुदुच्चा चक्रथुः पातवे वाः। शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम्।। (ऋ. १.११६.२२)

उशिक्संज्ञायामङ्गराजस्य महिष्यां दास्यां दीर्घतमसोत्पादितः कक्षीवान् अस्य सूक्तस्य ऋषिः। अथवा उशिजस्य पुत्रः। अश्विनौ देवता। 'नासत्याभ्यां पञ्चाधिका कक्षीवान् दैर्घतमस उशिक्प्रसूत आश्विनं वै'।

आर्चत्कस्य ऋचत्कपुत्रस्य शरस्य एतत्संज्ञस्यापि स्तोतुः पिपासितस्य पानार्थं नीचात् नीचीनात् अवतात् कूपात् उच्चा उच्चैरुपरिष्टात् वा, उदकं हे

अश्विनौ युवाम् आ चक्रथुः आभिमुख्येन कृतवन्तौ। तथा हे नासत्यावश्विनौ शचीभिः युष्मदीयैः कर्मभिः परिचरणैः जसुरये श्रान्ताय शयवे चित् शयुनाम्ने ऋषये स्तर्यं निवृत्तप्रसवां गाम् अग्निहोत्रार्थस्य पयसो दोग्ध्रीं पिप्यथुः पयसा युवामापूरितवन्तौ।

अत्र ऋचत्क(ऋचीक)पुत्रस्य शरस्य विषये ऋङ्मन्त्रेऽस्तित्वं विराजते, नाधिकमतो वाङ्मये। पुराणभागे अस्य ऋचीकर्षेः परिचयो दास्यते।

**अथर्वपरिशिष्टे ऋचीकपुत्रः**

गौतमोऽत्रिर्वसिष्ठश्च विश्वामित्रस्तु कश्यपः।
ऋचीकपुत्रश्च तथा भरद्वाजश्च वीर्यवान्।।
एते सप्त महात्मान उदीच्यां स्थावराः स्मृताः।। (अ.प. ५२.१०.३)

ग्रहसंग्रहः स्थावराः (कूटस्थानानि)। उद्धरणेनानेन स्पष्टतया प्रतीयते यद् ऋचीकपुत्रस्य पठनेन ऋचीकस्य ऋषेः ऋचीकपुत्रस्य जमदग्नेरस्तित्वं द्योत्यते। नहि केवलं जमदग्नेः, अपि तु ऋचीकस्यापि।

## ५. जमदग्नेर्वेदोपबृंहणे योगस्तस्य परिचयश्च

**नामनिर्वचनम्**—'जमत् इति ज्वलतिकर्मसु' (निघ. १.१७) पाठाज्जमच्छब्दो दीप्तिवचनः। जमन्तः ज्वलन्तः अग्नयो यस्य स जमदग्निः। महीधरानुसारं जमति जगत्पश्यतीति जमन्। अङ्गति सर्वत्र गच्छतीत्यग्निः। ऋषति जानाति ऋषिः। ईदृशं यच्चक्षुस्तद्रूपां सादयामि। चक्षुर्वै जमदग्निर्ऋषिर्यदेनेन जगत्पश्यत्यतो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः (८.१.२.३) इति श्रुतेः। अग्नि-चयनयज्ञे उत्तरश्रोणेरारभ्य इष्टकानां द्वितीयं दशकमुपदधाति। अतश्चक्षुस्स्वरूपो जमदग्निर्ऋषिः स्वीकृतो वर्तते। प्रजापतिसृष्टया त्वयेष्टकया प्रजार्थं चक्षुर्गृह्णामि[१]। अत्र मन्त्रे जमदग्नेर्वैशिष्ट्यं निरूप्यते। नामस्वरूपं २१ सन्दर्भे वक्ष्यते। एकस्मिन् मन्त्रे यजमानो जमदग्निमुनिसदृशः अर्चन् स्तुतिभिः पूजयन् वर्णितः। एतेन सूच्यते यज्जमदग्निर्ऋषिरिन्द्राय बृहत्सोमपानं जानाति स्म[२]। जमदग्नेर्मुनेर्यत् त्र्यायुषं त्रयाणां बाल्ययौवनस्थविराणामायुषां समाहारस्त्र्यायुषं नः स्यात्। एतस्य बाल्यादीनां यादृशं

१. मा.सं. १३.५६ : जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः। का. १४.७.६.; काठ. १६.१९; क. २५.९; तै. ४.३.२.२, श. ८.१.२.३।

२. इन्द्राय ब्रह्म जमदग्निरर्चन्। (तै. २.२.१२.४; काठ. २०.९.; क. ३१.११)

चरितं तादृशं नो भूयात्। इति महीधरः। एतेन व्यज्यते यदायुष्यवर्धयिता जमदग्निः[१]।

**जामदग्न्यश्चतूरात्रः**—जमदग्निरेताँल्लोकप्रसिद्धान्प्रजापशुधनपोषानपुष्यत् संपादितवान्। यस्मादेव जमदग्निः पुष्टिहेतुयागप्रवर्तकस्तस्माज्जामदग्नियौ तद्वंशोत्पन्नौ द्वौ पितृपुत्रौ पुष्टिमन्तरेण वृथैव पलितौ दरिद्रौ न जानाते नोत्पद्येते। यद्वा वृथैव पलितं स्वकीयं देहं न जानाते। अयमर्थः—पुष्टिसम्प्रदायस्य जमदग्निना प्रवर्तितत्वात्तद्वंशे कोऽपि दरिद्रो नास्ति, यदि कश्चित् स्यात् प्रमादात् तथापि नैरन्तर्येण द्वौ पुरुषौ पुष्टिमन्तरेण वृथा पलितौ न स्तः। एतेन संसूच्यते यज्जमदग्निस्तु सर्वविधसम्पन्न आसीत्, तदात्मजः श्रीपरशुरामो जामदग्न्योऽपि सर्वविधपुष्टिमानासीत्[२]।

जमदग्नी राज्ञः सोमस्य भक्षेण वीर्यवता ब्रह्मणा चतुरुत्तरैः छन्दोभिः सदा आप्यायते वृद्धिं प्रयाति। तस्य वर्धनाद् नः प्रदिशः दिशश्च कल्याणकारिण्यः स्युः। एतेन जमदग्नेः सततवृद्धिर्द्योत्यते[३]।

**जमदग्निर्मनुष्याणामनुग्रहार्थमुपदेष्टा**

आकाशादिरूपेण निष्पन्नं यदक्षरं ब्रह्म तत् सर्वे देवा उपासते। अस्याक्षरस्य गोप्तारं जमदग्निमकुर्वत। देवास्स्वपुरुषार्थसिद्ध्यर्थं स्वयमुपासते। मनुष्याणामनुग्रहार्थं जमदग्निमुपदेष्टारमकुर्वत[४]।

**मित्रावरुणयोस्स्तोता जमदग्निः**

हे मित्रावरुणौ जमदग्निना स्तूयमानौ यज्ञस्य देवयजनाख्ये देशे युवामुपविशतम्। कर्मफलस्य वर्धयितारौ सोमं पिबतम्। ऋगियं मैत्रावरुणस्य याज्या आश्वलायनश्रौतसूत्रे विनियुक्ता (५.५)। आश्वलायनगृह्यसूत्रेऽपि

---

१. त्र्यायुषं जमदग्नेः। (मा. ३.६२; का. ३.९.४; खि. ५.३.३)

२. जमदग्निः पुष्टिकामश्चतूरात्रेणायजत स एतान्पोषान् अपश्यत् तस्मात् पलितौ जामदग्नियौ न संजानाते। एतानेव पोषान्पुष्यति य एवं विद्वाँश्चतूरात्रेण यजते।
तै. ७.१.९.१ : ताण्ड्य-ब्रा. विशेषः—यदिदमाहुर्न वा ऊर्वौ पलितौ संजानाते। ऊर्वपुत्रौ जामदग्न्यौ पलितौ सन्तौ न संजानाते दरिद्रौ नोत्पद्येते। (तां. २१.१०.५)

३. जमदग्निराप्यायते छन्दोभिश्चतुरुत्तरैः। राज्ञः सोमस्य भक्षेण ब्रह्मणा वीर्यवता शिवा नः प्रदिशो दिशः। (खि. ५.३.४)

४. यदक्षरं भूतकृतं विश्वेदेवा उपासते। महर्षिमस्य गोप्तारं जमदग्निमकुर्वत।
(तै.आ. १.९.६, खि. ५.३.३)

अध्यायोपाकरणे मण्डलाद्यन्तहोमे (३.५.७) प्रयुक्ता[१]। सरस्वतीस्तुतिमन्त्रद्रष्टायम्[२]। अश्विनोः स्तुतिं कुर्वन् तयोः सकाशाद् रातिं दानमाह्वयति[३] सोमं स्तौति-जमदग्निना स्तूयमानस्त्वं गोयुक्ताभिरन्नानि देहि[४]। जगदग्निदत्ता वाक् सूर्यदुहिता वाक् देवेष्वमृतं तनोति[५]। विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेतां स एतज्जमदग्निर्विहव्यमपश्यत् (तै. ३.१. ७.३) तेन प्रतिस्पर्धिन इन्द्रियसामर्थ्यं वृङ्क्ते विनाशयति। यथा जमदग्निर्वसिष्ठस्य वीर्यं तद्वत्। (तां. ९.४.१४)

**जमदग्नितपसा पृश्नीनां प्राप्तिः**

तामृषिभ्यस्तिरोदधात्तां जमदग्निस्तपसापश्यत्तया वै स पृश्नीन्कामानसृजत तत्पृश्नीनां पृश्नित्वं यत्पृश्नयो गृह्यन्ते पृश्नीनेव तैः कामान् यजमानोऽवरुन्धे वायुरसि प्राणः। (तै. ३.३.५.२) एतेन ज्ञायते यदन्ये ऋषयः पृश्नीनां ज्ञानं नाप्नुवन्। जमदग्निस्तपसा पृश्नीनां ज्ञानमवाप्नोत् तप आचरन्। पृश्नयस्तु कामधेनवः। जमदग्निस्तपः कृत्वा विराजमपश्यत्। नान्यः कश्चनर्षिरेवं तपः कृत्वा विराजमपश्यत्। सर्वप्रथमं "त्वा विभूमन् ऋतस्य त्वा विधर्मण ऋतस्य त्वा ज्योतिषे प्रजापतिर्विराजमपश्यत्तया भूतं च भव्यं चासृजत। तां विराजमृषिभ्यो न प्रकाशितवान्।

तदा जमदग्निस्तपः कृत्वा विराजमपश्यत्। जमदग्निस्तया विराजा पृश्नीन्धेनुस्वरूपान्कामान्भोगानसृजत। पृश्निमन्त्रः (तै. ५.२.१०.५)— "या उदीचीस्ताभिर्जमदग्निर्या......(अयस्या उपदधाति) ऊर्ध्वास्ताभिर्विश्वकर्मा य एवमेतासामृद्धिं वेदर्ध्नोत्येव य आसामेवं बन्धुतां वेद बन्धुमान् भवति य आसामेवं क्लृप्तिं वेद।"

एतेनेत्थं विज्ञायते यत्तपसा प्रजापतिर्विराजमपश्यत्। सः प्रजापतिर्विराजमृषिभ्यो न प्रकाशितवान्। परं तपसा जमदग्निर्विराजमपश्यत् तया पृश्नीनां धेनूनां प्राप्तिं चकार। तया विराजा सर्वान्कामानवाप्नुयात्।

---

१. गृणाना जमदग्निना यो ना वृतस्य सीदतम्। पातं सोममृतावृधा। (ऋ. ३.६२.१८, कौ. २.१५, आश्व.गृ. ३.५.७)

२. ऋ. ७.९६.३ : गृणाना जमदग्निवत्।

३. रातिं यद् वामरक्षसं हवामहे....गृणाना जमदग्निना। (ऋ. ८.१०१.८)

४. ऋ. ९.६२.२४, ९.६५.२५।

५. ऋ. ३.५३.१५, खि. ४.९.२।

## जमदग्नेस्तपोमाहात्म्यम् (अद्वितीय ऋषिः)

प्रजापतिरेव विराजमजानात्, विराजा सर्वं जगत्सृष्टवान्, न हि कश्चनर्षिः। केवलं जमदग्निरेव तपसा विराजमपश्यत्। स एव पृश्निस्वरूपान् कामान् भोगानसृजत। तस्य पार्श्वे कामधेनुरासीदिति पुराणेभ्यो ज्ञायते, तत्तु पौराणिकभागे वक्ष्यते। अतो वैदिकभागेऽस्य विभूतिमत्त्वमुदीरितम्। अग्निचयनयज्ञे पञ्चचितिनिर्माणप्रसङ्गे अयस्या इष्टकानामुपधाने महत्त्वमेतच्छ्रूयते।

## अस्माकं महत्याकाङ्क्षा

वयं जमदग्निवद् आर्षेयं द्रविणं प्राप्नुयाम[१]। क्रिमिनाशनं, जमदग्निवत्[२]। हे मित्रावरुणौ यथा युवां जमदग्निमवथस्तथा नः अंहसो मुञ्चतम्[३]। त्र्यायुषकरणे पूर्वमुक्तम्, तथाप्यत्र विशेषः[४]।

## ओषधेराविष्कारको जमदग्निः

स्वदुहितृकृते केशवर्धिन्या ओषधेः परिज्ञानकर्तायमृषिः। ओषधेः खननकर्ता। तामोषधिं वीतहव्यनामर्षिरसितस्य नामकर्षेर्गृहादानीतवान्[५]। एतेनेदमभिसमर्थ्यते यत्सर्वप्रथमः खनको जमदग्निः। एकादश-ऋषि-सहितो जमदग्निरस्माकं रक्षणकर्ता भवतु[६]।

विश्वामित्र-जमदग्ने......सुशंसासः पितरो मृडता नः[७]।

## जमदग्निः प्रजापतिः

न तथा कुर्याज्जामदग्नीभिरेवाप्रीणीयात्। प्रजापतिर्वै जमदग्निः, सोऽश्वमेधः स्वयैवैनन्देवतया समर्द्धयति तस्माज्जामदग्नीभिरेवाप्रीणीयात्[८]।

---

१. अमी नो अर्षदिव्या वसून्यभिविश्वा पार्थिवा पूयमानः अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः। (कौ. २.७७८)

२. ऋ. ९.९७.५१, शौ. २.३२.३, तै.आ. ४.३६.१।

३. मित्रावरुणा जमदग्निमत्रिम्। तौ नो मुञ्चतमंहसः। (शौ. ४.२९.३)

४. त्रेधामृतस्य चक्षणं त्रीण्यायूंषि तेऽकरम्। (शौ. ५.२८.७)

५. यां जमदग्निरखनद् दुहित्रे केशवर्धिनीम्।
तां वीतहव्य आभरदसितस्य गृहेभ्यः।। (शौ. ६.१३७.१)

६. कण्वः कक्षीवान् पुरुमीढोऽगस्त्यः श्यावास्यः सोमर्यचनानाः।
विश्वामित्रोऽयं जमदग्निरत्रिरवन्तु नः कश्यपो वामदेवः।। (शौ. १८.३.१५)

७. जमदग्निसहिता अन्ये सप्त ऋषयस्तथा पितरो नः सुखं प्रयच्छन्तु। (शौ. १८.३.१६)

८. श. १३.२.२.१४।

**जमदग्नि-ऋषिः प्राणस्वरूपः**

इमावेव विश्वामित्र-जमदग्नी। अयमेव विश्वामित्रोऽयञ्जमदग्निः। प्राणा वा ऋषयः। प्राणोपनिषदो व्याख्यानम्[1]। पा. ४.१.१०५ गर्गादिगणेऽस्य नाम समायातम्। निरुक्ते—यमदग्निभिराहुत इति। यमदग्नयो ह्येनमाहुतिभिर्जुह्वति नादित्यमभिधानादसम्भवाच्च। यमदग्नयः प्रयमिताग्नयो वा प्रज्वलिताग्नयो वा तैरभिहुतो भवति। प्रयमिताग्नयो नित्यं प्रभूताग्नयः। एतेनेदं सिद्ध्यति यत् प्रज्वलिताग्नयो नित्यं प्रभूताग्नयो यमदग्नयो भवन्ति[2]। समावर्तनकाले स्नानप्रसङ्गे स्नातकः सुमनसः पुष्पाणि माला वा परिगृह्णाति। "या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय। ता अहं प्रतिगृह्णामि यशसा च भगेन च"।। अत्र जयरामभाष्ये—याः सुमनसः पुष्पाणि जमदग्निः प्रजापतिः श्रद्धाद्यर्थमाहरत्। आददे ताः सुमनसो यशसा कीर्त्या भगेनैश्वर्येण च सहाहं प्रतिगृह्णामि श्रद्धाद्यर्थम्। अत्र जमदग्निः प्रजापतिरूपेण प्रथितः।

गदाधरभाष्येऽपि जमदग्निः प्रजापतिरूपेणाङ्गीकृतः। तत्र श्रद्धा धर्मादरः। मेधा धारणाशक्तिः। कामोऽभिलाषपूर्तिः। इन्द्रियं तत्पाटवम्। एतेषां चतुर्णां शब्दानामर्थो जयरामभाष्येऽपि[3]।

कुशिकानामचेतनत्वे जमदग्निभिर्वागाहृत्य तेषाममतित्वं दूरीकृतम्। अत्राख्यानम्। शक्तिः सुदासयज्ञे गाथिसूनोश्चेतो बलान्निगृहीतस्तेन स विचेतनो जातः। तस्य वागाहृता। जमदग्नयः सूर्यनिवासाद् ब्राह्मीं सौरीं ससर्परीं वाचमाहृत्य तेभ्यः कुशिकेभ्यो दत्ता ततस्ते चेतनतामापुः। आख्यानमिदं जमदग्नीनां विभूतिं साहसं तपो महत्त्वं च निरूपयति[4]। सप्तर्षिनामानि—विश्वामित्रो जमदग्निर्भरद्वाजो

---

१. श. १४.५.२.६, बृ.उ. ३.२.२.४।

२. या. ७.२४।

३. पा.गृ. २.६.२३।

४. ऋ. ३.५३.१५-१६; बृ.दे. ४.११२-११४ :

सुदासश्च महायज्ञे शक्तिना गाधिसूनवे।
निगृहीतं बलाच्चेतः सोऽवसीदद् विचेतनः।
तस्मै ब्राह्मीं तु सौरीं वा नाम्ना वाचं ससर्परीम्।।
सूर्यक्षयादिहाहृत्य ददुस्ते जमदग्नयः।
कुशिकानां ततः सा वाग् अमतिं तामपाहनत्।।

गौतमोऽत्रिर्वसिष्ठः काश्यप इत्येते सप्तर्षयः। अत्र आसनानि कल्पयति विश्वामित्राय जमदग्नये[१]। तर्पणप्रसङ्गे जमदग्निर्विहितः[२]।

त्रिर्जमदग्नीनां दर्शपूर्णमासयोर्हविषि व्रीहीन्यवान्वा गृह्णीयात्। तत्र जमदग्नीनां कृते त्रिरवद्येत्[३]। पञ्चावत्तं जमदग्नीनामिति वचनात्। तथा हि—

जमदग्निर्वत्सविदावार्ष्टिषेणास्तथैव च।
पञ्चावत्तिन एतेऽन्ये सर्वे चतुरवत्तिनः।।

इति कर्काचार्यभाष्यस्य टिप्पण्याम्। जमदग्नीनामेव पञ्चावत्तं चतुरवत्तमितरेषाम्। अप्यजामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्तं कुर्वीत[४] अद्भ्यश्च त्वौषधीभ्यश्चेति पञ्चमं जमदग्नीनाम्[५]। अवदानानि व्रीहीभ्यो यवेभ्यो वा ग्राह्याणि, तेषां होमो विधीयते। जमदग्निर्भृगुप्रवरेष्वेकः[६]।

इत्थं जमदग्निः सप्तपञ्चाशत्, ३.६२.१६-१८; ८.१०१.१६; ९.६२.३०; ९.६७.१६-१८; १०.१३७.६; १०.१६७.४ मन्त्राणां द्रष्टा। जमदग्नेराश्रमः जामदग्नः। विश्वामित्रजमदग्नी जामदग्ने तपतः।

## ६. जामदग्न्यः श्रीपरशुरामः

विष्णोर्दशस्ववतारेषु केवलं परशुराम एव ऋग्वेदस्य एकादशमन्त्राणां द्रष्टा, नान्यः कश्चनावतार एतादृशः। रामशब्दस्य प्रयोगः संहिताब्राह्मणयोः पञ्चकृत्वो दरीदृश्यते, तत्र स्पष्टरूपेण दाशरथे रामस्य वासुदेवस्य श्रीकृष्णस्य बलरामस्य वा नाम नोपलभ्यते। परशुरामस्य नाम ऐतरेयब्राह्मणे भार्गवेयो नाम रामस्य वर्तते। यदा तु भार्गवेयस्तदा भवितुमर्हति। "अयमहमस्मि वो वीर इति होवाच रामो भार्गवेयः" इति। रामो हास भार्गवेयोऽनूचानः। श्यापर्णीय इति। अनूचानः साङ्गवेदशास्त्रपारङ्गत आस। दशममण्डलस्य १०.११० सूक्तस्य द्रष्टा रामो जामदग्न्य इति सर्वानुक्रमे। चतूरात्रयज्ञस्य प्रयोगकर्ता यज्ञप्रवर्तको जमदग्निरासीत्। तस्य पुत्रोऽयं परशुरामोऽपि यज्ञप्रभावेण पुष्टिमानभवत्। यतः पितृपुत्रौ

---

१. आग्निवेश्यगृह्यसूत्रे-१.२२.१५।

२. शां.गृ. ४.१०.३, वै.श्रौ. ६.६.५।

३. का.श्रौ. १.९.३।

४. भा.श्रौ २.१७.६, वा. १.११.३०, आप.श्रौ. २.१८.२-३, वै.श्रौ. ६.६.५।

५. आप.श्रौ. ६.८.२।

६. गोपथब्राह्मणे-१.२.८।

प्रजापशुधनपोषादिभिर्युक्तौ समृद्धतमावभवताम्। जामदग्नियौ पदभाजौ। कपिवनो भायजात्यश्चतूरात्राय जामदग्नये दिदीक्षे। जामदग्न्याय इति पाठान्तरम्। चतूरात्रनामकयज्ञाय दीक्षां दत्तवान्। एतेन सिद्ध्यति यत् परशुरामश्चतूरात्रयज्ञ-कर्ताऽऽसीत्[१]।

भार्गवो जमदग्निर्ऋषिस्तस्य पुत्रो रामो वा यः परशुराम इति प्रख्यातः। आप्रीसूक्तमिदम्—अनुक्रान्तं समिद्ध एकादश जमदग्निस्तत्सुतो वा राम आप्रियः। इति। पशौ जामदग्न्यानामिदमाप्रीसूक्तम्। प्राजापत्ये तु जामदग्न्यः सर्वेषाम् (आश्व. श्रौ. ३.२) इति।

**७. इटो भार्गवः**

सायणभाष्ये भृगुपुत्रः। दशममण्डलस्य एकसप्तत्यधिकशततमसूक्तस्य चतसृणामृचां द्रष्टा।

शौ. ६.१४.३ मन्त्रे इट इव भाष्ये इत इव प्रयोगो दृश्यते।

शौ. ९.३.१८ इटस्य ते विचृताम्यपिनद्धमपोर्णुवन्।

वरुणेन समुब्जितां मित्रः प्रातर्व्युब्जतु।।

ऋ. १०.१७१.१ भाष्यम्—हे इन्द्र सुतावतः सुतेनाभिषुतेन सोमेन युक्तस्य इटतः इटस्य एतत्संज्ञकर्षेः त्यं तं प्रसिद्धं रथं प्रावः प्रारक्षः। सोमिनः सोमयुक्तस्य मम हवमाह्वानम् अशृणोः शृणु। अस्मिन् मन्त्रे इटस्य ऋषेर्नाम समायातम्। उपर्युक्तयोर्मन्त्रयोरपि नाम परिदृश्यते। संहितायामेतदेव विवरणं वेदाङ्ग ऋ. अ., २.१०.१७१ कौ. सू. २९.३०, बौ. गृ.४.१२ ला. श्रौ. ७.४.१ ग्रन्थेषु नामान्यापतितानि।

**८. कृत्नुर्भार्गवः**

अत्रेयमनुक्रमणिका—अयं कृत्नुर्नवकृत्नुर्भार्गवः। भार्गवः कृत्नुर्ऋषिः। सोमो देवता। अनुक्रमणिकया ज्ञायते यदयं कृत्नुर्ऋषिः। भार्गवः भृगुवंशोद्भवः। नवर्चसूक्तस्य द्रष्टा। ऋ. ८.७९ सूक्तस्य "अयं कृत्नुः" इति सूक्तद्रष्टा। ८.७९ मन्त्रे कृत्नवे इति पदं कृत्नुशब्दस्य चतुर्थ्येकवचने रूपम्। यद्यपि तत्र सायण इन्द्रशब्दस्य विशेषणं मनुते। परं कृत्नुशब्दः ऋषिवाचकानुक्रमणिकायां समुपलभ्यते। काठ. ८.१६ तथा ऋ. ६.१८.१५—

---

१. नि.सू. ८.४।

अनुद्यावा पृथिवी तत् त ओजोऽमर्त्या जिहत इन्द्रदेवाः।

कृष्वा कृत्नो अकृतं यत्ते अस्त्युक्थं नवीयो जनयस्य यज्ञैः।।

अस्मिन् मन्त्रे कृत्नो इति सम्बोधने रूपकारणात् कृत्नुर्ऋषिरेव। वेदाङ्गेऽस्य नामोपलभ्यते कृत्नोः।

## ९. सोमाहुतिर्भार्गवः

अयं सोमाहुतिर्भार्गवो द्वितीयमण्डलस्य चतुर्थसूक्ततः सप्तमसूक्त-पर्यन्तानामेकत्रिंशदृचां द्रष्टा। भृगुगोत्रजः। काठकसंहितायां कपिष्ठल-कठसंहितायाञ्च मध्येऽग्नेर्जुहुयादाज्याहुतीश्च पश्चाहुतीश्चाभितः सोमाहुती। समान एव मन्त्रांशः।

## १०. स्यूमरश्मिर्भार्गवः

ऋ. १.११२.१६—"याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः। याभिः शशिराजतं स्यूमरश्मये ताभिरूष ऊतिभिरश्विनागतम्"।। भाष्यम्—हे नरा नेतारौ अश्विनौ शयु ऋषये मनवे राजर्षये याभिः ऊतिभिर्यवादिधान्यवपनादिरूपं गातुं दारिद्र्यनिर्गमनरूपं मार्गं युवां कृतवन्तौ। स्यूमरश्मये स्यूतः संबद्धः रश्मिर्दीप्तिर्यस्य तस्मै एतत्संज्ञकाय ऋषये याभिः ऊतिः शशिः शरो नाम वेणुविशेषः। तद्विकारभूता इषूः आजतं शत्रून् प्रति प्रैरयतम्। स्यूमरश्मये। षिवु तन्तुसन्ताने-सिवेः औणादिको मन्प्रत्ययः। च्छ्वोः शूठ् इति ऊठ्। अयमृषिः ऋ. १०.७७/८, १०.७८/८ षोडशमन्त्राणां द्रष्टा। द्वयोः सूक्तयोः। ऋ. ८.५२.२ हे इन्द्र स्यूमरश्मौ ऋषौ वर्तमानं सोमं पीत्वा अमन्दथाः। तथा मां मादयसे। खि. ३.४.२ समानम्। काठ. ८.५. इन्द्रो वा यतीन् शालावृकेयेभ्यः प्रायच्छत्। तेषामद्यमानानां स्यूमरश्मिर्ऋषिरश्वं प्राविशत्। क. ७.१. समानम्। तस्मादश्वः स्वं सकृदुपजिघ्रति कश्चिद् ऋषिश्चाग्निश्च न निरास्थामिति।

## ११. प्रयोगो भार्गवः

ऋ. १०.७.५—सायणभाष्ये प्रयोक्तव्यमिति प्रयोगः। नात्र ऋषिवाचकः। खि. ४.८.८—

मेधाव्यहं सुमनाः सुप्रतीकः श्रद्धामनाः सत्यमतिः सुशेवः।

महायशा धारयिष्णुः प्रवक्ता भूयासमस्येश्वरया प्रयोगे।।

अस्येश्वरया पाठभेदः अस्य स्वधया।

तै. ५.१.१०१—न ह स्म पुराग्निरपरशुवृक्णं दहति तदस्मै प्रयोग एवर्षि-रस्वदयद् यदग्ने यानि कानि चेति समिधमादधात्यपरशुवृक्णमेवास्मै स्वदयति सर्वमस्मै स्वदते य एवं वेद। एतेन द्योत्यते यत्पुरा अग्निः परशुवृक्णमेव दहति स्म। प्रयोगः-ऋषिप्रयोगेणाग्निः अपरशुवृक्णो जातः सर्वसमिद्ग्राही। काठ. १९.१०, क. ३०.८ समानम्। अयमृषिरष्टममण्डलस्य द्व्यधिकशततमसूक्तस्य द्वाविंशति-ऋचां द्रष्टा।

**१२. गृत्समदः**

नामनिर्वचनं बृहद्देवतायाम्—

गृणन्मादयसे यस्मात् त्वमस्मानृषिसत्तम।

तस्माद् गृत्समदो नाम शौनहोत्रो भविष्यसि।। (४.७८)

अत्रेतिहासो बृहद्देवतायामुक्तः—

संयुज्य तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः।

अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च।।

तमिन्द्र इति मत्वा तु दैत्यौ भीमपराक्रमौ।

धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः।।

विदित्वा स तयोर्भावमृषिः पापं चिकीर्षतोः।

यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत्।। (बृ. ४.६६-६८)

अन्ये त्वन्यथा वर्णयन्ति। पुरा किल इन्द्रादयो वैन्ययज्ञं समाजग्मुः। गृत्समदोऽपि तत्रागत्य सदस्यसीत्। दैत्याश्चेन्द्रजिघांसया तत्र समागमन्। तान्दृष्ट्वा निर्जगामेन्द्रो यज्ञाद् गृत्समदाकृतिः। स च गृत्समदो वैन्येन पूजितो यज्ञवाटान्निरगच्छत्। निर्गच्छन्तं तमृषिं दृष्ट्वा अयमेवेन्द्र इति मन्यमानास्तमसुराः परिबब्रुः। नाहमिन्द्रस्तुच्छः किन्त्वेवं गुणोपेतः स इत्यनेन सूक्तेन तान्प्रत्युवाच। अपरे त्वेवं कथयन्ति—गृत्समदस्य यज्ञे प्रविष्टमेकाकिनमिन्द्रं ज्ञात्वा सुराः परिबब्रुः। स इन्द्रो गृत्समदरूपेण यज्ञवाटान्निर्गत्य स्वर्गं जगाम ततोऽसुरा इन्द्रो विलम्बित इत्यन्तः प्रविश्य गृत्समदं दृष्ट्वा पूर्वमेव गृत्समदो गतः, अयं त्विन्द्रोऽस्मद्भयाद् गृत्समदरूपेणास्ते इति तं जगृहुः। स तान् नाहमिन्द्रोऽयमित्यनेन सूक्तेन प्रत्युवाच। अयमेवार्थो महाभारते प्रपञ्चितः।

गृत्समदः—ऋ. २.१९.८ : हे इन्द्र तुभ्यं गृत्समदाः। अत्र यास्कः—गृत्समदो गृत्समदनो गृत्स इति मेधावि-नाम गृणाते : स्तुतिकर्मणः (नि. ९.५)। स्तोत्रं चक्रुः। अवस्यवो न—गमनमिच्छन्तः पुमांसो मार्गा न यथा कुर्वन्ति तद्वत्। गृत्समदा सुक्षितिमन्त्रं बलं सुखमश्नुयुः प्राप्नुयुः। ऋ. २.४१.१८—

> ''इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति।
> या ते मन्त्र गृत्समदा ऋतावरिप्रिया देवेषु जुह्वति।।''

ऋ. २.४.९ : गृत्समदासः अग्नेः स्तुतिः।

ऋ. २.३९.८ : अश्विनोः स्तुतिः। गृत्समदासः।

अयमृषिः द्वितीयमण्डलस्य १-३, ८-४३, नवममण्डलस्य ८६ षडशीतितमसूक्तस्य तिसृणामृचां संहत्य ४०५ ऋचां द्रष्टा। भार्गवाणां मध्येऽधिकमन्त्रदर्शनेऽयमृषिः सर्वानृषीनतिशेते। अयं पूर्वः गृत्समद आङ्गिरस-शौनहोत्र आसीत्। पश्चाद् गृत्समदो भार्गवः शौनको जातः।

## १३. कविर्भार्गवः

भृगोर्द्वौ पुत्रौ कविश्च्यवनश्च। कविशब्दः क्रान्तदर्शनः। बहुत्र अग्नि-विशेषणम्। सामान्यकविरूपेण। अयमृषिर्नवममण्डलस्य ४७-४९ त्रयाणां सूक्तानां पञ्चदशमन्त्राणां तथा नवममण्डलस्य ७५-७९ पञ्चानां सूक्तानां विंशतिमन्त्राणां सम्मिल्य पञ्चत्रिंशन्मन्त्राणामृचां वा द्रष्टा। यास्कनिरुक्ते (६.२७) कवयो मेधाविन इत्यर्थे समायाताः। तत्रैव कवयः अतीन्द्रियज्ञाः ३.२२। कविः क्रान्तदर्शी ५.२। संहितासु कवेर्नाम स्वतन्त्ररूपेण नोपलभ्यते। सर्वानुक्रमे ह्युपलभ्यते–ऋषिवाचकः।

## १४. वेनो भार्गवः

संहितासु शब्दोऽयं कान्तः सूर्यः, कामयमानः कान्तिकर्म, वेनः सूर्यः, प्रियः, कान्तः, कामयन्तम्। कान्ताः स्त्रियः, कान्ताः स्तोतारः, कामयमाना ऋत्विज इत्यादि बहुष्वर्थेषु प्रयुक्तः परिदृश्यते। संहितासु वेनपदेनर्षिवाचकः शब्दो नोपलभ्यते। सर्वानुक्रमे ह्युपलभ्यते—ऋषिवाचकः। नवममण्डलस्य पञ्चाशीतितम-सूक्तस्य द्वादशर्चां दशममण्डलस्य त्रयोविंशत्यधिकशततमसूक्तस्य अष्टर्चां संहत्य विंशतिमन्त्राणां द्रष्टायमृषिः।

**१५. नेमो भार्गवः**

बृहद्देवतायामस्य नामोपलभ्यते—

तुष्टावेन्द्रो द्व्यृचेनायम् अहं पश्य च मामृषे।

स हि स्तुवन्नेम एको नेन्द्री अस्तीति चाब्रवीत्।। (बृ. दे. ६.११८)

नेमोऽयमिति भार्गवः। (बृ.दे. ६.११७)

संहितासु नेमशब्दः अर्धार्थद्योतकः। अयमृषिः ऋ. ८.१००.१-३ मन्त्राणां ६-१२ सप्तमन्त्राणां साकल्येन दशमन्त्राणां द्रष्टा, वेदाङ्गेष्वपि अर्धार्थद्योतकः प्रयुक्तः। वेदमन्त्रद्रष्टारश्चतुर्दश-(ऋचीकव्यतिरिक्ताः) भार्गवा उक्ताः। सम्प्रति २१ प्रवरेषु सन्ति केचन ऋषयो मन्त्रद्रष्टारस्तेषां नामानि प्रदश्यर्न्ते।

**१६. आर्ष्टिषेणः देवापिः**

दशममण्डलस्य ९८ सूक्तस्य द्वादशमन्त्राणां द्रष्टा। ऋष्टिषेणपुत्रः। वृष्टिकामो देवांस्तुष्टाव—निरुक्ते २.१० इतिहास आख्यानम्।

तत्रेतिहासमाचक्षते। देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः। शन्तनुः कनीयानभिषेचयाञ्चक्रे। देवापिस्तपः प्रतिपेदे। ततश्शन्तनो राज्ये द्वादशवर्षाणि देवो न ववर्ष। तमूचुर्ब्राह्मणाः—"अधर्मस्त्वयाऽऽचरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षती"ति। स शन्तनुर्देवापिं शिशिक्ष राज्येन। तमुवाच देवापिः। पुरोहितस्ते असानि याजयानि च त्वेति। तस्यैतद्वर्ष-कामसूक्तम्—"आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान्। स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद् वर्ष्या अभि"।। (ऋ. ८.५.१२) आर्ष्टिषेणः ऋष्टिषेणस्य पुत्र इषितसेनस्य वा। सेना सेश्वरा समानगतिर्वा। पुत्रः पुरुं त्रायते। निपरणाद्वा। पुन्नरकं ततस्त्रायत इति वा। होत्रमृषिर्निषीदन् ऋषिर्दर्शनात्। स्तोमान्ददर्शेत्यौपमन्यवः। "तद् यदेनांस्तपस्यमानान्ब्रह्म स्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते।" देवापिः देवानामाप्त्या स्तुत्या च प्रदानेन च। देवसुमतिं देवानां कल्याणीं मतिम्। चिकित्वांश्चेतनावान्। स उत्तरस्मादधरं समुद्रम्। उत्तर उद्धततरो भवति अधरोऽधोऽरः। तस्योत्तरा भूयसे निर्वचनाय। ऋ ८.५.१३ : "यद् देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्। देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्।।

शन्तनुः शंतनोऽस्त्विवति वा। शमस्मै तन्वा अस्त्विवति वा। पुरोहितः पुर एनं दधति। होत्राय वृतः कृपायमाणोऽन्वध्यायद्देवश्रुतं देवा एनं शृण्वन्ति। वृष्टिवनिं वृष्टियाचिनं रराणो रातिरभ्यस्तः। बृहस्पतिर्ब्रह्मासीत्सोऽस्मै वाचमयच्छत्।

**निष्कर्षः**

प्रथममन्त्रे देवापेः आर्ष्टिषेणस्य नाम समायातम्, द्वितीयमन्त्रेऽपि तथैव। स ऋषिर्वर्षकामसूक्तं ददर्श। अनावृष्ट्यां स शान्तनो राज्ये वर्षणं स्वतपोबलेन चकार। एतत्तु देवापेस्तपसो बलं यद् वृष्टिं ह्यकार्षीत्। तपसा बलेन पुरोहितः शन्तनोर्भूत्वा स्वानुजस्य हिताय लोककष्टानां दूरीकरणार्थं तपसा स्वदृष्टमन्त्रेण वर्षणं व्यदधात्।

## १७. सुमित्रबाध्र्यश्वः

अयं दशममण्डलस्य एकोनसप्ततितमस्य सप्ततितमसूक्तस्य च एकादश-ऋचां द्रष्टा!

## १८. पृथुवैन्यः

वेनभार्गवस्य पुत्रः पृथुनामधेयो दशममण्डलस्य १४८ तमसूक्तस्य पञ्चानामृचां द्रष्टा।

## १९. पार्थस्तान्वः

पृथुपुत्रस्तान्वो दशममण्डलस्य ९३ त्रिनवतितमसूक्तस्य पञ्चदशानामृचां द्रष्टा।

## २०. एतशो वातरशनः

दशममण्डलस्य १३६ तमसूक्तस्य षष्ठमन्त्रस्यैकस्य द्रष्टा।

इत्थमुपर्युक्तेषु ऋचीकं विना एकोनविंशति-ऋषीणां दृष्टा मन्त्राः पूर्वमेव निर्दिष्टाः। शेषाणां १७ सप्तदश-आचार्याणां प्रवराणां नामानि भृगुलेखे प्रदर्शितानि। तेषां नामानि बौधायनश्रौतप्रवरे वैखानसधर्मसूत्रे सत्याषाढश्रौतसूत्रे पठितानि। तेषां विषये विस्तृतविवरणं वैदिकवाङ्मये न सौकर्येण समुपलभ्यते। इत्थं सर्वेषां भार्गवाणां योगः परिचयश्च पूर्णतामगादिति।

●

# जैमिनीय-धर्म-मीमांसाशास्त्र-निर्णीतानां वैदिक-कृत्यकालानां चान्द्रमान-नियतत्वम्

**श्रीप्रमोदवर्धनःकौण्डिन्न्यायनः**
च. २/४१९, स्वाद्ध्यायशाला, सरस्वतीमार्गः,
लाजिम्पाट्, काष्ठमण्डपनगरम्,
नेपालदेशः

❀❀❀

जैमिनीये धर्ममीमांसाशास्त्रे वैदिकयज्ञविषयकाणां सन्दिग्धार्थानां वैदिकवाक्यानां विषये विचारं कृत्वा न्याया व्युत्पादिताः सन्ति। रहस्यसहितस्य यज्ञस्वरूपस्य ज्ञानं वेदाध्ययनेनैव भवति। स्थूलस्य यज्ञस्वरूपस्य यथार्थज्ञानाय कल्पसूत्राध्ययनमावश्यकम्। कल्पसूत्रे मन्त्र-ब्राह्मणे अनुसृत्य प्रतिपादितेषु येषु विषयेषु संशय उत्पन्नो भवितुं शक्नोति, तेषु विषयेषु मन्त्रब्राह्मणवाक्यादिकं विचार्य न्याय्यस्य कल्पसूत्रोक्तस्य यज्ञप्रयोगमार्गस्य स्पष्टीकरणं समर्थनञ्च वाक्यशास्त्रं विचारशास्त्रं तर्कशास्त्रं न्यायशास्त्रमित्यादिभिर्नामभिर्व्यवह्रियमाणेन धर्ममीमांसा-शास्त्रेण क्रियते। अत एव मन्त्र-ब्राह्मण-कल्पसूत्रप्रतिपादितयज्ञप्रयोगस्य न्याय्यत्वज्ञानं धर्ममीमांसाशास्त्राध्ययनमन्तरा न सम्भवतीति कथयितुं सुशकम्।

जैमिनीयधर्ममीमांसाशास्त्रे प्रसङ्गप्राप्ता वैदिककृत्य-कालसम्बद्धा विचारा अपि प्राप्यन्ते।

गवामयने 'चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन्'[१] इति विहिता दीक्षा माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे कर्तव्या न तु चैत्र्या इति जैमिनीयधर्ममीमांसासूत्रे षष्ठाध्यायस्य पञ्चमे पादे नवमेऽधिकरणे निर्णीतम्[२]।

---

१. तैत्तिरीयसंहितायाम्-७।४।८।२, द्र.—ताण्ड्यब्राह्मणम्-५।९।१२।

२. पौर्णमास्यामनियमोऽविशेषात्। आनन्तर्यात्तु चैत्री स्यात्। माघी वैकाष्टकाश्रुतेः। (जै.ध.मी.सू. ६।५।३०-३२)

दैवानि उपनयनादीनि कर्माणि अनियते काले न कर्तव्यानि, किन्तु उत्तरायणशुक्लपक्षपुण्याहेषु पूर्वाह्णेषु कर्तव्यानि, पित्र्याणि कर्माणि तु दक्षिणायन-कृष्णपक्षापराह्णेषु कर्तव्यानीति षष्ठाध्यायस्याष्टमे पादे पञ्चम-षष्ठाधिकरणयोर्निर्णीतम्[१]।

'वैश्वदेवेन पशुकामो यजेत यस्मिन्नृतौ प्रभूतं गोषु पयः स्या'दिति विहितस्य वैश्वदेवस्य वसन्तर्तुरेव काल इति जैमिनीयधर्ममीमांसासूत्रसङ्कर्षकाण्डतृतीयाध्याय-प्रथमपादस्य द्वाविंशेऽधिकरणे निर्णीतम्[२]।

एतादृशानां वैदिककृत्यकालानां चान्द्रसौरकतरमानानुसारित्वमिति जिज्ञासा भवति। तत्राऽर्वाचीनेषु ज्योतिषग्रन्थेषु, धर्मशास्त्रनिबन्धग्रन्थेषु, केषुचन पुराणेषु च केषाञ्चन कृत्यानां कालाः सौरमानेन केषाञ्चन कृत्यानां कालाश्चान्द्रमानेन गणिता ग्राह्या इत्यस्यार्थस्य प्रतिपादकानि वचनान्यप्युपलभ्यन्ते। किन्तु वेदेषु वेदाङ्गेषु च वर्षाऽयनर्तुमासादीनां चान्द्राणामेव ग्राह्यत्वं प्रतिपादितं सूचितं वाऽपि प्राप्यते। तस्माद् निर्विचिकित्स-वैदिककृत्यकालज्ञानाय वेदवेदाङ्गवाक्यार्थविचारेण प्रस्तुतः कश्चन निष्कर्षोऽपेक्षितो दृश्यते। अतोऽत्रैतद्विषये विचारः प्रस्तूयते।

### १. तिथिविचारः

इदानीं ज्यौतिषिकनिकाये स्फुटतिथिरिति नियतकालविशेषमितस्तिथिः प्रसिद्धोऽस्ति। तादृशस्य तिथेः परिसमाप्तिरहोरात्रस्य प्रातरादिके यस्मिन्कस्मिन्नपि भागे भवितुं शक्नोति। एकस्मिन्नेव दिने पूर्वाह्णे एकस्तिथिरपराह्णेऽन्यस्तिथिरपि इदानीन्तनैर्ज्योतिषिकैः पञ्चाङ्गकारैर्धर्मशास्त्रिभिश्च स्वीक्रियते। तादृशव्यवस्थाप्रदर्शक-पुराणादिवचनान्यपि तैः प्रदर्श्यन्ते। एतन्मूलका विद्ध-शुद्ध-पूर्वविद्धादिविषयकाः प्रभूता विचारा अर्वाचीनेषु धर्मशास्त्रनिबन्धेषु प्राप्यन्ते। तदनुसारं ते धार्मिकेभ्य उपदेशं ददति च। श्रद्धालवो जनास्तदनुसारं धार्मिककार्याण्यप्यनुतिष्ठन्ति। किन्तु वेदे एकस्मिन्नहोरात्र एक एव तिथिः स्वीकर्तव्यो भवतीति सूचितं दृश्यते। अत एव वेदेषु तिथेर्नामैवाहोरात्र इत्यस्ति। तथा हि माध्यन्दिनीयवाजसनेयि-शुक्लयजुर्वेदसंहितायां श्रूयते—

---

१. उदगयन-पूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपाण्यार्थदर्शनात्। अहनि च कर्मसाकल्यम्। इतरेषु तु पित्र्याणि। (जै.ध.मी.सू. ६।८।२३-२५)

२. वैश्वदेवेन पशुकामो यजेत यस्मिन्नृतौ प्रभूतं गोषु पयः स्यादिति सर्वमविशेषात्। वसन्तानां वा तस्य कालत्वाद् वैश्वदेवस्य यस्मिन्नृतौ बहुव्रीहिः स्यात्, तस्मिन् यष्टव्यमिति वसन्त एव यजेत। (जै.ध.मी.सू.सङ्कर्षे-३।१।३९-४०)

(क) "....अहोरात्रेब्भ्यः स्वाहाऽर्द्धमासेब्भ्यः स्वाहा मासेब्भ्यः स्वाहाऽ-ऋतुभ्यः स्वाहाऽऽर्त्तवेब्भ्यः स्वाहा सँव्वत्सराय स्स्वाहा..."[१] इति।

(ख) "उषसस्ते कल्प्पन्तामहोरात्त्रास्ते कल्प्पन्तामर्द्धमासास्ते कल्प्पन्ताम् मासास्ते कल्प्पन्तामृतवस्ते कल्प्पन्तां सँव्वत्सरस्त्ते कल्प्पताम्"[२] इति च।

माध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदशतपथब्राह्मणे च श्रूयते—

(क) "अहोरात्त्राण्ण्यर्द्धमासा मासा ऋतवः सँव्वत्सरे प्प्रतिष्ट्ठिताः"[३] इति।

(ख) "अहोरात्त्राण्ण्यर्द्धमासा मासा ऋतवः सँव्वत्सरे विधृताः"[४] इति च।

आत्रेयतैत्तिरीयकृष्णयजुर्वेदसंहितायां च श्रूयते—

(क) "...अहोरात्रेभ्यः स्वाहाऽर्द्धमासेभ्यः स्वाहा मासेभ्यः स्वाहर्तुभ्यः स्वाहा संवत्सराय स्वाहा"[५] इति।

(ख) "अहोरात्रे निमेषोऽर्धमासाः पर्वाणि मासाः सन्धानान्यृतवोऽङ्गानि संवत्सर आत्मा"[६] इति च।

प्रश्नोपनिषदि श्रूयते—

"संवत्सरो वै प्रजापतिस्तस्याऽयने दक्षिणं चोत्तरं च।...मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेत ऋषयः शुक्ल इष्टं कुर्वन्तीतर इतरस्मिन्। अहोरात्रो वै प्रजापतिस्तस्याऽहरेव प्राणो रात्रिरेव रयिः"[७] इति।

एतेन वेदे चन्द्र आपूर्यमाणे येऽहोरात्रास्ते शुक्लपक्षस्य तिथयः, ये चन्द्रे क्षीयमाणेऽहोरात्रास्ते कृष्णपक्षस्य तिथय इत्यभिप्रेतमिति बोद्धुं शक्यते। सन्धिस्थोऽहोरात्रस्तु सन्धिकालस्य स्थितिविशेषेण पक्षान्तर्गताहोरात्रसङ्ख्याविशेषेण च पूर्वपक्षेऽपरपक्षे वा गणनीयो भवतीति च ज्ञातुं शक्यम्। अत एव

---

१. मा.सं. २२।२८, द्र.—काण्वसं. २४।३०।

२. मा.सं. २७।४५।

३. मा.वा.शतपथब्रा. १२।८।३।१४।

४. तत्रैव-१४।६।८।९।

५. तै.सं. ७/१।१५।

६. तै.सं. ७।५।२५।१।

७. प्रश्नोपनिषदि-१।९-१३।

वैदिकपरम्परायामनुमतिः (पूर्वा) राका(उत्तरा) चेति द्विविधा पौर्णमासी सिनीवाली कुहूश्चेति द्विविधा अमावास्या इति प्रसिद्धिर्वर्तते। तथा हि—

(क) "या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राका, या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूः"[१] इति।

(ख) "चन्द्रमा वै धाता। या पूर्वा पौर्णमासी साऽनुमतिः, योत्तरा सा राका। या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूः। योऽनुपश्यत्यन्यं न पश्यति मिथुनमेवाऽस्य भवति।

पुष्ये चाऽनुमतिर्ज्ञेया सिनीवाली तु द्वापरे।
खर्वायान्तु भवेद् राका कृतपूर्वे कुहूर्भवेत् ।।

न्यूने चाऽनुमतिं विद्यात्, यस्मिन् दृश्यते सा सिनीवाली। राका यदि सम्पूर्णः। चन्द्रस्तु कुहूर्न दृश्यते।"[२] इति।

(ग) "पूर्व्वाम् पौर्ण्णमासीमुत्तराँव्वोपवसेत्"[३] इति च।

शङ्करभगवत्पादेन प्रश्नोपनिषद्व्याख्यायां "चन्द्रादित्यनिर्वर्त्यतिथ्यहोरात्र-समुदायो हि संवत्सरः"[४] इति, "सोऽपि मासात्मा प्रजापतिः स्वावयवेऽहोरात्रे परिसमाप्यते"[५] इति चोक्त्वा वैदिकपरम्परायामहोरात्रात्मकस्य तिथेः प्रसिद्धिः स्पष्टतयोक्ता।

पुराणेषु समुपलभ्यमानानि "तथा पञ्चदशाऽहानि पक्ष इत्यभिधीयते", "अहोरात्रैश्च त्रिंशद्भिः पक्षौ द्वौ मास उच्यते" इत्यादीनि वचनान्यपीममेव पक्षं पोषयन्ति[६]।

महाभारतखिलभागे हरिवंश आगतया सोमं प्रति शक्रस्योक्त्याऽप्ययमेवार्थ उपोद्बलितो भवति। यथा—

---

१. काठकसंहितायाम्-१२।८।

२. षड्विंशब्राह्मणे-५।६, द्र. ऐतरेयब्राह्मणम्-३२।९।

३. कात्यायनश्रौतसूत्रे-२।१।१।

४. प्रश्नोपनिषद्व्याख्यायाम्-१।९ (गीताप्रेस, गोरखपुर, २०१२), पृ. २०।

५. तत्रैव-१।१३, पृ. २६।

६. कूर्मपुराणे-१।५।५, नारदीयपुराणे-१।५।२३, पद्मपुराणे-३।६, भागवते-३।११।१०, मार्कण्डेयपुराणे-४३।२४, विष्णुपुराणे-१।८।९, शिवपुराणे-७।१।८।५, स्कन्दपुराणे वैष्णवखण्डे-२।१।३६।३०, प्रभासखण्डे-७।१।१९।१२। एतानि पुराणवचनान्यस्मिन्नेव निबन्धेऽनुपदमुद्धरिष्यमाणानि सन्ति।

"क्षयवृद्धी तवाऽव्यक्ते सागरस्येव मण्डले।
परिवर्तस्यहोरात्रं कालं जगति योजयन्"[१] ।। इति।

वेदवेदाङ्गाद्यध्ययनप्रवणैर्वैदिकद्विजोत्तमैश्चोक्तम्—

"तिथिश्च वेदाङ्गज्योतिषसिद्धान्तानुसारं सावनदिनात्मिकैव। चन्द्रकलादर्शन-विशेषवशाद् गणितविशेषाच्च कदाचिच्चतुर्दश्याः क्षयो भवति, ततश्च प्रतिपदश्चतुर्दशे दिवसे कदाचित् पौर्णमासी वाऽमावास्या वा भवति, अन्यासां तिथीनां क्षयो नैव भवतीति च दर्शपूर्णमासयाजिनां वैदिकानां द्विजोत्तमानां पन्थाः।

यद्यपि लघुस्मृतिपुराणादिस्थतयाऽर्वाचीनेषु धर्मशास्त्रनिबन्धग्रन्थेषूद्धृता वर्तमानपुराणविशेषपाठस्था वाऽपि तिथिक्षयवृद्ध्यादिविषयकाः श्लोका अर्वाचीन-ज्योतिषपन्थानुकूला अनेके दृश्यन्ते, तथापि तेऽनार्षा भान्ति, वेदाङ्गज्योतिष-प्रतिकूलत्वे तेषामननुसरणीयत्वरूपमप्रामाण्यं वैदिकानां कृते ज्ञेयम्। वदति हि भट्टश्रीलक्ष्मणाचार्योऽपि जगन्मोहने तिथिफलाध्याये सप्तविंशे—'पुराणवचनेषु पद्मपुराणादिकतिपयपुराणेषु कृत्रिमवचनानि बहूनि दृश्यन्ते'[२] इति"[३] इति।

## २. पक्षविचारः

सौरमासे पक्षस्याऽभावात् पक्षश्चान्द्रमासानुसार्येव इत्यत्र विप्रतिपत्तिर्भ्रमो वा प्रसृतो न दृश्यते। वैदिकपरम्परायां पक्षः पञ्चदशाहोरात्रात्मको भवति। कदाचिच्चतुर्दशाहोरात्रात्मकोऽपि भवति।

## ३. मासविचारः

वैदिकमन्त्रसंहितासु मासानां तपस्-तपस्य-मधु-माधवादीन्येव नामानि समुपलभ्यन्ते, न तु माघ-फाल्गुनादीनि। श्रौतसूत्रेषु च यज्ञकालनिर्देशे माघ-फाल्गुन-चैत्र-वैशाखादीन्येव नामानि प्राप्यन्ते, न तु तपस्तपस्यादीनि। एतेन वैदिकपरम्परायां गणितादिदृष्ट्या सौरनाक्षत्रमासविचारे क्रियमाणेऽपि धर्मकृत्य एकप्रकारक एव मासः प्रयुज्यत इति बोद्धुं शक्यते। स च मासश्चान्द्र एवाऽस्तीति अधस्तनसन्दर्भैः स्पष्टं भवति।

---

१. हरिवंशे-१।४६।४ (गीताप्रेस, गोरखपुर, २०२४) पृ. १७१।

२. जगन्मोहने भट्टलक्ष्मणाचार्यविरचिते-२७।४३ (नेपालराष्ट्रियाभिलेखालय, काष्ठमण्ड-नगरम्, २०२०) प्रथमे भागे, पृ. २०७।

३. 'वेदाङ्गज्योतिषं युगवर्षायनर्तुमासाधिमासादिगणना च' इति निबन्धे, (सारस्वती सुषमा, ५० व., ३-४ अ., २०५२, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी) पृ. २६३-२६४।

वैदिकयागेषु आधारभूतो यागो दर्शपूर्णमासाख्यश्चान्द्रमासे आधृतोऽस्तीत्ययं विषयोऽत्यन्तमेव स्पष्टः। चातुर्मास्ययागोऽपि पार्वणमासानुसारमनुष्ठातव्यो न तु सावनमासमनुसृत्येति जैमिनीयधर्ममीमांसासूत्रसङ्कर्षकाण्डे[१] एव निर्णीतमस्ति। वैदिकानामन्येषां यागानां काला अपि मुख्यरूपेण चान्द्रमासतिथिरूपा एवोपलभ्यन्ते। अयनारम्भेऽनुष्ठेयो निरूढपशुबन्धयागोऽपि सूर्यायनपरिवर्तन-दिनेऽननुष्ठाय ततः, परमासन्नायां पूर्णिमायाममावास्यायां वाऽनुष्ठेय इति परम्परा वर्तत इति याज्ञिकाः स्वीकुर्वन्ति। वैखानसश्रौतसूत्रेऽयं विषयः स्पष्टतया प्रतिपादितोऽपि दृश्यते[२]। सत्याषाढश्रौतसूत्रभाष्येऽपि मुख्यतयाऽयमेव पक्षः प्रोक्तोऽस्ति[३]। गृह्यकर्मकाला अपि चान्द्रमासतिथिरूपा एव निर्दिष्टाः। मातापितृ-

---

१. (क) पार्वणमासानि विज्ञायन्ते। जै.ध.मी.सू. सङ्कर्षकाण्डे-३।१।३०।

(ख) पार्वणमासानि चातुर्मास्यानि। कस्मात्? पार्वणसंवत्सरात् षड्भिरहोभिः सावनस्य संवत्सरस्याऽतिरेकात्। ये वै त्रयस्संवत्सरास्तेषां षट्त्रिंशत् पूर्णमासा ये द्वे तयोश्चतुर्विंशतिः। त इमाश्चतुर्विंशतिमुपपद्यन्ते। एष वै त्रयोदशमासः तमेतं सम्पादयति तमति यजत इति षडहातिरेकं (त्वं) दर्शयति। पञ्चसु सावनेषु संवत्सरेषु पार्वणमासमेकमुपजायमानमनुदृश्य पञ्चानां संवत्सराणां षष्टिपूर्णमासाननुक्रम्य एष वै त्रयोदशो मास इति उत्सृज्यौ मासौ प्रत्येकमेकवचनेन निदर्शयति। सावनाच्च षड्भिः सौर्यस्य पञ्चवर्षस्य षष्टिः सौर्यस्य मासा एकषष्टिः सावनाः द्विषष्टिः पार्वणास्तयोश्च मासयोरुत्सर्गाद् द्विषष्टिपार्वणमासं दर्शयति। तस्मात् पार्वणमासाँस्त्रीनिष्ट्वोत्स्रष्टव्ये सति उत्सृष्टमासमुत्कृष्य संवत्सरान् मासाँश्चोत्सृजति कर्ममध्ये नोत्स्रक्ष्यामीति। तच्चार्धतृतीयेषु उत्स्रष्टव्यमिति (त्रिंशत्) सन्दर्शयति। त इमे षट्त्रिंशन् मासास्ता इमाश्चतुर्विंशतिमेव सम्पद्यन्त इति तेषां षट्त्रिंशत् तयोर्विंशतिरिति वा त्रयोदशमासानवसाय कर्मयुक्तानामेव पर्वणां मासानाचष्टे। तस्मात् पार्वणाश्चत्वारो मासाः पर्वान्तरकालः। (जै.ध.मी.सू. सङ्कर्षकाण्डे देवस्वामिभाष्ये-३।१।३०)

(ग) त्रिंशद् वै सावनस्य विप्रतिषेधात् पार्वणस्य यद्येतान्नाऽऽलभेत इति। (जै.ध.मी.सू. सङ्कर्षकाण्डे-३।१।३१)

(घ) त्रिंशद् वै रात्रयो मासा इति च सावनस्य यान्यहोरात्राणि तेषु विप्रतिषेधात् पार्वणस्य यान्यहोरात्राणीति। यदि तेषु गौणाः कल्पिष्यन्ते श्रुत्या विरोधः। तथा 'यद्येतान्नाऽऽलभेत'' इति पश्चालम्भः शिर उपधानेन सहोच्यते। एवमिहापि रात्रीणां सङ्ख्यापरिमाणे। (जै.ध.मी.सू. सङ्कर्षकाण्डे देवस्वामिभाष्ये-३।१।३१)

२. ऐन्द्राग्नेन सौर्येण प्राजापत्येन वा निरूढपशुबन्धेन प्रतिसंवत्सरं प्रत्ययनं प्रतिषण्मासं वा यक्ष्यमाणः पौर्णमास्याममावास्यायामापूर्यमाणपक्षे पुण्ये नक्षत्रे वा यजेत। (वैखानसश्रौ. सू. २१।१ (१०।१)।

३. आवृत्तिः सूर्यस्याऽयने इत्ययनयोर्मुखे सङ्क्रान्त्यनन्तरपर्वणि, केचिन्मुख इति सङ्क्रान्त्यनन्तरदिन इत्याहुः। (सत्याषाढश्रौतसूत्रस्य महादेवकृतायां वैजयन्त्याख्य-व्याख्यायाम्, आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम्, सन् १९०७ पृ. ३९३)

क्षयतिथ्योः कर्तव्यं श्राद्धमपि चान्द्रमासस्यैव तिथिमनुसृत्य कर्तव्यमिति विधानं प्रसिद्धमेवास्ति। अन्ये पौराणा व्रतोत्सवा अपि अधिकतराश्चान्द्रमासस्यैव पक्षविशेषस्य तिथिषु विहिता दृश्यन्ते।

अंहसस्पतिसाहचर्याच्च मधुमाधवादिपदानां चान्द्रमासावबोधकत्वं स्फुटम्। तथा हि शुक्लयजुर्वेदसंहितायां श्रूयते—

(क) "उपयामगृहीतोऽसि मधवे त्वोपयामगृहीतोऽसि माधवाय त्वोपयामगृहीतोऽसि शुक्राय त्वोपयामगृहीतोऽसि शुचये त्वोपयामगृहीतोऽसीषे त्वोपयामगृहीतोऽस्यूर्ज्जे त्वोपयामगृहीतोऽसि सहसे त्वोपयामगृहीतोऽसि सहस्याय त्वोपयामगृहीतोऽसि तपसे त्वोपयामगृहीतोऽसि तपस्याय त्वोपयामगृहीतोऽस्यंहसस्पतये त्वा"[१] इति।

(ख) "मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा नभसे स्वाहा नभस्याय स्वाहेषाय स्वाहोर्ज्जाय स्वाहा सहसे स्वाहा सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहांऽहसस्पतये स्वाहा"[२] इति च।

अत्र हि यथा अंहसस्पतिश्चान्द्रो मासविशेषस्तथैव मधुमाधवादयोऽपि सौरायनसापेक्षत्वेन शीतोष्णवर्षादिकालेन सामान्यतः सदैव सम्बद्धा अपि मुख्यतया चान्द्रा एव मासा इत्यवसीयते।

चतुर्विंशतेः पक्षाणां वर्षस्योल्लेखाच्च वेदे मुख्यतया चान्द्रो मास एव स्वीकृत इति ज्ञायते। तथा हि—

(क) "चतुर्विंशत्यर्द्धमासो वै सँव्वत्सरः"[३] इति।

(ख) "सँव्वत्सरो वाव प्रतिष्ठा त्रयस्त्रिंशस्तस्य चतुर्विंशतिरर्द्धमासाः"[४] इति च।

त्रयोदशानां मासानां वर्षस्योल्लेखादपि स एवार्थः स्पष्टो भवति। तथा हि—

(क) "द्वादश वा वै त्रयोदश वा सँव्वत्सरस्य मासाः"[५] इति।

(ख) "त्रयोदश वै मासाः सँव्वत्सरस्य"[६] इति च।

---

१. मा.सं. ७।३०।
२. तत्रैव-२२।३१।
३. मा.वा. शतपथब्राह्मणे-६।२।१।२१।
४. तत्रैव-८।४।१।२२; द्र. १२।३।२।२।
५. तत्रैव-२।२।२।२६।
६. तत्रैव-३।६।४।२४; द्र.—४।३।१।५, ६।२।२।२९, १२।३।२।२।

मासपरिभाषायां प्राचीनेषु सर्वेषु ग्रन्थेषु मुख्यतया चान्द्रमानमेवाऽनुसृतं दृश्यते। "सूर्येण विषुवं विद्यात् कालं सोमेन लक्षयेत्"[1] इत्युक्तेर्दृश्यमानत्वेन अयन-विषुवनिर्धारणे सूर्यस्यापि केनापि प्रकारेणापेक्षा यद्यपि भवति, तथापि मासस्य निर्धारणं तु चन्द्रमसैव क्रियत इति शास्त्रतः सिध्यति, अनुभवतश्चाऽप्येव-मेवावगम्यते। शीतोष्णवर्षादिलक्षणेन कालेन सह सामान्यतया सदैव सम्बद्धत्वात् तादृशकालस्य च सूर्यगत्यधीनत्वाद् अमावास्यापरिच्छिन्ने चान्द्रे मधुमाधवादिके मासेऽपि सूर्यगत्यनुगतत्वं गौणं सौरत्वं वाऽप्यस्त्येव। अत एव—

"मातृवर्गचरण-स्पृशौ मुनेस्तौ प्रपद्य पदवीं महौजसः।
रेजतुर्गतिवशात् प्रवर्तिनौ भास्करस्य मधुमाधवाविव"[2]।।

इति कालिदासोक्तिरपि मधुमाधवादीनां चान्द्रत्वेऽपि नाऽनुपपन्ना।

यत्तु अर्वाचीनेषु धर्मशास्त्रनिबन्ध-ज्योतिषादिग्रन्थेषु "तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च। विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशेत्"[3] इत्यादिकथनं तन्न मुख्यश्रौतयज्ञकालविधानाऽनुकूलमिति ज्ञायते। विवाहादि-संस्कारकर्मविधायके मूलशास्त्ररूपे पारस्करादिप्रोक्ते गृह्यसूत्रे—"उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्य्याः पाणिङ्गृहण्णीयात्"[4] इत्यादिना विवाहेऽपि चान्द्राणामेव षण्णां मासानां ग्रहणं विहितमस्तीत्यपि न विस्मर्तव्यम्।

वेदादिषु मेषवृषादिराशीनामुल्लेखस्याभावाच्च सूर्यराशिसङ्क्रमणवशेन कृत्यकालनिर्देशकानि—

"वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ।
उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके"।।

"नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके।
कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे"।।

"अध्यायनामुपाकर्म श्रावण्यां तैत्तिरीयकाः।
बह्वृचाः श्रवणे कुर्युः सिंहस्थोऽर्को भवेद् यदि"।।[5]

इत्यादिवचनान्यपि वेदबाह्यत्वेनाऽर्वाक्कालिकान्यप्रमाणानि च प्रतीयन्ते।

---

१. ब्रह्माण्डपुराणे-१।२१।१४७।
२. रघुवंशे-११।७।
३. निर्णयसिन्धौ, कमलाकरभट्टकृते (निर्णयसागरसंस्करणस्य पुनर्मुद्रणम्, कृष्णदास अकादमी, वाराणसी, १९८५) पृ. ६-७।
४. पारस्करगृह्यसूत्रे-१।४।५; द्र.—आश्वलायनगृ.सू. १।४।१, कौषीतकिगृ.सू. १।५।५, आपस्तम्बगृ.सू. १।२, खादिरगृ.सू. १।१।२।
५. निर्णयसिन्धौ, पृ. ९०।

वेदे तपस्तपस्यादीनामपि शब्दानां सूर्यायनसापेक्षचान्द्रमासावबोधकत्व-स्याऽवगम्यमानत्वाद् भारतीयशासनप्रकाशिते राष्ट्रियपञ्चाङ्गके तेषां केवलसौरमास-नामरूपेण प्रयोगोऽप्यनुपपन्न एव भाति। अतो मन्त्र-ब्राह्मण-श्रौतसूत्र-गृह्य-सूत्रोक्तकृत्यकालविशेषरूपा मासाश्चान्द्रा एवेति स्वीकर्तव्यं भवति।

### ४. ऋत्वयनसंवत्सरयुगविचारः

माध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदमन्त्रसंहितायाम्, माध्यन्दिनीयवाज-सनेयिशुक्लयजुर्वेदशतपथब्राह्मणे, आत्रेयतैत्तिरीयकृष्णयजुर्वेदसंहितायामन्यत्र चाऽहोरात्रात्मक-तिथि-पक्ष-मासपङ्क्तावेव ऋतोरयनस्य संवत्सरस्य चोल्लेखो दृश्यते। यथा—

(क) ''अहोरात्रेब्भ्यः स्वाहाऽर्द्धमासेब्भ्यः स्वाहा मासेब्भ्यः स्वाहाऽऋतुब्भ्यः स्वाहाऽऽर्त्तवेब्भ्यः स्वाहा सँव्वत्सराय स्स्वाहा''[१]।

(ख) ''सँव्वत्त्सरोऽसि परिवत्त्सरोऽसीदावत्त्सरोऽसीद्वत्त्सरोऽसि वत्त्सरोऽसि। उषसस्त्ते कल्प्पन्तामहोरात्त्रास्त्ते कल्प्पन्तामर्द्धमासास्त्ते कल्प्पन्ताम् मासास्त्ते कल्प्पन्तामृतवस्त्ते कल्प्पन्तां सँव्वत्त्सरस्त्ते कल्प्पताम्''[२]।

(ग) ''अहोरात्त्राण्ण्यर्द्धमासा मासा ऋतवः सँव्वत्त्सरे प्रतिष्ट्ठिताः''[३]।

(घ) ''अहोरात्त्राण्ण्यर्द्धमासा मासा ऋतवः सँव्वत्त्सरे विधृताः''[४]।

(ङ) ''ब्रह्मवादिनो वदन्ति यदर्धमासा मासा ऋतवः संवत्सर ओषधीः पचन्ति''[५]।

(च) ''अर्धमासानामेव मासानृतून् संवत्सरः प्रीणाति''[६]।

(छ) ''अहोरात्रे निमेषोऽर्धमासाः पर्वाणि मासाः सन्धानान्यृतवोऽङ्गानि संवत्सर आत्मा''[७]।

(ज) ''संवत्सरो वै प्रजापतिस्तस्याऽयने दक्षिणं चोत्तरञ्च। मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेते ऋषयः शुक्ल इष्टं कुर्वन्तीतर इतरस्मिन्। अहोरात्रो वै प्रजापतिस्तस्याऽहरेव प्राणो रात्रिरेव रयिः''[८] इति।

१. मा.सं. २२।२८ (द्र.-तै.सं. ७।१।१५)।
२. मा.सं. २७।४५।
३. मा.वा. शतपथब्रा. १२।८।३।१४।
४. तत्रैव-१४।६।८।९।
५. तै.सं. ५।७।२।५।
६. तत्रैव-५।७।२।६।
७. तत्रैव-७।५।२५।१।
८. प्रश्नोपनिषदि-१।९-१३।

एतैर्वचनैर्वेदे पक्ष-मास-ऋत्वयन-संवत्सराः सर्वेऽपि चान्द्रा एवेति स्पष्टतया सूचितं भवतीति बोद्धुं शक्यते।

मधुमाधवादयो मासाश्चान्द्राः सन्तीति पूर्वमेव स्पष्टीकृतम्। अतश्च वेदे समुपलभ्यमानादृतुविवरणाच्च वैदिका ऋतवोऽपि चान्द्रमासद्वयघटितत्वाच्चान्द्रा एवेति स्फुटं भवति। तथा हि—

(क) मधुश्च्च माधवश्च्च वसन्तिकावृतू ऽ अग्ग्नेरन्तः श्ल्लेषोऽसि कल्प्पेतान् द्यावापृथिवी कल्प्पन्तामाप ऽ ओषधयः कल्प्पन्तामग्ग्नयः पृथङ्ङ् मम ज्ज्यैष्ठ्याय सव्रताः। ये ऽ अग्ग्नयः समनसोऽन्तरा द्यावापृथिवी ऽ इमे। वासन्तिकावृतू ऽ अभिकल्प्पमाना ऽ इन्द्रमिव देवा ऽ अभिसँव्विशन्तु तया देवतयाङ्गिरस्स्वद् ध्रुवे सीदतम्।[१]

(ख) शुक्क्रश्च्च शुचिश्च्च ग्ग्रैष्मावृतू[२] .............।

(ग) नभश्च्च नभस्स्यश्च्च वार्षिकावृतू[३] .............।

(घ) इषश्च्चोर्ज्जश्च्च शारदावृतू[४] .............।

(ङ) सहश्च्च सहस्स्यश्च्च हैमन्तिकावृतू[५] .............।

(च) तपश्च्च तपस्स्यश्च्च शैशिरावृतू[६] .............।

(छ) मधुश्च माधवश्च वासन्तिकावृतू शुक्रश्च शुचिश्च ग्रैष्मावृतू नभश्च नभस्यश्च वार्षिकावृतू इषश्चोर्जश्च शारदावृतू सहश्च सहस्यश्च हैमन्तिकावृतू तपश्च तपस्यश्च शैशिरावृतू[७] इति।

एकस्मिन् संवत्सरे सप्तानामृतूनां सद्भावस्योल्लेखाच्च मास इव ऋतुः संवत्सरश्चापि चान्द्र एवाऽभिप्रेतोऽस्तीति स्फुटं ज्ञायते। एकस्मिन् संवत्सरे सप्तानामृतूनां सद्भावस्योल्लेखश्च यथा—

---

१. मा.सं. १३।२५।
२. तत्रैव-१४।६।
३. तत्रैव-१४।१५।
४. तत्रैव-१४।१६।
५. तत्रैव-१४।२७।
६. तत्रैव-१५।५७।
७. तै.सं. ४।४।११।१।

"सप्ताग्ने:। सप्तचितिकोऽग्निः सप्तर्त्तवः सँव्वत्सरः सँव्वत्सरोऽग्निर्य्यावत्यस्य मात्रा तावतैवैनं रेतोभूतं सिञ्चति"[1] इति।

ऋग्वेदे चन्द्रमा ऋतुविधाता इत्युक्त इति ततोऽपि वैदिका ऋतवश्चान्द्रा एवेति ज्ञायते। तथा हि—

"पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातो ऽ अध्वरम्।
विश्वान्यन्यो भुवनाऽभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः"[2] ।। इति।

अत्र ऋतुविधाता चन्द्र एवोक्त इति वेङ्कटमाधवः—

"कश्चित् पूर्वं गच्छत्यन्यस्तस्य पृष्ठतः। एवमेतौ पूर्वापरं प्रज्ञया सह चरतः। शिशू क्रीडन्तौ परिगच्छतः यज्ञम्। तयोः अन्यः विश्वानि भुवनानि अभिपश्यति आदित्यः। ऋतून् अन्यः कुर्वन् मासानर्धमासाँश्च जायते पुनः पुनः चन्द्रमाः"[3] इति।

सायणश्च—

"कश्चित् पूर्वं गच्छति सूर्यः। अन्यस्तमनुगच्छति चन्द्रमाः। एवं पूर्वापरं पौर्वापर्येण मायया स्वप्रज्ञानेन एतौ आदित्यचन्द्रौ चरतः गच्छतो दिवि। तौ शिशू। शिशुवद् भ्रमणाज्जायमानत्वाद् वा शिशू इत्युच्येते। शिशू सन्तौ क्रीडन्तौ अन्तरिक्षे विहरन्तौ अध्वरं परि यातः यज्ञं प्रतिगच्छतः। तयोः अन्यः आदित्यः विश्वानि भुवना भुवनानि अभिचष्टे अभिपश्यति। ऋतून् वसन्तादीन् अन्यः चन्द्रमाः विदधत् कुर्वन् मासानर्धमासाँश्च कुर्वन् पुनः जायते। यद्यप्युभयोरपि पुनर्जनिरस्ति, तथापि सूर्यस्य सर्वदा प्रवृद्धेरुदयो नाऽभिप्रेतः। चन्द्रस्य तु ह्रासवृद्धिसद्भावात् पुनः पुनर्जायत इत्युक्तिर्युक्ता। 'चन्द्रमा वै जायते पुनः' (तै.ब्रा. ३।९।५।४) इत्यादिश्रुतेः"[4] इति।

तैत्तिरीयारण्यके च—"चन्द्रमाः षड् ढोता स ऋतून् कल्पयति। स मे ददातु प्रजां पशून् पुष्टिं यशः। ऋतवश्च मे कल्पन्ताम्"[5] इत्युक्त्वा चन्द्रमा एव ऋतुकल्पकः स्वीकृतः। तस्य ब्राह्मणवाक्यस्य व्यख्यायां सायणेन चोक्तम्—

---

१. मा.वा. शतपथब्रा. ६।६।१।१४; द्र.—८।४।१।१६, १२।३।२।१।
२. ऋ.सं. १०।८५।१८।
३. ऋग्वेदे, षष्ठे भागे (विश्वेश्वरानन्दवैदिकशोधसंस्थानम्, होशियारपुरम्, पञ्जाब, २०२१) पृ. ३६५१।
४. ऋग्वेदसंहितायाम्, चतुर्थे भागे (वैदिकसंशोधनमण्डलम्, पुणे, सन् १९४६) पृ. ५७९।
५. तै. आर. ३।७।३।

"षण्णामृतूनां निष्पादकत्वेन षड्ढोतृकत्वम्। चन्द्रमा हि वृद्धिक्षयाभ्यां शुक्लकृष्णपक्षद्वारर्तून् कल्पयति। अत एवाऽन्यत्राऽऽम्नातम्—'ऋतूनन्यो विदधज्जायते पुनः' (ऋ.सं. १०।८५।१८) इति"[१] इति।

माध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदशतपथब्राह्मणे च—'चन्द्रमसि ह्ययं सँव्वत्सर ऋतुभिरासक्तः'[२] इत्युक्तम्।

एतेनाऽपि च वेदे ऋतुश्चान्द्रः स्वीकृत इति बोद्धुं शक्यते। संवत्सरोऽपि चान्द्र एव स्वीकृत इति च सुस्पष्टं भवति।

प्रश्नोपनिषदि मासस्य चान्द्रस्य ग्रहणाद् अयनस्य संवत्सरस्य च चान्द्रस्यैव ग्रहणं विज्ञायते (१।९-१३)। तत्र शङ्करभगवत्पादस्य "यदि पञ्चपादो द्वादशाकृतिर्यदि वा सप्तचक्रः षडरः सर्वथाऽपि संवत्सरः प्रजापतिश्चन्द्रादित्य-लक्षणो जगतः कारणम्" (१।११) इति वचनं च विचारणीयमेव दृश्यते।

महाभारतखिलभागे हरिवंशेऽपि चन्द्रमा अब्दकृदुक्तः। तथा हि—

"श्वेतभानुर्हिमतनुर्ज्योतिषामधिपः शशी।
अब्दकृत् कालयोगात्मा ईज्यो यज्ञरसोऽव्ययः"[२]।। इति।

गृह्यसूत्रोल्लेखादपि वैदिककर्मसु ऋतुश्चान्द्र एव ग्राह्य स्पष्टतयाऽवगम्यते। तथा हि आश्वलायनगृह्यसूत्रे—

"हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः"[३] इति।

गोभिलगृह्यसूत्रे च—

"चतुरष्टको हेमन्तः। योर्ध्वमाग्रहायण्यास्तामिस्राष्टमी तामपूपाष्टमीत्या-चक्षते। तैष्या ऊर्ध्वमष्टम्यां गौः"[४] इति।

प्राचीनेषु बहुषु ग्रन्थेषु मासर्त्वयनवर्षाणां चान्द्रमानानुसारित्वं प्रतिपादितं दृश्यते। तथा हि कौटलीयार्थशास्त्रे—

"कालमानमत ऊर्ध्वम्। त्रुटो लवो निमेषः काष्ठा कला नाडिका मुहूर्तः पूर्वापरभागौ दिवसो रात्रिः पक्षो मास ऋतुरयनं संवत्सरो युगमिति कालाः।

---

१. तै.आर., सायणव्याख्यायाम्-३।७।३ (आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम्, १९६७) पृ. २०९-२१०।

२. मा.वा.शतपथब्रा. ६।७।१।१९।

३. हरिवंशे-१।४६।७।

४. गोभिलगृ.सू. ३।१०।३,७,१६।

शिशिराद्युत्तरायणम्। वर्षादि दक्षिणायनम्। द्व्ययनः संवत्सरः। पञ्चसंवत्सरो युगमिति''[१] इत्युक्तम्। अत्र पक्षस्य चान्द्रत्वे विवादो नास्ति। अत एवात्र ऋत्वयनसंवत्सरयुगानां चान्द्राणामेवोल्लेखः कृत इति बोद्धुं शक्यते।

सुश्रुतसंहितायाञ्च—

''त्रिंशन्मुहूर्तमहोरात्रं, पञ्चदशाहोरात्राणि पक्षः, स च द्विविधः शुक्लः कृष्णश्च, तौ मासः। तत्र माघादयो द्वादश मासाः संवत्सरः। द्विमासिकमृतुं कृत्वा षडृतवो भवन्ति। ते शिशिर-वसन्त-ग्रीष्म-वर्षा-शरद्-धेमन्ताः। त एते शीतोष्णवर्षालक्षणाश्चन्द्रादित्ययोः कालविभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरं च। तयोर्दक्षिणं वर्षाशरद्धेमन्ताः, उत्तरञ्च शिशिरवसन्तग्रीष्माः। अथ खल्वयने द्वे युगपत् संवत्सरो भवति, ते तु पञ्च युगमिति संज्ञां लभन्ते''[२] इत्युक्तम्। अत्राऽयनस्याऽपि सूर्यसापेक्षचान्द्रमानगणनीयत्वमुक्तं दृश्यते। तद्वशेन वर्षयुगयोरपि चान्द्रमानानुसारित्वं स्पष्टमेव।

अष्टाङ्गहृदयेऽपि—

''मासैर्द्विसङ्ख्यैर्माघाद्यैः क्रमात् षडृतवः स्मृताः।
शिशिरोऽथ वसन्तश्च ग्रीष्मो वर्षा-शरद्-धिमाः।।
शिशिराद्यैस्त्रिभिस्तैस्तु विद्यादयनमुत्तरम्।
आदानञ्च तदादत्ते नृणां प्रतिदिनं बलम्''[३] ।। इति।

अत्राऽपि माघादिभिश्चान्द्रैरेव द्विसङ्ख्यैः क्रमात् षडृतव उक्ताः, चान्द्रैस्त्रिभिर्ऋतुभिरेवोत्तरायणमुक्तमिति बोद्धुं शक्यम्।

पुराणेष्वपि चान्द्राभ्यां पक्षाभ्यां मासः, चान्द्राभ्यां मासाभ्यामेव ऋतुः, चान्द्रैर्ऋतुभिरेवाऽयनम्, चान्द्राभ्यामयनाभ्यामेव वर्षञ्च स्वीकृतं दृश्यते। तथा हि कूर्मपुराणे—

''काष्ठा पञ्चदश ख्याता निमेषा द्विजसत्तमाः।
काष्ठा त्रिंशत् कला त्रिंशत् कला मौहूर्तिकी गतिः ।।

---

१. कौटलीयार्थशास्त्रे-२।२० (मैसुरुविश्वविद्यालयः, मैसुरु, १९६०) पृ. ११५-११७।
२. सुश्रुतसंहितायाम्-१।६।५-७ (निर्णयसागरयन्त्रालयः, मुम्बई, सन् १९३१) पृ. २४-२५।
३. अष्टाङ्गहृदये-१।२।१-२ (निर्णयसागरसंस्करणस्य पुनर्मुद्रणम्, चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, १९८२) पृ. ३७।

तावत्सङ्ख्यैरहोरात्रं मुहूर्तैर्मानुषं स्मृतम्।
अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः।।
तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे।
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम्''[१]।। इति।

नारदीयपुराणे—

''दशभिः पञ्चभिश्चैव निमेषैः परिकीर्तिता।
काष्ठा तत्त्रिंशतो ज्ञेया कला पद्मजनन्दन।।
तत्त्रिंशतो क्षणो ज्ञेयः तैः षड्भिर्घटिका स्मृता।
तद्द्वयेन मुहूर्तं स्याद् दिनं तत्त्रिंशता भवेत्।।
त्रिंशद्दिनैर्भवेन् मासः पक्षद्वितयसंयुतः।
ऋतुर्मासद्वयेन स्यात् तत्त्रयेणाऽयनं स्मृतम्।।
तद्द्वयेन भवेदब्दः स देवानां दिनं भवेत्।
उत्तरं दिवसं प्राहू रात्रिर्वै दक्षिणायनम्।।
मानुषेणैव मासेन पितॄणां दिनमुच्यते।
तस्मात् सूर्येन्दुसंयोगे ज्ञातव्यं कल्पमुत्तमम्''[२]।। इति ।

पद्मपुराणे—

''काष्ठा पञ्चदशाऽऽख्याता निमेषा नृपसत्तम।
काष्ठास्त्रिंशत् कला, त्रिंशत् कला मौहूर्तिको विधिः।।
तावत्सङ्ख्यैरहोरात्रं मुहूर्तैर्मानुषं स्मृतम्।
अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः।।
तैष्षड्भिरयनं वर्षमयने दक्षिणोत्तरे।
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम्''[३]।। इति।

---

१. कूर्मपु. पूर्वार्धे-५।४-६।
२. बृहन्नारदीयपु. १।५।२१-२६।
३. पद्मपु. सृष्टि. ३।४-७, द्र.—विष्णुपु. १।३।९-११।

ब्रह्माण्डपुराणे—

"लवाः काष्ठाः कलाश्चैव मुहूर्तान् सन्धिरात्र्यहान्।
अर्धमासाँश्च मासाँश्च अयनाब्दान् युगानि च"[१]।। इति।

भागवते—

"पक्षः पञ्चदशाऽहानि शुक्लः कृष्णश्च मानद।
तयोः समुच्चयो मासः पितॄणां तदहर्निशम्।।
द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि।
अयने चाहनी प्राहुर्वत्सरो द्वादश स्मृतः"[२]।। इति ।

मार्कण्डेयपुराणे—

"अहोरात्रं मुहूर्तानां नृणां त्रिंशत्तु वै स्मृतम्।
अहोरात्रैश्च त्रिंशद्भिः पक्षौ द्वौ मास उच्यते।।
तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे।
तद् देवानामहोरात्रं दिनं तत्रोत्तरायणम्"[३]।। इति ।

वायुपुराणे—

"तथा पञ्चादशाहानि पक्ष इत्यभिधीयते।
द्वौ पक्षौ तु भवेन्मासो द्वौ मासावन्तरावृतुः।।
ऋतुत्रयमयनं स्याद् द्वेऽयने वर्षमुच्यते"[४]।। इति।

शिवपुराणे—

"मुहूर्तानामपि त्रिंशदहोरात्रं प्रचक्षते ।
त्रिंशत्सङ्ख्यैरहोरात्रैर्मासः पक्षद्वयात्मकः ।
ज्ञेयं पित्र्यमहोरात्रं मासः कृष्णसितात्मकः ।
मासैस्तैरयनं षड्भिर्वर्षं द्वे चाऽयने मतम्"[५]।। इति ।

---

१. ब्रह्माण्डपु. १।७।१९-२०।
२. भागवतपु. ३।११।१०-१२।
३. मार्कण्डेयपु. ४३।२४-२५।
४. वायुपु. पूर्वार्धे-५०।१७७।
५. शिवपु. ७।१।८।४-७।

स्कन्दपुराणे वैष्णवखण्डे—

"विनाडिकानां षष्ट्या स्यान् नाडिकैका दिनं भवेत्।
तत्षष्ट्या, दिवसास्त्रिंशन् मासः पक्षद्वयात्मकः।।
मासौ द्वावृतुरित्युक्तस्तैष्षड्भिर्वत्सरो भवेत्।
अयनद्वितयाकारः शीत-वर्षोष्णसंश्रयः।।
देवासुराणामन्योन्यमहोरात्रं विपर्ययात्।
उत्तरं दक्षिणं भानोरयने ते यथाक्रमम्"[१]।। इति ।

स्कन्दपुराणे प्रभासखण्डे—

"निमेषैस्त्रिंशद्भिः काष्ठास्ताभिर्विंशतीभिः कला ।
विंशतिकलो मुहूर्तः स्याद् दिनं पञ्चदशैस्तु तैः ।।
दिनमाना निशा ज्ञेया अहोरात्रं द्वयाद् भवेत् ।
तैः पञ्चदशभिः पक्षो द्विपक्षो मास उच्यते ।।
मासैश्चैवाऽयनं षड्भिर्वर्षं स्यादयनद्वये"[२]।। इति ।

भारतवर्षे प्राचीने काले वेदाङ्गज्योतिषस्य प्रसारोऽभूत् । तदनुसारं कृतया कालगणनयैव तदा श्रौतस्मार्तक्रियाः, लौकिकव्यवहाराश्च प्रचलन्ति स्मेत्यवगम्यते। पश्चात् कस्मिँश्चित् समये बाह्यप्रभावेण वेदाङ्गज्योतिषस्य कालगणनापद्धतौ परिवर्तनं कृत्वा एका कालगणनापद्धतिः कैश्चिदुद्भाविता। तस्याः पद्धतेरार्यभट-वराहमिहिर-ब्रह्मगुप्त-सूर्यसिद्धान्तकारादिभिः प्रतिपादनं कृतम्। तैः प्रतिपादिता पद्धति-र्वेदाङ्गज्योतिषोक्तपद्धत्यनुकूला नास्ति। तदिदं परिवर्तनमीशवीयाब्दानां प्रथमशताब्द्यामभूदितीतिहासचिन्तकाः कथयन्ति[३]। तादृशपरिवर्तनकारिभिः

---

१. स्कन्दपु. वैष्णवख. १।३६।३०-३२।

२. तत्रैव, प्रभासख. १।१९।१०-१२।

३. (क) "ज्योतिषविद्या की अनेक बातें भारतीयों ने यूरोप के लोगों से सीखीं। वे रोम और यूनान को ज्योतिषविद्या का घर समझते थे। ज्योतिष के अनेक यूनानी ग्रन्थों का अनुवाद संस्कृत में किया गया। भारतीय पञ्चाङ्ग का भी यूनानियों की सलाह से संशोधन हुआ।"— भारतवर्ष का नवीन इतिहास, डा. ईश्वरीप्रसाद (इण्डियन प्रेस लिमिटेड, प्रयाग, सन्, १९५५) पृ. ६६।

(ख) "यद्यपि हिन्दू ज्योतिषियों ने वेदाङ्गज्योतिष के सिद्धान्त का परित्याग प्रथम ईशवी शती के आरम्भ में करके यूनानी (रोमक) सिद्धान्त को स्वीकार करके अपनी

"द्विराशिनाथा ऋतवः" इत्यादिका धारणाः प्रचारिताः। किन्तु तादृश्याः परिवर्तितायाः पद्धतेः प्राबल्यात् पूर्वं तु लोकेऽपि वैदिककालगणना-प्रक्रियानुरूपतया चान्द्रर्तोरिवोल्लेखनस्य प्रचलनमासीदिति वत्सरर्तु-पक्ष-दिनोल्लेखं कुर्वद्भ्यो मासमनुल्लिखद्भ्यश्च प्राचीनभारतीयाभिलेखेभ्योऽवगम्यते। तथा हि निदर्शनम्—

"रञो गोतमि-पुतस सामि-सिरि-यञ सातकणिस संवछरे सातमें ७ हेमताण पखे ततिये ३ दिवसे पथमे (राज्ञो गौतमीपुत्रस्य स्वामिश्रीयज्ञशातकर्णेः संवत्सरे सप्तमे हेमन्तस्य पक्षे तृतीये दिवसे प्रथमे)"[1] इति।

पूर्वसूर्यायननक्षत्रविप्रकर्षमविगणय्य लगधप्रोक्तवेदाङ्गज्योतिषानुरूपकाल-गणनापद्धतेरनुयायिभिर्वैदिकैर्वास्तविकसूर्यायनारम्भकालस्थितिमनुसृत्य क्रियमाणां मासाधिमासगणनामस्वीकृत्य अर्वाचीने काले पूर्णिमासु नक्षत्रचन्द्रसंयोगं सामान्यतया स्थिरं कर्तुं "मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः। चैत्राद्यः स ज्ञेयः पूर्तिद्वित्वेऽधिमासोऽन्त्यः" इति नवीनाया मासपरिभाषाया आश्रयणस्य कृतत्वात् तद्वशेनापतितं चान्द्रर्तूनां शीतोष्णाद्युपलक्षितकालविशेषा-वस्थितावसामञ्जस्यं परिहर्तुं सौरमासयोरेक ऋतुर्भवति, निरयणमकर-मासादिकयोर्द्वयोर्द्वयोः सौरमासयोः शिशिरादय ऋतवो भवन्ति इति च धारणा अर्वाचीने काले ज्यौतिषिकैः प्रचारिताऽभूदिति प्रतीयते। विष्णुधर्मोत्तरपुराणे "सौरमासद्वयं राम ऋतुरित्यभिधीयते"[2] इत्युल्लेखश्च प्राप्यते। भास्करश्च सिद्धान्तशिरोमणौ "वर्षायनर्तुयुगपूर्वकमत्र सौरात् मासास्तथा च तिथयस्तुहिनांशुमानात्"[3] इति वक्ति।

---

गणनापद्धति में परिवर्तन तथा संशोधन कर लिया था, तो भी जैन ज्योतिर्विदों ने अपनी प्राचीन परम्परा को स्थिर रखा है। उनकी पञ्चाङ्गगणनापद्धति वेदाङ्गज्योतिष पद्धति के सर्वथा समान है"।

— वैदिक वाङ्मय का बृहद् इतिहास, षष्ठ खण्ड (वेदाङ्ग), कुन्दनलाल शर्मा, (विश्वेश्वरानन्द वैदिक शोध-संस्थान, होशियारपुर, पञ्जाब, सन्, १९८३) पृ. १४४।

१. प्राचीन भारतीय अभिलेख-२ (अवधकिशोर नारायण-मणिशङ्कर शुक्ल, काशी हिन्दू-विश्वविद्यालय, वाराणसी) पृ. २२,२७,३१,३२,७० इत्यादि।

२. विष्णुधर्मोत्तरपुराणे-१।७३।११।

३. सिद्धान्तशिरोमणौ-१।१।१।३१।

विष्णुपुराणेऽपि कालमानविषये—

"कर्कटाऽवस्थिते भानौ दक्षिणायनमुच्यते।
उत्तरायणमप्युक्तं मकरस्थे दिवाकरे।।
त्रिंशन्मुहूर्तं कथितमहोरात्रन्तु यन्मया।
तानि पञ्चदश ब्रह्मन् पक्ष इत्यभिधीयते।।
मासः पक्षद्वयेनोक्तो द्वौ मासौ चाऽर्कजावृतुः।
ऋतुत्रयञ्चाऽप्ययनं द्वेऽयने वर्षसंज्ञिते"[1]।। इत्युक्तम्।

एतेन विष्णुपुराणस्याऽयनपरिभाषा ऋतुपरिभाषा च विशेषतो विचिन्तनीया प्रतीयते। कर्कटावस्थिते मकरस्थे इति प्रयोगात् तादृशे समये प्रतिपदः प्रभृत्येवाऽयनप्रवृत्तिः स्वीकृतेति च वक्तुं शक्यं प्रतीयते। तत्र श्रीधरेण स्वव्याख्यायां "लोकप्रसिद्धसायनैर्दिनपक्षमासैः प्रसिद्धा अदूरविप्रकर्षादर्कजा एव दिनादयो लक्ष्यन्ते, अर्कगत्यैवर्त्वयनाद्यभिधानात्"[2] इत्युक्तम्। एवञ्च श्रीधरोक्तिरपि केनापि रूपेण ऋतोरयनस्य च सौरगतिसापेक्षत्वेऽपि चान्द्रत्वस्य प्रतिपादिकेव प्रतीयते, अदूरविप्रकर्षादिति प्रयोगात्।

इदानीन्तनैः पञ्चाङ्गकारैरपि सूर्यस्य निरयण-राशिद्वयस्थितिकाल ऋतुः, निरयण-मकरादिराशिषट्कस्थितिकाल उत्तरायणम्, निरयण-कर्कटादिराशिषट्क-स्थितिकालश्च दक्षिणायनमिति स्वीकृत्य तदनुसार्युल्लेखः स्वस्वपञ्चाङ्गपत्रके प्रायेण क्रियमाणो दृश्यते[3]।

तथापि अर्वाचीना अपि वैदिकास्तु चान्द्रर्तौरेव ग्रहणे बलं प्रादुः। अत एव तैरर्वाचीनेषु ग्रन्थेषु सौरचान्द्रभेदेन द्विविधानृतून् स्वीकृत्य श्रौतस्मार्तक्रिया मूलवैदिककालगणनापद्धत्यनुकूलतया चान्द्रर्ताविव कर्तव्याः, चान्द्रर्त्वलाभे

---

१. विष्णुपु. २।८।६८-७०।

२. तत्रैव श्रीधरीयव्याख्यायाम् (वेङ्कटेश्वरसंस्करणस्य पुनर्मुद्रणम्, नाग पब्लिसर्स, दिल्ली, १९८५) पत्रसं. १०१।

३. (क) महावीरपञ्चाङ्ग-(ख) काशीविश्वनाथपञ्चाङ्ग-(ग) काशीहिन्दूविश्वविद्यालयपञ्चाङ्ग-(घ) बापूदेवशास्त्रिप्रवर्तितदृक्सिद्धपञ्चाङ्ग-(ङ) आपाजीपञ्चाङ्ग-(च) दरभङ्गाविश्वविद्यालयपञ्चाङ्ग-(छ) विद्यापतिपञ्चाङ्ग-(ज) रामजन्मभूमिपञ्चाङ्ग-(झ) नेपालसम्प्रशासनस्वीकृतपञ्चाङ्गानि द्रष्टव्यानि। भारतीयराष्ट्रियपञ्चाङ्गके लालबहादुरशास्त्रिविद्यापीठपञ्चाङ्गके च सायनसौर-ऋतवः तदनुसारिणी चायने स्वीकृते दृश्येते। वेङ्कटेश्वरपञ्चाङ्गके तु वेदाङ्गज्योतिष-पद्धतेरननुकूलत्वेऽपि चान्द्रयोरेव ऋत्वयनयोरुल्लेखः कृत इव प्रतीयते।

सौरर्तावपि कथञ्चित् कर्तुं शक्या इति व्यवस्था समुल्लिखिता दृश्यते। तथा हि आपस्तम्बध्वनितार्थकारिकाकारेण त्रिकाण्डमण्डननाम्ना प्रसिद्धेन भास्करमिश्रेण वैदिककृत्येषु ऋतुरपि चान्द्र एव ग्राह्य इत्यत्र बलं दत्त्वा लिखितमस्तीति हेमाद्रिणा चतुर्वर्गचिन्तामणौ कालनिर्णयभागे उक्तम्। यथा—

"श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुषु।
तदभावे तु सौरर्तुष्विति ज्योतिर्विदां मतम्।।
ऋतौ चान्द्रनिमित्तत्वं मन्त्रवर्णात् प्रतीयते।
ऋतूनन्यो विदधज्जायते पुनरित्यतः।।
पुनः पुनर्यो जायते स एव विदधदृतून्।
चन्द्रः पुनः पुनर्जन्मा तस्माच्चन्द्रवशादृतुः।।
होतृप्रकरणे चन्द्रं प्रकृत्य प्राह तित्तिरिः।
स ऋतून् कल्पयतीति चन्द्रोऽयमृतुकल्पकः[1]।।
तस्मादधिकमासः स्यात् तेष्वेवर्तुषु कुत्रचित्।
यत्रैषोऽन्तर्भवेन् मासः स ऋतुः स्यात् त्रिमासिकः।।
यद्वा षष्टिदिनैर्मास एक एवोभयात्मकः।
अतोऽत्राऽपि वसन्तत्वं स्याद् द्वयोरेव मासयोः"[2]।। इति।

दीपिकाख्यधर्मशास्त्रनिबन्धकारेणाऽपि यथासम्भवमृतोरयनस्य चापि चान्द्रस्यैव धर्मकर्मणि ग्राह्यत्वं प्रतिपादितमित्युल्लिखन्ति। तथा हि—

"यन्मासर्तुविशेषतो यदुदितं तत् कर्म कार्यं तथा
मासर्त्वादिषु चान्द्रमानमुररीकुर्याद् विशेषो न चेत्"[3]।। इति।

दशमशताब्द्यां वर्तमानत्वेन सम्भावितेन सौरमासर्त्वयनवर्षाणामुल्लेखं कुर्वताऽपि राजशेखरकविना स्वरचिते काव्यमीमांसाग्रन्थे सम्पूर्णस्य वैदिककर्मकाण्डस्य चान्द्रमानमाश्रित्यैव कर्तव्यत्वं पक्षमासर्त्वयनवर्षाणां मुख्यरूपेण चान्द्रत्वं च प्रतिपादितम्। तथा हि—

---

१. चतुर्वर्गचिन्तामणौ, परिशेषखण्डे, कालनिर्णयभागे (एसियाटिकसोसाइटिप्रकाशितस्य पुनर्मुद्रणम्, चौखम्बा-संस्कृत-संस्थान, वाराणसी, १९८५), पृ. १४।

२. तत्रैव, पृ. १६।

३. सङ्कल्परत्नावल्याम्, पं. हरिनाथशर्मकृतायाम् (काष्ठमण्डपनगरम्, द्वि.सं. २०४०) पृ. १३।

"पञ्चदशाहोरात्रः पक्षः, वर्धमानसोमः शुक्लः, वर्धमानकृष्णिमा कृष्ण इति पित्र्यं मासमानम्। अमुना च वेदोदितः कृत्स्नः क्रियाकल्पः। पित्र्यमेव व्यत्ययितपक्षं चान्द्रमसम्। इदमार्यावर्तवासिनः कवयश्च मानमाश्रिताः। एवं च द्वौ पक्षौ मासः, द्वौ मासावृतुः, षण्णामृतूनां परिवर्तः संवत्सरः। स च चैत्रादिरिति दैवज्ञाः, श्रावणादिरिति लोकयात्राविदः। तत्र नभो नभस्यश्च वर्षाः, इष ऊर्जश्च शरत्, सहः सहस्यश्च हेमन्तः, तपस्तपस्यश्च शिशिरः, मधुर्माधवश्च वसन्तः, शुक्रः शुचिश्च ग्रीष्मः"[१]। इति।

माधवाचार्येण कालमाधवग्रन्थे ऋतुरयनञ्च चान्द्रमानेनाऽपि स्वीक्रियेते इत्ययं विषयोऽप्युल्लिखितः। तथा चोक्तम्—

(क) "ते च वसन्ताद्यृतवो द्विविधाः—चान्द्राः सौराश्च, चैत्रादयश्चान्द्राः, तच्चोदाहृतं मधुश्च माधवश्चेत्यादिना"[२] इति।

(ख) "केचित् तु चान्द्रमानेनाऽयनद्वयमभ्युपगच्छन्ति"[३] इति।

मासर्त्वयनसंवत्सराणां चान्द्रमाननियतत्वस्यैव भारतवर्षीयायां मूलायां वैदिकपरम्परायां मान्यत्वस्य विद्यमानत्वादेव वैक्रमाब्दानां पञ्चम्यां षष्ठ्यां वा शताब्द्यां रचित इति सम्भाविते नामलिङ्गानुशासने (अमरकोषे) त्रिंशतां मुहूर्तानामेकोऽहोरात्रः पञ्चदशानामहोरात्रात्मकतिथीनामेकः पक्षः, द्वयोः शुक्लकृष्ण-पक्षयोरेको मासः, तादृशयोश्चान्द्रयोर्द्वयोर्मासयोरेक ऋतुः, तादृशानामेव चान्द्राणां त्रयाणामर्तूनामेकमयनं तादृशयोरेव द्वयोरुत्तरायणदक्षिणायनयोरेकं वर्षमिति ऋत्वयनसंवत्सरगणनाया आधारश्चान्द्रो मास एव स्वीकृतोऽवगम्यते। तथा हि प्रथमकाण्डे कालवर्गे—

"अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कलाः।
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशाऽस्त्रियाम्।।
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च।
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ।।

---

१. काव्यमीमांसायाम्, अष्टादशेऽध्याये (चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, २०१६) पृ. २९४-२९५।

२. कालमाधवे माधवाचार्यकृते (चौखम्बा संस्कृत संस्थान, वाराणसी, २०४५) पृ. ४१।

३. तत्रैव, पृ. ३७।

द्वौ द्वौ मार्गादिमासौ स्यादृतु[1]स्तैरयनं त्रिभिः।

अयने द्वे गतिरुदग् दक्षिणाऽर्कस्य वत्सरः''[2]।। इति।

अत्र यद्यपि रामाश्रम्यां भानुजिदीक्षितेन ''उत्तरदक्षिणाख्ये द्वे अयने तु वत्सर इति वक्तव्ये 'अर्कस्य' इति ग्रहणं चान्द्रत्वव्यावृत्त्यर्थम्। पक्षादिकं तु चान्द्रमुक्तम्, अयनन्तु न चान्द्रं किन्तु सौरमेव'' इत्युक्तं तथाप्यमरकोषकारेण ऋतूनां चान्द्राणामेवोल्लेखं कृत्वा तैरेव चान्द्रैस्त्रिभिः ऋतुभिरेकमयनमिति स्पष्टतया प्रोक्तमिति उदगयनदक्षिणायननामप्रवृत्तौ सूर्यगतिविशेषस्य कारणतायाः सूचन एव 'अर्कस्य' इति पदस्य सार्थकत्वमस्तीत्यवगम्यते।

अमरकोषे मेषवृषादिराशीनामुल्लेखे सत्यपि (१।३।२७) सूर्यराशि-सङ्क्रमणमूलक-सौरमासानां तु कोऽप्युल्लेखो न प्राप्यत इति चाऽत्रावधेयम्।

उक्तानां वचनानां विषयाणां च विचारेण लगधप्रोक्ते ''पञ्चसंवत्सरमयम्'' इत्यादिके मूले वेदाङ्गज्योतिषग्रन्थे सौरमास-सौरर्तु-सौरविषुव-सौरायनादीनामपि प्रतिपादने सत्यपि तत्प्रतिपादनं चान्द्रमासादिभिः सौरमासादीनां भेदं स्पष्टं कृत्वाऽधिमासस्य व्यवस्थया सौरवर्षे चान्द्रवर्षे च सामञ्जस्यं स्थापितं कृत्वा प्रतिवर्षं तत्तच्चान्द्रमासानां तत्तच्चान्द्रर्तूनां च सामान्यतया शीतोष्ण-वर्षादिकालेन सह सदैव

---

१. प्राचीने कालेऽपि जैनानां बौद्धानां चापि कालगणनापद्धतिर्वैदिकानामिव चान्द्र-मानानुसारिण्येवाऽऽसीत्, किन्तु वर्षारम्भादिविषये मतभेद आसीदितीतिहासाज्ज्ञायते। जैना वर्षाप्रभृतिकं वर्षं स्वीचक्रुः (द्र.—वेदाङ्गज्योतिषम्, शामशास्त्रिकृत-दीपिकाख्यव्याख्यानसहितम्, मैसुरु, सन् १९३६, पृ. ५), बौद्धास्तु हेमन्ताद् वर्षारम्भं स्वीचक्रुः (द्र.— अभिधर्मकोशव्याख्या, बौद्धभारती, वाराणसी, तृ.सं. १९८७, पृ. ५३७)। नामलिङ्गानुशासनकारोऽमरसिंहो बौद्धत्वाद् हेमन्तादिवर्षपक्षपातेन 'द्वौ द्वौ मार्गादिमासौ स्यादृतुः' इत्युक्तवानिति सम्भाव्यते। तत्र शक्तिधरशास्त्री नामलिङ्गानुशासनव्याख्यायां रसालायां (लक्ष्मणपुरम् (लखनऊ), १९७५ वै., पृ. ३६) 'द्वौ द्वौ माघादिमासौ स्यादृतुः इति वा पाठः' इत्युक्त्वा 'माघाद्युपक्रम-स्त्वयनारम्भवशाज्ज्ञातव्यः' इत्याह। मार्गादिपाठे तैरयनं त्रिभिरिति कथनं कथं सङ्गच्छत इति चिन्तनीयम्। बौद्धैः स्वीकृतायां परम्परायां मार्गशीर्षादीनां षण्णां मासानामुत्त-रायणान्तर्गतत्वम्, ज्येष्ठादीनां षण्णां मासानां दक्षिणायनान्तर्गतत्वं कथञ्चित् स्वीकार्यमासीदित्यनुमीयते। मार्गाद्युत्तरायणपक्षः कालमाधवेऽप्युल्लिखितो दृश्यते (पृ. ३७)। मार्गशीर्षमासस्याऽऽग्रहायण इति नामाऽपि मार्गशीर्षादिकायनवर्षस्वीकारपक्षपरम्परां सूचयतीति वक्तुं शक्यते। प्राचीने काले सर्वैरेव 'द्वे अयने वर्षम्' इति स्वीकृत्याऽयनस्य वर्षस्य चाऽऽरम्भ एकस्मिन्नेव काले स्वीक्रियते स्म। इदानीमिवायनारम्भोऽन्यस्मिन् काले वर्षारम्भोऽन्यस्मिन् काल इति तदा कैरपि न स्वीक्रियते स्मेति ज्ञायते।

२. नामलिङ्गानुशासने (अमरकोषे) प्रथमकाण्डे, कालवर्गे, श्लो. ११-१३।

समन्वितरूपेण व्यवस्थितिं कर्तुमुपायस्य प्रदर्शनायैव कृतमस्तीति, मुख्यो यज्ञकालस्तु चान्द्रमानेनैव गणनीयोऽस्तीति च ज्ञायते। चान्द्रमानस्य मुख्यत्वं च वेदाङ्गज्योतिषकारेण स्फुटं प्रतिपादितमस्ति, तथा हि—

"माघशुक्लप्रपन्नस्य पौषकृष्णसमापिनः।
युगस्य पञ्चवर्षस्य कालज्ञानं प्रचक्षते"[१]।। इति।

अतश्च वैदिकपरम्परायां वैदिककृत्यकालाः तिंथिपक्षमासर्त्वयनवर्षरूपाः सर्वेऽपि चान्द्रमाननियता एव ग्राह्या इति स्पष्टं भवति।

कात्यायनश्रौतसूत्रस्य देवयाज्ञिकभाष्ये "पश्चिज्या संवत्सरे संवत्सरे प्रावृषि"[२] इत्यस्य सूत्रस्य व्याख्याने सर्वस्मिन् वैदिकधर्मकृत्ये सोमयागादिकेऽपि मुख्यरूपेण चान्द्र एवर्तुर्ग्रहीतव्य इत्युक्तम्। तथा हि—

"पश्चिज्या पशुयागः, संवत्सरे संवत्सरे प्रतिवर्षं यावज्जीवं भवति, प्रावृषि वर्षास्वृतौ। तत्राऽप्यमावास्यायां पौर्णमास्यां वा। श्रावणो भाद्रपदश्चोभौ मासौ वर्षा ऋतुः। स च चान्द्रः, तदलाभे सौरः,

'श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रेषु चर्तुषु।
तदभावे तु सौरेषु इति स्मृतिविदां मतम्'।।

इति स्मरणात्। एवं सोमादौ सर्वत्र ऋतूनां सौरचान्द्रायणानामाश्रयणे व्यवस्था द्रष्टव्या"[३]। इति।

निर्णयसिन्धावपि कालनिरूपणप्रकरणे ऋतुश्चान्द्रसौरभेदेन द्विविधो भवतीति सिद्धान्तं स्वीकृत्य श्रुतिस्मृत्युक्तानि धर्मकर्माणि मुख्यरूपेण चान्द्रर्तावेव कार्याणीति प्रदर्शितमेव—

"ऋतुर्मासद्वयात्मा। मलमासे तु मासद्वयात्मक एको मासः, तेन मासद्वयात्मकत्वमविरुद्धम्। स द्वेधा चान्द्रः सौरश्च। चैत्रारम्भो वसन्तादिश्चान्द्रः। मीनारम्भो मेषारम्भो वा सौरो मीनमेषयोर्मेषवृषयोर्वा वसन्तः इति बौधायनोक्तेः। अनयोर्विनियोगमाह त्रिकाण्डमण्डनः—

'श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुषु।
तदभावे तु सौरर्तुष्विति ज्योतिर्विदां मतम्' इति[४]"।

---

१. वेदाङ्गज्योतिषे (याजुषे), श्लो. ५।
२. कात्यायनश्रौतसूत्रे-६।१।१।
३. तत्रैव देवयाज्ञिकभाष्ये (चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, १९७२) पृ. ५६६।
४. निर्णयसिन्धौ, (कृष्णदास अकादमी, वाराणसी, १९८५) पृ. ३।

एवमेव धर्मकृत्येषु सङ्कल्पे चान्द्राणां प्रभवादिसंवत्सराणामेव स्मरणं कर्तव्यम्, न तु बार्हस्पत्यादीनामित्यार्ष्टिषेणवचनमपि निर्णयसिन्धावावादावेवोद्धृतम्—

स्मरेत्सर्वत्र कर्मादौ चान्द्रं संवत्सरं सदा।
नाऽन्यं यस्माद्वत्सरादौ प्रवृत्तिस्तस्य कीर्तिता[1]।। इति।

एतद्वचनं हि वेदमन्त्रसंहिता-ब्राह्मण-श्रौतसूत्र-वेदाङ्गज्योतिषादिमूलशास्त्रा-नुकूलं दृश्यते। वर्षारम्भश्चोत्तरायणारम्भेण सहैव शिशिरर्तुतपोमासशुक्लपक्षप्रतिपदि भवति। उक्तञ्च महाभारतेऽपि—

अहः पूर्वं ततो रात्रिर्मासाः शुक्लादयः स्मृताः।
श्रवणादीनि ऋक्षाणि ऋतवः शिशिरादयः[2]।। इति।

एषा व्यवस्था पुराणेष्वपि प्रतिपादिताऽस्ति। तथा हि—

"वर्षाणामपि पञ्चानामाद्यः संवत्सरः स्मृतः।
ऋतूनां शिशिरश्चाऽपि मासानां माघ एव च।।
पक्षाणां शुक्लपक्षश्च तिथीनां प्रतिपत् तथा।
अहोरात्रविभागानामहश्चाऽपि प्रकीर्तितम्[3]।। इति।

वैदिकनववर्षारम्भादिविषये वेदवेदाङ्गानुशीलनपरैर्विद्वद्भिरुक्तमेव—

"अधुना प्रचलितेषु पञ्चाङ्गकेषु यच्चैत्रशुक्लप्रतिपदि वर्षारम्भः स्वीक्रियते, स वैदिकधर्मे त्वग्राह्य एवेति ज्ञायते। तत्रापि चैत्रस्य कृष्णपक्षे व्यतीते मासस्यार्धे वर्षारम्भ इति श्रीकाशीविश्वनाथपञ्चाङ्गके, श्रीमहावीरपञ्चाङ्गके, बापूदेवशास्त्रि-प्रवर्तितदृक्सिद्धपञ्चाङ्गके च यदुक्तं तच्चिन्त्यतरम्। नेपालमण्डलमध्य-काष्ठमण्डपनगरस्थनेवारसमुदाये प्रचलिते पञ्चाङ्गके तु चैत्रादिमासारम्भोऽपि शुक्लप्रतिपद्येव स्वीक्रियत इति त्वन्यत्। भारतीयराष्ट्रियपञ्चाङ्गकेऽपि यद् वसन्तर्तोर्द्वितीये मासे विषुवद्दिनाद् द्वितीये दिने प्रवृत्ते चैत्रे नववर्षारम्भदिनं स्वीक्रियते, तदपि वेदाङ्गज्योतिषसिद्धान्तस्याऽतीव प्रतिकूलत्वाद् वैदिकधर्मे त्वग्राह्यमेव। लौकिकवर्षत्वेन तथाकल्पनं न धार्मिकवर्षत्वेनेति चेत्, तदाऽपि तत्र

---

१. निर्णयसिन्धौ, पृ. २।
२. महाभा. आश्वमेधिकपर्वणि-४४।२।
३. ब्रह्माण्डपु. १।२४।१४१-१४२, वायुपु. १।५३।११३-११४, लिङ्गपु. १।६१।५२-५४।

वैदिकमाधवमासाद्यारोपणमनुचितम्। तत्र वसन्तविषुवद्दिनाद् द्वितीये दिने प्रवृत्तस्य मासस्य वैदिकमाधवमासत्वं यदुक्तं तत् सर्वथा भ्रमात्मकमेव, वैदिकानां तपस्तपस्यादीनां मासानां सौरायनसापेक्षचान्द्रमासत्वेन शुक्लप्रतिपदि एव तेषां प्रवृत्तेः। वैदिकयज्ञादिषु चान्द्रमाननिरपेक्षसौरमानस्य कुत्रापि उपयोगस्याऽदर्शनाच्च। उक्तेषु सर्वेषु पक्षेषु सायनायां निरयणायां वा मकरसङ्क्रान्तौ उत्तरायणारम्भस्य स्वीकृतत्वाद् वर्षारम्भस्य च चैत्रे प्रोक्तत्वात् तस्या व्यवस्थायाश्च "द्वे अयने वर्षम्" इति स्मृतिपुराणमहाभारताऽमरकोषादिषु प्रोक्ताया वर्षपरिभाषाया अननुकूलत्वात्, दिव्याहोरात्रमासवर्षगणनामूलकयुगमहायुगमन्वन्तरादिगणनाप्रतिकूलत्वाच्च धर्मे सर्वथा हेयता प्रतीयते"[१] इति।

युगमपि चान्द्रमेव स्वीक्रियते वैदिकधर्मे। एतच्च वेदाङ्गज्योतिष एव स्पष्टमुक्तम्—

"माघशुक्लप्रपन्नस्य पौषकृष्णसमापिनः।
युगस्य पञ्चवर्षस्य कालज्ञानं प्रचक्षते"[२]।। इति।

उपरिप्रदर्शितात् कौटलीयार्थशास्त्र-सुश्रुतसंहिताद्युल्लेखादपि लोके पञ्चवर्षात्मकस्य चान्द्रस्य युगस्य प्रचलनं सूचितं भवति। युगान्तर्गतानां वर्षाणां नामानि तु वेदेष्वेवोपलभ्यन्ते। तथा हि—

(क) "सँव्वत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि"[३] इति।

(ख) "संवत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽस्युद्वत्सरोऽसि वत्सरोऽसि"[४] इति।

(ग) "संवत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽस्यनुवत्सरोऽस्युद्वत्सरोऽसि"[५] इति।

(घ) "अग्निः संवत्सरः सूर्यः परिवत्सरश्चन्द्रमा इदावत्सरो वायुरनुवत्सरः"[६] इति।

(ङ) "अग्निर्वाव संवत्सरः। आदित्यः परिवत्सरः। चन्द्रमा इदावत्सरः। वायुरनुवत्सरः"[७] इति।

---

१. वेदाङ्गज्योतिषं युगवर्षायनर्तुमासाधिमासादिगणना च (सारस्वती सुषमा ५०।३-४) पृ. २६२-२६३।
२. वेदाङ्गज्योषिषे (याजुषे) श्लो. ५।
३. मा.सं. २७।४५, द्र.-३०।१५।
४. मैत्रायणीयसं. ४।९।१८।
५. काठकसं. ४०।६ (४०।४०)।
६. ताण्ड्यब्रा. १७।१३।१७।
७. तै.ब्रा. १।४।१०।१।

(च) "संवत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसि इदुवत्सरोऽसि इद्वत्सरोऽसि वत्सरोऽसि"[१] इति च।

ब्रह्मगुप्तेन "युगमाहुः पञ्चाब्दं रविशशिनोः संहिताङ्कारा यत्। अधिमासावमरात्रस्फुटतिथ्यज्ञानतस्तदसत्" इति वेदाङ्गज्योतिषकारदूषणं यदुक्तं तस्य निराकरणं पञ्चदशशतवर्षानन्तरं श्रीमद्गिराचार्यकौण्डिन्न्यायनमहाभागैः "युगमार्षं हि पञ्चाब्दं ब्रह्मगुप्तादिजल्पितैः। नाऽनार्षैर्बाध्यते धर्मे परं मानमृषिर्यतः" इत्यादिना कृतम्[२]।

उपरि चर्चितेषु वचनेषु केषुचन वचनेषु चान्द्रर्त्वलाभे सौरर्तुषु वैदिककर्मानुष्ठानानुमतिर्दत्ता दृश्यते। वस्तुतस्तु वैदिकानां कृते मासर्त्वयनादयश्चान्द्रा एव ग्रहणार्हा न तु सौरा इति लौगाक्षिस्मृतौ स्पष्टतयोक्तं दृश्यते। तथा हि—

"अधीत्य वेदं वेदौ वा वेदान् वा वेदमेव वा।
स्नानं कुर्याद् विधानेन गुर्वनुज्ञाप्रपूर्वकम्।।
तदुत्तरायणे कार्यं माघादिष्वेव केवलम्।
मुख्येषु कुर्याद् गौणेषु न कदाचन तां क्रियाम्"।।

"पक्षद्वयात्मको मास ऋतुर्मासद्वयात्मकः।
ऋतुषट्कात्मकश्चाब्दो मधुर्माधव एव च।।
वसन्त इति वेदोक्तः शुक्रश्च शुचिरप्यथ।
ऋतुर्ग्रीष्म इति प्रोक्तो नभा नभस्य एव च।।
वर्षा इति समाख्यात इषश्चोर्जश्च शारदः।
सहाश्चाऽपि सहस्यश्च हेमन्त इति चोदितः।।
तपश्चाऽपि तपस्यश्च शिशिराख्यो महात्मभिः।
मासपक्षर्तवः सर्वे तिथयो निखिला अपि।।
पक्षद्वयनिदानानि चान्द्रमानं तदात्मनि।
सम्यग् घटन्ते ते सर्वे न सौरे तु कदाचन।।

---

१. तै॰ब्रा॰ ३।१०।४।१, द्र.-तै.आर. ४।१९।१।

२. वैदिकमन्त्रसङ्ग्रहे (स्वाद्ध्यायशाला, काष्ठमण्डपनगरम्, नेपालदेशः, २०५२) पृ. १३७-१३८।

ततस्तेनैव मार्गेण श्रुत्युक्ताश्चाखिलाः क्रियाः ।
विशेषज्ञः प्रकुर्वीत न चेत् कर्माऽखिलं तु तत् ।।
वैगुण्यमेव लभते अतः श्राद्धं च तादृशम्''[1] ।। इति।

एतैः सन्दर्भैर्वैदिककालगणनायां चान्द्रमासर्त्वयनवर्षाणामेव प्राधान्यं स्पष्टं भवति। परम्परागतया ''एक मास ऋतु आगे धावै'' इति लोकोक्त्याऽपि अधिकमासयुक्ते वर्षेऽधिकमासात् पूर्वं स्थिताश्चान्द्रर्तवः प्रायश एकं मासं पूर्वमायान्तीति वस्तुस्थितिः सूच्यते। एतेनापि लोकेऽपि ऋतुरपि चान्द्र एव ग्राह्य इति परम्परा सूचिता भवति। एतेनापि वैदिकधर्मकर्मणि चान्द्रमानेनैव ऋतोर्व्यवस्था स्वीकर्तव्या इति निर्णय उपोद्बलितो भवति।

अत्र वेदवेदाङ्गज्योतिषसम्मताया वैदिककृत्यकालज्ञानायाऽऽवश्यक्याः सूर्यसापेक्षचान्द्रमानाधृतायाः कालगणनापद्धतेः प्रदर्शनं क्रियते—

वेदाङ्गज्योतिषसिद्धान्तानुसारं यस्मिन् काले सूर्य उत्तरायणं प्रारभते (सूर्यः सायनमकरराशिं गच्छति), तस्मात् कालाद् दिनषट्कानन्तरभाविनी, त्रयोविंशतिदिनपूर्वभाविनी, तन्मध्यवर्तिनी वा या शुक्लपक्षस्य प्रतिपत् सैव तपःशुक्लप्रतिपद् (माघशुक्लप्रतिपद् वा) भवति, तदैव सूर्योदयेन सहैव संवत्सर-परिवत्सरेदावत्सरेद्वत्सर-वत्सराख्येषु पञ्चसु वर्षेष्वन्यतमस्य वर्षस्य प्रारम्भः, उत्तरायणस्याऽऽरम्भः, शिशिरर्तोरारम्भः, तपोमासस्याऽऽरम्भश्च भवति। तिथिश्च वैदिकसिद्धान्तानुसारं सावनदिनात्मिका (अहोरात्रात्मिका) एव भवति। चन्द्रकलादर्शनविशेषादिवशात् कदाचिच्चतुर्दश्याः क्षयो भवति, ततश्च कदाचित् प्रतिपदश्चतुर्दशे दिवसे पौर्णमासी वाऽमावास्या वा भवति। अन्यासां तिथीनां क्षयो नैव भवति। कस्या अपि तिथेर्वृद्धिर्नैव भवति। सर्वोऽपि पक्षः चतुर्दशाहोरात्रात्मकः पञ्चदशाहोरात्रात्मको वैव भवति। **वैदिकसिद्धान्तानुसारं पूर्णिमा द्विविधा भवति–अनुमतिः, राका चेति। अमावास्याऽपि द्विविधा भवति–सिनीवाली कुहूश्चेति।** मासश्च शुक्लपक्षादिक एव भवति। शुक्लपक्षादिकचान्द्रतपस्तपस्तपस्य-मासात्मक-शिशिरर्तोरनन्तरं चान्द्रमधुमाधवमासात्मको वसन्तर्तुः, चान्द्रशुचिशुक्रमासात्मको ग्रीष्मर्तुश्च क्रमेणाऽऽगच्छतः। शुचिमासाऽमावास्यायां ग्रीष्मर्तुः उत्तरायणं च समाप्यते। तदनन्तरे दिने नभोमासशुक्लप्रतिपदि वर्षर्तोरारम्भो दक्षिणायनस्याऽऽ-

---

१. लौगाक्षिस्मृतौ (स्मृतिसन्दर्भः, षष्ठो भागः, मनसुखराय मोर, ५, क्लाइव रो, कलकत्ता–१, २०१३) पृ. २४४,३८२।

रम्भश्च भवति। चान्द्रनभोनभस्य-मासात्मकवर्षर्तोरनन्तरं चान्द्रेषोर्जमासात्मकः शरदृतुः, चान्द्रसहस्सहस्य-मासात्मको हेमन्तर्तुश्च क्रमेणाऽऽगच्छतः। सहस्यमासाऽमावास्यायां हेमन्तर्तुना सहैव दक्षिणायनं समाप्यते। तदैव पूर्वतपःशुक्लप्रतिपदि प्रवृत्तं वर्षञ्च समाप्यते।

प्रायशः सार्धयोर्द्वयोर्वर्षयोरन्तराले, समये समये च त्रयाणां वर्षाणामन्तराले उत्तरायणान्ते (ग्रीष्मान्ते) दक्षिणायनान्ते (हेमन्तान्ते) वाऽप्येकोऽधिमास उपजायते। यस्मिन्नागामिसौरायनारम्भस्थदिनषट्कसहिते एकस्मिन् सौरायने सप्त दर्शा भवन्ति, तदा सप्तमे दर्शे पूर्णो मासोऽधिकमासो भवति। उत्तरायणान्ते (ग्रीष्मर्तौ) स्थितस्तादृशोंऽहस्पतिमासो द्वितीयशुचिमासः (द्वितीयाषाढमासः) इति संज्ञां लभते। तत्पूर्ववर्ती शुद्धो मासस्तु प्रथमशुचिमासः (प्रथमाषाढमासः) इति संज्ञया व्यवह्रियते। दक्षिणायनान्ते (हेमन्तर्तौ) उपजातस्तादृशोंऽहस्पतिमासस्तु द्वितीयसहस्यमासः (द्वितीयपौषमासः) इति संज्ञां लभते। ततः पूर्ववर्ती शुद्धो मासस्तु प्रथमसहस्यमासः (प्रथमपौषमासः) इति नाम्ना व्यवहृतो भवति[1]। यस्मिन् वर्षे वर्षमध्ये वर्षान्ते वाऽप्युक्तप्रकारकोऽधिमास उपजायते, तद् वर्षं त्रयोदशमासात्मकं भवति। अन्त्याधिमासकमयनञ्च सप्तमासात्मकं भवति। अधिमासयुक्त ऋतुश्च मासत्रयात्मको भवति। षष्टिदिवसात्मकमासस्वीकारपक्षे तु मासद्वयात्मक एव ऋतुर्भण्यते।

---

१. नेपाले लिच्छविसम्प्रशासनकाले अभिलिखितेषु शिलालेखेषु पूर्वलिच्छविसंवत्सरेषु (शकान्तसंवत्सरेषु) आषाढे पौषमासे चैवाऽधिमासा दृश्यन्ते। तथा हि तत्र—(संवत् ३) ९८ प्रथमाषाढे शुक्लदिव १२, संवत् ४३५ द्वितीयपौषे शुक्लदिव ५, संवत् ४४९ प्रथमाषा(ढ)शुक्लदशम्याम् संवत् ४७९ द्वितीयाषा(ढ)....., संवत् ४८७ प्रथमाषाढशुक्लद्वितीयायाम्, संवत् ५१७ प्रथमाषाढशुक्लदिवा द्वादश्याम्, (संवत्) ५१९ प्रथमपौषशुक्लदिवा द्वादश्याम् इत्येतादृशा उल्लेखाः प्राप्यन्ते (द्र.-नेपालको प्राचीन अभिलेख, सम्पादक-हरिराम जोशी, नेपाल राजकीय प्रज्ञा प्रतिष्ठान, काठमाण्डु, २०३०)। एवमेव उत्तरलिच्छविकाले मल्लकाले चाऽपि वैक्रमाब्दानां षोडशशतकपर्यन्तमभिलिखितेष्वभिलेखेषु लिखितेषु पुस्तकेषु चाऽपि आषाढे पौषमासे चैवाऽधिमासा दृश्यन्ते। एतेन नेपाले काष्ठमण्डपनगरे वैक्रमाब्दानां षोडशशतकपर्यन्तं वेदाङ्गज्योतिषोक्तः 'अयनान्त एवाऽधिमास उपजायत' इति सिद्धान्तो व्यवहारेऽपि प्रयुज्यमानोऽवगम्यते। एतस्याः कालगणनापद्धतेः सङ्केतेन युक्तानि मल्लकाले लिखितानि रत्नकरण्डिका (स्मृतिसमुच्चयः), धर्मनिर्णयतिथिसारसङ्ग्रहः इत्यादिकानि हस्तलिखितानि पुस्तकानि काष्ठमण्डपनगरस्थनेपालराष्ट्रियाभिलेखालये सुरक्षितानि समुपलभ्यन्ते।

"असङ्क्रान्तिमासोऽधिमासः" इत्यधिमासपरिभाषा वैदिकानां कृतेऽस्वीकार्याऽवगम्यते, तस्या वेदाङ्गज्योतिषतदनुकूल-कौटलीयार्थशास्त्र(२।२०)-ज्ञापिताऽधिमासपरिभाषाविरुद्धत्वात्। अतश्च—

"सिनीवालीमतिक्रम्य यदा सङ्क्रमते रविः।
भानुना लङ्घितो मासो ह्यनर्हः सर्वकर्मसु"[१]।।

"मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्।
द्विराषाढः स विज्ञेयः ........................"।।

"एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत्।
दर्शश्राद्धं तदादौ स्यान्न परत्र मलिम्लुचे"।।

"रविसङ्क्रान्तिहीने यो वर्ज्याऽवर्ज्यविधिः स्मृतः।
स एव तु द्विसङ्क्रान्ते मलमासेऽप्युदीरितः"[२]।।

"नभो वाऽथ नभस्यो वा मलमासो यदा भवेत्।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः"[३]।।

इत्यादिकानां वचनानामनादिमूलवैदिकशास्त्रविरोधाद् वेदबाह्यत्वम् अर्वाक्कालिकत्वम्[४], पुरुषविशेषप्रवर्तितत्वम्—

"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः।।

उत्पद्यन्ते विनश्यन्ति यान्यतोऽन्यानि कानिचित्।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च"।। (१२।९५-९६) इति।

मनुस्मृतिवचनविषयत्वञ्च प्रतीयत इति च विवेकशीलैर्बोद्धुं शक्यम्।

---

१. चतुर्वर्गचिन्तामणौ (तृ.ख.,द्वि.भा.) पृ. ३४,३७।
२. निर्णयसिन्धौ, पृ. ९।
३. तत्रैव, पृ. ११४।
४. यत्तु कल्याणहिन्दुसंस्कृत्यङ्के (गीताप्रेस, गोरखपुर, २००६, पुनर्मुद्रणम् २०५१) इन्द्रनारायणद्विवेदमहोदयेन वर्तमानसूर्यसिद्धान्तग्रन्थस्यैव मूलसूर्यसिद्धान्तत्वम् (पृ. ७४७), लगधप्रोक्तवेदाङ्गज्योतिषग्रन्थस्य ततोऽर्वाचीनत्वम्, गणितानभिज्ञदर्शपौर्णमासयाजि-वैदिकार्थत्वञ्चोक्तम् (पृ. ७४९), तत् केनाऽप्यन्येन वेदाङ्गज्योतिषादिज्योतिषशास्त्रे-तिहासानुसन्धायकेनाऽस्वीकृतत्वाच्चिन्त्यमेव। नामकरणसंस्कारे नक्षत्रनामविषये वेदाङ्गज्योतिषोक्तायाः (याजुषज्यो., श्लो. ३५) व्यवस्थायाः चरकसंहितायाम् (शारीरस्थाने, ८।४५) सुश्रुतसंहितायां डल्लनकृतायां व्याख्यायाम् (शारीरस्थाने, १०।२४) अष्टाङ्गसङ्ग्रहे (उत्तर. १।७८, अष्टाङ्गहृदये (उत्तर. १।२३), संस्कारभास्करे (पृ. १२३-१२४) च अनुस्रियमाणताया दर्शनात् चुचेचोलेत्यादिकव्यवस्थायाश्चरकसंहितादिषु प्राचीन-ग्रन्थेष्वदर्शनाच्च लगधप्रोक्तं वेदाङ्गज्योतिषमेव वैदिकानां मूलं ज्योतिषशास्त्रमिति गम्यते।

एवं च संवत्सरोत्तरायण-शिशिरर्तु-तपोमास-शुक्लपक्ष-प्रतिपदि प्रारब्धं पञ्चवर्षात्मकं लगधप्रोक्तवेदाङ्गज्योतिषोक्तं वैदिकं युगं वत्सर-दक्षिणायन-हेमन्तर्तु-सहस्यमास-कृष्णपक्षाऽमावास्यायां समाप्यत[१] इति स्फुटं वेदितव्यम्।

एतस्य वेद-वेदाङ्गोपाङ्ग-स्मृति-पुराण-महाभारतादिवाङ्मयवचनजात-विचारणादागतस्य वैदिक-तिथि-पक्ष-मासाधिमासर्त्वयनवर्ष-युगविचारनिष्कर्ष-स्येदानीन्तने कालेऽपि वैदिकधार्मिकानुष्ठानेषूपयोगः कामप्यनुपपत्तिं विना कर्तुं शक्य इति सुधीभिर्विभावनीयम्।

अयं हि वेदवेदाङ्गाध्ययनमननप्रवणानां वैदिकानां द्विजोत्तमानां वैदिकमूल-कालगणनापद्धतिविषये निर्णयोऽस्ति। तथा हि—

"युगमार्षं हि पञ्चाब्दं ब्रह्मगुप्तादिजल्पितैः ।
नाऽनार्षैर्बाध्यते धर्मे परं मानमृषिर्यतः ।।
संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ।
ततश्चेदावत्सरश्च तुर्य इद्वत्सरः श्रुतः।।
वत्सरः पञ्चमोऽब्दः स्यात् पञ्चाब्दस्य युगस्य च ।
तेषां विपरिवर्तैश्च युगद्वादशकं स्मृतम्।।
वैष्णवं प्रथमं तत्र बार्हस्पत्यं ततः परम् ।
ऐन्द्रमाग्नेयं च त्वाष्ट्रमाहिर्बुध्न्यं च पित्र्यकम् ।।
वैश्वदेवञ्च सौम्यञ्च ऐन्द्राग्नञ्चाऽऽश्विनं तथा ।
भाग्यञ्चेति द्वादशैव युगानि कथितानि हि ।।
चैत्रशुक्लप्रतिपदि कलेरब्दः प्रवर्तते ।
अन्येषान्तु मते यावतिथः षट्त्रिंशता ततः ।।

१. एतत्सिद्धान्तानुसारम् १९९५-१२-२२ इत्यङ्कनीये दिने संवत्सर-तपशशुक्लप्रतिपदि प्रवृत्तं पञ्चवर्षात्मकेषु वैष्णवादिषु द्वादशसु युगेषु पञ्चमं त्वाष्ट्रं युगं २०००-१२-२५ इत्यङ्कनीये दिने वत्सर-सहस्यमासाऽमावास्यायां समाप्यते। एतस्मिन् युगे इदावत्सरमध्ये (१९९८-५-२६तः १९९८-६-२३ पर्यन्तं) द्वितीयशुचिमासाख्य एकोऽधिमासः, वत्सरान्ते (२०००-११-२६तः २०००-१२-२५ पर्यन्तं) द्वितीयसहस्यमासाख्योऽन्योऽधिमास इति द्वावधिमासावुपजायेते। २०००-१२-२६ इत्यङ्कनीये दिने संवत्सर-तपोमासशुक्लप्रतिपदि सूर्योदयेन सहैव षष्ठमाहिर्बुध्न्यं युगं प्रवर्तते।

न्यूनः कृष्णयुगाब्दस्तु वैदिकानां प्रवर्तते ।
तपश्शुक्लप्रतिपदि तत्पूर्वस्यामिति स्थितिः ।।

तष्टाः कृष्णयुगाब्दास्तु षष्ट्याऽऽदियुगसञ्चयः ।
लब्धः, शेषे पञ्चभिस्तु तष्टे लब्धं युगं गतम् ।।

शिष्टेऽत्र खे पञ्चमोऽब्दोऽन्यत्र तत्सङ्ख्यवत्सरः।
संवत्सरादिषु ज्ञेयो वैदिकैर्ब्राह्मणैः सदा[१] ।।

आर्यावर्ते तु मध्याह्नेऽहस्सु ह्रस्वतमा यदा।
शङ्कोश्छाया ततः सूर्यः प्राप्नुयाद् दक्षिणायनम्।।

आर्यावर्ते हि मध्याह्नेऽहस्सु दीर्घतमा यदा।
शङ्कोश्छाया ततः सूर्यः प्राप्नुयादुत्तरायणम्।।

सूर्यस्योदङ्मुखीभावात् स्फुटं याऽमावसी परा।
तस्यां तु पूर्णे मासे हि प्रवृत्तं वर्षमिष्यते।।

तस्य मासस्य या शुक्लप्रतिपत् तत् एव च।
इज्यार्थं वर्षमयनमृतुर्मासश्च गण्यते।।

तत्राऽयनं चोत्तरं स्यादृतुश्च शिशिरो भवेत्।
तपाः सौरे नाम्नि मासो माघश्चान्द्रे प्रकीर्तितः[२] ।।

तपस्तपस्यौ च मधुमाधवौ शुक्रकः शुचिः।
नभो नभस्यौ चेषोर्जौ सहाश्चैव सहस्यकः।।

सूर्यगत्यनुगौ चान्द्रौ वैदिकद्विजसम्मतौ।
द्वौ द्वौ तपःप्रभृतिकौ मासावृतुरिहोदितः।।

---

१. अभीष्टं वर्षं संवत्सर-परिवत्सरादिषु पञ्चसु वर्षेषु कतमदस्तीति ज्ञातुं "द्व्यूनं शकेन्द्रकालं पञ्चभिरुद्धृत्य शेषवर्षाणाम्। द्युगणं माघसिताद्यं कुर्याद् द्युगणस्तदहन्युदयात्" इति वराह-मिहिरकृतपञ्चसिद्धान्तिकान्तर्गतपैतामहसिद्धान्तोक्तिरपि सहायिका भवितुं शक्नोति न वेति सुधीभिर्विभावनीयम्। एतद्विषये सर्वानन्दकरणस्य वेदाङ्गमञ्जरीप्रकरणमपि विचारणीयम्।

२. अस्मिन् पक्षे माघादिनाम्नां शिशिरर्तुप्रथममासादौ रूढत्वं स्वीकार्यं भवति। "सास्मिन् पौर्णमासीति" (अष्टा. ४।२।२१) इत्यादीनां पाणिन्यादिवचनानां शब्दव्युत्पादनेनैव सार्थकत्वं भवति।

शिशिरश्च वसन्तश्च ग्रीष्मो वर्षास्तथा शरत्।
हेमन्तश्चेति ऋतवः क्रमान् मासद्वयात्मकाः।।
उत्तरायणमत्रोक्तमृतुभिः शिशिरादिभिः।
त्रिभिर्वर्षादिभिः प्रोक्तमृतुभिर्दक्षिणायनम्।।
सौरेऽयने सप्त दर्शा यदा षड्भिर्दिनैर्युते।
तदा दर्शे सप्तमे तु पूर्णो मासोऽधिको भवेत्''[१]।। इति।

एवञ्च निखिलवैदिकवाङ्मयमूलधारासंवादाज्जैमिनीयधर्ममीमांसानिर्णीतानां वैदिककृत्यकालानां चान्द्रमाननियतत्वं स्पष्टतया बोद्धुं शक्यम्।

अत एव वैदिकैर्ब्राह्मणादिभिरिदानीमपि स्नानसन्ध्योपासनादिनित्यसदाचार-कर्म-गर्भाधानसंस्कारादिस्वगृह्योक्तसंस्कारकर्म-पार्वणश्राद्धादिश्राद्धकर्म-कूपाराम-तडागो-त्सर्गादिपूर्तकर्मादिषु धार्मिककृत्येषु सङ्कल्पे कालनिर्देशे पूर्वोक्तवैदिकतिथि-पक्ष-मासर्त्वयन-वर्ष-युगादीनामेव प्रयोगः कर्तव्य इति प्रतीयते।

एतस्मिन् विषये वेदवेदाङ्गोपाङ्गकुशलैर्ज्योतिषशास्त्रनिष्णातैश्च विद्वद्भिर्भारतवर्षेतिहासमप्यनुशील्य सम्यग् विचारं कृत्वा समुचितो निर्णयः कार्यः, मूलवैदिकपरम्परागौरवं संरक्षणीयम्, तदनुसारं प्रचलितपञ्चाङ्गपत्रकेषु परिष्काराय पञ्चाङ्गकाराणामुद्बोधनं च कार्यमिति शम्।

●

---

१. (क) वैदिकमन्त्रसङ्ग्रहः (स्वाद्ध्यायशाला, काष्ठमण्डपनगरम्, २०५२), परिशिष्टम् पृ. २३७-२३८।

(ख) व्यावहारिकं संस्कृतम्, द्वितीयं पुस्तकम् (स्वाद्ध्यायशाला, काष्ठमण्डपनगरम् २०५३) पृ. ७७-७८।

(ग) 'वेदाङ्गज्योतिषं युगवर्षायनर्तुमासाधिमासादिगणना च' इत्याख्यो निबन्धः (सारस्वती सुषमा, ५० व. १-२ अं., सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी) पृ. २६१-२६२।

# मन्त्रार्थविमर्शे स्वरशास्त्रस्य वैशिष्ट्यम्

**डॉ. चन्द्रकान्ताराय**
प्राध्यापिका, संस्कृतविभागस्य
आर्यमहिलामहाविद्यालये, वाराणसी

❀ ❀ ❀

वेदविद्यामर्मज्ञैर्मनीषिभिर्वेदशब्दो विविधप्रकारैर्व्याख्यातोऽस्ति, तद्यथा—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता[१]।।

सायणाचार्येण प्रोक्तमस्ति—

इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः[२]।

अन्यत्राप्यनेनैवमभिहितं वर्तते—

अलौकिकं पुरुषार्थोपायं वेत्त्यनेनेति वेदशब्दनिर्वचनम्[३]।

मनुस्मृतिभाष्ये मेधातिथिर्ब्रवीति—

विदन्त्यनन्यप्रमाणवेद्यं धर्मलक्षणमर्थमस्मादिति वेदः[४]।

स्वामिदयानन्दसरस्वतीपादो विद ज्ञाने, विद सत्तायाम्, विद्लृ लाभे, विद विचारणे इत्येभिर्धातुभिर्वेदशब्दस्य निष्पत्तिमुदीरितवान्। एतन्मतेन विदन्ति जानन्ति, विद्यन्ते भवन्ति, विन्दन्ति विन्दन्ते लभन्ते, विन्दते विचारयन्ति सर्वे मनुष्याः सर्वाः सत्यविद्या यैर्येषु वा ते वेदाः[५]।

---

१. तै.भा.भू. तथा ऐ.ब्रा.भा.भू., सायणः।
२. तै.भा.भू., सम्पा. पं. बलदेव-उपाध्यायः, चौ.सं.सी., वाराणसी, १९३४, पृ. २।
३. तत्रैव, पृ. ४५।
४. म.स्मृ. २।६।
५. दयानन्दः, ऋ.भा.भू., सम्पा. युधिष्ठिरमीमांसकः, पृ. २२।

ऋग्वेदे शुक्लयजुर्वेदे[१] अथर्ववेदसंहितायां[२] चापि आद्युदात्तो वेदशब्दो ज्ञानार्थे प्रयुक्तोऽस्ति। श्रीमता ए.एम.रामनाथदीक्षितेन सामतन्त्रभूमिकायां विश्लेषितमस्ति यद् आद्युदात्तो वेदशब्दः श्रुत्यर्थे अन्तोदात्तश्च दर्भमुष्ट्यर्थे अभीष्टोऽस्ति[३]।

वेदतत्त्वपरिज्ञानाय नैकैर्भाष्यकारैर्भाष्यं प्रणीतमस्ति। स्कन्दस्वामि-उद्‌गीथ-वेङ्कटमाधव-आनन्दतीर्थ-सायण-उवट-महीधरप्रभृतीनां बृहती भाष्यपरम्परा उपलभ्यते। शाकल्यकृतेन पदपाठेन मन्त्रार्थाध्ययनस्य आरम्भो जात इत्येवं कथयितुं शक्यते। शब्दनिर्वचनविधिना ब्राह्मणेष्वपि मन्त्राणामर्थज्ञानाय प्रयासो विहितोऽस्ति। ब्राह्मणमिश्रितासु कृष्णयजुर्वेदीयसंहितासु मन्त्रव्याख्यायाः सुष्ठु प्रयासोऽवलोक्यते। अत एव ब्राह्मणानि वेदव्याख्यानग्रन्था इत्येवं विद्वद्भिः स्वीकृतम्। तैत्तिरीयसंहिताभाष्ये आचार्यः सायणोऽभिधत्ते—

यद्यपि मन्त्रब्राह्मणात्मको वेदस्तथापि ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वान्मन्त्रा एवादौ समाम्नाता[४] इति।

निरुक्ते अनेकत्र 'इति ह ब्राह्मणम्' 'इति ह विज्ञायते' इत्येवं कृत्वा ब्राह्मणवचनान्युद्धृतानि सन्ति। परमनेकत्र ब्राह्मणेषु अनेकार्थका अतस्तु अस्पष्टार्थका असङ्गतार्था वा कथा उद्भावितास्सन्ति। अतस्तु मन्त्रगतपदानां प्रतीकार्थं सम्यग् विज्ञायैव मन्त्रार्थोऽवगन्तव्यः।

निरुक्ते शतपथब्राह्मणे धर्मशास्त्रेषु च अधिदैवत-अध्यात्म-आख्यानसमय-नैदान-नैरुक्त-याज्ञिक-ऐतिहासिक-परिव्राजक इत्येवं नैका मन्त्रार्थानुशीलनपरम्परा उल्लिखितास्सन्ति। स्कन्दस्वामि-उद्‌गीथाचार्य-वेङ्कटमाधवप्रभृतिभिर्याज्ञिकपद्धति-मनुसृत्य ऋग्वेदभाष्यं प्रणीतम्। स्वरसन्ध्युच्चारणविध्यादिज्ञानपुरस्सरं मन्त्रार्थज्ञानं सविध्यवगतं स्यादित्येतदर्थं प्रातिशाख्यग्रन्थानां वैशिष्ट्यं स्मर्यते। एवमेव वेदार्थपरिज्ञानाय वेदाङ्गत्वेन पाणिनीयव्याकरणस्य महत्त्वं विशेषेणोल्लेखनीयमस्ति। भट्टोजिदीक्षितेन पाणिनेर्वैदिकस्वरसम्बद्धानां सूत्राणां कृते वैदिकस्वरप्रक्रियेत्येवं पृथक् स्थानं परिकल्पितम्।

---

१. शु.य.वे. १९।७८।
२. अ.वे. ४।३५।६; ७।५७।१; १०।८।१७; १५।३।१७।
३. सामतन्त्र, सम्पा. ए.एम. दीक्षितः, का.हि.वि.वि., १९६१, भूमिका, पृ. १।
४. आनन्दाश्रमग्रन्थमाला, तै.सं.भा., पृ. ७।

मन्त्रव्याख्याया: शब्दनिर्वचनपद्धतेश्चरमोत्कर्षो यास्ककृते निरुक्ते संलक्ष्यते। अत्र ग्रन्थकारेणानेकेषां मन्त्राणां ब्राह्मणवाक्यानामपि यत्र तत्र व्याख्या विहिताऽस्ति। शतपथब्राह्मणे[१] षड्विंशब्राह्मणे[२] च प्रयुक्तस्य 'जार'शब्दस्य निर्वचनमत्र द्रष्टव्यमस्त्येव—

आदित्योऽत्र जार उच्यते। रात्रेर्जरयिता[३] इति।

एवं मन्त्रार्थज्ञानाय निरुक्तपद्धतिर्विशिष्टैका सरणिर्विद्यते।

स्वरशास्त्रं भाषाशास्त्रस्याङ्गभूतम्। अतस्तु भाषाविशारदैरपि स्वरार्थयो: सम्बन्धे विमर्श: कृतोऽस्ति। पदस्वरूपावबोधाय स्वरधर्माणां ज्ञानमावश्यकम्, अत एव वैयाकरणैरपि स्वरार्थसम्बन्ध: स्वराणां पदे स्थितिरित्येवं विषया आलोचिता:। अर्थनिर्धारणे उदात्तादिस्वरधर्माणामपरिहार्या भूमिकाऽस्ति। महाभाष्यकारेण प्रोक्तमस्ति यद् व्याकरणशास्त्रज्ञ एव स्वरसाहाय्येन पदस्वरूपं ख्यापयति। स्वरशास्त्रं व्याकरणस्याङ्गभूतमित्येवं प्रकल्पितमनेन। स्वामिनो दयानन्दस्य मन्तव्यमस्ति यद्वेदेऽतिसूक्ष्मं पदार्थविज्ञानमुपदिष्टमस्ति। तच्च स्वरज्ञानेन विनाऽवाप्तुं नैव शक्यते। वेदभाष्यकारो वेङ्कटमाधवोऽर्थविज्ञानदृष्ट्या स्वराणां शास्त्रीयं विवेचनं कृतवान्। 'ऋगर्थदीपिका'नामके ऋग्वेदभाष्ये वैदिकपदानां स्वरा विश्लेषिता अनेन। एवञ्च वेदार्थपरिज्ञानाय स्वरज्ञानस्यापरिहार्यता प्रतिपादिता। पाणिनिनाऽऽचार्येण बहूनां पूर्वाचार्याणां नामनिर्देशो मतप्रकाशनं वा विहितमस्ति। इत्थमनुमीयते यदेतेषां वैदिकस्वरविवेचनसंवलिता: पृथक् पृथग्ग्रन्था अप्यासन् कालकवलीभूताश्चैते सम्प्रति नैवावलोक्यन्ते।

'उदक् च विपाश:'[४] पाणिने: सूत्रेऽस्मिन् व्याकृतमस्ति यद् विपाश: उत्तरस्मिन् तटे दत्तगुप्तप्रभृतिभिर्निर्मित: कूप आद्युदात्तस्वरविशिष्टो दात्त:, गौप्त इत्येवं व्यवह्रियते स्म, दक्षिणतटवर्ती चान्तोदात्तस्वरलक्षितो दात्तो गौप्त इत्येवं ख्यापितोऽवर्तत। उद्धरणेनानेन सूच्यते यत्पूर्वं लोकभाषायामपि उदात्तानुदात्तादि-स्वरविचारोऽक्रियत।

भरतमुनिना नाट्यशास्त्रे विविधरसानां निष्पत्तौ उदात्तादिस्वराणामुपयोगिता स्वीकृताऽस्ति। तद्यथा—

---

१. श.ब्र. ३।३।४।१८; २. षड्विंशब्रा. १।१।
३. नि. ३।१६; ४. अष्टाध्यायी-४।२।७४।

तत्र हास्यशृङ्गारयोः स्वरितोदात्तवर्णैः पाठ्यमुपपाद्यं वीररौद्राद्भुतेषु उदात्तकम्पितैः करुणबीभत्सभयानकेषु अनुदात्तस्वरकम्पितैरिति[१]।

वामनजयादित्ययोः काशिकाग्रन्थनिर्माणकालपर्यन्तं भाषायामपि उदात्तादिस्वरप्रयोगः प्राचलदित्येवं सङ्केतोऽस्मिन् ग्रन्थे प्राप्यते। परवर्तिकाले साहित्यकृद्भिः स्वकीयरचनास्वर्थनियामकस्वरधर्माणां भृशमुपेक्षा कृता अवरोधकत्वेनाङ्गीकृत्य चैतेषां परिहारोऽपि कृतः। यथोक्तमस्ति मम्मटेन काव्यप्रकाशे—

काव्यमार्गे स्वरो न गण्यत[२] इति।

आचार्यो विश्वनाथोऽप्यभणत् साहित्यदर्पणे, यथा—

स्वरास्तु वेद एव विशेषप्रतीतिकृत्[३]।

एवं शनैः शनैर्भाषायां स्वरधर्माणां प्रचलनं विलुप्तं जातमिति स्पष्टं प्रतिभाति। कालक्रमाद् यज्ञानुष्ठानप्रवृत्तिरद्य लुप्तप्रायाऽस्ति। प्राक्काले तु यजनकर्मणि सस्वरो मन्त्रोच्चारोऽवश्यमेव विधीयते स्म। नारदीयशिक्षायां स्वरहीनमन्त्रोच्चारोऽनिष्टकारक उक्तोऽस्ति। तदेवं यथा—

प्रहीणः स्वरवर्णाभ्यां यो वै मन्त्रः प्रयुज्यते।
यज्ञेषु यजमानस्य रुषत्यायुः प्रजां पशून्[४]।।

पाणिनीयशिक्षायामपि निर्दिष्टमस्ति—

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्[५]।।

स्वरोच्चारणविधिमुल्लङ्घ्य अभीष्टाऽवाप्तिर्नैव कर्तुं शक्यत इत्येवं सङ्केतितं स्फुटमेवात्र। शतपथब्राह्मणमपि मन्त्रार्थसिद्ध्यर्थं सस्वरमुच्चारण-मुपदिशति। यथा—

---

१. ना.शा. १७।११०; २. का.प्र. ९।८४।
३. सा.द., परि. ३; ४. ना.शि. १।६।
५. पा.शि. ५२।

वाचि स्वरमिच्छेत। तया स्वरसम्पन्नयाऽऽर्त्विज्यं कुर्यात्। तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव[1]।

पश्चात्तु स्वरमन्त्रोच्चारकाणामृत्विजामभावे यज्ञकर्मण्येकश्रुतिस्वरपाठस्य विकल्पो विहित इति वस्तुस्थितिरेवं स्वीक्रियते।

मन्त्रार्थज्ञानायापि स्वराणां स्वरूपज्ञानं सम्यगुच्चारणं चापीष्येते। स्वरव्यवस्थयैवानेकार्थकशब्दानां नियतोऽर्थः प्रकाश्यते। स्वरज्ञानं विना प्रतिपदं भ्रान्त्यावरणमाच्छादयति पाठकान्। अतस्तु ऋग्वेदभाष्यभूमिकायां स्वामिना दयानन्देन प्रतिज्ञातमस्ति—

वेदार्थोपयोगितया सङ्क्षेपतः स्वराणां व्यवस्था लिख्यत[2] इति।

वैदिकस्वरेषु; उदात्तस्य प्रामुख्यं दृश्यते। यास्केन उदात्तानुदात्तयोः प्रकृतिरेवं विविक्ताऽस्ति—

तीव्रतरमुदात्तम्, अल्पीयोऽर्थतरमनुदात्तमिति[3]।

एकस्मिन् पदे प्रायश एक एव वर्ण उदात्तत्वं भजतेऽवशिष्टाश्चानुदात्तत्वधर्मसंश्लिष्टा भवन्ति[4]। उदात्तस्वरोपेतः प्रत्ययस्तद्युक्ता प्रकृतिर्वापि प्रामुख्येण परिगण्यते। समासप्रक्रियायामपि यत्रोदात्तो वर्तते, तस्यैव पदस्यार्थप्राधान्यं भवति, यत्र चाऽनुदात्तधर्मस्तत्र गौणत्वं विद्यते। अस्मिन् प्रसङ्गे वेङ्कटमाधवेन लिखितमस्ति—

तत्रोत्तरपदार्थस्य प्राधान्यं यत्र वर्तते।
उदात्तस्तत्र भवति..................[5]।।

वाक्येष्वप्येवमेव आख्यातादिषु उदात्तानुदात्तधर्मानुसारं क्रमेण प्राधान्यमप्राधान्यं वा निर्णीयते। यथा—

कृ॒ष्णकम्बलम् आन॒य॒।

---

१. श.ब्रा. १४।४।१।२७।

२. ऋ.भा.भू., पृ. ३७४ (तृतीयं संस्करणम्)।

३. नि. ४।२५।

४. अनुदात्तं पदमेकवर्जम्। (अष्टाध्यायी-६।१।१५८)

५. स्वरानुक्रमणी-१।८।

अत्र णकारोत्तरर्ती अकार उदात्तधर्मविशिष्टः। अतस्तु तद्युक्तस्य कृष्णपदस्य प्राधान्यम्।

अर्थोऽयमापतति—कृष्णकम्बलयुक्तमानयेति। अनेकेषु यत्कृष्णवर्णमयं तेन युक्तमिति। अन्यपदप्रधाने सत्यप्यत्र विद्यमानयोरुभयोः पदयोः कृष्णपदस्य प्राधान्यमस्ति। पुनश्चैवम्—

कृष्णकम्बलम् आनय।

इत्यत्र स्वरपरिवर्तने कृते लकारोत्तरवर्तिन्यकारे उदात्ते सति कम्बलपदस्य प्राधान्यं द्योत्यते, कृष्णत्वधर्मविशिष्टं कम्बलमानय इत्यर्थः। समस्तपदे विशेष्यविशेषणयोर्मध्ये उत्तरवर्तिनो विशेष्यपदस्य मुख्यत्वं प्रोक्तं तच्च उदात्तप्रकर्षेण सुव्यक्तं भवतीत्येवं पाणिनिसूत्रेण व्याकृतमस्ति—'समासस्ये'ति[१]। अर्थात् समासे अन्ते उदात्तो विद्यत इति।

वेदे स्वरा एव तत्साधनं येन सूक्ष्मं वास्तविकञ्च पदार्थविज्ञानमवगन्तुं शक्यते। स्वरशास्त्रमवलम्ब्य वेदार्थजिज्ञासुः पदानां सूक्ष्मं रहस्यमपि साक्षात्कर्तुं प्रभवति। स्वरशास्त्रविशारदो वेङ्कटमाधवो लिखति—

अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित्।
एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्फुटा[२] इति।।

स्वरभेदे सति अर्थभेदो जायते एव। अत एवासौ ब्रवीति—

अर्थभेदे तु शब्दस्य सर्वत्र सदृशः स्वरः।
यदा न तं स्वरं पश्येदन्यथार्थं तदा नयेत्।। इति।

अनेन स्वकीये ऋग्वेदानुक्रमणीपरिशिष्टे पदविभागविषये स्वर-वैशिष्ट्यमेवमुद्घोषितम्—

नामाख्यातविभागश्च स्वरादेवावगम्यते[३]। इति।

अर्थनिर्णये स्वराणां महती भूमिका विद्यते। एनामेव भूमिकां पुनः पुनः स्मारयत्याचार्योऽयं वेङ्कटमाधवः। तद्यथा—

---

१. अष्टाध्यायी-६।१।२२३।
२. स्वरानुक्रमणी-१।८।
३. ऋग्वेदानुक्रमणी-परि., पृ. १०५।

अनुक्रमणिका षष्ठी स्वरतोऽर्थस्य निर्णयः।
प्रदर्शयति मन्त्रेषु ग्राह्या सा निपुणैर्नृभिः[१]।।

अनेकार्थशब्दानामर्थनियमनसाधनेषु स्वरविज्ञानस्यापि साधनत्वं विज्ञापयति भर्तृहरिरपि—

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः[२]।।

भगवता पतञ्जलिना 'स्थूलपृषती'पदेऽर्थसंशये समुत्पन्ने स्वरस्य निर्णेतृत्वमित्थं प्रतिपादितम्—यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति।

लौकिक्यां वैदिक्याञ्चापि संस्कृतभाषायां नैकार्थयुतानां शब्दानां बाहुल्यमस्ति। स्वरविवेक एव अर्थप्रकाशने प्रकृष्टोपकारकोऽस्ति।

अष्टाध्याय्यां 'क्षयो निवासे'[३] इति सूत्रे स्पष्टमुदीरितमस्ति यदाद्युदात्तः क्षयशब्दो गृहस्य पर्यायोऽन्तोदात्तश्च विनाशस्य क्षतेर्वा ज्ञापकोऽस्ति। माध्यन्दिनसंहिताया मन्त्रांशोऽस्ति—

न तस्य॑ प्रति॒मा अ॑स्ति[४]।

अत्र द्विधाऽर्थः कर्तुं शक्यते—अवनतस्य प्रतिमा अस्तीत्येवं, न तस्य प्रतिमा अस्तीति एवञ्चापि। अनयोः करमोऽर्थः समीचीनः करमश्चासङ्गत इति जिज्ञासायां स्वरशास्त्रानुगतं समाधानं प्रस्तूयते। तदनुसारमेकस्मिन् पदे एक एवोदात्तः तिष्ठति। न तस्य इत्यत्र नवर्णोत्तरवर्ती तवर्णोत्तरवर्ती चोभावेव अकारौ उदात्तौ। अतः स्पष्टमिदं यद् 'न' पृथक्पदं 'तस्य' च पृथगेव वर्तते। एवञ्च न तस्य प्रतिमाऽस्ति—इत्ययमर्थो निश्चीयते। स्वरशास्त्राश्रयेण विनैतत्कर्तुं न शक्यते। माध्यन्दिनसंहिताया एवापरमेकमुद्धरणं दीयते—

भ्रातृ॑व्यस्य व॒धाय॑[५] इति।

---

१. ऋग्वेदानुक्रमणी-परि., पृ. ११९।

२. वाक्यपदीयम्-पुण्यराजटीका, पृ. २१६, पं. १६तः अग्रे।

३. अष्टाध्यायी-६।१।२०१।

४. मा.सं. ३२।२।

५. तत्रैव-१।१८।

भ्रातृव्यपदस्य शत्रुः भ्रातृसुतश्चैवमर्थद्वयं विश्रुतमस्ति। अत्र कोऽर्थो ग्राह्यः स्यात्? स्वरशास्त्रसाहाय्येनात्रापि सुव्यक्तं भवति यदाद्युदात्तं भ्रातृव्यपदं शत्रुवाचकम्, स्वरितञ्च भ्रातृसुतार्थकमस्ति। मन्त्रांशेऽस्मिन् भ्रातृव्यपदमाद्युदात्तमस्ति। इत्थं शत्रोः वधायेत्यस्यार्थ उपपद्यते।

एवमेव मन्त्रगतपदानां सौक्ष्म्येण अर्थबोधायापि स्वरविचार आवश्यकोऽस्ति।

उप॑ त्वाग्ने दि॒वे दि॑वे॒।
दोषा॑वस्तर्धि॒या व॒यम्
न॒मो भर॑न्त॒ एम॑सि॒[1]।।

अत्र 'दोषावस्तः'—पदमाद्युदात्तं तच्च पादादाववस्थितम्। पादादौ स्थितमाद्युदात्तपदं सम्बोधने प्रयुक्तं लभ्यते। काण्वसंहिताया मन्त्रभाष्ये आचार्येण सायणेन एवमस्यार्थो व्याख्यातोऽस्ति—

हे दोषावस्तः अग्ने! दोषा रात्रिः तस्यामपि वसति अजस्रं धार्यमाणत्वान्नोपशमति, इति दोषावस्ता।

उवटभाष्यमप्यत्र द्रष्टव्यमस्ति—

हे दोषावस्तः, दोषेति रात्रिनाम। वस निवासे। रात्र्यां वसनशीलो दोषावस्ता तस्य सम्बोधनं हे दोषावस्तः[2]।

ऋग्वेदस्य अक्षसूक्ते[3] अन्तोदात्तो वृषलशब्दः शतपथब्राह्मणे[4] चाद्युदात्तो वृषलशब्दः प्रयुक्तोऽस्ति।

स्वरविज्ञानविचक्षणः श्रीमान् युधिष्ठिरमीमांसको निर्दिशति यदाद्युदात्तो वृषलशब्दो धर्मनिष्ठस्य वाचकोऽन्तोदात्तश्चाधर्मिणो निकृष्टस्य वा बोधकोऽस्ति। उभावेवार्थौ निरुक्ते व्याख्यातौ, यथा—

वृषलो वृषशीलो भवति वृषाशीलो वेति[5]।

---

१. ऋ.वे. १।१।७।
२. य.वे. ३।२२, उवटभाष्यम्।
३. ऋ.वे. १०।३४।११।
४. श.ब्रा. १४।९।४।१२।
५. नि. ३।१६।

स्वरविज्ञानं कथं गूढार्थं स्फुटीकरोतीत्यस्य प्रतिबोधनार्थमाचार्यो युधिष्ठिरमीमांसको यजुर्वेदस्य मन्त्रमुद्धरति—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः[१]। इति।

भाषायां तिप्सिप्मिप्प्रत्ययेषु परेषु सन्नन्तधातुरूपमाद्युदात्तस्वरसंश्लिष्टं भवत्येवञ्च धातावेवोदात्तत्वं भवति, यथा— चिकीर्षति चिखादिषति-प्रभृतिषु। चिकीर्षति-कर्तुमिच्छति, चिखादिषति—खादितुमिच्छतीत्यत्र इच्छायाः प्राधान्यं नास्त्यपि तु कृ-खादप्रभृतिधातूनामर्थस्य प्राधान्यं वर्तते। इदमेव कारणं यदत्र इच्छार्थकसन्प्रत्यये उदात्तो नास्ति मूलधातुश्चोदात्तत्वविशिष्टोऽस्ति।

परं 'जिजीविषेत्' इत्यत्र मन्त्रपदे ईदृशी स्थितिर्नास्ति। स्वरशास्त्रानुसारमत्र इच्छार्थकसन्प्रत्ययस्य प्राधान्यमिष्यते। 'जीव'धातुरत्र प्राणधारणक्रियायां प्रवर्तते। एषा क्रिया कर्त्रधीना नास्ति। कर्ता प्राणधारणस्य इच्छामात्रं कर्तुं प्रभवति, प्राणधारणक्रियायामस्य प्रभुता नास्ति। अतस्त्वत्र प्राधान्यवशादेव सन्प्रत्यये उदात्तत्वमस्ति।

एवं मन्त्रगतं गूढार्थं परिज्ञातुमपि स्वरविज्ञानस्यान्यतमं वैशिष्ट्यमस्ति। स्वरसाह्येन पदार्थभ्रान्तिर्विनश्यति। स्वरव्यत्ययेन तु वास्तविकोऽर्थ एव विलुप्येत। अत एव वेदे स्वराणां यथास्थिति एव मन्त्रार्थज्ञानाय प्रयत्नो विधेय इति।

●

---

१. य.वे. ४०।२।

# उपनिषदः शिक्षणीयतत्त्वानि

**डॉ. आदित्यनाथभट्टाचार्यः**
अध्यापकः, संस्कृतविभागस्य
वर्धमानविश्वविद्यालये

❀ ❀ ❀

लौकिकं वैदिकञ्चेति द्विविधं संस्कृतस्य वाङ्मयम्। तत्र वैदिकवाङ्मयान्तर्गता खलु 'उपनिषत्'। अस्ति तावद् वेदस्य अंशद्वयं मन्त्रो ब्राह्मणञ्चेति। तत्र मन्त्रव्याख्यानरूपस्य ब्राह्मणस्य प्रथमांशे मन्त्राणां यागादिकर्मसु विनियोगः प्रदर्शितः, स च भागो मन्त्रसंहितासहितः कर्मकाण्डात्मक एवेति सुप्रसिद्धः। द्वितीयांशे आरण्यकानि अरण्ये कृत्यानि ज्ञानकर्मणोः समन्वयसाधकानि श्रूयन्ते। तृतीयांशस्तु ज्ञानकाण्डात्मकोपनिषन्निचयोऽस्माकमत्र ज्ञातव्यविषयः। एवं समग्रवेदसारभूता उपनिषद् वेदस्यान्तभूतत्वाद् 'वेदान्त' इति नाम्ना सुविदिता। उपनिषत् खलु वेदान्तस्य श्रुतिप्रस्थानरूपा। श्रीमद्भगवद्गीता च पुनरस्य स्मृतिप्रस्थानभूता। गीताया उपनिषद्रूपता च विद्वद्भिः सर्वैः परिज्ञाता, गीतायाः प्रत्येकाध्यायान्ते 'भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायाम्' इति सन्दर्भेण सङ्कीर्त्तनात्। वेदान्तस्य च न्यायप्रस्थानं बादरायणवेदव्यासप्रणीतं पञ्चपञ्चाशदुत्तरपञ्चशतसूत्रोपबृंहितं प्रथितमस्ति लोके। विवक्षितञ्च जगद्गुरुशङ्कराचार्येण 'वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्'[१] इति वाक्ये यद् उपनिषद्वाक्यानि समुपजीव्यैव लब्धसत्त्वानि सर्वाणि वेदान्तसूत्राणि प्रवृत्तानि। तदेवमुपनिषद्वाक्यरहस्यमुद्घाटयित्तुं गीताब्रह्मसूत्रादिवाक्यविचारणाऽपि नूनं कर्त्तव्येति स्थितम्।

सेयमुपनिषत् सुधीभिः 'रहस्यविद्या' इत्याख्यया समाख्यायते। उपनिषदुपदिष्टब्रह्मतत्त्वस्य अतीव दुरूहत्वाद् रहसि गुरुमुखादेव इयं विद्या अधिगन्तव्या। तथा च श्रुतिः —

---

१. ब्रह्मसूत्रशारीरकभाष्यम्-५।१।२।

'पण्डितो मेधावी गन्धारानेवोपसम्पद्येत एवमेवेहाचार्यवान् पुरुषो वेद'[१]। अत्र स्थित्यर्थकसद्धातोर्व्युत्पादित एवोपनिषच्छब्दः। गुरुशिष्ययोः अवस्थाननिमित्तका इयं विद्या इति तदर्थः।

किञ्च, उपनिषद् 'ब्रह्मविद्या' परमात्मविषयिणी 'पराविद्या' वेति व्यपदिश्यते। अत्र तु गत्यर्थकात् प्राप्त्यर्थकाद्वा सद्धातोर्निष्पन्नोऽयं शब्दः। लौकिकैरुपायैरनधिगतं तत्त्वं येनोपायेन विद्यते ज्ञायते, स उपाय एव 'विद्या'। सा च द्विविधा, परा अपरा च। येनोपायेन परमं तत्त्वमधिगम्यते, यस्मिन् विज्ञाते सर्वं विज्ञातं भवति, ज्ञातव्यं च नावशिष्यते, स एव 'पराविद्या', तद्भिन्ना विद्या तु 'अपरा'। धर्माधर्मयोः स्वरूपतत्साधनफलविषयिणी 'अपराविद्या'। तथा हि विषयनिवृत्तिहेतोर्मोक्षसाधनपरा अध्यात्मविद्यैव पराविद्या। विषयप्रवृत्तिहेतोर्बन्धनकारणभूता कर्मकाण्डात्मिका वेदविद्या तु अपराविद्या।

अधिगतोपनिषद्रूपाध्यात्मविद्यया 'अहं कर्त्ता' 'अहं भोक्ता' इत्यहङ्कारबुद्धिर्निवर्त्तते, तथा 'मम पुत्रः' 'मम भार्या' 'मम ऐश्वर्यम्' इत्येवं ममत्वबुद्धिश्च नाशमर्हति। अहङ्कारो ममत्वबुद्धिश्च बन्धनस्य निदानम्। अहङ्कारं ममत्वबोधं च प्रति आत्मविषयकम्, अज्ञानं कारणम्। अत आत्मज्ञानेन अज्ञाननाशे सति अहङ्कारममत्वबोधयोर्नाशाद् बन्धननाशो भवति। अनात्मविषयिण्या अपरविद्यया तु अहङ्कारममत्वबोधयोरुद्दीपनं भवति, न तूच्छेद इति विशेषः। तस्माद् ब्रह्मतत्त्वप्रतिपादनपरा उपनिषदेव पराविद्या, वेदवेदाङ्गादीनि तु धर्मतत्त्वप्रतिपादकानि अपराविद्या इति कीर्त्यते। तद् दर्शितमृषिभिः—

'द्वे विद्ये वेदितव्ये।......परा चैवापरा चेति। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति। अथ परा यया तदक्षरमधिगम्यते'[२]।

अपि च, अज्ञाननिवर्त्तिका मोक्षतत्त्वप्रतिपादिका खलूपनिषद्विद्या। यस्यामुत्पद्यमानायामविद्या नाशमर्हति, सा विवेककारिणी बुद्धिस्तत्त्वतः 'विद्या' इत्यभिधीयते। तथा च श्रुतिः—'सा विद्या या विमुक्तये'। अयं भावः—मूलीभूता आत्मविषयिणी अविद्यैव बन्धनस्योपादानम्। सम्यगात्मज्ञानं विना तस्या निवृत्तिर्भवितुं नार्हति। तत्र श्रवणमनननिदिध्यासनैः सम्यगात्मज्ञानं भवति। तथा च श्रुतिः—

---

१. छान्दोग्योपनिषद्-६।१४।२।

२. मुण्डकोपनिषद्, प्रथममुण्डकम्, ५।

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[१]। तत्र मननेन आत्मविषयकसंशयनाशः, निदिध्यासनेन च आत्मविषयकविपरीतबुद्धिनाशो भवति। ततश्चात्मदर्शनम्, आत्मदर्शनेन चाज्ञाननिवृत्तौ मुक्तिर्भवति। तदुक्तम्—

'स्वात्माज्ञानं कारणं बन्धनेऽस्य
स्वात्मज्ञानं तन्निवृत्तिश्च मोक्षः'[२]।

अस्मिन् कल्पे अवसादनार्थकान्निवृत्त्यर्थकाद्वा उत्पन्न 'उपनिषच्छब्दः।

इदन्त्ववधेयम्, स्वस्वरूपप्राप्तिर्नित्यनिरतिशयसच्चिदानन्दस्वरूपाभिव्यक्तिर्वा मोक्षः। अत्र ज्ञानसमानकालीना अज्ञाननिवृत्तिः, तत्समानकालीनस्वयम्प्रकाशनित्यनिरतिशयभूमानन्दाभिव्यक्तिः। नास्त्यत्र कार्यकारणभावः साध्यसाधनभावो वा। अतोऽत्र स्वस्वरूपप्राप्तिरूपाया मुक्तेरनित्यतापत्तिर्नापतति। नित्यनिरतिशयभूमानन्दभूतं मोक्षतत्त्वं श्रुतिस्मृतिन्यायप्रेक्षावदनुभवैश्चाभ्युपगतं भवति। तथा चात्र श्रुतिस्मृतिन्यायाः—

'यो वै भूमा तत् सुखम्, नाल्पे सुखमस्ति'[३], 'ब्रह्म वेद ब्रह्मैव भवति'[४], 'तदा ब्रह्मत्वमश्नुते'[५], 'ब्रह्मभावश्च मोक्षः'[६]। अत्र 'सदा मे सुखं भूयात्, दुःखं मा भूत्' इति सर्वजनीनानुभवश्चास्ति। उक्तञ्च,

'देशकालानवच्छिन्नसुखाद्यर्थित्वदर्शनात्'[७]।

अत्र नित्यनिरतिशयसुखं यदि न स्यात्, तर्हि तत्प्राप्त्यभिलाषितापि न स्यात्। न हि आकाशकुसुमाद्यसद्वस्तुविषयिणी अभीप्सा कस्यचिद् दृश्यते। अतः सर्वेषामानन्त्याभिमुखिप्रवृत्तिदर्शनान्मोक्षसुखमस्तीति को नाम अपलपेत्? अत एव ऋषीणामाशंसनम्—

'असतो मा सद्गमय
तमसो मा ज्योतिर्गमय
मृत्योर्मा अमृतं गमय'[८]। इति।

---

१. बृहदारण्यकोपनिषद्-२।४।५; २. सङ्क्षेपशारीरकम्।
३. छान्दोग्योपनिषद्-७।२३।१; ४. मुण्डकोपनिषद्-३।२।
५. महाभारतम्-१२।३२६।३५; ६. शारीरकभाष्यम्-१।१।४।
७. बृहदारण्यकभाष्यवार्त्तिकम्-२९०; ८. बृहदारण्यकोपनिषद्-१।३।२८।

इदमत्र वक्तव्यं यद्, मुक्तिपदमभीप्सुभिः सन्न्याससहिता ब्रह्मविद्यैव नूनमपेक्ष्यते, न पुनः विषयासक्तिसमुपेतकर्मानुष्ठानमित्युपनिषदामनुशासनम्। तथा च श्रुतिः—

'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः'[१]।

'ब्रह्मविदाप्नोति परम्'[२]।

'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'[३]।

यस्तु सन्न्याससहितात्मबुद्धेरनधिकारी, स खलु शास्त्रोक्ताग्निहोत्रादिकर्माणि यावज्जीवनं सम्पादयेदिति उपनिषदः परामर्शः। तथा च मन्त्रः—

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'[४]।।

सन्न्यासग्रहणासामर्थ्ये सति, कर्मकरणस्य अवश्यम्भावित्वात् शुभकर्मानुष्ठानादन्यः प्रकारो नास्ति। तच्च कर्म निष्काममवश्यं भवेद् इत्याशयवान् आह श्रुतिरत्र— 'न कर्म लिप्यते नरे'। साधकः कर्मयोगी कर्मणः पापपुण्यादिफलेन नैव युज्येत। गीतोपनिषदि भगवता भूयो भूयोऽभिहितमेतत्।

कथं तर्हि वेदे सकामकर्मोपदेशः? शङ्कायामस्यामेवमुच्यते, 'रोचनार्था फलश्रुतिः'[५] इति भागवतोक्तेः श्रोतुः रुचिसम्पादनार्थमेव वेदे फलश्रवणम्। श्रुतेरत्र फलविशेषनिर्देशे न तात्पर्यम्, किन्तु अनासक्ततया कर्मसम्पादन एव तात्पर्यम्।

शास्त्रीयरीत्या सकामकर्मकारिणस्तु मृत्युमवाप्य दक्षिणायनपथा विचरन् कर्मानुसारेण पुनः पुनः जन्म लभन्ते। निष्कामकर्मकारिणस्तु नैष्कर्म्यं लब्ध्वा अन्ते च स्वस्वरूपोपलब्धिं कृत्वा मुक्तकल्पा जीवन्मुक्ता भवन्ति। ये पुनः शास्त्रोक्तानि कर्माणि परित्यज्य केवलं रागतः प्राप्तानि शास्त्रनिषिद्धानि कर्माणि अनुतिष्ठन्ति ते तु अधोगच्छन्त्येव नियतम्।

अयमुपनिषदां परामर्शः, अविद्यासम्भूतानि शास्त्रीयाणि अग्निहोत्रादीनि सकामकर्माणि ये सम्पादयन्ति, ते खलु जन्ममरणचक्रेणावर्त्तिताः सन्तो गाढान्धकारं प्रविशन्ति। श्रुतिराह—

---

१. कैवल्योपनिषद्-१।२; २. तैत्तिरीयोपनिषद्-२।१।
३. श्वेताश्वतरोपनिषद्-३।८; ४. ईशोपनिषद्-२।
५. भागवतम्-११।३।४।

'अन्धंतमः प्रविशन्ति येऽविद्यामुपासते'[१]।

अत्र अविद्याशब्दः अग्निहोत्रादिकर्मपरः। 'विद्याया अन्याऽविद्या कर्मेत्यर्थः। कर्मणो विद्याविरोधित्वात्'[२] इति भाष्यसन्दर्भः। ये च तावद् देवतास्वरूपज्ञानपरायणाः, ते तु कर्मोपासनया यादृशं तमो लभ्यते ततोऽप्यधिकं तमो लभन्ते। अयं भावः, ऐहिकामुष्मिकफलकामनां हातुं ये न प्रभवन्ति, ते खल्वशुद्धचित्ताः कर्मण्येवाधिकारिणः स्युः, न तु ते कथमपि कर्म परित्यक्तुमर्हन्ति। सत्यपि कर्माधिकारे कर्मत्यागात्ते प्रत्यवायभाजो भवन्ति। ते च देवतातत्त्वानधिकारिणो विद्योपासनया कदापि देवलोकं प्राप्तुं न शक्नुवन्ति; किन्तु पतिताः सन्तो भूयो भूयो दुःखमनुभवन्ति। अत एवाम्नायते,

'ततो भूय इव ते तमो य उ विद्यायां रताः'[३]।

अथ शङ्क्यते—एवं सति कथं श्रुत्यन्तरेषु ज्ञानकर्मणोः पृथक् पृथग् अभ्युदयफलश्रवणम्—'विद्यया तदधिरोहन्ति'[४], 'विद्यया देवलोकः'[५], 'कर्मणा पितृलोकः'[६] इति? तत्रोच्यते, उभयोः एकैकानुष्ठाननिन्दा एवात्र क्रियते। निन्दया चोभयोः समुच्चय एव प्रशस्यते। अतो ज्ञानसमुच्चितकर्मानुष्ठानमेव कर्त्तव्यम्, न तूभयोरेकैकानुष्ठानमित्याशयवानाह आचार्यशङ्करः—

'तयोर्ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दा समुच्चिचीषया, न निन्दापरैव, एकैकस्य पृथक्फलश्रवणात्'[७]।

तत्तद् ज्ञानकर्मसमुच्चयानुष्ठानफलमपि स्फुटमुक्तमीशोपनिषदि—

'विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'[८]।।

अत्र 'मृत्यु'पदेन स्वाभाविकं रागतः प्राप्तमनर्थकरं ज्ञानं कर्म च प्रतीयते। 'अमृत'पदेन चापेक्षिकममृतत्वं भूतसम्प्लवकालपर्यन्तमेककल्पं यावद् वा

---

१. ईशोपनिषद्-९ मन्त्रपूर्वार्धम्; २. तदेव-९ शाङ्करभाष्यम्।
३. तदेव-९ मन्त्रपरार्धम्; ४. शतपथब्राह्मणम्-१०।५।४।१६।
५. तदेव-१०।५।४।१६; ६. बृहदारण्यकोपनिषद्-१।५।१६।
७. ईशोपनिषद्-९ शाङ्करभाष्यम्; ८. ईशोपनिषद्-११।

अवस्थानमवगम्यते 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते'[१] इति विष्णुपुराण-वचनप्रामाण्यात्। तदत्र अग्निहोत्रादिलक्षणाविद्यया स्वाभाविकज्ञानकर्मरूपमृत्यूत्तरणं भवति, न तु महामृत्यूत्तरणम्। देवतातत्त्वविद्यया च नैव परमानन्दभूत-मोक्षतत्त्वलाभः, किन्तु आपेक्षिकैहिकसुखाधिकसुखलाभ इति ज्ञातव्यम्।

अत्र केचन मीमांसका एवं मन्यन्ते, देवतास्वरूपविद्यासमुच्चितयागादि-कर्मानुष्ठानेन प्रपञ्चसम्बन्धविलयरूपा मुक्तिर्लभ्यते। कर्मणां नैव प्रवृत्तिसाधनता, किन्तु निवृत्तिसाधनता एव वेदितव्या। अतो ज्ञानकर्मसमुच्चयानुष्ठानस्य यच्चरमं फलं हिरण्यगर्भपदप्राप्तिः परमसुखप्राप्तिर्वा तदेव मुक्तिरिति। अस्यानुकूल्यं बृहदारण्यकोपनिषदि क्रियते। तथा हि, वागादीन्द्रियहोत्रादि-ऋत्विग्रूप-परिच्छिन्नसाधनद्वयस्य अग्न्याद्यपरिच्छिन्नतत्तद्देवतारूपेण भावनात् तत्तद्देवतास्वरूप-प्राप्तिरूपा मुक्तिर्भवति। कर्मणां संसारकारणत्वेऽपि ज्ञानसहितकर्मणां मोक्षसाधनत्वं विषदधिन्यायेन सिध्यति। अतो यज्ञानुष्ठानकाले तत्तद्देवतास्वरूपभावना यदि सम्यक् क्रियते तर्हि मुक्तिर्लभ्यते। तत्र तत्तद्देवतास्वरूपविज्ञानं मुक्तिसाधनम्, तत्तद्देवतात्वप्राप्तिस्तु मुक्तिरिति मीमांसकानां मतम्।

तथा च बृहदारण्यकवाक्यम्— '....स मुक्तिः सातिमुक्तिः'[२]। अत्र मुक्तिपदं मुक्तिसाधनपरम्, अतिमुक्तिपदञ्च मुक्तिपरम्। एवं प्राप्ते समाधीयते, ज्ञानकर्मसमुच्चयानुष्ठानाद् या प्रकृष्टा हिरण्यगर्भपदप्राप्तिरुच्यते, न सा मोक्षभूता, सापि नालमात्यन्तिकैकान्तिकदुःखप्रशमनाय। हिरण्यगर्भलोकेऽपि विषयेन्द्रिय-जनितभोगसम्भवाद् ग्रहातिग्रहलक्षणमृत्युरस्ति— स्वाभाविकाज्ञानासक्तिमत्त्वाद् बन्धनं वा जायते।

ज्ञानकर्मसमुच्चयानुष्ठायिनः 'सर्वे प्राणा अनुत्क्रामन्ति'[३] इति श्रुतेः प्राणोत्क्रमणात् संसरणं बन्धनं वा भवेत्, न तु संसाराद् मुक्तिः। मुक्तौ स्वस्वरूपस्थितिरेव भवति, न तु गतिः, 'मृतः शेते'[४] इति श्रुतेः। अपि च देवतास्वरूपविद्याया नैव सम्यग्विद्यात्वम्, किन्त्वविद्याकोटौ एवान्तर्भावः। अविद्याविरोधित्वेन आत्मविद्याया एव यथार्थविद्यात्वम्। देवतास्वरूपविद्यायास्तु नाविद्याविरोधित्वम्। अतो न यथार्थविद्यात्वम्, किन्त्वविद्यापरपर्यायप्रकृति-सम्भूतत्वेनाविद्यात्वमेव।

---

१. विष्णुपुराणम्; २. बृहदारण्यकोपनिषद्-३।१।३-५।
३. तदेव-४।४।२; ४. बृहदारण्यकोपनिषद् ३।२।२२।

यद् यस्य साधकं न तत्तस्य निवर्त्तकमिति न्यायादविद्यासम्भूतदेवता-स्वरूपविद्यया नैवाविद्योच्छेदः। अतः का प्रत्याशाऽत्र मुक्तिपदप्राप्तेः? केवलमात्म-स्वरूपज्ञानेनैवाविद्यानिवृत्तेर्ज्ञानमेव मोक्षप्रयोजकं भवति, न तु वेदोक्तकर्मानुष्ठानम्, न वा ज्ञानसमुच्चितकर्मसम्पादनमित्युपनिषत्परामर्शः। यच्च बृहदारण्यकोपनिषदि विद्यासहितकर्मणां मुक्तिसाधकत्वमुक्तम्, तन्न बृहदारण्यकसम्मतम्, परतनबृहदारण्यकवाक्यविरुद्धत्वाद् इत्येतत् सर्वमाचार्यशङ्करेण आभासभाष्ये स्पष्टीकृत्य दर्शितम्[1]।

इदमत्र मन्तव्यम्, सर्वेषां यागादिकर्मणामीश्वरार्पणबुद्ध्या निष्काम-रूपेणानुष्ठीयमानानां चित्तशुद्धिविविदिषाद्वारा विशुद्धे ज्ञाने परिसमाप्तिः स्यात्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेन'[2] 'सर्वं कर्म अखिलं पार्थ ज्ञाने परिसमाप्यते'[3] इत्याद्या श्रुतिस्मृतयोऽत्र प्रमाणम्।

अत्र मतद्वयमस्ति। वाचस्पतिमिश्रप्रमुखाणां मते यज्ञदानादिकर्मणां विविदिषां प्रति ज्ञानोत्पत्तिं वा प्रति कारणता। विवरणकारादीनां मते तु यागादीनां वेदनं प्रति कारणता। अयमाशयः, मिश्रपादमते प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यात् 'पदार्थः पदार्थेनैवान्वेति, न त्वेकदेशेन' इति न्यायेन यज्ञादीनां करणतया विविदिषया अन्वयः, न त्वेकदेशवेदनेन। एतन्मते कार्यस्य फलनाश्यत्वनियमाद् यागादिकार्यं विविदिषारूपफलमुत्पाद्य विरतव्यापारो भवति। ततश्च येन मुमुक्षुणा श्रवणादिक्रमेण तत्त्वमधिगम्यते, तेनैव मोक्षो लभ्यते नान्येन इत्यायातम्।

विवरणकृता तु एवं समीक्ष्यते, वाक्ये यद्यपि पदार्थस्य पदार्थैकदेशेनान्वयो वारितः, तथापि 'इष्यमाणतया शब्दबोध्ये शब्दसाधनतान्वय' इति न्यायाद् इष्यमाणतया एकदेशेन वेदनेनैव यज्ञादीनां करणतयाऽन्वयः। यथा 'असिना जिघांसति' 'पद्भ्यां जिगमिषति' इत्यादिषु योग्यतासत्त्वाद् उक्तन्यायेन असिपदादेः पदार्थैकदेशेन हननगमनादिनैव करणतया अन्वयः। एवमिहापि बोध्यम्। असिपदयागादीनामेव क्रमेण हननगमनवेदनकरणताऽस्ति, न तु इच्छाकरणता इति सुधीभिः प्रत्येतव्यम्। एतन्मते कार्यजनितादृष्टशक्तिवशाद् यथा यागादेर्जन्मान्तरीय-स्वर्गादिसाधनता, एवं निरभिसन्धियागादिजन्यादृष्टशक्त्यैव विविदिषाया अनन्तरं सद्गुरुलाभश्रवणमननादेरवश्यम्भावाद् वेदनरूपकार्योत्पत्तिसिद्धेर्यागादेर्वेदनकारणता

---

१. 'सर्वमेतदेवम् अबार्हदारण्यकम्....'—बृहदारण्यकोपनिषद्-३।२ आभासभाष्यम्।

२. बृहदारण्यकोपनिषद्-४।४।२२।

३. श्रीमद्भगवद्गीता-४।३३।

सिद्ध्यति। भगवता शङ्कराचार्येण स्वयमनुमोदितञ्च शारीरकभाष्ये यागादीनां विविदिषासाधनत्वं वेदनसाधनत्वञ्च[१]।

इदं त्वत्रानुसन्धेयम्, इयमुपनिषद्विद्या न केवलं मुमुक्षूणाम् आरण्यकानां सन्न्यासिनाञ्च कृते समुद्दिष्टा, किन्तु संसारिणां ब्रह्मचर्यगार्हस्थ्याश्रमिणां साधारणजनानां प्रात्याहिकजीवनेऽपि नितरामुपयुक्ता। अस्माकं व्यावहारिकजीवनम् अध्यात्मभावनया सम्पृक्तम्। जीवनस्य नैतिकमूल्यबोधो धर्मबोधो वा अध्यात्मबोधे प्रतिष्ठितः। सर्वात्मबुद्धिं विना प्रकृतधर्मबोधो न जागर्त्ति।

सम्प्रति समन्तात् समग्रे विश्वे या हिंसा या च विच्छिन्नता दृश्यते, तत्र प्रकृतधर्मचिन्ताया अभाव एव कारणम्। प्रकृतधर्मस्वरूपमविजानत एव हि एवंविधः सम्प्रदायविरोधः। स एव प्रकृतो धर्मः, यस्तु बहुधा भिन्नानपि मानवान् एकतासूत्रेण सम्बद्धीकरोति। यस्तु जीवेषु मिथो विरोधं जनयति, हिंसावृत्तिञ्च वर्द्धयति, न स धर्मः। धर्मेण चित्तमुदारं भवति, न तु सङ्कीर्णम्। तथा च भरतवाक्यम्—

'धर्मे ते धीयतां बुद्धिर्मनस्तु महदस्तु च'[२]।

धर्मो हि स्थानकालव्यक्तिगोष्ठीसम्प्रदायेषु मनो न सीमितं करोति। अतो धर्मः खल्वन्येन सह विरोधं न जनयेत्; किन्तु भिन्नेष्वपि जातिवर्णसम्प्रदायेषु एकतामेव विदध्यात्। इयं हिंसाविरोधशून्या धर्मनिरपेक्षता महाभारते उपस्थापिता—

'धर्मो यो बाधते धर्मं न स धर्मः कुवर्त्म तत्।
अविरोधात्तु यो धर्मः स धर्मः सत्यविक्रमः'[३]।।

तदेवम् अध्यात्मचिन्ताप्रसूता सत्सु विचित्रेषु एकतानुभूतिरेव (Unity in diversity) जीवेषु हिंसाद्वेषविरोधान् अपनीय विश्वमैत्रीं विश्वभ्रातृत्वं च सम्पादयति। तत्तु वेदोपनिषदाद्यध्ययनेनैव सम्भवेदित्यलं निश्चप्रचमास्थातुम्। आर्येष्विव अनार्येष्वपि समाना प्रीतिर्विधेया इति वेदा आमनन्ति,

'प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये'[४]।।

---

१. ''श्रुतिः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेन' इति यज्ञादीनां विद्यासाधनभावं दर्शयति। विविदिषासंयोगाच्च एषामुत्पत्तिसाधनभावः अवसीयते।''

२. महाभारतम्, आश्रमवासिकपर्व, १७।२१।

३. तदेव, वनपर्व, २३१।११।   ४. अथर्वसंहिता-१८।७।८।१।

न कस्यापि हिंसा कार्या इत्यपि श्रुतेरनुशासनम्—

'न हिंस्यात्सर्वा भूतानि'[१]।

अस्मद्गमनवदनुचिन्तनादिषु सदा एकरूपता भवत्विति श्रुतेराघोषः—

'सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्।
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।
समानी व आकूतिः समानानि हृदयानि वः'[२]।।

गुरुशिष्ययोर्नित्यमच्छेदप्रीतिसम्पर्कोऽस्तु इत्यपि उपनिषद्विधानम्—

'सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।
तेजस्विनावधीतमस्तु मा विद्विषावहै'[३]।।

तदेवं प्रकृतसाम्यवादपरिपोषकवेदोपनिषदाद्यध्यात्मशास्त्राध्ययनेन यदा सर्वेषु एकतासम्प्रीतिसम्पादकं स्वपरकल्याणकरं धर्मतत्त्वं विज्ञायते, ततश्च जागर्त्ति हृदये हिंसाविरोधवर्जिता यथार्था साम्यभावना, तदैव खलु वयं साम्प्रतिकभयङ्कर-सम्प्रदायादिविरोधसङ्कटात् सर्वथा मुक्ता भवेम। इयमेव हि नित्यवेदोपनिषद-नुशीलनस्य व्यावहारिककार्यकारिता।

अपि च सम्प्रति भारतीयसनातनसंस्कृतेः सङ्कटकालः। स्वाधीनतोत्तर-पञ्चाशद्वर्षेभ्यः परमपि वयं न स्वाधीनचेतसो जाताः। अस्माकं चेतःसु पाश्चात्त्यदेशीयभावदास्यमिदानीमपि विचरति। पाश्चात्त्यानां भोगसर्वस्वभावनया वयमतिमात्रं प्रभाविताः। किन्त्वापातसुखकरोऽधिकाधिकविषयभोगोऽस्मद्धृदयेषु दुःखं प्रभूतमुत्पादयति। प्रकृतं सुखं तु विषयवैराग्यादेव सम्पद्यते। तस्मात् संन्यास-सहिता अध्यात्मभावनैव परमसुखप्राप्तेर्निदानम्। धनैश्वर्यपुत्रकलत्रादिविषयभोगस्तु अनिष्टकरत्वाद् भारतीयानामपसंस्कृतिरेव। अतस्त्यागधर्म एव वरणीयः, न तु भोगधर्म इत्येव हि भारतीयसंस्कृतेर्वैशिष्ट्यम्। अस्य च सम्यगवगतये उपनिषदध्ययनमावश्यकम्। औपनिषदिका उपदिशन्ति—

'तेन त्यक्तेन भुञ्जीथाः, मा गृधः कस्यस्विद् धनम्'[४]।

---

१. शारीरकभाष्यम्-३।१।२५-उद्धृतशास्त्रम्; २. ऋग्वेदः-५।१०।
३. कठोपनिषद्-शान्तिवचनम्; ४. ईशोपनिषद्-१।

'अमृतत्वस्य नाशास्ति वित्तेन'[१]।

'येनाहं नामृता स्याम् किमहं तेन कुर्याम्'[२]।

'त्यागाच्छान्तिरनन्तरम्'[३]। इति।

तस्मादपसंस्कृतेरपसारणपुरःसरं कल्याणकरभारतीयसंस्कृतेः संरक्षणाय, साम्प्रतिकसम्प्रदायविरोधविनाशपूर्वकसर्वजनीनसम्प्रीतिसंविधानाय तथा सकलदुःखसमुच्छेदपूर्वकपरमशान्तिलाभाय चोपनिषदध्ययनपमेक्ष्यत एकान्ततया इति स्थितम्।

ब्रह्मतत्त्वमेवोपनिषदां मुख्यप्रतिपाद्यम्। उपक्रमोपसंहारादिभिः तात्पर्यग्राहकैर्लिङ्गैः सर्वेषामुपनिषद्वाक्यानां निर्गुणे ब्रह्मण्येव समन्वयः। अतो निर्गुणब्रह्मैवोपनिषदां तात्पर्यपर्यवसितोऽर्थः, 'यत्परः शब्दः स शब्दार्थ' इति न्यायात्। निर्धारितमेतदाचार्यशङ्करेण समन्वयसूत्रभाष्ये। 'तन्त्वौपनिषदं पुरुषं पृच्छामि'[४] 'नावेदविन्मनुते तं बृहन्तम्'[५] इत्यादिवाक्येभ्यो ब्रह्मण उपनिषत्प्रमाणकत्वमवगम्यते। 'यतो वा इमानि भूतानि जायन्ते'[६] 'तज्जलानि'[७] इत्यादिश्रुतिभिर्ब्रह्मणो जगज्जन्मादिकारणत्वमुक्तम्, ततश्चार्थात् सर्वज्ञत्वं सर्वशक्तिमत्त्वं च सूचितम्।

सृष्टितत्त्वन्तु उपनिषदामवान्तरप्रतिपाद्यम्। सर्वेषां सृष्टिवाक्यानां ब्रह्मण्येव हि तात्पर्यम्। या सृष्टिर्जगतां ब्रह्मण उपादानात्, सा तु जगदाधारे ब्रह्मणि आरोपात्मिका बोध्या। आरोपस्य तु अधिष्ठानज्ञाननाश्यत्वाद् अधिष्ठानावशेषत्वाच्च सृष्टिवाक्यैः सर्वाधिष्ठानभूतं विवर्त्तोपादानं सत्स्वरूपं ब्रह्मैव अवधार्यते। तथा च वाक्यम्—

'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते'[८]।

इदन्त्ववधेयम्; जगज्जन्मादिकारणत्वं ब्रह्मणः सर्वकालिकत्वाभावान्न स्वरूपलक्षणम्, किन्तु यत्किञ्चित्कालिकत्वात् तटस्थलक्षणमेव। मायोपहितमेव ब्रह्म

---

१. बृहदारण्यकोपनिषद्-२।४।२;
२. तदेव-२।४।३।
३. श्रीमद्भगवद्गीता-१२।१२;
४. बृहदारण्यकोपनिषद्-३।९।२६।
५. तैत्तिरीयब्राह्मणम्-३।१२।९।७;
६. तैत्तिरीयोपनिषद्-३।१।
७. छान्दोग्योपनिषद्-३।१४।१;
८. वेदान्तसारादिसमुद्धृतम्।

जगज्जन्मादिकारणं स्यादिति मायोपाधिकालिकस्य ब्रह्मण इदं लक्षणम्, न पुनः निरुपहितस्य ब्रह्मणो लक्षणम्। तदुक्तम्—

'जन्मादिकारणमिह जगतो यदुक्तम्।
सद्ब्रह्मणस्तदिह चिह्नतयोपदिष्टम्'[1]।।

तैत्तिरीयोपनिषदि 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते—' इत्यादिनिर्णयवाक्यपरामर्शाज्जगज्जन्मादिकारणस्य ब्रह्मण आनन्दस्वरूपता प्रतिपादिता। आनन्दपदाच्चात्र सच्चितोरुपलक्षणम्। तेन जगज्जन्मादिकारणत्व-रूपतटस्थलक्षणेन ब्रह्मणोऽनन्तसच्चिदानन्दत्वरूपं सार्वकालिकस्वरूपलक्षणमपि सूचितं भवति।

इदमत्र तात्पर्यम्, उपनिषत्प्रतिपाद्यं ब्रह्म तत्त्वतस्तु निर्गुणमेव, न तु सगुणम्। निर्गुणस्य कूटस्थस्य ब्रह्मणः क्रिया न सङ्घटते, अतः स्रष्टृत्वादिकं ब्रह्मणि वस्तुतो न सम्भाव्यते। जगत्कर्तृत्वं सर्वज्ञत्वं सर्वशक्तिमत्त्वं च ब्रह्मणि अविद्योपाधिकल्पितानि। अत एते धर्मा ब्रह्मणि आरोपिता एव, न तु स्वाभाविकाः।

अयं भावः, कार्ये (उपधेये) उपाधेरनन्वितत्वनियमात् स्वरूपतो ब्रह्मणो निर्गुणत्वमेव सिद्ध्यति। यथा जपाकुसुमरूपोपाधिसन्निधानेन जपाकुसुमच्छायापातात् स्फटिके भ्रान्ता लौहित्यबुद्धिर्भवति। उपाधिनाशे स्फटिकः स्वरूपतः स्वच्छः प्रतीयते। एवमविद्योपाधिसन्निधौ ब्रह्मणि तच्छायापातेन अविद्यागतसत्त्वगुण-प्रभावितसर्वज्ञत्वादयो गुणाः प्रतिफलिता भवन्ति। तत्त्वज्ञानेन त्वविद्योपाधिनाशे ब्रह्मणि सर्वज्ञत्वादिबुद्धेर्निवृत्तिर्भवति। ततश्च ब्रह्म निर्गुणमेव पर्यवस्यति। तथा चोपाधिना उपहितेनोपधेयेन उपाधेर्नैवाभेदेनान्वयः स्यात्। अतोऽविद्योपाधेः सर्वज्ञत्वादिगुणानां ब्रह्मण्यन्वयो न भवति।

तदेवमुपाधिविशिष्टस्य सगुणब्रह्मणो नैव निर्गुणनिरुपहितशुद्धब्रह्माति-रिक्तत्वम्। तस्मात्तत्त्वदृष्ट्या ब्रह्मणो निर्गुणत्वमेकत्वञ्चावसीयते, न पुनः सगुणत्वं द्वित्वञ्चेत्यवगन्तव्यम्। ब्रह्मणः सगुणत्वमुपास्यत्वं वा केवलं व्यवहार-दशायामुपासकानामुपासनार्थमुपादीयते। तथा च श्रुतिः—

'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।
उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना'[2]।।

---

१. सङ्क्षेपशारीरकम्-१।५३८; २. रामपूर्वतापनीयोपनिषद्-७।

उक्तञ्च भगवता शङ्करेण—

'स्यात्परमेश्वरस्यापीच्छावशाद् मायामयं रूपं साधकानुग्रहार्थम्'[१], अपि च 'अयमात्मा ब्रह्म'[२], 'अहं ब्रह्मास्मि'[३], 'तत्त्वमसि'[४] इत्यादिमहावाक्यैर्जीवब्रह्मणोरेकत्वमेव प्रतिपद्यते। परमार्थत एकमेव हि ब्रह्म। तत्तु जाग्रत्स्वप्नसुषुप्त्यवस्थासु नानाशरीरोपाधिभेदवत्त्वाद् एकमपि अनेकमिव प्रतिभाति।

अयमाशयः—जाग्रत्काले समष्टिस्थूलशरीरोपहितं ब्रह्मचैतन्यं विराट्देवता, व्यष्टिस्थूलशरीरोपहितं चैतन्यं विश्वरूपजीवश्च 'अन्नमयकोष' इति कथ्येते। स्वप्नकाले समष्टिसूक्ष्मशरीरोपहितं चैतन्यं हिरण्यगर्भदेवता, व्यष्टिसूक्ष्मशरीरोपहितं चैतन्यं तैजसरूपजीवश्च 'प्राणमय-मनोमय-विज्ञानमय'कोषनामभिः परिचीयेते। सुषुप्तिकाले च समष्ट्यविद्याकारणशरीरोपहितं चैतन्यं प्राज्ञो जीवश्च 'आन्दमयकोष' इत्यभिधीयेते।

तैत्तिरीयोपनिषदि तत्त्वजिज्ञासवे एते पञ्चकोषा उपदिष्टाः, पूर्वं पूर्वं प्रति उत्तरोत्तरस्य चान्तरात्मत्वमुपदिष्टम्। यद्यपि वृत्तिकृता अन्ते उपदिष्टत्वादानन्दमयस्य परमात्मत्वमास्थितम्, तथापि भगवता शङ्करेण अन्नमयाद्येकप्रवाहपतिततया विकारवाचिमयट्प्रत्यययुक्ततया च अन्नमयादिवदानन्दमयस्यापि जीवत्वं विवक्षितम्, न तु परमात्मत्वम्। यतो हि तत्रैवोपनिषदि आनन्दमयस्य सावयवत्वं शारीरत्वञ्च समाम्नायेते, 'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्मपुच्छं प्रतिष्ठा'[५]। 'तस्यैष शारीर आत्मा। यः पूर्वस्य'[६] इति। अत्र 'आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा'। इति श्रवणादानन्दमयस्यात्मा आनन्द एव ब्रह्म, ब्रह्म आनन्दमयस्य पुच्छं (आधारः) प्रतिष्ठा इत्यर्थोऽवगम्यते। अत आनन्दस्यैव ब्रह्मत्वम्, आनन्दमयस्य च जीवत्वमित्याशयेनोद्धृतम्—

'ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्मशब्दात्प्रतीयते।
विशुद्धं ब्रह्म विकृतं त्वानन्दमयशब्दतः'[७]।।

तत्त्वतो हि ब्रह्म अशरीरम्— शरीरोपाधिविनिर्मुक्तम्। तथा च श्रुतिः— 'अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः'[८]। अतः स्थूलसूक्ष्मकारणशरीरानुपहितं

---

१. ब्रह्मसूत्र-शाङ्करभाष्यम्-१।१।२०;
२. बृहदारण्यकोपनिषद्- २।५।१९।
३. तदेव-१।१।२०;
४. छान्दोग्योपनिषद्-६।८।७।
५. तैत्तिरीयोपनिषद्-२।५;
६. तदेव-२।६।
७. भामती-१।१।१९-समुद्धृतश्लोकः;
८. छान्दोग्योपनिषद्-८।१२।१।

तुरीयमेव ब्रह्म विशुद्धम्। तदेव ब्रह्मणश्चतुष्पात्त्वमेव। तच्चाम्नातं स्पष्टतया माण्डूक्योपनिषदि— 'अयमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्'[१]। ब्रह्मणो नित्य-निरतिशयसच्चिदानन्दस्वरूपप्रतिपादनपराः 'सत्यं ज्ञानमनन्तं ब्रह्म'[२] 'विज्ञानमानन्दं ब्रह्म'[३] इत्याद्या बह्व्य एव श्रुतयो विलसन्ति।

इदञ्च फलितं यत्, तत्त्वदर्शिनामधिदैवतभावनया पञ्चीकृतपञ्चमहाभूत-स्थूलप्रपञ्चाधिष्ठातुर्विराट्पुरुषस्यापञ्चीकृतपञ्चमहाभूतसूक्ष्मप्रपञ्चाधिष्ठातृहिरण्य-गर्भरूपेण विलयः स्यात्। अस्यैव परित्यक्तकार्यरूपस्य कारणरूपताप्राप्तस्य अव्याकृतेश्वररूपेणाविर्भावः स्यात्। कारणस्य च पुनर्मायोपहितस्य कारणातीताद्वितीयब्रह्मरूपेण पर्यवसानं भवेत्। तदेवं पूर्वपूर्वपादस्य उत्तरोत्तरपादे प्रविलयात् शुद्धमेकमखण्डं निरुपाधि आत्मतत्त्वमेव सुप्रतिपादं स्यात्। तदुक्तम्—

अकारं पुरुषं विश्वमुकारे प्रविलापयेत्।<br>
उकारं तैजसं ज्ञेयं मकारे प्रविलापयेत्।।<br>
मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत्।<br>
एवं समाहितो योगी पश्येदात्मानमद्वयम्।।

अथ शङ्केत, शरीरादिनानोपाधिमत्त्वाज्जरामरणादिसंसारधर्मसम्बन्धाच्च जीवस्याशुद्धत्वम्, ब्रह्मणस्तु सर्वोपाधिवर्जितत्वाज्जरामरणादिधर्मशून्यत्वाच्च सदाशुद्धत्वमङ्गीकृतम्। ततश्च विरुद्धस्वभाववचनाज्जीवात्मपरमात्मनोरैक्यं सर्वोपनिषत्प्रतिपाद्यं कथमुपपद्येत? तत्रोच्यते, न कदापि कस्मिंश्चिदुपधेये उपाधिगतदोषा अणुमात्रमपि सम्बद्ध्यन्ते। न हि जपाकुसुमगतलौहित्यं स्फटिके अनुलिप्यते। अतः शरीरोपाधिदोषप्रभावेण जीवात्मगतनित्यशुद्धत्वादिर्नैव विहन्यते। अत्र जीवब्रह्मणोरैक्यमित्यनेन जीवब्रह्मणोर्भेदाभाव एव गृह्यते, न त्वनयोरभेदः। ब्रह्मणो जीवस्वरूपत्वाज्जीवस्य ब्रह्मातिरिक्ता सत्ता नास्तीति न तस्य ब्रह्मभिन्नत्वम्। एतदभिप्रेत्योक्तं शङ्करेण—'जीवो ब्रह्मैव नापरः।' उक्तञ्चारम्भणसूत्रे वाचस्पतिमिश्रेण—'न खल्वनन्यत्वमित्यभेदं ब्रूमः, किन्तु भेदं व्यसेधाम।'[४] जीवस्य ब्रह्मकार्यत्वात्, ब्रह्मणश्च जीवोपादानत्वाज्जीवस्य ब्रह्मणोऽनन्यत्वं सिद्धम्।

---

१. माण्डूक्योपनिषद्-२; २. तैत्तिरीयोपनिषद्-२।१।१।
३. बृहदारण्यकोपनिषद्-३।९।२८; ४. ब्रह्मसूत्रम्-२।१।१४-भामती।

तथा च सूत्रितम्—'तदनन्यत्वमारम्भणशब्दादिभ्यः'[1] अतोऽत्र जीवब्रह्मणोरैक्यमित्यनेन जीवस्य ब्रह्मसत्तातिरिक्तसत्ताकत्वाभाव एव प्रतीयते।

व्यवहारविधौ जीवस्य संसारित्वं प्रादेशिकत्वं च यदभिमन्यते, तत्तु अविद्याजनितं भ्रान्तमेव। दशमस्त्वमसि-न्यायात् तत्त्वमस्याद्युपनिषद्वाक्यजन्यनिर्विकल्पकब्रह्मापरोक्षज्ञानेनाविद्यानिवृत्तौ तज्जनितसकलभेदबुद्धेरपगमे जीवब्रह्मणोरभेदः सिद्ध्यति। आविद्यकसंसारित्वप्रादेशिकत्वबुद्धेरपि नाशात् तत्त्वतस्तस्य ब्रह्मस्वरूपता अवसीयते। तदेवमुपाधिभेदैर्भिन्नतया प्रतीतावपि तत्त्वदृष्ट्या घटाकाशमहाकाशवज्जीवब्रह्मणोरखण्डार्थत्वमुपपद्यते। तदुक्तम्—

'उपाधिभेदभिन्नोऽर्थो येनैकः प्रतिपाद्यते।
तदपि स्यादखण्डार्थं महत्खं कुम्भखं यथा'[2]।।

उक्तञ्च, 'तत्त्वमस्यादिवाक्यमखण्डार्थमुपाधिभेदभिन्नार्थैक्यप्रतिपादकत्वात्, महाकाशो घटाकाश इति वाक्यवत्'[3]।

इदञ्च मन्तव्यम्, तत्त्वमस्यादिवाक्येषु जीवब्रह्मणोरखण्डार्थत्वं भागलक्षणया सिद्धमिति वेदान्तसारकारादयः प्राहुः। तथा हि अत्र 'त्वं'पदार्थस्य किञ्चिज्ज्ञत्वादिविशिष्टजीवचैतन्यस्य 'तत्'पदार्थस्य च सर्वज्ञत्वादिविशिष्टेश्वरचैतन्यस्य स्वभावतोऽभेदान्वयविरोधात्, 'तत्'पदस्य परस्परविरुद्धविशेषणभागत्यागेन केवलचैतन्ये लक्षणा। 'त्वं'पदस्यापि तथैव शुद्धचैतन्ये लक्षणा। अत्र लक्ष्यार्थयोश्चैतन्ययोरविशिष्टतया प्रतिपादनात्तयोरभेदः सम्पद्यते।

अन्ये वेदान्तपरिभाषाकाराः लक्षणां विनापि शक्तिबलेन तत्त्वंपदार्थयोरभेदान्वयमभ्युपगच्छन्ति। तथा हि विशिष्टशक्तिज्ञानेनोपस्थापितयोर्विशेषणविशेष्ययोस्तात्पर्यानुसारेण शक्त्युपस्थितौ विशेष्यमात्रान्वयबोधः स्वीकर्त्तव्यः। यतः शक्तिज्ञानोपस्थितस्य सर्वस्य पदार्थस्य शाब्दबोधे भानं स्यादिति न नियमः। अतः शक्त्यैवात्राखण्डार्थबोधाल्लक्षणा न स्वीकार्येति वक्तव्यम्।

इदमत्र विचार्यम्, जीवब्रह्मणोरैक्यमित्युक्त्या अखण्डात्मस्वरूपमेव गृह्यते। तत्रेदं पृच्छ्यते, ऐक्यं द्वित्वसापेक्षम्। तत्तु अखण्डात्मस्वरूपस्य न सम्भवेत्, अखण्डात्मस्वरूपस्य द्वैतनिरपेक्षत्वात्। अत्र प्रत्युच्यते, अखण्डत्वबोधकमैक्यं न वस्तुतो द्वित्वसापेक्षम्। कल्पितेन द्वित्वेन तथाविधमैक्यमुत्प्रेक्ष्यते। यथा गृहाद्युपाधिवशाद् गृहाकाशमहाकाशयोर्द्वित्वे आदौ कल्पिते, अनन्तरमुपाधिनाशे

१. ब्रह्मसूत्रम्-२।१।१४।
२. ब्रह्मसूत्रम्-१।२-भामतीकल्पतरुसमुद्धृतः श्लोकः।
३. कल्पतरुपरिमलः-१।२।

द्वित्वव्यवहारानुपपत्तौ गृहाकाशमहाकाशयोरैक्यमिति शब्द्यते। न हि तादृशमैक्य-माकाशद्वित्वसापेक्षं भवति। एवमिहापि बोध्यम्।

अयं भाव:, भिन्नप्रवृत्तिनिमित्तकानेकवस्तूनां यत्र तादात्म्येनान्वयबोधस्तत्रैव वास्तविकं द्वैतसापेक्षमैक्यम्। यथा घृततैलयोरैक्यम्। अत्र तैलत्वघृतत्व-योर्भिन्नप्रवृत्तिनिमित्तत्वात् तद्विशिष्टयोस्तादात्म्येनान्वयाद् वास्तविकं द्वैतसापेक्षमैक्यं सम्भवति। किन्तु अखण्डार्थस्थले तादृशमैक्यं न स्यात्। यतो घटाकाशमहाकाशयोरिव जीवात्मपरमात्मनो: प्रवृत्तिनिमित्तभेदो नास्ति। घटाकाशमहाकाशयोराकाशत्वमित्येकमेव प्रवृत्तिनिमित्तम्।

एवं जीवात्मपरमात्मनोरपि आत्मत्वमित्येकं प्रवृत्तिनिमित्तम्। अतो जीवात्मपरमात्मनोर्भिन्नप्रवृत्तिनिमित्तत्वाभावात् तादात्म्येनान्वयबोधकाले औपाधिकं द्वित्वमादाय यदैक्यमवगम्यते, तद्धि न वस्तुतो द्वित्वसापेक्षम्, किन्तु द्वित्वनिरपेक्षमेव। तत्तु न प्रकृतैक्यशब्दबोध्यम्। अन्यस्मै श्रोतृवर्गाय बोधयितुमेव दुरूहमखण्डात्मतत्त्वं जीवब्रह्मणोरैक्यशब्देन व्यवह्रियते। अतो उपनिषत्प्रतिपाद्यं जीवब्रह्मणोरैक्यमौपाधिकं काल्पनिकं वा, न तात्त्विकमिति तत्त्ववित्परामर्श:[1]।

तदेतदखण्डमात्मतत्त्वं प्रेक्षावतामुपलब्धिमात्रगम्यं भवति, न तु शास्त्रगम्यं, न वा विचारबुद्धिगम्यम्। मननिदिध्यासनसहकृतवेदान्तवाक्यश्रवणजन्य-शुद्धान्त:करणवृत्त्या नैवाभेदवत्त्वं सन्निधाप्यते; किन्तु केवलं वेद्यवेदितृवेदनादि-भेदबुद्धिरेवापनीयते। न हि किमपि शास्त्रं वाच्यवाचकभावेन ब्रह्मतत्त्वमिदन्तया निर्धारयति; किन्तु निषेधमुखाश्रयणेन ब्रह्मतत्त्वं ज्ञापयत्येव केवलम्।

तथा च श्रूयते—'अथात आदेशो नेति नेति'[2]। स्मर्यते च—'अतद्व्यावृत्त्या चकितमभिधत्ते श्रुतिरपि'[3]। तदेवं निषेधमुखाश्रयणादनात्मन्यात्म-भ्रान्तिनिवृत्तौ शुद्धान्त:करणे स्वानुग्रहादेव स्वत: सिद्धं ब्रह्म प्रतिबिम्बितं भवतीत्येवोपनिषद्वच:सार:। तथा च श्रुति:—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्[4]।।इति।

---

१. अद्वैतसिद्धि:, प्रथमपरिच्छेदो द्रष्टव्य:।

२. बृहदारण्यकोपनिषत् २।३।६।

३. महिम्न:स्तोत्रम्।

४. कठोपनिषत् २।२।२३; मुण्डकोपनिषत् ३।२।३।

# वेदाङ्गेषु शिक्षाङ्गप्राथम्यम्

**डॉ. देवेन्द्रनाथत्रिपाठी**
प्राध्यापकः, संस्कृतविभागस्य
स्वामीदेवानन्दस्नातकोत्तरमहाविद्यालये
मठ-लार, देवरिया (उ. प्र.)

अङ्ग्यन्ते ज्ञायन्ते अमीभिरित्यङ्गानीत्यनया व्युत्पत्त्याऽङ्गशब्दस्योपकारकोऽर्थोऽस्ति। येन कस्यापि पदार्थस्य पारमार्थिकस्वरूपनिर्णयो भवति तदेवाङ्गमित्युच्यते। वेदस्तु भाषाभावयोरुभयोरपि दृष्ट्या ह्यत्यन्तं गहनं गभीरञ्चापौरुषेयं वाक्यमस्ति। अत एवास्य वेदस्य स्वरूपनिर्णये यान्यतीवोपकारकाणि शास्त्राणि सन्ति, तानि वेदाङ्गानीत्युच्यन्ते।

वेदानां स्वरूपसंरक्षणार्थं वेदाङ्गानां सूत्रपातः। तेषां वेदाङ्गानां सूत्रपातेन वैदिकविकासक्रमे नवीनस्य युगस्योदयो जातः। कालो ह्ययमुत्तरवैदिकयुगशब्देन व्यवह्रियते। उत्तरवैदिकयुग एव वैदिकरीतिव्यवहारयोः शिक्षादीक्षयोराचारविचारयोश्च प्रतिष्ठा जाता। ब्राह्मणग्रन्थेष्वपि शिक्षासम्बद्धा नियमा यत्र तत्र दरीदृश्यन्ते। षट्संख्याकानि वेदाङ्गानि सन्ति, येषां प्रमुखमुद्गमस्थानं वेद एव। वेदानां स्वरूपमहत्त्वयोर्निरूपणमेव वेदाङ्गानां चरमः खलूद्देश्यः।

वेदानां स्वरूपसंरक्षणपूर्वकं वेदार्थज्ञानावबोधनञ्च वेदाङ्गानां ह्यन्यतमं प्रयोजनम्। एतेषां षड्वेदाङ्गानामुल्लेखो गोपथब्राह्मणे[१] बौधायनधर्मसूत्र[२]-गौतमधर्मसूत्र[३]रामायण[४]प्रभृतिषु चात्यन्तप्राचीनार्वाचीनेषु ग्रन्थेषु समुपलभ्यते।

षड्वेदाङ्गेषु शिक्षाङ्गस्यैव प्राथम्यमिति कथनं नितान्तमेव युक्तियुक्तमिति प्रतीयते। यतो हि षड्वेदाङ्गान्यपराविद्यारूपेणाथर्ववेदस्य माण्डूक्योपनिषदि निरूपितानि। यथा—

---

१. गो.ब्रा. १।२७; २. बौ. धर्मसू. २।१४२।
३. गौ.धर्मसू. १५।२८; ४. रामायणे, बाल. ७।१५।

'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति। अथ परा यया तदक्षरमधिगम्यते'[१]।

मुण्डकोपनिषदो वाक्येऽस्मिन् षड्वेदाङ्गानां गणनाक्रमे प्रथमस्थाने शिक्षैव परिगणिता। अतोऽभ्यर्हितं पूर्वमित्यनेन न्यायेन शिक्षाङ्गप्राथम्यं स्वत एव सिद्धम्। यतो हि शिक्षां विना वैदिकानां शब्दानामविकलमुच्चारणं भवितुं नार्हति।

वेदाङ्गभूते शिक्षाङ्गसाहित्ये वेदमन्त्रोच्चारणस्य विपुला, विशदा, विशिष्टा, वैज्ञानिकी च विवेचनोपन्यस्ता। अस्मादेव कारणाद्वेदाङ्गेषु शिक्षाङ्गप्राथम्यं सर्वत्र सर्वैरप्यनुमोदितम्। सायणाचार्योऽपि[२] वेदाङ्गेषु शिक्षाङ्गस्यैव प्राधान्यं स्वीकुर्वन् वेदाङ्गव्याख्यानप्रसङ्गे सर्वतः प्रथमं शिक्षाङ्गस्य हि व्याख्यानं प्रस्तुतीकरोति। पुनश्च महर्षिणा पाणिनिनापि वेदाङ्गेषु प्रथममेव स्थानं प्रदत्तम्। शिक्षाया महत्त्वं प्रकाशयन्नुक्तञ्च पाणिनिना—

'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते'[३]।।

उपर्युक्तेषु वेदाङ्गेषु वैदिकच्छन्दोमीमांसकं छन्दःशास्त्रं वेदस्य पादस्थानीयम्। हस्तरूपं कल्पशास्त्रं वैदिककर्मकाण्डयज्ञानुष्ठानविधिप्रत्यायकम्। चक्षुस्थानीयं ज्योतिषशास्त्रं यज्ञानुष्ठानार्थमुचितकालनिर्णायकम्। श्रोत्ररूपं निरुक्तञ्च वैदिकशब्दानां विशुद्धिव्युत्पत्तिनिर्वचनकारकम्। मुखस्थानीयं व्याकरणं शब्दज्ञानप्रक्रियावबोधकम्। परन्तु शिक्षाशास्त्रं तु वेदस्य नासिकास्थानमेव। अनेन नासिकारूपप्रतिपादनेनेदं सुस्थिरीकृतं यद् वेदाङ्गेषु शिक्षाया अतीव महत्त्वपूर्णं स्थानमस्ति। यतो हि नासिकया श्वासप्रश्वासप्रक्रिया प्रवर्तिता भवति। तां विना न कोऽपि कदापि क्षणमपि जीवितुं शक्नोति। अतो नूनमेव श्वासप्रश्वासयोर्गतिविच्छेदे जाते सति सृष्टिप्रलययोरजस्रधारासम्प्रवाहकः साक्षात्परमेश्वरस्याप्यस्तित्वप्रदायकोऽपि वेदः शिक्षाङ्गविरहितो भूत्वा निष्प्राणरूप एव।

यतो हि शिक्षां विना स वेदः शब्दाडम्बरमात्रावशेषो भविष्यति। तस्य वेदस्यापौरुषेयशब्दानां नियतानुपूर्वीकं नियताक्षरावसानञ्च तद्दैवीस्वरूपं

१. मु.उ. १।१।४-५; २. ऋ.भा.भू., पृ. ११६; ३. पा.शि. ४१-४२।

शिक्षाशास्त्रविहितोच्चारणं विनादृष्टरूपफलोत्पत्तिं कर्तुं न कदापि शक्नोति। 'शिक्षा घ्राणं तु वेदस्य' इत्यत्र समागतस्य तुशब्दस्यापि भावोऽयमेव यत् शिक्षाशास्त्रस्य तुलना न कदाप्यन्यैर्वेदाङ्गैः सह कार्या, यतो हि श्वासप्रश्वासयोर्गतिप्रवर्तने सति मूकान्धबधिरादयोऽपि जीवितुं शक्नुवन्ति।

यद्यपि मूको भावाभिव्यक्तिं कर्तुं न शक्नोति, तथाप्यास्वादितं भावमन्तर्भावयन् रसानुभूतिं करोत्येव। अन्धो हि बहिः रूपमपश्यन्नपि नूनमेवान्तर्दृष्टियुक्तो भवति, अत एव प्रज्ञाचक्षुः स कथ्यते। परन्तु घ्राणेन्द्रियस्याभावे सति ग्राह्याग्राह्ययोर्विवेक एव क्षीयते। विवेकहीनो हि ग्राह्यमवधूयाग्राह्यमेव गृह्णाति। वर्णोच्चारणशिक्षणं हि शिक्षोद्देश्यम्।

को वर्णः कस्मात्स्थानादुच्चार्यते? वर्णोच्चारणे कीदृग् प्रयत्नो विधेयः? कति प्रयत्नानि? कति स्थानानि? कति वर्णाः? कथं ते वर्गीकृताः? कथं वायु-र्वर्णान् जनयति? कति स्वराः? कतमश्च स्वरः कथमुच्चार्यते? इति सर्वमपि किं ग्राह्यं किमग्राह्यमिति वर्णोच्चारणविषयकं वैज्ञानिकं विश्लेषणं शिक्षाग्रन्थेषु वर्णितमस्ति। मुखमण्डलस्य सौन्दर्याधाने घ्राणस्यान्यतमं स्थानमस्ति। यथा सर्वे जानन्ति—'नासिका मुखमण्डनम्' इति विश्रुतम्। येन प्रकारेण सर्वाङ्गसुन्दरं शरीरसौष्ठवयुक्तं गौरं पुरुषशरीरं मुखमण्डनेन घ्राणेन विना न केवलमसुन्दरमपि तु जुगुप्सितं विरूपं च प्रत्येति, तेनैव प्रकारेण शिक्षाङ्गविरहितं वेदपुरुषशरीरं न सार्थकं न च सारभूतं प्रतिभाति, अपि तु नूनमेव नितरामसुन्दरं गर्हितञ्च। अत एव वेदाङ्गक्रमनिर्धारणे शिक्षायाः प्रथमतो निर्देशः। अयमेव शिक्षा वेदस्य घ्राणमित्यस्यापरोऽर्थः। वेदस्योच्चारणे किं ग्राह्यम्, किमग्राह्यमित्येव प्रधानतया शिक्षाग्रन्थाः प्रतिपादयन्ति, यथोक्तं सायणाचार्येण—

'स्वरवर्णापराधपरिहाराय शिक्षाग्रन्थोऽपेक्षितः'[१]।

स्वरवर्णयोरुच्चारणे यदि कोऽपि दोषः समागमिष्यति तर्हि नूनमेवेष्ट-प्राप्त्यनिष्टपरिहाररूपं वेदस्य प्रमुखं फलमेव नोद्भविष्यति। अतस्तद्धि फलवैकल्यं शिक्षाशास्त्रस्याभ्यासादेवापनेतुं शक्नुमः। शिक्षायाः स्वरूपं तैत्तिरीयोपनिषदि स्पष्टीकृतम्, यथा—

'वर्णः स्वरः। मात्रा बलम्। साम सन्तानः। इत्युक्तः शिक्षाध्यायः'[२]।

अस्यायं भावो यत्— स्वरः, वर्णः, मात्रा, प्रयत्नः, वर्णानां समवृत्त्योच्चारण-विधिः, सन्धिः, प्रकृतिभावश्च समवेतरूपेण शिक्षापदवाच्या।

१. ऋ.भा.भू., पृ. ११९;    २. तै.उप., शि.व. २ अनु.।

वर्णशब्देन वर्णसमाम्नायोऽभिहितः। प्रातिशाख्येषु तत्प्रतिज्ञासूत्रेषु च वर्णस्वरूप-निर्धारणात्मिकास्तत्सम्बन्धिन्यो नवनवावगतयश्चोपलभ्यन्ते। एतेन हि वर्णसमाम्नायविषयकमध्ययनमनुशीलनञ्च वेदानामाविर्भावादनन्तरमेव प्रारब्धमिति सिद्ध्यति। ततःप्रभृतिवर्णानां संख्यात्मकं निर्धारणं जातम्। यथा— 'त्रिषष्टिश्चतुःषष्टिर्वर्णाः' इति पाणिनिशिक्षोक्त्या[१] ज्ञाप्यते।

स्वरा उदात्तानुदात्तस्वरिताख्याः। तेषाम् 'उच्चैरुदात्तः', 'नीचैरनुदात्तः', 'समाहारः स्वरितः' इति सामान्यनियमः। प्रत्येकं वेदशब्दे कस्यचित् स्वरस्योदात्तताऽऽवश्यकी, शेषास्तु अनुदात्ताः[२], अनुदात्तेषु कश्चित् स्थितिवशात् स्वरितो हि जायते। स्वरवर्णाद्युच्चारणप्रकारः शिक्षयोपदिश्यते। वेदमन्त्राः स्वरस्यासङ्गतप्रयोगाद् विपरीतफलदायिनो भवन्ति। प्राक्तनीं वेदाध्यापनप्रणालीं चित्रयता महर्षिणा पतञ्जलिना—'उदात्तस्य स्थानेऽनुदात्तं ब्रूते, खण्डिकोपाध्यायः तस्मै चपेटिकां ददाती'त्युल्लिखितम्। नूनं ह्ययं प्रसङ्गो वेदे स्वरस्य गौरवास्पदत्वं ख्यापयति।

स्वरोच्चारणे व्यतीयमानो हि कालो मात्राशब्दवाच्यः। सा च मात्रा ह्रस्वदीर्घप्लुतात्मिका त्रिधा विभक्ता। मात्राशिक्षयैव तज्जन्योच्चारणसमयभेदो ह्रस्वदीर्घप्लुतोच्चारणप्रकारश्चावगम्यते। तेषां लक्षणमपि शिक्षाग्रन्थेषु वर्णितमस्ति। एकमात्रस्योच्चारणसमयः ह्रस्वस्य, द्विमात्रस्योच्चारणसमयो दीर्घस्य त्रिमात्रस्योच्चारणसमयः प्लुतस्य भवति।

वर्णानामुच्चारणस्थानं प्रयत्नश्च बलशब्दाभिधेयः। स्वरव्यञ्जनोच्चारणकाले यानि मुखस्थानान्याहत्य वायुर्बहिर्निर्गच्छति, तानि तद्वर्णस्थानानि। तानि स्थानान्यष्टसंख्यकानि भवन्ति। यथोक्तम्—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च[३]।।

उरःकण्ठजिह्वामूलदन्तनासिकोष्ठताल्वादीनि वर्णानामष्टावुच्चारणस्थानानि सन्तीति श्लोकार्थः। आभ्यन्तरो बाह्यश्चेति द्विविधो हि यत्नः। तत्राभ्यन्तरश्च पञ्चधा बाह्यस्त्वेकादशधेति।

---

१. पा.शि., श्लो. ३-५।
२. अनुदात्तं पदमेकवर्जम्। (पाणिनिसूत्रम्)
३. पा.शि. श्लो. १३।

सामस्तु निर्दुष्टमतिद्रुतातिविलम्बितगीत्यादिदोषैर्विनिर्मुक्तं माधुर्यादिगुणैः संवलितं ह्युच्चारणम्। माधुर्योपेतम्, अक्षराणां पृथक्-पृथक् स्पष्टोच्चाणम्, लययुक्तता, पदानां विभागः, शोभनस्वरसंयुतम्, धीरतयोच्चारणञ्चेमे षट्संख्यका उत्तमपाठकस्य गुणाः सन्ति[१]। अतो विपरीतं हि गानशीलः, जवेन पठनशीलः, शिरःप्रकम्पकः, स्वयं लिखितस्तोत्रपाठकः, अर्थज्ञानविरहितः, अनभ्यस्तपाठश्चेमे षट्संख्यका अधमपाठकाः पाठकेषु निम्ना वा भवन्ति[२]। अन्यदपि लक्षणमधमपाठकानां शिक्षाग्रन्थेषूपलभ्यते।

वर्णानामतिशयः सन्निधिः सन्तानः संहिता वा कथ्यते। पदसंहितायाञ्च सन्धिः। यथा 'वायो आयाही'ति पदद्वयस्य युगपदुच्चारणे सति सन्धिजन्यरूपं 'वायवायाही'ति वेदमन्त्रपाठे उच्चार्यमिति शिक्षैव शिक्षयति। तथैव प्रकृतिभावोऽपि सन्तानशब्देनैवाभिधीयते। यथा—"इन्द्राग्नी आगतम्" इत्यत्र प्रकृतिभाव इति शिक्षैव शिक्षयति। उभावपि सन्धिप्रकृतिभावौ शिक्षापदवाच्यौ।

सामान्यरूपेण तु सर्वेऽपि शब्दाः सुष्ठु प्रयोक्तव्याः। परन्तु लौकिकानां शब्दानामुच्चारणे यदि शिक्षाग्रन्थेषूपवर्णितानां नियमानां पालनं नहि भवेत्, तथापि वैदिकानां शब्दानामुच्चारणे तेषां पालनमावश्यकमेव। यतो हि एवं न कृते सति प्रयोक्ता न केवलं प्रेप्सितफलहीनो भवत्यपि तु नूनमेवानिष्टफलभागी अपि भवति। यथोक्तं पाणिनिना—

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्'[३]।।

श्लोकस्यास्यायं भावो यद्यथा 'इन्द्रशत्रुर्वर्धस्व' इत्यस्य मन्त्रस्येन्द्रशत्रुशब्दे विवक्षितेऽर्थे तत्पुरुषसमासे 'समासस्य'[४] इत्यनेन सूत्रेण तत्पुरुषसमासत्वाद् अन्तोदात्तत्वेन भवितव्यम्, परन्तु शब्दोऽयमाद्युदात्तस्तु प्रयुक्तः। एवं प्रयुक्ते सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहिसमासत्वात् स्वयमेव वृत्रासुर इन्द्रेण निपातितः। तेनैव प्रकारेण स्वरतो वर्णतो वा विकलो मन्त्रो यजमानं यज्ञकर्त्तारं हिनस्त्येव।

---

१. माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः।
धैर्यं लयसमर्थं च षडेते पाठकाः गुणाः।। (पा.शि. ३३)

२. गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः।। (पा.शि. ३२)

३. पा.शि., श्लो. ५२।

४. पा.सू. ६।१।२२३।

स्वरवर्णविभ्रष्टो मन्त्रो न केवलं ह्यभीष्टार्थमनुत्पादयत्यपि तु स वाग्वज्रो यजमानस्योपरि सद्य एव पतति।

अन्यत्रापि शिक्षाशास्त्रस्य महत्त्वं प्रतिपादयन्नुक्तं यद् यो जनः शिक्षा-शास्त्रस्य सम्यग् ज्ञानं विना स्वरवर्णविवेकहीनो भूत्वा वेदस्य भ्रष्टपाठं करोति, स हि वेदाग्निना दग्धो भूत्वा सूकरादिनिकृष्टयोनिं प्राप्नोति—

'हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्।
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति'[२]।।

एतेषां दोषाणां परिहारस्तु शिक्षाशास्त्राभ्यासादेव भवितुमर्हति। शिक्षामतिरिच्य वेदस्य शुद्धमुच्चारणं न कदापि भवितुं शक्नोति। अतः षड्वेदाङ्गेषु शिक्षाङ्गस्यैव प्राधान्यम्। शिक्षाशास्त्राभ्यासेन पाठदोषानवधूय यो जनः स्वरवर्णार्थसंयुतं वेदमधीते, स हि ऋग्यजुःसामभिः स्वाशेषान् कल्मषानवधूय ब्रह्मलोकमधिगम्य पूजितो भवति। यथोक्तं महर्षिणा पाणिनिना—

'हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम्।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते'[३]।।

एकस्यैव वर्णस्य सर्वेषु वेदेषु समानरूपेणोच्चारणं न भवति। शाखाभेदे सति वैदिकानां शब्दानामुच्चारणं परिवर्तत एव। यथा यजुर्वेदे मूर्धन्यषकारस्य रेफेणोष्मवर्णैश्च सह संयुक्ते सति खकारस्य सदृशमुच्चारणं भवति। अन्येषु वेदेषु मूर्धन्योऽयं षकारः षकाररूपेणैवोच्चारितो भवति। अत एव सर्वेषां वेदानां पृथक्-पृथक् स्वीया शिक्षा अस्ति। यासु तत्तद्वेदानां शब्दोच्चारणविधिर्विस्तृतरूपेण विवेचितोऽस्ति। यथा शुक्लयजुर्वेदस्य याज्ञवल्क्यावसाननिर्णयमाण्डव्य-वासिष्ठ्यादयः शिक्षाग्रन्थाः सन्ति। सामवेदस्य च नारदीयशिक्षा, गौतमीशिक्षा, लोमशीशिक्षा च विश्रुता। अथर्ववेदस्य माण्डूकीशिक्षा मिलति, यस्याः १७५ श्लोकेषु अथर्ववेदस्य स्वराणां वर्णानाञ्च विस्तृतं विवेचनं समुपलभ्यते। अन्येऽपि कात्यायनीपाराशर्यमोघानन्दिनीमाध्यन्दिनीवर्णरत्नप्रदीपिकादयः शिक्षाग्रन्थाः समुपलभ्यन्ते, यत्र स्वरवर्णयोरुच्चारणविधिर्विवेचितः।

---

१. पा.शि., श्लो. ५४।

२. पा.शि., श्लो. ५५।

प्राक्कालिको वेदोच्चारणप्रकारः साम्प्रतमपि तदवस्थ एव। सुदीर्घकालान्तरेऽपि भारतीयो वेदपाठी समानस्वरादेव वेदपाठं कुर्वन्नास्ते। चमत्कृतिरियं शिक्षावेदाङ्गस्यैव। यद्यपि साम्प्रतिके युगे विविधयन्त्राण्याविष्कृतान्युच्चारणस्वरूपावगत्यै, परन्तु प्राचीने भारते विषयस्यास्य भाषाशास्त्राङ्गभूतस्य यद्वैज्ञानिकं गभीरञ्च विवेचनमभूत्, तदस्मदीयप्राच्यमनीषिणामुच्चारणविषये विचक्षणाया गवेषणाधिषणाया जाज्वल्यमानं प्रमाणम्। एवं हि शिक्षां विना विकलरूपेणोच्चार्यमाणो वेदो न केवलमभीष्टफलमेव धुनोत्यपि तु नूनमेवानिष्टफलमप्याविष्करोति। अतो वेदाङ्गेषु शिक्षाङ्गप्राथम्यं दुर्निर्वारमेवेति।

●

# वैदिकावेस्तीयभाषयोरेकं परिशीलनम्

**डॉ. शारदाचतुर्वेदी**
उपाचार्या, भाषाविज्ञानविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

भाषा अस्माकं समग्रभावानामभिव्यक्तिः, गतिः, चेतना चास्ति। भाषायाः प्रत्येकं पदमस्माकं मानसिकस्तरस्य मानदण्डोऽस्ति। भाषाध्ययनेनास्मभ्यमितिहासस्य ज्ञानं भवति। यथा तत्रोक्तम्— समाः, हिमाः, शरद्, वर्षम् एते परस्परं पर्यायवाचिनः शब्दाः सन्ति। आदौ ये शब्दा ऋतुवाचका आसन्, परन्तु उत्तरस्मिन् काले ते शब्दा वर्षशब्दस्य वाचका जाताः। अत्र विदुषां पुरतः केचन अवेस्तीयशब्दा दिङ्मात्रेण प्रदर्श्यन्ते— अवेस्ता-अयर् 'दिन' तु॰ आंग्ल Year 'वर्ष'। 'उष् दाहे' इत्यस्माद् ऊष्माः समाश्च अवेस्तायां हम 'वर्ष' तु॰ आंग्ल Summer. प्रथमत एते ग्रीष्मर्तुवाचकाः शब्दाः, पुनः वर्षवाचिनः शब्दा जाताः। एवमेव √ श्रृ 'शरद्', अवे. सरॅध, प्राचीनफारसीभाषायां थर्द 'शीतर्तुः'; शीत, शिशिरशब्दौ ऋतुवाचकौ। ततः शरद्-थर्द > वर्षवाचकः।

विश्वस्य प्राचीनासु भाषासु अवेस्ता प्राचीनफारसीभाषा च अन्यतमे स्तः। वैदिकभाषायामेवमनेके शब्दाः सन्ति, येषामर्था भारतीयपरम्परामाध्यमेन नैवावबोधितुं शक्यन्ते। तदा पाश्चात्त्यविदुषां दृष्टिः अवेस्ता-प्राचीनफारसीभाषयोरुपरि न्यपतत्, यत्र वैदिकशब्दसदृशा अनेके शब्दाः समुपलब्धाः, यथा— अवेस्ता-पुथ्रो, प्राचीनफारसी-पुस्र (पुस्स), सं. पुत्रः; अवे. मश्य, प्राचीनफारसी-मरतिय तु. सं. मर्त्य। गाथिक अवेस्ता दवित्य, यंगर अवे. वित्य, तु. प्रा. फारसी-दुवितीय, सं. द्वितीय। गाथिक अवे. इदी, यंगर अवेस्ता इदि, तु.प्रा. फारसी- इदिय, सं. इहि, ग्रीक-इथि। अवेस्ता-खुम्ब, तु. सं. कुम्भ। अवेस्ता-हकॅरॅत, प्रा. फारसी-हकरम् चित् = सं. सकृत् इत्यादयः। अवेस्ता दएनु = सं.

धेनुः, अवे. गर्=सं. गीर् 'स्तुतौ'; अवे. वरॅस > वल्श 'शाखा', 'पल्लव' तु. आंग्ल bark, सं. वल्कल, फा. बर्क 'Cover' तु. बुर्का।

भारतीय-ईरानी-आर्ययोर्द्वयोः कुलयोर्भाषायां समानायां सत्यां वेदावेस्तयोर्मध्ये अस्ति महान् सम्बन्धः। वेदशास्त्र-इतिहास-कर्मकाण्डानां दृष्ट्यापि द्वयोर्मध्ये महत् साम्यं वर्तते। कालक्रमेण उभयोः कुलयोर्मध्ये नैतिकमूल्येषु उपासनापद्धतौ महान् अन्तरो जातः। वासोपयोगिजलवायुस्थानान्वेषणे उभयकुलं परस्परं विच्छिन्नं जातम्। अनेन विभेदेन द्वयोर्भाषयोः समागतः किञ्चिदन्तरः परन्तु द्वयोर्मध्ये कतिपयेषु ध्वन्यात्मकान्तरेषु सत्सु महत् साम्यमवलोक्यते। अत्र तयोः शब्दवतांना ध्वन्यात्मकान्तराणां विवेचनं प्रस्तूयते।

## वेद-अवेस्ता-भाषागतवैशिष्ट्यम्

(क) **वैदिक स्=अवेस्ता 'ह्'**—सोम=हओम; सावनि=हावनि; असु=अङ्हु; स्वर्=ह्वर्; सस्वरण=हङ्हरन; सहस्=हज़ह्; शवस्=सवह्; सुचित्र=हुचिथ्र; सूतिः=हुइति (अभिषव); (स)-हस्र=हज़ङ्र्; ह्णानः=ज़ज़रान (क्रुद्धमाणः); चर्-षाच्=चङ्रङ्-हाच् 'गोचारणभूमिः'; शर्धस्=सरॅदह् 'इव, प्रकारं' अयस् (-र्)= अयह्= Iron; अवस्=अवङ्ह्; असुरमेधस्=अहुरमज्दा; सप्त=हफ़्त; आर्याणाम् व्यचस्= अइर्यनम् वएज़ह्; सचन्ते=हचिन्ते 'संयुज्यते'।

(ख) **वैदिक ह=अवेस्ता ज़**—हरि=ज़इरि, होतर्=ज़ओतर्; होत्रम्= ज़ओथ्रॅम्; हरित=ज़इरित; आहुतिः=आज़ुइति; सहस्=हज़ह; सजोषस्=हजओशह्; हेतिः=ज़एन; सृजानः=अङ्हरज़ान; जिह्वा= हिज़्वा; हृदय=ज़रॅदय; हस्त=ज़स्त; हिरण्य=ज़रन्य; हवन=ज़वन 'आह्वानं', हि=ज़ी।

(ग) **वैदिक ओ=अवेस्ता अओ**—(अ)वोचत्=अओख्त; ओष्ठ=अओश्त्र; शोकः=सओकः; उन्द > ओद्=अओद् 'क्लेदने'; उष् > ओष्=अओश् 'ज्वलने, दीप्तौ'; ओष=अओश 'अग्निदाहेन मृत्युः'; उज़् > ओज् अओज् 'विक्रान्ते'; ओजस्= अओज़ह्; ओघः=अओग 'जलप्रवाहः'; वचनः > ऊचानः=अओजनः; ओजिष्ठ=अओजिश्त; जोष=अज़ोश; उक्त > ओक्त=अओख़्त (नामन्); वाच्य > * वोच्य=अओज्य; मोघ=मओघ। गोयूति > गव्यूति=गओयओइति 'गोचारणभूमिः'।

(घ) **वैदिक ए=अवेस्ता अए**—चेतर्=चएतर्; √ वेण्=वएन् 'दर्शने'; सिंच् > सेक्=हएच् 'सेचने'; मेष=मएष; चित्-कित्=कएत्-कएश् 'Think';

एहस्=अएज़ह् 'क्रोध' (तु. अनेहस्); इन्ध्, इध् > एध्=अएध्; इध्म > * एध्म=अएश्म 'इन्धनं'; एव=अएव= One; एनस् > अएनह् 'आघातं, पापं'; एतावन्त=अएतवन्त्; एतत्=अएतत्; एतत् आ=अएतध 'अतः परम्' एभ्यः=अएब्य; देव=दएव; नेत्=नएध।

(च) **वैदिक ऐ, औ=अवेस्ता आइ, आउ**—अस्मै=अह्माइ; कस्मै=कह्माइ; उपैत्=उपाइत् 'प्रापणं'; गौ=गाउ।

(छ) **वैदिक श्व=अवे. स्प**—अश्व=अस्प; श्वेत=स्पएत; श्विति=स्पिति; श्विन्त=स्पॅन्त; श्वनस्=स्पानह्=स्पनङ्ह; श्वन्=स्पन्।

(ज) **वैदिक 'प्र'=अवे. फ्र**—प्रशस्ति=फ्रसस्ति; प्रस्कम्भ=फ्रस्कम्ब; प्रश्रुत='फ्रसूत' प्रस्पूर्ज=फ्रस्परॅघ 'अङ्कुरः, पल्लवः'; पृच्छा=फ्रसा; प्रवार=फ्रवार 'दुर्गः, आबद्धः'; प्लव्=फ्रव्; प्रवेदस्=फ्रवएद 'धनाढ्यः'; प्रथस्=फ्रथह्; आप्रीणनम्=आफ्रीन।

(झ) **'श् ष् स् ह् र्' एतेभ्यः पूर्वं यजुर्वेदे अनुस्वारस्य ग्वङ्=अवे.ङ्-अङ्हु**—'प्राण'; अङ्रमइन्यु; अङ्हओशॅम्न; अङ्हुथ्व 'स्वामित्व'; अङ्हुया-क्रिया विशे. 'असुया', हृदयेन; अङ्हवन 'अभिषवण'; अङ्हरॅजान 'असृजानः'; अङ्फ्रहरज़- 'अप्रसर्ग'; अङ्हद्-असद्; अओज़ङ्ह्-'ओजस्'; अएनङ्ह्-'एनस्'; वङ्हु-'वसु'; त्बएशङ्ह् 'द्वेषस्'; आज़ङ्ह्=आगस्; दस्यु=दङ्हु।

(ट) **य् इ पूर्वं 'इ' इत्यस्य आगमः**— अरुण=अउरुन; तरुण=तउरुन; अर्वन्त्=अउर्वन्त् 'तीव्रगामी, वीर, अश्व' तूर्व=तउर्व; सर्व=हउर्व; पुरु=पोउरु; खर्व=कउर्व 'क्षुद्रः'; शर्व=सउर्व > सउरु 'एक दएव।'

(ठ) **वैदिकपदान्त यम् ईयम्=अवेस्ता ईम्**— असत्यम्=अङ्हइथीम्; वर्यम्-वइरीम् 'वरणीय'; तुरीयम्=तूइरीम्; तृतीयम्=थ्रितीम्; द्वितीयम्=त्बितीम्' कर्यम्=कइरीम्।

(ड) **वैदिक अम्, अम=ॲम्**— वॅरॅथ्राजनॅम्; महिष्ठम्=मज़िश्तॅम्; विद्वेषसम्=बित्वएशङ्हॅम् (द्वि.ए.व.); अघम्=अघॅम्; अहम्=अज़ॅम्; प्रवारम्=फ्रवारॅम्; अर्यम्णम्-अइर्यम्नॅम् (द्वि.ए.व.); श्रेष्ठम्=स्रएश्तॅम्; तम=तॅम; अथरम्=आत्रॅम्; दधन्तॅम्=दधन्तॅम्; श्रावयन्तम्=स्रावयन्तॅम्।

(ढ) **वैदिक पदान्त-उम्=अवे. ऊम्**— ऋतुम्=रतूम् (द्वि.ए.व.); त्वम्=तूम्; असुम्=अहूम् (द्वि.ए.व.)।

(प) **वैदिक क, क्र=अवे. ख, ख्र**—क्रतु=ख्रतु; क्रूर=ख्रूर; कुम्भ=खुम्ब; क्रुश्=ख्रओश्; क्रोशक=ख्रओसक; उक्त=उख़्ध।

**प,भ इत्यस्य व-भावः**—गृभ्=गॅरॅव् (to hold ) > गव 'हाथ'; तु.सं. गभस्ति, 'रश्मिः, हस्त'; द्वि > वि 'पृथक्'; द्विगुणित double; द्वय > उभय, > उवय, वय, व, वा।

**वैदिक स्व, अवे. ख्व ख**—स्वेद=ख़्वएद; स्वतः=ख्वतो; स्वसर्=ख्वङ्हर्; स्वधावन्त् (खुदाबन्द) स्वधात=ख्वधात; स्वधायस्=ख़्वदायह्; स्वायस्, स्वपस्=ह्वापह्, ख्वापह्; सु=हु > ख्व; स्व=ख्वए।

**वैदिक-'ज' इत्यस्य अवे. गभावः**

१. 'जीव-प्राणधारणे'; √गी. > गय, गयथा सं. गय, गयासुर, गयशीर्षन्।

२. जभ् > जम्भस्, जम्भीर, अवे. ज़फ्नु, ज़फ्र।

३. जभ् > सं.-गभ्, गभीर, गम्भीर, गह्वर, गहन।

**अवे. क्ष इत्यस्य वैदिके झभावः**— अवे. क्षर्=सं. क्षर् > निर्झर, निर्झरिणी; झरणः 'झरना'।

प्रसङ्गवशात् संस्कृतावेस्ताभाषयोर्मध्ये समुपलब्धानां प्रत्ययानां महत् साम्यं वर्तते। अत्र मत्वर्थीयप्रत्ययानां विवेचनं सुखबोधार्थं प्रदर्श्यते। फारसीभाषायामपि एवंभूतानामनेकेषां प्रत्ययानां प्रयोगो दरीदृश्यते। वैदिक-अवेस्ता-प्राचीनफारसी-भाषासु समुपलब्धेष्वनेकेषु प्रत्ययेषु केवलं मत्वर्थीय मत्प्रत्ययमवलम्ब्य लेखस्यास्य कलेवरसंवर्धनभीत्या विचारः क्रियते। मत्वर्थीयप्रत्ययेषु मत्, वत्, म, व, वर, वल, र, ल, क्विप् आदयः प्रमुखाः सन्ति। मत्प्रत्ययो मूलतो धातुजोऽस्ति। अवेस्तायां मित्= Meet 'प्राप्ते' सहावस्थाने। अवेस्तायां मितयतु (लोट् प्र.पु.ए.व.) 'निवसतु, मिलतु'। संस्कृत मित्रम्=जोष्टर् 'प्रियः' तथा मित्र > मिहिर='सूर्य' मित् धातुजपदमस्ति। आंग्लभाषायां Meet धातोः Meet, meeting committee, Summon, intimate, inmate आदयः शब्दा उपलभ्यन्ते।

मित्प्रत्ययस्थतकारस्य 'थ' इति अवेस्तीयभाषायां दृश्यते। अतः 'मित्' > 'मिथ्'। अवेस्तायां 'मएथन' 'सहनिवासस्थानं गृहं' तथा मिथ्वर=मिथ्वन=सं. मिथुन 'युग्म' आदि मिथ्धातुजानि पदानि प्राप्यन्ते। अवेस्तीय-मिथओख्त=मिथ्योक्त=mistold पदमपि अस्मद्धातोर्भिन्नार्थे प्रयुज्यते। आधुनिक-

फारसीभाषाया मेहमान मएथमान, 'निवासी', निवसितुमायातः, यूता व्यक्तिः (मिला हुआ व्यक्ति), इदमपि मिथधातुजं वर्तते। एवमेव 'हम्-मिथ्' इत्यस्मात् 'हमिस्त'=पराजितः, हमिथ=युद्ध=सं. समिथ; हमिस्तेय=पराजितुं तथा हम्मिस्सियं पदं match 'शत्रु'पदं सिद्ध्यति। संस्कृते मेथिः 'श्लिष्टस्य साधनं', मिथुनं, मैथुनं मिथस्=mutual, मथुरा, मिथिला, मिथु, मिथू, मिथूदृशौ, मिथुया > मिथ्या, मठ, भर्तृमेण्ठ, अस्माद्धातोः निष्पन्नानि पदानि। मित्रस्य मिथ्रो भूत्वा तस्मात् म्लिष्, म्लेच्छ, मिष्, मिल् धातूनां विकासः समजनि।

अवेस्तीयसंस्कृतभाषायां च 'मत्'प्रत्ययः 'मित्'धातोः अवशिष्टोऽस्ति। 'मत्'प्रत्ययस्यार्थः 'युक्तः, मिलितः, संयुक्तः, श्लिष्टः सहसम्बन्ध'श्चास्ति। मत् इत्यस्य रूपान्तरं मन्त् अस्ति। इत्यस्मात् वत्-वन्तौ विकसितौ। आंग्लभाषायां ment, ant, nant, vant अस्यैव रूपाणि सन्ति। मन्त्, वन्त् द्वयोः सङ्क्षिप्तं रूपं 'म' 'व' चास्ति। मा 'मितौ' इत्यस्मात् मित् > मित् > मत् > वत्='समानार्थक-प्रत्ययः' इत्यस्य विकासः सम्भवः। इदम्-वत् इत्यस्मादुपमार्थकः 'इव' इत्यस्य विकासो जायते। 'इव' इत्यस्य स्वल्पप्रयोगेन 'व' इत्यभवत्। यद्वा भृ धातोः भर वर वलश्च पुनः 'व' 'र' 'ल' इत्येतेषां विकासः सम्भवेत्।

वेदे श्च्यु 'गतौ' तरसागमनम् धातुरस्ति। शच्यु धातोः अविस्तीय 'शु शू' इत्येतयोर्विकासो जातः। प्राचीनफारसीभाषायामिदं शियव्-रूपेण उपलब्धम्। महाभाष्यकारस्य 'शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते' इति यत् कथनं बहुधा सङ्गच्छते। शु इत्यस्मात् 'शव्'=गतप्राणा मृत इत्येतेषां पदानां विकासो जातः। इत्यस्मात् शिविका 'शववाहन'पदमपि निष्पद्यते। वेदे एतस्मात् 'शु' आशु=अवेस्ता 'आसु' शीघ्रगामी quick swift पदानि उपलभ्यन्ते। शु-रंध इत्यस्माल्लौकिके संस्कृते 'शीघ्र'पदं प्राप्यते। अवेस्तायाम् आसु, आस्यङ्ह, आसिश्त, आसु-अल्प, आसु-अस्पोतम, आसु-अस्पी, आसुक्ष्वएव, आसुयस्न आदीनि समासान्तपदानि प्राप्तानि। आधुनिकफारसीभाषायां शुधातोर्निष्पन्नानि पदानि एवंविधानि सन्ति—शिताफ़्त 'धावमानः'; शिताब 'शीघ्रं, तीव्रं', (स्त्री.) शीघ्रता; शिताबकार 'त्वरमाणः, उत्कण्ठितः', शिताबा 'शीघ्रं कुर्वाणः', शिताबिन्द 'धावतः'; शितावी (स्त्री.) 'शीघ्रता', शितावीद 'शीघ्रतां कुर्वाणः'।

अवेस्तायां मत्प्रत्ययस्य प्रयोगः संज्ञापदानां पश्चाद् न्यूनमात्रया तथा संज्ञा-पदेभ्यः प्रागधिकं प्रयोगो भवति। मत्-पूर्वसंज्ञापदानां संख्याः पर्याप्ताः सन्ति। अत्र मत्पूर्वं केषाञ्चनपदानां निर्देशोऽत्र विधीयते—मत्-अफ़्समन्-'पङ्क्तिबद्धम्' अत्र

'मन्' पश्चात् संयुक्तेऽपि पूर्वस्मिन् 'मत्'संयोगोऽस्ति। मत् आज़इन्ति-टीकायुक्तः, अर्थयुक्तः, ज्ञानयुक्तः। मत् गओशावर-कर्णाभूषणयुक्तः, कुण्डलयुक्तः।

मत् गूथ—मलयुक्तः, मलिनः।

मत् परॅसु—प्रश्नयुक्तः।

मत् पइति फ्रश (-फ्र-)—परिप्रश्नयुक्तः।

मत् पइति पॅरॅसु—उत्तरयुक्तः।

मत्फ्शु—'पशुमत्'।

मत् दामन्—सृष्टियुक्तः।

मत्सओचि बुये- तु. 'दीप्तियुक्तमभवितुम्।

अवेस्तायां बरोज़ओथ्र-होत्रभर, बरोस्त्रयन्, बरोजुश् बरोअस्प तथा बरोख्वरॅनह्-प्रत्ययोऽपि पूर्वप्रयोगस्य दृष्टान्तः।

अत्राधुनिकफारसीभाषायां द्वित्रा दृष्टान्ताः पर्याप्ताः—

बिश्-भिस् (तृ.ए.व.) > ब; उपइरि=उपरि > ब; द्रष्टव्य-ब-बखूबी 'खूबी के साथ; ब-इज्जत; ब-अदब; 'अदब के साथ' ब-अल्फाजे दीगर 'दूसरे शब्दों के साथ; बा-मजः 'मजे के साथ'; खानःब-दोश 'स्कन्धोपरि गृहं नयमाना'; ता-ब-गुलू 'आकण्ठ' ता-ब-जीस्त 'जीवनपर्यन्त'; ता-ब-कमर 'कटिपर्यन्तं'; ब-कलम-खुद 'स्वलेखन्या'।

जीन > जी; तु.-जी-अक्ल 'अक्ल वाला'; जी-आबरू 'प्रतिष्ठा वाला'; जी-इख्तियार 'अधिकार वाला'; जी-इज्जत 'इज्जत वाला'; जी-होश 'होश वाला'।

इ=ह् य, ह् या=सं. स्या; ह् य, हे,से > ए > इ ई (ष.ए.व.) हुस्राव् इ कवातान् उरेताक्—'कवातवंशस्य हुस्रवह् तथा एकः बालकः'; तहसील-इ-इल्म 'विद्यया प्राप्तिः'; तह्सीन-इ-ना-शनास् 'अज्ञानिनां प्रशंसा'; तहकीक-इ-हक 'सत्यस्य अन्वेषणम्'।

वेदेऽपि 'आशुशब्दस्य अवेस्तीयभाषायामनेकेष्वर्थेषु प्रयोगो दृश्यते। आशुहेमन् इत्यस्यार्थः 'तीव्रं गतिकर्म'। आशुशुक्षणिः 'शीघ्रं दीप्तिप्रदः'। क्वचित् अपि 'शु' इत्यस्य प्रयोगो भवति। शू इत्यस्यार्थः 'शीघ्रम्' अस्ति। शु-मत् 'शीघ्रतायुक्तः' इति क्रियाविशेषणात्मकः प्रयोगो वेदे उपलभ्यते। मत् इत्यस्य पूर्वे प्रयुक्ते सति 'मतशु' पदं निष्पद्यते। 'मत-शु' पदस्य विकसितरूपं मक्षु-मक्षुरूपेण

भवति। मत् शु मक्षु रूपाद् एव द्वितीयं रूपं 'मोषु' विकसितम्। एवं 'मोषु' इत्यस्य क्रियाविशेषणात्मके प्रयोगे जाते 'शीघ्रतया सह' एवंभूतार्थो निर्धारितः स्यात्। वेदे स्मत्-अभीषु, स्मदिष्ट, स्मत्पुरन्धि, स्मत्-सूरि, स्मच्छब्द, स्मत्-रातिषाच् एवं 'स्मद्-ऊधन्' आदीनि पदानि इमां कोटिं समागच्छेयुः। स्मत् वस्तुतः 'मत्-शु' इव 'सु-मत्' इत्यस्माद् विकसितं भवति।

**जकारस्य 'द' भावः प्राचीनफारसीप्रवृत्तिः**

ज़कारस्य 'द' भावः प्राचीनफारसीभाषाया विशेषता। अवेस्ताया ध्वनियुक्तो ज़शब्दः प्राचीनफारसीभाषायां 'द' युक्तोऽस्ति। किन्तु प्राचीनफारसीभाषाया अनेकेषु स्थलेषु अवेस्तीयज़कारो दकारत्वम् आपद्यते। तथ्यस्यास्य पुष्ट्यर्थं केचन दृष्टान्ता मया उल्लिख्यन्ते—

जर्-'बहना, जाना, प्रथित होना' ज्रयह् 'समुद्र', सं. ज्रयस्='प्रथस्', प्रा. फारसी-द्रयह्, पार-द्रयह्-'समुद्र-पार' इत्यादि। आ.फा. दरिया, दर्या, 'नदी, समुद्र', दर्याई-समुद्रीय, नदी सम्बन्धी; दर्या-ए-अह्मर 'लाल-सागर', दर्या-ए-शोर ज्रयह्-क्षार 'लंवणसागर', दर्या-च 'क्षुद्र नदी', दर्या दिल 'उदार', दर्या-वार 'बहुत बरसने वाला', दर्यार्बुद ज्रयस्-अवृत 'जलावृत् (भूमि)'।

जस्त=सं. हस्त, प्रा.फा. दस्त 'हाथ' आ. फा. दस्तअन्दाज 'कारीगर के हाथ का औजार'; दस्त आमोज-'हाथ पर सधाया जानवर'; छददस्त 'हाथ से थपथपाना'; दस्त-कश 'वरद'; दस्तकार 'शिल्पी'; दस्तकारी 'शिल्पकार्य', दस्तखत 'हस्ताक्षर', दस्तगाह 'हस्तसामर्थ्य'।

अवेस्ता जर्=सं. 'घृ' दीप्त होना, हर, हिर् तु. घर्म 'दीप्तपात्र' धूप, ऊष्मा, अंग्रेजी gold, glow, glamour हर् > हरिः, हिर् > हिरण्य, हेमन्, हीरक। अवेस्ता-जरन्य=सं. हिरण्यम्, प्रा.फा. दरनियम्, किन्तु आ.फा. भाषायां 'द' इत्येतस्य अभावो वर्तते; तु. जर, जरी, जरीना, जरदार, जरो-जमीं।

अवे. क्ष्ना, 'जानना', स्ना 'जानना', ज्ञा 'जानना' to know ज्ञानिन= दानिश-बुद्धिमान् 'बुद्धि-विद्या'; दानिशआमोज 'ज्ञान लेने या देने वाला'। दानिश-मन्द 'विद्वान्'; दानिश-मन्दी 'विद्वत्ता', दानिशवर 'ज्ञानवान्', दानिस्त 'ज्ञात', दानिस्त-जानकारी।

दाँ—मर्तबः दाँ 'इज्जत पहचानने वाला', मतेबः दानी 'इज्जत पहचानना', √ जन्=जन् 'प्रादुर्भावे' जामा-पातृ > जामातृ, आ.फा. दामाद; √ जुष् 'प्रीतिसेवनयोः' जओश्तर=सं. जोष्टर, प्रा.फा. दउस्तर, आ.फा. दोस्त।

**दकारस्य 'ज' भावः**—संस्कृतभाषायामपि 'द' इत्येतस्य 'ज'भावप्रवृत्ति-र्विद्यमानास्ति। अत्र तु दृष्टान्तः प्रस्तूयते— दिव्— 'कान्तिमान' दिव, दिवस, दिनम्; द्यु—द्यविद्यवि 'प्रतिदिनम्'; द्युस्-अन्येद्युस्। द्यस्-सस्मिन् द्यवि=सद्यस Same day 'उसी दिन' > उसी समय, द्य=अस्मिन् द्यवि=अद्य 'आज'; धु > अधुना (तृ.ए.व.) 'आजकल।' द्युत्-ज्युत्=ज्योतिष, ज्योत्स्ना, द्युत्नु > जुगनू। दीनार—'स्वर्णिममुद्रा।' जरन्य-जरनएन- दरनियम > दीनार।

जम्पती—धामन्=अवे. दॅमान, गरो दॅमान 'स्तुतिगृह स्वर्ग', न्मान, दम, दम्, दम्पति 'गृहस्वामी'; दम्पती > जम्पती 'पति-पत्नी'।

**वेदे धात्वन्त्यस्य स-भाव एका अवेस्तीयप्रवृत्तिः**

अवेस्ताभाषायामेका विशेषताऽस्ति यत् क्त, क्तिन्, न-प्रत्ययेषु संयुक्तेषु धात्वन्त्यव्यञ्जनस्य 'स्'भावो भवति। यथा—

केरेन्त्—कॅरॅस्ता 'काटी गई, बनाई गई'।

उर्वाजॅमन्— उर्वास्मन् 'प्रसन्नता, आशीर्वाद'।

यज्— यस्न, 'यज्ञ, पूजा', तु.सं. इष्टि।

मन्— मस्ति 'ज्ञान' विचारणा।

मद्— मस्ति 'मदिर-ता, मेधिरता'।

चित्— चिस्त 'ज्ञानयुक्त'।

मज्— मस > much, many, maximum.

इरिच्—इरिस्त 'मिश्रित', वरदुस्म (वरद्वॅज्म) 'कोमल पृथ्वी'।

वेदेऽपीदं धात्वन्त्यस्य सभाव उपलभ्यते। अत्र कानिचन उदाहरणानि प्रस्तूयन्ते—

अवेस्तायां वॅरॅज् धातुर्लभ्यते। अस्य संस्कृतरूपं 'बृह, वृंह' रूपेण उल्लिखितमस्ति। मूलतः वृध्-बृध् धातू स्तः। अस्य वकारादि, बकारादि घान्तं-धान्तं च चतुर्विधानि रूपाणि आसन्। वृध्-बृध्-वृधत्-बृहत् इति एतेभ्यः आंग्लभाषायां great, high, big, heavy, lofty, huge रूपाणि विद्यन्ते। वृध्, बृध् च धान्तरूपं वृध्, बृधौ स्तः। अस्माद् ऊर्ध्वम्, उदरम्, ऊधन् Udder, वृद्ध > old इत्यादीनि रूपाणि प्राप्यन्ते। जस्य सभावो भूत्वा वॅरॅश् अभूत्। वॅरॅश् > अवे. वॅरॅश्न उच्चता शिखरं च पदानि निष्पद्यन्ते। अस्य ईयस् इष्ठन् रूपं संस्कृत-

भाषायां 'वर्सीयस्' (उच्चतरं) वर्षिष्ठम् अभवत्। अस्माद् वैदिकः ऋष्व (उच्चता) शब्दोऽपि निष्पद्यते। ऋज् (सीधा जाना, सरल होना) > सं. ऋजु, अवे. अॅरॅजु, अर्ज्, अर्श्। संस्कृतभाषायां ऋज्शब्दाद् राज् > राजि (पङ्क्ति), अरालपदे जायेते। ऋज्शब्दस्य रज् भूत्वा स-र-ल, वि-र-ल पदं निष्पद्यते। अस्मात् 'रज्जु, रस्सी' पदमपि निष्पद्यते। रज्शब्दस्य रश् भूत्वा संस्कृतभाषायां रश्मि, रशना, रसना, रास्ना पदान्यपि भवन्ति। इदं धात्वन्त्यस्य 'स'भावोऽवेस्तीयप्रकृतिरस्ति।

संस्कृतभाषायां √श्चद् (अच्छा लगना, प्रसन्न होना) अस्ति। श्चद्-धातोः हरिश्चन्द्र, सुश्चन्द्र तथा पुरुश्चन्द्र शब्दा जायन्ते। चद् इत्यस्माद् चन्द्र, चन्दन > सन्दल आदीनि पदानि लभ्यन्ते। चद् इत्यस्य छद् भूत्वा स्वच्छन्द, छन्दोनुरोध, छन्दस् पदानि निष्पन्नानि। एतस्य सद् भूत्वा प्रसन्न, प्रसाद, प्रसीद आदीनि पदानि उपलभ्यन्ते। अवेस्ताभाषायाम् अ-सात 'अप्रसन्न' तथा नि-सात 'प्रसन्न' पदे उपलभ्येते। अत्र केचन दृष्टान्ता उल्लिख्यन्ते—

वृत्— वर्तः World, land वर्षः 'देश' आर्यावर्त Ireland किन्तु भारतवर्षः।

श्रथ्— 'ढीला होना'— शिथिल, स्रस्-स्रस्त।

राज्— 'दीप्तिमाने, सुशोभिते' राजन् राष्ट्र-राष्ट्रिय।

अज्— 'गतिशील', अष्ट्रा 'अङ्कुश, कशा' goad.

यज्— 'यजने', याग, यजन, इज्या, इष्टि, इष्टका, इष्टापूर्त।

सृज्— 'रचना करना' सृष्टि, स्रष्टर्, सृष्ट।

गम्— गच्छ्, अ-जस्र, जसुरिः।

वह्— 'वहने' ढोना—उष्ट्र=अवे. उश्त्र।

मथ्— मन्थने > मस्तु।

ऋज्— अलङ्करणे-रशना, रास्ना= 'मेखला'।

मृज्— शुद्धे—मृष्ट, मर्ष्टर्।

मन्— 'विचारणे'-मस्तक, मस्तिष्क।

तन्— 'प्रथने'-वितस्ता, वितस्ति।

वच्— कथने-वोच्; अवे. अवोच्, अओच्— अओश् तु. अवे. अओश्त्र-ओष्ठ।

मित्— मिलने, मिश्र mix, mixture, मिष्, म्लिष्-म्लेच्छ्, मिष्टान्नम्।

वृच्— रुच् 'चमकना' अरुष=अवे. अउरुश 'श्वेत, रक्त' अरुष्ण-अरुण=अउरुन।

क्रुध्— क्रुश्-रुध्-रुष्-रुष्ट, रोषः, आक्रोशः।

शत्— हिंसे, शस्त्र, नृशंस, अधशंस।

कृन्त्— कष् 'कर्तने' कषितृ, कष्ट, कूलर्कषा, निकष, कसु-र-किशोर, वै. कषूँ 'गड्ढा'।

श्चद्— हरिश्चन्द्र, सुश्चन्द्र, पुरुश्चन्द्र, चद्-चन्द्र, चन्दन। छद्-छन्दस्, स्वच्छन्द 'स्वेच्छानुरूप'।

**द्विधातुज-रूप=अवेस्तीयप्रवृत्तिः**

अवेस्ताभाषायां द्विधातुसंयोगेन एकार्थकथनस्य प्रवृत्तिः प्रचलिता अस्ति। अस्याः कानिचन उदाहरणानि प्रस्तूयन्ते—

मज़्दा— 'मेधिर' मजन्त् दा=धारणे पोषणे वा, यद्वा मन-दा, मन्-धा-मनस्-धा 'ध्याने'। पइरियओज़्दथन्त—यओश्- सं. योस् hail, यओश् दा=योस्-धा 'स्वच्छ करना' to purify, set in order, cleanse. पइरि-यओश्-दा 'अग्नि के चारों ओर सफाई करना'।

यओज़्याथ्य—स-न-यओज़्दातर्— functional cleaner.

खुज़्दा—क्रुध्-धा 'कठोर बनाना'।

पज़्दा— पद्-धा 'पृथ्वी पर पादन्यास करना'।

वोइज़्दा— विज् 'भयचलनयोः'-धा 'मारना, शस्त्र उठाना।

**संस्कृतभाषायां द्विधातुजपदानि**

श्रत्धा, श्रत्दधाति, दधानः, तु.अवे.—ज़्रज़्दा। सं.मृष् > मज्ज्-धा-मज्द् > मण्ड्-ऊक। वृ > वृष-धा > व्रीडा।

मृष् > मॅरॅज्= mercy-धा > मृळीक, सुमृळीक; तु. अवे. मॅरॅज़्दिक।

अद्धा— अक्ष् 'to see'-धा, अवे.-अज़्दा 'वस्तुतः, स्पष्टरूपेण' clearly, clear.

क्रुष्=खओश् -धा- 'चिल्लाना, कठोर होना'-क्रुध्। वृष्-धा > ब्रूड > 'डूबना, जल में छिपना'।

म्रेळित-स्मृ=अवे.-मर् अंग्रेजी remember. √मृष् (विपर्यय) √धा > मृष्ध् > मृड् > मेड्।

**तालव्यध्वनीनां कण्ठ्यभावः**

तालव्यध्वनीनां कण्ठ्यभाव एका सामान्यसंस्कृतभाषीया अवेस्तीयप्रवृत्तिश्चास्ति। वच्पदात् वाक्, उक्त, उक्त्वा, उक्थ इत्यादीन्यस्योदाहरणानि सन्ति।

(क) √श्वित्—white > कुष्ठ 'रोगविशेष' श्वित्र > leprosy. > कुन्द-'श्वित् > कुन्द' 'श्वेतपुष्पविशेष' > कपिश, कपिल।

(ख) √स्रु 'बहना' > कुल्या 'जलप्रवाह'।

(ग) √श्रु > शृ 'सुनना hear' > कर्ण तु. hear > ear > कीर्ति 'यशस्' यद्वा स्वृ शब्दे। स्वृ- swallow > कवल ग्रास; कल्पवर्त, अपवाद-सूरि 'स्तोता'।

(घ) स्वृ 'शब्दे' spell > call-कारु, कीरि- 'स्तोता', क्वन् > क्वण् > कण्ठ 'गला, उच्चारण स्थान', कीर-'शब्द करने वाला पक्षीविशेष'।

(ङ) स्वन् Sound 'शब्द करना' किङ्किणी, कङ्कण, नूपुर; कुक्कुर √क्वण > क्वणिति; कुक्कुट? कृकवाकु? केका, काकलि, कोकिल, कण्ठ।

(च) स्वन्- 'shine' > कनक, कन् > कान्ति।

(छ) √दृघ् > दृषद् > शिला > शैल hill > कैलाश।

**घान्तास्तथा धान्ता धातवः, संस्कृतमूर्धन्यता**—घकारान्तधातुना सह क्त इत्यस्य योगे क्तप्रत्ययस्य घभावो भवति। वस्तुतोऽयं घभावो धातोर्घान्तरूपत्वाद् अस्ति। यथा—

वघ्-वध्-द्रष्टव्य वधू, अवे. वधूइर्यु 'वधूकामी'। उपबध्-'विवाह करना' उद्वध्-'विना विवाह के उठा ले जाना'।

वृघ्-वृध् द्र. बृहत्, वृद्ध।

गुघ् (ह्)-गुध्-गूध्र, गूढ़, अवे. गुध्र deep गूज़।

लिघ् (ह्)- लिध्-लीढ।

दृघ्-दृध्-'दृढ़ होना', दृह्, दृध्- दृढ। ऋघ्-ऋध् 'मूल्यवान् होना' महार्घ, महार्घ्य ऋद्ध, आर्घ्य > आढ्य।

दिघ्-दिध्-'ऊपर उठना' विदेघ 'चहारदीवारीरहित' अवे. पइरिदएज 'चहारदीवारीयुक्त' paradise विदएज़, उज़्दएज़, आ. फारसी दिदावाल > दीवाल।

गाघ्-गाधृ— 'विलोडने, डुबकी लगाना', अगाध, गाधि, गाढ।

अवेस्तायां कमॅरॅध 'देवानां शिरः, पदमेकमस्ति। इदं कमर-धन् इत्यस्य सङ्क्षिप्तं रूपम्। कमरशब्दस्य अर्थः 'नम्रीभूतार्थः, mould, beround, वर्तुलकारिता'। कमर्शब्दात् संस्कृत-कमर्थः, ततः कूर्मः कमठश्च शब्दौ भवतः। अस्मात् कमर्-दलु > कमण्डलु 'गोलाकारपात्रम्'। कमर्धन्शब्दात् संस्कृत-भाषायां मूर्धन्शब्दो निष्पन्नो भवति। पुनः मूर्धन् मुण्डपदरूपेण परिवर्तते। अस्माद् मण्डप-मण्डलशब्दाविमौ निष्पद्येते। पुनः मकारस्य लोपे जाते अण्ड इत्यभवत्। कमर कपरो भूत्वा कपर्द, कपालः, कर्परः, खर्परः (खोपड़ी) च निष्पद्यन्ते। अस्माद् इमानि पदानि निष्पद्यन्ते तानीमानि यथा—कम्र-कुमार, कोमल, कपोल, कबरीक, पेलव, शिप्र, गोल, गुल्ल, गण्ड, मृदु, सुमेरु केन्द्र, मध्य, कन्दुक, अन्तर्। 'क' पृथग्भूत्वाऽपि कबन्ध,कन्धरा शब्दः शिरोवाचकोऽस्ति।

अवेस्ताभाषायां कॅरॅ 'करना' तथा थ्वरॅश् 'रचना' धातू आसुरीयौ स्तः। कॅरॅन्त् 'कर्तने', छाँटना, तरासना, बनाना दैवीयधातवः सन्ति। एतदतिरिक्तोऽमोन्य एको धातुः वॅरॅज़् अस्ति। एतस्यार्थः 'श्रम करना खेती करना'। आँग्ल Work, labour इति शब्दौ वॅरॅज़्शब्दस्यैव समरूपौ स्तः। वॅरॅज़्तः वरज़्द् पुनः आंग्ल delegent पदं च भवति। वॅरॅज्-धातुर्वेदे नोपलभ्यते। अस्य समग्ररूपाणि एवं सन्ति—

धातुरूप— वॅरॅज़्यामहि, वॅरॅज़िमा, वॅरॅशइते, वॅरॅज़्योत्, वॅरॅज़्याताम्, वॅरॅशन्ति, वॅरॅज़्यत्, वाक्वॅरॅजोइ, वॅरॅज़ना, वीवरशो, वरॅशा। वॅरॅज़्-धा, वॅरॅज़्दा-वॅरॅज़्येइद्याइ 'करने के लिए'।

वॅरॅज़्धातुज पद— वॅरॅज़् 'कार्य करने वाला'; हइथ्यावॅरॅज़् 'खुले तौर पर कार्य करने वाला'; दुज़्वश्तावरज़् 'दुष्कर्मा'।

गवास्त्र्या वॅरॅज्— 'पशुपालनकर्मकृत्', गवास्त्र्या वरॅश्तॅम, वर्श्त 'किया गया', हवर्श्त 'सुष्ठुकृत्', दुज़्वर्श्त 'दुष्कृत', मिथोवर्श्त 'मिथ्याकृत:'; वर्श्तवत्-'कर्मनिष्ठ', अन्वर्श्तम-'अनुकूलकर्मा', वॅरॅज़िश्न, वॅरॅजेम्न-'वॅरॅश्यम्न', 'कुर्वाण:', वर्श्त्व 'करणीय', वॅरॅज़न्त 'कुर्वन्, कर्मकर्ता', वॅरॅज़्यङ्ह-वॅरॅज़्यङ्हन्वन्त् 'कर्मयुक्त', वर्शित, अन्वर्शित, ह्वर्शित 'कर्म'; वॅरॅजन 'अभ्यास', वास्त्र 'कृषिकर्म, कृषि, कृषिक्षेत्र, चरागाह'- pasture, वास्त्रवन्त्-'कृषिकर्मयुक्त', वास्त्रफ्षुयन्त्-'कृषिवर्धक', वावरज़ 'पुन: पुन: कर्मकृत्'। वॅरॅज़ान 'कृषकवर्ग, तृतीयवर्ण', वावॅरॅज़ोई, वॅरॅज़ेइद्याइ, वॅरॅज़्ये इद्योइ-'कर्म करने के लिये'। पह्लवी-वर्जीतर् 'कर्म करना', हूर्वश्त्-वर्ज़ीतर् 'सुकर्मा', गोस्पन्द्वर्ज़ीतर् 'पशुकर्मकृत्'। वर्ज़िश्न्-'परिश्रम; वर्ज़िश्नीह्-वर्ज़ीतरीह् 'कर्म'।

वेदे 'कषु'शब्द: प्राप्यते। अवेस्तायामस्य समरूप: कशु (क्षुद्र:) उपलब्धोऽस्ति। अस्य तुलनात्मकं रूपं कस्यह् तथा इष्ठन्रूपं 'कशिश्त' अस्ति। अस्मात् संस्कृतभाषायां कशुर-किशोरपदानां विकासो जात:। चित् इत्यस्य आंग्ल-रूपं Teach अस्ति। अवेस्तायां चएतर-शब्दस्यार्थ: Teacher भवति। चित्-शब्दाद् निर्मितं रूपं चित्रम् अवेस्तायां चिथ्र child तथा पहलवीभाषायां 'चिह्र' अभवत्। चित्-चिह् एतयो: संस्कृते प्रयुक्त: चिह्नशब्दो मिलति।

पृत् 'Fight' इत्यस्य अवेस्तायां पॅशॅन, वनत्पॅशन 'युद्धजयी' रूपाणि प्राप्तानि। पॅरॅत् पृत > पॅरॅश्-पर्श > परशु (युद्धोपकरणं) पदं निष्पद्यते। आंग्लभाषायां पृत् > Platoon पकारस्य ब भूत्वा blitz, beat, battle, battalion, brigade पदानि प्राप्यन्ते। पर्शवशब्दात् > पर्थव, पह्लव पुन: पहलवान अभवत्। हिन्दीभाषायां पहसुल, हँसिया, फरसा, फावड़ा आदय: शब्दा: पृत्-धातुनिष्पन्नात् पर्शुशब्दाद् निष्पद्यन्ते।

श्वित्-धातु: (white) श्वेतवाचकोऽस्ति। 'श्वि' इत्यस्य अवेस्तीय-भाषाप्रभावेण 'पी' भूत्वा पीत, पलित, पुण्ड्र, पाटल, पाण्डु, पाण्डर, स्फटिकादीनि पदानि उपलभ्यन्ते। एवमेव 'वस् निवासे' धातो: पस्त्यापदं निष्पद्यते। अवेस्तीयभाषाप्रभावेण श्वि > पीन, स्फीत, प्या, पिन्व तथा द्युत् इत्यस्मात् ज्योत्स्ना, ज्योतिषादीनि च पदानि निष्पन्नानि।

√ गभ् 'गम्भीर होना' > जभ्, जम्भ, जृम्भा अवेस्तीयप्रभावाद् निष्पन्नौ स्त:। अवेस्तायां जफ़्नु-'घाटी', जफ़र 'मुख' शब्दौ स्त:। सं. तोक्मन्

'कुटुम्ब'=अवेस्ता तओख़्मन्, प्रा. फारसी तउमा रूपम् अस्ति। अवेस्ता हज़ङ्र-हस्र 'हजार' शब्दस्य रूपान्तरणमस्ति। अत एव संस्कृतसहस्रशब्दस्य अर्थः 'एक हजार' अस्ति। 'स' इत्यस्य एकार्थकता 'सकृत्=एक बार' पदेनापि स्पष्टः। तैत्तिरीयसंहितायां 'इयङुवङ्'-वृत्तिः अवेस्तीयप्रवृत्तिरस्ति।

एतदनुसारं व्याकरणशब्दस्य उच्चारणं 'वियाकरण' भविष्यति। वियाकरण-शब्दाद् वैय्याकरण तथा व्याकरणशब्दाद् वैयाकरण इति रूपे निष्पन्ने भवतः। पाणिनिः 'य' इत्यस्य द्वित्वरूपं स्पष्टं नाकरोत्। सौव्वरः, नैय्यायिक इत्यादिषु अनेकानेक- पदेषु एवं द्वित्वभावोऽस्ति। अवेस्तायां स,ह,र-इत्येषां पूर्वं 'ङ्' आगमो भवति। माध्यन्दिनसंहितायामपि एतत्प्रवृत्तिर्विद्यमानाऽस्ति। √शास्-शिष् 'शासन करना, आदेश देना' इत्यस्मात् शिष्य 'आदेश देने योग्य' पदं निष्पन्नम्। इत्यस्मात् शास्य > 'छात्र' शिष् > शिक्ष् > शिक्षा, शिक्षकत्वेन परिणतानि जायन्ते। एवमेव दाश्, दिश् > दीक्ष् > दीक्षा पदानि निर्मितानि। स्वद् > क्षुत्, क्षुधा पदे जायेते। स्वद् > स्वादु पदमपि अवेस्तीयप्रवृत्तिवशादेव जातमस्ति।

रामक-रामक्शब्दाद् ग्रामः, कॅरॅप्-कृप्शब्दात् कलेवर, √वॅरॅप् > वर्पस् > वपुष्; अओच् = वच, वोच् > अवेस्ता अओश्त्र सं. ओष्ठ। षिवु तन्तुसन्ताने = सिलना, Sew शब्दात् 'सेतु' पुनः अवेस्तीयप्रभाववशात् > 'हेतु' 'सम्बन्धकारक' पदं जायेत। अवेस्तीय अज़ि अस्पोगर, नॅरॅगरतः > अजगरशब्दो निष्पन्नः। पयस्स्थानशब्दात् फ़्श्तान, फ़्श्न (सीना) सं. स्तनपदं जायते। अवेस्ता पॅरॅना = सं. पृणा, पार्णि > पाणिपदं प्राप्यते। अवेस्ता अएव = सं. एव इत्यस्य रूपान्तरणमस्ति। अवेस्तायां 'एव' एकार्थकोऽस्ति। संस्कृतभाषायाम् 'एव' कैवल्यसूचकं, बलसूचकं वाऽस्ति। अएव > अएवक = संस्कृत एवक > एवक् पुनः विपर्ययेण केवलशब्दः सञ्जातः। अवेस्ता क्षथ्रीपदात् स्त्रीपदं निष्पद्यते। अवेस्ता हहुहरनशब्दस्य संस्कृतलघुरूपं 'हनु'शब्दो भवति।

एवं संस्कृतभाषाया व्याकरणसम्बन्धिविश्लेषणार्थमवेस्ताभाषाया अध्ययनमुपयोगि प्रतीयते। एतेनानेकेषां संस्कृतशब्दानां विश्लेषणे अर्थनिर्धारणे च साहाय्यं लभ्यते।

●

# तान्त्रिकी सुषमा

व्यूढं कर्मविपाकतो जगदिदं कष्टात्मिकाः साधनाः
स्वल्पं जीवनमस्त्यतः कथमहो जीवो गतिं प्राप्स्यति।
हे मातस्तममुं नयान्तिकमिति श्रुत्वा गुरूणां गिरो
दुर्गाशङ्करयोश्चकास्ति सुषमाऽसौ तान्त्रिकी शाश्वती।।

# वर्णोदयविमर्शः

**डॉ. परमहंसमिश्रः 'हंसः'**
ए ३६, बादशाहबाग
वाराणसी

❀ ❀ ❀

वर्णोदयो द्विविधः— अयत्नजो यत्नजश्च। अयत्नजवर्णोदये प्राणचारस्य प्राधान्यम्। पृथक् पृथग् वर्णानां पृथक् पृथक् प्राणचारः। आन्तरे बाह्ये च प्राणचारे या स्पन्दमाना गतिशीलता तस्यां चषकादिगणनया वर्णोदयविवेचना कर्त्तुं शक्यते। यत्नजे वर्णोदये एकानुसन्धिबलात् क्रमशो वर्णानां पदानां मन्त्राणां चानुसन्धानं भवति। सर्वप्रथमं नादानुसन्धानं भवति। एकत्रोक्तम्—

'एको नादात्मको वर्णः सर्ववर्णाविभागवान्।
सोऽनस्तमितरूपत्वाद् अनाहत इहोदितः'।।[1]

तत्र पुनः समुदीरितं वर्तते, यत्—

'नास्योच्चारयिता कश्चित् प्रतिहन्ता न विद्यते।
स्वयमुच्चरते देवि! प्राणिनामुरसि स्थितः'।।[2]

सर्ववर्णसामान्यात्मा सततमुच्चरद्रूपत्वादनाहतशब्दाभिधेयो नादात्मको वर्णः शाश्वतमुदयमानोऽनस्तमितरूपश्च उल्लसति। नादात्मकेऽस्मिन् वर्णोदये परा साक्षाद् भगवती संविदेव सुप्रतिष्ठिता भवति।

सर्वेषां वर्णानां, पदानां, मन्त्राणाञ्चोदयः प्राणचारे सञ्जायते। उक्तं तत्रैव श्रीतन्त्रालोके—

'प्राणचारेऽत्र यो वर्णपदमन्त्रोदयः स्थितः।
यत्नजोऽयत्नजः सूक्ष्मः परः स्थूलः स कथ्यते'।।[3]

संविद्देव्या राव एव वर्णः। प्राक् संवित् प्राणे परिणतेति न्यायानुसारं प्राणोदये प्राणचारः प्रारभ्यते। प्राणचारे प्रत्येकं वर्णस्त्र्यङ्गुलपरिमाणां दिशं

१. श्रीत. ६।२१७। २. तत्रैव, ३, पृ. ३७६। ३. तत्रैव, ६।२१६।

प्राप्नोति, अपानवाहे च सार्धद्व्यङ्गुला दिक् समुपलभ्यते। एवमयत्नजे यत्नजे च व्यवहारे वर्णोदयक्रमः आकलयितुं शक्यते।

अनेनेदं सिद्धं यद् वर्णा उच्चारे स्फुरन्ति। उच्चारश्च आणवसमावेशस्य प्रथमो बिन्दुः। लिखितमस्त्याणवसमावेशप्रकरणे यत्—

'उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः।
यो भवेत्स समावेशः सम्यगाणव उच्यते'।।[१]

उच्चारेणैव करणेषु कर्त्तृत्वं ध्यानसाधनासंवर्धनं वर्णपदमन्त्रतादात्म्यञ्च सिध्यति। स्थानप्रकल्पने च भैरवसद्भावभव्यतानुभूयते। संविदः प्राणे परिणतौ च संविद्वपुषः परमेश्वरस्यान्तरिकी उच्चिचारयिषैव हेतुः। सिद्धसाधकोऽप्युच्चि-चारयिषोदयात् सर्वमात्मसात्करोति, परस्मिन् शिवे च परां विश्रान्तिं प्राप्नोति, तत्रत्यं शाश्वतं स्पन्दं च साक्षात्करोति, ज्ञात्वा साक्षी च सञ्जायते। श्रीतन्त्रालोके समुदितं यत्,

'कदलीसम्पुटाकारं सबाह्याभ्यन्तरान्तरम्।
ईक्षते हृदयान्तःस्थं तत्पुष्पमिव तत्त्ववित्'।।[२]

तत्त्ववित् पुरुषो हृदय एव विश्राम्यति। तत्रैव हृदयान्तःस्थं सर्वं पश्यति। 'हृदि ध्येयो मनीषिणा' इति न्यायाद् ध्यानमग्नः परतत्त्वं जानाति, ईक्षते परान्तरालेऽनुप्रविश्य जीवनं धन्यं विदधाति।

तत्त्ववित् परिचिनोति प्रकाशं, विहरति च विमर्शे। अनुत्तरे प्रकाशप्रकर्षे प्रविश्य तदेव भवति। प्रकाशवपुरेव राराज्यते। विमष्टा च सम्भूय भावितात्मा प्रकाशविमर्शोभयसङ्घट्टस्वातन्त्र्यसमुल्लासे शैवीं परां प्रतिभां विभाव्य तस्या विभयैव विभाति।

साधनाप्रक्रियायां प्रतिष्ठितानां प्रातिभपारिवृढ्यं वहतां प्रज्ञापुरुषाणां सान्निध्ये प्रकाशविमर्शयो रहस्योद्घाटनं भवति। इदं तत्रानुभूयते यत् चिन्मयस्व-भावस्यास्य प्रकाशस्य समुल्लासो हृद्येव भवति। सर्वतत्त्वान्तर्भूतं प्रकाशरूपं परं तत्त्वं साधकः स्वकीये हृदयबोध एवात्मसात्करोति। ध्याने एव प्रमातृ-प्रमाण-प्रमेय-रूपं विश्वं पश्यति। स्वकीये बोधमये चिदाकाशे स्वात्मकलिकया स्वात्मफलके सर्वं मर्शं मर्शं शिवत्वमाप्नोति।

एषा ध्यानप्रक्रिया। ध्यानवातसमिद्धाकारो भैरवाग्निः समेधते। अयमेव भैरवाग्निः प्रमाता। प्रमातुः स्वातन्त्र्येण बाह्यरूपविश्वस्फारं समुन्मिषति। बाह्ये

१. श्रीत. १।१७०। २. तत्रैव, ५।२१।

सोमसुधासंवलिता सृष्टिश्च सहैव स्फुरति। 'अग्नीषोमात्मकं जगत्' इति श्रुत्युक्तन्यायात् प्राणार्करूपेण सूर्येण अपानतत्त्ववपुषा सोमेन चेयं सृष्टिः समन्विता सती सूर्यचन्द्रसङ्घट्टघटितामृताभिषिक्ता भवति। प्राणापानोदयानन्तरं समानोदानव्यानवह्नीनां समुदये मातृमेयकलना जायते। अस्यां कलनायां शिवात्प्रभृति व्यानान्तं यावद् विस्फारे प्राणापानसम्प्रीणनं निर्वर्ण्य पौनःपुन्येनानुसन्धित्सया विकाससङ्कोचमयीं स्पन्दप्रक्रियामनुसन्दधाति। उक्तमेकत्र यत्—

प्राणोदयो व्याननपश्चिमास्तल्लीनश्च जाग्रत्प्रभृतिप्रपञ्चः।
अभ्यासनिष्ठोऽत्र तु सृष्टिसंहृद् विमर्शधामन्यचिरेण रोहेत्।।[१]

विमर्शनिष्ठस्येदं वैशिष्ट्यम्। प्रकाशस्तु स्वयं परमशिव एव। विमर्शस्तस्य स्वातन्त्र्यम्। अवभासस्य स्वभाव एव विमर्शः, स एव शक्तिः, सैव स्वातन्त्र्यविमर्शादिपदाभिधेया शाश्वतं शैवीं सृष्टिमात्मसात् करोति। नेयं कदापि शिवातिरेकिणी, अनयैव स्वातन्त्र्याख्यया शक्त्या परप्रमात्रैक्यं परिलक्ष्यते। शिवशक्तिनिष्ठं शिवस्वभावविश्रान्तं च विश्वं तत्त्वविज्जानाति। उक्तमेकत्र—

'आमर्शश्चायं न साङ्केतिकः; अपि तु चित्स्वभावतामात्रनान्तरीयकः परनादगर्भ उक्तः। स च यावान् विश्वव्यवस्थापकः परमेश्वरस्य शक्तिकलाप स्तावन्तमामृशति। मुख्यास्तावत्परमेश्वरस्य शक्तयः-अनुत्तरः, इच्छा, उन्मेष इति'।[२] पश्चात् पुनस्तत्रैव समुल्लिखितं यत्—

'तदेव परामर्शत्रयम्— अ,इ,उ इति। एतस्मादेव त्रितयात् सर्वशक्ति-प्रपञ्चश्चर्च्यते। अनुत्तर एव विश्रान्तिरानन्दः। इच्छायामेव विश्रान्तिः ईशनम्। उन्मेष एव विश्रान्तिः ऊर्मिः, यः क्रियाशक्तेरारम्भः। तदेव परामर्शत्रयम्। आ,ई,ऊ इति'।[३]

अत्र प्राच्यं परामर्शत्रयं प्रकाशभागसारत्वात् सूर्यात्मकमस्ति। चरमं च परामर्शत्रयं विश्रान्तिस्वभावाह्लादशक्तिप्राधान्यात् सोमात्मकम्। स्वातन्त्र्यविषये समासूत्रितं वर्त्तते यत्—

'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः'।।[४]

समस्तविश्वव्यवस्थापिका भगवती चितिरेव विश्वस्य निष्पत्तिरूपे प्रकाशने, परप्रमातृविश्रान्त्यात्मनि च संहारे स्वतन्त्रा, इयमेव अनुत्तरविमर्शमयी यदा सिसृक्षते तदैव जगदुन्मिषति, निवृत्तप्रसरायामेतस्यां जगन्निमिषति च। अस्या एव शक्तिकलापे अनुत्तरता, सिसृक्षता, उन्मिषितता च सहैव प्रस्फुरन्ति।

१. श्रीतन्त्रसारः, आ. ५; २. तदेव, पृ. ५७।
३. तदेव, पृ. ५८; १. प्रत्यभिज्ञाहृदयम्, सू. १।

अकार एवानुत्तरता समुल्लसति। 'अ'कारः परमशिवः। नास्त्युत्तरं यस्माद् एतादृशोऽनुत्तरतत्त्वरूप— 'अ'कार एवानुत्तरतत्त्वस्य बीजम्। 'इ'कार एव सिसृक्षाबीजम्। 'उ'कार एव उन्मेषबीजरूपम्। इत्थं प्राच्यपरामर्शत्रयं विश्वबीजतां मुख्यतया वहति।

इदं सर्वं विमर्शमाहात्म्यम्। प्रकाशोऽपि नास्ति कदापि निर्विमर्शः। प्रकाशस्य अयमेव विशेषो यत् सर्वमामृशति। सर्वामर्शने प्रागुक्तस्य परामर्शषट्कस्यैव हेतुत्वं परम्परया प्रकाशते। तत्र मूलभूता हेतुः भगवती भट्टारिका चितिरेव। इयमेव वाग्देवी परा प्रतिभारूपेणापि चाधिगम्यते। उक्तमेकत्र—

अनन्यापेक्षिता यस्य विश्वात्मत्वं प्रति प्रभोः।
तां परां प्रतिभां देवीं सङ्गिरन्ते ह्यनुत्तराम्।।[१]

प्रभोः परमेश्वरस्य शिवस्य विश्वात्मत्वं प्रति येयमनन्यापेक्षिता, तामनुत्तरां शक्तिं मनीषिणः परां प्रतिभामाहुः। परामर्शरूपिणीयं विश्वमामृशति। समस्तं वाक्तत्त्वं चास्या एव पराप्रतिभाया समुल्लासरूपम्, अतो वक्तुं शक्यते यदस्या एव विमर्शरूपे बोधे विश्वमाभासते। उक्तमेकत्र—

'बोधमिश्रमिदं बोधाद् भेदेनाशक्यभासनम्।
परतत्त्वादिबोधे किं प्रतिबिम्बं न भण्यते'।।[२]

इत्युक्तिमेवाश्रित्य प्राज्ञा विज्ञापयन्ति यद् ज्ञानादृते नार्थसत्ता प्रकाशते। तथैव विश्वावभासेऽपि ज्ञानसत्तारूपिण्याः प्रतिभाया एव मुख्यं हेतुत्वमिति निश्चीयते। जयरथेन समुद्धृतं श्रीतन्त्रालोके यत्—

'अन्तर्विभाति सकलं जगदात्मनीह
यद्यद्विचित्ररचना मुकुरान्तराले।
बोधः पुनर्निजविमर्शनसारवृत्त्या
विश्वं परामृशति नो मुकुरस्तथा तु'।।[३]

बोधोऽपि परस्य परमेश्वरस्य परानुत्तराप्रतिभायाः चमत्कारः। विश्वपरामर्शनमेव कौलिक्याः शक्तेः कुलप्रथनम्। उक्तं यत्—

'अकुलस्यास्य देवस्य कुलप्रथनशालिनी।
कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः'।।[४]

१. श्रीत. ३।६६; २. तत्रैव, ३।५७।
३. श्रीत., आ. ३, पृ. ३७४; ४. तत्रैव, ३।६७।

नास्त्युत्तरं यस्मादेतादृशोऽनुत्तररूपोऽकुलात्मा परमशिव एव 'अ'कारे वाग्बीजरूपे स्वरे समुल्लसितो भवति। वेत्ति सर्वमिति बिन्दुः। अस्मिन् अणोरणीयान् परमशिव एव स्फुरति। तस्यैव आश्याने शून्यप्रतीकवर्त्तुलरूपो वृत्तसद्भावो रेखागोलकरूपः प्रकल्प्यते। द्वयोः शून्यार्धयोर्योगेन 'उ' इति चित्रं स्फुरति। तत्र त्रयो बिन्दवो दृश्यन्ते।

अत्र प्रथमे बिन्दौ रौद्री शक्तिः, द्वितीयस्मिन् वामा, तृतीये च ज्येष्ठा शक्ती राराज्यते। रौद्री-वामा-ज्येष्ठाशक्तीनां मध्यबिन्दुतोऽम्बिकाशक्तिप्रसरे शैवाधारे 'अ' इति चित्रप्रतीकस्य अनुत्तरत्वं स्पष्टतयाऽनुभूयते, चित्प्रकाशरूपा प्रतिभैवास्मिन् अनुत्तरप्रतीके अकाररूपे वर्णबीजे समुच्छलति। अकारादेव शिवात् शब्दराशिश्च प्रवर्त्तते। उक्तं यत्—

'स एक एव चिदात्मैव विश्वामर्शनसारकः।
शक्तिस्तद्वानतो माता शब्दराशिः प्रवर्त्तते'।।[1]

अत्र माता मातृकादेवी। शब्दराशिश्च मालिनी। पञ्चाशद्वर्णात्मिकाया मातृकाया बीजमन्त्रः 'ह्रीं अक्ष ह्रीं' रहस्यरूपः स्फुरति। शालिन्याश्च 'ह्रीं नफ ह्रीं' इति बीजमन्त्रे परामर्शरहस्यरूपे सर्ववर्णात्मिका वाग्देवी स्फुरति। द्वयोरनयो-र्बीजमन्त्रयोरन्तराले अनुत्तररूपस्याकुलात्मनः परमेश्वरस्य शक्तिशक्तिमद्भेदसमासूत्रणं साक्षात्क्रियते। शक्तिशक्तिमतोरेवान्तःपरामर्शादनुत्तरस्य 'अ'कारस्य इच्छाबीजस्य 'इ'कारस्य शैवोन्मेषबीजस्य 'उ'कारस्य च विभागतया बहिर्विस्फुरणं सञ्जायते। इत्येतत्त्रिकमेव परामर्शत्रयमिति प्रागुक्तम्। एतैरेवानन्देशनोर्मिबीजानाम् 'आ,ई,ऊ' इति परामर्शत्रयमुदेति। इत्थं परामर्शषट्कं मूलविश्ववाङ्मयबीजरूपं च परामृश्यते। उक्तं श्रीतन्त्रसारे यत्,

'यदा च इच्छायामीशने च कर्म अनुप्रविशति तदिष्यमाण-मीश्यमाणमित्युच्यते। तदाऽस्य द्वौ भेदौ— प्रकाशमात्रेण 'र'श्रुतिः, विश्रान्त्या च 'ल'श्रुतिः'[2]।

'र'कारः प्रकाशस्वभावः, 'ल'कारश्च स्तम्भस्वभावः। 'इ'कारे इच्छाबीजे क्षिप्रत्वाद् 'र'कारश्रुतौ 'ऋ'वर्णस्य ईशनात्मके दीर्घश्रुतौ च 'ॠ'वर्णबीजस्य समुदयो भवति। इत्थमेव इच्छाबीजरूपे 'इ'कार एव स्थिरत्वप्राधान्यात् 'ल'कारश्रुतौ 'ऌ' इति वर्णरूपस्य ईशनात्मके दीर्घश्रुतौ च 'ॡ' इति वर्णस्य च समुदयो भवति। एवमेते 'ऋ-ऌ-ॠ-ॡ' वर्णचतुष्टयस्य परामर्शो जायते। चत्वारोऽपि इमे वर्णा इच्छाबीजस्य 'इ'कारस्यैव वर्णश्रुतौ समुदिता भवन्ति। 'इ'कारादेव समुदयाद् रलयोरभेदश्चोच्यते। तदेतद्वर्णचतुष्टयं नपुंसकमिति षष्ठरूपमिति तन्त्रे मन्यन्ते।

---

१. तत्रैव, ३३।२०; २. तन्त्रसारः, आ. ३, पृ. ६०।

इत्थं स्वरदशकस्योदयः परामृश्यते। ऋकारस्यैव अनुत्तरसंयोगे 'र' इति अन्तःस्थवर्णस्य तथैव ऌकाराद् अनुत्तरसंयोगे 'ल' इति अन्तःस्थस्य समुदयो व्याकरणशास्त्रानुसारञ्च जायते। 'इको यणचि'[1] इति सूत्रानुसारं ऋ + अ = रकारस्य, तथैव ऌ + अ = लकारस्य च अन्तःस्थस्य समुदयो विचारणीयः।

अस्मिन्नेव सन्दर्भे परामर्शत्रयरूपाः 'अ,ई,उ' परामर्शषट्करूपाः 'अ,आ,इ, ई,उ,ऊ' षड्वर्णाः परस्परं यदा सङ्घट्टरूपेण यामलत्वं परित्यज्य तादात्म्यं स्वीकुर्वन्ति तदा विचित्रा एव परामर्शाः परामृश्यन्ते। यथेच्छा ईशित्री च शक्ती यदाऽनुत्तरेणानन्देन चैक्यसद्भावं भावयतस्तदाऽनुत्तरानन्देच्छेशनगुणयोगे योनि-बीजस्य 'ए'कारस्य त्रिकोणस्य समुद्भूतिः, वृद्धिसद्भावे च 'ऐ'कारस्य द्वादशात्मनः स्वरस्योदयो जायते।

इत्थमनुत्तरानन्दोन्मेषोर्मियोगे च गुणस्य सद्भावे 'ओ'कारस्य वृद्धिसद्भावे चौकाररूपस्य चतुर्दशधाम्नः परमेश्वरस्य परिस्फुरणं भवति। अनुस्वारविसर्गयोगे च 'अं' 'अः' इति पञ्चदशषोडशयोश्च वर्णयोः परामर्शः क्रियते। इम एव षोडशस्वराः सर्वपरामर्शाणां वर्णबीजरूपाः सारस्वतप्रसाराधारा विभाव्यन्ते।

एतैरेव स्वरवर्णैः समुदितं व्यञ्जनात्मकं योनिरूपम्। उक्तञ्च तन्त्रसारे,

'अनुत्तरात् 'कवर्गः' श्रद्धाया इच्छायाश्च 'चवर्गः' सकर्मिकाया इच्छाया द्वौ वर्गौ— टवर्गस्तवर्गश्च। उन्मेषात् पवर्गः। शक्तिपञ्चयोगात् पञ्चकत्वम्। इच्छाया एव त्रिविधाया य-र-लाः। उन्मेषाद् वकारः, इच्छाया एव त्रिविधायाः श-ष-साः। विसर्गाद् हकारः। योनिसंयोगश्च क्षकारः'।[2]

एवं पञ्चाशदात्मिकाया मातृकायाः परामर्शरूपेषु वर्णेषु षोडशस्वराः, ककाराद् मवर्णपर्यन्तं ३३ स्पर्शवर्णाः, चत्वारोऽन्तस्थाः, चत्वारश्चोष्माणः, सर्वचक्रेश्वरश्च क्षकारः। एवं सर्वेषां वर्णानां पृथक् पृथक् परामर्शा भवन्ति। अस्मिन्नेव क्रमे एकाशीतिपदा देवी सम्भवद्भागभेददर्शनरूपे परामर्शे परामृश्यते यथा स्पर्शवर्णानामर्धमात्राप्रकल्पने ३३, ह्रस्वेषु स्वरेषु १०, दीर्घेषु ३२, प्लुतेषु ६ पदानां स्थितिक्रमे शाश्वतं परामृश्यते। रहस्यात्मके समाकलने ३२४ परामर्शाः सम्भवन्ति। इमे सर्वे परामर्शा अनुत्तरस्य 'अ'कारस्यैव एकाररूपा एव। एवञ्च पश्यन्तीमध्यमा-वैखरीणां परामर्शदशासु अनन्ताः परामर्शाः शिवशक्तिसामरस्य-स्फुलिङ्गरूपाः समुच्छलन्ति। वक्तुं शक्यते यद् वाङ्मयरूपेषु बाह्यविस्फाररूपेषु च लीलालास्यललितस्य समुल्लिलासयिषा एव समुल्लसति। ध्येयमिदं यत्,

---

१. अष्टाध्यायी, ६।१।७७; २. तन्त्रसारः, आ. ३, पृ. ६८।

१. कवर्गे धरातो वियत्पर्यन्तं पञ्चमहाभूतानि।

२. चवर्गे गन्धरूपरसस्पर्शशब्दपञ्चतन्मात्राः।

३. टवर्गे पादाद् वाक्पर्यन्तं कर्मेन्द्रियाणि।

४. तवर्गे घ्राणादारभ्य श्रोत्रपर्यन्तं ज्ञानेन्द्रियाणि।

५. पवर्गे मनोऽहङ्कृतिबुद्धिप्रकृतिपुरुषपर्यन्तमन्तःकरणादीनि सूक्ष्मतत्त्वानि समाविष्टानि सन्ति। अयं पञ्चशक्त्यात्मकः[१] समावेशचमत्कारवाङ्मये विश्वस्फारे च शाश्वतं स्फुरति।

सर्वत्र सर्वमस्तीत्यागमिकः सिद्धान्तः। एतदनुसारं पञ्चशक्त्यात्मकस्यानुत्तरस्य व्यापकतायां सर्वत्र पञ्चशक्त्यात्मकशक्तिव्याप्तिः स्वाभाविकी। चिदानन्देच्छाज्ञानक्रियारूपैव शिवस्यानुत्तररूपस्य पञ्चशक्तयः। एतासां सर्वव्यापकता विश्वविस्फारे शाश्वतिकी। एवं वक्तुं शक्यते यदनुत्तरस्फाररूपमेव सर्वं तत्त्वजातं विमृश्यते मनीषिभिरिति।

तत्र ह्रस्वस्वराः सूर्यरूपाः, दीर्घाः सोमरूपाः, प्लुताश्चाग्निरूपाः। उक्तं च,

'एषां यत्प्रथमं रूपं ह्रस्वं तत्सूर्य उच्यते।
क्षोभानन्दवशाद्दीर्घविश्रान्त्या सोम उच्यते।।
यत्तत्परं प्लुतं नाम सोमानन्दात्परं स्थितम्।
प्रकाशरूपं तत्प्राहुराग्नेयं शास्त्रकोविदाः'[२]।।

अग्निः प्रगाता सूर्यः प्रमाणं सोमश्च प्रमेयरूपं तत्त्वम्। संविद्रूपिण्या प्रमित्या सर्वं प्रमाप्यते। सूर्य एव प्रमातुः प्रातिनिध्यं वहति। अत एवोच्यते सूर्यसोमात्मकं जगत्। श्रुतौ च प्रमातुः प्राधान्ये अग्नीषोमात्मकं जगत् प्रतिपाद्यते।

वस्तुतस्तु प्रमातुर्मानमेयसङ्घट्टात्मकमेव रूपं भवति। केवलं प्रकाशमात्रे शिवबिन्दुरेव प्रमातृप्रमाणप्रमेयदशायां समुल्लसति। बिन्दोरेवाश्यानत्ववर्णानाम् एवं सर्वतत्त्वानामुदयः। अतः सिद्धान्त एवायं तन्त्रेषु यत्'अनुत्तर एव प्रकाशः स्वस्वातन्त्र्यात् स्वं रूपं गोपयित्वा शक्तिदशायामाभास्यसङ्कुचितप्रमातृरूपतामवभासयति'।

अवभास एव सर्वं वर्णोदयरूपेण प्रतिबिम्बतयोदेति। कालाध्वन्येव वर्णमन्त्रपदाध्वनः स्थितिर्भवति। तत्र स्थूलरूपाः पदाः। सूक्ष्मरूपा मन्त्राः। वर्णास्तु बीजरूपाः। वर्णेष्वपि वाङ्मयवृक्षस्य सम्भावना। निष्कर्षतो वर्णोदयविवरणमत्र प्रस्तूयते—

---

१. श्रीतन्त्रालोकः, ३।१४९-१५०; २. श्रीतन्त्रालोकः, ३।१३१-१३२।

# वर्णोदयविवरणम्

वर्णाः

प्रायत्निकाः (यत्नजाः)

सूक्ष्माः स्थूलाश्च
(स्वर-व्यञ्जनानि)

ह्रस्वाः
अ इ उ (सूर्यरूपाः)
(ऋ-ऌ)

दीर्घाः (इतरत्रविष्टाः)
आ ई ऊ (सोमरूपाः)

अ+अ, इ+इ, उ+उ

स्वारसिकाः (अयत्नजाः)

पराः सूक्ष्माः स्थूलाः
(अर्धमात्रिकाः)
(एकाशीतिपदा देवी)

सर्वे वर्णा अविभागतयाऽत्र मातृसद्भावरूपेणोल्लसन्ति। अत एवोच्यते— 'एको नादात्मको वर्ण' इति। नादात्मकोऽनाहतः। नास्य कश्चिद् उच्चारयिता। अस्मिन्नेव चराचरं जगल्लीनं तत एव स्फुरति च।

ह्रस्वाणां दीर्घाणां चेतरत्रप्रवेशे

| | | अनुत्तरप्रवेशः |
|---|---|---|
| अ+इ=ए | अ+उ=ओ | अ+ए=ऐ |
| अ+ई=ए | आ+उ=ओ | आ+ए=ऐ |
| आ+इ=ए | अ+ऊ=ओ | अ+ओ=औ |
| आ+ई=ए | आ+ऊ=ओ | आ+ओ=औ |

अनुस्वार-विसर्गयोगे च—
अ+अनुस्वारः–अं। एवं सर्वे वर्णाः सानुस्वाराः।
अ+विसर्गः–अः। एवं सर्वे वर्णाः सविसर्गाः।
मूलानामन्येषां वर्णानां ह्रस्वात्समुद्भवे—

'अ'कारात्—क ख ग घ ङ विसर्गश्च
'इ'कारात्—च छ ज झ ञ य शाः
'ऋ'कारात्—ट ठ ड ढ ण र षाः
'ऌ'कारात्—त थ द ध न ल साः
'उ'कारात्—प फ ब भ म उपाध्मानीयाश्च

व्याकरणशास्त्रे माहेश्वरसूत्रस्थिता अल्पप्राणादिक्रमेण मुखाङ्गैस्समुच्चरिता भवन्ति।

सर्ववर्णोदयः परोदये प्रस्फुटित इति शम्।

# सिद्धगुरुः श्रीशम्भुनाथः

**डॉ. बलजिन्नाथपण्डितः**
शैवदर्शनविशेषज्ञः
५१, आदर्शनगरम्, वनतालाब,
जम्मू

❀ ❀ ❀

शैवाचार्येषु सर्वोत्कृष्टाः शास्त्रतत्त्वज्ञाः काश्मीरशैवदर्शनविषये विविध-प्रकारकग्रन्थनिर्मातारोऽभूवन् भट्टकल्लट-सोमानन्दोत्पलदेवाभिनवगुप्तप्रभृतयः। एतेषां ग्रन्थेषु दर्शनविद्यायास्तथाविधानां रहस्यभूतानां दर्शनतत्त्वानां साधना-प्रक्रियाणां च प्रतिपादकाः सिद्धान्ताः प्रक्रियाश्च सामान्यतो विदुषामप्यगम्याः, केवलं शिवानुग्रहशक्तिपातपवित्रितानामेव साधकोत्तमानां सिद्धजनानां चाभ्यासविषयता-मुपगच्छन्ति, न साधारणविदुषाम्।

कलिकाले सिद्धजनानां दुर्लभत्वात् ते रहस्यभूताः सिद्धान्ता भारतस्य सुसमृद्धेषु विद्यापीठेषु प्रायशस्तथा विद्याभ्यासविषयतां नोपगता यथा व्याकरण-नव्यन्याय-प्रभृतयो विषयाः। वर्तमाने पुनर्युगे केचन शोधकारिणो विद्वांसः समुत्कृष्टोपाधिलब्ध्यर्थं कस्यापि सामान्यतोऽप्रथितस्य विषयस्य ग्रन्थादेर्वा, शास्त्रतत्त्वविशेषस्य वा प्रकाशनप्रख्यापनाद्यर्थं तेषां सिद्धान्तानां तासां साधनाप्रक्रियाणां चाध्ययनाध्यापन-ग्रन्थलेखनाद्यभ्यासे प्रवृत्तिं लभन्ते, परं तेषां ग्रन्थरत्नानां रहस्यं त एव विरलविरला मनीषिणो यथार्थतयाऽवबोधने समर्था ये पारमेश्वरानुग्रहशक्तिपाततः पवित्रीकृतान्तरात्मानः।

प्राक्तनेषु कालेषु ये तेषां ग्रन्थानां सम्यग् बोद्धारोऽभूवन्, तैः कृता ग्रन्था नेदानीं सर्वाङ्गतया लभ्यन्ते। केचन पुनः सर्वथा लोपमेव गताः। उदाहरणतः— शिवसूत्राणां भट्टकल्लटकृता तत्त्वार्थचिन्तामण्याख्या व्याख्या सारभूतस्य तत्त्वस्य यथार्थतया प्रकाशनकर्त्री न क्वापि दृष्टिगोचरा भवति। केवलं तस्याः कानिचिद् वाक्यानि तत्र तत्र समुद्धृतानि लभ्यन्ते।

वस्तुतः प्राक्तनैः सिद्धैरतीव रहस्यभूताः शास्त्रप्रक्रिया नैव सम्यक् स्पष्टीकृताः, यतोऽनधिकारिणां हस्तगतास्ता दुरुपयोगेषूपयुक्ताः सत्यो जगतो हानिमेव सम्पादयेयुरिति कृत्वा।

उक्तं ह्येतद्विषयेऽभवत् स्पष्टमभिनवगुप्तस्य गुरुणा श्रीशम्भुनाथेन, यथा—'नातिरहस्यमेकत्र ख्याप्यं न चाप्यत्यन्ततो गोप्यमिति ह्यस्मद्गुरवः' इत्येवम् (तं.सा., पृ. ३१)। तथैव च तन्त्रालोकेऽप्युक्तं करणयोगमधिकृत्य—

गुरुवक्त्राच्च बोद्धव्यं करणं यद्यपि स्फुटम्।
तथाप्यागमरक्षार्थं तदग्रे वर्णयिष्यते।। (तं.आ., ५।१३०-१३१)

इत्युक्त्वाऽप्यग्रे न क्वापि स्पष्टीकृता करणयोगप्रक्रिया; अनधिकारिजनहस्तगता सतीयं दुरुपयोगग्रस्ता मा भवेदिति कृत्वा।

भट्टकल्लटमहोदयैः स्पन्दकारिकाः सरलसरलैः सुस्फुटार्थैश्च पद्यैर्निर्मिताः सत्योऽपि रहस्यमय्य एव। तासां शाब्दी रचना तु स्फुटार्था, परं तासु कारिकासु सङ्केतिता योगाभ्यासप्रक्रियाः सिद्धगुर्वनुग्रहमात्रगम्याः। इत्थं काश्मीरशैवदर्शनस्य साधनाप्रक्रिया अतीवरहस्यमय्यः सत्यो नैव पूर्वगुरुभिः सुस्पष्टतां नीताः, कदाचिदनधिकारिजनहस्तगताः सत्यो जगतो व्यवस्थां भ्रंशयेयुरिति विचार्य। एषा नीतिः सुदृढमनुसृता भट्टकल्लटादारभ्य श्रीमदुत्पलदेवं यावत् सर्वैरपि महागुरुभिः। अग्रे च यावन्मात्रं शास्त्ररहस्यं प्रकटितं सदपि नैव विशेष-दुरुपयोग-विषयतामुपगच्छेत्, तावन्मात्रं स्पष्टीकरणं कृतं केवलमभिनवगुप्तपादाचार्यमहोदयैरेव स्वकीयेषु मालिनीविजयवार्तिकादिग्रन्थेषु।

तन्त्रालोकेऽपि तैरेषैव नीतिः सुप्रयुक्ता, तथापि यावन्मात्रं स्पष्टीकरणं कृतं सत्र सिद्धजननीतिविरुद्धतामुपगच्छेत्, तावन्मात्रं तत् सम्पादितमेव तैः स्वकीयेषु मूलग्रन्थेषु टीकाग्रन्थेषु च। तत एवाभिनवगुप्तपादाचार्या एवातिप्रकाण्डाः शास्त्रजातरहस्यविदः सन्तस्तत्तद्रहस्यप्रकाशकत्वेनाद्वितीया विद्वांसः समस्तशास्त्र-जातप्रसरणशीलधिषणाविभूषिताश्चेति विश्वत्र विद्वांसः स्वीकृतवन्तः, स्वीकुर्वाणाः स्वीकरिष्यन्तश्चेति विदाङ्कुर्वन्तु सन्मनीषिणः।

परमेतादृशाः सकलभोगमोक्षोभयपक्षीयशास्त्रतत्त्वमर्मज्ञाः श्रीमदभिनवगुप्त-महोदया अपि यं गुरुं प्रति बहुधा प्रशंसापूर्वकं नमस्यन्तस्तं स्मरन्त्यनेकदा समस्तशास्त्रतत्त्वनिष्णातस्य तस्य गुरोर्नाम कतिपय एव मनीषिणो विद्वांसोऽद्यत्वे

जानन्ति। असौ सुमहनीयो गुरुवरस्तावज्जालन्धरपीठेश्वरस्तत्रभवान् श्रीशम्भुनाथो यस्त्रिककौलोभयविधरहस्यसाधनासु सुनिष्णातः साक्षाच्छिव इव हि देहस्थः।

आचार्यश्रीमदभिनवगुप्तस्यानेकेषु ग्रन्थेषु यो माहात्म्येन सर्वोत्तीर्णोऽसौ ग्रन्थस्तावत् तन्त्रालोकाख्यः। एतस्मिन् ग्रन्थे तन्त्रशास्त्रप्रतिपादिता मूलभूता आगमिकदर्शनसिद्धान्ता विविधाश्चागमशास्त्रप्रतिपादिता योगसाधनप्रक्रियास्तथा सुस्पष्टतां नीताः सन्ति, यथा परमसत्यतत्त्वजिज्ञासवः पूर्णतया सुसन्तुष्टा भवन्ति। नास्ति तावत् सर्वस्मिन्नपि जगति तन्त्रालोकसमकक्षः कोऽपि ग्रन्थः क्वापि, न चापि वर्तते, अवर्तत, वर्तिष्यते वाऽभिनवगुप्ततुल्यः सर्वतोगतिः शास्त्रकारः क्वचित्।

केऽपि विरलविरला एव विद्वांस एतज्जानन्ति यदीदृशः सर्वशास्त्रनिर्माण-व्याख्यानादिप्रवीणो, बहूनां गुरूणामपि गुरुरसावभिनवगुप्तमहोदयः स्वगुरुं श्रीशम्भुनाथं कियता बहुमानपूर्वकेण भक्तिभावेनानेकदाऽनेकधा च स्वकीयेषु ग्रन्थरत्नेषु सादरं स्मरञ्जयति। तथा हि स्वकीये आगमिकदर्शनविज्ञानसाधना-प्रक्रियोभयप्रतिपादके, सर्वस्मिन्नपि जगत्यद्वितीयेऽनुपमे च तन्त्रालोकाख्ये ग्रन्थरत्ने गहनगहनानां तान्त्रिकयोगसाधनानां गूढतराणां च दर्शनरहस्यानां तत्त्वस्य व्याख्यानं प्रकुर्वाणा आचार्यमहोदयाः स्वकीयायाः शास्त्रदृष्टेः प्रामाण्यस्य प्रतिपादनार्थं श्रीमन्तं सिद्धगुरुं श्रीशम्भुनाथमेव तथोपदेशकत्वेन सबहुसमादरं बहुधा स्मरति।

प्रथमतः श्रीतन्त्रालोके प्रतिपादयिष्यमाणस्य तत्त्वविज्ञानस्य प्रामाणिकतां स्थापयितुं ग्रन्थारम्भे सशक्तिकं श्रीशम्भुनाथमेव जयकारपूर्वकं स्मरन्त्याचार्य-श्रीमदभिनवगुप्तमहोदयाः। तद्यथा—

जयताज्जगदुद्धृतिक्षमोऽसौ भगवत्या सह शम्भुनाथ एकः।
यदुदीरितशासनांशुभिर्मे प्रकटोऽयं गहनोऽपि शास्त्रमार्गः।।
(तं.आ. १।१३)

असौ श्रीशम्भुनाथस्त्रिकसाधनानां कौलिकसाधनानां च पारङ्गतो गुरुरभवत्। तत एवात्र पद्येऽसौ भगवत्याख्यया तस्य दूत्या साकमेव नमस्कृतो गुरुणा। तथा च व्याख्यातं श्रीजयरथेन टीकायाम्— 'भगवत्याख्याऽस्य दूती' इति (तं.आ. वि.ख. १, पृ. ३२)। कौलिकसाधनाभ्यासे गुरुवत्तस्य दूत्यपि हि पूजनीया भवति, यतः कौलगुरुः परात्परं तत्त्वविज्ञानं स्वदूत्यां सङ्क्रामयति, तन्मुखेन च शिष्यधिषणायाम्— इत्येषोऽस्ति नियमः।

कौलिकी ह्युपास्तिरानन्दयोगमयी। तस्यां परिमितस्यानन्दस्य चर्वणाया मार्गेणैव रहस्यमयेन प्रकारेणापरिमिते परमानन्दमये सत्ये स्वस्वरूपे प्रवेशो विधातुं शक्यते तथा यथा योगी देहस्थोऽपि शिवभावं स्वमनुभवञ्जयति। परं रहस्यमयोऽयं योगसाधनप्रकारो नैव सुतरां स्पष्टतां नीयते। कदाचिदनधिकारिणस्तज्ज्ञात्वोभयभ्रष्टा मा भवेयुरिति।

एवंविधस्योत्कृष्टतरस्य शैवयोगाभ्यासस्य गोपनीयतामेव व्यञ्जयितुमाचार्याभिनवगुप्तमहादेयेनोक्तं क्वापि ग्रन्थान्तरप्रकरणविशेषान्ते श्रीशम्भुनाथमेव स्मरता—

इत्यागमं सकलशास्त्रमहानिधानाच्छ्रीशम्भुनाथवदनादधिगम्य सम्यक्।
शास्त्रे रहस्यरससन्ततिसुन्दरेऽस्मिन् गम्भीरवाचि रचिता विवृतिर्मयेयम्।।

इति। (तं.आ.वि.ख. १, पृ. ३२)

आचार्याभिनवगुप्तस्यानेके पूज्या गुरवोऽभवन्। परमतितरां समादरस्तेन श्रीशम्भुनाथं प्रत्येव प्रकटितस्तन्त्रालोके। किञ्चासौ श्रीशम्भुनाथस्तेन त्रिकसाधनासु कौलिकसाधनास्वप्युभयत्र सिद्धहस्तत्वेन ज्ञानविज्ञानप्रदत्तेन च स्मृतोऽनेकत्र तन्त्रालोके यथा तथाग्रे समुदाहरिष्यतेऽत्रैव निबन्धे।

अथ कोऽयं श्रीशम्भुनाथः, कुत्रत्योऽयम्, कां च शैवदर्शनपरम्परां सेवमानोऽभवदित्येषु विषयेषु यद्यपि परिपूर्णसन्तोषप्रदाः साख्यो वाङ्मयेनैव लभ्यास्तथापि या या लभ्यास्ता अनुसृत्यास्य मानवजीवनसाधनाभ्यासशास्त्रनिर्माणादिविषये किमपि सत्यमितिहासतत्त्वमत्र लिख्यते।

सिद्धजनैः प्रवर्तिता अभवँस्तावच्छैव-शाक्त-साधनाभ्यासस्य चतस्रो मठिकाः। तासु पूर्वस्यां दिशि कामरूपदेशेऽभवत् कामाख्यापीठनाम्नी मठिका सुप्रसिद्धा। दक्षिणभारते पूर्णगिरिपीठेऽभवदपरा मठिका पूर्णपीठनाम्नी। पश्चिमस्यां च दिशि जालन्धरपीठनाम्नी मठिकाभूज् जालन्धरविषये वर्तमाने काङ्गडापत्तने, हिमाचलप्रदेशे। एतत्पीठत्रिकोणमध्यबिन्दुतया व्यराजतोडियानपीठनाम्नी मठिका वर्तमानजगन्नाथपुरीनगरे। एताश्चतस्रो मठिकाः शाक्तपीठचतुष्टयत्वेन पूज्याः सन्तीदानीमपि शाक्तसम्प्रदाये।

भगवत्याः पराशक्तेरुपासकाः पूजारम्भे पीठानामेतेषां पूर्णमभिधानमनुच्चरन्तः "का-पू-जा-ओ इति पीठचतुष्टयाय नमः" इत्येव भाषन्ते। केन्द्रभूते शाक्तपीठे यद्यप्यद्यत्वे वैष्णवानामधिकारस्तथापि तत्रत्यं वातावरणमागमिकमेव न वैदिकं न

चापि स्मार्त्तम्। प्रस्तरकलापि तत्र तान्त्रिकी, न वैष्णवीति सूक्ष्मतरावलोकनेन स्पष्टतां यातीत्यलमप्रकृतेन।

प्रकृतं चैतत्— पूर्णगिरिपीठाधीश्वरोऽभवच्छ्रीसुमतिनाथः शैव-शाक्तोपास्ति-परम्परागुरुः। तस्य शिष्योऽभवच्छ्रीशम्भुनाथः। असौ शम्भुनाथः शैवशाक्तोपास्ति-रहस्यवित्त्वेन जालन्धरपीठाधीशेन स्वकीये पीठे निजोत्तराधिकारित्वेन वृतः सन् यथाकालं जालन्धरपीठाधीशत्वमवाप, चिरं च तत्पदकर्तव्यं प्रपालयन् शैवशाक्तोपासननिरतानां साधकानां पथप्रदर्शकत्वं निर्वहन् महतीं कीर्तिमलभत चतसृष्वपि दिक्षु।

सुचिरकालं जालन्धरपीठाधीश्वरत्वं निभालयन् शिवशक्त्युपासकानां कृते सत्सन्तोषप्रदगुरुत्वेन महतीं कीर्तिमलभत दिक्चतुष्टयव्यापिनीम्। समुद्धृतमेतद्विषये कुतश्चित् पद्यमेकं जयरथेन तन्त्रालोकटीकां निर्मिमानेन, तद्यथा—

कश्चिद् दक्षिणभूमिपीठवसतिः श्रीमान् विभुर्भैरवः
पञ्चस्रोतसि सातिमार्गविभवे शास्त्रे विधाता च यः।
लोकेऽभूत् सुमतिस्ततः समुदभूत्तस्यैव शिष्याग्रणीः
श्रीमान् शम्भुरिति प्रसिद्धिमगमज्जालन्धरात् पीठतः।। इति।

(तं.आ.वि.ख. १, पृ. २३६)

यच्च—'श्रीसोमतः सकलवित् किल शम्भुनाथः' इति। (तं.आ. ३७।६१)

इत्युक्तम्, तस्याभिप्रायोऽयमेवापाततो यज्जालन्धरपीठाधीश्वरोऽभवत् कश्चन श्रीसोमनाथो, यस्योत्तराधिकारितां श्रीशम्भुनाथोऽधिगतवानिति। तत्र व्याख्याने रहस्यात्मके उमाख्यया दूत्या सहितः श्रीमान् सोमः, तस्मात् प्राप्ताधिकारः श्रीशम्भुनाथ[1] इत्येष वार्थः।

अथ कोऽयं श्रीशम्भुनाथ इति विषये उच्यते—

अयं शैवशाक्तमहागुरुः समस्तागमिकसाधनाक्रमोपास्तिनिष्णातः, सुमहान् योगीश्वरः। एतस्य महामहिमत्वेन विद्वांसो, योगिनः, तपस्विनः, आगमगुरवः, शैवशाक्तोपास्तिमर्मज्ञा सिद्धपुरुषा नैवास्य वास्तविकं नाम प्रायश उच्चरन्ति स्म।

ततः 'श्रीशम्भुनाथ' इति पदस्य स्थाने ते 'श्रीसिद्धनाथ' इत्येव वदन्ति स्म।

---

१. अत्र जयरथकृता व्याख्या नैव समीचीना प्रतिभाति, यतः श्रीशम्भुनाथस्य श्रीसुमति-नाथशिष्यत्वमनेकत्रोक्तम्।

अद्यत्वेऽपि परमास्तिका भक्तजना गुरोर्नाम नोच्चरन्ति प्रायशः। ततः प्राक्तने काले विद्वांसः शास्त्रकृतो व्याख्यातारश्च शास्त्राणां श्रीशम्भुनाथं श्रीसिद्धनाथ इत्येव वदन्ति स्म। स्पष्टीकृतोऽयं विषयः शाङ्करपरम्परायामधिकारभारमुद्वहता श्रीपृथ्वीधराचार्येण स्वकीयस्य भुवनेश्वरीस्तोत्रस्य चरमभागे। तद्यथा—

श्रीसिद्धनाथ इति कोऽपि युगे चतुर्थे
प्रादुर्बभूव करुणावरुणालयेऽस्मिन्।
श्रीशम्भुरित्यभिधया स मयि प्रसन्नं
चेतश्चकार सकलागमचक्रवर्ती।। इति। (भु.स्तो. ३७)

स्तोत्रस्यान्तेऽपि सिद्धमेनं नामद्वयेन कीर्तितवान्। तद्यथा—

हे सिद्धनाथ करुणाकर शम्भुनाथ।
हे शम्भुनाथ करुणाकर सिद्धनाथ।। इति। (भु.स्तो. ३८)

अनेन सिद्धनाथेति नाम्ना समुल्लिखितेन श्रीशम्भुनाथभट्टारकेण ये ग्रन्था निर्मिता अभूवँस्तेषु प्रसिद्धतमस्तावत् क्रमस्तोत्राख्यः कालीदेवीस्तवः। तस्य स्तवस्य केवलं चतुर्दश एव पद्यान्यद्यत्वे समुपलभ्यन्ते। तानि तावज्जयरथेन स्वकीये तन्त्रालोकोपरि विरचिते विवेकाख्ये भाष्ये द्वादशकालीनिरूपणप्रसङ्गे समुद्धृतानि सम्पूर्णस्य क्रमस्तोत्रस्योपरि या विस्तृता टीका क्रमकेलिनाम्नी निर्मिताऽभूदाचार्याभिनवगुप्तमहोदयैः, सा नैवाधुना क्वापि लभ्येति महतो खेदस्य विषयोऽयम्।

एतस्य क्रमस्तोत्रस्य प्रशंसापर उल्लेखः कृतोऽस्ति चिद्गगनचन्द्रिकाख्ये सुमधुरे दर्शनतत्त्वगर्भे स्तोत्रकाव्ये कोकिलकण्ठेन भक्तकविना श्रीवत्साख्येन[1]। तद्यथा—

सिद्धनाथकृततत्क्रमस्तुतिं कालिदासरचितां च पञ्चिकाम्।
यद्विनिश्चितपदं च ते स्तवं योऽम्ब वेद कुरु तद्वशं जगत्[2]।। इति।

---

१. कविरयं श्रीवत्सनामा सन् भ्रान्तदृष्टिभिः सम्पादकैः कालिदास इति नामकोऽयमिति जोघुष्टम्। यद्यपि स्तोत्रस्यान्ते स्पष्टमुक्तं कविवरेण— 'श्रीवत्सो विदधे स तु' इति। ततः पूर्वं कविना एवं स्तुतम्— (हे) 'कालि! दासपदवीं तवाश्रितः' एतैः पदैर्भ्रान्तबुद्धयः सम्पादकाः प्रकाशकाश्च श्रीवत्सं कविं कालदासेति नाम्ना घोषितवन्तः। अद्यापीयं भ्रान्तिः प्रचलत्येव विद्वत्समाजे। स एष महतो खेदस्य विषयः।

२. मुद्रितग्रन्थपाठो बहुधाऽशुद्ध इति विमृशन्तु विद्वांसः। सटीकोऽपि मुद्रितः पाठस्तथाविध एव।

एतदनुमातुं शक्यते यच्छ्रीशम्भुनाथेनानेके ग्रन्था निर्मिता अभूवन्, य इदानीं नैव लभ्याः। तेभ्यः समुद्धृतानामुद्धरणानां नास्त्यभावो यतस्तत एव स्पन्दप्रदीपिकायामुक्तमुत्पलवैष्णवेन दर्शनगुरुणा—

प्रोक्तमेतत् सिद्धनाथेनाभेदार्थकारिकासु—

वस्तुनो भावशून्यस्य त्वग्राह्यस्य निराकृतेः।
कल्पनामात्रमेवैतद् यच्छिवव्यपदेशनम्।।
नेत्थं विभोर्विवर्तोऽस्ति परिणामश्च न क्वचित्।
अथवा द्वयमप्यस्तु तथाप्यस्य न खण्डना।। इति। (स्पं.प्र., पृ.४)

एषा श्रीशम्भुनाथेन रचिता अभेदार्थकारिका नैव क्वापि लभ्येदानीम्। समस्तशास्त्रतत्त्वविज्ञानभाजो बहुविधशास्त्रव्याख्यानकृतश्चास्यापूर्वस्य दर्शनशास्त्र-गुरोरेवंविधेन सुमहता माहात्म्येन दर्शनशास्त्रोपासकाः शास्त्ररसरसिकाश्च सज्जना एनं महागुरुमनेकैर्नामभिर्वदन्ति स्मेति निर्दिष्टं तन्त्रालोकविवेके श्रीजयरथेन। यथा—

भट्टं भट्टारिकानाथं श्रीकण्ठं दृष्टभैरवम्।
भूतिश्रिया कलायुक्तं नृसिंहं वीरमुत्कटम्।।
नानाभिधानमाद्यन्तं वन्दे शम्भुं महागुरुम्।।
(त.आ.वि.ख. १, पृ. ३४)

एतत् पद्यमभिनवगुप्तकृतमेवेति निर्दिष्टं तत्र। एवंविधैर्नानाभिधानैः प्रसिद्धत्वं महागुरोः श्रीशम्भुनाथस्यातीवविद्वत्प्रियत्वं व्यनक्ति।

शैवदर्शनस्यासन् चतस्रो मठिकाः। तासु तिस्रः कश्मीरेष्वेव विकासमुपयाताः। ता आनर्दमठिका, श्रीनाथमठिका, त्र्यम्बकमठिका चेति। एताश्च क्रमेण द्वैतदृष्ट्या, द्वैताद्वैतदृष्ट्या, अद्वैतदृष्ट्या च शैवीमुपासनां प्राचारयामासुः। त्र्यम्बकादित्येन गुरुणा स्वपुत्रद्वारा प्रचारितोपर्युक्ता त्र्यम्बकमठिका।

एतस्यामेव मठिकायां महान्तो गुरवो शास्त्रोपदेश-ग्रन्थनिर्माणादिकार्याणि कृतवन्तः। तेषु वसुगुप्तः, भट्टकल्लटः, सोमानन्दः, उत्पलदेवः, अभिनवगुप्तश्चेति पञ्च सुप्रसिद्धा महागुरवः। त्र्यम्बकादित्येन गुरुणा स्वकन्याया मुखेनापरापि मठिका प्रचारिताऽभूद् या तावद् अर्धत्र्यम्बकमठिकेति प्रसिद्धा। एषैव मठिका जालन्धरपीठे

(कांगडायाम्) सुप्रतिष्ठिताऽभवत्। एतस्या एव मठिकायाः सुमहान् गुरुः श्रीशम्भुनाथोऽभवद्। स च त्रिकक्रमे कौलक्रमे चोभयत्र सिद्धहस्तो गुरुरासीत्।

आचार्याभिनवगुप्तस्य बुद्धौ ये केऽपि संशयाः शिष्टा आसन् कौलक्रमविषये त्रिकयोगविषये वा, तेषां निवारणं श्रीशम्भुनाथेनैव कृतम्। तत एव श्रीतन्त्रालोकेऽनेकत्र श्रीमदभिनवगुप्तपादाः श्रीशम्भुनाथमेवाधिकारवत्तया स्मृतवन्तस्तत्र तत्र गहनगहनानां योगादिसाधनाविषयाणां निरूपणप्रसङ्गे।

श्रीक्रमस्तोत्रे याः शाक्तोपायप्रक्रियाः सङ्केतमात्रेण प्रतिपादितास्तासामुल्लेखः पूर्वमेव कृतोऽभवच्छ्रीशिवानन्दनाथेन, द्वादशकाल्युपासनागुरुणा श्रीकालिकास्तोत्रे। सैवोपासना विस्तरतः काव्यात्मकेन माध्यमेन प्रतिपादिता चिद्गगनचन्द्रिकायामपि महाकविना कालीयोगसाधनागुरुणा श्रीवत्सेनापि। एते सिद्धगुरवः सर्वत्र भारते क्वचित् क्वचिदाविर्भूताः सन्तः शैवशाक्तोपास्तिक्रममुपदिष्टवन्तस्तत्तत्काले। तेषामेव महागुरूणां मध्ये महामहिममण्डितः श्रीशम्भुनाथ आचार्याभिनवगुप्ताय सर्वशास्त्ररहस्यभूतान् विषयान् व्याख्यातवान्।

अथैतदनुमातुं शक्यते यदाचार्यमहोदयाः कञ्चित् कालं जालन्धरपीठे निवसन्तः श्रीशम्भुनाथमहोदयानां पूजां च कुर्वाणांस्तेषां मुखारविन्दादागमिक-योगसाधनारहस्यानि क्रियाकलापरहस्यानि च श्रुतवन्त इति। तत एव च ते तन्त्रालोकाख्यं शास्त्रं गूढतरशास्त्ररहस्यस्पष्टीकरणसाधनाभूतमपूर्वं दर्शनसिद्धान्त-साधनाक्रमक्रियाकलापादिप्रतिपादकं सर्वस्मिन्नपि जगत्यनुपमं, धर्मदर्शन-योगोपासनाकर्मादिस्पष्टीकरणक्षमं शास्त्ररत्नं सुनिर्मातुं सुसमर्थतामाप्तवन्तः सन्तः सर्वत्र ग्रन्थकारगुरुसमाजात्मकतारामण्डले चन्द्रवत् प्रकाशमानाः, सूर्यवच्च समस्तं दार्शनिकविषयजातं प्रकाशयन्तो व्यराजन्तेति।

तन्त्रालोकेऽनेकेषु स्थलेषु स्वमतस्य याथार्थ्यं स्थापयितुं तत्र तत्र श्रीशम्भुनाथसम्मतत्वं तदुपदिष्टत्वं च प्रतिपादितं सुस्पष्टैः शब्दैराचार्या-भिनवगुप्तमहोदयैः। तदुदाहरणानि यथा—

१. प्रथमतस्तदिच्छोपायापरपर्यायभूतस्य शाम्भवोपायस्य यद्रहस्यं तस्य प्रकाशन-मधिकृत्य महागुरुभिः श्रीशम्भुनाथोपदिष्टत्वमेव स्पष्टतयोक्तम्। तद्यथा—

एवं परेच्छा-शक्त्यंश-सदुपायमिमं विदुः।
शाम्भवाख्यं समावेशं सुमत्यन्तेनिवासिनः।। इति।

(तं.आ. १।२१३)

२. त्रिकयोगत्रयान्तर्गतस्य विशिष्टस्य शैवस्य ध्याननाम्नो योगस्य विषये, यथा—

इत्येतत्प्रथमोपायरूपं ध्यानं न्यरूपयत्।
श्रीशम्भुनाथो मे तुष्टस्तस्मै श्रीसुमतिः प्रभुः।। इति। (तदेव, ५।४१)

३. जगदानन्दविषये, यथा—

यत्र कोऽपि व्यवच्छेदो नास्ति यद् विश्वतः स्फुरत्।
यदनाहतसंवित्तिपरमामृतबृंहितम्।।
यत्रास्ति भावनादीनां न मुख्या कापि सङ्गतिः।
तदेव जगदानन्दमस्मभ्यं शम्भुरूचिवान्।। इति।
(तदेव, ५।५०-५२)

४. कालाध्वविषये आध्यात्मिक-विषुवत्काल-स्वरूपनिर्णये, यथा—

श्रीत्रैयम्बकसन्तानवितताम्बरभास्करः।
दिनरात्रिक्रमं मे श्रीशम्भुरित्थमपप्रथत्।। (तं.आ. ६।८८-८९)

५. स्थूलवर्णोदयविषये, यथा—

अथ स्थूलोदयोऽर्णानां भण्यते गुरुणोदितः। इति (तदेव ५।२४०)

६. देशाध्वोपासनविषये, यथा—

इति देशाध्वविभागः कथितः श्रीशम्भुना समादिष्टः। (तदेव, ८।४५२)

७. कर्मेन्द्रियाणीति विषये भट्टजयन्तमतनिरसनानन्तरम्। यथा—

उच्यते श्रीमतादिष्टं शम्भुनात्र ममोत्तरम्।
स्वच्छसंवेदनोदारवित्कलाप्रबलीकृतम्।। इति। (तदेव, १।२६१)

८. जाग्रदाद्यवस्थाचतुष्टयनिरूपणे, यथा—

इति श्रीसुमतिप्रज्ञाचन्द्रिकापास्ततामसः।
श्रीशम्भुनाथः सद्भावं जाग्रदादौ न्यरूपयत्।। (तदेव, १०।२८७)

९. पुनस्तत्रैव विषये सविस्तरं वर्णितम्। (तदेव, १०।२९४-३००)

१०. मृतशिष्योद्धारार्थं मन्त्रजालप्रयोगदीक्षाविषये। (तदेव, १०।२२१-२२६)

११. सप्रत्यययाया दीक्षाया विषये। (तदेव, २९।२१२)

१२. चक्रयागनिरूपणावसरे। (तदेव, २९।२४३-२५२)

१३. शास्त्राणां पारस्परिकसामञ्जस्यविषये। (तदेव, २९।३५-४४)

एतैरुद्धरणैरिदं स्पष्टीकृतं भवति यच्छ्रीशम्भुनाथो ज्ञानक्रियोभयपक्षे सर्वशास्त्रवित् समस्ततान्त्रिकागमिकविज्ञानतत्त्वविच्च गुरुरभवत्, कौलिकसाधना-क्रमेषु सुनिष्णातोऽप्यसौ त्रिकसाधनाक्रमज्ञानविज्ञानपारगोऽभूत्। तत एव चाचार्याभिनवगुप्तपादा महागुरुमेनं 'त्रिकार्थाम्भोधिचन्द्रमाः' इति प्रशस्तवन्तः। केऽप्यपरेऽपि त्रिकसाधनाविषयाः श्रीशम्भुनाथमुखादेव विज्ञाता आचार्याभिनवगुप्त-महोदयैः।

तद् यथोक्तं तन्त्रसारस्यान्ते—

इत्थं षडर्धक्रमसम्प्रदायं सप्रत्ययाप्रत्ययभिन्नमाप्या।
श्रीशम्भुनाथात् करुणारसेन स्वयं प्रसन्नादनपेक्षवृत्त्या।।

काश्मीरिकोऽभिनवगुप्तपदाभिधानः श्रीतन्त्रसारमकरोद् ऋजुना क्रमेणेति। (तं.सं., पृ. २०७)

परात्रीशिकाविवरणान्ते[१] चापि, यथा—

परमेश्वरः प्रपन्न-प्रोद्धरण-कृदा-प्रयुक्त-गुरुहृदयः।
श्रीमान् देवःशम्भु[२]र्मामियति नियुक्तवांस्तत्त्वे।। (प.त्री.वि., पृ. २८२)

आश्चर्यं महदाश्चर्यं यदीदृशं सर्वोत्तमं ज्ञान-विज्ञानगुरुं श्रीशम्भुनाथं विरल-विरला एव विद्वांसो जानन्तीति। ततोऽपि महदाश्चर्यं यत्तेनाधिष्ठिते जालन्धरपीठेऽधुना तस्य नामापि न केनचिदपि विदुषा ज्ञायत इति। कलिकालविजृम्भितमेतज्जानन्तु सहृदया विद्वज्जना इति विरम्यतेऽधिकतराद् विस्तरात्।

●

१. अद्यत्वे सर्वे ग्रन्थमिमं परात्रिंशिकेति वदन्ति, यद्यप्याचार्याभिनवगुप्तेन स्वकृते विवरणेऽस्य ग्रन्थरत्नस्य यथार्थमभिधानं 'परात्रींशिकेति' व्याख्यातं सुस्पष्टम्।

२. शम्भुरत्र शिवोऽपि श्रीशम्भुनाथोऽपि तन्त्रयुक्त्या।।

# तन्त्रागमशास्त्रे शक्तिपीठानामवधारणा

**डॉ. अविनाशनाथत्रिपाठी**
प्राध्यापकः,
सांख्ययोगतन्त्रागमविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी

❀ ❀ ❀

विश्वस्य सर्वेषु धर्मेषु प्राचीनकालादारभ्य मानवानां विभिन्न-धार्मिकमतानुसारेण तेषां पवित्राणि तीर्थस्थलानि निर्दिष्टानि। एतेषु स्थलेषु पृथक् पृथग् मतानां पृथक् पृथग् देवा देव्यश्च प्रतिष्ठिताः। एतानि स्थलानि दिव्यानि सन्ति। अनेकविधास्थाभरिताः श्रद्धावनता जनास्तत्र यात्रामनुतिष्ठन्ति। एवञ्च तत्र प्रतिष्ठापितानां देवानामाराधनं पूजनञ्च कृत्वा स्वकीयां कामनां पूरयितुं प्रयत्नशीला दृश्यन्ते। स्वकीयाया धार्मिकभावनायाः फलस्वरूपेण भक्तगणास्तदनुकूलमाचरणं विधाय स्वकीयां मनोवाञ्छां प्राप्य तेषां स्थलानामलौकिकशक्तेः प्रत्यक्षमनुभवं कुर्वन्ति। एतानि स्थलानि तीर्थ-धाम-पीठप्रभृति-पदेनाभिधीयन्ते।

भारतीयसंस्कृतौ भगवत्या. आदिशक्तेः पराम्बाया उपासना अनादि-कालादारभ्य प्रचलति। तस्या अनेकानि पीठान्यपि विद्यन्ते, किन्तु पीठसंख्या-निरूपणे मतभेदा दृश्यन्ते। देवीभागवते अष्टोत्तरशतपीठसंख्या वर्तते। स्कन्दपुराणस्य रेवाखण्डे (९८.अ.) पीठानामुल्लेखो वर्तते। कालिकापुराणे सत्यङ्गभूतसमूहस्य संक्षिप्तसंख्या वर्तते[१]। तन्त्रचूडामणिग्रन्थान्तर्गतमहापीठनिर्णय-

---

१. देवीकूटे पादयुग्मं प्रथमं न्यपतद् भुवि।
उड्डियाने चोरुयुग्मं हिताय जगतां ततः।।
कामरूपे कामगिरौ न्यपतद् योनिमण्डलम्।
तत्रैव न्यपतद् भूमौ पूर्वतो नाभिमण्डलम्।। (कालिकापुराणे, १८।४२,५१)

प्रकरणे एकपञ्चाशत्पीठानां विवरणमस्ति[१]। अखिलब्रह्माण्डस्य नियन्त्रिकाया भगवत्या आदिशक्तेरेकपञ्चाशत्सिद्धस्थलान्यस्मिन् भारते लभ्यन्ते।

एतेषां शक्तिपीठानामुद्भवविषय एकं पौराणिकमाख्यानं विद्यते। श्रीमद्भागवते[२] शिवपुराणे च एतन्निगदितं यदेकदा दक्षप्रजापतिर्यज्ञमेकमारभत, तस्मिन् यज्ञे महादेवं शिवं तिरस्कर्तुं प्रजापतिस्तस्मै निमन्त्रणं न प्रेषितवान्, किन्तु पितृगृहे यज्ञस्य वृत्तान्तमाकर्ण्य पार्वती पितुर्यज्ञे गमनायानुमतिं याचितवती। शिवस्तां तत्र गमनाय प्रतिषिद्धवान्, परं शिवाज्ञां विनापि पितृस्नेहात् पार्वती तत्र गतवती। स्वयमागतायाः पार्वत्याः सम्मानं दक्षो नाचरितवान्, न वा प्रेम्णा वार्त्तालापमपि कृतवान्। जगदम्बा पार्वती औत्सुक्याद् यज्ञमण्डपं समागत्य तत्रावाहितानां देवानां तद्भागानां च दर्शनं कृतवती, परं स्वपतेर्भगवतो महादेवस्य भागमदृष्ट्वा परं कुपिता सती भर्तुरपमानमसहमाना यज्ञमण्डप एव योगाग्निनाऽऽत्मानं ददाह।

यदा हि भगवान् महादेवो दक्षप्रजापतिना स्वापमानं तत्र चैतेन सतीदेव्या देहत्यागं श्रुतवान्, तदात्यन्तं कोपाविष्टो जातः। कालानलसमेन क्रोधेनाविष्टः शिवः स्वामेकां जटामुत्पाट्य भूमौ न्यक्षिपत्। तेन भगवतः शिवस्य प्रधानगणो वीरभद्रः प्रादुरभूत्। शिवश्च तमादिदेश— भो वीरभद्र! त्वं दक्षप्रजापतियज्ञे सतीदेव्या अपमानस्य प्रतीकाररूपेण दक्षस्य यज्ञं विध्वंसय। शिवाज्ञयाऽत्यन्तं वेगेन क्रुद्धो वीरभद्रो दक्षप्रजापतेर्यज्ञं विध्वस्तवान्।

पुनश्च कथेयं प्रथिता यद् महाक्रुद्धः शिवो दग्धं सतीदेहमादाय महाप्रलयेच्छया भूमौ भ्रमणमारभत। विश्वविध्वंसभयेन कातरा देवा विष्णुलोकं गत्वा प्रार्थयामासुर्यद् भो भगवन्! शिवक्रोधेन महाप्रलयो न स्यात् तथा भवद्भिरस्माकं रक्षणं कृपया कर्त्तव्यम्। देवानां प्रार्थनया भगवान् विष्णुस्तत्सङ्कटापनोदाय सुदर्शनचक्रमादिदेश— भो चक्रसुदर्शन! त्वं पृथिव्यां

---

१. देव्युवाच— शृणु वत्स प्रवक्ष्यामि दयालो भक्तवत्सल।
याभिर्विना न सिद्ध्यन्ति जपसाधनसत्क्रियाः।।
पञ्चाशदेकपीठानि एवं भैरवदेवताः।
अङ्गप्रत्यङ्गपातेन विष्णुचक्रक्षतेन च।।
ममाद्यवपुषो देवहिताय त्वयि कथ्यन्ते।।
(तन्त्रचूडामणिः, महापीठनिरूपणप्रकरणे, श्लो. ३)

२. स देही बहुधा भूत्वा पतिष्यति धरातले।
तत्र तद्धि महापीठं भविष्यत्यघनाशनम्।। (श्रीमद्भागवते नवमाध्याये)

गत्वा मृतसतीशरीरस्य विखण्डनं कृत्वा जगद्रक्षणं कुरु। विष्णोराज्ञया सुदर्शनचक्रं तथा चकार। एवञ्च सतीशवस्य एकपञ्चाशद्वारं विखण्डनं कृतवान् सुदर्शनचक्रम्। तथा च खण्डितानि सतीशरीराङ्गाणि आभूषणानि च यत्र यत्र निपतितानि, तत्र तत्र शक्तिपीठानि प्रादुरभूवन्— इति पौराणिककथाप्रसङ्गः।

एकपञ्चाशत्-शक्तिपीठस्थलानि पूर्वकथाप्रसङ्गेन शक्तेरङ्गानि आभूषणानि च यत्र स्थले निपतितानि, तानि अधोनिर्दिश्यन्ते—

१. कामरूपपीठम्[१]
२. काशिकापीठम्
३. नेपालपीठम्
४. महापीठम्
५. काश्मीरपीठम्
६. कान्यकुब्जपीठम्
७. पूर्णगिरिपीठम्
८. अर्वुदाचलपीठम्
९. एकाग्रपीठम्
१०. आम्रातकेश्वरपीठम्
११. त्रिस्रोतपीठम्
१२. कामकोटिपीठम्
१३. कैलासपीठम्
१४. भृगुपीठम्
१५. केदारपीठम्
१६. चन्द्रपुरपीठम्
१७. श्रीपीठम्
१८. ज्योतिष्मतीपीठम्
१९. ज्वालामुखीपीठम्
२०. मालवपीठम्
२१. कुलान्तकपीठम्
२२. कोदटपीठम्
२३. गोकर्णपीठम्
२४. मातुरेश्वरपीठम्
२५. अट्टहासपीठम्
२६. विरजापीठम्
२७. राजगृहपीठम्
२८. महापथपीठम्
२९. कोलगिरिपीठम्
३०. एलारपुरपीठम्
३१. कालेश्वरपीठम्
३२. जयन्तीपीठम्
३३. उज्जयिनीपीठम्
३४. योगिनीपीठम्
३५. क्षिरिकापीठम्
३६. हस्तिनापुरपीठम्
३७. उड्डीशपीठम्
३८. प्रयागपीठम्
३९. षष्ठीशपीठम्
४०. मायापुरपीठम्
४१. मलयपीठम्
४२. श्रीशैलपीठम्

---

१. 'कामरूपं महातीर्थं कामाख्या तत्र तिष्ठति'। (गरुडपुराणे, ८९।१६)

४३. मेरुपीठम्
४४. गिरिपीठम्
४५. महेन्द्रपीठम्
४६. वामनपीठम्
४७. हिरण्यपुरपीठम्
४८. महालक्ष्मीपीठम्
४९. अत्रिपीठम्
५०. छायापीठम्
५१. क्षत्रपीठम्

| स्थान-नाम | नाम (अङ्गान्याभूषणानि च) | शक्तिः | भैरवः |
|---|---|---|---|
| १. हिंगला (बलूचिस्ताने हिंगलाजः) | ब्रह्मरन्ध्रः | कोट्टवीशा | भीमलोचनः |
| २. शर्करारः (सिन्धप्रदेशस्य शक्करग्रामे) | वक्षःस्थलम् | महिषमर्दिनी | क्रोधीशः |
| ३. सुगन्धा (पूवबङ्गस्य शिकारपुरग्रामे) | नासिका | सुनन्दा | त्र्यम्बकः |
| ४. काश्मीरम् (श्रीनगरस्य समीपे उत्तरस्यां वा अमरनाथगुहायाः पार्श्वे) | कण्ठदेशः | महामायाः | त्रिसन्ध्येश्वरः |
| ५. जालन्धरम् (हिमालयस्य त्रिगर्तस्थाने) | वामस्तनः | त्रिपुरमालिनी | भीषणः |
| ६. ज्वालामुखी (पंजाबस्य काङ्गडाप्रान्ते) | महाजिह्वा | सिद्धिदा अम्बिका | उन्मत्तभैरवः |
| ७. वैद्यनाथे (वैद्यनाथधाम्नि श्रीवैद्यनाथमन्दिरे एव) | हृदयम् | जयदुर्गा | वैद्यनाथः |
| ८. नेपालः (पशुपतिनाथमन्दिरस्य पृष्ठभागे) | जानुः | महामाया | कपाली |
| ९. मानसः (मानसरोवरस्य तटे) | अर्द्धदक्षिणहस्तः | दाक्षायणी | अमरः |
| १०. विरजाक्षेत्रम् (उत्कलस्थपुरीक्षेत्रे) | नाभिदेशः | त्रिमला | जगन्नाथः |
| ११. गण्डकी (नेपाले गण्डक्या उद्गमसमीपे) | गण्डस्थलम् | गण्डकी | चन्द्रपाणिः |
| १२. बहुला | वामबाहुः | बहुलादेवी | भीरुकः |
| १३. उज्जयिनी (उज्जयिन्यां रुद्रसागरस्य समीपे) | कूर्परः | मंगल-चण्डिका | कपिलाम्बरः |
| १४. त्रिपुरा (त्रिपुराप्रदेशस्य राधाकिशोरपुरे) | दक्षिणपादः | त्रिपुरसुन्दरी | त्रिपुरेशः |
| १५. चट्टलम् (चट्टग्रामस्य समीपे चन्द्रनाथपर्वतोपरि) | दक्षिणबाहुः | भवानी | चन्द्रशेखरः |

| | | | |
|---|---|---|---|
| १६. त्रिस्तोता (बङ्गस्य त्रिस्तानद्यास्तटे) | वामपाद: | वामा | भैरवेश्वर: |
| १७. कामगिरि: (गोहाटी-समीपे नीलपर्वतोपरि) | योनिदेश:[1] | कामाख्या | उमानन्द: |
| १८. प्रयाग: (अलोपीदेवीस्थाने ललितादेवीमन्दिरे च) | हस्ताङ्गुलि: | ललिता | भव: |
| १९. जयन्ती (श्रीहट्टप्रदेशे जयन्तीपर्वतोपरि) | वामजङ्घा | जयन्ती | कपर्दीश्वर: |
| २०. युगाद्या (वर्द्धमानत: सुदूरं कटियारसमीपे) | दक्षिणाङ्गुष्ठ: | भूतधात्री | क्षीरखण्डक: |
| २१. कालीपीठम् (कलकत्ता) | दक्षिणपादाङ्गुलि: | कालिका | नकुलीश: |
| २२. किरीट: (मुर्शिदाबादस्य किरीटकोनाग्रामे) | किरीट: | विमला | संवर्त: |
| २३. वाराणसी (मणिकर्णिकाया: समीपे मीरघाटस्थितविशालाक्षीमन्दिरे) | कर्णकुण्डलम् | विशालाक्षी | कालभैरव: |
| २४. कन्याश्रम: (महाभारतस्य वनपर्वणि उल्लेखमात्रम्) | पृष्ठ: | शर्वाणी | निमिष: |
| २५. कुरुक्षेत्रम् (कुरुक्षेत्रस्य समीपे द्वैपायनह्रदतटे) | गुल्फ: | सावित्री | स्थाणु: |
| २६. मणिबन्ध: (अजमेरनगरात्सुदूरं पुष्करतीर्थे) | दृग्मणिबन्ध: | गायत्री | सर्वानन्द: |
| २७. श्रीशैल: (दक्षिणभारते श्रीपर्वते) | ग्रीवा | महालक्ष्मी | शम्बरानन्द: |
| २८. काञ्ची (काञ्चीपीठं वा काञ्चीवरम्) | अस्थि | देवगर्भा | रुरु: |
| २९. कालमाधव: | नितम्ब: | काली | असिताङ्ग: |
| ३०. शोणदेश: (नर्मदातटे उल्लेखमात्रम्) | नितम्बक: | नर्मदा | भद्रसेन: |
| ३१. रामगिरि: (मध्यप्रदेशे विलासपुरस्य समीपे पर्वतोपरि) | दक्षिणस्तन: | शिवानी | चण्डभैरव: |
| ३२. वृन्दावनम् (वृन्दावने केशिघट्ट:) | केशपाश: | उमा | भूतेश: |

१. सत्यास्तु पतितं तत्र विशीर्णं योनिमण्डलम्।
शिलात्वमगमच्छैले कामाख्या तत्र संस्थिता।।

(कालिकापुराणे, योनिपीठरहस्ये, ६२।७६।७७)

| | | | |
|---|---|---|---|
| ३३. शुचिः (सम्भवतः कन्याकुमारीतः सुदूरं शुचीन्द्रम्) | ऊर्ध्वदन्तः | नारायणी | संहारः |
| ३४. पञ्चसागरम् (हरिद्वारे पञ्चकुण्डम्) | अधोदन्तः | वाराही | महारुद्रः |
| ३५. करतोया (बङ्गप्रान्ते भवानीपुरम्) | तल्पः | अपर्णा | वामन-भैरवः |
| ३६. श्रीपर्वतः (कृष्णातुङ्गभद्रयोः सङ्गमस्थले) | दक्षिणगुल्फः | श्रीसुन्दरी | सुन्दरानन्द-भैरवः |
| ३७. प्रभासः (पश्चिमभारतस्य जूनागढप्रान्ते) | उदरः | चन्द्रभागा | वक्रतुण्डः |
| ३८. विभासः (मेदिनीपुरस्य तमलुकस्थाने) | वामगुल्फः | कपालिनी | महादेवः |
| ३९. भैरवपर्वतः (क्षिप्रानद्यास्तटे) | ऊर्ध्वोष्ठः | अवन्ती | लम्बकर्णः |
| ४०. जनस्थलम् (नासिके पञ्चवट्यां भद्रकालीमन्दिरम्) | चिबुकद्वयम् | भ्रामरी | विकृताक्षः |
| ४१. सर्वशैलः (गोदावरीतटे स्थितः) | वामगण्डः | राकिणी | वत्सनाभः |
| ४२. गोदावरीतीरम् (दक्षिणभारते) | गण्डः | विश्वेशी | दण्डपाणिः |
| ४३. रत्नावली (सम्भवतो हुगुलीप्रदेशे) | दक्षिणस्कन्धः | कुमारी | शिवः |
| ४४. मिथिला (नेपाले जनकपुरपार्श्वे) | वामस्कन्धः | उमा | महोदरः |
| ४५. नलहारी (बंगे वीरभूम्याम्) | नखाः | कालिकादेवी | योगेशः |
| ४६. कर्पाटः | कर्णः | जयदुर्गा | अभीरुः |
| ४७. वक्रेश्वरः (वीरभूमिप्रदेशान्तर्गतः) | मनः | महिषमर्दिनी | चक्रनाथः |
| ४८. यशोरः (बाङ्गलादेशे) | पाणिपद्मः | यशोरेश्वरी | चण्डः |
| ४९. अट्टहासः | ओष्ठः | फुल्लरा | विश्वेशः |
| ५०. नन्दिपुरम् (वीरभूमिप्रदेशान्तर्गतम्) | कण्ठहारः | नन्दिनी | नन्दिकेश्वरः |
| ५१. लंका (राजस्थानस्य भरतपुरमण्डलान्तर्गता) | नूपुरम् | इन्द्राक्षी | राक्षसेश्वरः |
| ५२. विराट् (राजस्थानस्य भरतपुरमण्डलान्तर्गतम्) | पादाङ्गुलिः | अम्बिका | अमृतम् |
| ५३. मगधः (पटनायां पटनेश्वरीदेव्या मन्दिरे) | दक्षिणजङ्घा | सर्वानन्दकरी | व्योमकेशः |

अत्रेदमवधेयम्—तन्त्रागमशास्त्रसिद्धान्तानुरोधेन शिवं विना शक्तिः, शक्तिं विना शिवो न किमपि कर्तुं प्रभवतः[१]। अत एव शक्त्या सहैव पृथक् पृथग् भैरवा अपि तत्र अविनाभावेन विराजन्ते।

अध्यात्मपक्षत एतेषां शक्तिपीठानामवधारणा पृथग्रूपेण मन्यते, एतानि एकपञ्चाशत् शक्तिपीठानि मातृकावर्णरूपाणि सन्ति। तथा च पराशक्तिर्मातृकावर्णरूपिणी एव विद्यते।

ब्रह्माण्डमखिलं पिण्डाण्डञ्च शब्दब्रह्मणः सृष्टिरेव[२]। मनुष्यशरीरे ॐकारमयं शब्दब्रह्म परा-पश्यन्ती-मध्यमा-वैखरीरूपेण चतुर्धा अवस्थीयते। तत्र परा-पश्यन्त्योः स्थितिरव्यक्तरूपाऽस्ति। अत एव आदिशक्तिः स्वतेजसा अन्तर्बाह्यं परितः सर्वरूपेण परिव्याप्नोति जगदखिलम्।

अतः शाक्तोपासकानां कृते, भारतस्य राष्ट्रीयैकतायाः संवर्द्धनाय च शक्तिपीठानां विशिष्टं महत्त्वं वर्तते।

●

---

१. शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्। (सौन्दर्यलहरी, श्लो॰ १)

२. यत्पिण्डे तद् ब्रह्माण्डे। (योगसूत्रम्)

# तन्त्रशास्त्रानुसारं कालस्वरूपविमर्शः

**डॉ. हरिवंशकुमारपाण्डेयः**
ईक्ष्यशोधकः, प्रकाशनविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

❀ ❀ ❀

अशेषचिदचिज्जातसृष्टिस्थितिलयात्मने।
कालायाकलनीयाय महतेऽणीयसे नमः।।

संसरणशीलत्वात् सततं गतिमत्त्वादेव संसारो जगदिति प्रोच्यते। अरुण आगच्छति, सूर्य उदेति, अहोरात्रमायाति याति च, पक्षो मासश्च समायातो गच्छतश्च, वसन्तादय ऋतवो ग्रहा नक्षत्राणि चानवरतं गतिशीलानीति तानि परिवर्तनं द्योतयन्ति। षड् भावविकारा अवस्थापरिबोधनाय स्वेषु मुहूर्त्तमपि नावतिष्ठन्ते, वर्धन्ते, अपायेन च युज्यन्ते। परिवर्तनस्यावस्थाविशेष-रूपत्वात्तत्पूर्वापरसम्बन्धज्ञानाय कश्चिदुपायोऽभ्युपगन्तव्यः।

यथोक्तं पातञ्जलमहाभाष्ये— 'येन मूर्त्तानामुपचया अपचयाश्च लक्ष्यन्ते, तं कालमित्याहुः'[१]। तत्रैव कैयटेन व्याख्यातमस्ति यत्—

'तरुतृणलताप्रभृतीनां कदाचिदुपचयः, अन्यदा त्वपचयः। स प्रत्ययान्तराविशेषेऽपि (कारणान्तराविशेषेऽपि) यत्कृतः, स काल इत्यर्थः। तथा चोक्तं श्रीभर्तृहरिणा कालसमुद्देशे—

तस्याात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः।
न हिं भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते।।
नैको न चाप्यनेकोऽस्ति न शुक्लो नापि चासितः।
द्रव्यात्मा स तु संसर्गादिवंरूपः प्रकाशते।।

---
१. म.भा. २।२।५।

संसर्गिणां तु ये भेदा विशेषास्तस्य ते मताः।
स भिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते[१]।। इति।

न केवलं कालस्यैव भेद औपाधिकः, किन्तु सर्वस्यापीत्याह—न हीति। भेदाभेदौ, एकत्वानेकत्वे, शुक्लत्वकृष्णत्वे इत्यादिकं सर्वमपि न कस्यचित् स्वाभाविकम्। तदुक्तम्— न हि गौः स्वरूपेण गौः, नाप्यगौः, गोत्वाभिसम्बन्धात्तु गौरिति। किन्त्वौपाधिकमेवेत्याह—द्रव्यात्मेति। द्रव्यपदार्थस्तत्तत्संसर्गादेकत्वानेकत्वादिनानाव्यवहारविषय इत्यर्थः। प्रकृते त्वाह— संसर्गिणां त्विति। आदित्यक्रियादीनां ये भेदा विशेषास्त एव तस्य कालस्य विशेषाः, अहरादिविशेषव्यवहारहेतव इत्यर्थः। तैर्भिन्नरूपः कालोऽवस्थानामहरादिव्यवहाराणां भेदाय विशेषाय कल्पत इत्यर्थः।

उद्द्योते[२] नागेशस्तु— 'एवञ्च ब्रह्मैव कल्पिततत्तत्पदार्थसंसर्गाद् एकत्वानेकत्वभेदाभेदत्वशुक्लत्वकृष्णत्वादिना भासते। वस्तुतस्तु सर्वधर्मविनिर्मुक्तमिति बोध्यम्' इति वदन् ब्रह्मण एव कालत्वं मन्यते।

संस्कृतसाहित्यस्य प्राचीनतमग्रन्थेषु कालशब्दस्य प्रयोगो दृश्यते। यथा— 'कृतं न श्वघ्नी विचिनोति काले' (ऋ.सं. १०।४२।९)। मन्त्रद्रष्टॄणामयमनुभव आसीद्यत् 'ऋत्'नाम्ना प्रसिद्धया सत्तया सर्वं परिवर्तनं क्रमबद्धमिव भासते, अतः परिवर्तनलक्ष्य एव कालः। गत्यर्थकात् 'ऋ'-धातोर्निष्पन्नः ऋतशब्दः सार्वभौमनियतिं लक्षयति।

ख्रीष्टाब्दपूर्वकालिकीषु पारसीकमुद्रासु वर्तमानः 'अर्त'-(Art)शब्दः 'ऋत्' इत्यस्यैव रूपमिति भाषावैज्ञानिका वदन्ति। वरुणस्य 'ऋतावन्' इत्याख्यया प्रसिद्धिर्वर्तते, सः कालं वेद— 'वेद मासो धृतव्रतो द्वादश प्रजावतः। वेदा य उपजायते' (ऋ.सं. १।२५।८)। व्याख्यातृदृष्ट्या 'य उपजायते' इत्यस्य त्रयोदशोऽधिकमास उपजायत इत्यर्थः।

ऋग्वेदे कालगतदार्शनिकबीजस्य मूलं समुपलभ्यते। देशकालादयः पुरुषस्य क्रियारूपाः, ततः पूर्वं पश्चाच्च पुरुष एव सन्तिष्ठते। कालभेदका महाकालात्मकपुरुषादेव जायन्ते स्म। यथा—

'वसन्तो अस्यासीदाज्यम्, ग्रीष्म इध्मः, शरद्धविः', 'पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्'। (ऋ.सं. १०।९०।२)

---

१. वा.प., कालसमुद्देशे, का. ६-८; २. म.भा. २।२।५।

अथर्ववेदे नूनं समर्थितं यत् परमदेवस्वरूपः काल एव, स एव स्रष्टा भर्ता च। काले च सर्वं प्रतिष्ठितम्। यथा—

कालो भूतिमसृजत काले तपति सूर्यः।
काले ह विश्वा भूतानि काले चक्षुर्विपश्यति[1]।।
कालो ह सर्वस्येश्वरो यः पितासीत् प्रजापतेः[2]।
कालादापः समभवन् कालाद् ब्रह्म तपो दिशः।
कालेनोदेति सूर्यः काले निविशते पुनः[3]।।
काले लोकाः प्रतिष्ठिताः[4]।

तैत्तिरीयारण्यके तु भौतिकं स्वरूपं कालस्य निरूपितमस्ति। यथा—

सूर्यो मरीचिमादत्ते सर्वस्माद् भुवनादधि।
तस्याः पाकविशेषेण स्मृतं कालविशेषणम्[5]।।

बृहदारण्यकोपनिषदि कालस्योत्पत्तिः प्रदर्शिताऽस्ति। यथा—

'सोऽकामयत द्वितीयो मे आत्मा जायेतेति। स मनसा वाचं मिथुनं समभवदशनाया मृत्युस्तद्यद् रेत आसीत्स संवत्सरोऽभवत्। न ह पुरा ततः संवत्सर आस, तमेतावन्तं कालमबिभर्यावान् संवत्सरः, तमेतावतः कालस्य परस्तादसृजत्'[6]।

श्वेताश्वतरोपनिषदि भूतस्य योनिरूपेण कालो निर्णीतः।

तथा हि— 'कालः स्वभावो नियतिर्यदृच्छा, भूतस्य योनिः पुरुष इति चिन्त्या'[7]।

नूनमेव वेदसमये यो हि परमयोनिरूपेण प्रतिष्ठित आसीत्, स एव पुराणयुगे देवस्वरूपतामाधत्ते। ब्रह्माण्डपुराणे द्वात्रिंशत्तमेऽध्याये ब्रह्म-विष्णु-यज्ञादयः कालाङ्गत्वेन निरूपिताः। तद्यथा—

---

१. अ.सं. १९।५३।६; २. तत्रैव - १९।५३।८।
३. तत्रैव - १९।५४।१; ४. तत्रैव - १९।५४।४।
५. तै.आ. १।२।१; ६. बृ.आ. १।२।४।
७. श्वेता. १।२।

ब्रह्मा विष्णुश्च यज्ञश्च कालस्यैव कलास्त्रय:।
सर्वेष्वेव हि भावेषु चतुर्मूर्त्तिर्महेश्वर:।। इति।

विष्णुपुराणेऽपि कालस्यानादित्वमीश्वरत्वञ्च प्रकाशितम्। यथा—

अनादिर्भगवान् कालो नान्तोऽस्य द्विज उच्यते।
अविच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा:।।
गुणसाम्ये ततस्तस्मिन् पृथक् पुंसि व्यवस्थिते।
कालस्वरूपरूपं तद् विष्णोर्मैत्रेय वर्तते।। (४।३२-३३)

महाभारते तु स्पष्टमुक्तम्—

'काल: पचति भूतानि काल: संहरते प्रजा:'।। इत्यादि।

आर्या हि ज्योतिष उपासका:। आलोकभावनाया एव प्रकाशनं सर्वत्र दृश्यते। बाह्यप्रकाश एवान्त:स्थबोध:, विवेक:, चितिर्वा। तत्फलं प्रज्ञानं संज्ञानं संविद्वा भवति। देवं प्रति आर्याणां प्रवृत्तिर्दीप्तिमूलिकैव। अत एव वसिष्ठेनोक्तम्— ज्योतिषां पुरोगामित्वस्वीकर्तार एवार्या:। 'तिस्र: प्रजा आर्या ज्योतिरग्रा:' (ऋ.सं. ७।३३।७)। तमसो ज्योतिषि उत्तरणमेव जीवनस्य दिव्यनियति:। यथा— 'तमसो मा ज्योतिर्गमय' (ऋ.सं. १।३।२८)।

अध्यात्मसिद्धे: प्रतिच्छवि: सूर्योदयेऽन्धकाराद्दीप्तावागमनम्। देवस्यादित्य-रूपेणैवोद्दीपनं जायते। एतद्दीप्त्यैव सह चेतनस्य ब्रह्मात्मकस्य प्रज्ञानस्यात्मनो वा सायुज्यं भवति, आदित्ये यो हि पुरुषस्तस्य आत्मपुरुषस्य चैकत्वमेव। देवताया: कापि विभूतिर्भवतु, इष्टरूपेण पर्यवसानमादित्यभावनायामेव भवति, यतोऽदितिपुत्रत्वेन सर्व आदित्या एव, अदितिश्चाखण्डात्मिकाऽबन्धना शक्तिरेव, कालशक्तिश्चाखण्डिताऽबन्धना ब्रह्माभिन्नैवेति परमज्योतिष: प्राप्तिरेवाभिहिता। ज्योतिरुपासनाया देवोपासनया सहैक्याद् मूर्तिपूजाया महत्त्वमपि न तथा सङ्गटतेऽमूर्तश्चिन्मयो देव:।

कालस्वरूपनिरूपणे क्रियाक्रमचिन्ता विशिष्टमहत्त्वाधायिका। अभिनव-गुप्तपादाचार्येणोक्तं यत् परमेश्वरक्रियायां परमार्थत: क्रमो नास्ति, यत: शक्ति: शक्तिमता सहाभिन्नैवात: परमशिवेन सहाभिन्नायां क्रियाशक्तावपि क्रमो नैव सम्भाव्यते। परमेतत्क्रियाशक्तिसामर्थ्येन परिच्छिन्ने एव संसारा-वस्थायां स्थित: प्रमातृवर्ग: प्रकाश्यते, अत एव क्रमोऽपि प्रतीयते। यथा—

'परमेश्वरे परमार्थतः क्रमा क्रिया, परिमितसांसारिकप्रमातृगतक्रमावभासनयोगात्' (ई.प्र.वि., पृ. २)।

इदानीमेषः प्रश्न उदेति यत् क्रिया हि क्रमरूपेति कथनं कथं सङ्गच्छते? एकस्मिन् वस्तुनि पौर्वापर्यरूपः क्रमो न सम्भाव्यते, क्रमो हि क्रियाश्रितः, आश्रयक्रियायां क्रमसम्बन्धात्, आश्रयः क्रिया च कथमेकस्वभावौ? सम्बन्धो हि द्विष्ठो भवति, क्रमाश्रयो भूत्वा क्रियायां यद्येकस्वभावता स्यात्तदा क्रमेण सह क्रियासम्बन्धः कथमिव स्यात्? यदि क्रियया सह क्रमस्य सम्बन्धः स्वीक्रियते, तदा क्रियया क्रमस्य भेदोऽवश्यमेवाङ्गीकरणीयः। 'सम्बन्धो हि द्विष्ठः' इति एकक्रियायां तत्सम्भावना नास्ति[1]।

अयमाशयः— एकस्य वस्तुनः स्वभाव एकविधो भवति। यद्यपि क्रिया व्यापाररूपा, व्यापारभेदवशात् क्रियाभेदः सम्भाव्यते, क्रिया च समवायसम्बन्धेन द्रव्येण सहाविभक्तरूपेण प्रतीयते, क्रियास्वभावोऽयम्। क्रियाभेदवादिनः कणादमतानुसारिण आचार्या अप्येवमेव स्वीकुर्वन्ति।

अनेन रूपेण शैवदर्शने वस्तुमात्रस्याभाससारत्वमङ्गीकृतम्। आभाससारवस्तुवादिनां मते आभासस्य भेदः स्वीकृतः। अनेन चाभासस्वरूपवस्तूनां भेदः सिद्धो भवति। क्रियाया आभासेन सहोपश्लेषरूपः सम्बन्धोऽस्ति, येन क्रियाया एकत्वं सिद्ध्यति। क्रियाया एकत्वं विनोपश्लेषसम्बन्धः कथमिव स्यात्? वस्तुप्रतीतिरेव वस्तुस्वरूपम्[2]।

एकमनेकस्वभावं कथं स्याद्? इति, तत्रोक्तम्— चित्स्वभावस्य दर्पणस्येव एकतानपबाधेनाभासभेदसम्भवे क इव विरोधः? इति, तस्मात् प्रत्यभिज्ञानबलाद् एकोऽपि पदार्थात्मा स्वभावभेदाद्विरुद्धान् यावद् अङ्गीकुरुते, तावत्ते विरोधादेव क्रमरूपतया निर्भासमानास्तमेकं क्रियाश्रयं सम्पादयन्ति[3]।

आभाससारं चिद्रूपं सहैव परस्परविरुद्धमनेकाकारं स्वभावभेदं सङ्गृह्णाति। आभाससारः पदार्थः क्रमिकभासमानो भवति। अयञ्चाभाससारश्चिद्रूपपदार्थः

१. एका क्रमिका च क्रिया, आश्रयस्य च तद्योगे कथमेकस्वभावता? सम्बन्धश्च द्विष्ठादिरूप एकः कथम्? (ई.प्र.वि., पृ. २)

२. क्रियां च व्यापाररूपामपि समवायिबलादविभागेन प्रतीयमानां स्वभावकल्पामिच्छन्ति क्रियाभेदवादिनोऽपि। इह पुनराभासवस्तुवादे भेदप्रतीतेर्यदेकोपश्लेषरूपमेकसम्बन्धित्वं क्रियायास्तदेकतयैव युक्तम्, प्रतीतिसारो यदि भावस्तत्प्रतीतिमुल्लिख्य भेदेन कथं शपथोऽपि व्यवस्थाप्येतेत्याकूतम्? (ई.प्र.वि., पृ. ४)

३. ई.प्र.वि., पृ. ४५।

परमेश्वरेण सहाभिन्नः क्रमानुसारं भासमानत्वात् क्रियाया आश्रयो भवति। चिद्रूपपरमेश्वरे आभासानां क्रमिकत्वेन युगपच्चाभासनात् परमेश्वरक्रियायां क्रमोऽक्रमश्च भासते[1]।

कालानवच्छिन्ने परमेश्वरे क्रमरूपायाः क्रियायाः सम्भावना कथमिव स्यात्? पूर्वकाल-परकालयोश्चास्तित्वाभावात् क्रमसम्भावनैव नास्ति, अतः परमेश्वरे क्रिया न सम्भाव्यते। प्रसङ्गेऽस्मिन् अभिनवगुप्तपादः कथयति—

हस्तानामुत्क्षेपणावक्षेपणेन हस्तस्य पूर्वोत्तरयोः क्षणास्ते तावत्क्रमवन्तः। क्रियाया हस्तयोरवस्थानाद् उत्क्षेपणमवक्षेपणञ्च सिद्ध्यतः। पूर्वोक्तकार्ये क्रमस्याव-स्थानात् क्रियायाः क्रमरूपेणानुमानं भवति। तत्र केषाञ्चित्त एव क्षणाः, क्रियैका विभागसंयोगनिमित्तभूता केषाञ्चित्तद्धस्तगतोक्तरूपभेदसम्पादिका नित्यानुमेया अपि क्रमिककार्यबलात् क्रमिकैवानुमीयत इति लौकिक्येव भेदविश्रान्ता क्रिया सक्रमा युज्यते।

एतत्सर्वं स्वातन्त्र्यलक्षणया हेतुभूतया आभासविच्छेदप्रदर्शनसामर्थ्य-विशिष्टया कालशक्त्या, यया पारमेश्वर्या शक्त्या नीलाद्याभासभेदः प्रतीयते, सैव शक्तिविशेषरूपा कालशब्देनोच्यते। कालशक्त्यैव भेद उपपद्यते। परिच्छिन्नवस्तुना सह सम्बद्धत्वात् क्रियायां क्रमो भासते। यदा वस्तुसमूहे परमेश्वरे विलीने सति क्रियायां क्रमो न भासते, अहंविमर्शात्मकप्रकाशरूपपरमेश्वरस्वभावोऽक्रमरूपः, कालेन परिच्छिन्नस्य वेद्यसमूहस्य सर्वथा ग्रस्तत्वे कालोऽपि ग्रस्तो भवति, तदा क्रियाऽक्रमरूपा जायते[2]।

भवतु नाम, इदमत्र चिन्तनीयम्– को नाम कालः? किञ्च तस्य स्वरूपम्? वैशेषिकास्तु 'काल एको नित्यद्रव्यविशेषः' इति स्वीकुर्वन्ति। कालस्यैकत्वे संयोगविशेषनिबन्धनविचित्राकारद्रुतविलम्बादिप्रतीतेः कारणमसौ कथं स्यात्? कार्यवैचित्र्यमेकेन कारणेन न सम्भवति। यद्युच्येतैकत्वेऽपि तद्भेदकोपाधिनिबन्धनः कार्यभेदो जायते, अतो न काऽप्यनुपपत्तिः। अस्यां स्थितौ उपाधेरेव कालत्वं स्वीक्रियताम्, तत्पृथग्भूतस्य कालस्य काऽऽवश्यकता? किञ्च द्रव्यद्वयस्यैव संयोगो

---

१. 'अनेकाभासभेदरूपतामनपबाधमानो न विरोधमावहति' इत्युक्तेर्निर्बाधप्रत्यभिज्ञाप्रत्यक्ष-प्रसाधितैकभावः पदार्थ आभाससारस्तथाभूतानेव विरुद्धाकारान् स्वात्मन्युपगच्छन् हठादेव क्रमिकांस्तानाभासभेदानात्मन्यभिन्ने भासयन् क्रियाश्रय इति युक्तमेव। (ई.प्र.वि., पृ. ५)

२. या पुनः प्रभोः प्रकाशात्मनोऽहंविमर्शाख्यस्वभावभूता सा कालावरुद्धसंवेद्यकुलकवलीकरणेन कालग्रासादक्रमैवेति मध्यमायाम्। (ई.प्र.वि., पृ. ७)

भवतीति कालेन सह गुणस्य कर्मणो वा संयोगो न सम्भाव्यते, अतोऽसंयुक्तत्वाद् गुणेन कर्मणा वाऽवच्छेदो न भवितुमर्हति[१]।

अस्मिन् प्रसङ्गेऽभिनवगुप्तपादेनोक्तं यद् भगवतः क्रमावभासनशक्तिरेव कालः। कालशक्त्या सह प्रकाश्यपदार्थसमूहो मायया प्रमात्रा सह सम्बद्धो भवति, कालशक्त्याऽवभास्यः पदार्थो मायायाः प्रमातुर्वा विषयो भवति। चितिरेव मायायाः प्रमातुर्वा स्वरूपम्। कालविषये ईश्वरप्रत्यभिज्ञायामुक्तं यद् वस्तुतोऽयं क्रमरूपः। कालोऽयं सूर्यादिसञ्चारक्रियात्मकः पुष्पादीनामुत्पत्तौ शीतादिरूपः। यथा परिवर्तकेन सुवर्णादिपरिमापनं क्रियते, किन्तु अत्रान्योन्याश्रयो भवितुमर्हति।

सुवर्णेनापि परिवर्तकस्य परिमापनं भवतीत्यन्योन्याश्रयः, परं नेयमापत्तिर्यतः परिवर्तकादेः परिमाणं नियतमस्तीति नापत्तेरवसरः। परिवर्तकपरिमाणादेर्नियतत्वादनवस्थादोषोऽपि नास्ति। एवमेव सूर्योदयास्तादिक्रियापरिमाणमपि प्रसिद्धम्, तेन च चैत्रगमनं परिमितं भवति, अत उच्यते— दिवसं चैत्रो गच्छति। उदयास्तगमनरूपप्रसिद्धदिवसमभिलक्ष्य प्रसिद्धपरिमाणक्रियया चैत्रगमनक्रियायाः परिमाणं भवति। प्रसिद्धनालिकाभिरादित्यक्रिया मीयतेऽतो नियतस्वभावविशेषः क्रम एव काल इति[२]।

यो ह्याभाससमूहः परिच्छिन्नो भूत्वा तन्मात्ररूपेणावस्थितः, स एवाभाससमूहः कालः। यथा सूर्यचन्द्रयोः क्रियायां क्रमाभासः, एवमेव आम्रमुकुले

---

१. ननु कोऽसौ कालः? यो भावानामवच्छेदक उच्यते। यो हि कैश्चिद् नित्यद्रव्यविशेषात्मा उपगतः, स एकत्वात् संयोगविशेषात् चित्राकारचिरक्षिप्रादिधीहेतुः कथम्? उपाधिबलात् तथाभिधाने त एवोपाधयः सन्तु, किन्तेन गुणक्रमादेश्च तेनासंयुक्तस्य न कालावच्छेदो भवेत्, इत्याशङ्क्य भगवत एव शक्तिः क्रममवभासयन्ती कालशक्तिः, तदवभास्यश्च मायाप्रमातृसंलग्न एव प्रधानतया भवेन्नैतद्विषयीकरणभावनिष्ठः क्रम एव कालः।
(ई.प्र.वि., पृ.४)

२. कालः सूर्यादिसञ्चारस्तत्तत्पुष्पादिजन्म वा।
शीतोष्णे वाऽथ तल्लक्ष्यः क्रम एव स तत्त्वतः।।
नियतपरिमाणं यत्परिवर्तकादि तेन कनकं मीयते, न चात्रानवस्था, अन्योन्याश्रयो वा। तद्वत्प्रसिद्धपरिमाणया क्रिययाऽर्कोदयास्तमय्या चैत्रगमनम्। तदुच्यते-दिवसं चैत्रो गच्छतीति आदित्यक्रिया अपि यदा परिमित्सिता भवति, तदा प्रसिद्धाभिर्नालिकाभिर्मीयते—त्रिंशतं नालिकाः सूर्या दृश्यन्त इति। तेन यस्य यत्र यदा आभासवर्गो य इयत्तया परिनिष्ठितश्चन्द्रसूर्यशीतोष्णकोकिलसम्मदादेः, तस्य तत्र तदा स एव कालः। तेन सूर्यादिगतो यो नियतः स्वभावभेदः, स क्रमः, स एव कालः। (ई.प्र.वि., पृ. ४-५)

कुटजादिपुष्पोद्गमे च क्रमाभासः, शीतोष्णादिषु ऋतुषु च क्रमाभासः, कोकिलादेः सम्मदादिषु कण्ठस्वरविकृतिरूपः क्रमाभास एव कालः। अतो यस्य पुरुषस्य यस्मिन् देशे चन्द्रसूर्ययोः शीतोष्णादिषु कोकिलसम्मदादीनां क्रमाभाससमूह इयत्तया परिच्छिद्यते, तस्य पुरुषस्य कृते तद्देशे तत्क्रमाभास एव तस्य कालः, अर्थात् क्रमाभास एव कालः। अतो वैशेषिकानां मतेऽपि क्रमरूप एव कालः।

वैशेषिकाः कथयन्ति यत् सूर्यसम्भ्रमणादिनाऽन्यः प्रवहणधर्मा कालः लक्षितो भवति। अस्मिन् काले प्रवहणधर्मः प्रतीयते। कालोऽयं नवपुरातनत्वादिरूपः, परत्वापरत्वविभक्तः, अर्थाद् देशकृतं परत्वापरत्वं कालकृतं परत्वापरत्वं प्रतीयते। देशकृतं परत्वापरत्वं सन्निहितविप्रकृष्टशब्दाभ्यामभिधीयते, कालकृतञ्च परत्वापरत्वं ज्येष्ठकनिष्ठ-त्वाभ्यामुच्यते। कालोऽयं द्रव्यात्मकः। पूर्वोक्तपरस्परासङ्कीर्णभाव-समूहस्वभावोत्थापकरूपेण नवपुरातनत्वादिरूपेण योऽयं कालः प्रदर्श्यते, असौ प्रत्यभिज्ञादर्शनानुसारं क्रमरूप एव। कापिलमते कालो रजःस्वभावः, रजोगुणस्य प्रवर्तनात्मकत्वात्। वैयाकरणमते कालो नित्यानाश्रितप्रवृत्तिस्वभावः। उक्तं हि वाक्यपदीये—

क्रियान्तरपरिच्छेदे प्रवृत्ता या क्रियां प्रति।
निर्ज्ञातपरिमाणा सा काल इत्यभिधीयते।।
ज्ञाने रूपस्य सङ्क्रान्तिर्ज्ञानेनैवानुसंहृतिः।
अतः क्रियान्तराभावे सा क्रिया काल इष्यते[1]।।

भर्तृहरिस्तु शैवागममनुहरति। स स्वातन्त्र्यशक्तिरूपत्वेन कालं गृह्णाति, शक्तिरूपेणाङ्गीकरोति च। यथा—

अव्याहतकलां यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः[2]।।

कालाख्येन हि स्वातन्त्र्येण सर्वाः परतन्त्रा जन्मवत्यः शक्तयः समाविष्टाः कालशक्तिमनुपतन्ति। ततश्च प्रतिभावं प्रतिबन्धाभ्यनुज्ञाभ्यां शक्त्यवच्छेदेन क्रमवानिवावभासोपगमो लक्ष्यते। सर्वेषां हि विकाराणां कारणान्तरेष्वपेक्षावतां प्रतिबन्धजन्मनामभ्यनुज्ञया सहकारिकारणं कालः। कालस्य प्रतिबन्धलक्षणैका शक्तिर्भावानामदर्शनं करोति। भावाभासविधायिनी अनुज्ञालक्षणा द्वितीया

---

१. वा.प., कालसमुद्देशे, का. ७७-७८।
२. तत्रैव - १।४।

शक्तिर्भावानामुन्मीलनं करोति। जायते, अस्ति, विपरिणमते, अपक्षीयते, विनश्यतीति आचार्यवार्ष्यायणिप्रोक्ताः षड्भावविकारा एतयोरेव क्रियाः। एताभ्यामेव जगद् विपरिवर्तते। अत एव कालं लोकयन्त्रस्य सूत्रधारं प्रचक्षते। स्वातन्त्र्यकल्पनाया मूलं तु 'स्वतन्त्रः कर्ता' (१।४।५४) इति पाणिनिसूत्रमिति केचित्[१]।

आचार्याभिनवगुप्तस्तु कालशक्तेर्व्याख्यानमेवं कुरुते—'मायाविषये भगवतः सम्बन्धिन्याः कर्तृशक्तेः कालक्रमावभासनं नाम व्यापारः, न तु शुद्धसंविन्मात्रत्वे तदवभासनम्। तथा हि यः कालक्रमो व्यवहारसिद्धः—'इदं मतं न भाति, भात्येकं रसम्, भातीष्यते' इत्यादिर्भूतादिरूपो भावानामन्योन्यसहभावेनोपलभ्यमानत्वम्, तत्त्वस्य यदवभासनम्, यत् संविदमित्थं विमर्शनमप्रतिहितम्, यदहममुनाऽपि रूपेणेत्थं प्रकाशमित्येवंरूपश्च व्यापारः कर्तव्यं यस्याः पारमेश्वरस्वातन्त्र्यशक्तेः, सा कालोत्थापकत्वाद् भगवतः कालशक्तिरित्युच्यते'[२]।

हेलाराजैस्तूक्तम्—'विश्वात्मा एक एव परब्रह्माभिधानः सत्यो भावः। स एव नानाविधकार्यकारितयाऽनन्तशक्तित्वेन व्यवह्रियते। तथा च क्रमिकान् चक्रभ्रमवत् परावर्तमानान् भावान् प्रकाशयन् कालयति भूतानीति काल इत्युच्यते। स विभुः स्वतन्त्रः। अत एव 'स्वातन्त्र्यशक्तिः कालः' इति वाक्यपदीये सिद्धान्तितम्'[३]।

अपरे कालः, नियतिः, विद्या, रागश्चैतानि मायातस्तत्त्वपञ्चकानि भवन्ति, तेषु कालतत्त्वमेव प्रथममिति वदन्ति। अन्ये च पुनः शक्तिः शिवस्य धर्मः। सा शक्तिर्द्विविधा—कालशक्तिः, भक्तिशक्तिश्च। तत्र कालशक्तिः कलारूपेण विश्वनिर्माणे हेतुः, वासनारूपेण च प्रवृत्तेः कारणमित्याहुः।

वीरशैवमते मायायाः सर्वाणि कार्याणि कालशक्तावन्तर्भवन्ति[४]। विविधशैवतन्त्रेषु कालक्रिया विभिन्नरूपेण दृश्यते; किन्तु कालस्य शक्तित्वं सर्वसाधरणानुगतधर्मः। कालः शक्तिः, विश्वात्मा च कालः।

अन्यमतदिग्दर्शनमात्रं कृतं पुनः शैवदर्शनस्य कालविषयकं विवरणं प्रस्तूयते। स्वप्नसङ्कल्पमायेन्द्रजालप्राये चेतनस्याभासवर्गे क्रमस्येयत्तानियमो

१. Abhinavagupta; An Historical and philosophical study, Vol. 1, P. 203-204.
२. ई.प्र.वि., भागः-२, पृ. ८।
३. वा.प., कालसमुद्देशे, चतुर्दशतमकारिकाव्याख्यायाम्।
४. A Handbook of Virashaivism.

हरिश्चन्द्ररजनीवृत्तान्तक्रमस्येव संविच्छक्तिरेव प्रतपति। परमेश्वरस्य ज्ञानशक्तिरेव चिद्रूपाभाससमूहात्मकं विश्वं प्रकाशयति। विचित्राभासाश्रित एव क्रमः। दिवसे जातो मध्याह्ने जात इति सूर्यसञ्चारक्रमस्यैव कारणताप्रतीतिः सिद्धा, न तु नित्यद्रव्यात्मनः परिनिष्ठितरूपस्य कस्यचिदिति दिवसकालादयोऽपि क्रमं परित्यज्य नातिरिक्ता इति। अतो वैशेषिकाणामपि नित्यद्रव्यरूपसिद्धस्वभावः कालो नास्ति, अपि तु क्रम एवाभासनेऽनुप्रवेशस्वभावः कालः[१]।

वैशेषिकदार्शनिका यद्यपि कालस्य द्रव्यरूपत्वं स्वीकुर्वन्ति, तथाप्यसौ प्रवहणधर्मा। प्रवहणधर्मयुक्तत्वाद् नवत्वं पुराणत्वं परत्वमपरत्वञ्चोत्थापयन्ति, अतो नास्त्यावश्यकता क्रमरूपकालस्वीकारस्येति चेत्? प्रवहणधर्मत्वस्वीकारे प्रकारान्तरेण क्रमरूपतैवागच्छति। क्रमं विना प्रवहणधर्मा न कोऽपि भवितुमर्हति। पूर्वोक्तक्रमः परमेश्वरस्याभासनक्रियायामनुप्रविष्टः।

येन कलति क्षिपति परिच्छिनत्ति स कालः। क्रिया च परिच्छेद्या। कालः कथं परिच्छेदको भवितुमर्हति, परिच्छेद्येन परिच्छेदो न भवति। यद्युच्येत परिच्छेद्यायाः क्रियायाः क्रियान्तरेण परिच्छेदो भवति, तदा परिच्छेदकक्रियान्तरे कालशब्दप्रतीतिरिति। सूर्यगतक्रिया नालिकास्रुतिरूपक्रियया परिमापिता भवति, तदा नालिकास्रुतिरूपक्रियायाः कालरूपेण प्रतीतिर्भवति; किन्त्वेवं स्वीकारे द्वितीयक्रियायाः क्रियान्तरेण परिच्छेदस्तस्या अपि अन्येनेत्यनवस्थापत्तिः स्यात्। एतादृशी आपत्तिर्न सम्भवति, यतः कनकपरिवर्तकदृष्टान्तेन कृतमनवस्था-समाधानम्।

पूर्वपरिनिष्पन्नध्रुवकल्प्यप्रसिद्ध्यन्तरोपजीवनेन च कालो व्यह्रियते। सर्वैरपि व्यवहारे प्राक्सिद्धवस्तुस्वरूपोपजीवनेनैव परवर्तिनोऽनुरूपवस्तुनः परिच्छेदः क्रियते। यथा भोजनानन्तरं तृप्तिलाभोऽपि पूर्वानुभूतभोजनानन्तरतृप्तिसम्बन्धेनैव क्रियते। संविदेव हि प्राणनक्रियया प्राक्कालमुल्लासयेत्। महाप्रलये च ब्रह्मणि स्वपत्यपि तन्निःश्वासोच्छ्वासादिक्रिययोत्तरविष्णुरुद्रप्रभृतिकारणवर्णतया च क्रियया कालव्यवहारः[२]।

भगवतः कालशक्तेरभिव्यक्तिदशायां यद्याभासभेद उत्पद्यते, तदाऽवगन्तव्यं यत् कालस्योन्मेषः सञ्जात इति[३]। भगवति तु न कालव्यवहारः कश्चित्। तच्छक्तौ तु मायायां प्रभवत्याभासभेदश्चेदुत्थितस्तत्क्रमात्मा कालोऽपि विजृम्भित एव।

---

१. ई.प्र.वि., पृ. ५; २. तत्रैव, पृ. ५-६।
३. तत्रैव, पृ. ६।

कालप्रतीतिर्हि प्रमेयाणां पदार्थानां प्रतीतिमवच्छिनत्ति। प्रमेयं हि प्रमीयमाणमेव नान्यथा भवति। यावदासीत्, अस्ति, भविष्यति, इत्यमुना रूपेण क्रमात्मा नानुगृहीतः। तेन प्रतीतिद्वारेण समस्तक्रियाऽवच्छेदकत्वं कालस्येति[1]।

क्रम एव हि विशिष्टः परत्वापरत्वलक्षणां पुरातन-नूतनस्थितिं दर्शयन् सन्तताभ्यां परत्वापरत्वव्यवहाराम्, अन्यथाऽचिरव्यवहाराम्, स्वरूपेण क्रमस्थितिं भावान्तरोपाश्रयेणानेकभावपरिच्छेदेन यौगपद्यं मूर्तिकृतदूरत्वादूरत्वरूपाभ्यां परत्वापरत्वाभ्यां सङ्कीर्यमाणतया भावेन विदधत् काल इत्युच्यते[2]।

प्रदर्शितप्रकारेण नित्यत्वैकत्वे यदि व्यवह्रियेते, द्रव्यत्वं च स्वातन्त्र्यारोपणेन तदा कणादप्रदर्शितमतेऽपि न हानिर्यतः प्रत्यभिज्ञादर्शन-सिद्धान्तशरणभावगमनात्। यद्युच्येत वसन्तादिप्रसिद्धस्य कालस्य कथं क्रमात्मत्वम्, यतो मीनमेषराशिसञ्चरणनिमित्ता सूर्यस्योदयादिक्रिया वर्तमाना 'वसन्त' इत्यनुभूयते, न तु स वसन्तकालोऽर्कस्य क्रमरूपः स्यान्नाम, परमाम्रमुकुलोद्भेदेनाम्रमञ्जरीनिर्गमनस्यैव कालरूपेण भासमानत्वात्।

अस्मिन् प्रसङ्गे अभिनवगुप्तपादैरुक्तं यद् मापकरूपेण परिच्छेदः कनकस्यात्मस्वरूपमेव, तस्मात् पृथङ् नास्ति, स्वर्णपरिच्छेदावगत्यर्थमुप-लक्षणमात्रमेवैतत्। एवमेवाम्रमञ्जर्या आभास उपान्तरत्व-ग्राह्यत्व-बाह्यत्वादिभासानां कोरकमुकुलपिकस्वरादिवैजात्यभाजां योनिजः क्रमः, स एव वसन्तः, अर्कोदयस्तावदुपलक्षणमात्रम्[3]।

वसन्तादिशब्देभ्यो क्रममेव सिद्धरूपं वस्तु प्रतिपत्तिपथमभ्येति, न क्रमः। यथा आख्यातपदादेव हि भूतादिकालः प्रतीयते नान्यतः, तद्वत् तत एव क्रियास्वरूपहृदयप्रविष्टः कालः। भविष्यदाख्यातपदेन भविष्यत्कालः, अभवदित्याख्यातपदेन भूतकालः, वर्तमानाख्यातपदेन वर्तमानकालः, इत्येकस्मिन्नेव दिने मिश्रितः सन् न भासते। यत आख्यातपदैः केवलं कालस्यैवोन्मेषो भवति। वर्तमानभविष्यदादिशब्दार्थस्तु सिद्धरूपं दिनम्। दिनविशेषणरूपेण विश्रान्तिप्राप्तिरेव तस्य स्वभावः।

परिनिष्पन्नदिनविशेषणरूपेण पूर्वोक्तशब्दार्थद्वयं प्रतीयते। साध्यक्रियारूपेण नेमे प्रतीयेते। यस्मात् क्रियाशरीरान्तरानुप्रवेशवशोन्मिषितशरीरः क्रम एव कालः।

---

१. ई.प्र.वि., पृ. ७; २. तत्रैव, पृ. ७-८।

३. तत्रैव, पृ. ८।

अत एव वार्ष्यायणिमतं सङ्गच्छते। यत्किल भावविकारषट्कक्रमपरमार्थ एव कालः। न हि भावविकाराधिका काचित् क्रियाऽस्ति। यथोक्तम्—

'जन्मादयो विकाराः षड् भावभेदस्य योनयः'[१]। इति।

क्रमरूपस्य कालस्य सूर्यादिसञ्चरणेन स्वभावभेद एव कारणम्। स्वभावभेदो न स्वभावः। यदि स्वभावभेदमात्रं क्रमात्मा कालः स्यात्तदाऽङ्गुलीयचतुष्टयं भिन्नस्वभावमिति भिन्नकालं भवेत्। तस्मादरुणाभासस्य सद्भावः स्फुटप्रभापुञ्जस्य चासद्भाव इत्येवम्भूतो यो भेदः सद्भावासद्भावाभ्यामनुप्राणितस्तत्कृतः क्रमः कालात्मा। अवभासनक्रियायामनवभासनक्रियायाञ्चेश्वरस्य पूर्णस्वातन्त्र्यम्, एतत्स्वातन्त्र्यमेव परमेश्वरस्यैश्वर्यमुक्तम्। स हि भगवान् वैचित्र्येणाभासान् करोति। यथा दृढलोहितोन्नतघटाभासान् सामानाधिकरण्येन परस्परं घटाभासं पटाभासञ्चैकरसे आभासनं कारयति, एवमेवाभासनं प्रतिबध्नातीत्येव तस्य स्वातन्त्र्यम्। तथा च क्रमस्योन्मेष एव कालशक्तिः[२]।

अथ च वैचित्र्यं विभेदः, यथा सुगृहमित्यन्यत्। प्राङ्गणमित्यन्यत्, देवकुलमित्यपरमित्यादिवैचित्र्यादाभास्यमानाद् देशरूपो दूरादूरविततत्वावितततत्वादिक्रमो भगवताऽवभास्यते। कालविषयिणी महती चर्चा प्रत्यभिज्ञादर्शने विद्यते। क्रियावैचित्र्यनिरूपणेऽपि महती शास्त्रचर्चा कृता। अर्थादीश्वरो विरोधमविरोधञ्च स्वातन्त्र्यादवभासयन् कालाख्यं क्रममेकस्य विरुद्धरूपतयाऽनुचितमप्यवभासयतीति सङ्क्षेपः।

वाक्यपदीयेऽपि कालसमुद्देशप्रकरणे ब्रह्मविवर्तरूपं विश्वं क्रमरहितमपि क्रमरूपेण प्रतीयते। तस्य यदिदं क्रमेणावभासनम्, तत्कालशक्तिकृतप्रतिबन्धाभ्यनुज्ञासामर्थ्यम्। कालरूपा हि ब्रह्मशक्तिरभिधैव क्रमावभासकारितया जीवात्मसु सफलेति। तद्यथा—

निर्भासोपगमो योऽयं क्रमवानिव दृश्यते।
अक्रमस्यापि विश्वस्य तत् कालस्य विचेष्टितम्[३]।। इति।

अग्रेऽप्युक्तं यद् दूरोऽयमध्वा निकटोऽयमिति कर्तृगतभेदेनाध्वनि व्यवस्था, न तु कश्चिदत्र मार्गभेदो विद्यते। य एव मन्दमतीनां दूरः, स एव चतुरचेष्टानामासन्नोऽध्वा। एवं स्थायिन्यपि काले प्रचितसन्तानक्रियोपाधिश्चिरमिति व्यवस्थापनम्। अपचितसन्तानक्रियोपाधिः क्षिप्रमिति। तथोक्तम्—

---

१. ई.प्र.वि., पृ. ८-९; २. तत्रैव, पृ. ९-१०।
३. वा.प., कालसमुद्देशे, का. ४६।

दूरान्तिकव्यवस्थानमध्वाधिकरणं यथा।
चिरक्षिप्रव्यवस्थानं कालाधिकरणं तथा[१]।। इति।

अयमाशयः—अभिन्नेन कालेन व्यवहर्त्तुमशक्यत्वाल्लोके त्रयो भेदा इव क्रियारूपोपाधिनिबन्धन एव लोकव्यवहारे कालेन व्यवहारो न भवितुमर्हति, परमार्थतः कालस्यैकत्वादतः क्रियोपाधिक एव भूतादिव्यवहारः, अतोऽखण्डकालस्यैव क्रियाकृतो लोकव्यवहारः, क्षणप्रवाहरूपेण प्रवर्तमानायां तस्यां वर्तमानोऽयं मुख्य एव। यथा चोक्तम्—

तस्याभिन्नस्य कालस्य व्यवहारे क्रियाकृताः।
भेदा इव त्रयः सिद्धा याँल्लोको नातिवर्तते[२]।। इति।

कार्यभेदे कारणभेदस्यानुमानं भवति, शक्तिभेदाच्च कार्यभेदोऽप्युपपद्यते। कालस्य जगत्कारणस्य मुख्यो भेदो नास्ति। वर्तमानशक्तिसम्बन्धेन सतामेव भावानां जन्याऽभिव्यक्तिः। अतीतानागतकालशक्तिसम्बन्धेन तु सतामेव तिरोभावो दर्शनमभिव्यक्तिर्विनाशः प्राक्प्रध्वंसाभावरूप एवेति शक्तिभेदात् कार्यभेदोपपत्तौ कालभेदकल्पना निर्निमित्तैव। यथोक्तम्—

एकस्य शक्तयस्तिस्रः कालस्य समवस्थिताः।
यत्सम्बन्धेन भावानां दर्शनादर्शने सताम्[३]।। इति।

अतीतानागतशक्तिभ्यां सतां भावानां तिरोधानं कालः करोति, वर्तमानशक्त्या च कालः पदार्थानां प्रकाशनं करोति। यथोक्तं श्रीभर्तृहरिणा—

द्वाभ्यां स किल शक्तिभ्यां भावानां वरणात्मकः।
शक्तिस्तु वर्तमानाख्या भावरूपप्रकाशिनी[४]।। इति।

एष प्रश्नोऽत्रोदेति यद् भविष्यत्कालरूपशक्त्या यत्र पदार्थानां तिरोधानं तत्र वर्तमानकालशक्त्याऽऽवृतपदार्थानामभिव्यक्तिर्जायते, एवमेवातीतशक्त्याऽऽवृतपदार्थानां वर्तमानकालशक्त्या पुनरभिव्यक्तिः कथं न जायते? पदार्थानां जन्मसहचरिता वर्तमानकालशक्तिस्तस्या अनागतकालशक्तिरविरोधिनी, अतः पदार्थानां वर्तमानकालोत्पत्तिसम्बन्धेन सहचरिता कालरूपा शक्तिर्नास्ति, अत एव वर्तमानकालरूपशक्तिसम्बन्धेन यदा पदार्थानामुत्पत्तिर्भवति, तदा वर्तमानकाल-

---

१. वा.प., कालसमुदेशे, का. ४७; २. तत्रैव, का. ४८।
३. तत्रैव, का. ४९; ४. तत्रैव, का. ५०।

शक्तेरनागतकालशक्त्या प्रतिघातो न भवति; अपि तु पदार्थानामुदयकाले वर्तमानकालशक्तिरनागतकालरूपशक्त्या प्रतिबद्धा तिष्ठति।

समर्थहेतुसम्पाते तु वर्तमानशक्तेरुदयानुकूल्यमनागतशक्तिर्भजते। या हि कालान्तरे वर्तमानता सैवैकाऽनवगता कथ्यते, अतीतशक्त्या तु जन्यशक्तिर्वर्तमानाख्या विरुध्यत एव। न हि भूतस्य वस्तुनः पुनर्जन्मेति। तदेवोक्तं श्रीहरिणा—

अनागता जन्मशक्तेः शक्तिरप्रतिबन्धिका।
अतीताख्या तु या शक्तिस्तया जन्म विरुध्यते[१]।। इति।

योगदर्शने तु कालस्य बुद्धिनिर्माणत्वं दृश्यते। बुद्धिधर्मश्च विषयरूपानुपाती। विषयभूतक्षणगताल्पत्वमहत्त्ववशेन चिरक्षिप्रादिभावो बुद्धिसङ्कलनस्य कालरूपस्य व्यवह्रियते। यथोक्तं योगसूत्रे व्यासभाष्ये (३।५२)—

'स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते। क्षणस्तु वस्तुपतितः क्रमावलम्बी। क्रमश्च क्षणानन्तर्यात्मा। तं कालविदः काल इत्याचक्षते योगिनः'।

योगवासिष्ठेऽपि कालस्य बौद्धिकी एव सत्ता स्वीक्रियते। यथोक्तम्—

विप्रसङ्कल्पमात्रोऽसौ कालो ह्यात्मनि तिष्ठति[२]।
देशदैर्घ्यं यथा नास्ति कालदैर्घ्यं तथाऽङ्गने[३]।।

निमेषे यदि कल्पौघसंविदं परिविन्दति।
निमेष एव तत्कल्पो भवत्यत्र न संशयः।।

काले यदि निमेषत्वं वेत्ति कल्पोऽप्यसौ ततः।
निमेषी भवति क्षिप्रं तादृग् रूपात्मिका हि चित्[४]।। इति।

सर्वैर्दार्शनिकैः स्वीकृतमेव यदियं कालगतिर्दुर्विज्ञाना विचित्रा चास्ति, अतो मनीषिभिरेवात्र यतितव्यम्। अस्माभिस्तु 'महाजनो येन गतः स पन्थाः' इत्यभियुक्तोक्तिमाश्रित्य स्वानुभवप्रतिपादनपूर्वकं काऽपि दार्शनिकचर्चा कृता, यस्या युक्तायुक्तत्वविचारे विद्वांस एव प्रमाणमिति।

●

---

१. वा.प., कालसमुद्देशे, का. ५१; २. योगवासिष्ठे - ५।४९।४।
३. तत्रैव - ३।२०।२८; ४. तत्रैव - ३।६०।२०-२१।



राजकीयसंस्कृतमहाविद्यालयस्य स्वनामधन्याः
प्राचार्याः डॉ. ए. वेनिसमहाशयाः

# शाब्दिकी सुषमा

श्रीमत्पाणिनिदेशिकेश्वरमुखाम्भोजप्रसादोद्भवा
श्रीकात्यायनवार्तिकोक्तिविलसत्सिद्धान्तसन्दोहभूः।
श्रीमद्वामनकैयटप्रभृतिकैराचार्यवर्यैर्नुता
भूयो व्याचरिकर्ति कापि सुषमा सा शाब्दिकी वाङ्मयम्॥

# भावप्रधानमाख्यातम्

**श्रीविश्वनाथमिश्रः**
पूर्वप्राचार्यः,
बीकानेरस्थ-राजकीयसंस्कृतमहाविद्यालयस्य,
पूर्वविभागाध्यक्षः, जैनदर्शनस्य
जैनविश्वभारतीसंस्थानम्, लाडनूँ

❀ ❀ ❀

ननु किमिदमाख्यातं यत्र चिकीर्षितं प्राधान्यं भावस्य? दृश्यते तावत्– 'आख्यातमाख्यातेन क्रियासातत्ये' इति। मयूरव्यंसकादिगणसूत्रे आख्यातपदं तिङन्तपरम्। अत एव 'पचतभृज्जता', 'खादतमोदता' इत्यादीनि तदुदाहरणानि समुपलभ्यन्ते। वैयाकरणभूषणसारे तु कर्तृकर्मणोस्तिङर्थत्वसाधनक्रमे लिखितम्— नन्वनयोराख्यातार्थत्वे किं मानमिति। अत्राख्यातपदेन तिङां ग्रहणं कृतं वर्तते। तिङ्वाच्यसंख्यायाः कर्तरि प्रत्यये कर्तरि, कर्मप्रत्यये च कर्मणि विशेषणत्व-मभ्युपगच्छता व्यलेखि तत्र—आख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यता-सम्बन्धेन शाब्दबोधं प्रति आख्यातजन्योपस्थितिः कर्तृकर्मणोः कारणमिति।

अत एव न्यायसिद्धान्तमुक्तावल्यां लिखति विश्वनाथः—वैयाकरणै-राख्यातस्य कर्तरि शक्तिरुच्यते तच्च गौरवात् त्यज्यत इति। अत्र स्थलद्वये आख्यातपदं तिङो बोधकं दृश्यते। रीत्याऽनया स्पष्टं भवति यद् वैयाकरणसम्प्रदाये आख्यातपदं तिङः तिङन्तस्य च बोधकं वर्तत इति। प्रस्तुतनिबन्धे चाख्यातपदं तिङन्तबोधकमभिप्रेतमस्ति।

प्रधानत्वेन विवक्षितो भावश्चात्र व्यापाररूपार्थकः। उक्तञ्च 'व्यापारो भावना चैवोत्पादना चैव सा क्रिया' इति। तात्पर्यमिदं यद् व्यापारो भावो भावना, उत्पादना, क्रियेत्यादयः शब्दाः सन्ति पर्यायवाचिनः। अतोऽत्र भावपदार्थः क्रियेत्यवगन्तव्यम्। स च भावः कुत्र प्राधान्यं भजत इति प्रश्ने शाब्दबोधस्थल एव तस्य प्राधान्यमिति वेदितव्यम्। शाब्दबोधो हि निखिलशास्त्रोपयोगी। स च शब्दजन्यबोधात्मकः। किन्तु कस्माच्चिदपि शब्दात् कस्याप्यर्थस्य बोधस्तावन्न भवति, यावत् तस्मात् तदर्थस्योपस्थितिर्न भवति। एवं तस्माच्छब्दात्

तस्यार्थस्योपस्थितिरपि तावन्न भवति, यावत् तदर्थनिरूपिता शक्तिस्तस्मिन् शब्दे गृहीता न भवेत्।

इदमत्रावधेयम्— यदर्थनिरूपिता शक्तिः पदे तिष्ठति, न त्वस्य पदस्यास्मिन्नर्थे शक्तिरिति विधेया भ्रान्तिरपि कदाचित्। शक्त्याश्रयत्वादेव पदं शक्तमित्युच्यते। एवञ्च पूर्वं शक्तिग्रहः, तत उपस्थितिः, ततः शाब्दबोध इत्यस्ति शक्तिग्रहपदार्थोपस्थितिशाब्दबोधानां पौर्वापर्यक्रमः। तत्र यत्प्रकारकयद्विशेष्यक-शक्तिग्रहो जायते, तादृशी एव ततः समुपस्थितिस्तथा शाब्दबोधोऽपि तत्प्रकारकस्तद्विशेष्यक एव भवति। यथा घटपदे घटत्वप्रकारकघट-विशेष्यकार्थनिरूपिता शक्तिर्गृहीता वर्तत इति गृहीततादृशशक्तिकस्य श्रोतुर्जायते घटत्वप्रकारको घटविशेष्यको बोधः 'अयं घटः' इत्येवंरूपेण, न तु घटप्रकारकघटत्वविशेष्यको बोधोऽपि तत्र। उक्तञ्च—

पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलन्तत्र शक्तिधीः सहकारिणी।।

शाब्दबोधे पदज्ञानं करणं भवति, न तु वर्तमानकालिकश्रावणप्रत्यक्ष-विषयतावच्छेदकधर्मावच्छिन्नं पदं शाब्दबोधे कारणम्। अत एव मौनिश्लोकस्य श्रावणप्रत्यक्षाभावेऽपि जायते ततः शाब्दबोधः। तत्र करणन्तु व्यापारवदसाधारणं कारणं भवतीति कृत्वा पदज्ञानस्य को हि व्यापार? इति जिज्ञासायामाह— द्वारं तत्र पदार्थधीः। द्वारत्वञ्च व्यापारत्वम्। तच्च तज्जन्यत्वे सति तज्जन्यजनकत्व-रूपम्। भवति हि पदार्थज्ञानस्य पदज्ञानजन्यत्वे सति पदज्ञानजन्यशाब्दबोध-जनकत्वाद् द्वारत्वम्।

इत्थञ्च पदार्थज्ञानं पदनिष्ठवृत्तिज्ञानाधीनोपस्थितिविषयत्वेनाभिमतमस्ति। अत एव एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति नियमाद् घटपदं श्रुतवतः समवायसम्बन्धेनाकाशस्मरणे जातेऽपि न भवति तद्विषयकः शाब्दबोधः, आकाशोपस्थितेर्वृत्तिज्ञानजन्यत्वाभावात्।

इयन्तु साधारणी प्रक्रिया शाब्दबोधस्य पदार्थबोधात्मिका। वस्तुतस्तु सर्वं वाक्यं क्रियायां परिसमाप्यत इति नियमात् क्रियामन्तरा कीदृशोऽपि निराकाङ्क्ष-बोधो भवितुं नार्हतीति शाब्दबोधपदेन वाक्यार्थबोध एव गृह्यते। तत्र च भवन्ति अनेकानि पदानि, जायते च तेषां पारस्परिकोऽन्वय इति शाब्दबोधस्य नामान्तरम् अन्वयबोधोऽप्यस्तीति वेदनीयम्। एतादृशे शाब्दबोध एव भावस्य प्राधान्य-मध्यवसीयते। यत्र कस्यचित् प्राधान्यं भवति, तत्र कस्यचिदप्राधान्यमपि भवतीति निश्चितमेव। एवञ्चेच्छाब्दबोधस्थले सन्ति कति पदार्था येषां पारस्परिकः प्राधान्या-

प्राधान्यविचारः क्रियत इति जिज्ञासायामवधारणीयमिदं यच्छाब्दबोधस्य मुख्यं साधनमस्ति क्रिया। तद्वाचकश्च भवति धातुः। धातोश्च भवति प्रत्ययस्तिङाख्यः। तत्र तिङर्थधात्वर्थयोर्मध्ये वर्तते मतभेदो वैयाकरणादीनां परस्परम्। तद्यथा नैयायिकास्तावद् धात्वर्थः फलं व्यापारश्चेति वदन्ति। आख्यातार्थः कृतिः (यत्नः) इति ब्रुवते। कथनस्यास्याधारोऽस्ति 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रे कर्तृकर्मपदयोर्धर्मपरत्वस्वीकरणम्। अस्मिन् सूत्रे 'कर्तरि कृत्' इति सूत्रादनुवृत्तं कर्तरिपदं तथा सूत्रस्थं कर्मपदं च कर्तृत्वकर्मत्वेति धर्मपरम्। कर्तृत्वं हि कृतिमत्वं कृतिमत्वञ्च कृतिरेव।

कृतौ शक्तिस्वीकारे तिङः कृतित्वं भवति शक्यतावच्छेदकमिति तच्च प्रत्येकं कर्तरि एकैवेति कृत्वा शक्यतावच्छेदके लाघवदृष्ट्या कर्तृत्वमेवाख्यात-वाच्यम्। कर्तुराख्यातार्थत्वे तु कृतिः शक्यतावच्छेदकं स्यात्। सा च कृतिः प्रत्येकं कर्तरि भिन्ना भिन्नेति शक्यतावच्छेदके गौरवमेव स्यात्। एवमेव कर्मत्वमेवाख्यातार्थः। तच्च फलमेव वर्तते।

यद्यपीदं कथनं न समीचीनं यतो हि यदा फलव्यापारयोर्धातुरित्युक्त्या फलव्यापारौ धात्वर्थावभवतस्तदा पुनस्तिङस्तत्र शक्तिकल्पनमनौचित्यमेवाञ्चति। किञ्च कृतेस्तिङर्थत्वे 'रथो गच्छति' इत्यत्राचेतने रथे चेतनवृत्तेः कृतेरवस्थितिः कथं सम्पादयितुं शक्यते? तथा च कृतिमान् रथ इति शाब्दबोधोऽपि कर्त्तुमशक्य एव। किञ्च 'घटं जानाति' इत्यत्र घटविषयकज्ञानानुकूलकृतिमांश्चैत्र इति बोधोऽपि दुरुपपाद एव नैयायिकमते। यतो हि ज्ञानजन्येच्छाजन्या कृतिर्ज्ञानजनिका कथं भवितुमर्हा? तथाप्यत्र लेखे तदभिमतमुररीकृत्यैव विचारयिष्यते।

मीमांसकाश्च धात्वर्थः केवलं फलमेव, आख्यातार्थः (तिङर्थः) व्यापारः, कर्त्तुः कर्मणश्चाक्षेपाद् बोध इति वदन्ति। शाब्दबोधे व्यापारस्यैव प्राधान्यमुपगच्छन्तोऽपि मीमांसका व्यापारस्य धातुवाच्यत्वमनङ्गीकृत्य तिङ्वाच्यत्व-मङ्गीकुर्वत इति व्याकरणसिद्धान्ततः पार्थक्यमेषाम्।

व्याकरणसम्प्रदायस्यापि नव्यं प्राचीनञ्चेति कृत्वा द्वैविध्यं वर्तते। तत्र प्राचीना वैयाकरणा वदन्ति— फलविशिष्टो व्यापारो धात्वर्थः। फलविशिष्टे व्यापारे धातोरेकैव शक्तिः। कर्तृवाच्ये कर्मवाच्ये चोभयत्र शाब्दबोधे व्यापार एव प्रधानं भवति। किन्तु ग्रामादिकर्मणो ग्रामं गच्छतीत्यादौ गम्धात्वर्थैकदेशे फलेऽन्वयोऽत्र मते दुरुपपाद एवास्ते, पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेत्यभ्युपगमात्। देवदत्तस्य गुरुकुलमित्यादिवद् नित्यसाकाङ्क्षत्वं स्वीकृत्यान्वयस्वीकारेऽप्यनपेक्षितो गौरवभारः सोढव्य एवात्र मते। नव्यवैयाकरणैश्च धातोः फलं व्यापारश्चेति अर्थद्वयम्। तत्र फले व्यापारे च पृथक् पृथक् खण्डशः स्वीक्रियते शक्तिः।

आख्यातार्थः कर्तृकर्मसंख्याकालाश्चात्र मते। कर्तृवाच्ये शाब्दबोधे व्यापारः प्रधानं भवति, कर्मवाच्ये च फलं प्रधानं भवति।

उपर्युक्तविवेचनेनेदं स्पष्टं भवति यत् शाब्दबोधस्थले भवन्ति अनेकतत्त्वानि कर्तृकर्मसंख्याकालफलव्यापारात्मकानि। एषु कस्य कथञ्च प्राधान्यमिति विवेचनात् पूर्वं विचार्यते कोऽयं व्यापार इति। तत्र न तावत् फलप्रयोजकक्रियात्वं व्यापारः, आत्माश्रयदोषग्रस्तत्वात्। क्रियात्वमेव व्यापारः, व्यापार एव च क्रियेति स्वकीय-लक्षणे स्वस्यैव प्रवेश इति आत्माश्रयो दोषः।

किञ्च क्रियात्वस्य व्यापारवत्वे दण्डादिव्यापारस्यापि क्रियात्वापत्तौ धात्वर्थापत्तिः स्यात्। दण्डव्यापारस्य धात्वर्थत्वन्तु नेष्टम्। अन्यथा 'दण्डेन पचति चैत्रः' इत्यत्र दण्डपदोत्तरं प्रथमैव स्यान्न तु तृतीया। कर्तृकरणसंज्ञयोराकडारीयत्वेन परया कर्तृसंज्ञया करणसंज्ञाया बाधेन तत्र तृतीयाया असम्भवात्। किञ्च फलप्रयोजकत्वं साक्षाद् गृह्यते तदा 'भुङ्क्ते चैत्रः' इत्यादौ कर्तृव्यापारस्य धात्वर्थत्वं नैव सिद्ध्येत्, तत्र करणव्यापारद्वारैव कर्त्तुर्व्यापारस्य कृतार्थत्वात्। एवमनेक-शङ्काकुलितत्वमवेक्ष्योक्तं भूषणे— व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया। क्रिया सदा साध्यैव भवति। करणानन्तरं 'पक्वः, गतः' इत्यादौ सा सिद्धत्वं यातीत्यन्यदेतत्। एवञ्च साध्यत्वेनाभिधीयमाना क्रियैव व्यापार इति सुस्थिरम्।

फलत्वञ्च— तद्धात्वर्थव्यापारजन्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वम्। न च ग्रामात् काशीं गच्छति चैत्रे चैत्रनिष्ठव्यापारेण यथा काश्या सह संयोगो भवति, तथैव ग्रामाद् विभागोऽपि जन्यत इति सोऽपि फलत्वं यायादिति वाच्यम्? अत एव फललक्षणे विशेष्यदलं तद्धातुजन्योपस्थितिविषयत्वमिति लिखितम्। न च विभागो गम्धातुजन्योपस्थितिविषयतां भजत इति न किमपि दूषणम्।

उपर्युक्तशाब्दबोधसामग्रीणां मध्ये कस्य कुत्र केन सम्बन्धेनान्वयः? तत्र च कस्य मुख्यं प्राधान्यमिति विचारे वैयाकरणास्तावत् तिङर्थकर्तृकर्मसंख्याकालेषु कर्तृकर्मणी फलव्यापारयोर्विशेषणे भवतः। तत्र कर्त्ता व्यापारे तथा कर्म च फले विशेषणं भवति। संख्या तु कर्तृवाच्ये कर्तरि तथा कर्मवाच्ये कर्मणि विशेषणं भवति। कालस्तु व्यापारे विशेषणं भवति। तथा च संख्याप्रकारकबोधं प्रति वदन्ति ते यदाख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति आख्यातजन्यकर्तृकर्मोपस्थितिः कारणमिति। कर्त्ता च यद्यपि संख्यां प्रति विशेष्यतां भजते, तथापि धात्वर्थव्यापारे सविशेषणं भवति। शाब्दबोधे च मुख्यविशेष्यता व्यापार एवावतिष्ठते। तथा च देवदत्तो ग्रामं गच्छतीति वाक्यस्योपर्युक्तरीत्या भवति शाब्दबोधश्चैतादृशः— देवदत्ताभिन्नैकत्वावच्छिन्नकर्तृवृत्तिर्ग्रामनिष्ठसंयोगानुकूलो वर्तमानकालिको व्यापारः। अयं व्यापारमुख्यविशेष्यको बोधः।

अत्र नैयायिकमतं भिन्नं वर्तते। यत्र वैयाकरणा आख्यातार्थसंख्यायाः कर्तृकर्मणोरन्वयमभ्युपगच्छन्ति तत्र नैयायिकाः प्रथमान्तार्थेऽन्वयं वदन्ति। यद्यपि कर्तृवाच्ये कर्त्तुः प्रथमान्तत्वम्, कर्मवाच्ये च कर्मणः प्रथमान्तत्वं सुतरामेव सिद्धं भवति, तथापि संख्यान्वयं प्रथमान्तार्थें वदतो नैयायिकस्य पार्थक्यं जायत एव शाब्दिकात्। तच्चेत्थम्— आख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितिः कारणमित्युक्ते सति 'चन्द्र इव मुखं दृश्यते' इत्यत्र चाक्षुषप्रत्यक्षानुकूलव्यापारजन्यदर्शनाश्रयाभिन्नं चन्द्रप्रतियोगिक-सादृश्यवदेकत्वावच्छिन्नं मुखमिति शाब्दबोधः स्यात्, अत्र मुखे दर्शनम्, सादृश्यम्, एकत्वञ्चेति विशेषणत्रयं वर्तते। इमानि विशेषणानि यथा मुखे गतानि, तथैव चन्द्र-पदार्थस्यापि प्रथमान्तपदेनोपस्थित्या तत्रापि केवलमेकत्वस्यान्वयः कथं न भवति।

तात्पर्यमिदं यद् यथा मुखे एकत्वमन्वेति, तथा चन्द्रेऽपि तदन्वयो युक्त एव। दोषमिमं वारयितुं यद्युच्यते तस्मिन्नेव प्रथमान्तार्थे संख्यान्वयोऽभिहितो यः खलु कस्मिंश्चिदितरस्मिन् पदार्थेऽन्वितो न भवेत्। वर्तते चात्र चन्द्रोऽन्वितो विशेषणतया इवार्थे सादृश्य इति न तत्र संख्यान्वयः। उक्ते चैवं गौरवं वर्तत एव गौरवग्रस्तमिदं मतम्।

वैयाकरणमतानुसारं तु नेदं दूषणं यतो हि तन्मते तु संख्याप्रकारकबोधं प्रति आख्यातजन्यकर्तृकर्मणोरेवोपस्थितिः कारणं भवति। अत्राख्यातेन तप्रत्ययेन मुखमेव कर्मत्वेनोक्तं न तु चन्द्रोऽपि। तस्मादत्र मते दूषणाभावः।

यदि नैयायिकपक्षः कथ्यते यद् यथा 'धवखदिरौ छिन्धि' इत्यत्र धवखदिरयोरुभयोरेव कर्मत्वसंसर्गेण छेदनक्रियायामन्वयो भवति, तथैव 'चन्द्र इव मुखं दृश्यते' इत्यत्रापि मुखेन सह चन्द्रस्यापि संख्यान्वयः स्यात्। तथा च एकत्वावच्छिन्नसादृश्यप्रतियोगिचन्द्रसादृश्यवदेकत्वावच्छिन्नं मुखमिति जायतां बोधः। ततश्च न किमपि दूषणमत्र मतेऽपि? इत्थमाशङ्कायां द्वितीयदूषणं दीयते— 'देवदत्तो भुक्त्वा व्रजति' इत्यत्र भुक्त्वेति प्रथमान्तेऽव्ययेऽपि तिबर्थैकत्वसंख्याया अन्वयः स्यात्। अत्र भोजनक्रियापूर्वा व्रजनक्रिया चोत्तरकालिकी। देवदत्तः पूर्वं भुङ्क्ते, पश्चाद् व्रजति। तत्र एकत्वावच्छिन्नदेवदत्तवदेकत्वावच्छिन्ना पूर्वकालिक-भोजनक्रिया इत्यप्यनिष्टो बोधः स्यात्। यदीमं दोषं परिहर्त्तुमुच्यते— 'आख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति इतरविशेषणत्वतात्पर्याविषयप्रथमान्तपदोपस्थितिः कारणम्' इति, तदा भुक्त्वेति पदस्य व्रजनक्रियायां विशेषणत्वेन तत्र एकत्वान्वयस्तु न भविष्यति, किन्तु कार्यकारणभाव इतराविशेषणत्वनिवेशनप्रयुक्तं गौरवन्तु दुरुद्धरमेव स्यात्।

व्यापारस्य धात्वर्थत्वं वैयाकरणमते न्यायमते व समानमेव, तथापि शाब्दबोधे व्यापारस्य प्राधान्याप्राधान्यविषये वर्तते तयोर्मतभेदः। वैयाकरणाः शाब्दबोधे व्यापारस्य प्राधान्यं स्वीकुर्वन्ति। कर्त्ता चात्र मते व्यापारे विशेषणतां भजते। तत्र व्यापारो धात्वर्थतया प्रकृत्यर्थः। कर्त्ता च आख्यातार्थ इति प्रत्ययार्थः। प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यं 'पक्ता, पाचकः' इत्यादिप्रयोगेषु दृश्यते, तथैवात्रापि शाब्दबोधे प्रत्ययार्थस्य कर्त्तुरिव प्राधान्यमुचितं तथापि 'भावप्रधानमाख्यातम्' इति निरुक्तवचनात् तथा 'भूवादयो धातवः' इति सूत्रस्थक्रियाप्राधान्यबोधकभाष्याच्चात्र धात्वर्थभावस्यैव (व्यापारस्यैव) प्राधान्यं स्वीकृतम्। तेन 'रामो ग्रामं गच्छती'ति वाक्यस्य शाब्दबोध एवं भवति— एकत्वावच्छिन्नरामाभिन्नकर्तृवृत्तिर्ग्रामनिष्ठसंयोगानुकूलो वर्तमानकालिको व्यापारः।

न्यायनये तु शाब्दबोधे प्रथमान्तार्थस्यैव प्राधान्यं भवति। तेनोपर्युक्तवाक्यस्यात्र एवं भवति शाब्दबोधः— ग्रामनिष्ठसंयोगानुकूलव्यापारानुकूलकृतिमानेकत्वावच्छिन्नो रामः। कृतिमांश्च कर्त्ता एव भवति। तेन सह रामस्यात्र वर्ततेऽभेदान्वयः। एवमेव 'पश्य मृगो धावति' इति वाक्यादपि 'धावनाश्रयो मृगः, तत्कर्मकं दर्शनम्' इति बोधे मृगस्य दृशिक्रियायाः कर्मत्वेन तत्र द्वितीयापत्तिः स्यात्। तथा च 'मृगो धावति. मृगं पश्य' इति वाक्यद्वयमत्रापद्येत। तात्पर्यमिदं यदुपर्युक्तवाक्यस्य 'एकत्वावच्छिन्नमृगाभिन्नकर्तृवृत्तिर्धावनात्मकव्यापारकर्मकत्वतदभिन्नैककर्तृको दर्शनानुकूलो वर्तमानकालिको व्यापारः' एवं रूपेण एकवाक्यत्वं सम्पादितं भवति।

अत्र मते यद् धावनमस्ति, तत्तु यद्यपि दर्शनक्रियायाः कर्म अस्ति, तथापि तत्र द्वितीया न भवति, यतो हि धावनवाचकोऽत्र धावधातुर्वर्तते। न च धातोर्जायन्ते सुप्प्रत्ययाः। एवं रीत्या वैयाकरणसम्प्रदाये त्वत्र द्वितीयापत्तिरूपं दूषणं न भवति। न्यायनये तु धावनात्मकव्यापारानुकूलकृतिमान् मृगः, तथा दर्शनानुकूलकृतिमांस्त्वञ्चेत्येव बोधः स्यात्। मृगस्त्वत्र स्पष्टमन्वेति कर्मतया दर्शनक्रियायामिति तत्र द्वितीयापत्तिः कथमिव वार्यताम्? अत्र च मृगस्य दर्शनकर्मत्वं नेष्टम्; किन्तु प्रतिपिपादयिषा वर्तते उत्कटधावनकर्मकदर्शनस्यैव। न च धावनवाचकाद् धावधातोः कथमपि द्वितीया भवितुमर्हति। तेन वैयाकरणमतमेवौचित्यमञ्चति। न्यायमते तु द्वितीयापत्तिर्वाक्यभेदापत्तिश्च दूषणद्वयं वज्रलेपायितमेव भवति।

मीमांसकनये तु शाब्दबोधे व्यापारस्य प्राधान्ये स्वीक्रियमाणेऽपि व्यापारो न धात्वर्थः; किन्त्वाख्यातार्थः (तिङर्थः) अस्तीति स्वीकृतं वर्तते। 'पचति' इति पदस्य विवरणं क्रियते 'पाकं करोति' इत्येवं रूपेण। तत्र पाकमिति फलमात्रमेव प्रतीयते पच्धातोरर्थः। करोतीति तु तिप्प्रत्ययस्यार्थः। एवञ्च यत्नार्थककरोतिना विवरणकरणात् तिबर्थो यत्नो व्यापारो वा वक्तुं शक्यते।

न चैवं कर्त्तुर्वाचकाभावात् कथमत्र स्यात् कर्त्तुर्बोध इति चेद्? आक्षेपात् कर्त्तव्यः कर्तुर्बोध इति वदन्ति ते। किन्तु कथनमिदमविचारितरमणीयमस्ति, यतो हि 'कर्तरि कृत्' इति सूत्रतः 'कर्तरि' इति पदमायाति 'लः कर्मणि चे'ति सूत्रे। यद्यत्रागतस्य कर्तरिपदस्यार्थो व्यापारः क्रियते, तदा कृदन्ते कर्तरि विहितप्रत्ययानामपि कर्तृवाचकत्वं नैव स्यात्। यदि तत्रत्यं 'कर्तरि'इति पदं कर्त्तुर्वाचकं तर्हि तिङन्तेऽपि लकारवाच्यः कर्त्ता एव न तु व्यापारोऽपि कथञ्चन। किञ्च कृदन्ते यथा कर्तरि विहिताः प्रत्ययाः कर्तृवाचकाः स्वीक्रियन्ते भावनायाश्च तत्राक्षेपः क्रियते, तथैव तिङन्तेऽपि लकारवाच्यः कर्ता कर्म च स्वीक्रियताम्। अत्रापि भावनाया एव क्रियतामाक्षेपः। न चैवं शाब्दबोधे व्यापारस्य प्राधान्यं न भविष्यति। आक्षिप्तस्य भावस्य प्राधान्यमयुक्तमिति नियमादिति चेत्? जातिशक्तिवादिना तेन स्वीकृतमेव आक्षिप्तस्यापि प्राधान्यम्। 'घटमानय' इत्युक्ते व्यक्तिरेवानीयते, न तु जातिरपि। किञ्च व्यापारस्य धातुवाच्यत्वे अपरश्चायं तर्को यत्— पक्ता देवदत्त इत्यस्य शाब्दबोधो भवति— पाकानुकूलव्यापारवान् देवदत्तः कर्त्ता, तथैव 'पचति देवदत्तः' इत्यत्रापि पाकानुकूलो व्यापारो देवदत्ता-भिन्नकर्तृवृत्तिरिति कर्त्रा सहाभेदान्वयार्थमुभयत्र कर्त्ता एव प्रत्ययार्थः, व्यापारश्च धात्वर्थ इति स्वीक्रियताम्।

अभेदान्वयबोधं प्रति समानविभक्तिकत्वस्य नियामकत्वं तु नैव युज्यते, 'सोमेन यजेत' इत्यस्य 'सोमवदभिन्नयागेन इष्टं भावयेत्' इत्यर्थकरणेन 'स्तोकं पचति' इत्यत्र स्तोकाभिन्नविक्लित्तिरित्यर्थकरणेन चाभेदबोधं प्रति समानविभक्तिकत्व-नियमस्य त्वयैव समुपेक्षणात्। तस्मात् 'पक्ता देवदत्तः' इत्यत्र तृजर्थकर्त्रा साकं देवदत्तस्याभेदान्वयो यथा भवति, तथैव 'पचति देवदत्तः' इत्यत्रापि तिबर्थकर्त्रा सह देवदत्तस्याभेदान्वयार्थं तिङर्थः कर्त्ता एवेत्याश्रयणीयं न तु तिङर्थो व्यापारः।

अनया रीत्या फलं व्यापारश्च धात्वर्थः। तिङर्थश्च कर्तृकर्मसंख्याकालाः। व्यापारस्य नामान्तरं भाव इति। शाब्दबोधे भाव एव प्राधान्यमुपैतीति दर्शितमेव। भावश्चोपलक्षणं फलस्यापि। तेन कर्तरि लकारे भावस्य (व्यापारस्य) प्राधान्यं, कर्मणि लकारे च फलस्य प्राधान्यमिति साधीयान् पन्थाः। 'देवदत्तो ग्रामं गच्छति' इति वाक्यस्य व्यापारविशेष्यकः शाब्दबोधस्तु उपरि दर्शित एव। साम्प्रतं तस्य फल-विशेष्यकः शाब्दबोधो भवत्येतादृशं वाक्यं चात्र 'देवदत्तेन ग्रामो गम्यते' इति कर्म-वाच्यीयमस्ति, बोधश्चैवम्—देवदत्ताभिन्नकर्तृवृत्तिवर्तमानकालिकव्यापारजन्य एकत्वा-वच्छिन्नग्रामनिष्ठः संयोगः। अत्र धात्वर्थफलविशेष्यकः शाब्दबोधो जातः। संयोग एवोत्तरदेशसंयोगानुकूलव्यापारजन्यफलमस्ति। एवञ्च सुसङ्गतमेवेदं कथनम्—

**भावप्रधानमाख्यातमिति।**

●

# संस्कृतव्याकरणं तत्सम्बद्धं भाषाविज्ञानञ्च

**डॉ. रामनारायणदासः**
प्राचार्यचरः,
गुरुवायूरकेन्द्रीयसंस्कृतविद्यापीठम्
पुरनाट्टकश, त्रिच्चूर, केरल-प्रदेशः

❀ ❀ ❀

अस्मिन् खलु ब्रह्माण्डेऽनन्ताः प्राणिनोऽनन्ताश्च भाषाः श्रूयन्ते। किन्तु मानवीयभाषाणामेव सम्पादनं भाषणञ्च जानन्ति पौरस्त्याः पाश्चात्त्याश्च विद्वांसः। संस्कृतभाषा तु गीर्वाणवाणीनाम्ना प्रसिद्धा। सर्वासु भाषासु विद्यमानानां शब्दानां वाक्यानाञ्च व्युत्पादनार्थं परिमार्जनार्थञ्च किमपि व्याकरणमपि दृष्टिगोचरीभवति। अन्यासां भाषाणां यानि व्याकरणानि, तेषां प्रयोजनं वाक्यानां शब्दानाञ्च शुद्धाशुद्धिसम्पादनमात्रम्। संस्कृतव्याकरणस्य तु न केवलं शब्दव्युत्पत्तिमात्रं प्रयोजनम्, किन्तु ततोऽन्यदपि प्रयोजनमस्ति। संस्कृतभाषायां बहूनि व्याकरणानि सन्ति, तानि च अष्टसु यद्वा नवसु संख्यासु विभक्तानि। तद्यथा—

इन्द्रश्चन्द्रः काशकृत्स्नापिशाली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः।।

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतञ्चापिशलं शाकलं पाणिनीयकम्।।

अष्टसु यद्वा नवसु संस्कृतव्याकरणेषु सम्प्रति पाणिनीयं व्याकरणं प्रसिद्धं मूर्द्धन्यञ्च स्थानमलभत। पाणिनीयं व्याकरणं संस्कृतभाषायां विद्यमानानां वाक्यानां शब्दानाञ्च व्युत्पत्तिं सम्पादयति, शब्दानाञ्च वास्तविकं मूलं स्वरूपं किमिति प्रश्नं समादधाति, शब्दानां वास्तविकस्वरूपसम्पादनेन च मोक्षमपि सम्पादयति। अत एव पाणिनीयव्याकरणस्य भागत्रयं विद्वांसः कृतवन्तः। तद्यथा—१. प्रक्रियांशः, २. परिष्कारांशः, ३. अर्थांशश्च।

प्रक्रियांशे शब्दानां व्युत्पत्तिः। तद्यथा—'सुधी + उपास्यः = सुद्ध्युपास्यः' इत्यत्र यण्सन्धिः। राम इत्यत्र रम्धातुः प्रकृतिः घञ् इति प्रत्ययः। अस्मिन् भागे वैयाकरणसिद्धान्तकौमुदीत्यादयो ग्रन्थाः प्रसिद्धाः।

परिष्कारांशे लक्षणानां परिष्कारः। तद्यथा—'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रे किं नामार्थवत्त्वम्। वृत्तिमत्त्वमर्थवत्त्वमिति प्राचीना वैयाकरणाः। नवीना वैयाकरणास्तत्र परिष्कारं कृतवन्तः। एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोके अर्थविषयकबोधजनकत्वमर्थवत्त्वम्। अस्मिन् भागे लघुशब्देन्दुशेखरादयो ग्रन्थाः संविशन्ति।

अर्थांशे तु दर्शनभागः शब्दानां मूलं स्वरूपं किमिति प्रश्नस्य समाधानम्। शब्दस्य यन्मूलं स्वरूपम्, तदेव शब्दब्रह्मनाम्ना व्याकरणदर्शने प्रसिद्धम्। तदुक्तं वाक्यपदीयस्य ब्रह्मकाण्डे—

> अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
> विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।१।।

शाब्दिकैर्व्यङ्ग्यव्यञ्जकरूपेण द्विविधं शब्दमङ्गीकृतम्। तदुक्तं व्याकरणदर्शनस्य मूर्द्धन्यभूते ग्रन्थे वाक्यपदीये—

> द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।
> एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते।।

व्यञ्जकः शब्दः प्राकृतध्वनिनाम्ना, व्यङ्ग्यश्च शब्दः स्फोटनाम्ना वैयाकरणसम्प्रदाये प्रसिद्धिमागतः। वक्तुर्विवक्षया कण्ठताल्वादिव्यापारेण उच्चार्यमाणः श्रोत्रा च श्रोत्रेन्द्रियेण परिगृह्यमाणो वैखरीनाम्ना प्रसिद्धः शब्दोऽन्तःकरणे स्थितस्य शब्दतत्त्वस्य व्यञ्जकः। अन्तःकरणे स्थितं शब्दतत्त्वं घटः पट इत्यादिव्यञ्जकध्वनिना घटपटाद्यात्मना अभिव्यक्तं सद् घटपटादिपदार्थान् बोधयति। यदन्तःस्थितं शब्दतत्त्वम्, स एव आत्मा। तदुक्तं श्रीभर्तृहरिणा—

> अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
> प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते।।१३१।।
>
> तस्मादृ्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
> तस्य प्रकृतितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते।।१३२।।

शब्दानां संस्कार: परमात्मन: प्राप्तेरुपाय:। शब्दस्य प्रवृत्तितत्त्वं यश्च जानाति, स शब्दब्रह्मामृतमश्नुते। शब्दब्रह्मामृतमशित्वा च मुक्तो भवति। किञ्च यदन्त: शब्दतत्त्वं तदेव वाक्यस्य सत्यं स्वरूपम्।

यदन्त: शब्दतत्त्वं तु नादैरेकं प्रकाशितम्।
तदाहुरपरे शब्दं तस्य वाक्ये तथैकता।। (वा.प. २-३०)

यथा वेदान्तिनो—वदन्ति सर्वं खल्विदं ब्रह्म। तथा संस्कृतभाषाया: पाणिनीयं व्याकरणं ब्रूते—सर्वं खल्विदं शब्दब्रह्मेति। वाच्यवाचकात्मकं नामरूपात्मकञ्च सर्वं खल्विदं जगत् शब्दतत्त्वोपादानभूतम्। अस्य सर्वस्य ब्रह्माण्डस्योपादानं शब्दतत्त्वम्। शब्दतत्त्वं प्रकाशाप्रकाशयोरपि प्रकाशकम्। तदुक्तं श्रीभर्तृहरिणा—

वाग्रूपता चेन्निष्क्रामेदवबोधस्य शाश्वती।
न प्रकाश: प्रकाशेत सा हि प्रत्यवमर्शिनी।।१२५।।
(वा.प., ब्र.का.)

यदि अवबोधस्य ज्ञानस्य शाश्वती वाग्रूपता निष्क्रामेत्, प्राणिषु न स्यात्। तर्हि प्रकाशोऽपि न प्रकाशेत। यत: सा वाग्रूपता प्रत्यवमर्शिनी। अपरेऽपि आहु:—'इह त्रीणि ज्योतींषि त्रय: प्रकाशा: स्वरूपपररूपयोरवद्योतका:, तद्यथा—योऽयं जातवेदा यश्च पुरुषेष्वान्तर: प्रकाशो यश्च प्रकाशाप्रकाशयो: प्रकाशयिता शब्दाख्य: प्रकाशस्तत्रैतत्सर्वमुपनिबद्धं यावत्स्थाष्णु चरिष्णु च'। तदित्थं गीर्वाणवाण्या: सम्प्रति विद्यमानं व्याकरणं पाणिनीयाष्टाध्यायीनाम्ना प्रसिद्धं शब्दस्य प्रक्रियात्मकं दार्शनिकञ्च स्वरूपं प्रतिपादयति। संस्कृतेतरभाषाव्याकरणापेक्षया श्रेष्ठं विशिष्टञ्च महत्त्वं पाणिनीयव्याकरणस्य दृष्टिगोचरीभवति।

सम्प्रति समुपलभ्यमानं भाषाविज्ञानं तु शब्दस्य कण्ठताल्वादिव्यापारेण वक्त्रा समुच्चार्यमाणं श्रोत्रा च श्रोत्रेन्द्रियेण परिगृह्यमाणं ग्रन्थेषु लिपिरूपेण परिदृश्यमानं यद् बाह्यं स्वरूपं तदेव प्रतिपादयति। वाचश्च यत् तुरीयं स्वरूपं यन्मनुष्या वदन्ति, तावन्मात्रे भाषावैज्ञानिकानां गति:। तदुक्तं केनचिद् भाषावैज्ञानिकेन रावर्ट ए. हाल जे.आर. महोदयेन 'लिङ्ग्विस्टिक एण्ड योर लैंग्वेज' इति स्वकीये ग्रन्थे—

'The linguistic can simply difine linguistic forms and their approximate meaning. But he can not do the work of the chemist. the physicist, the anthropologist. To difine meaning completely and exactly even that of the simplest linguistic form, we should have to have a

complete knowledge of the structure of universe, and also of very thing going an inside the body and head of every speaker and every hearer'. (Robert A Hall J.R.—Linguistic and your language, p.No. 133).

अस्मिञ्जगति यद्यर्थस्य पूर्णं स्वरूपं यथार्थतया परिसमाप्तितया च अस्माभिर्ज्ञातुं वाञ्छ्यते, अपि च भाषाया: सरलतमरूपस्यापि तत्त्वं जिज्ञास्यते, तदाऽस्य ब्रह्माण्डस्य स्वरूपं सृष्टिश्चेति विषयद्वयमवश्यमेव ज्ञातव्यम्। श्रोतुर्वक्तुश्चेत्युभयोरपि बुद्धौ स्थितं तत्त्वमपि वेदितव्यम्। अन्यथा शब्दार्थौ पूर्णतया ज्ञातुं ग्रहीतुञ्च न शक्येते। अर्थात् सृष्टिमूल एव भाषातत्त्वं वर्तते। यथा बीजे एको महीरुहस्तिष्ठति, यदि तद्बीजं न स्वीक्रियते तदा शाखापल्लवादिविशिष्टं वृक्षत्वमपि सम्यग्रूपेण स्थितं न स्यात्। एवं भाषाया अपि तत्त्वं विद्यते। अत्र रावर्टमहोदया: स्पष्टतया शब्दस्य बाह्यं स्थूलं स्वरूपं स्वीकुर्वाणा: सूक्ष्मातिसूक्ष्ममान्तरिकमपि तत्त्वमङ्गीकुर्वन्ति। एवं रावर्टमहोदयानां मतानुसारेण भाषाविज्ञानस्यैको दार्शनिकोऽपि भागो भाषावैज्ञानिकैरङ्गीकर्तव्य:। परन्तु एवं बहुधा न दृष्टिगोचरीभवति।

वाचस्तुरीयभागस्य बाह्यशब्दस्य व्याख्यानपरायणं भाषाविज्ञानं त्रिविधं दृष्टिगोचरीभवति—१. व्याख्यानात्मकम्, २. वर्णनात्मकम्, ३. ऐतिहासिकञ्च। कस्य वर्णस्य किं स्थानमित्यादिप्रश्नानां समाधानं व्याख्यानात्मकभाषाविज्ञानेन, भाषाणां यत्तुलनात्मकमध्ययनं, तद् वर्णात्मकेन भाषाविज्ञानेन, शब्दानां यद्वा भाषाणामितिहास: स ऐतिहासिकेन भाषाविज्ञानेन सम्पाद्यते। भाषाविज्ञानस्य एते ये त्रयो भागा वर्तन्ते, ते सर्वे प्रायेण पाणिनीयव्याकरणस्य प्रक्रियांशेऽन्तर्भूता:। यश्च पाणिनीयं व्याकरणं तस्य शाखाश्च नाधीतवान्, स भाषाविज्ञानकुशलो नैव सम्भवति। भाषाविज्ञाने प्रतिपादितेन केनचित्तथ्येन संस्कृतव्याकरणस्य सामञ्जस्यं केनचिच्च तथ्येन विरोध:। तद्यथा उदात्तादिस्वरानुसारेण अर्थपरिवर्तनमङ्गीकुर्वन्ति पाणिनीयवैयाकरणा:।

तत्र संस्कृतभाषायां त्रय: स्वरा:—१. उदात्त:, २. अनुदात्त:, ३. स्वरित:। ताल्वादिषूर्ध्वभागेषु निष्पन्नस्य अच उदात्तस्वर:, ताल्वादिषु अधोभागे निष्पन्नस्य अचोऽनुदात्तस्वर:, उदात्तत्वानुदात्तत्वे वर्णधर्मौ यस्मिन् समाहितौ भवतस्तस्याच: स्वरितस्वर:। उदात्तादिस्वरानुसारेण अर्थपरिवर्तनं पाणिनीयव्याकरणस्य महाभाष्ये दृष्टिगोचरं भवति। तद्यथा—

दुष्ट: शब्द: स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रु: स्वरतोऽपराधात्।।

देवासुरसङ्ग्रामे वृत्रासुर इन्द्रं हन्तुमभिचारयज्ञं प्रारब्धवान्। तत्र 'इन्द्रशत्रुर्वर्धस्व' इति मन्त्र ऊहितः। अस्मिन् मन्त्रे 'हे अग्ने, त्वं वर्धस्व, इन्द्रस्य च शातयिता नाशको भव' इत्यर्थोऽभीष्टः। अस्यार्थस्य लाभाय इन्द्रशत्रुशब्दस्य अन्तोदात्तोच्चारणं ऋत्विजा कर्तव्यम्। किन्तु अन्तोदात्तोच्चारणं न कृतम्। कृतञ्च इन्द्रशत्रुशब्दे आद्युदात्तोच्चारणम्। आद्युदात्तोच्चारणेन तद्विपरीतोऽर्थः सञ्जातः। आद्युदात्तोच्चारणे इन्द्र एव शत्रुर्यस्य स इति 'इन्द्रशत्रुः' इति बहुव्रीहिसमासः। इन्द्र एव वृत्रासुरस्य नाशकः सञ्जातः। वृत्तासुरश्च इन्द्रेण व्यापादितः। स्वरस्यापराधाद् महाननर्थः सञ्जातः।

संस्कृतातिरिक्तासु कासुचिद् भारोपीयभाषासु उदात्तादिस्वरानुसारेण अर्थः परिवर्तितः सञ्जायते। चीनदेशे एकस्यैव शब्दस्य उदात्तादिभेदेन अर्थो नितरां बेभिद्यते। तद्यथा—'क्वेई क्वोक'-शब्दे इकारस्य उदात्तस्वरेण उच्चारणे सति 'दुष्टो देशः' इत्यर्थोऽवगम्यते। तस्य च अनुदात्तस्वरेण समुच्चारणे तु 'विशिष्टो देशः' इत्यर्थः पूर्वापेक्षया भिन्न एव जायते। एवमफिरिकीभाषायामपि एकस्यैव शब्दस्य उदात्तादिस्वरानुसारेण अर्था भेदं प्राप्नुवन्ति।

भाषावैज्ञानिकाः समुपलभ्यमानानां मूलस्वराणां संवृतादिभेदेन विभाजनं कृतवन्तः। ते यथा—१. संवृतः, २. अर्धसंवृतः, ३. अर्धविवृतः, ४. विवृतः। एतेषां चतुर्णां संवृतादीनां भेदानुसारेण मूलस्वराणाञ्च मुख्यतया अष्टौ भेदान् ध्वनिविदः सम्पादयन्ति। ते यथा संवृतार्धसंवृतार्धविवृतविवृतभेदेन अग्रस्वराणां पश्चात् स्वराणाञ्च चत्वारो भेदा भवन्ति। अनयोश्चतुरश्चतुरो भेदान् सङ्कलय्य अष्टौ भेदाः संख्यायन्ते।

एवं व्यञ्जनानाञ्च प्रतिवेष्टितादिभेदेन वर्गं कृतवन्तः। तद्यथा—१. स्पर्शः, २. प्रतिवेष्टितः, ३. स्पर्शसङ्घर्षी, ४. अनुनासिकः, ५. पार्श्विकः, ६. लुण्ठितः, ७. उत्क्षिप्तः, ८. सङ्घर्षी, ९. अर्द्धस्वरः। स्पर्शः कवर्गटवर्गौ विहाय कादिमान्ताः सर्वे वर्णाः स्पर्शाः। प्रतिवेष्टिष्टवर्गः, स्पर्शसङ्घर्षौ चवर्गः। अनुनासिकाः ङकारादयः। पार्श्विकः प्लाल्ह इति। लुण्ठितो यथा अवधीभाषायाम्—अरही, आयटिशभाषायाञ्च-वेगोरी, मलयालमभाषायाञ्च-परम्। उत्क्षिप्तः डकारढकारौ। संघर्षी हकारो विसर्गः। ञु खु मु अर्धस्वरः—य् व् इति। अत्र ऐतिहासिकदृष्ट्या भाषाया अध्येतारो भाषावैज्ञानिकाः—'वेदेषु पार्श्विकलुण्ठितोत्क्षिप्तादिवर्णानां ह्रस्वानामेकारादीनाञ्च प्रयोगो न दृश्यते, अतः प्राचीनभारोपीयकालापेक्षया वैदिकभाषायामतिशयेन परिवर्तनं ह्रासश्च सञ्जातः' इत्येवं सिद्धान्ततया वदन्ति।

ऋगादिवेदेषु समुपलभ्यमानमन्त्राः प्राचीनभारोपीयभाषाया ह्रासावस्थामापन्नरूपाः सन्ति। भारोपीयभाषाणां केचिद् मूलध्वनयो वेदेषु न सन्ति।

वस्तुतस्तु ऐतिहासिकभाषाविज्ञानविदामिदमनुसन्धानं संस्कृतव्याकरणदृशा अथ च प्रातिशाख्यकाराणां मतानुसारेण अविचारितरमणीयं दृष्टिपथं समायाति। ह्रस्वानामेकारादीनां लुण्ठितादिवर्णानाञ्च दोषग्रस्तत्वात् संस्कृतवाङ्मये वेदादौ तेषां प्रयोगो न दृष्टिगोचरीभवति। वैदिकयुगे लुण्ठितादिवर्णानामभावः सञ्जातः, इत्येतावता वेदेषु तेषां समुपलब्धिर्न दृश्यत इति वक्तुं न युज्यते। महाभाष्यकारो भगवान् पतञ्जलिर्महाभाष्यस्य पस्पशाह्निके 'आकृत्युपदेशात् सिद्धमिति चेत् संवृतादीनां प्रतिषेधः' इति वार्तिकस्य व्याख्यावसरे स्वरदोषाणां व्याख्यानं कृतवान्। तद्यथा—

संवृतः, कलाः, ध्मातः, एणीकृतः, अम्बूकृतः, अर्द्धकः, ग्रस्तः, निरस्तः, प्रगीतः, उपगीतः, क्ष्विण्णः, रोमश इति। अपर आह—

ग्रस्तं निरस्तमवलम्बितं निर्हतमम्बूकृतं ध्मातमथो विकम्पितम्।
सन्दष्टमेणीकृतमर्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः।।

यद्यपि भाष्यकार एषां स्वरदोषत्वेन गणनां कृतवान्; परन्तु केचिद्दोषाः स्वरव्यञ्जनयोरुभयोरपि भवितुं शक्यन्ते। कलः = स्थानान्तरनिष्पन्नः काकलित्वेन प्रसिद्धः। ध्मातः = श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते। एणीकृतः = अविशिष्टः किमयमोकारः अथवा औकारः। अम्बूकृतः = यो व्यक्तोऽप्यन्तर्मुखमिव श्रूयते। ग्रस्तः = जिह्वामूले निगृहीतः, अव्यक्त इत्यपरे। निरस्तः = निष्ठुरः। प्रगीतः = सामवद् उच्चारितः, उपगीतः = समीपवर्णान्तरगीत्यानुरक्तः। क्ष्विण्णः = कम्पमान इव। रोमशः = गम्भीरः। अवलम्बितः = वर्णान्तरसम्भिन्नः। निर्हतः = रुक्षः। सन्दष्टः = वर्धित इव। विकीर्णः = वर्णान्तरे प्रसृतः, एकोऽप्यनेक इव प्रतिभाति।

ऋग्वेदप्रातिशाख्यस्य चतुर्दशपटले इतोऽप्यधिका वर्णदोषाः कथिताः। तद्यथा—अयथामात्रं वचनं स्वराणाम्, जिह्वामूलनिग्रहे ग्रस्तमेतत्, ग्रासः कण्ठ्ययोर्विहारसंहारयोर्व्यासपीलने, सरेफयोर्मध्यमयोर्निरासः। निरस्तं स्थान-करणापकर्षे, इत्यादयो व्यञ्जनदोषाः। इतोऽप्यधिका अनन्ता हि दोषा अशक्तिप्रमादकृता भवन्ति। शब्दानां शुद्धोच्चारणे असामर्थ्यात् प्रमादाद्वा दोषग्रस्ता वर्णाः समुच्चार्यन्ते। पालिप्राकृतभाषयोः केरलान्ध्रतमिलकर्णाटकमहाराष्ट्रमध्योत्तर-

प्रदेशविहारवङ्गहिमाञ्चलारुणाञ्चलप्रान्तीयभाषासु इतोऽतिरिक्तासु भारोपीयभाषासु अमेरिकनभाषासु च विद्यमाना ये वर्णाः संस्कृतभाषायां न समुपलभ्यन्ते, ते दोष-ग्रस्ताः संवृतादिदोषग्रस्तत्वादेव ते वर्णाः संस्कृतभाषायां न समुपलभ्यन्ते। अस्मिन् विषये संस्कृतव्याकरणदृशा यत्समाधानं कृतम्, तद् भाषाविज्ञानविद्भिः शिरसा स्वीकरणीयम्। सत्यमिदं प्रतिभाति। दोषग्रस्ता दोषरहिताः सार्थका निरर्थका वर्णात्मका ध्वन्यात्मकाश्च सर्वे शब्दाः सूक्ष्मरूपेण स्वमूलस्वरूपे लीनाः। वक्तुर्विवक्षया च प्रादुर्भवन्ति।

इग्यणोर्वैज्ञानिकतां प्रतिपादयन्ति भाषाविज्ञानविदः। व्यञ्जनानां मध्ये कस्यचिदपि व्यञ्जनस्य स्वरात्मकं रूपं न दृष्टिगोचरीभवति। किन्तु 'यवरल' इति यण्वर्णानां स्वरात्मकं रूपं दृश्यते। व्यञ्जनानामुच्चारणं स्वरं विना न भवति। व्यञ्जनानि च कदापि स्वररूपेण न दृश्यन्ते; किन्तु यकारादिवर्णचतुष्टय-मेतदपवादभूतं विद्यते। एतेषां वर्णानां स्वरात्मकमपि स्वरूपं दृश्यते। यकारादिवर्णचतुष्टयस्य स्वरात्मकं स्वरूपं क्रमशः 'इ, उ, ऋ, ऌ' इति स्वरचतुष्टयं वेदितव्यम्। अत एव भगवान् पाणिनिः 'इग्यणः सम्प्रसारणम्' इति सूत्रेण यकारादिवान्तस्य वर्णचतुष्टयस्य सम्प्रसारणं समादिष्टवान्। किञ्च न केवलमन्तःस्थवर्णानां स्वरीभूतं स्वरूपम् 'इ, उ, ऋ, ऌ' इति वर्णचतुष्टयम्, अपि तु इकारादिस्वरचतुष्टयस्यापि व्यञ्जनीभूतं स्वरूपं यकारादयो विद्यन्ते। 'सुद्ध्युपास्यः, मध्वरिः, धात्रंशः, लाकृतिः' इत्यादिषु इकारादीनामेव यकाराद्यादेशाः। 'इयाज, उवाच' इत्यादिषु च यकारादीनाम् इकाराद्यादेशा दृश्यन्ते। एवम् इग्यणोः परस्पंरमभेदो दृश्यते। केवलमुच्चारणदृष्ट्या तयोर्यत्किञ्चिद्भिन्नत्वं श्रोत्रेन्द्रियेण प्रतीयते। यकारादिवर्णचतुष्टयस्य वैशिष्ट्यं प्रदर्शयता तेषां स्वरात्मकमेकं स्वरूपं प्रतिपादितम्। यकारादिवर्णचतुष्टयस्य द्वितीयं स्वरूपमिकारादिस्वरयुक्तमपि प्राचीनभारतयोरोपीयभाषायामासीदित्येवमनुमानं भाषावैज्ञानिकैः क्रियते, ते यथा—'इय, उव, ऋर लृल' इति। मन्येऽहं भाषाविज्ञानचञ्चवः 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इति सूत्रेण धात्वन्तेवर्णोवर्णयोः इयङुवङादेशं दृष्ट्वा प्राचीनभारतयोरोपीयभाषायामन्तः-स्थवर्णानां स्वरयुक्तस्वरूपस्यानुमानं कुर्वन्ति। एतेषां यकारादिवर्णानां शुद्धस्वरै-र्युक्तं तृतीयमपि स्वरूपमासीत्। तद्यथा—'अय्, एय्, अव्, अर्,' अल्' इत्यादि। प्राचीनभारोपीयभाषायामन्तःस्थवर्णानाम् 'अय्, एय्, अव्, अर्' इत्यादि-स्वरूपाणामनुमाने हेतुः 'गमयति' इत्यादिशब्देषु 'अय्' इत्यंशः 'देयम्'

इत्यादिशब्देषु प्रक्रियादशायां 'हरये विष्णवे नायकः पावकः' इत्यादौ 'हरे + ए, विष्णो ए, नै अकः, पौ अकः' इति स्थिते 'एचोऽयवायावः' इति सूत्रेण क्रियमाणं अयाद्यादेशं दृष्ट्वा अनुमानं कुर्वन्ति यद् यकारादिवर्णचतुष्टयस्य स्वरूपमकारादि-स्वरयुक्तमपि आसीदिति। भाषावैज्ञानिकानामेतत्सर्वं व्याख्यानं व्याकरणस्य यः प्रक्रियाभागोऽथ च वर्णस्फोटवादस्तेन सह सामञ्जस्यं भजति; परन्त्वेतत्सर्वं काल्पनिकमनुमानमूलकञ्च वर्तते। प्रतिवाक्यं सङ्केतग्रहो न सम्भवति। वाक्यस्यान्वाख्यानमपि लघूपायेन न सम्भवति। अतो वाक्यस्य लघुनोपायेन अन्वाख्यानार्थं वाक्येषु पदानां प्रविभागः पदेषु च प्रकृतिप्रत्ययकल्पना कृता, पदेषु समासोऽपि काल्पनिक एव वर्तते। कल्पनामूलको वर्णस्फोटो भवति। व्याकरणस्य यः परिष्कारांशो दार्शनिकश्च भागस्तदनुसारेण एतत्सर्वमसत्यम्। तदुक्तं वाक्यपदीयस्य ब्रह्मकाण्डे—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन।।७३।।

भगवता पतञ्जलिना शब्दानां नित्यत्वं साधयता 'स्थानिवदादेशोऽनल्विधौ' (पा.सू. १-१-५६) इति सूत्रस्य महाभाष्ये—'अनित्यत्वविज्ञानं तु तस्मादुपसंख्यानम्' इति वार्तिकस्य व्याख्यावसरे—

"अनित्यत्वविज्ञानं तु भवति, नित्याः शब्दाः, नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः। तत्र स एवायं विकृतश्च इत्येतन्नित्येषु नोपपद्यते"। इति।

तदित्थं शाब्दिकानां मतानुसारेण शब्दानां नित्यत्वाद् भाषावैज्ञानिकानां विकासवादोऽपि बाधितः। 'सुधी + उपास्यः = सुद्ध्युपास्यः' इति शब्दद्वयं परस्परं पृथग् भिन्नञ्च वर्तते, न तु सुधी उपास्यः सुद्ध्युपास्यशब्दात्मना परिवर्तितः, उभयो रूपं भिन्नं भिन्नं वर्तते। सुधी उपास्य इत्यस्य उच्चारणप्रसङ्गे सुद्ध्युपास्य इत्युच्चारणीयम्। तच्च साधु। तथैव अपभ्रंशशब्दानां परिनिष्ठितानाञ्च संस्कृत- शब्दानां पृथक् पृथक् सत्ता वर्तते, न तु संस्कृतशब्दा एव अपभ्रंशरूपेण यद्वा अपभ्रंशशब्दा एव संस्कृतशब्दरूपेण परिवर्तिताः। सर्वे साधवोऽसाधवश्च शब्दाः कुत्रचिद् ब्रह्माण्डे वर्तन्ते। शब्दानां नित्यत्वे स्वीकृते सति भाषान्तराणां कथमाविर्भाव इति चेद् भाषान्तरीयशब्दानां परस्परं सम्मिश्रणेन भाषान्तराणि आविर्भवन्ति। यथा राष्ट्रभाषा भारतीया हिन्दीभाषा। एषा भाषा पालिप्राकृत-संस्कृतापभ्रंशाङ्ग्लभाषीयशब्दानां परस्परं मिश्रणेन सम्पन्ना। एवमन्यासामपि

भारतीयभाषाणां विश्वभाषाणाञ्च समभिव्यक्तिविषये विचारणीयम्। भाषान्तरीयशब्दानां परिवर्तनेन, विपरिणामेन वा भाषान्तरस्य न सृष्टिः, शब्दानां नित्यत्वात् तेषां विपरिणमनासम्भवात्।

किञ्च शब्दानित्यत्वपक्षेऽपि कापि भाषा कस्याश्चिद् भाषाया जननी सम्भवति। उच्चरितः शब्दः क्षणिकः, तत्स्थानेऽन्यः क्षणिकः शब्दः समभिव्यक्तः। उच्चरितः कर्णशब्दः क्षणिकः प्रध्वस्तः, तस्मिन् प्रसङ्गेऽन्यः अपभ्रंशः कानशब्दः अभिव्यक्तः, न तु कर्ण एव कानरूपेण परिवर्तितः, उच्चरितस्य प्रध्वंसित्वात्, तस्य परिवर्तनासम्भवात्। सुस्थिरस्यैव वस्तुनः परिवर्तनं सम्भवति। यथा स्थिरस्यैव मृत्पिण्डस्य घटरूपेण परिवर्तनम्, तथा शब्दो मृदादिवन्न सुस्थिरः। अस्यां स्थितौ शब्दानित्यत्वपक्षेऽपि न हि कस्यचित् शब्दस्य शब्दान्तरात्मना विपरिणयः। एवं शब्दानित्यत्वपक्षेऽपि न काचिद् भाषा अन्यां भाषां जनयति; किन्तु अस्मिन् पक्षे भाषान्तरीयशब्दानां क्षणिकत्वात् तत्स्थाने अन्या भाषा समभिव्यक्ता भवति। शब्दानामभिव्यक्तिपक्षे तेषामभिव्यक्तिरनित्या, वक्त्रोद्घाता विनश्यन्ति, न शब्दाः। शब्दनित्यवादिमतानुसारेण भाषाणां समभिव्यक्तिविषये विचारः कर्तव्य इति शम्।

●

# मीमांसकशाब्दिकमतानुसारं लकारार्थविमर्शः

**पण्डितश्रीमनुदेवभट्टाचार्यः**
वरिष्ठनव्यव्याकरणप्राध्यापकः,
सहायकच्छात्रकल्याणसङ्घायाध्यक्षश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀ ❀ ❀

**गोपीनाथमहं वन्दे गोपीनाथमहामहम्।**
**गोपीनाथमहो मह्यां गोपीनाथमहोमयम्।।**

अथेह स्मारं स्मारं गुरोर्गिरो लकारार्थविषये मीमांसकसम्मतं मतं यथामति किञ्चिद् व्याजरीहरीमि। तथा हि—

'लः कर्मणि च भावे चाकर्मकेभ्यः'[१] इति प्रसिद्धं खलु पाणिनीयानुशासनम्, तत्र तर्कशास्त्राभिमानिनो नैयायिका इत्थमुपाचरन्ति—

लकाराणां लाघवात् कृतौ[२] एव शक्तिः, यद्यपि 'कर्तरि कृत्'[३] इति पाणिनीयानुशासनात् 'कर्तरि' इति पदं 'गव्यगेय.......'[४] इति सूत्रे, ततः 'लः कर्मणि.......'[५] इति सूत्रेऽनुवर्तते, परं तथापि कृतिमतः कर्तृत्वाविशेषात् कर्तरि शक्तौ गौरवात्। किञ्च— 'देवदत्तो गच्छति' इत्यादिवाक्येषु प्रथमान्तपदत एव कर्तृरूपार्थस्य लाभात्। अत्र 'देवदत्तो विशेष्यः', 'यत्नो विशेषणम्', 'आश्रयत्वं संसर्गः'। एवञ्च— 'गमनानुकूलकृत्याश्रयो देवदत्तः' इति शाब्दबोधः सिद्ध इति।

तत्रोच्यते— एवं सति निराकांक्षशाब्दबोधो न स्यात्, तथा हि—

---

१. पा.सू., ३।४।६९; २. न्या.सि.मु., श.ख.।
३. पा.सू., ३।४।६७, भाट्टरहस्यम्, पृ. ३०; ४. तदेव - ३।४।६८।
५. तदेव - ३।४।६९।

'गच्छति' इत्येतावता को गच्छति? इत्याकाङ्क्षाया जागरूकत्वेन कर्तुरपेक्षणात्, ततश्च 'लकाराणां कर्तरि शक्तिः' इति वैयाकरणमतप्रवेशप्रसङ्गात्।

'गमनानुकूला कृतिः' इति शाब्दबोधाभ्युपगमे तु 'का?' इत्याकाङ्क्षाऽभावेऽपि, 'कस्मिन्'? 'कस्य'? इति वा आकाङ्क्षायास्सत्त्वात्।

यद्यपि— 'एककर्तृका गमनक्रिया' इति शाब्दबोधाभ्युपगमेऽपि 'का'? इत्याकाङ्क्षानुदयेऽपि, कर्तृसामान्यबोधोत्तरं तद्विशेषबोधाकाङ्क्षायाः सावसरत्वात्।

**अत्र मीमांसकाः-**

'लः कर्मणि च भावे चाकर्मकेभ्यः'[१] इति पाणिनीयानुशासनस्यायमर्थः—

१. कर्तरि यदेकत्वम्, तत्र तिप्।

२. कर्तरि यद् द्वित्वम्, तत्र तस्, एवमग्रेऽपि बोध्यम्।

अस्यां परिपाट्याम्, 'लः कर्मणि……', 'द्व्येकयोः……'[२] इति सूत्रयोः, एकवाक्येनाऽन्वयो भवतिरूपम्। एवञ्च वैयाकरणाभिमतं लकाराणां कर्तृवाचकत्वं न सिद्ध्यतीति। किञ्च—

'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रे 'लः' इति पदं ध्यातव्यम्, अत्र हि समेषु दशसु लकारेषु 'अनुबन्धानाम् इत्सञ्ज्ञालोपाभ्यामेवाहारः' इति सकलवैयाकरणदर्शनदर्शितदिशा, 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषायाश्च 'अनुबन्धेषु अल्त्वव्यवहार एव न' इति सिद्धान्ताद् अनुबन्धविनिर्मुक्तपदार्थोपस्थित्या 'ल्' इत्येव हल्मात्रमवशिष्यते, तत्र 'लः' इति प्रथमयोर्बहुवचनयोः, पञ्चमीषष्ठ्योश्च एकवचनयो रूपं सम्भवतीति प्रक्रियाविदः प्रमाणम्, तत्र प्रसिद्धप्रथमान्ततामुपेक्ष्य ङसन्तमपि धर्तुं शक्यम्, तदानीम्— लः = लस्य इत्यत्र, षष्ठी चात्र आदेशापेक्षया स्थानषष्ठी 'इको यणचि' इत्यत्रेव, एवञ्च—

लः = लस्य स्थाने। ये आदेशास्तिबादयः, ते कर्मणि कर्तरि भावे वा यथायथं भवन्ति। 'लः = लस्य स्थाने ये आदेशास्तिबादयः, ते सकर्मकात् कर्मणि कर्तरि, अकर्मकाद् भावे कर्तरि यथायथं भवन्ति' इति निर्गलितोऽर्थ इति **मीमांसकीया** रीतिः।

---

१. पा.सू., ३।४।६९; २. तदेव - १।४।२२।

किञ्च, मीमांसकमतानुसारम्— 'अनभिहिते = अबोधिते' इति। तत्र बोधो शक्त्याक्षेपान्यतरेण बोध्यः। तत्र— 'पचति' इत्यत्र आक्षेपेण, 'पाचकः' इत्यादौ शक्त्येति विवेकः। न च 'पाचकः' इत्यत्रैव आक्षेपः, 'पचति' इत्यत्र च शक्तिरित्येव कथं नाङ्गीक्रियताम्? मीमांसकमते 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोः प्रत्ययार्थस्य प्राधान्यम्' इति नियमाद् लकारार्थीभूते प्रधानेन व्यापारेण कर्तुराक्षेपस्य सयुक्तिकत्वात्। तद्वदेव कृत्स्थलेऽपि प्राधान्यात् कर्तुर्वाच्यत्वमक्षतम्।

न च आक्षेपलभ्यत्वेन अशब्दलभ्यस्य पदार्थस्य शाब्दबोधविषयता कथम्? इति वाच्यम्, 'गौर्गच्छति' इत्यत्र आक्षेपलभ्यस्यापि व्यक्तिपदार्थस्य भानवदुपपत्तिसम्भवात्।

एवञ्च— 'लः कर्मणि च भावे चाकर्मकेभ्यः'[1], 'तिप्तस्झिसिप्थस्थमिप्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्'[2], 'द्व्येकयोर्द्विवचनैकवचने'[3] इत्याद्येकवाक्यतया विधानात् कर्तुरेकत्वे विधेये लकारैकवचनं तिप्, 'कर्तुर्द्वित्वेऽभिधेये लकारद्विवचनं विधेयम्' इत्यादिरीत्या अर्थपर्यवसानाद् एकत्वादिसङ्ख्या एव वाचकत्वं 'लः कर्मणि......' इति सूत्रस्य सिद्धम्।

कृत्प्रत्ययस्थले तु 'कर्तरि कृत्' इति साक्षात्पाणिनीयानुशासनस्य जागरूकत्वात् 'कर्ता वाच्यः' इति शान्तेन मनसा विभावनीयम्। कर्मभावनादौ तु शानचो लक्षणेति विवेकः। एवञ्च कर्तृविशिष्टसङ्ख्याया अभिधानेन अभिहिताऽनभिहितत्वव्यवस्थे उपपाद्ये।

एवञ्च कर्तृकर्मणोर्भावनयैव आक्षेपात्, फलतश्च अन्यलभ्यत्वेन (आक्षेपलभ्यत्वेन) न तयोः (कर्तृकर्मणोः) लकारवाच्यता पर्यवस्यति।

भावे[4] लकारविधानस्थले 'भूयते'[5] इत्यादौ तु कर्तुः कर्मणश्च सङ्ख्याऽन्वयिताऽवच्छेदकधर्माऽनाक्रान्तत्वेन सङ्ख्यान्वयिनोः कर्तृकर्मणोरप्रतीत्या, तत्रत्या सङ्ख्याऽनन्वितैव भवति। न च तत्रापि— भावनायामेव सङ्ख्याया अन्वयः कथन्तरान्न कल्प्यताम्? इति वाच्यम्, भावनायाः (क्रियायाः) लिङ्गसङ्ख्यान्वययोग्यताविरहाद् लिङ्गसङ्ख्यान्वितत्वे सति द्रव्यत्वाविशेषात्, 'लिङ्गसङ्ख्यान्वितं द्रव्यम्' इति नियमात्। अत एव 'क्रिया असत्त्वभूता' इति

१. पा.सू., ३।४।६९;
२. तदेव - ३।४।७८।
३. तदेव - १।४।२२;
४. भावकर्मणोः (पा.सू. १।३।१३)।
५. भा.र., पृ. ३७,३९।

प्रसिद्धिः। (असत्त्वभूता = अद्रव्यभूता = लिङ्गसङ्ख्याऽनन्विता), अत एव चात्र एकत्वमेव, तदुक्तम्— 'तिङ्वाच्यभावनाया असत्त्वभूतत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि, किन्त्वेकवचनमेव, तस्यौत्सर्गिकत्वात् सङ्ख्यानपेक्षणात्। ईदृशस्थले च कर्तरि प्रत्ययाभावात् कर्तुरनभिहितत्त्वेन 'कर्तृकरणयोस्तृतीया'[1] इत्यनुशासनात् तृतीयैव भवति— 'त्वया मयाऽन्यैश्च भूयते'[2]।

न चैकवचनस्यापि एकत्वसङ्ख्यासापेक्षत्वेन कथमत्रैकवचनम्? इति वाच्यम्, 'द्विबह्वोर्द्विबहुवचने' 'एकवचनम्' इति न्यासं कल्पयित्वा भाष्यकृतैव समाधानात्[3]। भावे कृत्प्रत्यये सति, तदन्तशब्दात् क्रियाऽपि लिङ्गसङ्ख्यान्वितैव प्रतीयते, तदुक्तम्— 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति। एवञ्च 'पचति', 'पाकः' इत्यनयोः प्रतीती स्फुटे एव। साध्या-सिद्धाक्रिययोरपि एवंरीत्या प्रतीतिभेदोऽवगन्तव्यः।

अत्रेत्थं मीमांसकसरणी राजते—

**मण्डनमिश्राः**— लकारार्थवर्तमानत्व-विधित्वप्रभृतीनामन्वय आख्यातार्थ-व्यापारे, एकपदोपात्तत्वात्, फलमात्रमत्र धात्वर्थः। सकर्मकत्वाकर्मकत्वे तु आख्यातार्थव्यापारेण सह धात्वर्थफलस्य वैयधिकरण्य-सामानाधिकरण्ये आश्रित्य व्यवस्थाप्ये। कर्मत्वञ्चात्र लकारार्थव्यापारव्यधिकरणधात्वर्थत्वाश्रयत्वेन साध्यम्— 'ग्रामं गच्छति' इति यथा। 'घटं भावयति' इत्यादावपि णिच्-प्रत्ययार्थव्यापारव्यधिकरणमाश्रित्य सिद्धम्। अन्तर्भावितण्यर्थस्थले, प्रत्ययस्यैव णिजर्थे लक्षणेति न दोषः।

कर्तृत्वञ्चात्र प्रत्ययार्थव्यापाराश्रयत्वमेव।

**प्राभाकरास्तु**— धात्वर्थः फलमात्रम्, भावना तु वाच्यैव न, भावनाविषयकशाब्दबोधस्य विवादास्पदत्वात्। लिङ्श्रुतौ सा भावना आख्यातवाच्या। 'किं करोति' इति प्रश्ने, 'पचति' इत्युत्तरन्तु पाकवाचकधातोस्तद्विषयत्वे लक्षणयाऽपि साधयितुं शक्यम्। कर्ममात्रविषयके 'किं करोति' इति प्रश्ने पाकमात्रविषयकमुत्तरमपि सूपपादम्।

---

१. पा.सू., २।३।१८; २. सि.कौ.भा.क.प्र.।

३. द्र. बृहद्वैयाकरणभूषणम्, अभेदैकत्वसङ्ख्यानिर्णयः, रूपालीव्याख्या, पृ. २७३-२७४।

अत एव 'किं करोति' इति प्रश्ने 'पाकं करोति' इत्युत्तरस्यापि अशब्दलभ्य-कर्मत्वविवरणवदुपपादयितुं शक्यत्वात्, ततोऽपि न भावनाया वाच्यत्वमायातीति गुह्यमूह्यम्।

एवञ्चात्रायं विमर्शः—

मीमांसकमतानुसारम्— 'आख्याताथों न कर्ता, प्राधान्यापत्तेः, फलाऽवच्छिन्नव्यापारानुकूलो व्यापारः कृत्यादिरूपः'। स च व्यापारत्वेनैव, ततश्च 'रथो गच्छति' 'जानाति' इत्यादौ लक्षणाश्रयक्लेशोऽपि दूरङ्गतः। वर्तमानत्व-भूतत्व-भविष्यत्त्वादिरूपकालान्वयस्तु व्यापार एव, आश्रयबोधस्तु लाक्षणिकः, लाक्षणिकार्थमाश्रित्यैव सामानाधिकरण्योपपत्तिः।

व्याकरणस्य शक्तिग्राहकत्वकथनन्तु बाहुल्याभिप्रायेण, अतः 'लः कर्मणि......' इत्यादिशास्त्रं लाक्षणिकानुशासनमिति स्वीकारे न दोषलेश इति दिक्।

अथेदानीं किमपि वैयाकरणः[१] पक्षः प्रस्तूयते, तथा हि— ननु 'लः कर्मणि......' [२]इति सूत्रं व्यर्थम्, कथम्? इति चेत्, श्रूयताम्, 'भावकर्मणोः'[३] इत्यनेन आत्मनेपदविधानस्य जागरूकत्वात्, अथ च 'शेषात् कर्तरि.....'[४] इत्यनेन परस्मैपदविधानाच्च लकारा भावे कर्तरि कर्मणि एव विधीयन्ते इत्यनुमातुं शक्यतया प्रकृतसूत्रस्य कैमर्थी [५]वैयर्थी च स्पष्टे एवेति चेद्? अत्रोच्यते— एतत्सूत्राकरणे यथा कृदन्ते घञादीनामकर्मकत्वसमर्कत्वसामान्यापत्तौ 'रमणी दृश्यते विलासिना'[६] इत्याद्यपप्रयोगा अपि सम्भवेयुस्तराम्!!

न च— एतन्मात्रसिद्ध्यर्थं 'भावे लोऽकर्मकेभ्यः' इत्येव सूत्र्यताङ्कल्पम्? इति वाच्यम्, 'अकर्मकेभ्यो भाव एव' इति विपरीतनियमापत्तिप्रसक्त्या 'भवति' इत्याद्यसिद्ध्यापत्तेर्जागरूकत्वात्!! ततश्च 'कर्तरि कृत्'[७] इत्यतः 'कर्तरि' इत्यनुवृत्तोये चकारयुगलघटितं सूत्रं सर्वथाऽऽवश्यकम्।

---

१. वैयाकरण इति—व्याकरणे भवो वैयाकरणः, 'वैयाकरणाख्यायां चतुर्थ्याः' इत्यत्रेव प्रयोगः।
२. ३।४।६९ काशिका, तारा पब्लिकेशन, १९६६।
३. ३।३।१३, सि.कौ., आ.प.प्र. पञ्चोली संस्क.।
४. १।३।७४, सि.कौ. भ्वादिप्र. मोतीलालसंस्क.।
५. कैमर्थी वैयर्थी— किमर्थस्य भावः कैमर्थ्यम्, तदेव कैमर्थी षित्वाद् ङीषि, 'हलस्तद्धितस्य' इति यलोपे 'औचिती' इतिवत् प्रयोगः।
६. बृहच्छब्देन्दुशेखरः, उत्तरार्धम्, १५७७ पृ., सं.सं.वि.वि.संस्क.।
७. ३।४।६७, काशिका, श्रीनारायणमिश्रसंस्क.।

यत्तु केचित् प्राज्ञम्मन्याः— 'भावे चाकर्मकेभ्यः' इत्येव सूत्र्यतान्देश्यम्! इति वाच्यम्, 'भावे यथा, तथा कर्तर्यपि अकर्मकेभ्य एव' इति नियमापत्तौ, सकर्मकेभ्यो भाव इव कर्तर्यपि लकाराऽनवसरात्' इति महद् वैयर्थ्यं स्यात्तमाम्।

अत्र किञ्चिद्— 'लश्च भावे चाकर्मकेभ्यः' इत्येतावत्या सूत्राकृत्या हि इष्टसिद्धिः! इति शङ्कनीयम्?

उत्तरस्मिन् 'तयोः.....'[१] इत्यमुष्मिन् सूत्रे 'तयोः' इति पदात् कर्मापि परामृश्यते; ततश्च तत्र परामर्शार्थं प्रकृतसूत्रे कर्मपदस्य नितरामावश्यकत्वात्।

अत्र पुनः किञ्चिद्— 'लः कर्मणि.....'[२] इत्यत्रत्याकर्मकपदेन अविवक्षित-कर्माणो[३] धातवोऽपि सङ्गृह्यन्तेतमाम् इति केषाञ्चन मतम्; मतान्तरन्तु—

---

१. ३।४।७०, सि.कौ., मोती. संस्क.।

२. ३।४।६९ काशिका, तारा पब्लिकेशन, १९६६।

३. अविवक्षितकर्माण इति। सकर्मकधातोरपि क्रिया अकर्मिका भवति, तत्र कारणानि चत्वारि, तदुक्तम्— १. 'धातोरर्थान्तरे वृत्तेः, २. धात्वर्थेनोपसङ्ग्रहात्, ३. प्रसिद्धेः, ४. अविवक्षितकर्मणोऽकर्मिका क्रिया इति।

अयं भावः— १. अन्योऽर्थोऽर्थान्तरम्, मयूरव्यंसकादयश्च इति नित्यसमासः। एवञ्च अर्थान्तरे धातुपाठोक्तार्थतो भिन्नेऽर्थे यथा धातुरयं शक्तस्तथायं सकर्मकोऽपि अकर्मको भवतीति प्रथमो हेतुः, नानार्थत्वमत्र बीजम्, 'तत्र च कुर्द खुर्द गुर्द गुद क्रीडायामेव' इत्येवकारो बीजम् इति। पुनश्च कर्म यदि धात्वर्थेन समुदायार्थेन उपसङ्गृहीतम् = विलीनं भवति तदा विलुप्तकर्मको धातुरकर्मको भवतीति द्वितीयो हेतुः। ईदृशस्थले 'किम्?' इत्याकाङ्क्षाविलीनकर्मकार्थेन पूरणात्, कर्मणो नैराकाङ्क्ष्येण धातुरकर्मकः।

पुनः— कर्म यत्र लोकप्रसिद्धं भवति, तत्र समुदायार्थे कर्मार्थो विलीनो भवतीति तृतीयो हेतुः। इदृशस्थले च 'किम्?' आकाङ्क्षासत्त्वेऽपि कर्मणो लोकप्रसिद्धत्वेन व्यभि-चाराभावात् कर्मानुपस्थितौ निश्चयेन तत्कर्मार्थबोध इति नास्ति तत्र कर्मणः पृथक् प्रयोगप्रसङ्ग इति। एवमेव कर्माविवक्षयापि अकर्मकत्वम् इत्यपि बोध्यतान्तमाम्, अत्र क्रमेणोदाहरणानि— 'शयानः कान्तायाः कुचकलशयुग्मं हृदि वहन्' इत्यत्र 'वह प्रापणे' इति सकर्मकः, अन्यत्र 'गङ्गा वहति' अत्र स एव धातुरकर्मकः। जीवति = प्राणान् धारयति; नृत्यति = गात्रं विक्षिपति। (अत्र कर्म धात्वर्थेनोपसङ्गृहीतम्) 'देवो वर्षति जलम्' इत्यस्यापि अव्यभिचरितप्रसिद्ध्या न प्रयोगः।

'हितात्र यः संश्रृणुते स किंप्रभुः' (द्र. किरात. १।५) तत्रत्यघण्टापथे संक्षेपो यथा— हिताद् = आप्तजनाद् हितोपदेष्टुः सकाशात्। आख्यातोपयोगे (१।४।२९) इत्यपादानात् पञ्चमी। हितम् इति शेषः। 'समो गम्यृच्छिभ्याम्' (१।३।२९) इत्यादिना सम्पूर्वात् श्रृणोतेरकर्मकाद् आत्मनेपदम्, अकर्मत्वं वैवक्षिकम्।

अत्यन्ताविद्यमानकर्मकाणामेव ग्रहणेनापीष्टसिद्धिः, अतश्च— 'नेह पच्यते', 'नेह भुज्यते' इत्यादिषु कर्मण्येव लकारः, शब्दप्रयोगाभावेऽपि गम्यमानत्वेन कर्मात्र नोक्तम्[1]।

अस्मत्पितृचरणाः '**श्रीपशुपतिभट्टाचार्यास्तु**— प्रकृतसूत्रे अविवक्षितकर्मणां गम्यमानकर्मणामिति उभयेषां ग्रहणेन विवादानवसरः, गम्यमानकर्माणः, अविवक्षितकर्माण इत्यनर्थान्तरमिति मन्तव्यम्।

सर्वतन्त्रापरतन्त्रशेमुषीका नागेशभट्टाचार्यास्तु— यद्यपि 'लः कर्मणि.....' इति सूत्रासत्त्वेऽपि, 'गुणः कृतात्मसंस्कारः......'[2] इति न्यायेन, तदर्थकलकाराऽनुवादेनात्मनेपदविधायकैरेषां लकारार्थत्वमनुमातुं शक्यम्। 'तयोरेव कृत्यक्तखलर्थाः' इत्यत्र तु 'कर्मणि कृत्यक्तखलर्थाः' 'भावेऽकर्मकेभ्यः' न्यासान्तरं कल्पयितुं शक्यम्। इदानीं 'कर्मणि कर्मव्यतिहारे' इत्येतस्मात् परमेव 'अनुदात्तङित—' इति सूत्रणीयम्, परमथापि 'घञादिसामान्येन सकर्मकेभ्योऽपि भावे लादेशास्स्युस्तमामिति पूर्वो दोषो दोषौ प्रसार्य तिष्ठेत्तमामेवेति निश्चप्रचं वचः। यत्तु केचिच्छाब्दिकम्मन्या भाषन्तेपाशम्— यद् 'भावकर्मणोः' इदं सूत्रम्— 'भावेऽकर्मकेभ्यः' इत्थं विधेयमिति, तन्न, त्वत्कृतन्यासे लाघवाभावात्, तव तु बुद्धिलाघवादेव इत्थंकारं कल्पनाजल्पनानल्पप्रसङ्ग इति।

ततश्च 'रमणीं भुज्यमानां विलासिना' इति 'कुमारीं विलोक्यते अभीकेन' इत्यादिदोषाः सावसरा एवेति पूर्वोक्तं न विस्मर्तव्यम्।

यत्तु पुनः केचिदन्ये विवदिषवः—'भावकर्मणोः' इत्यत्रैव 'भावेऽकर्मकेभ्यः' इत्येव सूत्र्यताम्, ततश्च 'अकर्मकेभ्यो लकारा भावे एव' इति नियमाय स्यादिति, तदप्युपहास्यमेव, बुद्धिलाघवादेव लाघवाभावास्पदं पदमिति ज्ञातुमप्यशक्यत्वादिति।

---

१. बालमनो. भ्वादि; पदमञ्जरी (हरदत्तमिश्र) १।४।५२ तारा पब्लिकेशन। महाभाष्यम्, १।४।३, आ. सूत्रम् ५२।

२. 'कृतात्मसंस्कार' इति। सम्पूर्णश्लोकस्त्वित्थम्—

'गुणः कृतात्मसंस्कारः प्रधानायोपकल्पते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ।।'

अयं भावः— 'गुणः = संज्ञापरिभाषादिः। कृतात्मसंस्कारः = जातार्थबोधः सन्नेव। प्रधानाय = विधिशास्त्राय। उपकल्पते = उपकर्तुं प्रभवति। तथा = जातार्थबोधः सन्नेव। प्रधानस्य = विधिशास्त्रस्य। भूयसि = महति। उपकारे = बोधजनने। वर्तते। अतो विधिशास्त्रीयशाब्दबोधरूपोपकारसिद्ध्यर्थं गुणशास्त्राण्यपि मिथः संवदन्ते, अन्यथा नेति दिक्।

न च— 'लः कर्मणि......' इत्यत्र 'लो भावे चाकर्मकेभ्यः' इत्येव न्यस्यतामित्यपि कश्चिद्विपश्चिदपश्चिम आह, परं 'हा हन्त हन्त नलिनीं गज उज्जहार' इति भावे इव कर्तर्यपि अकर्मकेभ्य एवेति नियमापत्तौ, सकर्मकेभ्योऽपि कर्तरि लकाराभावप्रसङ्गात्।

यत्तु केचित् पण्डितपुङ्गवा आहुःपाशम्— 'लः कर्मणि' इति सूत्रमपास्य, 'कर्तरि कृत्' इत्यमुष्मात् सूत्रात् परम्— 'लश्च' 'भावे चाकर्मकेभ्यः' इति अद्वितीया न्यासद्वयी स्वीक्रियतान्तमामिति तदपि महाहास्यास्पदं पदमित्यस्मत्सम्मतं मतमिति निर्विवादो वादोऽस्तीति, यतो हि एवं सति 'तयोः......' इति सूत्रे तच्छब्दः किम्परामृशेत्?

तत्र च कर्मपदसङ्ग्रहाय कर्मणि च 'कृत्यक्तखलर्थाः' इति गुरुभूतन्यासः, चेन च भावपरामर्श इति चेद्? गौरवगौरवस्य जृम्भायमाणत्वात्।

'रमते' 'अरंस्त' 'रंस्यते' इत्यादौ वर्तमानत्व-भूतत्व-भविष्यत्त्वादयो द्योत्या एवेति बोध्यम्।

**श्रीश्रीमत्कविराजराजिमुकुटालङ्कारहीरप्रभा-**
**गोपीनाथपदारविन्दविगलत्पीयूषयूषव्रतः ।**
**संक्षेपाद् मनुदेव एष च गुरोः कारुण्यतारुण्यतः**
**श्रीमीमांसकशाब्दिकोदितलकारार्थं मुदा व्यातनोत् ।।** इति।

# संस्कृतवाङ्मये निपातानामहमहमिका

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते।
वसिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः।।
सर्वं तु सोम्यमाख्यातं नाम वायव्यमिष्यते।
आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः[१]।।

इत्याद्युपासनार्थमुक्तम्। एवं ह्युपासिताः सन्तोऽर्थानभिज्ञस्यापि पुरुषस्य फलप्रदा भवन्तीति।

ऐतिहासिकप्रवाहदृष्ट्या, कालिकायामदृष्ट्या च यादृशं वाङ्मयं गैर्वाण्यां संरक्षितम्, न तादृशं प्रत्नं वाङ्मयमुपलभ्यते निखिलेऽस्मिन् जगतीतले। ज्ञानविज्ञानसम्पन्नैरार्यावर्तीयैर्महर्षिभिर्ज्ञानविज्ञानप्रातिशाख्यानां[२] यादृशमुपबृंहणं कृतम्, तदस्य भरतभूवलयस्य कीर्तिं ख्यापयितुमलम्। निपातविषयकाः केचन सिद्धान्ता निबन्धेऽत्र प्रस्तूयन्ते।

**संस्कृतभाषायाः पदविज्ञानम्**

गैर्वाण्या रत्नाकरायमाण ऋग्वेदाख्यग्रन्थ[३] एव दृश्यते पदानां चतुर्विधो विकासः—नाम-आख्यात-उपसर्ग-निपातरूपेण। अतोऽनुमीयते यदेतादृशपदविभाग

---

१. वाजसनेयिप्रा. ८।५१-५२ अनन्तभट्टभाष्यम्।

२. प्रातिशाख्यशब्दोऽत्र शाखां शाखां प्रति प्रतिशाखम्, इत्यर्थे प्रयुक्तः, न तु प्रातिशाख्यग्रन्थानां कृते।

३. ऋ.सं. ४।५८।३।

ऋग्वेदादपि प्राक्कालिको भवेदिति, यतो हि चतुर्विध एव पदविभागः प्रायेण सर्वासु प्राचीनभारोपीयार्यभाषासूपलभ्यते[१]।

आधुनिकभाषाशास्त्रविदाम्, ऐतिहासिकानाञ्च बहुपुरस्कृतोऽयं सिद्धान्तः, यदासीत् पुरा कदाचिदेतादृशः समयः, यस्मिन् समस्ताऽऽर्यजातिरेकस्मिन्नेव कौटुम्बिकसंस्कारसूत्र एकनीडायिताऽऽसीत्। तस्याश्चिन्तनप्रवाहस्य, भाषागत-सौन्दर्यविधायकतत्त्वस्य, दार्शनिकविश्लेषणबीजस्य, अङ्कविद्याया अन्वेषणस्य च विकासः कस्मिंश्चिदेकस्मिन् भूमिभागे समृद्धिं प्राप। तदनन्तरं सा जातिः पृथक् पृथङ् निकायरूपेण क्रमशः समस्तां वसुधां व्याप्नोत्; किन्तु तस्या यानि भाषा-संस्कृति-दर्शन-विज्ञान-मूलकसंश्लेषसूत्राण्यासन्, न तानि तद्वद्विश्लिष्टतां प्राप्तानि, यथा भूमिभागस्य विश्लेष उपपन्नः। अत एव भाषागतसम्बन्धः संवादश्चाधुनापि येन केन प्रकारेण संरक्षितः संपोषितश्च वर्तते।

संस्कृतभाषीयोऽयं पदविभागोऽतिप्राचीनास्वपि ग्रीक-लैटिन-अवेस्ताप्रभृति-भाषासु[२] निर्विशेषतयोपलभ्यते। एवम् ऋग्वेदीयमन्त्रे चतुर्धा विभक्तो हि पदविभाग आभिर्भारोपीयार्यभाषाभिरनुपदमनुवादितः। तथा हि ऋग्वेदीयो मन्त्रः —

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति।। इति।

व्याख्याति स्म च मन्त्रममुं स्कन्दस्वामी—'तदेतद् भेदेनैव हि चत्वारि वाचः परिमितानि पदानि, न पञ्चमम्। गवादीनि नामानि। कुतः? तेषां तत्त्वं सर्वमनुष्यैर्ज्ञायमानत्वात्। आख्यातोपसर्गनिपातास्तु अप्रसिद्धार्थत्वान्नार्थं सर्वे वदन्ति' इति। स्कन्दस्वामिनो भाष्यमिदमानुपूर्व्या संश्लोकयति दुर्गाचार्यः—

चतुर्विधपदेष्वत्र द्विविधस्यार्थनिर्णयः।
क्रियते संशयोत्पत्तौ नोपसर्गनिपातयोः[३]।। इति।

आभ्यां स्कन्द-दुर्गव्याख्यानाभ्यामेतन्निष्कृष्यते यद् वैदिककाल एव निपातोपसर्गाः किञ्चित्तिरोहितार्था उपपन्नाः। भाषाशास्त्रस्यायं[४] सिद्धान्त एवास्ति, यत् कस्य-चिच्छब्दग्रामस्यार्थतिरोहणं हि नामातिसुविपुलकालव्यवहारसापेक्षम्। न हि फेनबुद्बुद-वच्छब्दानामर्था उद्भवन्ति, लीयन्ते च। अतोऽत्रैतन्निर्णेतुं प्रभवामो यद्याद्यासु वैदिक-संहितास्वेव निपातोपसर्गाः किञ्चित् संदिह्यमानार्था उपपन्नास्तर्हि किलैतस्य चतुर्विध-पदविभागरूपसिद्धान्तस्य विकासस्ततोऽपि प्राक्कालिको भवेदिति। सा कीदृशी भाषाऽऽसीद् वैदिक्या भाषायाः पूर्वम्, यस्यामस्य विज्ञानसम्मतस्य पदविभागस्य प्ररोहोऽङ्कुरितः, इत्येतन्निश्चाययितुमद्यापि पुराविदः प्रयतन्ते।

---

१. आस्पेक्ट्स् आफ लैंग्वेज, पृ. १५७-५८; २. लैंग्वेज एण्ड इट्स् स्टडी, पृ. ८८।
३. निरुक्तम्-१।१; ४. भाषा, पृ. १०५।

## निपातपदस्याभिधानिकं निर्वचनम्

'निपातः' इति पदं व्याकुर्वाणैः शाब्दिकैर्निर्वचनकारैश्च निरणायि—नि + √पत> ⌊= गतौ⌋ > निपातः, इति धातूपसर्गाभ्यां तस्य जन्म। सिद्धान्तितश्च यास्काचार्येण—'अथ निपाता उच्चावचेष्वर्थेषु निपतन्तीति'[१] इति। निरुवाच च यास्कवाक्यं महेश्वरः—'उच्चावचेष्वित्यादिना त उच्चावचेषु = अनेकप्रकारेषु प्रतिपाद्येष्वर्थेषु प्रतिपादकत्वेन नि-पतन्ति = वर्तन्त इत्यर्थः' इति।

दुर्गाचार्य्येणाप्युरीकृतं महेश्वरव्याख्यानम्—'उच्चावचाः पदार्था भवन्तीति गार्ग्यः। उच्चाश्चावचाश्च उच्चावचाः = बहुप्रकारा इत्यर्थः। एषामुपसर्गादीनामर्थाः = पदार्था भवन्ति वियुक्तानामपि नामाख्याताभ्यामिति गार्ग्य आचार्यो मन्यत इति शेषः। एकैकोऽप्येषां नामाख्यातवियोगेऽपि अनेकार्थ इत्यभिप्रायः' इति। उच्चा इति शब्दः सायणाचार्येण प्रभूतार्थे[२], उच्छ्रितार्थे[३] च व्याख्यातः। अत एतन्निष्क्रष्टुं शक्यते यन्निपातानामर्था उच्चा = उच्छ्रिता भवन्तीति।

ऋक्प्रातिशाख्येऽपि किलेदमेव प्रतिपादनं पुरस्कृतम्—

निपातानामर्थवशान्निपातना-
दनर्थकानामितरे च सार्थकाः।
नेयन्त इत्यस्ति सङ्ख्येह वाङ्मये
मिताक्षरे चाप्यमिताक्षरे च ये[४]।।

उपबृंहितावान् च श्लोकमिमम् उव्वटाचार्यः—'अर्थविशेषे केचन निपाता निपातिताः, तथा केचन निपाताः सार्थकाः, केचन च निरर्थकाः, परमियत्तया ते मिताक्षरे = पद्ये, अमिताक्षरे = गद्ये च संख्यातुं न शक्याः' इति। एभिः सन्दर्भैः प्रथिततरं भवति यन्निपातानां पातस्तु सामूहिको भवति। 'निपतन्ति' इति बहुवचनक्रियया एषां सामूहिकः पातः संसूच्यते।

लोकेऽप्येतद्दृश्यते यत् कश्चिद्दुरधिगमार्थसिद्धय एव शक्तीनामेकत्र सामूहिकः पातो भवति। अतो वस्तुसत्तासंसक्तैः पदैरुन्नीतो विपर्यस्तो वाक्यार्थो निपातानामुच्चावचैः पातैः पूर्यते। नारायणभट्टेनापि प्रमीयते तथ्यमिदम्। स वक्ति यदर्थसिषाधयिषया निपातानां सम्भूयागमा भवन्तीति। तथा हि श्लोकः —

---

१. निरुक्तम्-६।२;
२. ऋ. सं. २।२।१० सायणभाष्यम्।
३. तत्रैव-२।४०।४;
४. ऋ.प्रा. १२।९ उव्वटभाष्यम्।

केऽप्येषां द्योतकाः केऽपि वाचकाः केऽप्यनर्थकाः।
आगमा अपि केऽपि स्युः सम्भूयार्थस्य साधकाः[१]।।

एवं सम्भूय निपातानामागमैरेतन्निर्गलितं भवति यत् समूहरूपेणैषां वाक्ये प्रपतनान्निपतनाद्वैतेषामाख्या निपात इति प्रसिद्धा। शौनकेनापि प्रमीयते सिद्धान्तोऽयम्—

इयन्त इति संख्यानं निपातानां न विद्यते।
प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे[२]।। इति।

प्रमाणैरेभिः संसाध्यते यत् 'निपातः' इति संज्ञाऽर्थौपयिकी, न तु शब्द-स्वरूपौपयिकी। डेनिस्टनमहोदयस्यापि किलायमेव पक्षः[३]। एवं तुलाबोधकेनानुसन्धानेन निश्चाययितुं शक्यते यन्निपातपदस्य निर्वचनानीमानि वैदिकवाङ्मयपुरस्कृतानि। सम्पूर्णे वैदिकवाङ्मये निपातानां परामर्शोऽर्थौपयिक एवावलोक्यते।

**पाणिन्युपज्ञं निर्वचनम्**

महामुनिपाणिनिना तु निपातपदस्याभिधानिकं निर्वचन्त्वेवं कृतम्—'चादयोऽसत्त्वे'[४] इति। मुनेः सूत्रमिदं व्याचक्षाणेनाचार्यपतञ्जलिनोक्तं यत्—'अयं सत्त्वशब्दः—अस्त्येव द्रव्यपदार्थकः। तद्यथा—सत्त्वमयं ब्राह्मणः, सत्त्वमियं ब्राह्मणीति। अस्ति क्रियापदार्थः—सद्भावः सत्त्वमिति। कस्येदं ग्रहणम्? द्रव्यपदार्थकस्य'[५] इति। महाभाष्यकारमतमूरीकुर्वता कैयटेनाप्युक्तम्— 'द्रव्यशब्देनात्र सिद्धरूपं सत्त्वमभिधीयते' इति। सन्दर्भाणामेतेषां पर्यवेक्षणेनैतदायाति यद् द्रव्याश्रयी शब्दः सत्त्ववान् भवति, तदनाश्रयी त्वसत्त्ववानिति। हरदत्तमिश्रस्याप्ययमेवाग्रहः। स उक्तवान् यत्—'इदं तदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमुच्यते' इति। अर्थाद् अयं घटः, इदं गृहम्, अयं गौरित्यादीनि सर्वनामपदैर्बोध्यमानानि वस्तूनि द्रव्यपदेनाभिधीयन्ते।

सत्त्वपदं व्याख्यातुकामेन भोजराजेनाप्युक्तं यत्—'तदेवमर्थग्रहणसामर्थ्यात् सलिङ्गः, ससंख्यः, सद्रव्यश्च समर्थः पदार्थ उपादीयते' इति। प्रमाणानीमानि प्रख्यापयन्ति यत् स्थूलसत्तावबोधकाः शब्दाः सत्त्ववचनाः, भावसत्तावबोधका-स्त्वसत्त्ववचना इति। इमानि सर्वाणि सत्त्वासत्त्वप्रपञ्चख्यापकानि वचनानि महामुनिपाणिनिसूत्रविजृम्भितानि। 'चादयोऽसत्त्वे' इति लक्षणे 'असत्त्व'पदं सन्निवेशयता महामुनिना पदविज्ञानस्य महानपकारः कृतः।

---

१. सरस्वतीकण्ठाभरणम्-१।१।११८, हृदयहारिणीव्याख्या।
२. बृहद्देवता-२।९५।
३. ग्रीक पार्टिकल्स, पृ. ९१।
४. अष्टाध्यायी-१।४।५७।
५. महाभाष्यम्-१।४।५७।

**सूत्रकृन्मते निपातविषयको विमर्शः**

महामुनिपाणिनिदृष्ट्या निपाताश्चतुर्विधाः सन्ति—

१. विशुद्धा निपाताः,

२. गत्युपसंज्ञाविशिष्टा निपाताः,

३. गतिसंज्ञामिश्रिता निपाताः,

४. कर्मप्रवचनीयसंज्ञायुक्ता निपाताः।

तत्र विशुद्धा निपाताः 'चादयोऽसत्त्वे'[1], 'प्रादयः'[2] इत्याभ्यां सूत्राभ्यां निर्दिष्टाः सन्ति। तथा हि—'असत्त्वेऽर्थे चादयो निपातसंज्ञाः स्युः' इति सूत्रार्थे किमिदमसत्त्वमिति जिज्ञासायामुक्तम्—'सीदन्ति = तिष्ठन्ति जातिगुणक्रिया यस्मिंस्तत्सत्त्वं द्रव्यम्'[3], न तु सतो भावः सत्त्वमिति, तदा तु—'साध्यमानतया क्रियारूपापन्ना सत्ता' इत्यर्थः स्यात्, तथासति 'असत्त्वे' इति प्रतिषेधोऽनर्थकः स्यात्, चादिषु सत्तावाचिनः शब्दस्याप्रसिद्ध्या व्यावर्त्यालाभात्। 'पशुर्वै पुरुषः' इत्यत्र पशुशब्दस्य निपातसंज्ञा प्रसज्येत, तस्य तादृशसत्तावाचित्वाभावात्। 'असत्त्वे' इत्यत्र नञर्थः प्रसज्यप्रतिषेधरूपः स्वीकृतो भाष्यकृता।

तत्फलञ्च विशेषेण प्राति पूरयति इति विग्रहे विपूर्वकात् प्राधातोः कर्तरि कप्रत्यये सति 'विप्रः' इति प्रयोगस्य साधुत्वमुक्तम्। अन्यथा पर्युदासपक्षे द्रव्यभिन्नेऽर्थे वर्तमानाश्चादय इत्याद्यर्थे नात्र निपातसंज्ञायाः प्रसङ्गः स्यात्, तस्य पूरणक्रियाविशिष्ट-कर्तृरूपद्रव्यवाचित्वेऽपि केवलाद् द्रव्यादस्य क्रियाद्रव्यसमुदायस्य भिन्नत्वेन द्रव्यभिन्नेऽर्थे वर्तमानत्वात्। ततश्च सुपो लुक् स्यात्। प्रसज्यप्रतिषेधपक्षे तु विशेष्यतया द्रव्येऽर्थे वर्तमानतया निषेधः स्यात्।

वस्तुतस्तु प्रसज्यप्रतिषेधकल्पे वाक्यमेवासमर्थसमासः क्रियापदाध्याहारादिदोष-बाहुल्यादियमुक्तिरेकदेशिनः। पर्युदासपक्षेऽपि विशेष्यतया 'द्रव्यभिन्नेऽर्थे' इत्याद्यर्थकरणेन उक्तस्थले दोषोद्धारः सुकरः। अस्यां स्थितावपि अत्यन्तनिरर्थकानां निपातसंज्ञा न स्यात्, अतः—'लिङ्गसंख्यान्वयिताऽनवच्छेदकं यद्रूपम्, तद्रूपेतररूपावच्छिन्नविषयक-बोधतात्पर्येण अनुच्चारिताश्चादयो निपाताः स्युः' इत्येवं सूत्रार्थः परिष्करणीयः, ततश्च नैव कुत्राप्यतिव्याप्त्यव्याप्ती।

तथा हि—'लिङ्गसंख्यान्वयितावच्छेदकं रूपं घटत्वादि, तद्भिन्नं रूपं समुच्चयत्व-विकल्पत्वादि, तद्रूपेतररूपं पुनर्घटत्वादि, तदवच्छिन्नविषयकबोधतात्पर्येणोच्चारिता घटादिशब्दाः, अनुच्चारिता 'च-वा-ह-तु' इत्यादयः समुच्चयादिवाचकाः, पादपूर्तिमात्रे प्रयुक्ता निरर्थकाश्च, ते निपातसंज्ञकाः सञ्जाताः।

---

१. अष्टा. १।४।५७; २. तत्रैव-१।४।५८; ३. महाभा. १।४।५७-प्रदीपः।

'असत्त्वे' इत्यस्य व्यावर्त्यस्तु द्रव्यवाची पशुशब्दः। सम्यगर्थवाची गणपठितः पशुशब्दस्तु लक्ष्य एव। 'प्रादयः' इति सूत्रस्यापीयमेव स्थितिः। तत्रासत्त्वे इत्यस्य व्यावर्त्यः पक्षिवाचको विशब्दः। विशेषार्थवाचकस्तु लक्ष्य एव। अनयोः सूत्रयोर्विवरणेन निपातानां वाचकतापक्षे पक्षपातः प्रतीयते सूत्रकारस्य।

गत्युपसर्गसंज्ञाविशिष्टा निपाताः संकीर्तिताः सन्ति—'उपसर्गाः क्रियायोगे'[१], 'गतिश्च'[२] इत्याभ्यां सूत्राभ्याम्। तथा हि— 'क्रियया सह योगे सति निपातसंज्ञापूर्वकमेतत्संज्ञाद्वयमाभ्यां विधीयते। क्रियया सह योगे द्योत्यद्योतकभावो वाच्यवाचकभावो वा। संज्ञात्रितयसमावेशस्य फलं तु 'प्रति प्रणयति' इत्यत्र 'प्र' इत्यस्योपसर्गत्वान्नयतेर्नकारस्य णत्वम्, गतित्वात् 'गतिर्गतौ'[३] इति प्रतीत्यस्य निघातः, निपातत्वादुदात्तः स्वरश्च सिद्ध्यति। ईदृशनिपातानां द्योतकतापक्षो वाचकतापक्षो वाऽभ्युपेयते।

गतिसंज्ञायुक्ता निपाताः 'ऊर्यादिच्विडाचश्च'[४] इत्यादिसूत्रैर्निरूपिताः। ऊर्यादयः प्राग् निपाताः सन्तः क्रियायोगे गतिसंज्ञका भवन्ति। 'ऊरी', 'उररी' इमौ स्वीकारवाचकौ। एवं भूषणेऽर्थे शक्तोऽलमिति निपातः क्रियायोगे गतिसंज्ञको[५] भवति। एवमेव आदरानादरयोः सदसच्छब्दौ[६], अपरिग्रहेऽन्तरशब्दः[७], श्रद्धातिशये 'कणे-मनसि[८]' इतीमौ शब्दौ, च्व्यर्थे साक्षात्प्रभृतयः क्रियायोगं[९] प्राप्य गतिसंज्ञां लभन्ते। तत्फलन्तु 'कुगतिप्रादयः'[१०] इति नित्यसमासः। निपातसंज्ञाफलं तु 'ऊरी-करोति' इत्यादावाद्युदात्तसिद्धिः। एते ऊर्यादयो निपाताः स्वीकाराद्यर्थस्य वाचकाः, क्रियाविशेषस्य च द्योतकाः सन्ति।

चतुर्थकोटौ कर्मप्रवचनीयत्वविशिष्टा निपाताः सङ्केतिताः सन्ति 'अनुर्लक्षणे' प्रभृतिसूत्रैः। कर्मक्रियां प्रोक्तवन्त इति कर्मप्रवचनीयाः, अर्थात् क्रियामुक्त्वेदानीं क्रियानिरूपितसम्बन्धं द्योतयन्तीति[११]। यथा— 'अनुर्लक्षणे'[१२] इति सूत्रेणानो-र्निपातसंज्ञाकर्मप्रवचनीयसंज्ञा विधीयते— लक्ष्य-लक्षणभावे सम्बन्धे द्योत्ये सति। यथा 'वनमनु अशनिर्गतः' इत्यत्र वनं लक्षणम्, अशनिगमनं लक्ष्यम्। द्वयोर्लक्ष्य-लक्षणभावसम्बन्धस्य द्योतकोऽनुः कर्मप्रवचनीयसंज्ञां लब्धवान्। अत्र कर्मप्रवचनीयसंज्ञाफलं द्वितीयाविभक्तिसिद्धिः, निपातत्वफलन्तु स्वरसिद्धिः।

---

१. अष्टा. १।४।५९; २. तत्रैव-१।४।६०; ३. तत्रैव-१।४।६२।
४. तत्रैव-१।४।६१; ५. तत्रैव-१।४।६४; ६. तत्रैव-१।४।६३।
७. तत्रैव-१।४।६५; ८. तत्रैव-१।४।६६; ९. तत्रैव-१।४।७४।
१०. तत्रैव-२।२।१८; ११. म.भा. १।४।८३; १२. अष्टा. १।४।८४।

एवं 'उपोऽधिके च[1]', 'हीने[2]', 'अतिरतिक्रमणे च[3]', 'सुः पूजायाम्[4]', इत्यादिभिः सूत्रैः कर्मप्रवचनीयसंज्ञा विधीयते। तत्र न्यूनाधिकभावसम्बन्धः, पूज्यपूजकभावादिसम्बन्धश्च द्योत्यत्वेन ग्राह्यः।

एवमेव 'अधेः प्रहसने[5]', 'वेः पादविहरणे[6]', 'आङ् उद्गमने[7]' इत्यादिषु सूत्रेषु गत्युपसर्गत्वविशिष्टं निपातत्वमध्यादीनामस्ति। तत्र द्योतकतावाचकताऽन्यतरपक्ष आश्रयणीयः।

## निपातानां द्योतकत्वं वाचकत्वं वा

निपातानां क्रियाविशेषस्य द्योतकत्वं स्वीकर्तव्यं वाचकत्वं वा? इति जिज्ञासायामुच्यते— निपातार्थविषये तत्तन्मतपर्यालोचनेन त्रयः पक्षाः सम्भवन्ति।

**तत्र प्रथमः पक्षः**— अनुभवतीत्यादौ 'अनुभव'रूपोऽर्थो न धातोः, 'भवति' इत्यत्रापि तत्प्रतीत्यापत्तेः, नोपसर्गस्य 'अनुगच्छति' इत्यादावपि तद्बोधप्रसङ्गात्। नापि विशिष्टस्य, शक्ततावच्छेदकांशे गौरवापातात्। अत उपसर्गो द्योतकः, धातुरेव तद्वाचकः। अत एव च 'अनुभव'-'साक्षात्कारादि'-रूपफलवाचकत्वेन कर्मणि लकारोऽपि उपपद्यते। द्योतकत्वं चात्र तात्पर्यग्राहकत्वमेव। उक्तं च हरिणा—

क्वचित्सम्भविनो भेदाः केवलैरभिदर्शिताः।
उपसर्गेण सम्बन्धे व्यज्यन्ते प्रपरादिना[8]।। इति।

**द्वितीयः पक्षः**— उपसर्गा नहि केवलं द्योतका एव; अपि तु वाचका अपि। तथा हि— 'तिष्ठति' इत्यादौ स्थाधातोर्गतिनिवृत्तिवाचकत्वमस्ति। 'प्रतिष्ठते' इत्यादौ प्रोपसर्गेण गतिवाचकत्वं व्यवस्थाप्यते। उक्तं च भर्तृहरिणा— 'स वाचको विशेषाणां संभवाद् द्योतकोऽपि वा[9]' इति।

न च वाचकतापक्षे स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वादिव्यवस्था न स्यादिति वाच्यम्, स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वरूप-सकर्मकत्वव्यवस्थापनेनेष्टसिद्धेः[10]।

**तृतीयः पक्षः**— उपसर्गविशिष्टस्य च धातोर्वाचकत्वम्। उक्तं च हरिणा— 'शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते', 'सम्भूय धातूपसर्गावर्थमाहतुः' इति शक्तिमात्रमुपसर्गः कुरुते, इतिकृत्वा अर्थाभिधाने सहकारिण उपसर्गा इति[11]।

१. अष्टा. १।४।८७; २. तत्रैव-१।४।८६; ३. तत्रैव-१।४।९५।
४. तत्रैव-१।४।९४; ५. तत्रैव-१।३।३३; ६. तत्रैव-१।३।४१।
७. तत्रैव-१।३।४०; ८. वा.प. २।१।८७; ९. तत्रैव-२।१८८ पुण्यराजः।
१०. वै.भू.सा., निपातार्थनिर्णयः; ११. वा.प. २।१८९ पुण्यराजः।

अस्मिन् पक्षेऽडाद्यागमविषये द्विर्वचनादिविषये चोपसर्गस्य पृथक्कृतिः कर्तव्या भविष्यति। एषु पक्षेषु कतमः पक्ष औचित्यमावहतीति विचारणायामुच्यते— द्योतकतावादस्योद्भवो निरुक्तसमय एवाभूत्। तस्य पल्लवनं महाभाष्ये समजायत। तदनु प्रायः समेऽप्याचार्या द्योतकतावादमेव समर्थितवन्तः।

'अव्ययं विभक्ति०' इति सूत्रस्थं भाष्यं व्याचक्षाणेन कैयटेन[1] 'सुमद्रा' इत्यत्र सुशब्दस्य समृद्धिद्योतकता स्पष्टमुक्ता। 'स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा' इत्युक्त्या भर्तृहरिणा यद्यपि पक्षद्वयमविशेषेणोच्यते, भूषणकृताऽपि स एव पक्षोऽनुस्त्रियते; तथापि 'क्वचित् सम्भविनो भेदाः' इत्याद्युपसंहारस्यालोचनया द्योतकतापक्ष एवावसीयते। अस्मिन् द्योतकतापक्षेऽनुमानमपि प्रमाणमुपन्यस्यते— 'प्रादयो द्योतकाः, उपसर्गत्वात्, यश्च न द्योतकः, स तु नोपसर्गः, यथा घटादिशब्दः।

ननु प्रादयो द्योतकाः, निपातत्वादिति निपातत्वेन हेतुना प्रादीनां द्योतकत्वं साध्यतामिति चेत्? तन्न सम्भवति, उपसर्गत्वस्य तत्रोपाधित्वात्। तथा हि— उपसर्गत्वे द्योतकत्व-रूपसाध्यव्यापकत्वमस्ति, निपातत्वरूपसाधनस्य चाव्यापकत्वमस्ति।

निपातत्वं हि वाचकचादिष्वपि वर्तते, तत्रोपसर्गत्वं नास्ति, इति निपातत्वरूप-साधनस्याव्यापकत्वं बोध्यमुपसर्गत्वे। यद्यपि चेष्टादिष्वपि सङ्केतितार्थद्योतकत्वमस्ति, तत्र चोपसर्गत्वं नास्ति, इतिकृत्वा साध्यव्यापकत्वं तत्र न सम्भवति; तथापि निपातत्वरूपसाधनाऽवच्छिन्नद्योतकत्वस्योपसर्गे सत्त्वेन निपातत्वसमानाधिकरण-द्योतकरूपसाध्यव्यापकत्वेन साधनाऽवच्छिन्नसाध्यव्यापकत्वादिघटितोपाधिलक्षणस्य समन्वयस्तत्र भवत्येव'।

अथवा प्रकर्षादिः प्रादिवाच्यः, प्राद्यन्वयव्यतिरेकानुविधायिशाब्दधीविषयत्वात्। प्रादिसत्त्वे तत्प्रतीत्या तदसत्त्वे च तदप्रतीतेः। यथा घटादिरूपोऽर्थो घटादिशब्दा-न्वयव्यतिरेकानुविधायी, इति घटादिशब्दवाच्यः, इत्यनुमानमपि अत्र योजयितुं शक्यते।

नन्वत्रापि 'अनन्यलभ्यो हि शब्दार्थः' इत्यनन्यलभ्यत्वमुपाधिः स्यादिति चेत्, तन्न साधुतरम्, तस्य वाच्यत्वरूपसाध्यव्यापकत्वेऽपि उक्तसाधनाव्यापकत्वस्य दुर्वचत्वात्। अतश्च 'प्रजपति' इत्यादौ जपादिर्धातुवाच्यः, प्रकर्षादिः प्रादिवाच्यः, इत्येवं वाचकतापक्षः प्राप्तः।

न च नामार्थधात्वर्थयोः साक्षाद् भेदेनान्वयस्याव्युत्पन्नतया प्रकर्षस्य स्वरूप-सम्बन्धेन जपाद्यर्थेऽन्वयो न सम्भवतीति वाच्यम्, उक्तनियमे निपातातिरिक्तत्वेन संकोचे सतीष्टसिद्धेः। परन्त्वत्र पक्षे 'प्रतिष्ठते' इत्यादौ गत्यभावस्य धात्वर्थत्वे

१. महाभा. २।१।६-प्रदीपः।

तदभावस्योपसर्गार्थत्वे न्यायनये तिङर्थाश्रयत्वे गत्यभावाभावस्याप्रकृत्यर्थतया प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधादनन्वयापत्तिः स्यात्, आद्यगमनस्य प्रतीतिश्च न स्यात्।

प्रशब्दार्थाभावस्य गमनाभावरूपधात्वर्थं प्रति विशेष्यतयैव भानाद् धात्वर्थगतविशेषकत्वाभावेनोपसर्गत्वमपि प्रशब्दस्य न स्यात्। तस्मादुपसर्गाणां द्योतकत्वमेवोचितम्। चादीनां तु केषाञ्चिद् वाचकत्वम्, केषांञ्चिद् द्योतकत्वम्। यथा नञोऽभावो वाच्यः। 'शरैरुस्रैरिव' इत्यादौ इवादिशब्दस्य सदृशादिद्योतकत्वम्, उस्रशब्दस्योस्रसदृशे लाक्षणिकत्वम्।

न च वाचकतापक्षे 'शोभनः समुच्चयः' इतिवत् 'शोभनश्च', 'घट-पटयोः समुच्चयः' इतिवत् 'घट-पटयोश्च' इत्याद्यपि स्यादिति वाच्यम्, शब्दशक्तिस्वभावाद् निपातानां नित्यपरतन्त्रतया तत्र विशेषणयोगस्यासम्भवात्।

अत्रायं समाधिः—शक्ति-लक्षणा-व्यञ्जनेति त्रिविधवृत्तिषु शक्तेः प्राथम्याद् निपातेषु तत्सम्भवे वृत्त्यन्तरं नोचितम्। प्रकर्षः प्रादिवाच्य इत्याद्यनुमानेन वाचकतापक्षस्यैव समर्थनात्। न च 'अनुभवति' इत्यादौ अन्वादेरनुभवादिवाचकत्वे धातोर्व्यापारमात्रवाचकत्वं स्यात्, तच्च 'फलव्यापारयोर्धातुः' इति सिद्धान्ताद् विरुद्धमस्तीति वाच्यम्, ईदृशस्थले धातोस्तन्मात्रपरत्वेऽपि दोषाभावात्। विशिष्टार्थवाचकपदस्य विशेषणवाचकपदसमभिव्याहारे विशेष्यमात्रपरत्वस्य दृष्टत्वात्। तथा च महाकविः कालिदासः—'स कीचकैर्मारुतपूर्णरन्ध्रैः'[1] इत्येवं प्रायुङ्क्त। सकर्मकाकर्मकविभागव्यवस्था तु सकर्मकलक्षणनिर्देशेन पूर्वमुक्तैव।

'घटं पटञ्च पश्य' इत्यादौ चशब्द एव समुच्चयवाचकः। तत्रैव प्रतियोगितासम्बन्धेन पटस्यान्वयः, तस्य च स्वरूपसम्बन्धेन घटेऽन्वयः कर्तव्यः। एवं च 'पटप्रतियोगिकसमुच्चयवन्तं घटं पश्य' इति बोधः। यद्यपि नामार्थयोः साक्षाद् भेदेनान्वयो न भवति, व्युत्पत्तिविरोधात्; तथापि व्युत्पत्तिवैचित्र्येण तस्या व्युत्पत्तौ निपातातिरिक्तत्वेन संकोचे सति नास्ति कुत्रापि दोषलेशः।

इवादिनिपातस्थलेऽपीयमेव रीतिरनुसर्तव्या। तत्र चत्वं वात्वमिवत्वादिकञ्च वाचकताऽवच्छेदकत्वेन स्वीकार्यम्। 'प्रतिष्ठते' इत्यत्र प्रशब्दसमभिव्याहारात् स्थाधातोर्गतिमात्रमर्थः। प्रशब्दस्य प्रकृष्टत्वमर्थः। एवञ्च प्रकृष्टगमनमर्थस्तत्र स्वीकरणीयः। तथा सति न सन्ति पूर्वोक्ता दोषाः। तत्र प्रशब्दस्याभावोऽर्थस्तु सर्वथाऽनुभवविरुद्धः। तत्समभिव्याहारेण स्थाधातोरेवार्थः परिवर्तनीयः। यथा 'उपकृतं बहु तत्र किमुच्यते,

---

१. रघुवंशमहाकाव्ये-२।१२।

सुजनता प्रथिता भवता परम्' इत्यादौ उपकृतपदस्यापकारे लक्षणा स्वीक्रियते साहित्यशास्त्रमर्मज्ञैः[१]। अथ च 'प्रजपति' इत्यादौ प्रशब्दस्योपसर्गत्वमजानतोऽपि प्रकृष्टजपविषयकबोधदर्शनाद् द्योतकतापक्षो न सम्भवति, द्योतकताज्ञानस्योपसर्गत्वज्ञानाधीनत्वात्। आभिर्युक्तिभिर्भाषाविज्ञानदृष्ट्या च मया वाचकतावाद एव सिद्धान्तितः।

'असत्त्व' इति शब्दोऽष्टाध्याय्यामपां तरङ्गेषु तैलबिन्दुरिव प्रक्षिप्तः सन् पश्चाद्भाविवैयाकरणनिकायेषु तत्त्वचिन्तायाः प्रधानतमो विषय उपपन्नः। सर्वैः पश्चाद्भाविभिर्वैयाकरणैरादर्शरूपेण मुनित्रयव्यवस्थाऽङ्गीकृता[२]। अनुवादमात्रमपि कुर्वाणैरेतैः शाब्दिकैः सम्यङ्नानुवादिता मुनित्रयविभुसिद्धान्ताः। एतेषां चर्चायास्तत्त्वानि कानिचित् परिगणितान्यासन्। को नाम सुबर्थः, निपातोपसर्गा द्योतका वाचका वा, 'घटो घटः' इत्यत्र कः शाब्दबोधः, शाब्दबोधस्य को वा परिष्कारपन्थाः? इत्येतान् विषयानाधारीकृत्य वैयाकरणा मिथो वादमातेनुः।

व्याकरणाध्ययनस्य प्रयोजनानि निर्दिशता महामुनिपतञ्जलिनोक्तं यत्— 'रक्षार्थं वेदानामध्येयं व्याकरणम्'[३] इति निर्देशोऽपि न्यक्कृतोऽर्वाक्कालिकैः शाब्दिकैः। दृश्यते हि व्याकरणशास्त्रस्य वेदाङ्गेषु प्राधान्येन सन्निवेशः। तस्येदमेव हार्दं यद् रक्षार्थं वेदानामध्येयं व्याकरणमिति। अस्मिन्नेवार्थे व्याकरणस्य वेदाङ्गत्वस्वारस्यम्। एवं भाष्यनिर्दिष्टस्य व्याकरणाध्ययनप्रयोजनस्य मुख्यं लक्ष्यमप्युपेक्षितं पश्चाद्भाविभिः शाब्दिकैः।

दशामिमां दर्शं दर्शं चेखिद्यमानमानसैर्भर्तृहरिभिः साधूक्तम्—

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान्।
संप्राप्य वैयाकरणान् सङ्ग्रहेऽस्तमुपागते।।
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने।।
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात्।
तस्मिन्नकृतबुद्धीनां नैवावस्थितनिश्चयः[४]।। इति।

इत्थं संस्कृतवाङ्मये द्विविधं निर्वचनमुपलभ्यते निपातपदस्य। प्रथमं तावत् कार्यकारणमूलकम्, अर्थभूयस्त्वमूलकम्, नामपदव्यवहारमूलकञ्चापि। द्वितीयन्तु— असत्त्वमूलकम्, अत एव द्योतकत्वमूलकञ्च। एके तावदवलम्बते वैदिकसाहित्यम्, अपरञ्च लौकिकमिति।

---

१. पदमञ्जरी-१।४।५७; २. शृङ्गारप्रकाशः, पृ. ३३।
३. महाभाष्यम्-पस्पशाह्निकम्; ४. वाक्यपदीयम्-२।४७८-४८०।

**निपाताव्ययोर्मौलिको भेदः**

प्रायेण हि दृश्यते निपाताव्यययोरन्योन्यं वृत्तिसाङ्कर्यम्। तानेव शब्दान् शाब्दिकाः कुत्रचिद् निपातपदेन व्यपदिशन्ति, कुत्रचित्त्वव्ययपदेन। उभयोर्लक्षणान्यपि साङ्कर्यग्रस्तानि, अन्योन्याश्रितानि वोपलभ्यन्ते। असत्त्वगन्धिनो निपाता अपि भवन्ति, अव्ययान्यपि। तदुक्तं जिनेन्द्रबुद्धिना— 'सत्त्वमिति च द्रव्यमुच्यत इति। नहि चादिस्वरादिषु मध्ये शब्दः सत्तावाची कश्चिदस्ति। इदं तदिति सर्वनामप्रत्यवमर्शयोग्यो योऽर्थस्तद् द्रव्यमिति'[१] इति। भोजराजेनाप्येवमेवोपपादितम्— 'प्रायेणालिङ्ग-संख्याशक्तीनव्ययानि'[२] इत्यव्ययलक्षणम्। 'असत्त्वभूतार्थाभिधायिनोऽलिङ्गसंख्याशक्तयो निपाताः' इति निपातलक्षणम्। लक्षणानीमानि अन्योन्यसंसक्तानि दृश्यन्ते। वस्तुतोऽव्ययसंज्ञा तु न वैदिकी। यतो हि तत्र—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्[३]।।

इति गोपथब्राह्मणीयस्यास्य लक्षणस्य व्याप्तिरेव न दृश्यते। वैदिकवाङ्मये सर्वविधाः शब्दाः स्वरूपव्ययवन्तोऽर्थव्ययवन्तश्च दृश्यन्ते। न हि तत्र शब्देषु स्थाणुवृत्तिराद्रियते। साधूक्तं ह्विट्नीमहोदयेन— 'पूर्वप्रत्ययैः परप्रत्ययैर्वा आवृताः शब्दा एव व्यवहार-पदवीमवतरन्ति। प्रत्ययैरनावृतस्य कस्यचिद् नग्नरूपस्य शब्दस्य विनियोग एव न कर्तुं शक्यते'[४] इति। ह्विट्नीमहोदयस्य सिद्धान्तोऽयं महाभाष्यकारसिद्धान्तेन सह संवदते— 'न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः' इति।

वैदिकसन्दर्भैरेतदायाति यत् तत्र सर्वविधाः शब्दा व्ययवन्तोऽर्थात् कारक-विभक्ति-लिङ्ग-संख्यानुगुण्यमप्यनुभवन्ति। किं बहुना, संज्ञापदानामिव निपातोपसर्गाणां तत्र परामर्शो दृश्यते। अधस्तात् तावत् कारक-संख्यान्वितानि निपातपदान्युद्ध्रियन्ते—

(क) तृतीयाविभक्तिभाजः[५]—नमसा, अन्तरेण, अन्तरैः, पराचैः— इत्यादिः।

(ख) चतुर्थीविभक्तिभाजः[६]—आनवाय[७], अह्नाय, चिराय— इत्यादिः।

---

१. न्यासः-१।४।५७;  २. शृंगारप्रकाशः-१, पृ. ९-१०।
३. गोपथब्राह्मणम्-१।१।२६;  ४. लैंग्वेज एण्ड इट्स स्टडी, पृ. १३।
५. क्रमशो द्रष्टव्यम्-ऋ.सं. १।६३।९, पदमञ्जरी-२।३।४, ऋ.सं. ६।६३।१०, अथर्ववे. ७।४२।१।
६. ऋ.सं. ६।६२।९, महाभार. विराट्प. २२।१०, किरातार्जु. १।४४।
७. 'आनवाय', 'अणुः' 'आनवस्य'-प्रभृतयो संज्ञाशब्दाः 'अनु' इत्युपसर्गोपादानभूताः।

(ग) पञ्चमीविभक्तिभाजः[१]—बलात्, पश्चातात्, पराकात्—इत्यादिः।

(घ) षष्ठीविभक्तिभाजः[२]—आनवस्य, चिरस्य, नानानाम्, पुरूणाम्—इत्यादिः।

(ङ) सप्तमीविभक्तिभाजः[३]—अभीके, परे, पारे, उद्वत्सु, निवत्सु—इत्यादिः।

नानाविभक्तिजुषामेतेषां शब्दानां विश्लेषणेन निष्क्रष्टुं शक्यते यद् वैदिकभाषायामव्ययपदचर्चाराहित्यस्य प्रधानो हेतुस्तु निपातोपसर्गाणां तत्तद्विभक्तिभाक्त्वमेवासीत्। अतो निष्कर्षरूपेण प्रत्येतुं प्रभवामो यन्निपातत्वं हि नामार्थौपयिकी संज्ञाऽऽसीत्, अव्ययत्वन्तु शब्दस्वरूपौपयिकी इति।

## निपातानां नाममूलकत्वम्

भाषाः खलु द्विविधा भवन्ति— शब्दप्रसविन्यः, शब्दाहारिण्यश्च। प्रथमकोटौ प्राचीनभारोपीयभाषाः— संस्कृत-ग्रीक-लैटिन-प्रभृतयोऽन्तर्भवन्ति, द्वितीये तु समस्ता आधुनिक्यो भाषाः समायान्ति। नवनवानां शब्दानां प्रसवदृष्ट्या संस्कृतभाषा काममन्यतमाऽस्ति। वैदिकवाङ्मये बहव एतादृशाः संज्ञाशब्दा दृश्यन्ते, ये निपातोपसर्गोपादानभूताः। न हि तत्र कश्चिद् दृढाग्रहो दृश्यते निपातानां नामत्वेन परामर्शनिषेधे। निपातोपसर्गोपादानभूतानि नामपदानि 'चादयोऽसत्त्वे' इति सूत्रस्य मिथ्यात्वं प्रख्यापयन्ति। ते च नामशब्दा येन केन प्रकारेण कृत्स्ने संस्कृतसाहित्ये व्यवहृता दृश्यन्ते। ते चाधस्तात् प्रस्तूयन्ते—

(क) अणुः < अनुः—'अणुः'[४] इति संज्ञाशब्दः 'अनु' इत्युपसर्गविपरिणामः।

(ख) आनवः[५] < अनुः—अनोरपत्यमानव इति नामा कश्चिद्वैदिको राजा। अनूपसर्गस्य संज्ञात्वमत्रापि दृश्यते।

(ग) उमा < उ + मा > उमा[६]—इति संज्ञापदमपि निपातद्वयसमाहारभूतम्।

(घ) पुरुः— इति संज्ञाशब्दोऽपि 'पुरु'[७] इत्युपसर्गप्रतिरूपः।

(ङ) दोषा[८]—इति रात्रिवाचकः संज्ञाशब्दो निपातत्वेनापि परामृष्टोऽवलोक्यते।

(च) सनकः[९], सनत्कुमारः, सनन्दनः, सनातनः प्रभृतयो नामशब्दा अपि 'सना' इति निपातोपादानभूताः।

---

१. नामलिंगानु. २।८।१०८, ऋ.सं. ७।७३।५, १०।२२।६।

२. ऋ.सं. ७।१८।१३, अभिज्ञानशा. ५।१५, ऋ.सं. ९१।१२।१, तत्रैव-१।५।२।

३. ऋ.सं. ४।१३।५, शतपथब्रा. ५।१।५।२१, ऋ.सं. १०।१८८।५, तत्रैव-१।१६१।११।

४. निरुक्तम्-६।८-दुर्गव्याख्या; ५. ऋ. सं. ६।६२।९-स्कन्दभाष्यम्।

६. कुमारसम्भवम्-१।२५-अरुणगिरिनाथव्याख्या।

७. ऋ.सं. १।१०८।८-सायणभाष्यम्; ८. तत्रैव-६।७१।४-स्कन्दभाष्यम्।

९. ऋ.सं. १।३३।४, १।६२।७-स्कन्दभाष्यम्, भागवतम्-२।७।५-श्रीधरीव्याख्या, अमरकोषः-१।१।५१-सर्वानन्दव्याख्या।

ऐतिहासिकपदविज्ञानदृशा निपातोपसर्गमूलकानि नामपदानीमानि 'निपाता द्योतकाः' इति मिथ्यावादमन्यथयन्ति। अस्मिन्नेव सन्दर्भे किलाधुनिकभाषाशास्त्रविदाम्— मैक्समूलर[१]-ह्विट्नी[२]-बरो[३]-वान्द्रियैज़[४]-गुणे[५]-प्रभृतीनां प्रतिपादनमिदं समीचीनं प्रतिभाति यत्— 'निपातोपसर्गा अपि नाम-सर्वनामशब्दानां स्खलितावशेषाः' इति।

## निपातानां सर्वनाममूलकत्वम्

एतादृशा अपि निपाता अनुसन्धानेनान्विष्टाः, ये सर्वनामकोटिमप्यधिरोहन्ति। बहवो निपाता गैर्वाण्यां दृश्यन्ते, ये मूलतः सर्वनामकक्षातोऽधःकृताः। 'अहम्'[६], आकीम्[७] < आ + किम् > आकीम्, किम्[८], तत्-यत्[९], नकिः[१०] < न + कश्चित् > नकिः, माकीम्[११] < मा + किम् > माकीम् > माकिः[१२], मा + कश्चित् > माकिः, ते[१३]-मे, सा[१४], हिकम्[१५] < हि + कम् > हिकम्-प्रभृतयो निपाताः सर्वनाममूलकाः।

अवेस्ताभाषायामप्येतादृशाः सर्वनाममूलका निपाता दृश्यन्ते। कश्च > अवे० चिश् च, ताश्चित् > अवे० तासचित्, तेचित् > अवे० तए चित्, माकिः > मा-चिश्प्रभृतय आवेस्तिका निपाता अपि सर्वनाममूलकाः।

## निपातानामाख्यातमूलकत्वम्

संस्कृतभाषायां दृश्यन्ते हि भूयांसो निपाता आख्यातमूलकाः। अत्रेदमवधारणीयं वर्तते यद् आख्यातमूलकानां निपातानां विकासोऽर्वाक्कालिकः। न हि श्रुतिसाहित्य आख्यातमूलकनिपातानां प्रयोगोऽवलोक्यते। ते चाख्यातप्रतिरूपका निपाता अवस्तात् प्रस्तूयन्ते—अस्ति,[१६] नास्ति,[१७] अस्तु,[१८] आह,[१९] आस,[२०] स्यात्-प्रभृतयो[२१]

---

१. लेक्चर्स आन दी साइंस ऑफ लैंग्वेज, पृ. २३६; २. लैंग्वेज एण्ड इट्स स्टडी, पृ. ५३।
३. संस्कृत-भाषा, पृ. ३२५; ४. भाषा, पृ. ७०; ५. तुलनात्मक-भाषा-विज्ञान, पृ. ६५।
६. नामलिङ्गानु. २।८।१०१-क्षीरस्वामिव्याख्या; ७. ऋ.सं. १।१४।९-स्कन्दभाष्यम्।
८. महाभारतम्, कर्णप. ५०।२४-नीलकण्ठीव्याख्या; ९. निरुक्तम्-६।६-दुर्गव्याख्या।
१०. ऋ.सं. १।२७।८-स्कन्दभाष्यम्; ११. ऋ.सं. ६।५४।७-माधवीया व्याख्या।
१२. अथर्ववेदः-१९।४७।६-सायणभाष्यम्; १३. अभिज्ञानशा. ३।२-माधवभट्टव्याख्या।
१४. ऋ.सं. १।१९१।११-सायणभाष्यम्।
१५. तत्रैव-१०।५०।५, अथर्ववेदः-३।१३।३-सायणभाष्यम्; १६. अवेस्ता, पृ. ५७,५८,६२।
१७. पदमञ्जरी-२।२।२४, महाभाष्यम्-२।२।२४; १८. काशिका-४।४।६०।
१९. न्यासः-६।३।७०; २०. दुर्गासप्तशती-४।२८-शान्तनवीव्याख्या।
२१. सरस्वतीकण्ठाभरणम्-१।१।१२५-हृदयहारिणीव्याख्या।

निपाताः क्रियाप्रतिरूपकाः सन्तोऽपि क्रियार्थं न प्रकटयन्ति। उक्तञ्च जिनेन्द्रबुद्धिना—'अस्तिशब्द इत्यादि विभक्ति-स्वर-प्रतिरूपकाश्चेति निपाता भवन्तीति निपातसंज्ञकं तिङन्तसदृशं प्रातिपदिकमेतत्, न तिङन्तः, एतच्च तिङन्तेन समानार्थम्। यथा—अस्तिक्षीरा ब्राह्मणी। भिन्नार्थश्च यथा—धने वर्तते, अस्तिमानिति = धनवानिह गम्यते। तदिह विशेषस्यानभिधानादुभयस्यापि ग्रहणम्'[१]। एवमेवान्येऽपि किलाख्यातप्रतिरूपा निपाताः प्रयुज्यन्ते स्म संस्कृतभाषायाम्।

**नामधातुवदपि निपातानां व्यवहारः**

नामधातूनामिव निपातानामपि व्यवहारो दृश्यते। यथा च ऋग्वेदे—'सनायते गोतम इन्द्र'[२] इति। व्याकरोति स्म मन्त्रममुं सायणाचार्यः—'स इन्द्रः सनायते = नित्य इवाचरति'। सना इति निपातो नित्यशब्दसमानार्थः। तस्मादाचारार्थे क्यङ्प्रत्यय इति। एवमेव 'स्वधा' इति निपातोऽपि नामधातुवद् भागवते व्यवहृतोऽवलोक्यते। तथा हि श्लोकः—'अमृतमयगभस्तिभिः स्वधयति'[३]। आचार्यश्रीधरेण स्वधयति इत्यस्य व्याख्यां कुर्वतोक्तम्—'स्वधयति = शान्तिं गमयतीत्यर्थः' इति। एवमेवान्येऽपि निपाता नामधातुवद् व्यवहृता भवेयुरिति।

**विभक्तिप्रतिरूपका निपाताः**

गैर्वाण्यामालोकपदवीमवतरन्ति भूयांसो विभक्तिप्रतिरूपका निपाताः। तथा हि सिद्धान्तितं महाभाष्यकारेण—'उपसर्ग-विभक्ति-स्वरप्रतिरूपकाश्च निपाता भवन्तीति'[४] इति। एवंविधा विभक्तिप्रतिरूपका लोक-वेद-साधारणाः। ते च यथा— अत्र[५], अधुना[६], अन्तरतः,[७] अन्तितः,[८] अन्येद्युः[९], अभितः,[१०] अर्वावतम्[११]—अर्वावतः, इत्था[१२], तादीत्ना[१३], यत्र-तत्र[१४], शुभम्-भद्रम्[१५], सुदि-वदि[१६] स्थाने[१७]-प्रभृतयो निपाता विभक्तिप्रतिरूपकाः। भूयांसोऽन्येऽपि विभक्तिप्रतिरूपका निपाताः संस्कृतभाषायाः श्रियं समेधयन्ति। विभक्तिप्रतिरूपैरेतैर्निपातैर्निष्क्रष्टुं शक्यते यत् संस्कृतवाङ्मयस्या-

---

१. न्यासः-४।३।५६;
२. ऋ.सं. १।६।१३-सायणभाष्यम्।
३. भागवतम्-५।८।२५-श्रीधरीव्याख्या;
४. महाभाष्यम्-२।२।२४।
५. शुक्लय. ६।३-उव्वटभाष्यम्;
६. ऋ.सं. १०।६१।२३-सायणभाष्यम्।
७. तै.सं. ७।२।१०-भट्टभास्करभाष्यम्;
८. ऋ.सं. १०।११४।४-सायणभाष्यम्।
९. अथर्व. १।२६।४-सायणभाष्यम्;
१०. प्रदीपः-२।३।२।
११. ऋ.सं. ३।४१।८-९-सायणभाष्यम्;
१२. तत्रैव-६।५९।२-स्कन्दभाष्यम्।
१३. तत्रैव-१।३२।४;
१४. वाररुचनिरुक्तसमुच्चयः-४।९।
१५. प्रदीपः-७।३।४६;
१६. प्रक्रियाकौमुदी, भूमिका, पृ. ३१।
१७. कुमारसंभवम्-६।६७-नारायणव्याख्या।

विच्छिन्ने प्रवाहे निपाता अपि रूपोपचयापचयवन्त आसन्। भाषाया ऐतिहासिके संस्रवे शब्दाः स्खलितवृत्तयः, क्षीणस्वरूपाश्चोपपद्यन्त एव।

**स्वरप्रतिरूपका निपाताः**

स्वरप्रतिरूपका अपि निपाता उपयुज्यन्ते संस्कृतभाषायाम् 'अ अपेहि' 'आ एवं नु मन्यसे', 'इ इन्द्रं पश्य', 'ई ईदृशः संसारः',[1] 'उ उत्तिष्ठ', 'ऊ उषरे बीजं वपसि', 'ए इतो भव', 'ओ ओ श्रावय' अमीषूपर्युक्तेषु वाक्येषु स्वरप्रतिरूपकाणां निपातानामुपयोगोऽवलोक्यत एव। एवमेव स्तोभादिषु, गुह्यतान्त्रिकमन्त्राणां विनियोगेषु, अभिचारक्रियादिषु च—कुं, खुं, गुं, घुं, ऐं, ह्रीं, क्लीं, श्रीं-प्रभृतयो[2] निपाता विनियोजिता दृश्यन्त एव।

**धातूपसर्गोपश्लेषजन्या निपाताः**

धातूपसर्गसंसर्गजन्या भूयांसो निपाता व्यवहृता दृश्यन्ते श्रुति-स्मृति-वाङ्मये। एतदपि ध्यातव्यमस्ति यद्यथा धातूपसर्गसंसर्गोपेता निपाता भवन्ति, तथैव धातूपसर्गसंसर्गजन्या धातवोऽपि दृश्यन्ते। अत्र प्रसङ्गोपात्ता एतादृशा निपाता एव विमर्शयिष्यन्ते, येषामात्मलाभो धातूपसर्गास्कन्दजन्यः।

(क) [3]**अपाक्**—'अपाक् < अप + √ अञ्च् ⌊ = गतौ ⌋ > अपाक्' इति निपातो धातूपसर्गपरिणामोऽधोऽर्थे प्रयुक्तः।

(ख) **आनुषक्**[4]—इति वैदिको निपातोऽनुषञ्जनार्थे प्रयुक्तो दृश्यते। व्युत्पत्तिस्त्वस्य—अनु + √ षञ्ज् ⌊= सङ्गे ⌋ > आनुषक्-एवंविधो दृश्यते।

(ग) **उपाकः**[5]—'उपाकः' इति निपातः प्रायेण सप्तम्यन्तोऽपि 'उपाके' इति रूपेण दृष्टचरः। अस्यापि निपातस्य जन्म धातूपसर्गोपश्लेषेणैवोपपन्नम्। तद्यथा—'उप + √ अञ्च् ⌊= गतौ ⌋>उपाकः; उपाके' इति। अन्तिकार्थकोऽयं निपातः।

(घ) **न्यक्**[6]—'न्यक्' इति निपातोऽपि धातूपसर्गोपश्लेषप्रभवः। व्युत्पत्त्याऽयम्— नि + √ अञ्च् ⌊= गतौ ⌋>न्यक् = अधोभावे इति प्रतिभाति।

---

१. द्र. सरस्वतीकण्ठाभरणम्-१।१।१२६-हृदयहारिणीव्याख्या।

२. द्र. गरुडपुराणम्, अध्यायः-७; नित्या.षोड.परिशि. २।

३. ऋ.सं. ८।२८।३; १०।४५।७-सायणभाष्यम्।

४. तत्रैव-१।२७।७; ३।११।१-सायणभा.; शब्दरत्नाकरः-६।११०।

५. ऋ.सं. ८।६।२५-सायणभा.।

६. महाभारतम्, उद्योगप. ८३।२४।

(ङ) **प्रायः**[१]—'प्रायः' इति निपातोऽपि धातूपसर्गाश्लेषप्रतिरूपकः। इत्थम्—
प्र + √ अय्⌊= गतौ⌋ > प्रायः— इत्यस्य स्थितिः।

एवमेव विषूचः[२] < विषु + √ अञ्च्⌊= गतौ⌋ > विषूचः, स्वगा[३] < सु + √ गम्⌊= गतौ⌋ > स्वगा, स्वधा[४] < सु + √ अद्⌊= भक्षणे⌋ > स्वधा, स्वस्ति[५] < सु + √ अस्⌊= भुवि⌋ > स्वस्ति, स्वाहा < सु + आह > स्वाहा[६]-प्रभृतयो निपाता अपि धातूपसर्गप्रसवाः। इमे धातूपसर्गसंसर्गलब्धात्मनो निपाता औपलाक्षणिका एव।

**निपातानां सङ्ख्या**

निपातानां संख्याविषये कृत्स्ने श्रुति-स्मृतिवाङ्मये नावलोक्यते काचिद् विसंवादरहिता तत्त्वदृष्टिः। निर्वचनकारैः शाब्दिकैश्च पदे पदे किलोदघोषि यन्निपाता अपरिमिता इति। तथा च शौनकः —

इयन्त संख्यानं निपातानां न विद्यते।
प्रयोजनवशा ह्येते निपात्यन्ते पदे पदे[७]।। इति।

निरुक्तव्याख्याने दुर्गाचार्येणापि संश्लोकितं यद् अपरिमिता निपाता भवन्तीति— "अपरिमिताश्च निपाता इति"[८] इति। स्वतः प्रमाणभूतेनाचार्यपतञ्जलिनाऽपि सिद्धान्तितं यन्निपातादीनां संख्यानिर्धारणन्तु असम्भवप्रायमेव। तद्यथा 'को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुमिति'[९]। अमीभिः सिद्धान्तैः खलु स्थिरीक्रियते यद् निखिला अपि चादिपाठा गणपाठाश्चौपलाक्षणिका एव। ते हि खलु वाङ्मयार्णवेऽङ्गुलिनिर्देशनमात्रं कुर्वन्ति। भोजव्याकरणकर्त्रा साधूक्तं यन्निपातगणे परिसंख्यातेभ्योऽन्येऽपि निपाताः सन्तीति—

निपातगणतो ग्राह्या निपाता अपरेऽपि च।
अव्ययान्यपराण्येव ग्राह्याण्यव्ययकामतः[१०]।। इति।

अमीभिः शास्त्रीयैः प्रमाणैर्निपातानां प्रायोगिकरूपोपचयापचयैश्च किलैतन्निष्क्रष्टुं शक्यते, यन्निपाताः संख्यया मातुमनर्हाः। यतो हि कुत्रचिदेतेषां सगोत्रीयैरुपश्लेषैः,

---

१. शतपथब्रा. ५।५।४।८; पदमञ्जरी-२।३।१८।
२. शुक्लयजुर्वेदः-१९।१०-उव्वटभाष्यम्;
३. अथर्ववे. ७।९७।४-सायणभाष्यम्।
४. मनुस्मृतिः-३।२५४-कुल्लूकभट्टव्याख्या;
५. निरुक्तम्-३।४-दुर्गव्याख्या।
६. तै.सं. १।२।५-भट्टभास्करभाष्यम्;
७. बृहद्देवता-२।९५।
८. निरुक्तम्-१।१-दुर्गव्याख्या;
९. महाभाष्यम्-२।१।१।
१०. बृहद्देवता-२।७३।

कुत्रचिद्धातुभिर्योगैः, कुत्रचिन्नामनिपातसङ्घातैः, कुत्रचित् सर्वनामनिपातास्कन्दनैः, कुत्रचिदाख्यातप्रतिरूपकैः, कुत्रचित् स्वररूपेणोद्भवैः, कुत्रचिच्चानुकरणमूलकध्वनिरूपेण विजृम्भणैर्निपातानां संख्योपचयः केन रोद्धुं शक्यते? एवं विविधैरुपादानकारणैः किल समृद्धिमेति निपातराशिः। नवनवानां निपातानामुद्भवे खल्विमान्येवोपादानकारणानि दृष्टचराणि। न हि निपातसंपत् नाम-सर्वनाम-स्वर-अनुकरण-धातु-आख्यात-प्रभृतिभ्यो भाषासम्पद्भ्यः पृथक्कर्तुं शक्यते। समर्थयते चेमां निष्कर्षप्रमां शौनकाचार्यः —

नैपातिकानां नाम्नां तु प्रागुक्तैर्नामलक्षणैः।
सम्पन्नानां पृथक्त्वेन परिसंख्या न विद्यते[१]।। इति।

एतादृशैरेव निष्कर्षतत्त्वैः किल सभाजितमिदं तत्त्वम् आधुनिकभाषाशास्त्रान्वेषणधृतव्रतैः मैक्समूलर[२]-बरो[३]-टर्नर[४]-ह्विट्नी[५]-इमेरिक[६]-डेनिस्टन[७]-ब्रैंडरेथ[८]-ट्रम्फ[९]-वाल्टरस्काट[१०]-प्रभृतिभिः संस्कृतवाङ्मयसमुपासकैः।

अत्रेदमपि विचारणीयं प्रासङ्गिकं भाति यत् खलु दृश्यते हि निपातानां भारोपीयार्यभाषानिपातैः रूपप्रतिमाभिश्च आनुपूर्व्या संवादः। संस्कृतभाषाक्रोडे स्वायत्तीकृतेषु शब्दनिकायेषु यथा निपाता रूपमूर्तिभिरर्थमूर्तिभिश्च प्रत्नयोरोपीयार्यभाषानिपातैः सह संवदन्ते, न तथैतद्वर्गीया नाम-आख्यातशब्दाः संवादतुलामधिरोहन्ति।

अस्याविकल-कौटुम्बिकसंवादस्य प्रधानो हेतुस्तु किलैतिहासिकेऽविच्छिन्नप्रवाहे निपातानां प्रायेण रूपोपचयापचयाभाव एव कल्प्यते। यतो हि यथा नामपदेष्वाख्यातपदेषु च कालिकाः, दैशिकाः, आर्यजातिसम्पर्कमूलकाश्च विपरिणामाः सङ्घटन्ते, एतेषां रूपव्ययस्वभावत्वात्, न तथा निपातपदेषु, तेषां रूपव्ययाभावस्वभावत्वादिति। अतः साम्प्रतिके काले सगोत्रीयाणामार्याणां सामीप्यापादने, एकगोत्रोद्भवस्रोतस्यानुसन्धाने च तत्तत् प्राचीनभारोपीयार्यभाषानिपातानां संवादमूलकः, तुलाबोधकश्च विवेको महते श्रेयसे कल्प्यत इति शम्।

●

---

१. बृहद्देवता-२।७३;  २. लेक्चर्स आन दि साइंस ऑफ लैंग्वेज, पृ. २६९।
३. संस्कृत-भाषा, पृ. १८०।
४. ए कम्पैरैटिव एण्ड एटिमालाजिकल-डिक्श. ऑफ नेपाली लैंग्वेज, पृ. १३।
५. ओरिएण्टल एण्ड लिंग्विस्टिक स्टडी, पृ. १६९।
६. ए ग्रामेटिकल स्टडीज़, पृ. १५४-५५;  ७. दि ग्रीक पार्टिकिल्स, पृ. ४५।
८. दि गौडियन एण्ड दि रोमेन्स लैंग्वेजेज़-इ.एल. ब्रैंडरेथ-जर्नल ऑफ दि रायल एशियाटिक सोसाइटी, लन्दन, वाल्यू. १२; १८८० ई.।
९. आन दि डिक्लेंसनल फीचर्स ऑफ दि नार्थ इण्डियन-वर्नाक्युलर्स-इ. ट्रम्फ—जर्नल ऑफ दि रायल एशियाटिक सोसाइटी, लन्दन, वाल्यूम-१९।
१०. दि साइंस ऑफ एटिमालाजी, पृ. १५६।

# शाब्दापरोक्षवादः

**डॉ. सत्यदेवमिश्रः**
आचार्योऽध्यक्षश्च, संस्कृतविभागस्य
बिरलातकनीकीविज्ञानसंस्थाने, पिलानी (राजस्थानम्)

❀ ❀ ❀

बहवः शाङ्करवेदान्तिनः 'तं त्वौपनिषदं पुरुषम्'[1], 'वेदान्तविज्ञान'[2] इत्यादि-श्रुतिवाक्यानुरोधात् तत्त्वमस्यादिमहावाक्यजन्यमपरोक्षज्ञानमेव ब्रह्मप्राप्तिरूपं मोक्षसाधनं स्वीकुर्वन्ति।

तत्र शङ्केयमुदेति—शब्दस्यापरोक्षज्ञानजनकतायां प्रत्यक्षप्रमाणे तदन्तर्भाव-प्रसङ्गाद् धर्माधर्मप्रतिपादकवाक्येषु परोक्षज्ञानजनकताया एव दर्शनाच्च, कथं तत्त्वमस्यादिवाक्यैः प्रत्यक्चैतन्याभिन्नब्रह्मणः साक्षात्कारः सम्भवति? तदुक्तं सर्वज्ञात्ममुनिभिः—

वाक्यप्रसूतमतिरिन्द्रियजन्यधीवन्ना-
थापरोक्ष्यजननी भवितुं समर्था।
तेनास्तु वाक्यजनितात्मपरोक्षबुद्धि-
र्भ्रान्तिः सदाऽजडतयाऽनुभवेऽपरोक्षे।।

नित्यापरोक्षमपि वस्तुपरोक्षरूपं
वेदान्तवाक्यमवबोधयति स्वभावात्।
प्रामाण्यमत्र कथमस्य वदोपपन्नं
न ह्यन्यदन्यदिति बोधयतः प्रमात्वम्[3]।।

---

१. बृहदारण्यकोपनिषद्-३।९।२६।
२. कैवल्योपनिषद्-१३; मुण्डकोपनिषद्-३।२।६।
३. संक्षेपशारीरके-१।१२२-२३।

ज्ञानेन्द्रियजन्यं ज्ञानं यथा पदार्थापरोक्षत्वमुत्पादयति, न तथैव वेदान्तवाक्यजन्यमपि ज्ञानं ब्रह्मरूपार्थापरोक्षत्वं जनयितुमलं शब्दस्य अर्थापरोक्षजनकत्वस्वभावाभावात्। तस्मात् सदा अपरोक्षेऽजडतया अनुभवस्वरूपे आत्मनि वाक्यजन्यं स्वभावतः परोक्षज्ञानं न प्रमा, किन्तु भ्रान्तिः। कामं नित्यापरोक्षरूपं ब्रह्मतत्त्वं भवेन्नाम, परन्तु वेदान्तवाक्यं तत् स्वभावात्परोक्षरूपतयैव बोधयति। अत्रोच्यते— तथा सति वेदान्तवाक्यानां प्रामाण्यमेव कथमुपपन्नं भवेत्, यतः स्वरूपान्तरं बोधयतः प्रमाणान्तरं न केनापि स्वीक्रियते। यदि कश्चन नदीं तरतां दशानां जनानां पारं प्राप्तवतां स्वात्मानं विहाय अन्यानेव गणयतां दशजनान् नवैव मन्यमानानां 'दशमस्त्वमसि' इति वाक्येन दशमस्यापरोक्षत्वं यथोत्पन्नम्, तथैव शब्देनाप्यपरोक्षत्वमुदाहरेत्, तर्हि तत्रापि न शब्दमात्रस्यापरोक्षज्ञानजनकत्वम्, किन्तु दशमशरीरगोचरेण इन्द्रियसन्निकर्षेणैव दशमापरोक्षता अभ्युपेया। न च सत्यपि इन्द्रियसन्निकर्षे पूर्वं दशमस्यापरोक्षताया अभावात् शब्दप्रयोगानन्तरमेव, अपरोक्षतानुभवाच्चापरोक्षताज्ञानं शब्दजमेवेति वाच्यम्, रत्नतत्त्वाधिगमेऽपि तथैव स्वीकरणीयत्वापातात्। तथा ह्यनधिगतरत्नतत्त्वपरीक्षाशास्त्रस्य वज्रेन्द्रनीलवत् पुष्पराजादिभेदस्य प्रत्यक्षतोऽप्रतिपत्तेः, अधिगतरत्नतत्त्वपरीक्षाशास्त्रस्यैव प्रतिपत्तेश्च सर्वानुभवसिद्धतया तत्रापि शास्त्रादेव प्रत्यक्षत्वाङ्गीकरणीयत्वप्रसङ्गः। यदि कश्चित् प्रत्यवतिष्ठेत—विमतं शाब्दज्ञानमपरोक्षमपरोक्षविषयत्वात् सुखज्ञानवदित्यनुमानेन शब्दादपरोक्षज्ञानं सिध्यतीति, तत्रेदं वाच्यम्—शाब्दज्ञानस्यापरोक्षत्वं किं साक्षात्कारजातिमत्त्वम् अपरोक्षव्यवहारहेतुत्वं वा? नाद्यः सम्भवति, 'अयं घटः' इति शब्दे व्यभिचारात्। तथा ह्यपरोक्षत्वजातिरूपं साध्यं ज्ञान एव न शब्दे इतिकृत्वा साध्याभाववत्यपि अपरोक्ष(घट)विषयत्वहेतोः सद्भावाद् व्यभिचारः। न चापरोक्षविषयत्वादित्यनेन ज्ञानजननव्यवधानं विना साक्षादपरोक्षत्वं विवक्षितम्, प्रकृते चापरोक्षघटविषयकज्ञानजननद्वारैवापरोक्षविषयत्वान्न कोऽपि दोष इति वाच्यम्, अयं पर्वतो वह्निमानिति परोक्षापरोक्षविषयकानुभविकज्ञाने व्यभिचारात्। अपरोक्षमात्रविषयत्वमर्थात्परोक्षाविषयत्वे सति अपरोक्षविषयत्वं हेतौ विवक्षितमिति न दोष इति चेन्न, अविद्यायां व्यभिचारात् स्वतोऽपरोक्ष आत्मैवाविद्याया आश्रयो विषयश्चेति सिद्धान्तात्। नापि द्वितीयः कल्पः, तस्या अपरोक्षात्मविषयत्वेऽपि तद्विपरीतव्यवहारहेतुतया तद्व्यवहारहेतुत्वाभावात्। 'विवादाध्यासितः शब्दो नापरोक्षज्ञानजनकः शब्दत्वाज्ज्योतिष्टोमादिशब्दवद्' इति चेत्—

उच्यते, अपरोक्षप्रमितिकरणत्वेन न तावत्प्रत्यक्षे शब्दस्यान्तर्भावः शङ्कनीयः, योगिमनसो बाह्यविषयापरोक्षप्रमितिकरणतायां सम्प्रतिपन्नायामपि

बाह्यप्रत्यक्षान्तर्भावानभ्युपगमात्। एवमेव शब्दस्यापि कथङ्कारं नाम प्रत्यक्षान्तर्भावः स्यात्? अथ बाह्यप्रत्यक्षान्तर्भावे चक्षुरादीनामन्यतमत्वं योगिमनोऽन्यत्वे सति बाह्यप्रत्यक्षप्रमितिकरणत्वं वा प्रयोजकं मन्यसे। हन्त! इहापि तर्हि स्वतोऽपरोक्षब्रह्मात्मविषयशब्दान्यत्वे सत्यपरोक्षप्रमितिकरणत्वं प्रत्यक्षान्तर्भावे प्रयोजकमस्तु। ननु सिद्धे शब्दस्यापरोक्षप्रमितिकरणत्वे तद्व्यावृत्त्यर्थं विशेषणं युक्तम्, तदेव तु कथमिति चेत्, 'दशमस्त्वमसि' इत्यादिवाक्येषु तथा दर्शनादिति ब्रूमः। ननु उक्तं तत्रापि इन्द्रियसहितस्यैव तद्धेतुत्वं न केवलस्येति चेदत्रापि तर्हि मनःसहायस्यैव शब्दस्यापरोक्षहेतुताऽस्तु। ननु 'दशमस्त्वमसि' इत्यादौ इन्द्रियस्यैव करणत्वं शब्दस्तु तत्सहकार्येवेति चेत्, शब्द एव करणमिन्द्रियं सहकारीति वैपरीत्यमेव कुतो नाङ्गीक्रियते? विनिगमनाविरहात्। अन्वयव्यतिरेकयोरुभयत्रा-विशिष्टत्वात्। सूचीभेद्ये तमसि सर्वथा चक्षुर्व्यापारनिरोधे यथा लोचनहीनस्यापि शब्दशक्तिं गृहीतवतो 'दशमस्त्वमसि' इति वाक्याद् 'दशमोऽहम्' इत्यपरोक्षदर्शनमेव विनिगमकमिति चेदङ्गीक्रियते तर्हि शब्दापरोक्षत्वम्।

हन्त, तर्हि 'मनसैवेदमाप्तव्यम्'[१] 'मनसैवानुद्रष्टव्यम्'[२] इत्यादिश्रुतीनां ब्रह्मसाक्षात्कारे मनसः करणत्वं प्रतिपादयन्तीनां का गतिरिति 'यन्मनसा न मनुते'[३], 'अप्राप्य मनसा सह'[४] इत्यादिश्रुतिषु तन्निषेधदर्शनात्, निषेधशास्त्रस्य च सर्वतो बलवत्त्वात् 'मनसैवेदमाप्तव्यम्' इत्यादिश्रुतीनां गौणार्थता स्वीकरणीया। न च 'यन्मनसा न मनुते' इत्यादिश्रुतीनामनधिकृतमनोविषयत्वाद् ब्रह्मसाक्षात्कारे मनसः करणत्वमप्रतिहतमिति वाच्यम्, 'न तद्धास्य विजिज्ञौ'[५] 'तमसः पारं दर्शयति'[६] इति चोपदेशमात्रादेवापरोक्षप्रमित्युपपत्तिप्रदर्शनात्।

ननु 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[७] इत्यादिश्रुतिषु श्रवणोत्तर-कालयोर्मनननिदिध्यासनयोर्विधानदर्शनात्, श्रुतवेदान्तानामपि पूर्ववत्संसारानु-वृत्तिदर्शनाच्च नोपर्युक्तानि श्रुतिवचनानि आगमाचार्योपदेशयोः साक्षात्कारहेतुतां प्रतिपादयन्ति, किन्तु साक्षात्कारहेतोर्मनसः साहाय्यप्रतिपादन एव तेषां तात्पर्यमिति चेन्न, असम्भावना-विपरीतभावनालक्षणस्य चित्तविक्षेपलक्षणस्य प्रतिबन्धस्य निरासद्वारेण मनननिदिध्यासनयोः फलोपकार्यङ्गतया श्रवणं प्रति विधानात्। यथापूर्वं

१. कठोपनिषद्-४।११;
२. बृहदारण्यकोपनिषद्-४।४।१९।
३. केनोपनिषद्-१।६;
४. तैत्तिरीयोपनिषद्-२।४।१।
५. छान्दोग्योपनिषद्-६।१४।३;
६. तदेव-७।२६।२।
७. बृहदारण्यकोपनिषद्-४।५।६।

संसारित्वोपलब्धिश्च प्रतिबद्धविज्ञानपुरुषविषया। 'मनसैवेदमाप्तव्यम्' इत्यादि श्रुतयश्च न मनसो ब्रह्मसाक्षात्कारप्रतिपादनसमर्थाः, तासां चित्तैकाग्रताङ्गताप्रतिपादने तात्पर्यात्; न दृष्टं क्वापि श्रुतिषु नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्म-साक्षात्कारहेतुत्वम्; तथात्वे श्रवणादिविधीनां वैयर्थ्यप्रसङ्गः। साक्षिवेद्यानां सुखदुःखादीनां स्वयंप्रकाशस्य आत्मनो वा न कस्यापि साक्षात्कारकरणता मनसि सम्प्रतिपद्यते, भावनासहायं तु मनो गरुडादिसाक्षात्कारप्रमित्यनुत्पादकमेव। गरुडाद्यपरोक्षत्वञ्च विधुरपरिभावितकामिनीसाक्षात्कारमात्रत्वम्। अप्रमारूपः साक्षात्कारोऽपि साक्षिरूप एव, न मानसः। अत एव 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः'[१] 'तमसः पारं दर्शयति'[२] 'भूयश्चान्ते विश्वमायानिवृत्तिः'[३] 'तरति शोकमात्मवित्'[४] 'कोऽस्माकमविद्यायाः परं पारं तारयसि'[५] 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्'[६] 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते'[७] 'तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्' (नारदपुराणे) इत्यादिश्रुतिस्मृतिषु ब्रह्मविद्याया एवाविद्यानिवर्तकत्वश्रवणात् पारिशेष्यात् तत्कारणं वेदान्तवाक्यमिति निश्चीयते।

इदमत्र बोध्यम्— यथा औपनिषदत्व-वागगम्यत्वयोः परस्परविरुद्धयो-र्विरोधपरिहारार्थं 'यतो वाचो निवर्तन्ते'[८] इति श्रुतिवाक्यस्य शक्त्या वाचो निवर्तन्ते, न तु सर्वथा निवर्तन्ते अर्थाल्लक्षणया न निर्वतन्त इति सङ्कुचितार्थस्वीकारः, तथैव 'यन्मनसा न मनुते'[९], 'मनसैवानुद्रष्टव्यम्' इति श्रुतिवाक्ययोर्विरोधनिरासाय भावनां विना केवलं मनसा न ब्रह्मसाक्षात्कारः, भावनायां जातायां तु साक्षात्कारो भवत्येवेति 'यन्मनसा न मनुते' इति श्रुतिवाक्यस्य सङ्कुचितार्थाभ्युपगमः। तत्रापि शाब्दापरोक्षत्ववादिनां मते 'मनसैवानुद्रष्टव्यम्' इत्यत्र मनसः कर्तृत्वं तृतीयार्थे एव न तु करणत्वे। करणत्वन्तु शब्दस्याक्षुण्णमेव। तथा च 'साधनचतुष्टयसम्पदनन्तरं श्रुतिकरणकमनःकर्तृदर्शनविषय आत्मा' इत्यर्थः सङ्गच्छते। वेदान्तसारकर्तुः सदानन्दमते 'यत्साक्षादपरोक्षाद् ब्रह्म'[१०] इति श्रुतिवाक्यानुसारं ब्रह्मणो

---

१. मुण्डकोपनिषद्-२।२।८;
२. छान्दोग्योपनिषद्-६।१४।३।
३. श्वेताश्वतरोपनिषद्-१।१०;
४. छान्दोग्योपनिषद्-७।१।३।
५. प्रश्नोपनिषद्-६।८;
६. कैवल्योपनिषद्-७।
७. गीता-७।१४;
८. तैत्तिरीयोपनिषद्-२।४।१।
९. केनोपनिषद्-१।५;
१०. बृहदारण्यकोनिषद्-३।४।१।

नित्यापरोक्षत्वात् तत्साक्षात्कारार्थं वृत्तिव्याप्तिमात्रमपेक्ष्यते, न तु फलव्याप्तिरपि[१]। यथोक्तम्—'अज्ञानाविषयत्वप्रयोजकमनोऽवच्छिन्नचिद्विशिष्टसाक्षी, असत्त्वापादनकज्ञानाविषयत्वप्रयोजकमनोऽवच्छिन्नचिद्विशिष्टसाक्षी' क्रमशः साक्षात्करोतेर्जानातेश्चार्थः। तत्र परोक्षस्थले असत्त्वापादकाज्ञानविषयत्वाभावो वृत्तिव्याप्तिफलम्, अपरोक्षस्थले तु अभावापादकाज्ञानविषयत्वाभावस्तथेति विवेकः। ब्रह्मणि चित्प्रतिबिम्बरूपफलव्याप्तिर्नापेक्ष्यते, तस्य स्वयं चिद्रूपत्वात्, अतो ब्रह्मसाक्षात्काराऽज्ञानजन्यावरणापसारणमात्रमावश्यकम्। तच्च लक्षणया शब्दजन्यवृत्त्या विमलमनः सम्प्रयोगजन्यवृत्त्या वा योगजवृत्त्या वा भवेदिति नाग्रहः। एवं च 'यन्मनसा न मनुते' इति निषेधवचनं मलिनमनोऽभिप्रायकम्, 'मनसैवानुद्रष्टव्यम्' इति वाक्यं तु विमलमनोऽभिप्रायकमिति न विरोधः। योगजापरोक्षत्ववादिमते शब्दादेव परोक्षज्ञानं जायते, न तु मानान्तरादित्येव 'तं त्वौपनिषदं पुरुषम्' इति श्रुतिवाक्यस्य तात्पर्यम्। अत एवोक्तं वसिष्ठेन—

> द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानञ्च राघव।
> योगस्तद्वृत्तिरोधश्च ज्ञानं सम्यगवेक्षणम्[२]॥

गीतासु भगवता च—

> यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते[३]।

तत्त्वमस्यादिमहावाक्यजन्योऽखण्डार्थबोधः 'वाक्योत्था बुद्धिवृत्तिः' इति[४] आनन्दगिरीणां मतम्। तेषां ग्रन्थेषु 'ब्रह्माहम्' इत्येवंरूपाया बुद्धिवृत्तेः 'ब्रह्मविद्या', 'साक्षात्कारः'[५], 'विद्या', 'अनुभवः', 'विद्वदनुभवः', 'ब्रह्मसाक्षात्कारः'[६] इत्यादीनि

---

१. वेदान्तसारः श्रीनृसिंहसरस्वती-विरचितया सुबोधिन्या श्रीरामतीर्थयतिकृत-विद्वन्मनोरञ्जन्या च टीकया समलङ्कृतः, कलिकाता, १९१५—'वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात्। उक्तञ्च—''फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्'' (पञ्चदशी ७ परि. ८९ श्लोकस्य उत्तरार्धः) इति'।

२. योगवासिष्ठे-५।७८।८।

३. गीता-५।५।

४. बुद्धिवृत्तिं वाक्योत्थां ब्रह्मविद्येति प्रतिजानत इति योजना। (बृहदारण्यकोपनिषद्भाष्यवार्तिकटीका—शास्त्रप्रकाशिका, १।४।१०७७)

५. विद्यासाक्षात्कारो बुद्धिवृत्तिः। (ब्रह्मसूत्रभाष्यटीकान्यायनिर्णयः, पृ. २६)

६. अनुभवो ब्रह्मसाक्षात्कारो विद्वदनुभवः। (तदेव-१।२।२, पृ. ५२)

नामान्तराणि प्राप्यन्ते। ब्रह्मानुभूतिरूपेयं बुद्धिवृत्ति स्वतो नापि मानत: सिद्ध्यति, स्वसिद्ध्यर्थमियं ब्रह्मस्वभावात्मकं चित्प्रकाशमपेक्षते[१]। एतस्यां बुद्धिवृत्तौ 'अभिव्यक्तो दृगात्मा स्वाविद्यां सकार्यां दग्ध्वा स्वस्थो भवति'[२]। बुद्धिवृत्ते: १. बुद्धीद्धो बोध:, २. बोधेद्धा बुद्धि:, इति पक्षद्वयं भवति। १. तत्त्वमस्यादिमहावाक्यजन्यसच्चिदानन्दस्वरूपप्रत्यगात्मभावाकारितबुद्धिवृत्त्यभिव्यक्तचैतन्यम्, २. चिदाभासखचिततत्त्वमस्यादिमहावाक्यजन्यसच्चिदानन्दस्वरूपप्रत्यगात्मभावाकारिता बुद्धिवृत्तिरिति पक्षद्वयस्य यथाक्रमं परिष्कार:। द्वयोरपि पक्षयोरज्ञाननिवर्तकत्वमक्षुण्णमेव[३]। पक्षद्वयस्य प्रामाण्यमानन्दगिरिणा शास्त्रप्रकाशिकायामेवं समुदीरितम्—'न केवलमर्थापत्तिरेव मानम्, किन्तु श्रुतिरपि पक्षद्वयमुपोद्बलयतीत्याह—उतेति। अथातोऽनुप्रश्ना उताविद्वानमुं लोकं प्रेत्येत्यादिना ब्रह्मणो विद्वदविद्वत्साधारण्याद् अविद्वानपि तत्प्राप्नोति किं वा विद्वानेव तत्प्राप्तिश्च स्यान्न वेति प्रश्नपूर्वकं सोऽकामयतेत्यादिना ब्रह्मास्तित्वसाधनद्वारा यदा ह्येवै, एतस्मिन्नित्यादिश्रुतिस्तज्ज्ञानादुक्तपक्षद्वयानुसारेण फलं निर्धारयतीत्यर्थ:'[४]।

शाब्दापरोक्षसिद्धान्तं विशदीकुर्वता मधुसूदनसरस्वतीयतिना वेदान्तकल्पलतिकायां सुष्ठु खल्विदं प्रतिपादितम्—'ततोऽशेषदोषशून्ये स्थिरे स्वभावस्वच्छदर्पणे वेदान्तवाक्येन जनिताऽखण्डवाक्यार्थविषया या वृत्ति:, सा सर्वदोषरहितत्वादप्रतिबद्धा स्वत:प्रामाण्यादेव कृत्स्नमज्ञान-तत्कार्यं निवर्तयति, तत: परं न शङ्का न चोत्तरम्'। ब्रह्मण: शब्दैकमात्रगम्यत्वं विवेचयन्त आनन्दगिरयश्च एवं समुद्गिरन्ति—'तत्त्वमस्यादिवाक्योत्था बुद्धिवृत्तिरात्मगतमज्ञानं तत्कार्यं च स्वोदयानन्तरीयकत्वेन दहन्ती त्वमर्थस्य ब्रह्मत्वं ब्रह्मणश्चाऽऽत्मत्वं सकलविशेषशून्यं बोधयत्येवेत्यङ्गीकाराद्युक्तं ब्रह्मण: शब्दैकगम्यत्वम्'[५] इति शम्।

●

---

१. वाक्योत्थं ज्ञानं ब्रह्मानुभूति: सा जाड्यान्न स्वत: सिद्धा नापि मानतोऽवस्थानादतो ब्रह्मस्वभावचित्प्रकाशात्सिद्धा। (सम्बन्धवार्तिकटीका, वा. १७७)

२. तदेव, वार्त्तिकम्-१५६।

३. बुद्धीद्धो बोधो बोधेद्धा वा बुद्धिरबोधादिध्वंसिनीति पक्षद्वयं तद्गमकमाह— ब्रह्मविद्भिरिति। (शास्त्रप्रकाशिका, १।४।४३५)। अपि च 'बुद्धीद्धबोधस्याज्ञानादिनिवर्तकत्वमुक्त्वा बोधेद्धबुद्धेस्तन्निवर्तकत्वमिति पक्षान्तरमाह— ज्ञानेनेति। (आनन्दगिरीयं गीताभाष्यव्याख्यानम्, १०।११)। विस्ताराय द्रष्टव्यो लेखकस्य ग्रन्थ: 'अद्वैतवेदान्ते आभासवाद:' इन्दिराप्रकाशनम्, पटना, पञ्चमोऽध्याय:, पृ. २३२-२३६।

४. शास्त्रप्रकाशिका-१।४।३१६।

५. तैत्तिरीयोपनिषद्भाष्यवार्तिकटीकायाम्, वा. ५६-५७।

# तादर्थ्यचतुर्थ्यर्थविचारः

**डॉ. एस.टि.के. श्रीरङ्गाचार्यः**
उपाचार्यः, व्याकरणविभागस्य
श्रीगौतमीविद्यापीठम्, राजमण्डि

❀ ❀ ❀

''चतुर्थी सम्प्रदाने'' (२-३-१३) इति चतुर्थीविधाने कात्यायनमहर्षिणा ''तादर्थ्य उपसंख्यानम्'' इति वार्तिकमारब्धम्। तस्मै इदं तदर्थम्। 'चतुर्थी तदर्थार्थ' (२-१-३५) इत्यादिसूत्रेणार्थशब्देन समासविधानाज्ज्ञापकात्तद्योगे चतुर्थ्या तेन सूत्रेण समासः। तदर्थस्य भावस्तादर्थ्यम्। गुणवचनब्राह्मणादिभ्यः कर्मणि च (५-१-१२४) इति सूत्रेण ष्यञ्प्रत्ययः।

तच्छब्द उपकार्यवाची। इदंशब्द उपकारकवचनः। तादर्थ्यशब्देनोपकार्योपकारकभावोऽभिधीयते। यूपाय दारु, कुण्डलाय हिरण्यमित्यादावुपकार्योपकारकभावरूपसम्बन्धः चतुर्थ्यर्थः।

विप्राय दधीत्यत्र विप्रकर्तृकभोजनोपकारके दध्नि विप्रोपकारकत्वारोपेण तादर्थ्यचतुर्थी निर्वाह्या। मुक्तये हरिं भजतीत्यत्र तादर्थ्ये चतुर्थीति भट्टोजिदीक्षितादयो मन्यन्ते। वस्तुतस्तु नात्र तादर्थ्ये चतुर्थी युज्यते। यतो हि विद्यमानमेव वस्तु किञ्चिदुपकारकविशिष्टं कार्यमित्युच्यते। अत एव घटाय दण्ड इत्यादयो न प्रयोगाः। विप्राय दधीत्यादौ भोजनविशिष्टो विप्रः कार्यम्। मुक्तिस्तु न सिद्धं वस्तु। अतोऽत्र ''क्रियया यमभिप्रैति सोऽपि सम्प्रदानमि''त्यर्थकात् क्रियाग्रहणमपीति सम्प्रदानत्वाच्चतुर्थी।

ननु चतुर्थीसमासेऽन्योन्याश्रयदोषः प्रसज्यते। सत्यां चतुर्थ्यां समासः, सति समासज्ञाने चतुर्थी, तदनुवादेन चतुर्थीविधानमिति चेत्— तर्हि तादर्थ्यस्य सम्बन्धत्वविवक्षया गुरोरिदं गुर्वर्थमित्यादाविव तस्येदं तदर्थमिति षष्ठीसमासः स्वीक्रियते। यद्यपि नित्यशब्दवादे नान्योन्याश्रयदोषः। कार्यशब्दवादेऽपि

अर्थशब्दयोगे चतुर्थीति वचनस्य ज्ञापनान्न दोषस्तथापि यदि चतुर्थीसमासं विनाऽन्यः समासो न भवेत् स्यादेवान्योन्याश्रयः, अस्ति चात्र षष्ठीसमासः। स्पष्टं चेदं 'चतुर्थी तदर्थार्थं' (२-३-३६) इत्यादिसूत्रे भाष्ये।

ननु कार्यवाचकाच्चतुर्थ्यामपि तादर्थ्यस्य हेतुत्वेनानुगमादुपकारवाचकाद् हेतौ तृतीया स्यादिति चेत्, न, कार्यवाचकादुत्पन्नया चतुर्थ्यैव कारणगतसम्बन्धस्य बोधनादुक्तार्थानामप्रयोग इति न्यायेन ततस्तृतीयाऽप्रवृत्तेः।

ननु कारणवाचकात्तृतीयैवास्तु, तत एव सम्बन्धबोधस्य सिद्धतया कार्यवाचकाच्चतुर्थी मास्तु विनिगमकाभावादिति चेत्, न, तादर्थ्यशब्दे तच्छब्द उपकार्यवाची, इदंशब्द उपकारकवाची, तयोर्ज्ञापनीयत्वेनान्तरपर्यायस्य कारणरूपस्य प्रधानत्वात्तदपेक्षया तच्छब्दार्थस्य कार्यस्य गुणभूततया तत्रैव सम्बन्धस्योद्बुद्धतया तद्बोधनाय चतुर्थ्या एव प्रवृत्त्या कारणवाचकात्तृतीयाया एवाप्रवृत्तेः सम्बन्धस्योद्बोधस्यैव विनिगमकत्वात्। यथा राज्ञः पुरुष इत्यादौ गुणभूते राजादौ सम्बन्धस्योद्बुद्धतया तत्रैव षष्ठी, न प्रधाने, तद्वदत्रापि। परन्तु तत्रोभयत्राप्येकैव विभक्तिरापाद्या, प्रकृते तु विभक्तिद्वयमिति विशेषः।

वस्तुतस्तु चतुर्थीविभक्त्या कारणगतसम्बन्धस्याभिधानेऽपि तिङादिभिरनभिधानाद् हेतौ तृतीया दुर्वारा, अत एव सा वारणीया, हेतुत्वेनेतरान्वये तृतीया विधेया। यथा दण्डेन घट इत्यादौ प्रकृते कारणस्य अन्यत्र हेतुत्वेनानन्वयात्कारणान्न तृतीया। तथा च 'चतुर्थी सम्प्रदाने' (२-३-१३) इति सूत्रे भाष्ये "तस्मा इत्युपकार्यं हि कार्यं प्रत्यवमृश्यते तदर्थशब्दात्सम्बन्धे भावप्रत्यय इष्यते। गम्यमानविभक्तित्वाच्चतुर्थी कार्यवाचिनि गुणे कृतास्पदा तस्मात्कारणं नावगाहते" इति प्रदीपव्याख्याने कैयटः।

तादर्थ्य इत्यत्रार्थशब्दो निवृत्तिवचनोऽपि, अत एव 'उपान्वध्याङ्वसः, (१-४-४८) इति सूत्रे वसेरश्यर्थस्य प्रतिषेध इति वार्तिके 'अर्थशब्दो निवृत्तिवाची'ति कैयटः, 'अर्थोऽभिधेयैरवस्तुप्रयोजननिवृत्तिषु' इति कोशश्च सङ्गच्छते। तथा च निवर्त्यनिवर्तकभावोऽपि तादर्थ्यशब्देन गृह्यते। अत एव "मशकेभ्यो धूमः" इत्यादौ तादर्थ्यचतुर्थी सिद्ध्यति। लक्ष्यानुरोधादुपकार्योपकारकभावेऽपि तादर्थ्यचतुर्थी प्रवर्तते। अत एव मृगेभ्यो वागुरेति प्रयोग उपपद्यते।

केचित्तु सर्वत्राप्युपकार्योपकारकभावरूपमेव तादर्थ्यं ग्राह्यम्। मशकशब्दस्तन्निवृत्तौ मृगशब्दस्तद्बन्धने च लाक्षणिकः। तापायोशीनरम्, विषाय सुधेत्यादौ

तापादिशब्दास्तन्नाशपराः। तापनाशोपकारकमुशीनरमित्यादिस्तदर्थः। दन्तिने नवबन्धः, जलाशयेभ्य उष्णोपगम इत्यादौ दन्त्यादयः शब्दा अपचयपराः। दाहाय मणिः, नरकाय दीपदानमित्यादावनुत्पादपरा दाहादयः शब्दा दाहानुत्पत्त्युपकारको मणिरित्यादिस्तदर्थः। किञ्चार्थशब्दस्य निवृत्तिपरत्वे न मानम्, तत्स्वीकारेऽपि तद्वाचकेत्यर्थस्य लक्षणां विना दुर्लभत्वाच्च। अत एव कैयटे क्वचित्—अशेरर्थः अश्यर्थः, न श्यर्थः अश्यर्थ इति व्याख्यानान्तरं दृश्यते। किञ्चार्थशब्दस्यापकारार्थकतायाः क्वाप्यदृष्टचरतया 'मृगेभ्यो वागुरे'त्यादीनां निर्वाहाय लक्षणाया आवश्यकतया मशकेभ्य इत्यादावपि तथैवास्तु। किमर्धजरतीयेन। अत एव नागेशभट्टैः सर्वत्राप्युपकार्योपकारकभावः सम्बन्ध इत्येवोक्तम्, एवं तन्त्रेणार्थद्वयेऽपि चतुर्थीविधानमिति चित्रप्रभाकारोक्तम्, उपकारकापकारकसाधारणं तादर्थ्यं चतुर्थ्यर्थ इति भाट्टरहस्ये खण्डदेवोक्तं चानादेयमेवेत्यलमित्याहुः।

यत्तु व्युत्पत्तिवादे गदाधरभट्टाचार्याः—स एवार्थः=प्रयोजनं यस्य तत्त्वं तादर्थ्यम्। अत्र च प्रयोजनत्वं न जन्यत्वम्। दुःखादेः पापादिजन्यतया दुःखाय पापमित्यादिप्रयोगापत्तेः। नापि जन्यतयेच्छाविषयत्वम्' स्वर्गादेः पुण्यादिजन्यतयेच्छाविषयत्वात् स्वर्गाय पुण्यमित्याद्यापत्तेः। न चेष्टापत्तिः, तथा सति पक्तुं व्रजतीत्यर्थे पाकाय व्रजतीत्यादिनिर्वाहाय ''तुमर्थाच्च भाववचनात्'' (२-३-१५) इति सूत्रप्रणयनवैयर्थ्यात्। पाकादेर्निरुक्तव्रजनादर्थस्यैव तद्वाचकाच्चतुर्थ्युपपत्तेः। अपि च समभिव्याहृतपदार्थनिष्ठव्यापारेच्छानुकूलेच्छाविषयत्वं तत्प्रयोजनत्वम्। (समभिव्याहृतपदार्थो दारुपदार्थः, तन्निष्ठं यत् तक्ष्णादिरूपव्यापारविषयकेच्छया जनकीभूता या यूपेच्छा तादृशेच्छाविषयत्वं तत्प्रयोजनत्वम्। तत्प्रयोजनकत्वरूपं तादर्थ्यञ्च तदिच्छाधीनेच्छाविषयव्यापाराश्रयत्वं तदेव चतुर्थ्यर्थः। (अत्र यूपेच्छया तक्ष्णादिव्यापारेच्छा जायत इति यूपेच्छायास्तक्ष्णादिव्यापारेच्छाजनकत्वमस्तीति तक्ष्णादिव्यापारेच्छानुकूलेच्छाविषयत्वं यूपस्य प्राप्तम्।) 'यूपाय दारु' इत्यादौ यूपेच्छाधीनेच्छाविषयतक्षणरूपव्यापाराश्रयत्वं दारुणीति लक्षणसमन्वयः। पाकाय व्रजतीत्यादौ व्रजनादेः पाकेच्छाधीनेच्छाविषयव्यापारानाश्रयतया तादर्थ्यचतुर्थ्या अप्राप्त्या तुमर्थाच्चेति सूत्रमारब्धम्। पुण्यादेः स्वर्गेच्छाधीनेच्छाविषयव्यापारानाश्रयतया तादर्थ्यचतुर्थ्या अप्राप्या स्वर्गाय पुण्यमित्यादेर्न साधुत्वम्। समभिव्याहृतपदार्थे तादर्थ्यविवक्षायां तद्वाचकपदाच्चतुर्थीति तदर्थ इति व्याचख्युः।

तदयुक्तम्, निरुक्तरीत्योपकार्योपकारकभावस्यैव तादर्थ्यशब्दार्थत्वेन तत्त्वस्य दुःखाय पापम्, स्वर्गाय पुण्यमिति प्रयोगद्वयेऽपि सत्त्वेन तादर्थ्यचतुर्थ्याः प्रवृत्तौ बाधकाभावेन तत्र साधुत्वस्येष्टत्वात्।

नन्वेवं तादर्थ्यचतुर्थ्यैव पाकाय व्रजतीत्यादौ निर्वाहात् तुमर्थाच्च भाववचनादिति सूत्रस्य वैयर्थ्यापत्त्या भट्टाचार्योक्तमेव युक्तमिति चेत्, अत्राहुः— 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (३-३-१०) इति सूत्रविहितयोस्तुमुन्ण्वुलोः कृष्णं द्रष्टुं याति, कृष्णं दर्शको यातीत्यादौ तादर्थ्यद्योतकतया तदपवादतया 'भाववचनाश्च (३-३-११) इति सूत्रविहितानां घञादीनामपि तद्द्योतकतया पाक इत्यादौ घञा तादर्थ्यस्योक्तत्वेन ''उक्तार्थानामप्रयोगः'' इति न्यायेन तुमर्थघञन्ताच्चतुर्थ्या अप्राप्त्या प्रातिपदिकार्थमात्रे प्रथमायाः प्राप्तौ तद्बाधनेन चतुर्थीविधानाय 'तुमर्थाच्च भाववचनात्' (३-३-१५) इति सूत्रस्य चारितार्थ्यम्। अतश्च तत्सूत्रवैयर्थ्यभिया भट्टाचार्याणामर्थान्तरकल्पनं तद्बलेन दुःखाय पापम्, स्वर्गाय पुण्यमित्यादेरसाधुत्वप्रतिपादनं चायुक्तमेव। एवञ्च भाट्टरहस्ये खण्डदेवेनापि—''न च तादर्थ्ये चतुर्थीत्यनेन गतार्थत्वम्। तुमुनेव तादर्थ्यस्यापि घञोक्ततया साधुत्वार्थं प्रथमातिक्रमणे कारणाभावेन प्रथमाप्राप्तौ चतुर्थीविधि-सार्थक्यात्। न च शुद्धभाव एव घञं व्युत्पाद्य तादर्थ्यचतुर्थ्युपपत्तेः भाववचनाश्चेति सूत्रवैयर्थ्यम्। क्रियार्थायां क्रियायां विशेषविहितेन तुमुना घञो बाधापत्तेस्तदन्तोपरि तादर्थ्यचतुर्थ्यप्रसक्तेः। अतस्तद्बाधनार्थं घञादेरपि तदर्थे विधाने कृते प्रथमाबाधार्थं चतुर्थीविधिसार्थक्यात्'' इति। तुमर्थाच्च भाववचनादिति सूत्रस्य सार्थक्यं प्रत्यपादि।

अयं भावः—तुमर्थाच्च भाववचनादिति सूत्रे तुम्शब्देन तदर्थो लक्ष्यते। तुम्=तुमर्थः, अर्थो यस्य स तुमर्थः। तुमुनः तुमुन्प्रत्ययस्य योऽर्थः तदर्थकप्रत्ययान्तादित्यर्थः। 'अव्ययकृतो भावे' इति कात्यायनवचनात्तुमुनो भावोऽर्थः। एवं हि तुमुनो भाववाचित्वाव्यभिचारात्तुमर्थादित्येव सिद्धेऽतिरिच्यमानं भाववचनादिति पदं स्वरितत्त्वप्रतिज्ञया 'भाववचनाश्च (३-३-११) इति सूत्रपरिग्रहार्थम्। तत्सूत्रे 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (३-३-१०) इति सूत्रात् 'क्रियायां क्रियार्थाया' मित्यनुवर्तते। तथा च 'भावे' (३-३-१८) इत्यधिकारे ये प्रत्यया घञ् अञ् अप् इत्यादयो विधीयन्ते, ते क्रियार्थायां क्रियायां भवन्तीति सूत्रार्थः। एवञ्च भावचनाश्चेति सूत्रेण यः प्रत्ययो विहितस्तदन्ताच्चतुर्थी स्यादिति प्रकृतसूत्रार्थः, तादृशश्च शब्दो याग-पाक-जय इत्यादिः। तस्मादनेन चतुर्थी। स्पष्टीकृतञ्च अस्मद्गुरुचरणैर्महामहोपाध्यायश्रीमद्भिः पेरिसूर्यनारायण-शास्त्रिपादैः सुबर्थवादमञ्जूषाव्याख्याने भाट्टरहस्यव्याख्याने च। एवञ्च तुमुनस्तदर्थ-द्योतकतया तदपवादभूतो भाववचनाश्चेति सूत्रविहितः प्रत्ययोऽपि तादर्थ्यद्योतकः। तेन घञा तादर्थ्यस्योक्तत्वेन तादर्थ्यचतुर्थ्या अप्राप्त्या प्रातिपदिकार्ये प्रथमा प्राप्ता, तदपवाद इयं चतुर्थी। एवञ्च तुमर्थाच्च भाववचनादित्यस्य निरुक्तरीत्या चरितार्थतया वैयर्थ्याभावेन भट्टाचार्योक्तकल्पना न साधीयसीति बोध्यम्।

व्युत्पत्तिवादप्रसङ्गेनात्र किञ्चिद् बोद्धव्यमस्ति। यत् श्रीमद्भिः वेपत्तूर-सुब्रह्मण्यशास्त्रिभिर्नैयायिकमतानुसारेण शाब्दतरङ्गिणीनामकः शाब्दबोधप्रधानको ग्रन्थो निरमायि। तत्र ग्रन्थान्ते भट्टाचार्याणामुपरि केचन प्रमादाः प्रादर्शिषत, समाहिताश्च।

तेष्वयमेकः— शास्त्रिचरणानामयं पूर्वपक्षग्रन्थः—अनुशासनोदाहरणप्रसङ्गे प्रमादोऽपि दृश्यते भट्टाचार्याणाम्-यूपाय दारु इत्यादौ न सम्प्रदानचतुर्थी, अपि तु तादर्थ्ये सूत्रान्तरेणेति व्युत्पत्तिवादः। यूपायेत्यत्र चतुर्थी तादर्थ्ये चतुर्थीति वार्तिकेनानुशिष्यते, न सूत्रेण। न चात्र सूचकत्वगुणयोगाद् वार्तिकमेव सूत्रान्तरपदेनाभिसंहितमिति वाच्यम्, यतस्तादर्थ्यपदघटकार्थपदार्थप्रयोजनत्वस्य विचारे जन्यतयेच्छाविषयत्वस्य तद्रूपतानिराकरणावसरे "तथा सति पक्तुं व्रजतीत्यर्थे पाकस्य व्रजतीत्यादेर्निर्वाहाय तुमर्थाच्चेति सूत्रप्रणयनवैयर्थ्यात् पाकादे-र्निरुक्तव्रजनाद्यर्थतया तद्वाचकपदाच्चतुर्थ्युपपत्तेः" इति ग्रन्थे तादर्थ्ये इत्यनुशासनेन तुमर्थाच्चेति सूत्रस्य वैयर्थ्यमापादयन्ति। यदि तादर्थ्ये चतुर्थीत्यनुशासनं वार्तिककाराभिमतं तेषां, तदा तेन तुमर्थेति सूत्रवैयर्थ्यापादनं न घटेत। न हि वार्तिकं दृष्ट्वा सूत्रकारस्य प्रवृत्तिः। तस्मात् तादर्थ्ये चतुर्थीत्यनुशासनं सूत्रमिति भट्टाचार्या मन्यन्ते। तथा च नैयायिकानुसरणिर्नानुशासनानुरोधिनीति चेदिति।

अस्य पूर्वपक्षग्रन्थस्यायमाशयः—भट्टाचार्या वार्तिकं सूत्रत्वेन मन्यन्ते। अतस्तेषां तत्र भ्रमः। यदि तु सूत्रशब्देन वार्तिकमेव भट्टाचार्याणामभिमतमिति मन्यते तदपि न युक्तम्। तैरेव तादर्थ्ये इति वचनेन तुमर्थाच्चेति सूत्रवैयर्थ्यस्य प्रदर्शितत्वान्न ह्यनन्तरकालभाविवार्तिकेन पूर्वकालिकस्य वैयर्थ्यशङ्का युज्यते। अतः सेयमुभयतस्पाशा रज्जुरिति।

अयं पूर्वपक्षः शास्त्रिचरणैरेवं समाहितः। चतुर्थीविचारेऽपि तादर्थ्ये चतुर्थीति ग्रन्थेन 'तादर्थ्ये' (२-४-२७) इति कातन्त्रसूत्रमेव निर्दिशन्ति भट्टाचार्याः, न तु 'तादर्थ्ये चतुर्थी वाच्या' इति पाणिनीयव्याकरणवार्तिकम्। तयाऽऽ-नुपूर्व्याऽनुल्लेखात्। अत एव तादर्थ्यघटकार्थपरिष्कारविचारे तेन सूत्रेण समनन्तरस्य 'तुमर्थाच्च भाववाचिनः' (२-४-२८) इति कातन्त्रसूत्रस्य वैयर्थ्यापादनं साधु सङ्गच्छते। तत्र तुमर्थाच्च भाववचनादिति सूत्रवैयर्थ्यप्रसङ्गादिति चेद् भट्टाचार्यग्रन्थोऽभविष्यत् तदा कातन्त्रसूत्रमपरामृष्टमभविष्यत्। भाववचनादिति सूत्रानुपूर्व्याः पाणिनिव्याकरणसिद्धायाः कातन्त्रेऽदर्शनात्। अतोऽनुशासनैकदेशोद्ध-रणव्यग्रैर्भट्टाचार्यैः 'तुमर्थाच्च भाववाचिनः' इति कातन्त्रसूत्रमेवाभिसंहितमिति

निर्धारयामः। तस्मात् चतुर्थ्यर्थविचारे न भट्टाचार्याणामनुशासनोल्लेखे प्रमादलेशोऽपीति सिद्धमिति। एवञ्च शास्त्रिचरणानां पूर्वपक्षस्तादर्थ्ये, तुमर्थाच्चेति वचनद्वयस्य पाणिनीयत्वाभिप्रायेण, समाधानं तु तयोः कातन्त्रव्याकरण-त्वाभिप्रायेणेति तत्सारांशः।

वस्तुतस्तु शास्त्रिचरणानां पूर्वपक्षसमाधाने निर्दले। तथा हि—अन्यशास्त्रीयवार्तिकवत् पाणिनीयं वार्तिकं न व्याख्यानरूपमेव, किन्तु सूत्रलक्षणाक्रान्तम्। अत एव 'समर्थः पदविधिः' (२-१-१) इति सूत्रे पाणिनिसूत्राणां वृत्तिसूत्रशब्देन व्यवहारः कृतो महाभाष्ये भगवता पतञ्जलिमहर्षिणा। वृत्तिसहितं सूत्रं पाणिनीयं, तद्रहितं सूत्रं कात्यायनीयमिति तयोर्व्यवस्था। स्पष्टं चेदं तत्रैव प्रदीपोद्द्योतयोः। अतः कात्यायनवचनस्य सूत्रशब्देन व्यवहारो भट्टाचार्याणां युज्यत एव। एवमेव कात्यायनवचनेन पाणिनिसूत्रस्य वैयर्थ्याशङ्कापि भट्टाचार्याणां युज्यत एव। सूत्रवार्तिकभाष्याणां मिलित्वा एकशास्त्रत्वेन तेषामन्यतमेनान्यतमस्य युक्तत्वायुक्तत्वविचारस्य न्याय्यत्वात्। अत एव सिद्धान्तकौमुद्यामजन्त-स्त्रीलिङ्गप्रकरणे 'इदं सूत्रं त्यक्तुं शक्यम् तीयस्य ङित्सूपसंख्याना'दिति 'विभाषा द्वितीयातृतीयाभ्याम्'(७-३-११५) इति पाणिनिसूत्रस्य विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानमिति कात्यायनवार्तिकेन गतार्थत्वं सिद्धान्तितं भट्टोजिदीक्षितमहोदयैः।

किञ्च वार्तिकमवष्टभ्य सूत्रस्य वैयर्थ्याशङ्काकथा दूरे आस्ताम्। इदमत्यद्भुतं यद् वार्तिकस्थपदानां सूत्रेष्वनुवृत्तिः। यथा अलुक्प्रकरणे 'आज्ञायिनि च' (६-३-५) इति सूत्रे'' 'आत्मनश्च पूरणे' इति कात्यायनवार्तिकं वर्तते। तद्वार्तिकाद् आत्मनश्चेति पदं 'वैयाकरणाख्यायां चतुर्थ्याः' (६-३-७) इति सूत्रेऽ-नुवर्तते। स्पष्टं चेदं भाष्यपरिशीलिनाम्। अत एव 'इणः षः' (८-३-३९) इति पाणिनिसूत्रे काम्ये रोरेवेति वार्तिकमनुवर्त्यते सर्वैर्व्याख्यातृभिः। एवञ्च वार्तिक-स्थपदानां सूत्रेऽनुवृत्तिवद् वार्तिकेन सूत्रवैयर्थ्यशङ्कापि युज्यत एव। अत एव तादर्थ्ये चतुर्थीति वार्तिकमवष्टभ्य 'कर्मणा यमभिप्रैति' (१-४-३२) इति सूत्रस्य वैयर्थ्यशङ्का भगवतो भाष्यकारस्य सङ्गच्छते। किञ्च भाष्यकृता पाणिनीयसूत्राणि कात्यायनीयवार्तिकानि चानेकानि प्रत्याख्यातानि सर्वोऽपि प्रत्याख्यानप्रकारः सूत्रवार्तिककारयोस्सम्मत एव। स्पष्टं चेदं 'धिन्विकृण्व्यो र च' (३-१-८०) इति सूत्रे भाष्यप्रदीपोद्द्योतेषु। एतन्मूलकमेव पठ्यते—यथोत्तरं मुनीनां प्रामाण्यमिति। इयमेव पाणिनीयव्याकरणशास्त्रमर्यादा। एनामपरिज्ञाय सर्वतन्त्रस्वतन्त्रे महात्मनि

भट्टाचार्ये दोषापादनमयुक्तमेव। एवञ्च पाणिनीयमेव चतुर्थ्यर्थविचारे भट्टाचार्यैः प्रादर्शि। तद्ग्रन्थस्योपर्युक्तरीत्योपपत्तौ कातन्त्रव्याकरणपर्यन्तानुधावनेन भट्टाचार्य-ग्रन्थसमर्थनप्रयासः शास्त्रिचरणानां विफल एव।

किञ्च कातन्त्रव्याकरणावलम्बनेन भट्टाचार्यग्रन्थसमन्वयप्रदर्शनं न युक्तिसहम्, तथा हि—अत्र सन्दर्भे स्थलद्वये सूत्रान्तरेण तत्सूत्रार्थ इति भट्टाचार्यपङ्क्तिः। तत्र सूत्रान्तरशब्देन कस्य ग्रहणमिति विचारणीयम्। गते ग्रन्थे 'कर्मणा यमभिप्रैति', 'रुच्यर्थानां प्रीयमाणः', 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः', 'स्पृहेरीप्सितः', 'धारेरुत्तमर्णः' इति पाणिनिसूत्राणि भट्टाचार्येण व्याख्यातानि, तन्मध्ये युद्धाय संनह्यत इत्यत्र चतुर्थी, 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (२-३-१४) इति सूत्रान्तरेणेति व्युत्पत्तिवादपङ्क्तिः। तत्र सूत्रान्तरेण इति पदस्य पाणिनिकर्तृकसूत्रान्तरेणेत्येवार्थो वक्तव्यः। तद्वदत्रापि सूत्रान्तरपदेन पाणिनि-व्याकरणस्य सूत्रस्यैव ग्रहणं न्याय्यम्। न तु व्याकरणान्तरस्थस्य। यत्र तु पाणिनीयापेक्षया व्याकरणान्तरस्य ग्रहणमिष्टं तत्र तत्तद्व्याकर्तॄणां नाम्ना निर्देशो भट्टाचार्यादिग्रन्थेषु दृश्यते। आपिशलाः कालापाः कौमारा इत्यादिरीत्या। तथा प्रथमार्थविचारे तदुक्तं कातन्त्रपरिशिष्टकृता कथं स्तोकः पाक इति? कृदन्तविशेषणत्वादिति। तर्कालङ्काराणां शब्दशक्तिप्रकाशिकायामपि एषा रीतिः स्पष्टा। तथैव द्वितीयार्थविचारे अधिशीङ्स्थासां कर्मेति सूत्रार्थविचारावसरे "तदप्रीणवतां शर्ववर्मप्रभृतीनां मुख्यार्थपराणां स्याल्यामधिशेते इत्यादिप्रयोगाणां साधुताया दुर्वारत्वाच्चे"ति भट्टाचार्याः। भाट्टरहस्ये खण्डदेवस्यापि एषैव रीतिः। यथा पञ्चमीप्रकरणे "वनादाराद् ग्रामः, ऋते कृष्णान्न किञ्चित्, अत्रापि प्रतियोगित्वं पञ्चम्यर्थः। यस्तु पुरुषाराधनमृते इति प्रयोगः स 'ऋते द्वितीया च' इति चान्द्रसूत्रादवगन्तव्यः" इति। प्रकृते 'सूत्रान्तरेण' इत्येव प्रायोजि भट्टाचार्यैः। अन्यथा कातन्त्रेति पदं प्रयोक्तव्यं स्यात्। अत एव आदर्शसहितव्युत्पत्तिवादे तुमर्थाच्च भाववचनादिति पाणिनीयमेव सूत्रं सम्पूर्णं मुद्रितमस्ति।

तस्मात् कातन्त्रव्याकरणमाश्रित्य भट्टाचार्यग्रन्थसमर्थनं नैवोपपद्यते। भट्टाचार्यैः पाणिनीयमेव चतुर्थ्यर्थविचारे प्रादर्शि। तद्ग्रन्थोपरि दोषापादनम्, तस्य समाधानतया कातन्त्रव्याकरणपर्यन्तानुधावनं चायुक्तमेव।

**आबाहुपुरुषाकारं शङ्खचक्रासिधारिणम्।**
**सहस्रशिरसं श्वेतं पतञ्जलिमुपास्महे।।**

# स्फोट-ध्वनि-सम्बन्ध-समीक्षा

**डॉ. रमाशङ्करमिश्रः**
उपाचार्योऽध्यक्षश्च, संस्कृतविभागस्य
प्रतापगढस्थ-मुनीश्वरदत्तस्नातकोत्तरमहाविद्यालये

❀ ❀ ❀

## पूर्वालोकः

काव्यशास्त्रीय-ध्वनिसिद्धान्तस्य परमालम्बनं वैयाकरणानां स्फोटादिवाक्-सिद्धान्त-मौक्तिकमिति द्योतयन् पदे पदे ध्वनिवादिनामानन्दवर्धनाभिनवगुप्तमम्मटादीनां वाग्गुम्फो विजृम्भते। ध्वन्यालोकीय-प्रथमपद्य एव "काव्यस्यात्मा ध्वनिरिति बुधै"रिति भागे बुधैरिति पदेन ध्वनि-प्रथम-निरूपकाणां वैयाकरणानामेव ध्वननं कृतमिति प्रतीयतेऽस्माकं मते। ध्वनिकारेण आचार्यानन्दवर्धनेन ध्वनि-लक्षणं लक्षयता ध्वन्यालोके निरवोचि—

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्य-विशेषः स ध्वनिरिति सूरिभिः कथितः"[१]।। इति।

अस्मिन् ध्वनिलक्षके पद्ये "सूरिभिः कथितः" इति पदद्वयस्य व्याख्यां कुर्वता (वृत्तिकारेण) आनन्दवर्धनेन स्पष्टमेव विद्योतितं यद् ध्वनि-सिद्धान्तस्य मूलभूमिर्नियतमेव शब्दागम-महार्णव-पारगामिभिर्वैयाकरणैश्चिररात्राय पूर्वमेव प्राणायि, तथा च ध्वनिसिद्धान्तोऽयं न यथा तथा द्वित्रैः पञ्चषैर्वा विद्याभ्यासिभिर्यशस्कामैः प्रकल्पितः कश्चन वादविशेषः—

"सूरिभिः कथित इति विद्वदुपज्ञेयमुक्तिः, न तु यथा कथञ्चित् प्रवृत्तेति प्रतिपाद्यते। प्रथमे हि विद्वांसो वैयाकरणाः। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति"[२]।

---

१. ध्वन्यालोके— १।१३।
२. तत्रैव, पृ. १३७-१३८ ज.।

आचार्यमम्मटेनापि ध्वनिनामकस्योत्तमकाव्यस्य विवेचनप्रसङ्गे सूत्रितं यद् ध्वनिपदप्रयोगो नास्मादृशामालङ्कारिकाणां मनःकल्पिताऽभिनवा कल्पना, किन्तु तत्त्वातत्त्वविवेचनचणा वैयाकरणाः पूर्वमेव प्रधानभूत-स्फोटरूपस्य मध्यमनादाभिव्यङ्ग्यस्यार्थस्य व्यञ्जके शब्दे "ध्वनि"-शब्दप्रयोगः सावधानं कृत इति हेतोर्वैयाकरणानुगामिभिस्साहित्यशास्त्रिभिरपि वाच्यवाचकदूरवर्तिनो व्यङ्ग्यार्थस्य व्यञ्जकयोश्शब्दार्थयोः कृते ध्वनिशब्दप्रयोगोऽनुष्ठितोऽनुष्ठीयते च[१]।

लौकिको ध्वनिर्द्विधा— प्राकृतो वैकृतश्च। प्राकृतध्वनिरेव अक्षरेत्याख्ययाऽऽख्यायते। अयमेव प्राकृतो ध्वनिर्विविधैर्मानवैः शुकसारिकादि-विहङ्गपटलैश्च तैस्तैर्विकृतरूपैरुच्चारितः सन् विभिन्नवत् प्रतीयते। स एव स वैकृतो ध्वनिर्बोधः। वैकृतध्वनिषु भिद्यमानेष्वपि न प्राकृतो ध्वनिर्विभिद्यते—

"शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते"।। (वाक्यपदीये—१।७७)

यथा च विभिद्यमानैरपि वैकृतध्वनिभिरेकस्यैव प्राकृतध्वनेरवबोधनं जायते, तथैव प्राकृतध्वनिभिरपि एकस्यैवाखण्डस्य स्फोटस्य बोध उपपद्यते। इम एवान्त्यबुद्धिनिर्ग्राह्याः प्राकृत-ध्वनयः स्फोट-व्यञ्जका इति वैयाकरणानां नयः। तथा चाह हरिः —

"नादैराहित-बीजायामन्त्येन ध्वनिना सह।
आवृत्त-परिपाकायां बुद्धौ शब्दोऽवधार्यते"।। (वाक्यपदीये—१।८४)

अत एव काव्यशास्त्रिभिरपि व्यङ्ग्यार्थव्यञ्जकौ शब्दार्थौ ध्वनिनाम्नाऽभिहितौ, प्रसिद्धोच्चारणसम्बद्धैरभिधेयादिभिरभ्याधिकानर्थान् प्रत्याययन्ती व्यञ्जनावृत्तिरपि ध्वनिसंज्ञया संज्ञायिता। इत्थञ्च विपुलार्थान् संवहतितरां ध्वनिः—

"तेन व्यञ्जकौ शब्दार्थावपीह ध्वनिशब्देनोक्तौ"।
(ध्वन्यालोकलोचने, पृ. १४० ज.)

इत्थं वैयाकरणकुलानुमतः "श्रूयमाणेषु ध्वनिशब्दप्रयोग" एव व्यञ्जनावृत्तेर्ध्वनिसिद्धान्तस्य च प्रेरणा-दिक्। इदमपि स्मरणीयमस्ति यद् आनन्दवर्धनपूर्ववर्ती भर्तृहरिनामा (४००-५०० ई.) वैयाकरणशिरोमणिरपि

---

१. काव्यप्रकाशे— १।४।

'वाक्यपदीयस्य' आगमकाण्डे सुस्पष्टमेव व्यञ्जनावृत्तिमूरीकृतवान्। अतश्च व्यञ्जना-धारणां व्यञ्जकत्वप्रत्यायितां व्यङ्ग्यार्थस्य प्रेरणां च समवगन्तुं वैयाकरणकृतः श्रूयमाणवर्णविषयकः सिद्धान्तमार्गः सर्वतः प्राग् बोद्धव्यकोटिमाव्रजतितराम्।

ध्वनिकारेण ध्वनिशब्दप्रयोगे वैयाकरणप्रवर्तितो य आधारस्सङ्केतितः, तस्य सर्वप्रथमं सूत्रपातः पाणिनिपूर्ववर्तिना आचार्यस्फोटायनेन स्फोटवादं प्रवर्तयता सम्पादित इति सम्भाव्यते, किन्तु तदानीं स सिद्धान्तो न पल्लवितो न वा पुष्पितो बभूव। एषा स्फोटायनप्रवर्तिता स्फोटवादपरम्परा महाभाष्ये स्फोटं प्रयुञ्जानेन पतञ्जलिना निर्दिष्टा[१]। किन्तु वर्ण-पद-वाक्यगामिनः स्फोटसिद्धान्तस्य सम्पूर्णा विस्तृता च व्याख्या आचार्यभर्तृहरिणा वाक्यपदीये प्रपञ्चिता।

**विवेचना**

श्रूयमाणवर्णप्रक्रियायास्तावदङ्गद्वयम् आम्नातं मनीषिभिः—१. श्रूयमाण-वर्णस्य (वाचः) समुत्पत्तिः, २. अस्या वाचः श्रोतृकर्तृकं ग्रहणञ्चेति। वागुत्पत्तिविषये भर्तृहरिपूर्वगामिनी परम्परा स्थितिचतुष्टयीं समाम्नाति स्म। सा च स्थितिचतुष्टयी "परा, पश्यन्ती, मध्यमा, वैखरी" चेति। परायां (वक्तुर्मनसि वागभिव्यक्तिकाङ्क्षारूपायां) न व्याकरणगतिरिति भर्तृहरिणा सा न विवेचिता परं वक्तुरिच्छाया विशदं विश्लेषणं तु तेन कृतमेव।

वागुत्पत्तिविषये भर्तृहरिणा चरणत्रयं सम्मतम्— पश्यन्ती, मध्यमा, वैखरी चेति। सैषा वैखरी वाक् प्रत्यायिकारूपेण श्रोतृवर्गमुपैति। वाचो ग्रहणक्रमस्तु समुत्पत्तिक्रमविपरीत इव दृश्यते। वाग्-ग्रहण-प्रसङ्ग एव श्रूयमाणवर्णानामवसरः प्रसरति। वाग्-ग्रहण-प्रक्रियायाश्च चरण-चतुष्टयमित्थम्—नादः, स्फोटो, ध्वनिः (व्यक्तिः), स्वरूपञ्चेति। अस्य तत्त्वचतुष्टयस्य परिस्फोटनानन्तरमेव ध्वनि-सिद्धान्तस्य स्थापनावैजयन्ती परिस्पन्दनीया। तथा च तत्त्वचतुष्टयमित्थं वेदनीयम्—

***(क) नादः***

व्यक्त्या वर्णध्वनयो नादरूपेण श्रोतृवर्गं व्रजन्ति[२]। व्यक्तो ध्वनिर्वायौ तरङ्ग-वेगवत् प्रसरति। तरङ्ग-वैशिष्ट्यञ्च वागिव विलसति। उच्चरितानां दीर्घ-ह्रस्व-

---

१. प्रतिभादर्शने डॉ. हरिशङ्करजोशिकृते, पृ. ३१७।

२. लोकेऽर्थबोधकत्वेन गृहीतो ध्वनिवर्णात्मकः तत्समूहः शब्दः।
(वै.सि. मञ्जूषायाम्, पृ. ३७७)

वर्णानामिव तरङ्गस्य आयतिः (Wave-length) प्रसिद्धा। इयञ्च तरङ्गोपमा वर्णायतिः श्रोत्रशष्कुलीमभिहत्य वर्णानां पुनरुत्पादनं विधत्ते। एष च पुनरुत्पादितो वर्ण एव नादः। इत्थं प्रत्येकमुच्चरितवर्णस्य तरङ्गस्तद्वर्णस्य नादमभिव्यनक्ति; यतो हि सर्वेषामुच्चरितवर्णानां तरङ्गा न युगपद् व्रजन्ति, प्रत्युत समुच्चारणक्रमेणैव, नादस्य क्रमजन्मत्वात्[१]।

साम्प्रतमुदेति शङ्केयं यदुच्चरितानां वर्णानां तरङ्गाः क्रमशः कर्णशष्कुलीमेत्य क्रमादेव नादं समुत्पादयन्ति, तदा कथङ्कारं शब्दानां पूर्णतायाः प्रबोधो भविष्यति, यतो हि द्वितीय-वर्ण-तरङ्ग-प्राप्तिं यावत् प्रथम-वर्ण-तरङ्गास्तु विलुप्तास्तिरोहिता वा भवन्तीत्यनुभवजुषः। अस्या एवं समस्यायाः समाधायकः स्फोटसिद्धान्तः।

### *(ख) स्फोटः*

यद्यपि च स्फोट-सिद्धान्तप्रवर्तनं स्फोटायनाचार्येण कृतमिति पतञ्जल्यादि-कल्पना परिस्फुरिता, तथापि स्फोटशब्दस्य सम्प्रयोग ईश्वरप्रभवस्य भगवल्लिङ्गरूपस्य त्रिमात्रकस्य, ''प्रणवस्य'' स्फोटत्वनिरूपणप्रसङ्गे प्रसरदव्याहत-ज्योतिषा वेदव्यासेन स्फुटं कृतः श्रीमद्भागवते—

> ''समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः।
> हृदयाकाशादभून्नादो वृत्तिरोधाद् विभाव्यते।।
> शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक्।
> येन वाग् व्यज्यते तस्य व्यक्तिराकाश आत्मनः[२]''।।

अयमेव प्रणवस्फोटः परवर्तिनि काले परम्परया वर्णपदाद्यष्टस्फोटतां प्रापितो मर्मज्ञैरिति मे मतिः।

व्यक्तानां वर्ण-समूहात्मक-शब्दानां पूर्णताया अवबोधः स्फोटेनैव जायते। यथा गौरित्यत्र शब्दे वर्णास्त्रयो गकार औकारो विसर्जनीयश्च (ग + औ + :)। यदा कश्चन वक्ता गौरिति समुच्चारयिष्यति, तदा त्रयोऽमी वर्णाः क्रमशो ध्वनितरङ्ग-त्रितयरूपैः श्रोतृ-श्रोत्रशष्कुलीमाहत्य नादं जनयिष्यन्ति; किन्तु गौरिति पूर्ण-शब्दस्य

---

१. ''नादस्य क्रमजन्मत्वान्न पूर्वो नापरश्च सः।
अक्रमः क्रमरूपेण भेदवानिव जायते''।। (वा.प. १।४८)

२. श्रीमद्भागवते— १२।६।३७।

प्रतीतिस्तु वर्णत्रयसंवलितत्वरूपेणैव भविष्यति, न तु पृथक् पृथग् वर्णस्य[१]। एकस्मिन्नेव वर्णे, द्वयोर्वा वर्णयोः पूर्णस्य गौरिति शब्दस्य प्रतीतौ स्वीकृतायां तु अवशिष्टवर्णवैयर्थ्यं प्रसज्येत, त्रयाणाञ्च वर्णानामेकान्वितं रूपमपि न सम्भवं सुलभं च स्यात्। न हि कोऽपि ध्वनिर्न क्षणद्वयादूर्ध्वं समवतिष्ठते नाम, तथा च औकार-ध्वनि-प्राप्तितः पूर्वमेव गकारध्वनिस्तिरोधास्यते, विसर्जनीय-ध्वनिप्राप्तिं यावद् गकारौकारध्वनी विलुप्तौ भविष्यतः।

स्फोटपरम्परानुसारेण च गौरिति पदस्यार्थबोधः स्फोटेन भविष्यति। पूर्व-पूर्व-वर्णानां संस्कारा अन्तिमवर्णसमुच्चारणेन सह सम्पृक्ताः शब्दपूर्णतां रचयन्तोऽस्मात्-प्रतीतिं विदधते[२]। इयमेव शब्दपूर्णताप्रतीतिर्नाम स्फोटः (स्फुटत्यर्थोऽस्मादिति स्फोटः, स्फोटनं स्फोट इति वा)। स्फोटश्च वर्णपदादिरूपेण अष्टधा विभक्तः। स्फोटस्य च विशदं विवेचनं वाक्यपदीये, कौण्डभट्टकृते वैयाकरणभूषणसारे, नागेशभट्टकृतायां वैयाकरणसिद्धान्तलघुमञ्जूषायाञ्च साधु दर्शनीयम्।

वाक्यपदीयकारो भर्तृहरिर्महाभाष्यकारः पतञ्जलिश्च शब्दार्थयोस्तादात्म्यस्य पूर्णतायाश्च समकालिकीमेव अनुभूतिमङ्गीकुरुतः। वाक्यपूर्णतायाश्च प्रतीतिरेव वाक्यस्फोटेन निरुक्ता। वाक्यपूर्णतया साकमेव वाक्यार्थप्रतीतिरपि जायमानाऽनुभूयते तत्त्वज्ञैः। अत एव वर्ण-पद-वाक्याखण्डपदाखण्डवाक्य-वर्णजाति-पदजाति-वाक्यजातिस्फोटेषु वाक्यस्फोटस्यैव पारमार्थिकत्त्वं सर्वस्फोटसाररत्नाकरत्वञ्चेति महाभाष्यकारादीनां सम्मतिः[३]।

### *(ग) ध्वनिः (व्यक्तिः, व्यङ्ग्यव्यञ्जकभावश्च)*

भर्तृहरिणा स्फोटे नादे च क्रमशो व्यङ्ग्यत्वं व्यञ्जकत्वं चोरीकृतम्[४]। तत्र नादो हि व्यञ्जकः स्फोटश्च व्यङ्ग्यः। नादस्फोटयोरयं व्यङ्ग्य-व्यञ्जकभावाख्यः सम्बन्धो नित्यस्सहजश्च। नादाभावे स्फोटसत्तासिद्धिरेव न सम्भाव्या। स्फोटे हि शब्दस्य वाक्यस्य वा श्रुतिः पूर्णायते। श्रुतिपूर्णत्वसमकालिक्येव अर्थप्रतीतिरपि

---

१. श्रीमद्भागवते— १२।६।४०।

२. "स च शब्दो वस्तुत एकोऽपि तत्तद्-वर्ण-संस्कारैः प्रतिबिम्बित-तत्तद्-रूपोऽनन्त-पदरूपतामिवापन्न इति सर्वपदरूपः सर्वार्थाभिधानशक्तिः।" (वै.सि.मं., पृ. ३७६)

३. "वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः। .........इति मतस्थितिर्वैयाकरणानां महाभाष्यकारादीनाम्"। (वैया.भू.सा., पृ. ३८७,३८९)

४. "व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः."। (वाक्यपदीये— १।९७)

जायते, स्फोटस्य व्यङ्ग्यत्वादेव स्फोटेन प्रतीयमाना अर्था अपि "व्यङ्ग्यार्थस्य सहृदयहृदयस्यायमेव वैयाकरणनयो मूलाधारः। नादश्च व्यञ्जको मतः। अयञ्च नादो वर्णध्वनिसमुद्भूतः। एवञ्च नादो ध्वनिरूप एव, ध्वनिश्च वर्णगुण एव सम्मतः। नादस्य च व्यञ्जकत्वं स्वकारणीभूतवर्णानामेव व्यञ्जकत्वं सूचयति। वर्णा हि शब्दस्वरूपनिर्धारकाः शब्दपूर्णतां जनयन्तोऽर्थप्रतीतिं कुर्वन्तीति भर्तृहरिमतम्। तथा चार्थानां कृते वर्णनिर्धारितानां शब्दानामपि व्यञ्जकत्वं सिद्ध्यत्येव। एतमेव नयमालिङ्ग्य वाच्यवाचकव्यतिरिक्तेऽर्थे आनन्दवर्धनेन व्यङ्ग्यव्यञ्जकभावः प्रतिपादितः।

मूलतो व्यङ्ग्यव्यञ्जकभावो वैयाकरणनयप्रचारितः। स्थितिसाम्यमनुवीक्ष्यैव आनन्दवर्धनेन अस्योपयोगो ध्वनिसिद्धान्तप्रतिष्ठापने कृतः। व्यङ्ग्यव्यञ्जकभावस्य अर्थविस्तारोऽपि क्रमशो वर्धितः। तथा च ध्वनिसिद्धान्ते न केवलं वाचकाः शब्दा एव, अपि तु वाच्याः, लक्ष्याः, व्यङ्ग्याश्चाप्यर्था व्रजन्तीति नयः[१]।

'ध्वनि'-शब्द-प्रेरणाऽपि आनन्दवर्धनेन वैयाकरणकृतकतिपयप्रयोगेभ्यः समासादिता। वैयाकरणैर्हि नादकारणीभूतानां वर्णानामपि व्यञ्जकयोः शब्दार्थयोः ध्वनित्वं निरुक्तम्। तथा च ध्वनिव्युत्पत्तिरित्थं मान्या—

"ध्वनति यः स व्यञ्जकः शब्दोऽर्थो वा ध्वनिः[२]"।

स्फोटानन्तरं जायमानोऽर्थविनिश्चयः श्रोतृकर्तृकग्रहणस्य तृतीयावस्था-रूपः। स चापि भर्तृहरिणा 'ध्वनित्वेन' 'व्यक्तित्वेन' च प्रकीर्तितः[३]। इदमेव च सूत्रं समनुगम्य ध्वनिवादिभिः प्रतीयमानोऽप्यर्थो मुख्यतया सम्मतां व्यक्तिमाधृत्यैव ध्वनिवादे प्रतीयमानार्थस्य व्यञ्जनापि ध्वननत्वाद् ध्वनिरिति प्रकथिता, "ध्वन्यतेऽनेनेति ध्वनि"रिति कृत्वा[४]। किञ्च व्यञ्जकाभ्यां शब्दार्थाभ्यां, व्यङ्ग्येनार्थेन, व्यञ्जनावृत्त्या च समुत्थापितेन संवलितस्वरूपेण झङ्कृतं

---

१. "सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते"। (का.प्र. २।४०-४१ पृ.)

२. "प्रतीतिपदार्थको लोके ध्वनिः शब्द इत्युच्यते तस्माद् ध्वनिः शब्दः।
(महाभाष्ये— पृ. १२, चौ.)

३. "तेन वाच्योऽपि ध्वनिः, वाचकोऽपि शब्दो ध्वनिः, द्वयोरपि व्यञ्जकत्वं ध्वनतीति कृत्वा"।
(लोचने, १, पृ. १४१)

४. कैश्चिद् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः। (वाक्यपदीये, १।९३)

चारुतरभावसौभाग्यसम्पदुल्लसितं काव्यमेव 'ध्वनिकाव्यमिति' निगदन्ति ध्वनिवादिनः[१]।

वैयाकरणानां वाग्-विषयिणी सिद्धान्तधारैव ध्वनिसिद्धान्ते व्यञ्जनायाः, व्यञ्जकयोः (शब्दार्थयोः) व्यङ्ग्यार्थस्य (प्रतीयमानार्थस्य) च आधारभूमिर्माननीया। ध्वन्यालोकस्य तृतीयोद्द्योतेऽपि आनन्दवर्धनेन प्रोररीकृतं यद् ध्वनिसिद्धान्तः समग्र एव वैयाकरणनयेभ्य उपात्त इति वैयाकरणैस्सह का नाम चर्चावात्या विरोधाविरोधयोः, ते त्वस्मत्पक्षपूर्वोद्भावका एवेति[२]।

### *(घ) स्वरूपम्*

इच्छारूपार्थस्य (स्वरूपस्य) प्रतीतिरेव अर्थतोऽर्थस्य व्यञ्जनाया आलम्बनभूः। इयमेव आर्थीव्यञ्जनाया मूलस्रोतोरूपा। वैयाकरणैर्हि अनेकार्थकशब्दसमस्यास्वीकारकैरर्थविनिश्चयाय निम्नाङ्कितानि आधारसोपानानि प्रतिष्ठापितानि—

> "संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
> अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।।
> सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
> शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः[३]"।

एतैश्च संयोगादिभिरनियन्त्रकैरेकस्मिन्नर्थे नियन्त्रिते सति शब्दो यदाऽन्यार्थस्यापि प्रतीतिमातनुते, तदा सैव प्रतीतिरभिधामूला शाब्दीव्यञ्जना सम्मता, शब्दस्य च सेयमेव औपाधिकी वृत्तिर्व्यञ्जकत्वम्, स एव चान्योऽर्थो व्यङ्ग्यः। इत्थञ्च, व्यङ्ग्यव्यञ्जकभावसम्बन्धावतारणधारणा हि व्यञ्जना।

### समीक्षणम्

(अ) यद्यपि व्यञ्जनावृत्तेः स्वीकरणं व्याकरणदर्शनेऽपि सम्मतं, किञ्च भरत-भामह-वामन-राजशेखरादिकृतेषु साहित्यशास्त्रीय-ग्रन्थेष्वपि बहुधा व्यञ्जनाया ध्वनेश्च क्वचन क्वचन मन्दमन्दं परिस्पन्दनमिव निःस्यन्दते, तथापि व्यञ्जनाया

---

१. "व्यङ्ग्योऽपि ध्वनिः, ध्वन्यत इति कृत्वा"। (लोचने, १, पृ. १४२)

२. "परिनिश्चित-निरपभ्रंशशब्दब्रह्मणां विपश्चितां मतमाश्रित्यैव प्रवृत्तोऽयं ध्वनिव्यवहार इति तैः सह किं विरोधाविरोधौ चिन्त्येते"। (ध्वन्यालोके, ३, पृ. ४८१)

३. वाक्यपदीये, २।३१७-३१८।

वृत्तित्वे ध्वनेश्च सत्काव्यत्वे निर्णीतनयप्रतिष्ठापनस्य परिपोषः परिपाकश्च सुरसरस्वतीसदने सर्वतः प्राग् आनन्दवर्धनेनैव सानन्दमान्दोलितः।

(ब) ध्वनि-शब्दो 'ध्वन शब्दे' इत्यस्माद् धातोः 'इ'-प्रत्यये सति निष्पद्यते। अत एव पतञ्जलिना शब्दपर्याय एव ध्वनिरिति सूचितम्[१]। अयं भावो यद् अर्थ-बोधको ध्वनिरेव लोके शब्द इति भण्यते। तथा च ध्वनिशब्दस्य पक्षद्वयं प्रस्फुटीभवति—

(क) शब्दपक्षः (ध्वननकारको ध्वनिः, ध्वनतीति कृत्वा।

(ख) अर्थपक्षः (ध्वन्यते=प्रतीयत इति ध्वनिः)।

व्याकरणनये स्फोटोऽपि ध्वन्यत इति सोऽपि ध्वनिः। इत्थमेव यदि कश्चन अर्थोऽर्थान्तरस्य बोधं तनोति तर्हि बोधकोऽर्थोऽपि ध्वनिः, बोध्यमानोऽर्थोऽपि ध्वनिः।

(स) इत्थञ्च निश्चीयते यद् ध्वनेः साधारणोऽर्थस्तु शब्दो नादो वा। लौकिकव्यवहारे च संयोगवियोगाभ्यां हेतुभ्यामुद्भूतोऽयं ध्वनिः (शब्दः) कर्णान्तिकचरो भवति, बोध्यते च। भर्तृहरिणा चैतादृशाः शब्दाः शब्दजा इति मताः[२]।

शब्दजशब्दानां प्रत्यक्षमनुभवस्तु घण्टानुरणने जायते। घण्टायामाहतायां समुदीयमानोऽनुझङ्कारविशेष एव शब्दजशब्दस्वरूपं बिभर्तितराम् अनुरणनवदेव वाच्यार्थबोधानन्तरमपि सहृदयहृदयेषु परिस्फुरति कश्चन व्यङ्ग्यार्थः, तस्मात् सोऽपि ध्वनिनाम्ना निगदितो ध्वनिकृदादिभिः।

(द) व्याकरणदर्शनमन्थनेन परिणमति निष्कर्षोऽयं यद् बाह्या अमी वैकृतध्वनयो न मूलशब्दरूपेषु श्रव्यतां यान्ति, प्रत्युत शब्दजशब्दरूपेष्वेव। मूल-शब्दः स एव य आघातक्षणे संयोगवियोगाभ्यामुत्पद्यते, किन्तु श्रोतृवर्गो मूलशब्दोत्थितासु तासु तासु ध्वनिशृङ्खलासु कामप्येव शृणोति या श्रोतृशष्कुलीं यावत् तरङ्गायते। तथा चानुरणनं न श्रोत्रं गोचरायते, असङ्ख्येषु अनुरणनेषु किञ्चनैकमेव श्रव्यकोटिमाटीकते[३]।

---

१. 'प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते'। (महाभाष्ये १, पृ. २, चौखम्बा, १९६४)

२. "यः संयोगवियोगाभ्यां करणैरुपजन्यते।
स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः"।। (वाक्यपदीये— १।१०२)

३. तेषां घण्टानुरणनरूपत्वं तावदस्ति ते च ध्वनिशब्देनोक्ताः। (लोचने, ज.,पृ. १३८)

एवमेव परिचलति चक्रचालनचातुरी व्यञ्जनासुन्दर्याः। ध्वनितरङ्गैः श्रवण-ग्राह्यतामुपगतेषु अनन्तशब्दजशब्देषु प्रत्येकं शब्दो मूलप्राकृतशब्दस्य व्यञ्जको भवति, मूलरणनस्वरूपोत्थापकत्वात्। सोऽयं रणनात्मको वैखरीनादोऽपि मध्यमानादस्य व्यञ्जकः। मध्यमानादाच्च स्फोटात्मकशब्दस्य व्यञ्जना जायते, येनार्थप्रत्ययः परिस्फुरति[१]।

(ध) एवञ्चोपरितनविवृत्या ज्ञायते यद् व्याकरणदर्शने व्यञ्जनाख्या शब्द-शक्तिर्मान्याऽस्ति, या हि शब्दनिष्ठा शब्दार्थसम्बन्धनिर्धारिका च। काव्यशास्त्र-चिन्तनेऽपि व्याकरणपरिष्कृतैव व्यञ्जनाऽनुरुध्यते।

ध्वनिशब्दोऽपि किञ्चिदर्थपरिवर्तमावर्त्य व्याकरणोत्सङ्गत एव काव्यशास्त्रोत्सङ्गमालिङ्गति। व्याकरणे हि वैखरीशब्दस्य स्फोटशब्दव्यञ्जकत्वाद् ध्वनित्वं प्रतियन्ति सुधियः। काव्यशास्त्रेऽपि व्यञ्जकः शब्दोऽर्थो वा (व्यस्तः समुदितो वा) ध्वनिशब्देन निगद्यते। तथा च व्याकरणसम्मतः पारिभाषिको ध्वनि-शब्दः काव्यशास्त्राजिरेऽर्थविस्तरेण सह सम्प्रयुक्तः।

परिस्फुटितमिदं तात्पर्य्यं पर्य्यवसीयते यत् काव्यशास्त्रीयो ध्वनिसिद्धान्तः सर्वथा व्याकरणसम्मतस्फोटवादतो लब्धजीवितः परिलसतितरामिति।

"काव्यशास्त्रार्णवे ख्यातो ध्वनिः काव्यात्मतां गतः।
व्याकरणाब्धिमाणिक्यस्फोटतो लब्धजीवितः"[२]।। इत्यलम्।

●

---

१. "प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते"।। (वाक्यपदीये— १।८३)

२. अस्यैव निबन्धप्रणेतुः।

# पाणिनीयशब्दानुशासनवैशिष्ट्यम्

**डॉ. गिरिजेशकुमारदीक्षितः**
प्राध्यापकः, व्याकरणविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

❀ ❀ ❀

सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या
वृक्षान् सरीसृपपशून् खगदंशमत्स्यान्।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावलोकधिषणं मुदमाप देवः[१]।।

इति श्रीमद्भागवतोक्तिं विलोक्यानायासेनेदं वक्तुं शक्यते यदिह जगति विद्यमानेषु सर्वेष्वपि जीवेषु मनुष्य एव हि श्रेष्ठः। यतो हि स्थावरजङ्गमात्मिकां विविधां सृष्टिं विरचय्याप्यसन्तुष्टमना ब्रह्मदेवो ब्रह्मावलोकधिषणं पुरुषं निर्मायैव मुदमवाप्तवान्। अन्यत्रापि— "गुह्यं ब्रह्म तदिदं वो ब्रवीमि न मानुषाच्छ्रेष्ठतरं हि किञ्चिद्"[२] इति।

तत्र खलु मनुष्योऽप्येकाकी स्वजीवनं कृतार्थयितुं न शक्नोति, तस्य भौतिके आध्यात्मिके च पथि येन केनापि रूपेण वर्तत एव स्वेतरमनुष्यापेक्षा। मानवजीवननिर्वाहार्थं तत्र परस्परं व्यवहारोऽपि नितरामपेक्षितः। परस्परं व्यवहारश्च स्वाभिप्रायसङ्क्रमणरूपसाधनं विनाऽसम्भवः। अयञ्च स्वाभिप्रायसङ्क्रमो यद्यपि सङ्केतेनापि सम्भाव्यते, यथा च मूकादिभिरनुष्ठीयते तथापि यादृशः सङ्क्रमः शब्दप्रयोगमाध्यमेन सञ्जायते न तथा केनाप्यन्येनोपायेन। अत एवोक्तं निरुक्तकृता यास्केन—"व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके[३]" इति।

---

१. श्रीमद्भागवतम्— ११।९।२८।
२. महाभारतं शान्तिपर्वणि मोक्षधर्मपर्व, अ. २९९, श्लो. २०।
३. निरुक्तम्— १।२।५।

दण्डिनाप्येतदर्थकमेवोक्तम्, यथा—

"इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते"[१]।

इत्थं यथाक्रमं विचार्यमाणे सति स्वाभिप्रायसङ्क्रमणार्थं भाषाज्ञानं नितान्तमपेक्षितमित्यापाततः प्रतिभाति। अत एव मनुष्यनिर्माणोत्तरं परमसन्तुष्टेन ब्रह्मणा तदानीमेव लोकव्यवहारार्थं काचन भाषाऽपि प्रदत्ता, सा च भाषा संस्कृतभाषैव भवितुमर्हति। सैव च सृष्टिकालतः प्रचलन्ती आस्ते। अस्याश्च संस्कृतभाषाया वैदिकलौकिकोभयभेदाभ्यां द्वैविध्यं जायते। तत्र वैदिकीभाषाऽ-पौरुषेयी परमेश्वरवाणीत्युच्यते। सा च मन्त्रब्राह्मणारण्यकोपनिषदात्मिका। लौकिकी चापि संस्कृतभाषा द्विविधा— द्विजातिकृतव्यवहारविषयभूता, तदितरमानवसाधारण-व्यवहारविषयमवाप्ता च। तथा चोक्तं सुन्दरकाण्डे वाल्मीकिरामायणे—

"अहं ह्यतितनुश्चैव वानरश्च विशेषतः।
वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम्।।

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मा सीता भीता भविष्यति।।

अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत्।
मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता"[२]।।

इत्थमस्याः संस्कृतभाषायाः स्वरूपज्ञानाय व्यवहाराय तद्रक्षायै च सर्वतः प्राक् शब्दज्ञानमत्यावश्यकम्। शब्दज्ञानं विना भाषाया व्यवहारो भवितुं नार्हति। भाषा नाम मानवस्य व्यावहारिकी सम्पत्तिः। विना भाषां परस्परं व्यवहारः कर्तुं न शक्यते। अतः सङ्क्षेपेणेदं वक्तुं शक्यते यद् भाषाज्ञानं शब्दज्ञानपूर्वकमेव सम्भाव्यते। शब्दज्ञानञ्च व्याकरणज्ञानमन्तरा न सम्भवति। तथा चोक्तम्—

"व्याकरणात्पदसिद्धिः पदसिद्धेरर्थनिर्णयो भवति।
अर्थात्तत्त्वज्ञानं तत्त्वज्ञानात् परं श्रेयः"[३]।।

---

१. काव्यादर्शः— ३।
२. वा.रा.सु.का.अ. ३०, श्लो. १७-१९।
३. सिद्धहेमचन्द्रानुशासनस्य प्रथमाध्यायः, पृ. ७।

अत्रार्थे भर्तृसम्मतिरपि—

"अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते"[१] ।। इति।

अभिप्रायसङ्क्रमार्थो हि यः शब्दोऽस्माभिः स्वीक्रियते स च शब्दो व्यक्तशब्द एव नाव्यक्तशब्द इति नाविदितं प्रेक्षावताम्। तत्र व्यक्तशब्दोऽपि साधुरसाधुभेदाभ्यां द्विविधः। एवं द्विविधे शब्दभेदे जाते साधुशब्दप्रयोग एव शास्त्रीयलौकिकोभयदृष्ट्या प्रशस्तः। महाभाष्ये भगवान् भाष्यकारः पतञ्जलिरेवं लिलेख यत्—

"एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवति"[२]।

महाभाष्ये पस्पशाह्निकेऽपि भगवता पतञ्जलिनोक्तम्—

"यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः"[३] ।।

इदमत्रावधेयं यल्लोकव्यवहारेऽस्माभिर्ये शब्दाः प्रतिदिनं प्रतिक्षणं वा प्रयुज्यन्ते, ते शब्दा अपरिमिता विद्यन्ते। एतस्मिंश्चातिमहत्यपरिमिते प्रयोगविषयके शब्दवाङ्मये के शब्दाः साधवः के चासाधवः? कथञ्च तेषु साधुत्वासाधुत्वपरिज्ञानमिति सर्वं व्याकरणशास्त्रज्ञानं विना निर्णेतुं न शक्यते। उक्तञ्च वाक्यपदीये श्रीमता भर्तृहरिणा—

"साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः"[४]। इति।

शब्दानां साधुता शिष्टप्रयोगे निहिता। ते शिष्टा अपि देशकालादिभेदेनापरिमितास्तथाऽपरिमिताश्च सन्ति शिष्टप्रयुक्तशब्दाः। एवमुभयोरपरिमितयोः परिमितया च मानवप्रज्ञयाऽपरिमितशिष्टप्रयोगविषयकसाधुत्वपरिज्ञानं प्रतिशब्दं कथमपि कर्तुं न शक्यते। एतदर्थकमेव महाभाष्ये महर्षिणा पतञ्जलिनाऽप्युक्तम्—

"अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। एवं हि श्रूयते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम। बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगाम किं पुनरद्यत्वे? यः सर्वथा चिरं जीवति वर्षशतं जीवति। चतुर्भिश्च

१. वाक्यपदीयं ब्रह्मका., कारि. १३।
२. पात.म.भा. ६।१।८४।
३. पात.म.भा. पस्पशा.।
४. वाक्यपदीयं ब्रह्मका., कारि. १४१।

प्रकारैर्विद्योपयुक्ता भवति— आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति। तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात्। तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः''[1]।

पुनस्तत्रैवाग्रे भाष्यकार एवं ब्रवीति—

''कथं तर्हीमे शब्दाः प्रतिपत्तव्याः? किञ्चित्सामान्यविशेषवल्लक्षणं प्रवर्त्यम्। येनाल्पेन यत्नेन महतो महतः शब्दौघान्प्रतिपद्येरन्। किं पुनस्तत्? उत्सर्गापवादौ। कश्चिदुत्सर्गः कर्त्तव्यः कश्चिदपवादः। कथञ्जातीयकः पुनरुत्सर्गः कर्तव्यः? कथञ्जातीयकोऽपवादः? सामान्येनोत्सर्गः कर्त्तव्यः। तद्यथा—'कर्मण्यण्' (३।२।)। तस्य विशेषेणापवादः। तद्यथा 'आतोऽनुपसर्गे कः'[2] (३।२।३) इति।

एतेनेदमायातं यदुत्सर्गापवादरूपाभ्यां सामान्यविशेषनियमाभ्यां शिष्टप्रयुक्तशब्दानां सरलतया पूर्वं ज्ञानमनन्तरं तेषां लोके प्रयोगो जायते। एवम् 'यदि शिष्टाः शब्देषु प्रमाणम्, किमष्टाध्याय्या क्रियते'? इत्याशङ्क्य 'शिष्टपरिज्ञानार्थाऽष्टाध्यायी'[3] इति भगवता पतञ्जलिना प्रतिपादितम्। भर्तृहरिणाप्युक्तं वाक्यपदीये—

''साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।
अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्''[4]।। इति।

इत्थं व्याकरणेन संस्कृतशब्दानां प्रकृतिप्रत्ययस्वरवर्णमात्रादिज्ञानपूर्वकं साधुत्वं ज्ञाप्यते। ततस्तेषां साधुशब्दानां लोके भाषायामस्माभिः प्रयोगः क्रियते। भाषा नाम मनुष्यस्य सामाजिको धर्मः। भाषामाध्यमेनैव मानवसमुदायः स्वीयं निखिलं सामाजिकं संश्लेषमाविष्करोति। वक्ता स्वकीयान् भावानर्थांश्च प्रकटयितुं वाक्यानि निर्माति। तत्र वाक्यनिर्माणे भवति वक्तुः स्वातन्त्र्यम्, किन्तु वाक्ये प्रयुक्तानां शब्दानां साधुत्वनिश्चये स्वातन्त्र्यं नास्ति तत्र साधुत्वनियामकं व्याकरणमेवेतीयता प्रबन्धेन प्रमाणितम्।

एवंविधस्य व्याकरणस्य प्रथमोपदेष्टा कः? इति जिज्ञासायामपौरुषेयार्षग्रन्थेषु सम्प्राप्तं यत् प्रमाणम्, तदनुसारं संस्कृतव्याकरणस्य प्रथमोपदेष्टा सर्वविद्यानिधानो ब्रह्मा आसीदिति निश्चीयते। अत्र प्रमाणं यथा—

---

१. पात.म.भा. पस्पशा.।
२. पात.म.मा. पस्पशा.।
३. पात.म.भा. पस्पशा.।
४. वाक्यपदीयं, ब्रह्मका., कारि. १४१।

"ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भारद्वाजाय, भारद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः"[१]। इति।

कृष्णद्वैपायनो व्यासोऽपि महाभारते प्राह—

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः"[२]।। इति।

अतः परं ब्रह्मणोपदिष्टो बृहस्पतिश्च द्वितीयः प्रवक्ता बभूव। तेन बृहस्पतिना समुपदिष्टः कश्यपमहर्षेरात्मजश्चेन्द्रदेवस्तत्रत्यं काठिन्यं विचार्य प्रकृति-प्रत्ययविभागगर्भस्य व्याकरणस्य प्रथमः संस्कर्ताऽभवत्। तद्यथा—

"वाग्वै पराच्यव्याकृताऽवदत्। ते देवा इन्द्रमब्रुवन्। इमां नो वाचं व्याकुर्विति। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्"[३]। इति।

सायणाचार्येणास्य व्याख्यानं विदधता लिखितम्—

"तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं सर्वत्राकरोत्"[४] इति।

इदञ्चैन्द्रं व्याकरणं सर्वेषु व्याकरणेषु प्राचीनतमम्। इतराणि खलु सर्वाण्यपि व्याकरणानि तस्मादर्वाक्तनानीति वोपदेवकृतकविकल्पद्रुमाख्यस्य ग्रन्थस्या-दावेवोक्तम्—

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः"।।

यद्यप्यैन्द्रं व्याकरणं सम्प्रति दुर्लभं तथाप्येतस्य बहुत्र नाम प्रयुक्तमुपलभ्यते। महर्षिः पाणिनिस्तु स्वप्राग्वर्तिनां समेषामाचार्याणां व्याकरणशास्त्रं सर्वतोभावेनाऽऽलोड्य "विद्याकामः शिवं जपेत्" इति वचनमनुसृत्य शिवञ्च समाराध्य शिवप्रसादाच्चतुर्दशसूत्राणि समधिगम्याष्टाध्यायीं विनिर्मितवान्।

अस्मिन् जगति केवलं संस्कृतभाषैवैतादृशी भाषा वर्तते, यस्या व्याकरणं सर्वतोभावेन परिपूर्णं परिष्कृतञ्चावलोक्यते। यद्यपि संस्कृतभाषाया अपि प्राचीनानि नवीनानि चानेकानि सन्ति व्याकरणानि, किन्तु महर्षिपाणिनिप्रणीतं पाणिनीयं

---

१. ऋक्तन्त्रम्-१।४।
२. महाभारतं शा.प. २३२।२४।
३. तैत्ति. संहि. ६।४।७।
४. ऋग्भाष्यस्योपोद्घातः पूनासंस्क. भा. १ पृ. २६।

व्याकरणमेवेदानीं यावद् विरचितेषु व्याकरणेषु सर्वश्रेष्ठं लब्धप्रतिष्ठञ्च विद्यत इति सर्वैर्विद्वद्भिराधुनिकैर्वैज्ञानिकैश्च निर्विवादं स्वीक्रियते। व्याख्योपव्याख्याटीका-टिप्पण्यादिरूपेण यावानस्य विस्तरो न तथान्यस्य कस्यापि व्याकरणस्येति समे जानन्त्येव। किं बहुनाऽद्यापि सहस्राधिका ग्रन्थाः पाणिनीयव्याकरणमाश्रित्य विरचिता विलोक्यन्ते।

आचार्यः पाणिनिर्न केवलं शब्दशास्त्रज्ञोऽपि तु निखिले प्राचीनवाङ्मयेऽपि तस्याप्रतिहता गतिरासीत्। तथा च न केवलं वैदिकवाङ्मयस्यापि तु स भूगोलेतिहासपुराणसमुद्रशास्त्रलोकव्यवहाराद्यनेकशास्त्राणामप्यद्वितीयो विद्वानासीत्। अत एव पाणिनेः शब्दानुशासनं न केवलं शब्दज्ञानायापि तु प्राचीन-भूगोलेतिहासादिज्ञानायापि सर्वोत्कृष्टं साधनमित्याधुनिकैरपीदानीं मुक्तकण्ठं स्वीक्रियते। महर्षिपाणिनिविषये स्वयं भगवान् पतञ्जलिराह—

"प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण"[१]। पुनश्चाग्रे महर्षिणा पतञ्जलिनोक्तम्—

"सामर्थ्ययोगान्नहि किञ्चिदस्मिन् पश्यामि शास्त्रे यदनर्थकं स्यात्"[२]। इति।

जयादित्योऽपि "उदक्च विपाशः" (४।२।७४) इत्यस्य वृत्तौ लिखति "महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य"[३]। इति।

द्वादशशताब्द्यामुत्पन्नः ऋग्वेदस्य भाष्यकारो वेङ्कटमाधवोऽपि एवमाह—

"शाकल्यः पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः"[४]।

एवं विविधशास्त्रमर्मज्ञेन पाणिनिना वैदिकशब्दानां निष्पत्त्यर्थं वैदिकेषु शब्देषु स्वरज्ञानार्थं स्वरस्य सूक्ष्मविवेचनार्थञ्च प्रायः चतुःशतानि सूत्राणि प्रणीतानि, यतो हि वेदार्थज्ञाने स्वरज्ञानं सर्वथाऽऽवश्यकम्। एतेन महर्षिपाणिनेर्वेदज्ञता सर्वथा प्रमाणिता।

---

१. पात.म.भा. १।१।१।

२. पात.म.भा. ६।१।७७।

३. काशिकावृत्तिः-४।२।७४।

४. मन्त्रार्थानुक्रमणी-ऋग्भाष्यम्-८।१।

**वेदाङ्गेषु पाणिनिव्याकरणस्य वैशिष्ट्यम्**

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति। प्रधानञ्च षडङ्गेषु व्याकरणम्" इति महाभाष्ये पस्पशाह्निके आदावेव महर्षिणा पतञ्जलिनोक्तम्। वेदाङ्गेषु व्याकरणस्य प्रथमं स्थानमिति सर्वेऽपि जानन्त्येव। निरुक्तस्यादौ यास्केनोक्तं यत् "अतिप्राचीनकाले वेदाङ्गान्यपि ऋषिभिः प्रणीतानि"। एतेन वेदाङ्गान्यप्यतिप्राचीनानीत्यत्र नास्ति सन्देहावसरः। महाभारतेऽपि भगवता व्यासेन लिखितं यत्— 'शिवबृहस्पती वेदाङ्गानामादिप्रवर्त्तकावास्ताम्" इति। मुण्डकोपनिषदः प्रारम्भे महर्षिराङ्गिरसः षडङ्गानीति शौनकमाह—

"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम्" इति।

अन्यच्च शाकलप्रातिशाख्ये—

"शिक्षा कल्पोऽथ व्याकरणं निरुक्तं छन्दसां च यः।
ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु"[१]।। इति।

पाणिनीयशिक्षायामपि चोक्तम्—

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते"[२]।।

छान्दोग्योपनिषद्भाष्ये भगवाञ्छङ्कराचार्यः 'वेदानां वेदः' इत्यस्यार्थं व्याकरणमिति चकार।

एतेन भगवच्छङ्कराचार्यकृतभाष्यपरिशीलनेन व्याकरणस्य महत्त्वविषये किञ्चिद्वक्तव्यं नावशिष्यते। वेदाध्ययने तु सर्वतोभावेन व्याकरणस्योपयोग इत्यपि छान्दोग्योपनिषद्भाष्यावलोकनेनैव प्रमाणितम्।

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः"[३]।।

---

१. शाकलप्रातिशाख्यस्य चतुर्दशाध्यायस्यान्ते।

२. पाणिनिशिक्षा, कारि. ४१-४२।

३. वोपदेवकृतकविकल्पद्रुमग्रन्थारम्भे।

इति वोपदेवकृतकविकल्पद्रुमाख्यग्रन्थोक्तवचनप्रामाण्येन वैयाकरणसम्प्रदाये प्रसिद्धा अष्टौ शाब्दिका अभूवन्निति सर्वैरपि शाब्दिकासम्प्रदायाग्रगण्यैर्मनीषिभिः स्वीक्रियते। तत्राप्येतेष्वष्टविधेषु व्याकरणेषु ऐन्द्रव्याकरणमतिविशालमासीदित्यपीतिहास-विद्भिर्विद्वद्भिस्तत्र तत्र ग्रन्थे महताऽऽडम्बरेण प्रतिपादितम्। महाभाष्यकारेण भगवता पतञ्जलिनापि महाभाष्ये उक्तम्—

"एवं हि श्रूयते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच। नान्तं जगाम। बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगाम, किं पुनरद्यत्वे यः सर्वथा चिरं जीवति वर्षशतं जीवति"[१]।

किं बहुनैन्द्रव्याकरणस्य विशालता विपुलता च महाभारतस्य टीकाकृद्भिर्देवबोधमहोदयैरपि स्वीकृता प्रतिपादिता च। तद्यथा—

"न दृष्ट इति वैयासे शब्दे मा संशयं कृथाः।
अज्ञैरज्ञातमित्येवं पदं नहि न विद्यते।।
यान्युज्जहार माहेन्द्राद् व्यासो व्याकरणार्णवात्।
पदरत्नानि किं तानि सन्ति पाणिनिगोष्पदे"[२]।।

एतेनैन्द्रव्याकरणस्य व्यापकता विपुलता च प्रमाणिता। किन्तु दैव-दुर्विपाकादेतादृशस्य विशालस्याप्यैन्द्रव्याकरणस्य सम्प्रति प्राप्तिर्न जायते। अस्य केवलं द्वे सूत्रे प्राप्येते। तत्र प्रथमं सूत्रम्— 'अथ वर्णसमूहः'[३] इति, द्वितीयञ्च 'अर्थः पदम्'[४] इति। एवमेवेदानीमतिप्राचीनानि कानिचिदन्यान्यपि व्याकरणानि नैवोपलभ्यन्ते, न च दृश्यते काप्येतादृश्युपलब्धेराशा। एवं प्राचीनेषु तत्तद्व्याकरणेषु लुप्तेषु सम्प्रति वैदिकव्याकरणस्य न कोऽप्येतादृशो ग्रन्थोऽवलोक्यते येन वैदिकानां शब्दानां सर्वतोभावेन नियमनं भवेत्, केवलं पाणिनेरष्टाध्याय्येव दृष्टिपथमायाति यया वैदिकव्याकरणस्य नियमसंसाधनं सम्भाव्यते। अष्टाध्याय्यामेवैतादृशा नियमा उपलभ्यन्ते ये वैदिकशब्दानां संसिद्धौ समर्थाः सन्ति। एवंविधाः पाणिनिनिर्मिता वेदसम्बन्धिनियमाः श्रीमता

---

१. पात. म.भा., पस्पशा.।

२. महाभारतस्य ज्ञानदीपिकाटीकारम्भे (देवबोधः)।

३. भट्टारकहरिचन्द्रकृतचरकन्यासः, पृ. ५८।

४. दुर्गाचार्यस्य निरुक्तवृत्तिः, पृ. १०, पङ्क्तिः ११।

भट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुद्या अन्तेऽष्टस्वध्यायेषु विभज्य समुपस्थापिता व्याख्याताश्च विराजन्ते। तत्रापि "बहुलं छन्दसि" इत्येवं बहुवारं (द्वादशवारम्) वदता श्रीमता पाणिनिना वैदिकशब्दानां विपुलता विशालता च सङ्केतेन प्रदर्शिता। एतदतिरिक्तमेकं विस्तृतं स्वरप्रकरणमपि वैदिकशब्देषु स्वरादिसंसिद्ध्यर्थं श्रीमता भट्टोजिदीक्षितेन स्वसिद्धान्तकौमुद्यामन्ते सङ्गृहीतम्। तत्र खलु वेदे स्वरादिनिश्चायका ये नियमाः पाणिनिना प्रोक्तास्तेषां सङ्ग्रहो विद्यते। एतत्प्रकरणं मुख्यरूपेण प्रायो वेदस्य कृत एवेति सर्वैरिव शाब्दिकैरनुभूयते। एवं पाणिनीयव्याकरणस्यैव वेदाङ्गेषु प्रामुख्यं वैशिष्ट्यं महत्त्वञ्चेति निर्बाधं वक्तुं शक्यते।

किं बहुना, पाणिनीयव्याकरणस्यैतादृशं वैशिष्ट्यं भगवता भाष्यकारेणाचार्येण पतञ्जलिनाऽपि स्वीकृतम्। अत एव व्याकरणाध्ययन-प्रयोजनकथनावसरे महाभाष्यस्यादावेव तैरुक्तम्—

"कानि पुनः शब्दानुशासनस्य प्रयोजनानि? रक्षोहागमलघ्वसन्देहाः प्रयोजनम्। रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति। ऊहः खल्वपि-न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः, ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्। आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति। प्रधानं च षडङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति। लघ्वर्थं चाध्येयं व्याकरणम्। ब्राह्मणेनावश्यं शब्दा ज्ञेया इति। न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम्। असन्देहार्थं चाध्येयं व्याकरणम्। याज्ञिकाः पठन्ति—स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति। तस्यां सन्देहः स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यति। यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति"[१]।

पुनश्चाग्रे भाष्यकार आह—

"इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि—तेऽसुराः। दुष्टः शब्दः। यदधीतम्। यस्तु प्रयुङ्क्ते। अविद्वांसः। विभक्तिं कुर्वन्ति। यो वा इमाम्। चत्वारि। उतत्वः। सक्तुमिव। सारस्वतीम्। दशम्यां पुत्रस्य। सुदेवोऽसि वरुणेति[२]"।

---

१. पात. म.भा., पस्पशा.; २. पात. म.भा., पस्पशा.।

इत्थं व्याकरणस्य पुनरपि बहुविधानि प्रयोजनानि महर्षिणा पतञ्जलिना निर्दिष्टानि। तेषु स्पष्टप्रतिपत्त्यर्थं निदर्शनरूपेण कानिचिद् विविच्यन्ते। तद्यथा—

"दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्"।। इति

दुष्टाञ्छब्दान्मा प्रयुक्ष्महीत्यध्येयं व्याकरणम्[१]।

अनेन भाष्यकारवचनप्रामाण्येन दुष्टशब्दप्रयोगे महान् दोषोऽतो दुष्टाः शब्दा न प्रयोक्तव्या इति सुनिश्चितम्। "इमे शब्दा दुष्टाः" इति ज्ञानं तु व्याकरण-ज्ञानाधीनमेव। अतो व्याकरणाध्ययनमावश्यकमिति भाष्यकाराणामभिप्रायः।

इदमपि ध्यातव्यं यद् यथा महाभाष्ये महर्षिणा पतञ्जलिना दुष्टशब्दप्रयोगे महान्तो दोषा उक्तास्तथैव साधुशब्दप्रयोगे बहवो गुणा अपि निगदिताः। तद्यथा—

"यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः"[२]।।

अत्र कः? इति प्रश्ने महाभाष्यकारो ब्रवीति वाग्योगविदेवेति। पुनः कुत एतत्? इत्याशङ्क्य प्रतिपादयति-"यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति। यथैव हि शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽप्यधर्मः। अथवा भूयानधर्मः प्राप्नोति। भूयांसोऽपशब्दाः, अल्पीयांसः शब्दा इति"[३]।

वेदे व्याकरणस्य कीदृशं स्वरूपमिति विवृण्वता महाभाष्यकारेण भगवता पतञ्जलिनाऽग्रे व्याकरणस्य स्वरूपं प्रतिपादितम्। तद्यथा—

"चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्यां आ विवेश"[४]।। इति।

इत्थं व्याकरणस्य स्वरूपं निर्दिश्योपर्युक्तस्य वचनस्य व्याख्यानमपि तत्रैव महर्षिणा पतञ्जलिना विहितम्। तद्यथा—

"चत्वारि शृङ्गाणि पदजातानि नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादाः—त्रयः काला भूतभविष्यद्वर्तमानाः। द्वे शीर्षे द्वौ शब्दात्मानौ नित्यः कार्यश्च।

१. पात. म.भा., पस्पशा.; २. पात. म.भा., पस्पशा.।
३. पात. म.भा., पस्पशा.; ४. ऋ. ४।५८।३१।

सप्त हस्तासो अस्य-सप्त विभक्तय:। त्रिधा बद्धः-त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसीति। वृषभो वर्षणात्। रोरवीति शब्दं करोति। कुत एतत्? रौतिः शब्दकर्मा। महो देवो मर्त्यां आविवेशेति। महान् देवः शब्दः। मर्त्या मरणधर्म्माणो मनुष्यास्तानाविवेश। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्''[1]।

श्रीमता भर्तृहरिणाऽपि महता देवेन सायुज्यस्य विषये वाक्यपदीये ब्रह्मकाण्डे इत्थं व्यलेखि—

''अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते।।

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते''[2]।।

पदमञ्जरीकारस्य हरदत्तस्याप्यत्रार्थे सम्मतिर्यथा—

''उपासनीयं यत्नेन शास्त्रं व्याकरणं महत्।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम्।।
रूपान्तरेण ते देवा विचरन्ति महीतले।
ये व्याकरणसंस्कारपवित्रितमुखा नराः''[3]।।

महाभारते व्यासेनाप्युक्तम्—

''द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति''[4]।।

एवमेव व्याकरणाध्ययनस्यान्यान्यवशिष्टानि प्रयोजनानि यथाक्रमं महाभाष्ये महताऽऽडम्बरेण प्रतिपादितानि सन्ति, किन्तु विस्तरभयान्न तानि सर्वाण्यत्रोपस्थातुं शक्यानीति धिया सङ्क्षेपेणात्र व्याकरणाध्ययनस्य कानिचिदेव प्रयोजनानि निदर्शितानि।

इत्थमिदं निष्कर्षतो वक्तुं शक्यते यद् वैयाकरणानामेतादृश्यां सुदीर्घ-परम्परायां जातायामपि महर्षिपाणिनिरेवैतादृशो वैयाकरणोऽभूद् यस्य व्याकरणं

१. पात. म.भा., पस्पशा.।
२. वाक्यपदीयं ब्रह्मकाण्डम्, कारि. १३०, १३१।
३. पदमञ्जरी- 'अथ शब्दानुशासनम्' इत्यस्य व्याख्यानान्ते।
४. महाभारतं. शा.प. २३२।३०, त्रिपुरातापिन्युपनिषद्-४।१७।

लौकिकवैदिकोभयविधानां शब्दानामनुशासनं करोति। इतराणि सन्ति यानि व्याकरणानि तानि पाणिनीयव्याकरणवद् लौकिकवैदिकोभयविधशब्दानामनुशासने न समर्थानीति सर्वेऽपि शब्दशास्त्रज्ञा मनीषिणः स्वीकुर्वन्त्येव। किं बहुना, पाणिनीयव्याकरणस्येदमेव वैशिष्ट्यमभिलक्ष्य भगवान् भाष्यकारः पतञ्जलिर्महाभाष्यस्यादावेव वदति— "अथ शब्दानुशासनम्। अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते। शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्। केषां शब्दानाम्। लौकिकानां वैदिकानाञ्च"। एवमत्र प्रतिज्ञावाक्ये एव "केषां शब्दानाम्। लौकिकानां वैदिकानाञ्च" इत्युक्त्यैव लौकिकवैदिकोभयविधशब्दानामनुशासनं भगवता पतञ्जलिनोद्घोषितम्। "सर्ववेदपारिषदं हीदं शास्त्रम्[1]" इति महर्षि-पतञ्जलेरुक्तिरप्यत्रार्थे प्रमाणभूता। अतो नूनमेवेदं पाणिनीयं व्याकरणं सर्वाङ्गसम्पन्नं सर्वतोभावेन परिपूर्णं व्याकरणान्तरेभ्यो विशिष्टमिति सर्वेषां विदुषां वैज्ञानिकाना-माधुनिकेतिहासविदाञ्च कथनं सर्वथा समीचीनं युक्तियुक्तञ्च प्रतिभाति।

पाणिनीयं व्याकरणं सर्वव्याकरणानां मूलम्। पाणिनेः पूर्वं लिखितरूपेण शब्दसाधुत्वनिश्चायकं किमप्येतादृशं व्याकरणं नासीत्, न चापि कस्याप्येतादृशस्य समुदायस्यास्तित्वमेवासीद् येन शब्दसाधुत्वादिविषयिणी काचन सुव्यवस्थिता निश्चयात्मिका वा प्रक्रिया व्यवस्थापिता भवेत्। तदानीमेतादृशाः केचन वैयाकरणा अवश्यमेवाभूवन् ये स्वतन्त्ररूपेण भाषायाः किमपि विशिष्टं स्वरूपमाश्रित्य किमपि विशेषं विचारितवन्तः। एवम्भूतास्ते महान्तो विद्वांस इति कथ्यन्ते स्म। यद्यपि तिब्बते एवमुच्यते यदैन्द्रव्याकरणं पाणिनीयव्याकरणात्प्राचीनमथ च भारतसदृशे सुविस्तृते देशे ऐन्द्रव्याकरणस्य पूर्वं प्रभाव आसीत्, तथापि पाणिनीयव्याकरणमेव प्राचीनतमं मन्तुं योग्यम्। यद्यपि पण्डितानामयमपि विनिश्चयो यच्चान्द्रव्याकरणं पाणिनीयव्याकरणानुकूलम्, कलापव्याकरणञ्चैन्द्रव्याकरणमनुगच्छति, तथापि सर्वत्र सर्वैरिदं स्वीकृतमेव यदाचार्यपाणिनेर्व्याकरणं स्वसूत्राणां व्यापकतया विचाराणाञ्च परिपूर्णतया सर्वथाऽनुपमं वरीवर्ति।

इत्थं षट्स्वङ्गेषु मुखत्वाद्व्याकरणस्यैव प्राधान्यमिति सर्वसिद्धान्तसिद्धम्। यथा मुखं विना भोजनाद्यकरणे शरीररक्षणं सर्वथाऽसम्भवं तथैव व्याकरणं विना वेदपुरुषस्य शरीररक्षणमपि सर्वथाऽसम्भवम्। अत एव व्याकरणादृते न कश्चिदपि वेदाध्ययने समर्थः, न वा शास्त्रान्तरस्य श्रवणेऽधिकार्यपि भवितुं योग्यः। तथा चोक्तं केनचिन्मनीषिणा—

---

१. पात. म.भा., ६।३।१४।

यो वेद वेदवदनं सदनं हि सम्यग्
ब्राह्मयाः स वेदमपि वेद किमन्यशास्त्रम्।
यस्मादतः प्रथममेतदधीत्य धीमान्
शास्त्रान्तरेषु भवति श्रवणाधिकारी।।

इत्थमिदानीं समुपलब्धेषु व्याकरणेषु पाणिनीयं व्याकरणमेव सर्वतोभावेन विजयते। अत्रैतादृशी शब्दनिष्पादनसरणिः समादृता वर्तते, यया सर्वेऽपि शाब्दिकसम्प्रदायाः सर्वथोपकृताः सन्तः सन्तोषमादधानाश्चात्मनः पुण्यशालिनश्चानुभवन्ति। प्रायः चतुःसहस्रेषु सूत्रेषु संस्कृतव्याकरणस्यातिविशिष्टमतिवैज्ञानिकञ्च व्याकरणं प्रस्तूय भगवान् पाणिनिः सर्वाण्यपि प्राक्तनान्यभिनवानि च शाब्दिककुलान्याश्चर्यार्णवे न्यमज्जयत्। अत्र **'न लोकाद् भिद्यते शास्त्रम्'** इति जनश्रुतिमाश्रित्य केचिदिदमाक्षिपन्ति यद् वैदिकशब्दानां लौकिकशब्देभ्योऽभिन्नत्वात्कथं पाणिनिना तेषां पृथगनुशासनं कृतमिति तेषामाक्षेपो न समीचीनः। यतो हि लौकिकशब्देभ्यो भिन्ना अपि वैदिकाः शब्दाः सन्ति, तेषु केचन निदर्शनरूपेणात्र प्रस्तूयन्ते। तद्यथा—

| **लौकिके** | **वैदिके** |
|---|---|
| आत्मना | त्मना |
| जहार | जभार |
| ब्राह्मणाः | ब्राह्मणासः |
| गृह्णामि | गृभ्णामि |
| कर्णैः | कर्णेभिः |

अत एव महाभाष्यकारः पतञ्जलिर्लौकिकेभ्यो वैदिकान् भेदेन व्यपदिशति— "केषां शब्दानाम्? लौकिकानां वैदिकानाञ्च" इति। एवमेतावता विवेचनेन लौकिकवैदिकोभयशब्दानुशासित्वाद् वेदाङ्गेषु पाणिनीयव्याकरणस्यैव प्रामुख्यं माहात्म्यं वैशिष्ट्यञ्च सर्वथा प्रमाणितम्। अत एवास्माभिः सोद्घोषमुच्यते यत् पाणिनिसदृशो भाषामर्मज्ञो लोके न कुत्रापि जातः। एतदर्थकमेवोक्तं पराशरोपपुराणे—

"पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन"[१]।।

इत्यलमधिकेन।

●

१. पराशरोपपुराणम्, अध्या. ८, श्लो. २९

# भाषास्वरूपविमर्शः

**डॉ. सत्यप्रकाशदुबे**
वरिष्ठसहायकाचार्यः, संस्कृतविभागः
जयनारायणव्यासविश्वविद्यालयः, जोधपुरम्

❀ ❀ ❀

## भाषास्वरूपम्

सर्वज्ञानमयो हि वेद इत्यामनन्ति मनीषिणः। तस्यैतस्याभिव्यक्तिसाधनं नाम संस्कृता वाक्, यस्या ज्ञानमन्तरेण वेददुर्गप्रवेश एव दुःशकः।

भाषाभावयोरविच्छिन्नः सम्बन्धो भवति। भावाभिव्यक्तीकरणे भाषाया अनन्यसाधारणं नैजं दायित्वमस्ति। चिरं यावद् व्यवह्रियमाणासु भाषासु काचिदन्यतमैव स्वीयं परिनिष्ठितरूपत्वं प्राप्नोति, यत्र संस्कृतभाषायाः प्रवृत्तिर्वैदिककालादारभ्य समजनीति नाविदितं विदितवेदितव्यानां विद्यावताम्। मन्त्रब्राह्मणोपनिषदां सूत्रग्रन्थानां च भाषया तस्या उत्तरोत्तरं प्रकारवैविध्यवैभवं प्रकटीभवति।

श्रुतयः प्रमाणयन्ति वैदिककालिकं गभीरं चिन्तनम्। ऋग्वेदसंहितायाः प्रथममण्डलान्तर्गते वाचश्चातुर्विध्यमित्थमभिहितमास्ते—

> चत्वारि वाक्परिमिता पदानि
> तानि विदुर्ब्राह्मणा ये मनीषिणः।
> गुहा त्रीणि निहिता नेङ्गयन्ति
> तुरीयं वाचो मनुष्या वदन्ति।।

तत्रैव चतुर्थमण्डलान्तर्गतेऽप्येवंविधो मन्त्रः प्राप्यते यस्य महाभाष्यकारेण भगवता पतञ्जलिना भाषातत्त्वविषयकं विश्लेषणमकारि। यथा—

> चत्वारि शृङ्गा त्रयो अस्य पादा
> द्वे शीर्षे सप्त हस्तासो अस्य।
> त्रिधा बद्धो वृषभो रोरवीति
> महो देवो मर्त्यां आविवेश।।

यथा सक्तुस्तितउना परिपूयते तथा वागपि प्रज्ञानेन = भाषातत्त्वावबोधनेन पूता भवति। एवञ्च यथा सक्तुशोधने तुषाद्यपनीयते तथा भाषापवने अपशब्दादयोऽप्यपनीयन्त इत्यस्ति भाषातत्त्वविदां सम्मतिः।

**भाषाया मौलिको भेदः**

श्रुतिस्वरूपावलोकनेन निश्चीयते पुरायुगीयो भाषाभेदः, अन्या दैवीभाषा अन्या च मानुषीभाषा। यथा हि याज्ञे कर्मणि कृष्णाजिनदीक्षाव्रतविधौ श्रूयते—

'अथ परिह्वालं वाचं वदति न मानुषीं प्रसृतामिति'। अत एव यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परावरज्ञा विदितवेदितव्या अधिगतयाथातथ्याः। ते हि याज्ञे कर्मणि यद्वानस्तद्वान इति संस्कृतामेव वाचमूचिरे न तु जर्वाणस्तर्वाण इत्यसंस्कृताम्, तस्या मानुषीत्वात्।

अयमाशयः— भगवता पतञ्जलिना व्याकरणाध्ययननिरूपणावसरे आनुषङ्गिकप्रयोजनेषु 'तेऽसुरा हेऽलयो हेऽलय इति कुर्वन्तः पराबभूवुः। तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः' इति वैदिकाख्यानं प्रस्तुतीकृतम्। अत्र 'न म्लेच्छितवै' इति पदस्य 'नापभाषितवै' इत्यर्थो दृश्यते यत्र कृत्यप्रत्ययस्यार्थे 'कृत्यार्थे तवैकेन्केत्यत्वनः' इति सूत्रेण 'तवै'प्रत्ययो विधीयते। अतः 'नापभाषितवै' इति कृत्यप्रत्ययदृशा नापभाषितव्यम् = असाधुशब्दप्रयोगो न करणीय इत्यर्थो निष्पद्यते।

वस्तुतो लोके ब्राह्मणेतरो जनः स्वसौविध्येन संस्कृतभाषां प्राकृतभाषां वा व्यवहरतु नाम किन्तु ब्राह्मणजातीयो मनुष्यः सर्वदा संस्कृतभाषामेव व्यवहरेत्। अनवधानतयाऽपि प्रयुक्तोऽसाधुशब्दो दोषायैव कल्पते नाभ्युदयाय।

एवमेव कृष्णाजिनदीक्षाग्रहणप्रसङ्गे 'शर्म्मास्यवधूतं रक्षोवधूता.....' इत्यादि मन्त्रब्राह्मणे 'चर्म्म वा एतत्कृष्णस्य, तदस्य तन्मानुषम्। शर्म्म देवत्रा, तस्मादाह— शर्म्मासी'ति। अत्र शर्म्मशब्दस्य प्रयोगो देवभाषायां चर्म्मशब्दस्य च प्रयोगो मानुषीभाषायां विहितत्वाद् भाषाभेदः स्पष्ट एव।

एवमेवान्यत्रापि श्रूयते—वाचो वा एषा व्यावृत्तिर्दैव्यै च मानुष्यै च यद्धिङ्कारः। स यद्धिङ्कृत्य प्रतिपद्यते, वाचमेव तद् व्यावर्तयति दैवीं च मानुषीं चेति।

वस्तुतो दैव्यां वाचि हिङ्कारः प्रयुज्यते, न तु मानुष्यां तदेतद्धिङ्कारस्य व्यावर्तकत्वम्।

## दैवीमानुषीभाषयोर्भेदः

यद्यपि दैवीमानुषीभेदेन द्विविधा भाषेत्युक्तपूर्वम्, तथापि तत्र देवभाषाशब्देन संस्कृतभाषाशब्देन च तिस्रो भाषा अभिहिता भवन्ति—

प्रथमा श्रुतिषु सम्प्रयुक्ता मन्त्रभाषा, द्वितीया शतपथादिब्राह्मणेषु विलिखिता ब्राह्मणभाषा, तृतीया च सूत्रादिग्रन्थेषु व्यवह्रियमाणा सूत्रभाषेति।

## देवतत्त्वविचारः

अत्र देवभाषास्वरूपविचारे कस्तावद्देवशब्दस्य निष्कृष्टोऽर्थ इति जिज्ञासायां समुपलभ्यन्ते पञ्चविधा देवता वैदिके साहित्ये। ताश्चेमाः सन्ति—ज्योतिष्मत्यः, रोचनावत्यः, विग्रहवत्यः' मान्त्रवार्णिक्यो मनुष्यदेवतारूपाः। यथा हि पण्डित-मधुसूदन-ओझाविरचिते आधिदैविकाध्यायाख्ये ग्रन्थे—तत्र देवताशब्दस्य पञ्चतयी प्रवृत्तिर्दृश्यते— ज्योतिष्मती, रोचनावती, विग्रहवती, मान्त्रवार्णिकी, भूदेवता चेति। सन्ति सर्वजगदुपादानद्रव्यभूता निरिन्द्रिया ज्योतिष्मन्तो द्युमण्डलस्थाना धर्म्मा अग्निसोमेन्द्रसूर्य्यादयः। अथ या एता रोचना दिवि रोचन्ते, तास्वपि कासुचिद् देवशब्दः प्रवर्तते। अथ सन्ति विग्रहवन्तश्चेतनाः प्राणिविशेषा अष्टविकल्पा अष्टाविंशतिवीर्याः सत्त्वविशालसर्गाः। अथ यदुद्देश्येन किञ्चित् क्रियते तत्र कर्मणि सा देवता, यदुद्देश्येन किञ्चिदुच्यते तत्र वाक्ये सा देवता। मन्त्राश्च द्रष्टॄणां वाक्यानि भवन्ति। तस्मादेषु मन्त्रेषु यद्यत्सम्बन्धे स्तुतिनिन्दादयः षट्त्रिंशद्भावाः प्रतिपाद्यन्ते, तेऽर्थास्तत्र तत्र देवतापदेनाभिधीयन्ते। अथेह ये वर्णोत्तमा ब्राह्मणास्ते बहुधा विशिष्यन्ते'' (आधिदैविकाध्यायः, देवताधिकारः, पृ.१)।

## कस्तावद् मनुष्यदेवः

अत्र मनुष्यरूपाणां देवतानां विप्रर्षिदेवब्राह्मणभेदेन चतुर्विधो विभागः पुराकाले कृत आसीदिति ज्ञायते। तत्रापि विप्रो दशविधः। यथा हि भगवानत्रिः —

देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः।
पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः।।

एषां समेषां विभागे विद्याकर्मण एव प्राधान्यमस्ति। वस्तुतः शास्त्रोक्त-कर्मानुष्ठानेन जायमानेन संस्कारविशेषेण यजमानस्याऽऽत्मा दैवरूपत्वं प्राप्नोति। यथा हि भगवती श्रुतिः —

'दैवो वा अस्य स आत्मा, मानुषोऽयममृतं वास्य तद्रूपं देवरूपम्, मानुषं ह्यस्येदं रूपम्। स यदमुमेवोपदध्याद् नेमामपशिष्यात् क्षिप्रे हास्माल्लोकाद् यजमानः प्रेयाद्'।

इत्थं दैवात्मभावसम्पन्ना मनीषिणः शुश्रुवांसोऽनूचानाश्च विद्वांस एव देवा इत्याख्यायन्ते श्रुतिषु। यथा हि—

''सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम। दिवं पृथिव्या अध्यारुहामाविदाम देवान् स्वर्ज्योतिः''। तथा च—

'द्वया वै देवाः। देवा अहैव देवाः। अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः'। अतस्तेषामेषां मनुष्यदेवानां संव्यवहारे या वाक् प्रयुज्यते सा दैवी वाग् देवभाषेति सिद्ध्यति।

## तिस्रोऽपि देवभाषा न वा

इत्थमासां मन्त्रब्राह्मणसूत्रादितिसृणामपि भाषाणां याज्ञे कर्मणि मन्त्रैः प्रेषैः परिकर्मसमादेशैश्च समुद्योगत्वाद् इमास्तिस्रोऽपि देवभाषाकोटौ परिगण्यन्ते। वैयाकरणा अत्र सर्वत्र पदसमाससन्धिविकारादिनियमानपि यथायथमनुवर्तयन्ति, प्रातिशाख्यकाराः सन्धिसमासादिविषये 'स्वरसंस्कारयोश्छन्दसि नियमः' इत्यादि-सूत्रमधिकृत्य तत्र संस्कारशब्दं व्यपदिशन्ति। अतो विभिन्नसंस्कारयोगादेवैतास्तिस्रः संस्कृतभाषाः सन्ति।

अत्रेदं जिज्ञासते यद् यदा देवभाषात्वेन संस्कृतभाषात्वेनाऽऽसां सर्वासां भाषाणामैक्यं सिद्ध्यति तदा भाषात्रित्वसंरचना युक्तियुक्ता न वेत्यत्र समाधत्ते यद् मन्त्रभाषाब्राह्मणभाषयोर्भेदस्यातिसूक्ष्मत्वाद् दुरुपपादत्वेऽपि तृतीयायाः सूत्रभाषाया भेदस्तु नाम मातृकोच्चारणादिभेदात् स्पष्ट एवास्ति। अत एव निरुक्तकारो यास्को मन्त्रब्राह्मणभाषयोरध्यायशब्देन भगवान् पाणिनिश्च छन्दश्शब्देनोपदेशं कुरुतः। एवमेव सूत्रभाषाविषये तौ भाषाशब्दं व्यवहरतः। अत्र मन्त्रब्राह्मणयोरध्यायशब्देन व्यवहृतेऽप्युपचारभेदस्तु वर्तत एव। यथा ब्राह्मणभाषायां वाक्यारम्भपदं वैपदोत्तरं प्रयुज्यते, न तथा सूत्रभाषायाम्। उदाहरणरूपेण—

सं नो देवो वसुभिरग्निः सं सोमस्तनुभी रुद्रियाभिः।
समिन्द्रो मरुद्भिर्यज्ञियैः समादित्यैर्नो वरुणो अजिज्ञपत्।।

इत्यत्र 'सम्' इत्युपसर्गस्य प्रयोगः क्रियया विरहितः, अतः सोपसर्ग-क्रियापदस्यावृत्तिदशायामादिभूतस्य 'सम्' इत्युपसर्गमात्रस्यावृत्तिः क्रियते, न तु सोप- सर्गक्रियापदस्य। सूत्रभाषायां विभक्तिषु देवा देवौ देवाः देवास इति चत्वारि रूपाणि भवन्ति। आख्यातान्तर्गताः 'भवाति, भवात्, भविषत्, भविषात्' इत्यादयो लेट्लकारसम्बन्धिप्रयोगाः सूत्रभाषायां न प्रयुज्यन्ते। यथा हि वैयाकरण-सिद्धान्तकौमुदीकारो भट्टोजिदीक्षितः —

तत्रादौ दश लकाराः प्रदर्श्यन्ते—लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ्। एषु पञ्चमो लकारश्छन्दोमात्रगोचरः। मन्त्रभाषाया नियमनमुदात्तादि-स्वरैरेव भवति, सूत्रभाषायास्तु कामचारेणेति।

### दैवीत्वमानुषीत्वभाषयोः स्वरूपम्

इत्थं मन्त्रब्राह्मणसूत्रभाषाणां भेददशायां प्रश्नोऽयं समुदेति यत् किमासां सर्वासामेव भाषाणां देवभाषात्वं स्वीकृत्य शास्त्रभाषात्वमास्थाय तासां लोकभाषात्वस्य प्रत्याख्यानं भवेदथवा कस्याश्चिदप्येकस्या एव भाषायाः प्रत्याख्यानं युक्तियुक्तम्? सर्वासां भाषाणां प्रत्याख्याने मानुषीभाषायाः किं भविष्यतीति शङ्का भवति। कालक्रमेण लुप्ता सेति कथने यथा सर्वासां भाषाणां प्रकृतिविकृतिभावो दृश्यते तथैव तस्या अपि यथाकथमपि स्वरूपोऽवशिष्टो भवेत्; किन्तु स्वरूपाभावान्निश्चीयते यन्नासीत् काचिदन्या मानुषीभाषेति।

एवमेव यथा 'शर्म्मे'ति प्रयोगो दैवीभाषायां 'चर्म्मे'ति शब्दप्रयोगश्च मानुषीभाषायाम्। नेत्युपमार्थीयोऽपि दैवीभाषायां प्रतिषेधार्थीयो च मानुष्यां भाषायां भवति। अत एतैर्निदर्शनैरिदं ज्ञायते यन्नूनमेव नासीत् काचिदन्या मानुषीभाषेति। अत आस्वेव तिसृषु भाषासु एकस्या देवभाषात्वमन्यस्याश्च मानुषीत्वमिति निश्चेयम्।

पुनरत्रेयं शङ्कोदेति यत् पूर्वोक्तासु तिसृषु भाषास्वेकस्या दैवीत्वमपरस्याश्च मानुषीत्वमिति निर्णये जाते कस्या दैवीत्वं कस्याश्च मानुषीत्वमित्यत्र वेदविज्ञान-विचक्षणानां पण्डितमधुसूदन-ओझामहोदयानां सम्मतिः —

श्रुतिपठिताभ्यां दैवीमानुषीशब्दाभ्यां मन्त्रभाषाब्राह्मणभाषयोर्विवक्षाऽस्तीति प्रतिजानीमः। मन्त्रविद्यानामृग्यजुःसाम्नां दैवपदार्थतया तत्सम्बन्धेन मन्त्रभाषाया एव दैवीत्वेनोपपत्तेः। एवञ्च ऋगादिव्यपदेशमलब्धायास्तु प्रचलिताया ब्राह्मणभाषाया मानुषीत्वं वक्तुं युज्यते। यथा हि भगवती श्रुतिः —

तस्य वा एतस्याग्नेर्वागेवोपनिषत्। वाचा हि चीयते—ऋचा यजुषा साम्नेति तु दैव्या। अथ यन्मानुष्या वाचाऽऽह—इतीदं कुरुतेदं कुरुतेति तदु ह तया चीयते...। सा वा एषा वाक् त्रेधा विहिता ऋचो यजूंषि सामानि। तेनाग्निस्त्रेधा विहितः[१]। अस्मिन् ब्राह्मणे दैव्या मानुष्या च वाचा चयनं निदर्शयन्ती श्रुतिः ऋग्यजुस्सामात्मिकाया मन्त्रभाषाया दैवीत्वमितरस्याश्च लोकप्रचरिताया: ऋत्विजां ब्राह्मणानां व्यावहारिक्या मातृभाषाया मानुषीत्वं प्रतिपादयति। अतो ब्राह्मणभाषैव मानुषी-भाषा स्यादिति सिद्ध्यति।

एवमेव 'अग्नेस्तनूरसि वाचो विसर्जनमि'ति मन्त्रब्राह्मणे श्रूयते—

'यां वा अमूं हविर्ग्रहीष्यन् वाचं यच्छति अत्र वै तां विसृजते। स यदिदं पुरा मानुषीं वाचं व्याहरेत् तत्र वैष्णवीमृचं वा यजुर्वा जपेत्। तस्य हैषा प्रायश्चितिः' इति।

अयमाशयः—प्रणीता याज्ञे कर्मणि प्रणयनादूर्ध्वमाहविष्कृदुद्वादनान्मानुष्या वाचा भाषणं प्रतिषिध्यते। ततो हविष्करणसमये जायामन्यं वा हविष्कृतमाह्वयति तत्र हविष्कृदेहि इति मानुषीं वाचमुक्त्वा तदूर्ध्वं यथेच्छं मानुष्या व्याहरति। अतो हविष्कृदेहीति ब्राह्मणभाषा भवति। यथा हि आपस्तम्बश्रौतसूत्रे—

तानि वा एतानि चत्वारि वाचः। एहीति ब्राह्मणस्य, आगहि आद्रवेति वैश्यस्य राजन्यबन्धोश्च। आधावेति शूद्रस्येति।

'ऋषयो मन्त्रद्रष्टारः' इति वचनाद् यथा अतिपुरातन्यां मन्त्रभाषायां दैवीत्वप्रयोजका दैवसंस्कारा उपलभ्यन्ते, ते वस्तुतः सर्वास्वेव लोकप्रचरितासु भाषासु यथेच्छं स्वीकर्तुं शक्यन्ते; किन्तु ऋग्वेदस्य दशममण्डलान्तर्गते उपलभ्यत एका विलक्षणैव भाषा या दैवीत्वसंस्काराराहित्याद् मन्त्रभाषातिरिक्तैवास्ति। यथा—

सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु।।
पज्रेव चर्चरं जारं मरायु क्षद्मेवार्थेषु तर्तरीथ उग्रा।
ऋभूनापत् खरमज्रा खरज्रुर्वायुर्न पर्फरत् क्षयद्रयीणाम्।।
धर्म्मेव मधु जठरे सनेरू भगेविता तुर्फरी फारिवारम्।
पतरेव चचरा चन्द्रनिर्णिङ् मनऋङ्गामनन्या३ न जग्मी[२]।।

१. शतपथब्राह्मणम्-१०।४।२-५।
२. ऋग्वेदः-१०।१०६।६-८।

अस्मिन् सूक्ते मदेरू सनेरू उष्ठारा चचरा पतरा आङ्गरगा कीनारा फारिवा खरमज्ञादयोऽनेके शब्दा दृश्यन्ते येषामन्यत्रोपलब्धिर्नास्ति, अनुपलब्धिश्च दैवसंस्काराभावात्। अतः सिद्ध्यतीदं यद् या भाषाः ऋक्त्वादयो देवसंस्कारयुक्तास्ता एव संस्कृतत्वेन मन्त्रत्वेन दैवीत्वेन च परिगणिता भवन्ति, नान्या भाषाः। अतो ज्ञायते यद्देवभाषा-संस्कृतभाषा-मन्त्रभाषेति च काचिद् भाषाविशेषैव।

## पण्डितमधुसूदन-ओझासम्मतिः

सर्वमिदमनुशील्य वेदविज्ञपण्डितश्री-ओझामहोदयेनेदं प्रतिपादितं यद् देवभाषास्वरूपनिर्वचनसौकर्याय मन्त्रभाषाब्राह्मणभाषासूत्रभाषेति भाषात्रैविध्यं प्रदर्शितं तत्र मन्त्राणां ब्राह्मणानाञ्च मन्त्रब्राह्मणयोर्वेदनामधेयमित्यापस्तम्बश्रौतसूत्रवचनाद् भाषाभेदोपपादकधर्म्मानुपलब्ध्येदानीं भाषाद्वैविध्यमेवावसीयते। यतो मन्त्रब्राह्मणयोः पथ्यास्वस्तिः छन्दोऽध्यायेति नाम्ना व्यवहारः प्राचीनकालादेव दृश्यते। यदि मन्त्रब्राह्मणयोर्भिन्ने भाषे स्याताम्, तर्हि तयोर्भेदेनावश्यं व्यवहाराय भिन्ने नामनी निरदेक्ष्येताम्[१]।

## छन्दोभाषाया एव लोकभाषात्वं मानुषीत्वं वा

अस्याश्च छन्दोभाषाया एव मानुषीत्वमपि वर्तते। आंशिकरूपेण कतिपयीनां वाचां संस्कृतत्वाद् दैवीत्वेऽपि मन्त्रत्वेन छन्दोभाषाया पृथग्व्यवहारेऽपि तस्या लोकभाषात्वे नास्ति हानिः। श्रूयते हीदानीं वङ्गादिप्रचलितलोकभाषासु मन्त्रांशः। तथापि न दृश्यते मन्त्राणां भाषान्तरत्वं वङ्गादिभाषायां वा लोकभाषात्वाभावः। एवमेव छन्दोभाषायां मन्त्राणां विद्यमानत्वेऽपि तस्या मानुषीत्वं न व्याहन्यते।

अस्यां छन्दोभाषायां प्रणीतानि सङ्कलितानि च शास्त्राणि श्रूयन्ते। यथा हि आथर्वणे—

"इमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणा सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः ससंस्काराः सानुमार्जनाः सवाकोवाक्याः"।

एवमेव 'ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या, उपनिषदः, श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि—अस्यैतानि सर्वाणि

---

१. वेदधर्म्मव्याख्यानम्–चतुर्थो भागः, पण्डितमधुसूदन-ओझा, पण्डितमधुसूदन-ओझाशोध-प्रकोष्ठः, संस्कृतविभागः, जयनारायणव्यासविश्वविद्यालयः, जोधपुरम्।

निःश्वसितानि। स यथा सर्वासामपां समुद्र एकायनमेवं सर्वासां विद्यानां वागेकायनम्'[१]। बृहदारण्यकोपनिषद्यपि च—

'ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहास-पुराणः पञ्चमो वेदानां वेदः, पित्र्यो राशिः, दैवो निधिः, वाको वाक्यमेकायनम्, देवविद्या, ब्रह्मविद्या, भूतविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्वदेवजनविद्य'[२]।

**छन्दोभाषाया एव सूत्रभाषात्वम्**

कापि भाषा चिरस्थायिनी नास्ति अपि तु तत्र प्रकृतिविकृतिभावः कालक्रमेण दृश्यते। अत एव सा अन्यामन्यां भाषामुत्पाद्य स्वयं लुप्यतेति निसर्गः। सेयं छन्दोभाषाऽपि लोकव्यवहाराद् व्यावर्तयन्ती स्वां भाषान्तरमुदपादयत्। तामेतां सूत्रभाषेत्याचक्ष्महे। अस्याः सूत्रभाषाया व्यवहारकाले सा छन्दोभाषा शास्त्रमात्रे प्रतिष्ठिताऽभूत्। अत एव तस्या निगमाऽध्यायनाम्ना प्रसिद्धिर्जाता। सूत्रभाषायाश्च लोकभाषात्वादेव पाणिन्यादिकाले तस्या भाषाशब्देनैव व्यवहार आसीत्। अत एव वृत्तिकारभाष्यकारौ शब्दार्थसम्बन्धस्य लोकतः सिद्धिं ब्रुवाणौ 'सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्म्मनियमो लौकिकवैदिकेष्वि'ति[३]। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति वचनमपि तस्या लोकभाषात्वं प्रतिपादयतः। एवमेव निरुक्तकारोऽपि—'अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते-दमूनाः क्षेत्रसाधाः। अथापि नैगमेभ्यो भाषिकाः— उष्णं घृतमिति। अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु—शवतिर्गतिकर्म्मा कम्बोजेष्वेव भाष्यते विकारमस्यार्थेषु शव इति। दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येष्विति'[४]।

अस्याः सूत्रभाषायाः छन्दोभाषात एव प्रभवत्वादस्या अपीदानीं संस्कृत-भाषाशब्देन देवभाषाशब्देन चोपचारो लक्षणयोपपद्यते।

इत्थं निष्कर्षतः प्रतिपादयितुं शक्यते यत्—

१. दैवीमानुषीभेदेन भाषाया द्वैविध्यम्।

२. तत्र देवताः पञ्चविधाः— ज्योतिष्मत्यः, रोचनावत्यः, विग्रहवत्यः, मान्त्रवार्णिक्यः, मनुष्यदेवताश्च।

---

१. गोपथब्राह्मणम्-१।२।१०।
२. बृहदारण्यकोपनिषद्-२।४।७।
३. व्याकरणमहाभाष्यम्, पस्पशाह्निकम्।
४. निरुक्तम्-२।१।२।

३. तत्र दैवात्मभावसम्पन्नाः शुश्रुवांसोऽनूचाना मनुष्यदेवाः। तेषां संव्यवहारे प्रयुज्यमाना भाषा देवभाषा। एवमृग्यजुस्सामात्मकदैवसंस्कारसम्पन्ना भाषा देवभाषा।

४. त्रिविधा देवभाषा—मन्त्रभाषा, ब्राह्मणभाषा, सूत्रभाषा च।

५. मन्त्रब्राह्मणयोर्वेदनामधेयमिति वचनेन मन्त्रभाषाब्राह्मणभाषयोः पथ्यास्वस्तिः छन्दोऽध्यायेति नामभिः प्रसिद्धत्वाद् मन्त्रब्राह्मणभाषयोरैक्यम्। एतस्याः छन्दोभाषेति नाम्ना व्यवहारः।

६. सूत्रभाषायाः छन्दोभाषात एव जायमानत्वात्तस्या अपि लक्षणया संस्कृतभाषाशब्देन देवभाषाशब्देन च व्यवहारः।

७. अतो मूलतः छन्दोभाषैव देवभाषा तद्विकारित्वात् सूत्रभाषा देवभाषा लोकभाषा चेति सिद्ध्यतीति।

●

# शब्दार्थविचारः

**डॉ. वृजकिशोरत्रिपाठी**
प्रवक्ता, संस्कृतस्य,
पं.रा.ल.शु.राजकीयस्नातकोत्तरमहाविद्यालये
फतेहपुरम्, आलापुरम्, अम्बेडकरनगरम्

❀ ❀ ❀

अभिन्नां भिन्नरूपाणि दधानां ताञ्चिदात्मिकाम्।
यदभिन्नजगज्जन्म जायते जननीं नुमः।।१।।

पदार्थः सामान्यं जगदुरपरे व्यक्तिरिति वा
विशिष्टायां व्यक्तौ च पदसमयोऽन्यैरभिहितः।
अपोहश्शब्दार्थो भवति सुगतानामभिमतौ
विचारस्तत्कार्यस्तदधिगतये तत्त्वमिति किम्।।२।।

हरिवृषभवचःपयोधिमग्नं निखिलं वाक्यपदीयरत्नजालम्।
उदनयदवमज्ज्य या प्रयत्नान्नु सा धीः गतिरस्तु मे गुरूणाम्।।३।।

अथातो शब्दार्थजिज्ञासा। तत्र "प्रत्यक्षानुमानोपमानशब्दाश्चे'ति चत्वारि प्रमाणानि इत्यस्ति दार्शनिकानामभ्युपगमः। ये च एभ्यो न्यूनसंख्याकान्य-धिकसंख्याकानि वा प्रमाणान्युरीकुर्वन्ति, तेऽपि शब्दार्थबोधस्तु भवत्येवेति मन्वते, तस्य पृथक् प्रमाणत्वं स्वीकुर्वन्तु, अन्येषु वा केषुचिदन्तर्भाव इति नास्त्ययं विषयः प्रकृतस्य। एवमनभ्युपगमेऽपि शब्दस्य प्रमाणत्वे तस्य शब्दार्थबोधायो-पयोगित्वमक्षतमेव। तत्र शाब्दबोधे पदजन्यपदार्थोपस्थितिः कारणम्। यथोक्तम्—

पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी।।

(मुक्तावल्यां शब्दखण्डे, का. ८१)

अत्र जिज्ञास्यते कोऽयं शब्दार्थः (पदार्थः)? यो हि वृत्त्या पदादुपस्थितः सन् शाब्दबोधे कारणतामेति। शब्दार्थे विभिन्नानां दार्शनिकानां मतानि सन्ति तानि ह्यत्रोपस्थाप्यन्ते। यतो हि—

प्रज्ञाविवेकं लभते भिन्नैरागमदर्शनैः।
कियद्वा शक्यमुन्नेतुं स्वतर्कमनुधावता।। (वा.प. २।४८४)

ततश्च स्वसिद्धान्तमेव सम्परिष्कर्तुं भिन्नागमदर्शनैः सामर्थ्यं स्वसिद्धान्तनिर्णयानुगुणं जायत इति निस्सन्दिग्धम्।

अत्र शब्दार्थविचारे जातिशक्तिवादः, व्यक्तिशक्तिवादः, विशिष्टशक्तिवादश्चेति त्रयः पक्षाः सम्भाव्यन्ते बौद्धाभिमतापोहवादादृते। तत्र जातिवादस्यायमभिप्रायो यदेकस्य घटपदस्य सर्वे घटा अर्थाः। व्यक्तिशक्तिवादस्यायमभिप्रायोऽस्ति यदेकस्य घटादिपदस्य एक एव घटोऽर्थ इति मनस्यवधातव्यम्। तत्रानेके दार्शनिकाः स्वबुद्ध्या जातिरूपं व्यक्तिरूपं विशिष्टं वाऽर्थमभिलषन्ति। यो ह्यत्र विचारपथमवतरिष्यति साधकबाधकयुक्त्या।

तत्र जातिरेव शब्दार्थ इति मीमांसकाः। व्यक्तिरेवेति वैयाकरणो व्याडिः। "जात्याकृतिव्यक्तयः पदार्थः" इति गौतमीयसूत्रानुसारेण जातिविशिष्टा व्यक्तिरिति नैयायिकाः। उपाधिरेव शब्दार्थ इति वाग्देवतावतारो मम्मटाचार्यः। अतद्व्यावृत्तिरूपोऽपोहो वा शब्दार्थ इति सौगताः। "सर्वपारिषदं हीदं व्याकरणम्" इति धिया क्वचिज्जातिरेव क्वचिद्व्यक्तिरेव वा अथवा 'उभयोरुभयार्थ' इति महाभाष्योक्त्या जातिव्यक्ती पदार्थाविति मन्वते वैयाकरणाः।

## जातिवादः

### मीमांसकमतम्

शक्तिग्राहकशिरोमणिना व्यवहारेण व्यक्तावेव शक्तिग्रहेऽप्यानन्त्यात्तावतीषु शक्तिग्रहासम्भवात्तत्तदाश्रयभेदभिन्ननानाशक्तिकल्पने गौरवाच्च पश्चाज्जातावेव शक्तिर्निर्धार्यत इति जातिरेव शब्दार्थ इति मीमांसकाः। "विशेष्यं नाऽभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति न्यायाज्जातावेव शक्तिरिति पर्यवसितम्। जातेः पदार्थत्वे मानं तु "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" (पा.सू. १।२।५९) इति सूत्रम्, तथा अणुदित्सूत्रे "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्सिद्धम्" इति वार्तिकम्, "आकृतिं वाजप्यायन" इति सरूपसूत्रस्थं भाष्यञ्च। एतस्यैव व्याकरणशास्त्रे "स्वार्थं द्रव्यञ्चेति" कारिकायां स्वार्थपदेन व्यवहारः।

अस्यामभ्युपगतौ युक्तिश्चाहुस्तथा हि एकव्यक्तिविषयकशक्तिज्ञानादपरव्यक्ति-विषयकशाब्दबोधाभ्युपगमे तु गोव्यक्तिविषयकशक्तिज्ञानादश्वविषयकशाब्दबोधापत्त्या तद्व्यक्तिविषयकशक्तिज्ञानस्य तद्व्यक्तिविषयकबोधे हेतुतया अवश्यकल्पतयैक-विषयकज्ञानादपरव्यक्तिबोधानुदयापत्त्या सकलव्यक्तिभानार्थं तावतीषु व्यक्तिषु शक्तिकल्पनायां गौरवस्य स्फुटतया जातावेव शक्तिकल्पनोचिता। यद्यपि 'गौर्गोपदशक्यः' इति शक्तिग्रहो व्यक्तिविषयकोऽपि, तथापि ''सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधः'' इति न्यायेन जातावेव शक्तिः। सा च पदार्थः। यतो जातिविशेष्यक एव शक्तिग्रहो 'गौर्गोपदशक्य' इति जातिशक्तिवाद एवमेवाभिलापात्।

तत्र मीमांसकैर्लाघवाज्जातावेव पदार्थत्वे स्वीकृतेऽपि व्यक्तिभानायापि कश्चन प्रकारः समुपपादितः। यथा— शब्दस्य शक्यो जातिरेव व्यक्तेर्भानन्तु आक्षेपेणानुमानेन लक्षणया वा। तत्राक्षेपो द्विविधः। तुल्यवित्तिवेद्यत्वरूपः, यो हि प्रभाकरेणाभ्युपगम्यते। अन्यथाऽनुपपत्त्या वा, यस्यामस्ति श्रीकरस्य स्वीकृतिः। अत्रानुमानेन व्यक्तिज्ञानमिति कुमारिलभट्टः। जातेः शक्त्या व्यक्तेर्लक्षणयेति च मण्डनमिश्रः।

अत्रोच्यते— शब्दाच्छक्त्या जातेर्भानं व्यक्तेस्तु प्रकारान्तरेणेति यदुक्तं मीमांसकैस्तन्न क्षोदक्षमम्। यतो हि श्रुते शब्दे जातिव्यक्त्योर्भानं युगपदेव जायते, न तु कालान्तरेण प्रक्रियान्तरेण वा, अत एकस्यां जातावेव शक्तिः, न व्यक्तावित्यत्र कथं दुरभिमानः। न च ''अनन्यलभ्यो हि शब्दार्थः'' इति न्यायेन व्यक्तेरन्यलब्धत्वान्न शक्यतेति वाच्यम्, अन्यलभ्यत्वप्रकारस्यासमीचीनत्वात्। तथा ह्याक्षेपो तुल्यवित्तिवेद्यः, अर्थापत्तिरूपश्चेति। उपपादकज्ञानेनोपपाद्यकल्पनमर्थापत्तिः। साऽपि द्विविधा। श्रुतार्थापत्तिर्दृष्टार्थापत्तिश्चेति। श्रुतस्यार्थस्यापत्तिः, श्रुतेन शब्देन अर्थस्यापत्तिरिति वा यथा पिण्डीमित्युच्यमाने सति भुङ्क्ष्व इति स्वानुकूलां क्रियामाक्षिपति। दृष्टार्थापत्तिर्यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र दृष्टार्थस्य पीनस्यान्यथानुपपत्त्या रात्रिभोजनं कल्प्यते। येन विना यदनुपपन्नं तत्तत्रोपपाद्यम्। यस्याभावे यस्यानुपपत्तिस्तत्तत्रोपपादकम्। यथा रात्रिभोजनेन विना दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृशी पीनत्वोपपत्तिरिति रात्रिभोजनमुपपादकम्। प्रकृते च जातिज्ञानं व्यक्तिज्ञानमाक्षिपति। अत्रोपपादकज्ञानं जातिज्ञानमुपपाद्यज्ञानञ्च व्यक्तिज्ञानमिति। व्यापकज्ञानेन व्याप्यज्ञानमाक्षिप्यत एष नियमः। यथा 'पीनो देवदत्तः' इत्यादिस्थले रात्रिभोर्जनादिरूपोपपादकाभावस्य व्यापकाभावो

दिवाऽभुञ्जानत्वसमानाधिकरणपीनत्वादिरूपोपपाद्याभावस्य व्याप्याभावो रात्रिभोजनाद्यभावस्तत्प्रतियोगित्वज्ञानं व्याप्यज्ञानमाक्षिप्यते। न चैतदत्र। यतो हि— व्यक्तिबोधं विनापि जातिशक्तिज्ञानं भवत्येव। न हि जातिशक्तिज्ञानं व्यक्तिशक्तिज्ञानं विना न भवितुमर्हति। व्यक्तिसत्तां विना न जातिसत्ता किन्तु न तयोर्ज्ञाने तथा। एवं व्यक्तेरर्थापत्त्या ज्ञानं न कर्त्तुं पार्यते, पूर्वोक्तानुपपत्ते:। तुल्यवित्तिवेद्यत्वरूपेणाक्षेपेण व्यक्तिज्ञानमिति प्राभाकरमतमपि न युक्तम्। यतो हि— वित्तिर्ज्ञानम्। वेद्यं विषय:। तुल्या = एकेन वित्त्या = ज्ञानेन वेद्यो य: स:। तस्य भावस्तत्त्वम्, अर्थादेकज्ञानविषयत्वं तुल्यवित्तिवेद्यत्वम्। एकज्ञानेन यदि व्यक्तिजात्योर्ज्ञानं तदा तुल्यवित्तिवेद्यत्वं स्यात्। यथा जात्यवच्छिन्नायां व्यक्तौ शक्तिमभिमन्यमानानां मते 'घट' इत्युक्ते जातिर्व्यक्तिश्च विषयीक्रियेते, तदा तयोस्तुल्यवित्तिवेद्यत्वम्। न तथात्र जातिमात्रे शक्तिमभ्युपगृह्णतां मते। अतो न तयोस्तुल्यवित्तिवेद्यत्वम्। कुमारिलमतेनानुमानेनापि न व्यक्तेर्भानम्। अनुमानेन जातिरूपेण हेतुना न व्यक्तिभानम्, व्याप्त्यसिद्धे:। जातावेव शक्तिं स्वीकर्तॄणां मते व्यक्तौ शक्तेरभावाद् व्यक्तिजात्योस्सामानाधिकरण्याभावान्न व्याप्यव्यापकभावरूपा व्याप्ति:। यया विना नानुमानं न च व्यक्तेरनुमितिरिति। तादात्म्यसम्बन्धेन व्याप्तेरभ्युपगमेऽपि व्यक्तेरपदार्थत्वे विभक्त्यर्थं संख्याकर्मत्वादेर्व्यक्तावन्वय:। सुब्विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्ते:।

मण्डनमिश्रमते लक्षणयापि न व्यक्तिबोध:। तथा हि— जाते: शक्त्या व्यक्ते: स्वशक्यगोत्वाश्रयत्वसम्बन्धरूपेण ज्ञानं भवतीति मिश्र:। तथा च पदवृत्तिजन्योपस्थितेरेव शाब्दबोधे हेतुतया व्यक्तेरशक्यत्वेऽपि लक्षणावृत्त्युपस्थितायां तस्यां न शाब्दबोधानापत्तिस्तस्या:, न च कर्मवैगुण्यमपि। तत्र पदेन पदार्थस्य सम्बन्ध: शक्ति:। शक्यसम्बन्धरूपा लक्षणा तु पदार्थयो: सम्बन्ध:। तदपि न रुचिकरम्, बहुदोषग्रस्तत्वात्। तथा हि—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्यार्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया।। (काव्यप्रकाश:)

इति कारिकोक्तनियमाद् मुख्यार्थबाध एव लक्षणा भवति। न चात्र मुख्यार्थबाध:। 'गामानये'त्यादौ गोत्वजातेरानयनान्वयानुपपत्त्या गोपदस्य गवि लक्षणास्वीकारेऽपि गौरस्तीत्यादौ गोत्वजातेरस्तीत्याद्यन्वयानुपपत्तेर्लक्षणाबीजस्याभावेन लक्षणाया: स्वीकर्तुमशक्यत्वात्। अतो न लक्षणा भवितुमर्हति। ननु 'काकेभ्यो दधि रक्ष्यतामि'त्यत्र तात्पर्यानुपपत्तिरेव लक्षणाबीजं स्वीक्रियते यथा तथाऽत्रापि

तात्पर्यानुपपत्तितो लक्षणा सेत्स्यतीति। न च युगपद्वृत्तिद्वयविरोध इति वाच्यम्, सति तात्पर्ये "गङ्गायां मीनघोषौ स्तः" इत्यत्र वृत्तिद्वयस्य सर्वैरेवाभ्युपगमात्। युगपद्वृत्तिद्वयविरोधस्य न्यायस्तु युगपच्छक्तितात्पर्याऽविषये लक्षणा च नेत्येवंपर इति न तद्विरोधः। अत्रोच्यते—व्यक्तिवादिनां मते व्यक्तौ शक्तिस्वीकारादेव तात्पर्योपपत्तेः क्व तात्पर्यानुपपत्तिः।

अत्र केचिज्जातिवादमेवमुपपादयामासुः। तथा हि मास्तु व्यक्तेर्भानं शक्त्या लक्षणया वा; आनयनादिक्रिया केवलायां जातावसम्भवन्ती व्यक्तिसाहित्येन निष्पाद्यते। तदुक्तं "तद्धितार्थे" (पा.सू. २।१।५१) सूत्रे भाष्ये "आकृतावालम्भनादीनां सम्भवो नास्तीति कृत्वा तत्सहचरिते द्रव्ये भविष्यति। यथाऽग्निरानीयतामित्युक्ते केवलस्याग्नेरानयनासम्भवादचोदितमपि पात्रमानीयते। एतदेवाग्नेरानयनं यत्पात्रस्थस्य, तथाऽऽकृतावालम्भनादीनि चोद्यमानानि सामर्थ्यात् साहचर्य्याद् द्रव्येऽभिनिविशन्ते। सर्व एवाकृतेर्योगोऽन्तर्भावितद्रव्याया इति द्रव्यद्वारकः सम्बन्धः सम्पद्यते" इति सरूपसूत्रस्थे भाष्ये स्फुटोऽयमर्थः। हरिरप्याह—"व्यक्तौ कार्याणि संसृष्टा जातिस्तु प्रतिपद्यते" इति। एतदपि मतं जात्या व्यक्त्याक्षेपे पर्यवस्यति, यो हि पूर्वमेव दूषितम्। किञ्चापदार्थे व्यक्तौ सत्यां तस्य शाब्दबोधानापत्तिः। किञ्च जातौ शक्तिरित्यभ्युपगमे गोत्वस्य सावच्छिन्ना शक्तिर्निरवच्छिन्ना वा। नाद्यः, गोत्वस्य गोत्वत्वविशिष्टबोधापत्तेः। गोत्वशक्तिग्रहस्य तद्विशिष्टबोधौपयिकस्य सत्त्वात्। तस्य गोत्वत्वस्य शक्यतावच्छेदकरूपत्वेन भानम्, तच्च न सुशकम्, तस्य 'गवेतरावृत्तित्वे सति सकलगोसमवेतत्वरूपत्वात्। अत्र गवेतरे सकलजगतः प्रवेशात्तस्य ज्ञानमल्पप्रज्ञानां कृते असाध्यत्वात्। नान्त्यः, यदि च गोत्वे निरवच्छिन्नैव शक्तिः, गोपदं गौरित्याकारकं शक्तिसम्बन्धेन गोत्वप्रकारकं गोपदत्वविशिष्टविषयकं शक्तिज्ञानं गोत्वविशिष्टबोधहेतुरिति नोक्तबोधकाले शाब्दबोधापत्तिरिति विभाव्यते, तदापि कदाचित् समवायेन गोत्वविशिष्टबोधः, कदाचित् कालिकादिसम्बन्धेनेति व्यवस्थानुपपत्तिः। गोत्वविषयकशक्ति-ज्ञानस्याविशिष्टत्वात्।

**बौद्धानामपोहवादः**

शब्दार्थविचारे बौद्धै'रपोहवादः' स्वीकृतः। अन्यापोह एवापोहपदेन सङ्क्षेपतो व्यवह्रियते। अपोह्यते = इतरस्माद् व्यावर्तत इत्यपोहः = इतरव्यावृत्तिः।

नायाति न च तत्रासीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः।। इति।

तथा च 'गौरि'ति शब्दोच्चारिते गोभिन्नं यत्, तस्माद् अन्यतमव्यक्तिरेव पर्यवस्यति। नैयायिकास्तावदेवं मन्यन्ते—सास्नादिमान् बाह्यो गोत्वविशिष्ट-गोव्यक्तिरेव शब्दार्थ:। अत्र सौगता एवं प्रत्यवतिष्ठन्ते—गोशब्दश्रवणानन्तरं पदार्थबोधकाले कश्चिद् बाह्य: सन् गोव्यक्तिविशेषोऽवश्यमेव तत्र स्यादिति न नियम:। तद्देशे तत्कालेऽसत्यामपि गोव्यक्तौ गोशब्दार्थबोधो जायत इति नात्र काचिद्विप्रतिपत्ति:। अर्थस्तु स्वलक्षण एव। स एव सन्। अपरस्तु विकल्पात्मक:। शब्देन सहास्य स्वलक्षणस्य सम्बन्धो न सम्भवति। स्वलक्षणं विनैव शब्दोऽर्थं प्रकाशयति। ननु सोऽर्थोऽत्यन्तविलक्षण: स्वलक्षणरूपो नो चेत् किं रूप:? स तु विकल्पात्मको विकल्पेनैव जात:। मनसा निर्मितो मानस एव।

अत्र प्रश्नोऽयं समुदेति—उक्तप्रकारेण शब्दार्थे स्वीकृते सति व्यवहारलोपप्रसङ्ग: स्यात्। तथा च 'गामानय' इति वाक्यश्रवणानन्तरं श्रोतुर्गवानयने प्रवृत्तिर्जायते। काञ्चिद् गोव्यक्तिमेवानेतुं श्रोता प्रवर्तते। अत उच्चारितगोशब्देन सह गोरूपार्थस्य कोऽपि सम्बन्धोऽवश्यमङ्गीकरणीय:। अत्रैवं समाहितम् साक्षात्-सम्बन्धाभावादपोहवादिभि: स: सम्बन्धो निषेधमुखेन प्रस्तूयते। गोशब्दोच्चारणानन्तरमेव सर्वे गोभिन्ना: पदार्था निराकृता भवन्ति। यदवतिष्ठते, स तु गोव्यक्तिरेव, नान्य:। स व्यक्तिरन्यापोहविशिष्ट एव। एवं गोशब्दोच्चारणादर्थाद् गोप्रतिभासात् सर्वे अन्ये अगोप्रतिभासा अपि निराकृता भवन्ति। प्रत्यक्षे व्यक्तिरेव सर्वात्मना प्रतिभाति। शाब्दज्ञाने च स एव व्यक्तिरतद्व्यावृत्त्यात्मकतया ज्ञानविषयो भवति। अतो गोशब्दस्य वाच्यार्थोऽगोनिवृत्तिरेव। अतद्व्यावृत्त्यैव शब्दानां स्वार्थबोधे सामर्थ्यमिति पर्यवसितार्थ:।

**अपोहस्य विधिरूपता निषेधरूपता वेति विचार:**

ज्ञानश्रीमित्रेणापोहप्रकरणस्य प्रथमकारिकायामपोहस्याभिधेयत्वं प्रतिपादयितु-मुक्तम्—

> अपोह: शब्दलिङ्गाभ्यां प्रकाश्यत इति स्थिति:।
> साध्यते सर्वधर्माणामवाच्यत्वप्रसिद्धये।। इति।

कमलशीलकृततत्त्वसङ्ग्रहपञ्जिकायामुद्धृतायां कारिकायामाचार्यदिङ्नागेना-पोहस्वरूपमेवं प्रतिपादितम्—

> न प्रमाणान्तरं शब्दमनुमानात्तथा हि तत्।
> कृतकत्वादिवत् स्वार्थमन्यापोहेन भासते।। इति।

घटशब्दोच्चारणानन्तरं ये खलु विपक्षा अघटाः, घटभिन्ना इति यावत्, तेभ्यो व्यावृत्तिविशिष्टस्यैव ज्ञानं जायते। तदेवोक्तं दिङ्नागेन ''शब्दोऽर्थान्तर-निवृत्तिविशिष्टान् भावान् आह''।

अपोहवादमनङ्गीकुर्वतां भाट्टानां नैयायिकानाञ्च मते बौद्धसम्मतापोहवादो निवृत्तिस्वभाव एव। अर्थादभावात्मकत्वेनैव गृहीतः, परन्तु विधिमुखतयैव 'गामानय' इत्यादिवाक्याद् गवादिबुद्धिर्जायते, न त्वगवापोहरूपेण—अर्थान्निषेधरूपेण। तेन शब्दार्थस्य विधिरूप एवार्थो वाच्यः।

अत्र बौद्धैरेवं प्रतिविधीयते—स्वलक्षणात्मनि वस्तुनि वाच्ये, सर्वात्मना प्रतिपत्तेर्विधिनिषेधयोरयोगः स्यात्। गौरिति शब्देन यदि बाह्यो गोव्यक्तिविशेष एवोच्यते, तर्हि 'गौरस्ती'त्यत्र अस्तीति पदं व्यर्थं स्यात्। 'गौर्नास्ती'त्यप्यसमर्थं स्यात्। गौरित्यनेन विधिमुखतया यस्य प्रतीतिर्जायते, तस्य 'नास्ति' इत्यनेन निराकरणं विरोधायैव भवति। किञ्च, गौरिति पदेन यद्यसद्भूतो 'गौः' उच्यते, तर्हि 'नास्ति' इति पदं व्यर्थं स्यात्। असद्भूतं गावमधिकृत्यास्तीति कथनं विरोधाय कल्पते। अतो वस्तुभूतं स्वलक्षणं न वाच्यं भवतीति सिद्धान्तः।

आचार्यदिङ्नागेन निषेधात्मक एवापोह इति प्रतिपादितम्। शान्तरक्षितेन तु ''वस्तुतो विधिरेव शब्दार्थ इति प्रतिपादितम्। शब्दश्रवणानन्तरं प्रथमं विधिरेव स्फुरति, पश्चात् सामर्थ्यान्निषेधरूपोऽपोहो निश्चीयते। स्फुटमत्र यच्छान्तरक्षितेन वृत्तिद्वयमङ्गीकृतम्—मुख्या गौणी च। मुख्यया वृत्त्या गोव्यक्तेर्भानं (विधेर्भानं) पश्चात् सामर्थ्यादर्थादर्थापत्त्या 'नायमश्व' इत्यादिकं निषेधात्मकं ज्ञानं जायते। नेदं सङ्गतमिति **रत्नकीर्तिः**। न ह्येवं दृश्यते यत्कश्चित्प्रथमं विधिरूपं शब्दार्थं प्रतिपद्यते, पश्चान्निषेधरूपम्, अथवा प्रथमं निषेधरूपं पश्चाद्विधिरूपमिति। प्राथमिकज्ञाने क्रमानुल्लेखः सर्वानुभवसिद्ध एव। तदुक्तं रत्नकीर्तिना—'प्रतिपत्तिः क्रमदर्शनात्' इति।

वस्तुतस्तु कस्यचिद्वस्तुनः प्रतिपत्तिरेवान्यापोहप्रतिपत्तिः। विधिनिषेधयोः समकालमेव स्फुरणं भवति। शब्दार्थस्तु न कात्स्न्र्ये विधिरूपो निषेधरूपो वा। निषेधविशिष्टो विधिरेव शब्दार्थः। विधिरूपं गृहीत्वैव व्यवहारः प्रचलति। 'गामानय' इत्युक्ते न कश्चिदगवापोहमानेतुं प्रयुक्तः स्यात्, परन्तु तदन्यव्यावृत्तिविशिष्टमेवानेतुं प्रयतते। अत्रेदमवधेयम्— यद्यपि शब्दस्य निषेधरूपत्वमत्र शब्देन नोक्तं तथापि, तत्तु नूनमेव ज्ञाने प्रतिभासते। तद्यथा नीलोत्पलार्थे प्रयुक्ते इन्दीवरशब्देऽसत्यपि नीलार्थवाचके कस्मिंश्चिच्छब्दे नीलोत्पलप्रतीतिर्नीलस्योत्पलस्य च भानं जायते। एवं

निषेधवाचकशब्दस्यानुल्लेखेऽपि 'गौ'रित्युक्ते गोप्रतीतौ तुल्यकालमेव विशेषणतया अगवापोहस्फुरणमनिवार्यम्। अन्यथा शब्दादर्थप्रतिपत्तिकाले तदन्यपरिहारेण प्रवृत्तिर्न जायेत।

अत्रापतितस्यान्योन्याश्रयदोषपरिहाराय **ज्ञानश्रीमित्रेणोक्तम्**—"इदमन्योन्याश्रयणं ग्राम्यधन्धीकरणमेव"। वस्तुतो जातिशक्तिवादे व्यक्तिशक्तिवादेऽप्ययं दोष: सम्भवति, गवापरिज्ञाने गोत्वसामान्यापरिज्ञानात्। वस्तुतो यद्यगवापोहो गोशब्दवाच्य इत्याकारक: सङ्केत: स्वीक्रियेत, तदाऽयमन्योन्याश्रयदोष: सम्भाव्येत, परन्तु बौद्धनये विधिनिषेधयोरेकाकारप्रत्यवमर्शित्वम्, तथा न कश्चिद्दोष:।

अपोहस्य स्वरूपं प्रकटयितुमुदाहरणान्तरमपि ज्ञानश्रीमित्रेणोपन्यस्तम्—"एष: पन्था स्रुघ्नमुपतिष्ठत इत्यत्राप्यपोहो गम्यत एव"। 'एष:' इत्यनेन पन्थान्तरस्य व्यवच्छेद:, अयमेव पन्था न त्वन्य इत्याशय:। स्रुघ्नपदेन स्रुघ्नप्रत्यनीकानिष्टस्थानानां व्यावृत्ति:। 'उपतिष्ठते' इत्यनेनापरेऽपि अरण्यमार्गा यत्र इति विच्छेदसम्भावना, ते निराकृता:। 'पन्था:' इति शब्देन सार्थदूतादिव्यवच्छेद: 'अयं पन्था एव न तु मार्ग:', अत एव सुष्ठूक्तं **ज्ञानश्रीमित्रेण**—

"शब्दैस्तावन्मुख्यमाख्यायतेऽर्थ-
स्तत्रापोहस्तद्गुणत्वेन गम्य:।
अर्थश्चैकोऽध्यासते भासतेऽन्य:
स्थाप्यो वाच्यस्तत्त्वतो नैव कश्चित्।।

अन्तत: समाधीयते यद्विधिरेव शब्दार्थ:। स विध्यात्मको शब्दार्थो बाह्यो गवादिरूपोऽर्थो भवितुमर्हति, बुद्ध्याकारो वा। बुद्ध्याकारस्य वस्तुनस्तत्त्वत: संवृत्त्या वा विधिनिषेधौ सम्भवत:। बुद्ध्याकारस्य स्वसंवेदनप्रत्यक्षगम्यत्वात्। नापि बाह्यस्य तत्त्वतो विधिनिषेधौ शाब्दज्ञाने तस्याप्रतिभासनात्। अत एव शाब्दे प्रत्यये बाह्यस्याप्रतिभासनाद् 'अस्ति' 'नास्ति' वेति शब्देन बाह्य: सर्वथाऽनभिलाप्य एव; परन्त्वेतेन लौकिक: शाब्दव्यवहार: सर्वथा विलुप्येत। अत एवेदमत्र समाधानं बुद्ध्याकारस्य बाह्यस्य च सांवृतौ विधिनिषेधौ। तदुक्तम्—

नाकारस्य न बाह्यस्य तत्त्वतो विधिसाधनम्।
बहिरेव हि संवृत्त्या संवृत्त्याऽपि तु नाकृते:।।

अतोऽन्योन्याभावविशिष्टो विजातीयव्यावृत्तोऽर्थो विधि:, स एवापोहशब्दवाच्य: शब्दानामर्थ: प्रवृत्तिनिवृत्तिश्चेति सङ्क्षेपेण बौद्धानामपोहवाद: प्रदर्शित:।

**अपोहखण्डनम्**

ननु प्रतीयमानेषु पिण्डेषु मध्ये सूत्रवदेकाकारस्यानुपलम्भात् सामान्य-भाववादिनां मते 'गौरयं गौरयमि'त्याकारा प्रतीतिः किमालम्बेनेति चेत्, अन्यापोहलम्बनस्य एवैष गौर्गौरिति प्रत्ययस्य सिद्धत्वादिति बौद्धसमयं प्रति प्रत्यवतिष्ठते। अत्रोच्यते—अथ कोऽयमन्यापोहः? अगोव्यावृत्तिरिति चेत्? के अगावः? ये न गाव इति चेत्, के पुनस्ते गाव इति पृष्टे न किञ्चिद्वक्तुं शक्यते भवता। जातिवादिनां मते तु ते एव गावो ये गोत्वसमानाश्रया इति नानुपपत्तिः। गोत्वं किमिति तु न प्रष्टुं शक्यते, तस्य लोमवल्लाङ्गूलसास्नादिभिर्दर्शयितुं शक्यत्वात्। तत्रापि लोमादीनि कानीति पृष्टे तदनुगताश्रयाणीत्येव वक्ष्यते।

किञ्चापोहवादिनां सर्वलोकव्यवहारलोपापत्तिः। तथा हि—अपोहस्य विधिमुखेन निषेधमुखेन वा भानमित्यस्य विवादग्रस्तत्वात्। जगतः 'गामानये'त्यादौ विधिमुखेनैव प्रवर्तनाया जायमानत्वात्। अथ कथञ्चिद्यद्यपोहो विधिमुखेन प्रवर्तयतीत्यभ्युपगम्य लोकव्यवहारलोपापत्तिं वारयेद्भवान्, तथापि अपोहः किं-रूपः? अतद्व्यावृत्तिरूपः, यथा गौरित्युक्ते गवेतरभिन्नत्वेन गोः प्रतीतिस्तत्रायं दोषो यद् गोर्ज्ञानाय गवेतरस्य सर्वस्य जगतो ज्ञानमावश्यकम्, ततस्तद्व्यावर्त्यत्वेन गोर्ज्ञानमिति न युक्तिसहम्। यतो हि— एकस्य वस्तुनो ज्ञानाय न ज्ञानान्तरमावश्यकं भवति। न हि ज्ञानं स्वस्वरूपलाभाय ज्ञानान्तरमपेक्षत इति। नन्वियमापत्तिर्जातिपदार्थवादिनां मतेऽपि गले आपततीति चेत्, न, आकृतिव्यङ्ग्याया जातेः सत्त्वात्। द्विषु त्रिषु वा व्यक्तिषु समानावयवसंस्थानभूयो-दर्शनेन सर्वव्यक्तिसमवेताया जातेर्ज्ञानस्याव्यवधानेनोत्पत्तिसम्भवात्।

**नैयायिकानामवच्छिन्नजातिवादः**

श्रुते शब्दे येऽर्थाः श्रोतृभिरवबुध्यन्ते, ते शब्दार्थाः, तेषु सर्वेष्वपि शब्दस्य शक्तिः। यथा श्रुते गोशब्दे श्रोतुर्जातिविशिष्टस्याकृतिविशिष्टस्य च कस्यचित् पशुव्यक्तेर्ज्ञानं भवति। अतः सा जातिः स आकारः सा व्यक्तिश्चेति त्रयः शब्दार्थाः। यथाह सूत्रकारः 'जात्याकृतिव्यक्तयः पदार्थः' इति। अत्र सूत्रे समागतस्य आकृतिशब्दस्यार्थः प्राचीनैर्नैयायिकैः 'अवयवसंस्थानम्' इति क्रियते। तथा च जात्याकृतिविशिष्टव्यक्तावेव शक्तिरिति प्राचीनाः। ननु जात्याकृतिविशिष्टव्यक्तौ शक्तिप्रतिपादनाज्जात्याकृत्योर्द्वयोरेव शक्यतावच्छेदकत्वापत्तिरिति वाच्यम्, लाघवाज्जातिमात्रस्यैव शक्यतावच्छेदकत्वौचित्यात्। शुद्धजातेरवयव-संयोगापेक्षया शरीरलाघवं नानासंयोगव्यक्तीनामवच्छेदकताकल्पनमपेक्ष्य एकस्या

जातेस्तत्कल्पने लाघवात्, अत एव परस्परपरित्यागेन परस्परस्य बोधाभावात् त्रिष्वेकैव शक्तिः।

नव्यास्तु संस्थानानुपस्थितावपि गोत्वादिना गवाद्यन्वयबोधाज्जातिविशिष्ट-व्यक्तावेव शक्तिरिति स्वीकुर्वन्ति। संस्थाने च पृथगेव शक्तिः। व्युत्पत्तिवैचित्र्याच्च संस्थानव्यक्त्योरेकपदार्थयोरपि परस्परमन्वयबोधः। एकपदार्थयोः परस्परम-न्वयेऽन्यत्राकाङ्क्षाविरहेऽपि एवकारार्थानामिवाकृतिव्यक्त्योरप्यन्वये आकाङ्क्षा कल्प्यतेऽनुभवानुरोधादित्येव व्युत्पत्तेर्वैचित्र्यम्। सौत्रं "पदार्थः" इत्येकवचनन्तु जातिव्यक्त्योरेकशक्तिलाघवायेत्याहुः।

**अत्रार्थे मम्मटाचार्यमतम्**

श्रुताच्छब्दात् सङ्केतग्रहविषयं चतुर्धा विभजन् प्रथमन्तावदाह आचार्यो मम्मटः—'सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा"। अस्यायमर्थः—"गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः" इति। तत्र महाभाष्य-कारोक्तदिशा जातिगुणक्रियायदृच्छाभेदेनार्थश्चतुर्धा भवति, अथवा जातिरेव पदार्थः। यद्यप्यर्थक्रियाकारिता व्यक्तावेव पर्यवस्यति, तथापि तत्रानन्त्याद् व्यभिचाराच्च शक्तिः स्वीकर्त्तुं न युज्यते। अपि च गौः शुक्लश्चलो डित्थादीनां भेदो न प्राप्नोति यतो हि— गोत्वरूपजातिमान्, शुक्लरूपगुणवान्, चलनरूपक्रियावान्, डित्थनामायमिति तात्पर्येण सैव गोव्यक्तिरुच्यत इति प्रवृत्तिनिमित्तस्य भेदो न स्यात्, व्यक्तिवादिमते व्यक्तेरेव प्रवृत्तिनिमित्तत्वात्, तस्याश्च व्यक्तेः प्रकृतेरेकत्वात्। तथा च विषयविभागाभावे गवादिशब्दानां 'घटः, कलशः' इत्यादीनामिवैकार्थवा-चित्वेन पर्यायतया सह प्रयोगो न स्यात्। अतस्तदुपाधावेव = व्यवच्छेदके धर्मे एव शक्तिरभ्युपगन्तव्या। उपाधिवादिमते हि जातिगुणक्रियायदृच्छानां प्रवृत्तिनिमित्तानां भेदेन गवादिशब्दानां पर्यायत्वाभावाद् भवति सहप्रयोग इति भावः।

उपाधिश्च द्विविधः—वस्तुधर्मो वक्तृयदृच्छासन्निवेशितश्च। वस्तुधर्मो हि वस्तुनि व्यक्तौ समवेतो धर्मः। जातिगुणक्रियारूपः। सः पुनर्द्विविधः— सिद्धः साध्यश्च। सिद्धोऽपि द्विविधः— पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च। प्राणप्रदत्व-न्नाम यावद्वस्तुस्थितिसम्बन्धित्वम्, तच्च जातिः। यथोक्तं रसगङ्गाधरे—"अयञ्च जातिरूपः शब्दार्थः प्राणप्रद इत्युच्यते। प्राणं = व्यवहारयोग्यतां प्रददाति सम्पादयतीति व्युत्पत्ते"रिति। अत्राह वाक्यपदीयकारोऽपि— "न हि गौः स्वरूपेण गौर्नाप्यगौः, गोत्वाभिसम्बन्धात्तु गौरिति"। विशेषाधानहेतुश्च गुणः। यतो शुक्लादिभिर्गुणैर्लब्धसत्ताकं वस्तु सजातीयेभ्यो व्यावर्त्यते। साध्यः

पूर्वापरीभूतावयवात्मकः क्रियारूपः। डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं (स्फोटात्मकं) वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन सन्निवेश्यत इति सोऽयं संज्ञारूपो यदृच्छात्मकः।

अथवा जातिरेव पदार्थ इति स्वाभिमतं प्रकाशयन्नाहुराचार्याः—**जातिरेवेति**। सर्वेष्वर्थेषु जातेरुपपत्तिः कर्त्तुं पार्यते। तथा हि— हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्यभिन्नाधानप्रत्ययोत्पत्तिस्तत् शुक्लत्वादिसामान्यम्। गुडतण्डुलादिपाकेष्वेवमेव पाकत्वादिः। बालवृद्ध-शुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थादिष्वर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमिति।

अत्र कस्मिन्मते मम्मटस्याशय इति विचारप्रचारे जातिपक्षे व्यक्तेर्भानायोगा-ल्लोकव्यवहाराद्यसम्भवापत्तेर्गौरवाच्च व्यक्तिपक्ष एव क्षोदक्षमस्तत्रैव ग्रन्थकृदाशय इति प्रदीपटीकाकर्त्तारो **नरसिंहठक्कुराः**। महाभाष्यकारोक्त पक्ष एव ग्रन्थकृदभिप्रेतः। येन— 'जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद् गुणस्त्रिभिः। क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश''।। इति कारिकया प्रतिपादिता विरोधालङ्कारस्य दश विभागा सङ्गच्छन्ते। अन्यथा पदार्थचतुष्टयाभावेन तदसङ्गतिः स्पष्टैव स्यादित्यन्ये वदन्ति। अपि च तत्र तत्र 'बुधैर्वैयाकरणैः' इत्यादिभिरुक्ति-भिर्वैयाकरणान् प्रति मम्मटस्यादरातिशयोऽपि वर्तते येन तेषाम्मत एव पक्षपात इत्यपि सुधीभिर्विभावनीयम्।

## अत्र वैयाकरणानां मतानि

### महाभाष्यकारमतम्

घटादयः शब्दाः घटत्वादिरूपां जातिमेव निमित्तीकृत्य स्वार्थबोधने समर्था अनुभूयन्ते। यतो हि— घटपदस्य घटरूपोऽर्थः सकृद् बोधितो बालो घटपदेन कालान्तरेण घटान्तरं बुध्यते। अतो ज्ञायते यदनेन कश्चनैकः सामान्यो धर्मः घटेऽवश्यं गृहीतः, यं दृष्ट्वाऽन्यस्मिन्नपि घटे घट इति व्यवहरति। घटादिशब्दै-र्द्रव्यमात्रस्याभिधाने तु सकलघटादिद्रव्यस्य बोधो न स्यात्, प्रत्येकं घटादिद्रव्यस्य भिन्नत्वात्, तदेकस्य सामान्यधर्मस्य घटत्वादेरनभिधानाच्चेति प्रत्यक्षमेव प्रमाणमस्ति जातेश्शब्दार्थत्वे। द्रव्यमात्रार्थत्वे च महदनिष्टं प्रसज्येत। यथा चोक्तं महाभाष्यकृता— ''द्रव्याभिधाने आकृत्यसम्प्रत्ययः। द्रव्याभिधाने सत्याकृते-रसम्प्रत्ययः स्यात्तत्र को दोषः। तत्रासर्वद्रव्यगतिः प्राप्नोति। असर्वद्रव्यगतौ को

दोष:? 'गौरनुबन्ध्योऽग्निषोमीय:' इति। एक: शास्त्रोक्तं कुर्वीत, अपरोऽशास्त्रोक्तम- शास्त्रोक्ते च क्रियमाणे विगुणं कर्म भवति, विगुणे च कर्मणि फलानवाप्ति''रिति।

किञ्च जातौ नहि प्रत्यक्षमेव प्रमाणमपि त्वनुमानमप्यत्र प्रवर्तते। यथाह भाष्यकार: पतञ्जलि: सरूपसूत्रे भाष्ये— ''आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायन:''। अस्यायमर्थ:— जाति: शब्दार्थस्तस्या एकत्वादनेकशब्दप्रयोग- प्रसङ्ग एव नास्ति किमेकशेषसूत्रेणेति। ननु द्रव्यातिरेकेणाकृतेरनुपलम्भात् कथं ज्ञायत एका जातिरस्ति सा चाभिधीयत इति तत्राह— ''प्रख्याविशेषात्''। प्रख्या = बुद्धिस्तस्या अविशेषादेकरूपत्वात्तद्विषयस्याप्यैक्यं प्रतीयते। तथा हि— देशकालावस्थाभेदाद् भिन्नेष्वपि घटेषु 'घटोऽयम्' 'घटोऽयम्' इत्याकारया एकरूपया प्रतीत्या घटत्वादिसामान्यधर्मस्य सद्भावो ज्ञायते। अनुमानप्रयोगश्चेत्थम्—

''विमतप्रत्ययो जातिविषयको देशादिभेदेऽप्यबाधितैकाकारप्रत्ययत्वात् सम्मतवत्'' इत्यनुमानेऽस्मिन् व्यभिचारशङ्कानिवर्तनार्थं तर्कं दर्शयन्नाह भाष्यकार:— 'ज्ञायते चैकोपदिष्टम्'। एकदा एकस्मिन् कदाचिदुपदिष्टो गवि कश्चिद् एक एव जनस्तमन्यस्मिन् देशेऽन्यस्मिन् कालेऽन्यस्याञ्च वयोऽवस्थायां दृष्ट्वा जानाति ''अयं गौरिति'' तथा चानुमानग्रहाय तर्क:—यदि देशादिभेदेऽप्य- बाधितैकाकारप्रत्ययो जातिविषयको न स्यात्तदा अवस्थान्तरे देशान्तरे व्यक्त्यन्तरे च गौरयमिति प्रत्यय: सकृदुपदिष्टाय न स्यादिति।

ननु शक्तिग्रहे व्यक्तावुपलक्षणतामात्रेणापि प्रख्याविशेषे जातिर्निमित्तं भवतीति। अथवा गौरयं गौरयमित्येकाकारप्रत्ययश्च सादृश्यरूपैकक्रियाकारित्वादि- निमित्तको भ्रमरूप इति न पूर्वोक्तेन तर्केणानुमानग्रहो न च जातिसिद्धि:, तस्याभावे कुत्र शक्ति: पदानामिति चेत्, न, 'अव्यपवर्गगतेश्च' अव्यपवर्ग: = अविशेष:, तस्य गतेर्ज्ञानाज्जातौ शक्ति: सिध्यति। न हि गौरित्युक्ते व्यपवर्गो गम्यते। शुक्ला, नीला, कपिला, कपोतिकेति। अतोऽभिधातुं शक्यते विशेषानवगते: पूर्वं सामान्यस्य शब्दतोऽवगतिर्भवति। एवञ्च गुणादिभिन्नेष्वनुस्यूतैकाकारप्रतीत्या जातिसिद्धौ तत्र शक्तिग्रह:। शब्दात्तस्याश्च बोध:। एवं धर्मशास्त्रमपि सङ्गच्छते— 'ब्राह्मणो न हन्तव्य:', 'सुरा न पेये'ति। ब्राह्मणमात्रं न हन्यते, सुरामात्रं न पीयत इति।

ननु किं लक्षणेयं जातिर्याऽभिधीयते शब्देनेति जिज्ञासायामुच्यते—''यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स: शब्द:'' इति भाष्योक्त्या 'नित्यत्वे

सत्येकत्वे सत्यनेकसमवेतत्वमिति जातिलक्षणं ध्वनितं भवति। न्याय-दर्शनेऽपीदमेवैकत्वरहितं लक्षणं समादृतमस्ति। तथा हि- नित्यत्वे सत्यनेकसमवे-तत्वमिति'। नन्वेवं सत्याकाशादीनामेकत्वात् तेषां जातेरभ्युपगन्तुमशक्यत्वाद् 'आकाश:' 'अभाव:' इत्यादीनां शब्दानां कुत्र शक्तिरिति चेदत्रोच्यते— जातिरत्र तत्तत्पदार्थासाधारणो धर्म:। येन आकाशत्वाभावत्वसमवायत्वादीनां सङ्ग्रह:। असाधारणत्वञ्च—'तद्वृत्तित्वे सति तदितरावृत्तित्वम्। अथवा नित्यत्वे सत्यनेकसमवेतत्वमित्यभ्युपगमेऽपि न दोष:, जातेस्सर्वत्र विद्यमानत्वात्। यतो हि, उपाधिभेदम् अवस्थाभेदं कालभेदं वाऽऽदाय एकस्मिन्ननेके भेदा: सञ्जायन्ते येनानेकानुगता जाति: सिध्यति। स्पष्टमिदं मतं प्रस्तुतं मम्मटाचार्येण काव्यप्रकाशग्रन्थे।

**जातिपदार्थे भर्तृहरिमतम्**

तत्र जातिरेव पदार्थ इति वाजप्यायनाचार्यमतं प्रतिपादितं हेलाराजेन तट्टीकायामम्बाकर्त्र्याञ्च ''पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव वा'' इति हरिकारिका-व्याख्यानावसरे। मतेऽस्मिन् गौरित्यादेर्नामपदस्य गोत्वादिजाति: सामान्यभूताऽपि नियतं यत् क्रियाविषयकं साधनशक्तिस्तेन सहैकस्मिन्नर्थे गवादौ द्रव्ये समवेता या संख्या तया जातिविशेषभावमापन्ना स्वसमानाधिकरणाभ्यां तत्तत्साधनशक्ति-तत्तत्संख्याभ्यामाश्रयान्तराद् व्यावर्तिता जातिविशेषभावं भजन्ती अभिधेया।

जातिपदार्थवादिमते द्रव्यं जातेराश्रयं विनाऽनुपपत्ते: सामर्थ्यात् प्रतीयते। ननु जातिपदार्थे व्यवस्थापिते सति तन्नये कथं वाक्यार्थे प्रधानीभूतया आख्यातपदवाच्यया क्रियया साकं जातिपदार्थस्य सम्बन्ध:। कारकेण हि क्रियाऽन्वेति। न च जाति: कारकम्, अमूर्तत्वेन क्रियायामयोग्यत्वात्। तदाधारस्य कारकत्वेऽपि जाते: शब्देन साक्षादभिहिततदाधारस्य चार्थसामर्थ्यात्प्रति-पत्तेर्यथाऽभिधानं द्रव्यस्यैव क्रियायामनुषङ्ग:, न तु प्रतिनिधे:। तदुक्तमपि—

असम्भवे प्रतिनिधिर्मा भूदित्यस्य कर्मण:।
काम्यस्य वा प्रवृत्तस्य लोप इत्युपदिश्यते।। इति।

तदेवं जातिपदार्थवादे प्रतिनिध्यनुपपत्तिरिति वाच्यम्, एकार्थसमवायात् शक्यार्थभूताया जातेरुपलक्षणत्वात्। लक्षणया शक्ते: प्रतिपादन उपायत्वादित्यर्थ:। अन्येषां मते तु शब्देन तात्पर्येण जातिरेव प्रतिपाद्यते। विधेयान्वयस्तु तस्या: क्वचित् 'गां पश्य' इत्यादौ साक्षात्, क्वचिदाक्षिप्यते व्यक्तिद्वारेण गामानयेत्यादौ।

एवं वेदेऽपि 'खादिरे यूपे पशुं बध्नाति' 'पलाशे पशुं बध्नाती'त्यत्र विप्रकृष्टत्वादिना विशिष्टजातीयस्य साधनस्य खादिरादेरसम्भवे सति जातिवाचकशब्दस्य क्रियासाधनशक्त्यावेदनपरतया खदिरान्यकदिरादिद्रव्यगताऽपि शक्तिः शिष्टसमाचारात्परिगृह्यते। तत्र यूपे पशोः संश्लेषरूपाद् बन्धनादुत्तरकालिकं यत् 'पशुमालभेत, हृदयेऽवद्यति, अथ वक्षसि' इत्यादिवचनैः प्रमाणादीनामनुशासनम्, तदेवात्र शक्त्याश्रये कदिरादिरूपबन्धनसमर्थद्रव्योपादाने लिङ्गमनुमानम्। तथा चात्र प्रयोगः— 'खदिरे पशुं बध्नाती'त्यत्र वाक्यस्थं खदिरपदं, बन्धनसमर्थद्रव्यपरम्, अस्वातन्त्र्यफलकबन्धनक्रियाधिकरणत्वात्, यन्नैवं तन्नैवं यथा 'खदिरं यूपं पश्ये'ति वाक्यस्थं खदिरपदम्। अनुमानमिदं ग्राहयितुमपि अनुमानान्तरं तथा हि— पक्षः साध्यत एव। अनुशिष्यमाणप्रमाणादिक्रियासम्बन्धिपश्वाधिकरणत्वादिति हेतुः।

व्याकरणे सर्वैरिव स्वरूपपरैः शब्दैर्लोके चार्थपरैः प्रथममर्थजात्यभिधानात्प्राग् आत्मीया असाधारणी गोशब्दत्वादिका जातिरभिधीयते। ततोऽर्थजातिरूपेषु गोत्वादिषु तस्याः शब्दजातेरध्यारोपः। अर्थस्य शब्दविवर्तत्वेन शब्दाद्वस्तुतो भेदाभावात्। एवञ्च तत्तदर्थजात्यवबोधाय शब्दप्रयोगे शब्दगता जातिरेवार्थजातावध्यारोपिता शब्दानां प्रवृत्तिनिमित्तमिति। स्वरूपजात्यर्थजात्योरभेदेन प्रतीयमानयोर्युगपदभिधानमेव, न तु क्रमेणाभिधानमिति ज्ञेयम्। ननु शब्दनिष्ठं गोशब्दत्वादिरूपं सामान्यं गोत्वादिरूपार्थजातिव्यधिकरणत्वात् कथं तामभेदेन विशिष्यादिति चेदुच्यते—यथा रक्तरूपात्मकगुणव्यक्तिसमवेतं रक्तत्वं स्वाश्रयसमवायिनि कषाये खदिरादिक्वाथे द्रव्ये रक्तरूपाधारे स्वसमवेतसमवायाद् अभेदेन विशेषत्वेन व्यपदिश्यते। लोहितखदिरकषायः, लोहितलाक्षेति। संयोगिसन्निकर्षाच्च वस्त्रादिष्वपि कषायगुणस्य सामान्यं लौहित्यं गृह्यते। लोहितं वस्त्रमिति। तथा शब्दार्थसम्बन्धाद् गोशब्दत्वादिजातिसामानाधिकरण्येनावस्थिततत्वात् स्वाभाविकात् शब्दार्थजात्योः सम्बन्धाद् वाच्यवाचकभावरूपाद् योग्यतारूपाद्वा अर्थजातेः शब्दजात्या व्यपदेशः। एवञ्च शब्दार्थजात्योर्वाच्यवाचकभावसम्बन्धान्यथाऽनुपपत्त्यैव च शब्दार्थजात्योरभेदाध्यारोपस्य कल्पनम्। गोशब्दत्वादिरूपा जातिस्तु गवादिशब्दे स्फोटात्मके नित्येऽवस्थिता गोशब्दत्वादिरूपा न तु वर्णसमुदाये, वर्णानां क्षणिकत्वेन समुदायानुपपत्तेः।

नन्वध्यारोपरूपः प्रत्ययो द्विधा— मिथ्याप्रत्ययः, गौणप्रत्ययश्च। तत्राद्योऽधिष्ठानारोप्ययोर्भेदप्रत्ययं स्वनिमित्तत्वेन नापेक्षते। यथा देहात्मनोस्तादात्म्याध्यासः। द्वितीयस्तु तयोर्भेदपुरस्सर एव, 'गौर्वाहीक' इत्यादौ गौणप्रत्यये तथा दृष्टत्वात्।

एवञ्चार्थजातौ शब्दजातेर्भेदेनानिर्धारितायां कथमर्थजातौ शब्दजातेः समारोप इति चेत्, न, अगृहीतशक्तिकस्य बालस्य पुरोऽवस्थितेषु सास्नादिमत्सु पिण्डेष्वभिन्नः प्रत्यय उत्पद्यते तदा च वाचकसन्निधानाभावादभिन्नं प्रत्ययहेतुरर्थजातिः शब्दजाते-र्भेदेनावधार्यत इत्युपपद्यत एव तत्र तस्य समारोपः।

अर्थजात्यभिधानेऽपि जातिगुणक्रियायदृच्छाशब्दानां प्रवृत्तिनिमित्तभूतो जातिरेव, सर्वपदार्थानां व्यापारलक्षणत्वात्। तथा हि— वैयाकरणानां 'शब्दाभिधेयः पदार्थः' इत्यभ्युपगम्यान्वयिरूपावच्छेदेन शाब्दस्य पदार्थानुगतं यद्रूपं जात्यादि तत्कृतपदार्थव्यावृत्तिविशिष्टस्य शाब्दस्य प्रत्ययस्योत्पत्तिर्भवतीति जातिष्वपि जातिरभ्युपगन्तव्या। तथा च स्वविशेषान्वयिरूपेण गुणोऽप्यभिधीयमानो जातिरेव एवं क्रियाऽपि स्वविशेष्यद्रव्याभेदेनाभिधीयमाना जातिरेव। एवं यदृच्छाशब्दोऽपि स्वविशेषद्रव्याभेदेनाभिधीयमानो जातिरेव। एतच्चास्मिन् व्याकरणशास्त्रे लौकिक-व्यवहारानुगुण्याद् व्युत्पादनम्। जातौ जातिर्नास्ति गुणक्रियायदृच्छाशब्दा न जातिवाचका इति च शास्त्रान्तरप्रसिद्धो हि लोकविरुद्ध इत्यतो नात्र शास्त्रे समाश्रीयते। शब्दानां साधुत्वानुशासनार्थं हीदं व्याकरणशास्त्रं प्रवृत्तम्। शब्दमूलकश्च व्यवहारो लौकिक इति। लोके हि 'गवि शृङ्गम्, वृक्षे शाखा' इति व्यवहारः। तथैव च व्याकरणेऽप्याधारसप्तमी। शास्त्रान्तरेषु चावयवेष्ववयवी इति 'शृङ्गे गौः, शाखायां वृक्षः' इति स्यात्।

एवञ्च शब्दाभिधेयस्येह शब्दार्थत्वात् सर्वे जात्यभिधायिनः, यस्माच्छब्दाभिधायिनः = यस्माच्छब्दव्यापारेणाभिधावृत्तिरूपेण पदार्थाः प्रतीयन्ते, नैतावदेव, अपि तु बहिरत्यन्तमसद्रूपाणां शशशृङ्गादीनामपि शशशृङ्गादिशब्दैः शशशृङ्गत्वादिधर्मपुरस्कारेण प्रत्यायनाद् जात्यभिधायित्वमक्षतम्।

ननु कोऽयमभिधालक्षणो शब्दव्यापारो यमाश्रित्य सर्वे शब्दा जात्यभिधायिन इति जिज्ञास्यमान उच्यते— घटत्वादिजातिवाचकैर्घटत्वादिशब्दैः गुणक्रियावाचकैः शुक्लपाचकादिशब्दैर्डित्थडवित्थादिपदरूपैस्संज्ञाशब्दैश्च जातिवत् स्वाश्रयभेदको गुणक्रियारूपो बालकौमाराद्यवस्थाभेदेऽप्यभिन्नप्रत्ययनिमित्तभूतः प्रतिव्यक्तिनियतः संस्थानादिरूपो विशेषो वा स्वप्रवृत्तिनिमित्ततयापेक्ष्यतेऽतस्ते सर्वेऽपि शब्दा जातिवाचिनः। इदमेव मतमुक्तं मम्मटाचार्येण काव्यप्रकाशे 'जातिरेवे'त्यादिना। अथवा गोत्वघटत्वादि-जातिषु भिन्नासु वाऽनुगता जातिशब्दस्य प्रवृत्तिस्तद्रूपः धर्म एव सर्वजातिषु गोत्वादिकासु जातिः। विशेषगुणक्रियादिरूपे तु व्यावृत्तिरूपं धर्मसामान्यं जातिरिष्यते इत्येवं प्रकारेणापि सर्वेषां शब्दानां जातिपदार्थ-

कत्वकथनमुपपद्यते। संयोगिधर्मभेदेन कालाकाशयोरपि जातिसिद्धि:। दिश उपाधिभेदादात्मनश्च प्रतिशरीरं भिद्यमानत्वात् तयोर्जातिसिद्धि:। समवायस्यापि प्रतियोग्यनुयोगिभेदाद् नानात्वारोपेण कल्पितानेकत्वसमवायानुगता समवायरूपा जाति: सिध्यतीति न्यायदृष्ट्याऽपि सर्वत्र सर्वशब्दानां जात्यभिधायित्वं जातेर्वृत्तित्वञ्च सिद्धम्।

## जातेरुपयोगित्वम्

जननेन या प्राप्यते सा जाति:, जातिशब्दस्य जनधातोर्निष्पन्नत्वात्। जगति किञ्चिदपि तन्नोत्पद्यते यस्य जातिर्न विद्यते। परं तस्य सर्वत्र विद्यमानत्वेऽपि व्यक्त्यधीना जात्यभिव्यक्तिरिति। सा कार्येषु विद्यमाना स्वाश्रयव्यक्त्युपजननद्वारा आत्माभिव्यक्तये स्वाश्रयकार्योत्पत्तौ प्रयोजककर्तृत्वमिवावलम्बते। नित्या सा जाति: कार्योत्पत्ते: प्राक् कारणेषु कृतपदा तिष्ठति तथा द्रव्यस्वभावात् केषुचित्कार्येषु जात्याश्रयेषु निष्पन्नेष्वप्यभिव्यक्तिं न याति, यथा वाय्वादिषु वायुत्वादिजातयो न दृश्या:।

न केवलं लौकिकवाक्यमेव जातौ प्रवृत्तिनिवृत्तिबोधकम्, किन्तर्हि धर्मशास्त्रमपि जातौ प्रवृत्तिनिवृत्तिबोधकमिति। यथा— 'ब्राह्मणमालभेत' इत्यादि-विधौ 'न ब्राह्मणं हन्यात्' इत्यादौ प्रतिषेधे च ब्राह्मणत्वादिरूपा जातिरेव तयो: साधनम्। अत्र साक्षाज्जातेर्विधिप्रतिषेधसाधनत्वाभावेऽपि स्वाश्रयद्वारा तत्त्वं बोध्यम्। अतो 'न ब्राह्मणं हन्यात्' इत्यत्र यदा यदा हननबुद्धिरुत्पद्यते तदा तदा प्रतिषेध: सर्वत्र ब्राह्मणजातौ व्याप्रियते। अत्र जात्यवच्छिन्ने हननकर्त्तव्यतावभासस्य सङ्कल्पस्यानुष्ठेयत्वात्। एवं प्रवृत्तिनिवृत्तिरूपे पुरुषार्थे सर्वत्र जातेरुपयोगो दर्शित:। जातिपदार्थवादे विभक्त्यापि संख्यागता जातिरेवाभिधीयते। सा च व्यक्त्याश्रिता संख्याजातिर्जातेर्द्रव्यगताया: प्रातिपदिकवाच्याया विशेष्यिका। यद्यपि 'प्रकृतिप्रत्यययार्थयो:' इत्यादिनियमात् संख्याजाते: प्रत्ययार्थत्वेन प्राधान्यात्संख्या-जातिर्विशेष्येति वक्तुमुचितं तथापि वास्तविकरूपेण तस्या एकार्थसमवेत-समवायसम्बन्धावच्छिन्नसामानाधिकरण्यसम्बन्धेन द्रव्यजातिविशेषणत्वात् संख्याजातिर्विशेष्यिकेति।

## अद्वैतवेदान्तनये व्यवहारकथनम्

अद्वैतिमते एकस्य ब्रह्मण एव पारमार्थिकत्वम्, तदन्येषान्तु सर्वेषामविद्या-कल्पितत्वेनापारमार्थिकमिति। तत्र यत्सत्यं महासत्यरूपं ब्रह्म सा जाति:।

असत्यास्त्वविद्यापरिकल्पिता अपारमार्थिका: घटपटादयो भावा: सत्यस्य ब्रह्मण: सत्तारूपतया सर्वानुगतस्य व्यञ्जकोपाधिभूता व्यक्तय इति। सैव एका सत्ता गोत्वादिसम्बन्धिभेदाद् भिन्नजातिरूपेणावभासते। तस्यामेव सर्वे शब्दा व्यवस्थिता इति। सैव च भावविकारेषु षडवस्था जन्मादिका: प्रपद्यते। न केवलं षडवस्था एव अस्या आत्मभूता अपि तु योऽयं तासां क्रियाणां पौर्वापर्यादिरूप: क्रम: सोऽपि अस्या आत्मभूत:। अद्वैतवादे सत्तारूपब्रह्मरूपकारणात्मना सकलोऽपि प्रपञ्च: सद्रूप इत्येवमस्ति सत्कार्यवाद:। एवञ्च भावानां कारणात्मना सतां निरन्वयविनाशा-सम्भवेन तिरोभावाभ्युपगमे सैव नास्तिता नाशादिनामपदप्रत्याय्या। कारणे शक्तिरूपेणावस्थानरूपां पूर्वावस्थामंशतोऽविजहत्, उत्तरञ्च धर्मं परिनिष्पन्नरूपमंशत: संस्पृशन् पूर्वोत्तरावस्थाभ्यां संलग्न इव जायमानोऽभिधीयते।

नित्यमेकानुगतं सामान्यमिति जातिलक्षणमपि समर्थ्यते भर्तृहरिणा कारिकात्रयेण—

अनुच्छेद्याश्रयामेके सर्वां जातिं प्रचक्षते।<br>
न यौगपद्यं प्रलये सर्वस्येति व्यवस्थिता:।।<br>
प्रकृतौ प्रविलीनेषु भेदेष्वेकत्वदर्शिनाम्।<br>
द्रव्यसत्त्वं प्रपद्यन्ते स्वाश्रया एव जातय:।।<br>
ब्राह्मणत्वादयो धर्मा: सर्वप्राणिष्ववस्थिता:।<br>
अविभक्ता: स्वकार्याणां साधना इत्यपि स्मृति:।।

(वा.प.,जा. ३।४२-४४)

आसामाशयोऽयम्— महाप्रलये सर्वासां जातीनां स्वकारणेषु परमाण्वादिषु समवस्थानम्। न कदाचिदनीदृशं जगदिति प्रलयाभावमभिमन्यमानानां मीमांसकानां मते च सदैव व्यवस्थिता जातय: कस्यचिदाश्रयापाये अपराश्रयवृत्तय:। यद्वा ब्रह्माण्डानामसंख्येयत्वाद् ब्रह्माण्डान्तरे विनष्टेऽपि ब्रह्माण्डान्तरस्य सत्त्वात् तत्र जातेराश्रयसिद्धिरिति नित्यत्वमक्षतम्। वेदान्तिनां मते ब्रह्मणि मूलकारणे प्रलये सर्वासां जातीनां सद्भाव:। वैशेषिकदर्शने तु निराधारा एव घटत्वादयो जातयो महाप्रलय आसते। ''सर्वप्राणिष्ववस्थिता:'' इति पदेन जाते: सर्वगतत्वं साधितम्। एकमेव सत्तारूपं ब्रह्म नानाजातिष्ववभासत इत्येकत्वमप्यस्या: जाते: प्रतिपादितमेव प्रागिति।

कैश्चिद् ब्राह्मणादिचित्रादिष्वपि ब्राह्मणत्वादिजातीनां सर्वगतत्वादुपदेशादिनाऽभिव्यक्तिरिष्यते। किन्तु ता ब्राह्मणत्वादिजातयः प्राण्याश्रिताः सत्यः पूजादिना पुण्यस्य वधादिना च पापस्य प्राप्तौ निमित्तम्, न तु चित्राद्याश्रिताः सत्यः। मुख्यसादृश्यात् प्रतिमासु तत्तत्प्रत्ययानुगमोपपत्तिर्गौणीति न तत्तत्प्रत्ययवशाज्जातिसमवायस्तत्र, किन्तु सादृश्यमूलकस्तज्जात्याध्यारोप एव तत्रेति वक्तुं युक्तम्। एवञ्च जातेः समवायः स्वरूपेण शक्तिरूपेण वा स्थिते स्वाश्रय एव, न तु तदनुकारिणि तद्विसदृशे वाऽन्यत्रेति न सर्वगतत्वं (अभिव्यञ्जकव्यक्तिभिन्ने वस्तुनि) जातेरिति सिद्धम्। तत्तज्जातीनां तत्तदुपव्यञ्जकानाञ्च साक्षात्कारपूर्वकं तत्तदर्थेषु तत्तच्छब्दानां संज्ञात्वसम्पादनम्। सर्वज्ञानां तत्रभवतामुपदेशाद् वयमपि गुरुसम्प्रदायपारम्पर्यानुसारेण यथासम्भवं गोत्वब्राह्मणत्वादिजातीरध्यवसामः। नरसिंहत्वरूपं जात्यन्तरमेवेत्यपि वैयाकरणसम्प्रदायसमय इत्यवधेयम्।

**जातेः संख्यासाधनम्**

ननु जातौ काऽपि संख्या नास्ति, संख्यायाः गुणत्वेन द्रव्यधर्मत्वादिति चेत्, न, शास्त्रान्तरप्रसिद्धाया प्रक्रियायाः व्याकरणशास्त्रे प्रमाणत्वाभ्युपगमावश्यकत्वाभावात्। व्याकरणशास्त्रे तु शब्दसाधुत्वनिर्वाहार्थं कश्चित् स्वसिद्धान्तः स्वीकार्यः, अस्ति च जातिगतैकत्वे अनुगतैकाकारप्रतीतिरूपं प्रत्यक्षं कार्यत्वादिलिङ्गकमनुमानं वा प्रमाणम्। तेन च प्रमाणेन जातेरेकत्वविशिष्टाया एव संख्यायाः सिद्धेः। तथा बहुत्वं जातौ आतिदेशिकमित्यत्रापि प्रमाणम्, "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इति सूत्रमेव। तथा चायं निष्कर्षः—जातिपरे विधावेकत्वं बहुत्वं वा न विवक्ष्यते। तद्यथा 'ब्राह्मणो न हन्तव्यः', 'सुरा न पेया' इत्यत्रोपात्तमप्येकत्वं न सर्वब्राह्मणहननसर्वसुरापानपरत्वादनयोर्वाक्ययोः। 'देवमन्दिरे वृषलैर्न प्रवेष्टव्यम्' इत्यत्र एकस्य द्वयोरपि वृषलयोः प्रवेशनिषेधपरत्वादस्य वाक्यस्यात्र बहुवचनोपात्ता बहुत्वसंख्या न विवक्षिता। यत्र तु विधौ संख्या विवक्ष्यते, तत्र द्रव्यपरा चोदना न जातिपरा। तद्यथा 'पशुना यजेत' इति। अत्र पशुगतैकत्वसंख्याया विवक्षणाद् बहुपशुकरणकयागान्नादृष्टसिद्धिः। द्वित्वं तु न जात्याख्याशास्त्रेण विहितमिति द्वित्वं सर्वथा द्रव्याश्रितमेवेति तत्सर्वत्रैव प्रयोगे विवक्ष्यत एवेति। तदपि क्वचिन्न विवक्ष्यते। यथा—यद्येतौ व्याधितौ स्यातां देयं स्यादिदमौषधमित्यत्रैकस्यापि व्याधितत्वे एतदौषधदानस्य विधीयत्वेनाभिप्रेतत्वात्। इदमेव महाभाष्यकारेण पतञ्जलिना सरूपसूत्रे भाष्ये "लिङ्गवचनसिद्धिर्गुणविवक्षाऽनित्यात्" 'गुणवचनाद्वा' इत्यत्र द्रव्याश्रितत्वेन संख्याया विवक्षिताविवक्षितत्वं प्रतिपादितम्।

**शक्तिसादृश्ययोर्जातित्वे खण्डनम्**

ननु यद्यपि 'अयं घटोऽयं घट:'' इत्येवं सर्वासु घटव्यक्तिषु एकस्य धर्मस्यान्वयविज्ञानेन जाते: सत्ताऽनुमायोद्घोष्यते जातिवादिभि:, तथापि व्यक्तिव्यतिरिक्तं जातिस्वरूपं न केनापि प्रमाणेनोपलभ्यते। अतो व्यक्तय एवानुगतसंस्थानरूपात् सादृश्यात् स्वस्वरूपाव्यतिरिक्ताद् एकाकारान्वय-विज्ञानजनिका: स्यु:। यद्वा स्वाभाविकं यत्तासामेकप्रत्यवमर्शजननसामर्थ्यं शक्तिपद-व्यपदेश्यं तन्मूलकात् तासामेकत्वाध्यारोपात्ता अनुगतप्रत्ययजन्महेतवो भवन्तु किं जातिस्वरूपेण प्रमाणतोऽनुपपद्यमानेन चेदत्र ब्रूम:।

सादृश्यबुद्धिस्थले पूर्वं व्यक्तीनामभेदग्रह:। पश्चात्तु तस्या एव बुद्धेरावृत्त्या भेदग्रह इति भेदाभेदावग्रहरूपत्वान्न सादृश्यबुद्धिर्जातिबुद्धि:। जातिबुद्धेर्नियमेन भेदानालीढाभेदग्रहरूपत्वात्। 'गोसदृशो गवय' इति सादृश्यबुद्धिस्थले तु पूर्वं गोगवयोर्भेदं धर्मभेदहेतुकं प्रतिपद्य पश्चादवयवसंस्थानवशात् तयोरभेदोऽवसीयते। एवञ्च जातिबुद्धिसादृश्यबुद्ध्यो: परस्परं भेदादेव, न सादृश्यं सामान्यम्। बुद्धिभेदस्य विषयभेदहेतुकत्वनियमादिति अनायासेनायातम्। एवमेव शक्तिर्न सामान्यं भेदाभेदबुद्धिविषयत्वात्।

**विभिन्नदर्शनानां मतानुसारेण व्यक्तिव्यतिरेकत्वञ्जातीनाम्**

लोके अयं गौ:, अयं गौरित्यनुगताकार: प्रत्ययो निर्बाधो दृश्यते। तत्रांशद्वयम्। विशेषणं विशेष्यञ्च। तत्र विशेष्यभूतानां व्यक्तीनां परस्परं व्यावृत्ताकाराणां हेतुत्वं नोपपद्यते, व्यावृत्ताकारत्वादेव, अतो विशेषणभूतं सामान्यं सर्वव्यक्त्यनुगतं तादृशप्रत्ययहेतुतया परिकल्प्यते। सादृश्यसामर्थ्ये तु न तादृशप्रत्ययहेतु:, व्यक्त्यव्यतिरिक्तत्वात्। अत: सादृश्यसामर्थ्यवदनुगता व्यक्ति-स्वरूपव्यतिरिक्ता जाति: स्वीकार्या। एवञ्चाकृतिरूपसादृश्यस्य व्यक्तौ तत्तत्कार्या-नुकूलसामर्थ्यस्य च सामान्यस्याधाररूपविषयनियमनसामर्थ्ये सत्यपि न तस्मादेव सादृश्यात्, सामर्थ्याद्वानुगताकारशब्दज्ञानयोर्जन्माभ्युपगमो युक्त:। अतोऽनुगताकार-शब्दज्ञानयोर्निमित्तं सादृश्यसामर्थ्याभ्यां व्यतिरिक्तं तत्तद्व्यक्त्यनुगतं सामान्य-मवश्यमाश्रयणीयमिति। प्रत्ययभेदे विषयभेदस्यौचित्याद् इति **वैशेषिका:**।

इह सर्वेषु भावेषु प्रत्येतृभेदेन सुखदु:खमोहात्मकत्वस्यानुभवेन कारणत्वेन तदनुगतस्य प्रधानस्यापि सुखदु:खमोहात्मकत्वं गुणत्रयात्मकत्वञ्च कल्प्यत इति **सांख्या:**।

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्।।

इत्यभियुक्तोक्तदिशा सर्वेषु भावेषु सच्चिदानन्दात्मकस्य ब्रह्मस्वरूपस्यानुभवेन तादृशब्रह्मोपादानकत्वं तत्र कल्प्यत **इत्यद्वैतिनः**। एवं मतद्वयेऽपि जगत्येकरूपस्य प्रधानस्य ब्रह्मणो वा समन्वयात् तादृशैककारणपूर्वकं विश्वमिति स्थितम्। तत्र सत्कार्यवादिनः सांख्या अद्वैतिनश्च। असदनुत्पत्तेश्च कार्यकारणयोरभेदोऽपि। तदुक्तम्—

कार्यात्मना तु नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ।। इति।

एवं यत्किञ्चित् सर्वं वस्तु भेदाभेदात्मकम्। एकस्यैव प्रधानस्य ब्रह्मणो वा कार्यरूपेणानेकधावस्थानात्। ततोऽभेदः कारणरूपः सामान्यः, अनुगतत्वात्। कार्यरूपो भेदस्तु विशेषः, व्यावृत्तत्वात्। तत्र सर्वाभेदो महासामान्यं सत्तारूपं प्रधानं ब्रह्म वा। तस्यैव घटत्वादीन्यवान्तरसामान्यानि परिणामभूतानि विवर्तभूतानि वा जायन्ते। अवच्छेदका घटादयश्च तस्य धर्माः, न ततोऽतिरिच्यन्ते। सर्वमेकस्यैव प्रधानस्य परिणाम इति सांख्यैः, एकस्यैव ब्रह्मणो विवर्त इत्यद्वैतिभिरभ्युपगमात्। एवञ्च कृत्वा कार्यकारणयोधर्मधर्मिणोः सामान्यविशेष्ययोश्च नात्यन्तं भेदः, नाप्यत्यन्तमभेदः। तथा च तयोः परस्परं भेदाभेदरूपं तादात्म्यं सांख्यैरद्वैतिभिश्च स्वीक्रियते।

अस्मिन् मते जातिपदार्थवादे वाक्यपदीयग्रन्थे[१] भर्तृहरिणा तट्टीकाकर्त्रा हेलाराजेन च बौद्धमतमपोहवादमुपस्थाप्य खण्डितम्। लेखविस्तरभिया नेह प्रतन्यते तत्। जिज्ञासुभिस्तद्ग्रन्थोऽप्यवेक्षणीय इति।

## द्रव्यवादः

द्रव्यमेव (व्यक्तिविशेष एव) पदार्थ इति केचित्। ननु व्यक्तौ शक्तौ निरवच्छिन्नायां पूर्वोक्तवदशक्यानामाकाशादीनां भानापत्तिरिति वाच्यम्, लक्ष्यतावच्छेदकभानवच्छक्यतावच्छेदके शक्त्यभावेऽपि भानाभ्युपगतेः। नन्वत्र किम्मानमिति चेदत्रोच्यते—केवलव्यक्तिपक्ष एवाण्ग्रहणस्यैकशेषस्य चारम्भेण तस्यापि शास्त्रसिद्धत्वात्। अथ च व्यवहारेण व्यक्तावेव कार्यसम्भवात्।

१. वाक्यपदीये जातिसमुद्देशे तृतीयकाण्डे ९९ कारिकातः प्रकरणसमाप्तिं यावत्। तासु च हेलाराजटीका। अथ च ९५ कारिकायां हेलाराजे अम्बाकर्त्र्याञ्च।

ननु व्यक्तौ शक्तिस्वीकारे आनन्त्यव्यभिचारौ दोषौ समापतत एवेति वाच्यम्, सम्बन्धितावच्छेदकजात्यनुगतीकृतनानाव्यक्तिष्वेकधर्मावच्छिन्नाया एकस्या एव शक्तेरभ्युपगमात्। अथात्र विशेषः—दण्डत्वादीनामन्यथासिद्धत्वेनाकारणत्वेऽपि, तीरत्वादीनां प्रवाहाद्यसम्बन्धितयाऽलक्ष्यत्वेऽपि च तत्र तन्निष्ठावच्छेद्यतानिरूपित-स्वरूपसम्बन्धात्मिकाया विषयिताविशेषात्मिकाया वाऽवच्छेदकताया अभ्युपगमाद-शक्यस्यापि घटत्वादेस्तादृशशक्त्यवच्छेदकत्वसम्भवात्। शक्यत्वे सति शक्तिविशेषणतापन्नस्य शक्यतावच्छेदकत्वमिति नियमे मानाभावात्। उक्तमपि—

आनन्त्येऽपि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति।। इति ।

अपि च जातौ मानाभावः, तत्र वृत्तिविकल्पाक्षमत्वेनाऽभावं मन्यते, अतो द्रव्यमेव पदार्थ इति व्याडिराचार्यो ब्रूते। कथं मानाभाव इति चेदत्रोच्यते। भवति हि जातेः प्रतीतिर्द्रव्यद्वारा न तु स्वातन्त्र्येणेति सर्वजनविदितमेव तथा च द्रव्याश्रया जातिः, किं द्रव्येषु व्यासज्यवृत्त्या वर्तते, प्रत्येकं पर्याप्त्या वा। नाद्यः, एकाश्रयनाशेऽप्रतीत्यापत्तेः, यथा द्वित्वादिबुद्धिः। नान्त्यः, प्रत्येकपरिसमाप्तौ तु द्रव्यान्तरे तदनापत्तिः। न च तत्रापि द्रव्यान्तरे जातिरस्तीति वाच्यम्, विकल्पा-सहत्वात्। तथा हि— द्रव्यान्तरे किं तस्या भिन्ना जातिरभिन्ना वा। नाद्यः, एकाकृतिरिति प्रतिज्ञाहानेः। नान्त्यः, विनष्टेऽप्येके द्रव्ये द्रव्यान्तरे उपलभ्यमानाया जातेस्सङ्कोचस्वभावत्वादनित्यत्वापत्तेरतो तत्तत्संस्थानाद्युपलक्षितमधिष्ठानचैतन्यमेव द्रव्यमिति, नानन्त्यव्यभिचाराविति व्याडेर्मतस्याशय इति। इदमेवोपबृंहितं भर्तृहरिणापि।

## हरिमतम्

तत्रार्थक्रियायां जलाहरणादिरूपायां घटादिकं द्रव्यमेवोपयुज्यते, न घटत्वादिका जातिरमूर्तत्वादिति, घटादिकं द्रव्यमेव शब्दैरभिधीयमानं तत्तदर्थ-क्रियायां प्रवर्तकमर्थवादिनाम्, न जातिः। जातिस्तु द्रव्ये उपलक्षणीभूता इतरव्यावृत्तत्वेन तत्परिज्ञानायेति शब्दानभिधेयेति शक्यतावच्छेदिका गुडे माधुर्यादय इवेति पूर्वेषां व्याडेश्च दर्शनम्। तत्राद्वैतवादिनां मते आत्मैव द्रव्यम्। आत्मैव हि तत्तदुपाधिभिन्नः तत्तत्पदैरभिधीयते। वस्तुलक्षणं तत्तद्धर्मैरविकल्पितं तत्तत्पदैरभिधीयमानं द्रव्यमिति शाक्याः। स्वभावः = सत्ता सैव सर्वत्रानुगता नित्यैका तत्तदुपाधिपरिच्छिन्ना तत्तत्पदाभिधेया द्रव्यमिति सत्ताद्वैतवादिनः। पुरुषस्य

वस्तुगत्याऽसङ्गस्यापि शरीरं प्रकृति:। तत्र तस्य तादात्म्याभिमानात्। तथा च सैव द्रव्यमिति प्रकृतिचिन्तका: **सांख्या:**। पृथिव्यप्तेजोवाय्वात्मकानि चत्वारि तत्त्वानि। नास्ति ततो व्यतिरिक्तचेतनो नाम कश्चित् तत्त्वान्तरं वेति चार्वाका: प्रत्यक्षमात्रप्रमाणका:। एते आत्मादय: शब्दा द्रव्यमित्यस्य पर्याया:। ते च—

आत्मा वस्तु स्वभावश्च शरीरं तत्त्वमित्यपि।
द्रव्यमित्यस्य पर्यायास्तच्च नित्यमिति स्मृतम्।।

(वा.प., द्रव्यसमु. ३।३०९)

इति कारिकोक्ता:, तेन द्रव्यपदसमानार्थकत्वं तेषाम्। व्याडिदर्शने चानेन द्रव्येणाभिधेयेन सर्वेऽपि शब्दा द्रव्याभिधायिनो भवन्ति। नान्ये घटादिशब्दा:। सत्यपि तदभिधायित्वे आत्मादिशब्दानामेव सर्वत्र घटादावव्याहतप्रसरत्वम्। तथा च भाष्यम्—"एकोऽयमात्मा उदकं नाम" इति। वापीकूपसरित्समुद्रादिरूपै: प्रत्येकं भेदेऽपि एकमिदं द्रव्यमुदकं नामेति तदर्थ:। अत्रात्मशब्द उदके प्रयुज्यमानो द्रव्यवचन:। यद्यपि घटादिशब्दा अपि प्रतिनियतद्रव्यवचना द्रव्येषु वर्तन्त एव, तथापि ते कम्बुग्रीवादिरूपामाकृतिमभिधाय तद्द्वारेण लक्षणया द्रव्येषु वर्तन्ते। इमे त्वात्मादय: शब्दा: सर्वद्रव्यसाधारणा आकृतीनां परस्परव्यभिचारित्वात् तत्परित्यागेन मुख्यया द्रव्यमेवाभिदधतीति विशेष:।

द्रव्यञ्च द्विविधम्। पारमार्थिकं, सांव्यावहारिकञ्च। पारमार्थिकन्तु पूर्वोक्तं तत्तन्मतानुसारिणां तत्तत्। सांव्यावहारिकन्तु व्यवहारोपयोगिघटपदादिरूपं भिन्नं भिन्नं नानाविधम्। तच्च प्रथमं द्रव्यं तत्तन्मते नित्यं व्यवस्थितम्। तदुपाधयो घटादयस्त्वनित्या इत्यवधेयम्। तथा हि पस्पशाह्निके भाष्ये— "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिके "द्रव्यं नित्यमाकृतिरन्या चान्या च भवति" इति वदता भाष्यकारेण द्रव्यं नित्यमिति स्मृतम्। यद्यपि शाक्यादिदर्शने वस्त्वादिशब्दैरभिधीयमानं द्रव्यं नित्यं न भवति, तथापि तन्मतस्य वैयाकरणैरनभ्युपगमान्न दोष:। केवलं यदस्माकमात्मस्वभावशब्दाभ्यामभिधीयमानं द्रव्यं तदन्यै: शाक्यादिभिर्वस्त्वादिशब्दैरभिधीयत इत्येवमत्रोपन्यास:।

यद्वा प्रागुक्तभाष्ये कटककुण्डलादिरूपाणां विकाराणां भेदेऽपि सुबर्थरूपस्य द्रव्यस्य सर्वत्र प्रत्यभिज्ञायमानत्वात् तत्तद्रूपै: परिणाम्यपि सुवर्णरूपं द्रव्यं नित्यमुक्तम्। तदनुसारेण तत्तदाकारवत्परिणामकृतविकारभेदेऽपि स्वरूपाऽन्यथात्वानापत्तिर्नित्यत्वं विवक्षितमिति शाक्यादिदर्शनेष्वपि एवंविधद्रव्यनित्यत्वसिद्धिरिति।

ननु कथं पुनरेतदवगम्यते— "आकारा असत्याः, ततोऽन्यत् सत्यमिति। यतो हि सुवर्णादीनां कटककुण्डलादिरूपा आकारा माषवर्षादिपर्यवस्थायिनो यथार्थ-प्रत्ययैरन्यैरबाधिता दृश्यते। तथा च— "तावत्कालं स्थितं चैनं कः पश्चाद्वार-यिष्यति" इति जिज्ञासायामुच्यते भर्तृहरिणा—

सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते।
तन्नित्यं शब्दवाच्यं तच्छब्दतत्त्वं न भिद्यते।।

(वा.प. ३, द्रव्यसमु. ३०)

अस्यायमर्थः— आकृतिसंहारे = सास्नालाङ्गूलादिसंस्थानरूपाकृतिमत्या गवादि-व्यक्तेर्विनाशे सत्यन्ते यद् गोत्वादिकं व्यवतिष्ठते, तत्सत्यम्। सत्यत्वादेव तद्गोत्वादिकं जातिरूपं नित्यं नित्यत्वादेव च लाघवात्तदेव शब्दवाच्यं तदेव गोत्वादिकमान्तरं बौद्धमान्तरशब्दतत्त्वरूपं शब्दतत्त्वान्न भिद्यते। एकस्यैव ज्ञानतत्त्वस्य बुद्धिवृत्त्युपारूढस्य वाच्यवाचकोभयात्मना सामानाधिकरण्येन विवर्तमानत्वात्। एवञ्च बुद्ध्या सर्वासां जातीनां गोत्वादिरूपाणां विशेषाणां पृथिवीत्वादिरूपाणां सामान्यानां परित्यागे सत्यवशिष्यमाणं सत्तारूपं ब्रह्मैव सत्यम्। तत एव तन्नित्यम्। तदेव च गवाद्याकारोपहितं शब्दवाच्यम्। शुद्धन्तु शब्दव्यवहारातीतम्। तदेव च पश्यन्तीरूपं शब्दतत्त्वं ततो न भिद्यत इति। एवं 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिकेनापि कारिकेयं सङ्गमयितुं शक्यते। तथा हि तत्र वाच्यवाचकाविव तयोस्तादात्म्याध्यासरूपः सम्बन्धोऽपि बौद्ध एव। अत एव शब्दार्थसम्बन्धरूपं त्रितयं नित्यविज्ञानरूपब्रह्मात्मकतां नातिक्रामति। तस्य परावाग्रूपस्य नित्यस्यैकस्य ब्रह्मणः शब्दार्थसम्बन्धरूपं त्रितयं स्वरूपं विवर्तभूतं व्यवहारे दृश्यत एव। अनेनेदमायाति सर्वव्यवहारातीतमविकृतमपि च तद् ब्रह्म अविद्यया स्वशक्त्या समस्तविकारात्मना विवर्तमानं जन्यमिवावभासते। तस्य विवर्तरूपविकारात्मकसर्वप्रपञ्चप्रकृतिभूतस्यैकस्य परतत्त्वस्य परावाग्रूपस्य ब्रह्मणो विवर्तदशायां शब्दार्थतत्सम्बन्धरूपशाखात्रयात्मना प्रविभागात् शब्दार्थसम्बन्धरूप-मेतत्त्रितयात्मकत्वं शाब्दे व्यवहारे दृश्यते।

ननु विकारविनाशे सत्यन्ते यदवतिष्ठते, सा सत्या प्रकृतिः, तदेव च ब्रह्म सर्वशब्दवाच्यमित्यसत्कार्यवादे नोपपद्यते सर्वस्यापि विनश्यतः कार्यजातस्य निरन्वयविनाशेनान्ते कस्याप्यनवतिष्ठमानत्वात्। इति समुपस्थिते प्रश्ने कथ्यते— तत्र पूर्वं सर्वोऽपि ध्वंसो विकारप्रकृतिर्न भवति, अभावरूपत्वात् शशशृङ्गादिवदिति बीजादिध्वंसादेवाङ्कुरादिकमुत्पद्यते। इत्यभावादेव भावजन्य इति बौद्धसिद्धान्तस्य

प्रत्याख्यानमुखेन सर्वविकारजातं सत्यप्रकृतिकं साधयितुमुपक्रमते—सर्वो विकार: स्वाभिन्नसत्यप्रकृतिक:, विकारत्वात् सुवर्णादिप्रकृतिककटककुण्डलादिरूपविकारवदित्यनुमानप्रयोगे विकारत्वेन हेतुना स्वाभिन्नसत्यकारणपूर्वकत्वमन्वयव्याप्तिमद्दृष्टान्तमुपक्रम्य साधयितुमाह हरि: कारिकयाऽनया—

विकारापगमे सत्यं सुवर्णं कुण्डले यथा।
विकारापगमे सत्यां तथाहु: प्रकृतिं पराम्।।

(वा.प., द्रव्यसमु. ३।१५)

तथा हि— निरुपाख्यादसतोऽपदाद्विकारप्रादुर्भावो न युक्त:। अभावस्य भावरूपत्वविरोधात्। न हि शशशृङ्गात्कस्यचिदुद्भवो दृश्यते इत्यत्रानुमानग्राहकस्तर्क एव फलति। यदि ध्वंसे विकारप्रकृतित्वाभावो न स्यात्तदाऽभावरूपत्वमपि न स्यात्। न ह्यभावरूपाच्छशशृङ्गात्कस्यचिदुद्भव इति। अस्य च तर्कस्य प्रसिद्धविज्ञानरूपतया स्वविकारजगत्यनुगते ब्रह्मणि। 'भाति घट:' इत्यनुभवदर्शनादस्ति हि विज्ञानरूपतया जगत्यन्वयो ब्रह्मण इति विज्ञानपूर्वकमेवैतज्जगदिति सिद्धम्। तदुक्तं हरिणा—

नाभावो जायते भावो नैति भावोऽनुपाख्यताम्।
एकस्मादात्मनोऽनन्यौ भावाभावौ विकल्पितौ।।इति।

अस्यायमर्थ:—अभावो बीजादिध्वंसरूप:, भाव: अङ्कुरादिरूपो न जायते। अभावस्य भावरूपत्वविरोधात्। भावश्चाङ्कुरादि: कार्यरूप: अनुपाख्यताम् = अनुपाख्यत्वप्रयुक्तामसतां ध्वंसरूपतां नैति सत्कार्यवादाभ्युपगमात्। उक्तञ्च भगवता गीतायाम्—"नासतो विद्यते भावो नाभावो विद्यते सत" इति, एवञ्च "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतिप्रामाण्याद् वाचक: शब्दो वाच्योऽर्थस्तयोस्सम्बन्धश्चेति सर्वं ब्रह्म। तथा च कारिकाऽपि हरे:—

वाच्या सा सर्वशब्दानां शब्दाश्च न पृथक् तत:।
अपृथक्त्वे च सम्बन्धस्तयोर्नानात्मनोरिव।। इति।

**व्याकरणशास्त्रदृष्ट्या पदार्थ: (निष्कर्ष:)**

यद्यपि "न हि आकृतिपदार्थिकस्य द्रव्यं न पदार्थो, द्रव्यपदार्थिकस्य चाकृतिर्न पदार्थ इत्युभयोरुभयं पदार्थ" इति भाष्याद्विशकलितयोरेवाकृतिव्यक्त्यो: शक्तिग्रहविषयता लभ्यते, तथापि "कस्यचित् किञ्चिद् गुणभूतं किञ्चित्प्रधानम्"

इति सरूपसूत्रभाष्यपर्यालोचनया तत एव विशिष्टे शक्त्यवधारणात् तयोरुपादानमविरुद्धम्। अन्यथा तृतीयोपात्तैकत्वकरणत्वयोरिव विशेष्यविशेषण-भावानापन्नजातिव्यक्त्योः शक्यत्वे गोर्यद् गोत्वं व्यक्तिश्चेति समूहालम्बनबोधापत्तेः। शक्तिज्ञानपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वनियमात् 'कस्यचिद् किञ्चिद्गुणभूतं किञ्चित्प्रधानमि'ति भाष्येण नेदमायाति यज्जातिविशिष्टो व्यक्तिरेव पदार्थः; अपि तु गुणभूतमिति शब्दस्वारसिकतया कदाचित्तात्पर्यग्रहसापेक्षेण जातेः प्राधान्येन व्यक्तेश्च प्रकारतया भानम्। एवमपि विशिष्टे शक्तिग्रहः। जातेः प्राधान्ये द्रव्यसंख्यामादाय तत्र द्विवचनाद्युपपत्तिर्बोध्या। तदुक्तं कैयटेन— यथा 'भवत' इत्यादौ क्रियाप्राधान्येऽपि साधनकृतो वचनभेद एवमाकृतिप्राधान्येऽपि द्रव्यसंख्याकृतो इत्यदोष' इति। द्रव्यप्राधान्येऽपि क्वचिज्जातिसंख्यामादाय वचनं "ब्राह्मणं न हन्यात्" इत्यादौ यथा। जातेः प्राधान्ये च निरवच्छिन्नाया एव व्यक्तेः प्रकारताविशेष्यीभूतजात्या च तदनुगमः। न हि प्रकारीभूतमेवानुगमकमिति नियम इत्येकः पक्षः।

वस्तुतस्तु जातिविशिष्टव्यक्तिरेव शक्या। गवादिपदाद् गोविशिष्टगोत्वस्या-ननुभवेनोक्तकल्पस्यासम्भवात्। जात्यतिरिक्तपदार्थस्य किञ्चिद्धर्मावच्छिन्नत्वमिति नियमेन निरवच्छिन्नायास्तस्याः व्यक्तेर्जातिविशेष्यीभूते सति मानाऽयोगात्। एवञ्च व्यक्तिविशेष्यकबोधाभ्युपगमे क्वाप्यनुपपत्तेरभावेन तस्य बोधस्य च तद्विशेष्यकशक्तिग्रहमन्तरेणासम्भवाद् गवादिपदानां जातिविशिष्टव्यक्तावेव शक्तिरिति सिद्धान्तः।

अन्ये तु 'उभयोरुभयार्थः" इति भाष्याज्जातौ व्यक्तौ च गवादिपदानां शक्तिं स्वीकुर्वन्ति; परन्तु व्यक्तिशाब्दबोधेऽपि जातिविषयकत्वेन जातिशक्तिज्ञानस्यैव हेतुता। व्यक्तिशक्तिस्तु स्वरूपसत्युपयुज्यते। नन्वेवं व्यक्तौ शक्तिरेव नाभ्युपगम्येति चेन्न, अशक्यस्यापि शाब्दे भानाभ्युपगमे गवादिपदादशक्यगवादिव्यक्तेरिवाशक्य-घटादीनामपि भानापत्त्या व्यक्तिशक्तिरावश्यकी। अयमेव कुब्जशक्तिवाद इति व्यवह्रियते। शाब्दबोधकारणतावच्छेदककोटौ व्यक्तिविषयकत्वस्यानिवेशात्। तथा गोत्वप्रकारकगोविषयकशाब्दबोधे गोत्वविषयकगोपदशक्तिमती गौरित्या-कारकशक्तिज्ञानं कारणम्, न तु गोत्वविशिष्टविषयकगोपदशक्तिमती गौरित्या-कारकम्। गोत्वमस्तीत्यादौ तु तादृशगोत्वप्रकारकशक्तिज्ञानाभावान्न गोत्वविशिष्ट-बोधप्रसङ्ग इत्याहुः। तदप्यापातमनोरमम्। गोत्वविषयकगोपदशक्तिमती गौरित्या-कारकशक्तिग्रहे कारणतावच्छेदककोटौ गोत्वविषयकत्वस्य प्रवेशे गौरवात्।

ननु मास्तु तद्विषयकत्वस्यावच्छेदककोटौ निवेश:। गोपदशक्तिमती गौरित्याकारकशक्तिग्रहस्य गोत्वप्रकारकत्वेन गोत्वविशिष्टविषयकशाब्दबुद्धिहेतुत्वे व्यक्तिविषयताया: कारणतावच्छेदककोटावनिवेशेन लाघवादिति चेत्, न, व्यक्तिविषयता या कारणतावच्छेदककोटावनिवेशे व्यक्तिशक्तिस्वीकारस्य वैयर्थ्यापत्ते:। न च तदस्वीकारे गोत्वप्रकारकशक्तिज्ञानत्वेन हेतुत्वासम्भव:, व्यक्तौ शक्त्यभावेन तादृशशक्तिज्ञानस्य भ्रमत्वादिति वाच्यम्, शक्तिर्हि न स्वरूपसती शाब्दबोधहेतुरपभ्रंशादपि बोधोदयादगृहीतशक्तिकाच्छाब्दबोधापत्तेश्च, किन्तु ज्ञाता। तथा च यदंशे शक्तिज्ञानहेतुस्तदेव शक्यमिति जातिवद् व्यक्तिरेव शक्या। एवं तद्वैशिष्ट्यमपि तथा। अन्यथा व्यक्तावेव शक्ति:, व्यक्तिशक्तिज्ञाने जातेरपि प्रकारकत्वात् समानप्रकारकत्वेन शक्तिज्ञानपदार्थोपस्थितिशाब्दबुद्धीनां कार्यकारण-भावादिति जातावपि शक्तिरुच्छिद्येदिति।

नन्वेवं विशिष्टे शक्तौ "एकं द्विकं...." इत्यादिकारिकोक्तं एकमित्य-सङ्गतमिति चेत्, न, तस्यायमभिप्राय:— शक्तिज्ञाने च विषयतावच्छेदिका जातिरेकैव। तथा च घटत्वविशिष्टबोधे घटत्वांशेऽन्याप्राकारकघटत्वशक्तिज्ञानत्वेन हेतुतेति कार्यकारणभावोऽपि सङ्गच्छत इति शम्।

●

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

श्रुतम् मे गोपाय

# ज्यौतिषी सुषमा

या ब्रह्मादिपिपीलिकान्तजगतीजीवव्रजानामहो
नानाकर्मविपाकजन्यजननाद् भोग्यं समं पश्यति।
त्रिस्कन्धात्मकसर्वतत्त्वविषयप्रस्थापनप्राञ्जला
पास्पर्धीत्यसमैस्समैस्तु सुषमा सा ज्यौतिषी भास्वती॥

# ज्योतिर्विदां चक्षुः

**डॉ. कृष्णचन्द्रद्विवेदी**
आचार्योऽध्यक्षचरश्च, ज्योतिषविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

❀ ❀ ❀

श्रूयते पुरा काले 'साइक्लाप्स'नामिका दैत्यानां काऽपि जातिरासीद् यस्याः शिरसि एकमेव बृहन्नेत्रमभवत्। साम्प्रतिकदैवज्ञा अपि एकमेव नेत्रं कार्यकारित्वेन धारयन्ति, तद्धि नैकस्य द्वयोर्वा 'इञ्च'-परिमाणस्य, न वा 'फुट'-पदवाच्य-परिमाणस्यापि तु सपादाष्टफुटपरिमाणस्य। दूरदर्शकयन्त्रमेव तत्प्रकृतं तेषां चक्षुः। यथायथं नेत्रमिवैतन्निर्मीयते। यथा चक्षुषि निम्नाभिमुखो गर्तो भवति[1], तथैवोक्त-यन्त्रेऽपि। यथा चक्षुषो गर्ते बाह्यवस्तूनां मूर्तिश्चक्षुःपटले[2] निपतति, तथैव दूरदर्शकगर्ते छायाग्राहकप्लेटोपरि प्रतिबिम्बात्मिका मूर्तिरापत्यते। दैवज्ञो दैत्येभ्य उभयोः कार्ययोरतिशेते। सामान्यतः चक्षुषां विस्तारः $\frac{1}{3}$ इञ्चपरिमितो जायते, यन्त्रस्य तु तदपेक्षया बृहद्विस्तार इति सर्वेषां प्रत्यक्षम्। यन्त्रस्य रूपग्राहकः (चित्रग्राहकः) प्लेटो नेत्रपटलात्तीव्रतरतेजोयुतो भवति। यस्मिन्नन्धतमसि चिरं नेत्रे विस्फार्य दृष्टिप्रयत्ने क्रियमाणेऽपि न किञ्चिन्मूर्तिमदवलोक्यते, तत्रैवोक्तयन्त्रप्लेटः सौकर्येण चित्रं गृह्णाति। ईदृगद्भुतयन्त्रस्य यस्मादृते ज्योतिर्विज्ञानस्याभ्युदयो न कथमपि सम्भाव्यमानः का निर्मितिविधा? कथमस्य सहकारेण वस्तूनि बृहन्ति बृहदाकाराणि समधिकप्रभास्वराणि परिलक्ष्यन्ते? अदृश्यमपि वस्तु कथं यन्त्र- साहाय्येन परिदृश्यते? यन्त्रमिदं केन प्रकारेण कर्मसु सम्प्रयुज्यते? प्रभावोत्कृष्टानि तद्यन्त्राणि विश्वस्मिन् कुत्रोपलभ्यन्ते? कियत्परिमाणानि आकारेण कर्मणा वा तानि? एतादृगद्भुतयन्त्राविष्कारकः कः? एतादृशः प्रश्नाः प्रत्येकं ज्योतिर्विदां मनस्सु प्रस्फुरिष्यन्ते।

दूरदर्शकनिर्माणादिप्रकारजातेऽवगते यो हि सन्तोषः समुदियात्, स सामान्यतस्तद्यन्त्रदर्शनोत्थसन्तोषात्समुत्कृष्टः स्यादिति सधीरं वक्तुं शक्यते।

---

१. त्रिलोकीनाथ वर्मा, हमारे शरीर की रचना, भाग २, पृ. २४५।

२. Retina = रेटिना।

साधारणोऽपि 'बिनाक्युलर'नामको दूरदर्शको ज्योतिर्वित्साधारणकार्य-सम्पादनेऽवश्यं साहाय्यं दास्यति।

दूरदर्शकयन्त्रम् (दूरवीक्षणयन्त्रम्) अधिनक्षत्रमस्माकं निखिलं ज्ञानं तत्प्रकाश-किरणेभ्य एव सम्प्राप्यते। तद्विषयकज्ञानसंवर्धनसंरक्षणादिषु दूरवीक्षणं सुमहदुप-करोतीति सुस्फुटम्। दूरस्थवस्तुदर्शने तदवगमे च यत्साहाय्यं तेनास्माभिर्लभ्यते तस्य कारणद्वयमवधारयितुं पार्यते। दूरस्थमपि यन्त्रमेतद् वस्तूनामाकारं बृहत्कृत्वा प्रदर्शयतीति। तदागतप्रकाशोऽप्यधिकमात्रया प्राप्यत इति द्वितीयम्। अत एव सूर्याचन्द्रमसोस्तत्तद्ग्रहबिम्बेषु दृश्यमानानि वस्तुजातानि स्फुटतराणि भास्यन्ते। यानि च मन्दज्योतिष्काणि ग्रहोपग्रहनक्षत्राणि केवलेन चक्षुषाऽवलोकयितुं दुःशकानि, तान्यपि यन्त्राधारेण सुस्पष्टतया दृश्यन्ते। अनयोरेवोभयोर्गुणयोः परिष्कृतिं विधायाद्यतनानि शक्तिमन्ति दूरवीक्षणानि निर्मितानि निर्मीयन्ते च।

## दूरवीक्षणस्य प्रथम आविष्कर्ता

प्राचीने मध्यकालिके च भारते खगोलपर्यवेक्षणस्योच्चस्तरीया स्वस्था परम्पराऽऽसीत्। आधुनिकखगोलविज्ञानप्रेक्षणस्योपक्रमः यूरोपदेशःस्याप्तिक-दूरवीक्षणयन्त्राणामाविर्भावसमकालिकः। प्रथमं दूरवीक्षणं १६०९ ख्रिस्ताब्दे गैलीलियो नामकेन विदुषा खगोलस्थनक्षत्राणां प्रायोगिकज्ञानार्जनाय निर्ममे। भारते प्रथमदूरवीक्षणयन्त्राविष्कारश्रेयः १६८६-तः १७४३ ख्रिस्ताब्दमध्ये राज्ञे सवाई-जयसिंहद्वितीयाय दीयते, येन ज्योतिर्विज्ञानप्रियेण राज्ञा स्वस्मिन्नेव राज्ये यन्त्रमेतदिदंप्रथमतया समाविर्भावनसमधिघोषणमकारि। एष हि महतः सौभाग्यस्योदन्तो यदसौ नृपोऽभिषेकसम्भारविभूषितोऽपि खगोलविज्ञाने श्रद्धाति-शयात्तत्संरक्षणसंवर्धनाय जयपुर-उज्जयिनी-इन्द्रप्रस्थ-वाराणसी(मानमन्दिर)-प्रभृतिनगरेषु वेधशाला निरमापयत्, श्लाघ्यकार्यणि च प्राचालयदिति।

## दूरवीक्षणस्य प्रमुखाणि त्रीणि कार्याणि

दूरदर्शकयन्त्रं नाम अन्वर्था संज्ञा, अस्य प्रयोगो दूरस्थवस्तूनामवलोकनाय क्रियते। दूरं दूरस्थं वस्तु स्वविशिष्टसामर्थ्यात् पश्यतीति दूरदर्शकं नाम यन्त्रं दूरदर्शने महदुपयोगी। अस्य मुख्यतया त्रीणि कार्याणि प्रभवन्ति—

१. एतद्यन्त्रसाहाय्येन दूरस्थं वस्तु समीपस्थमिवावलोक्यते, मन्दमस्पष्टं लघुशरीरं च वस्तु सुस्पष्टं बृहच्चावभासते। दूरस्थतयाऽदृश्यमानं वस्त्वपि यन्त्र-साहाय्येनाविकलं यथा स्यात्तथा दृश्यते तस्य चित्रमपि (फोटोग्राफ) गृह्यते।
२. एतद्यन्त्रं नक्षत्राणां प्रकाशं प्रगुणयति तं चान्यस्मिन् रश्मिविश्लेषकयन्त्रे प्रक्षिपति।
३. अस्य सहयोगेन किमपि वस्तु स्वाभीप्सितदिशोन्मुखं सूक्ष्मतया स्थिरीक्रियते।

इमानि त्रीणि कार्याणि पुरस्तादुल्लिखितप्रयोगैः सुष्ठु ज्ञायते। तद्यथा—प्रकाशे स्थापितानि उद्घाटितपत्राणि पुस्तकानि शतपदान्तरे स्थितो जनो न वाचयितुं न वाऽक्षराणि प्रत्यभिज्ञातुं क्षमते। तान्येव यन्त्रसाहाय्येन यदि पश्येद् वाचयति चाक्षराणि च प्रत्यभिजानाति, यन्त्रसामर्थ्यमाहात्म्याद् दूरत्वापहाराद् अक्षराणां बृहदाकारत्वात् सामीप्योपलब्धेश्च। दूरत्वापहारपूर्वकं लघुकायवस्तूनां बृहदाकारत्वसम्पादनं नाम दूरदर्शकयन्त्रस्य प्रथमं मुख्यं कर्म।

यद्यपि दूरदर्शकसाहाय्येनाक्षराणि सुस्पष्टतयाऽवलोक्यन्ते, तथापि पुस्तकं न तावत्स्पष्टमीक्ष्यते तेन यावन्मात्रं केवलेन चक्षुषैव। अत्रेदं कारणं यद् दूरदर्शकप्रयोगेण सर्ववस्तूनां स्वीयं प्रकाशकत्वमपक्षीयते तदाकारश्च बृहत् संदृश्यते। बृहदाकारकतया वस्तुप्रकाशो विभज्यते। केवलं बृहदायाम-विस्तारवद्वस्तुष्वेव प्रकाशविभागस्य सम्भावना, वर्तुलेषु बिन्दुस्वरूपेषु वस्तुषु विस्तृतेरभावात्प्रकाशविभागस्य कथैव नोत्पद्यते। बिन्दोः सहस्रगुणाधिकबृहत्त्वेऽपि तस्य व्यासः ० × १००० शून्यतुल्य एवावतिष्ठते। दूरदर्शके यावान् प्रकाशो निविशते, स निखिलो बिन्दौ (शून्ये) प्रगुणितो जायतेऽत एवासौ सातिशयप्रभास्वरतां बिभर्ति। नक्षत्राणि अस्मत्त इयद्दूरे स्थितानि येन हेतुना तानि सर्वाणि बिन्दुरूपतयैवास्माभिरीक्ष्यन्ते। अस्मादेव दूरस्थत्वहेतोस्तानि नक्षत्राणि दूरदर्शकमहिम्ना प्रभास्वराणि प्रेक्ष्यन्ते। यानि केवलेन चक्षुषा नावलोक्यन्ते तान्यपि दूरदर्शकेण सुस्पष्टं दरीदृश्यन्ते। ग्राम्यजनैः संस्कृतज्ञैश्च यन्नक्षत्रमण्डलं 'कृत्तिकामण्डल'मित्युच्यते, साधारणदृष्ट्या दर्शनेनेदमस्पष्टं कवीनां सङ्कुलमिति प्रतीयते. सावहितं दर्शने षण्णां समूह इति प्रतिभासते। तदिदं यदि लघुनाऽपि दूरदर्शकेण दृश्यतेऽत्र पञ्चविंशतिनक्षत्राणि समालोक्यन्ते चक्षुषा केवलेनेदं कदापि नावबुद्ध्यते। चक्षुषः सुषिरं १/५ इञ्च-परिमितं भवति, एक-'इञ्च'-विस्तृतेर्निर्मितेन· दूरदर्शकयन्त्रेण दृष्टा (प्रतिभासिता) नक्षत्रमूर्तिश्चक्षुर्दृष्टमूर्त्या पञ्चविंशतिगुणाधिका दीप्तिमती भवति। दीप्तेः पञ्चविंशत्या गुणैराधिक्यकथा चक्षुर्मध्यपातिगर्त्तोत्तरणक्रमे प्रकाशस्य यावानंशक्षयस्तं विहायैव कृता विज्ञेया।

यरकिजनामकेन आविष्कर्त्रा निर्मितं चत्वारिंशद् 'इञ्च'-विस्तृतं यन्त्रं चक्षुषः प्रकाशाकर्षणक्षमतया चत्वारिंशदुत्तरैकसहस्रगुणाधिकं प्रकाशं प्रगुणयति (कर्षति)। मध्यपात्यध्वनिस्तरणक्रमे यो हि प्रकाशक्षयः परमावश्यकस्तस्य मात्रा यद्यत्र न्यूनीक्रियेत तर्हि पञ्चत्रिंशदुत्तरैकसहस्रगुणाधिकत्वस्यैव गणना निश्चेतुमर्हा भवेत्।

रश्मिविश्लेषकयन्त्रेण साकमस्य कार्याणामध्ययनमस्य द्वितीयं मुख्यं कार्यम्।

ज्यौतिषविषयकपरिमाणेषु दूरदर्शकस्य विशिष्ट उपयोगोऽस्य तृतीयं मुख्यं कर्म वक्तुं पार्यते। अस्याविष्कारात्प्राक् कस्यचिन्नक्षत्रस्य दिशां स्थिरयितुं काप्यका

नलिका प्रयुज्यते स्म। एतादृशी नलिका काशीस्थमानमन्दिरस्य चक्रयन्त्रे प्रयुक्ता सर्वैर्द्रष्टुं शक्यते। किञ्च नलिकया दिशायाः सूक्ष्मं ज्ञानं न भवितुं शक्यते स्म। यतो हि चक्षुष ईषदपि अनवहितप्रयोगेण नलिकायां नक्षत्रस्य दिशि च महदन्तरापातस्य सम्भवात्।

यदि नलिका तन्वी दीर्घा च निर्मीयेत तदेयं त्रुटिरल्पा भवेत् किन्त्वीदृशसंयोगः सुदुष्कर एव स्यात्। अथ चेदमपि ध्येयं यन्नलिका तन्वी निर्मातुं न शक्यते तनूकृतयाऽनया सुस्पष्टनक्षत्रदर्शनकार्यमेव कठिनं स्यात्। दूरदर्शकस्य प्रयोगोऽस्य विघ्नस्य निरासोपायः।

साधारणेषु आग्नेयास्त्रेषु लक्ष्यं नियमयितुम् उनूनामके यन्त्रे बिन्दुद्वयं निर्मीयते। यदा बिन्दुद्वयस्य दूरस्थलक्ष्यस्य च स्थानमेकस्यां रेखायामापतति लक्ष्यवेधो जायते। कदाचिद् बिन्दुद्वयस्य स्थाने एकबिन्दुप्रयोगोऽपि क्रियते। कतिपयेषु पुराकालिकज्यौतिषयन्त्रेषु अस्यैकबिन्दुप्रयोगस्य प्रचलनमासीत्।

हेवेलियस (Hevelius) नामकप्रसिद्धज्योतिर्विदो यन्त्रे Mural circle म्यूरलसर्किलेत्याख्ये पूर्वोक्तप्रयोग एव कृतोऽभवत्। म्यूरलसर्किलेन नक्षत्राणामौन्नत्यं मीयते स्म। अस्मिन् नक्षत्राणां वेधसम्पादनाय एकस्यां दिशि छिद्रमपरस्यां दिशि तीक्ष्णधारं पत्रं निर्मितमासीत्; परन्त्वीदृशयन्त्रेष्वपि कामं तत्र बिन्दुद्वयमेकं छिद्रमेको बिन्दुर्धारायुतं तीक्ष्णपत्रं वा भवेन्नाम, तथापि तत्र वेधस्य स्थूलतैवावतिष्ठेत। यतो हि दूरस्थं वस्तु निर्दिष्टो बिन्दुश्छिद्रं चैतत्त्रयं युगपत्स्पष्टं नावलोकयितुं शक्यते।

दूरदर्शकयन्त्रेणैष विघ्नः सर्वथाऽपसृतो भवति। दूरदर्शकदृष्टिक्षेत्रे बिन्दुद्वयं (तारद्वयं) परसारं समकोणाक्रान्तं ससक्तमेव निर्मितं भवति यद्धि स्वस्तिकाकार Cross wires इत्युच्यते। दूरस्थस्य वस्तुनो यस्मिन् भागे स बिन्दुरापतेद् यत्र पूर्वोक्तबिन्दुद्वयमन्यतरं छिन्द्यात् तदुन्मुखी एव दूरदर्शकस्य दिशा भविष्यति, न कदाचिदप्यत्र नियमे व्यभिचारः सम्भवेत्।

अस्मिन् क्रमनिश्चये बिन्दुद्वयं दूरस्थं वस्तु चोभेऽपि सहैव स्पष्टतया दृश्येते यन्त्रस्याविष्कारः सौविध्याय सूक्ष्मतायै च समपद्यतेति सन्तोषावहः। अस्मादेव कारणात् कतिपयेषु साम्प्रतिकाग्नेयास्त्रेष्वपि दूरदर्शकसन्निवेशः कृतो विद्यते। दूरदर्शकसत्त्वाद् वेधः साफल्येन यथायथं जायते। नक्षत्राणामौन्नत्यं येन यन्त्रेण निश्चीयते, तस्य संज्ञा 'याम्योत्तरचक्रमि'त्यभिधीयते। अत्रापि दूरदर्शकः सन्निविष्टो भवति यस्य दृष्टिनिर्णायकयन्त्रे द्वौ ततोऽधिका वा बिन्दवः (तारपदवाच्याः) निर्मिता भवन्तीति शम्।

# होराशास्त्रस्य संक्षिप्तं विवेचनम्

**डॉ. इन्दुनाथशर्मा**
वरिष्ठोपाचार्यः, ज्यौतिषविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

अखण्डब्रह्माण्डस्य नियामकपरमात्मनो निःश्वासात् समुद्भूता वेदा-स्त्रिकालदर्शिभिर्महर्षिभिः सृष्टेरारम्भकाले प्रकाशिताः। समस्तकर्माणामुद्गमस्थानं वेद एवास्ति। अस्य वेदपुरुषस्य षडङ्गानि शास्त्रेषु वर्णितानि सन्ति। यथा—

शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी
श्रोत्रमुक्तं निरुक्तं च कल्पः करौ।
या तु शिक्षाऽस्य वेदस्य सा नासिका
पादपद्मद्वयं छन्द आद्यैर्बुधैः।।

ज्यौतिषशास्त्रं वेदपुरुषस्य नेत्ररूपेण वर्तते, अतः समस्तेष्वङ्गेषु प्राधान्यं नेत्रयोर्वर्तते। यतो हि अन्यैः समस्ताङ्गैर्युक्तोऽपि मानवो यदि नेत्रहीनस्तर्हि किमपि कर्म कर्तुं समर्थो न भवति। एवमेवेदं ज्यौतिषशास्त्रं प्रकाशशास्त्रस्य विज्ञानस्वरूपं वर्तते। जीवमात्रकृतेऽनुभवगम्यं शास्त्रमस्ति। अस्मिन् शास्त्रेऽस्माकं त्रिकालद्रष्टृभि-र्महर्षिभिरनुभूततत्त्वानि निहितानि सन्ति। तेषु मुख्यरूपेण ज्यौतिशास्त्रस्य कर्णधाररूपेण अष्टादश आचार्या उल्लेखनीयाः सन्ति। यथा—

"सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः।।
लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।
शौनकोऽष्टादशाश्चैते ज्यौतिश्शास्त्रप्रवर्तकाः"।।

इदं ज्यौतिषशास्त्रं मुख्यतस्त्रिस्कन्धेषु विभक्तं वर्तते, यस्मिन् संहिता, तन्त्रं होराश्च सन्ति। यस्मिन् स्कन्धे सम्पूर्ण-ज्यौतिषशास्त्रस्य वर्णनं वर्तते, स स्कन्धः ''संहिता''शब्देन व्यवह्रियते। यस्मिन् गणितेन ग्रहादीनां गतेः निर्णयो भवति, स स्कन्धः ''तन्त्र''शब्देन कथ्यते। यत्र संहितातन्त्राभ्यां वर्णित-विषयातिरिक्त-जातकफलमुहूर्तादीनां निर्णयोऽतिसूक्ष्मदृष्ट्या विवेचितो वर्तते, स स्कन्धः ''होरा''-शब्देन निगद्यते।

**होराशब्दस्यार्थः**

आद्यन्तवर्णलोपाद्धोराशास्त्रं भवत्यहोरात्रम्।

तत्प्रतिबद्धश्चायं ग्रहभगणश्चिन्त्यते यस्मात्।। (सारावली २।२)

''अहोरात्र''शब्दस्य आदिस्थितस्य ''अ''कारस्य तथा अन्त्यस्थितस्य ''त्र''कारस्य लोपे सति ''होरा''शब्दस्य निष्पत्तिर्भवति। सम्पूर्णदिवसो रात्रिश्च ''अहोरात्र''शब्देनोच्यते। अस्मिन् अहोरात्रे द्वादश लग्ना व्यतीता भवन्ति। समस्तानि शुभाशुभफलानि लग्नाधीनानि सन्ति। लग्नं समयः, अर्थात् कालो ग्रहाधीनः (सूर्यादिग्रहाधीनः) अस्ति। समयः (कालः) दिवारात्रिमध्ये निवसति। अत एव ''अहोरात्र''शब्देन ''होरा''शब्दो निष्पन्नो भवति। तस्यामेव ''होरायां'' बन्धीभूता ग्रहा राशयश्च सन्ति। तेषां ग्रहादीनां शुभाशुभफलस्य विचारः क्रियते। बृहत्पाराशरेऽनेन प्रकारेणोक्तम्-''अहोरात्रस्य पूर्वान्त्यलोपाद् होरावशिष्यते'' (४/१) तथा बृहज्जातककारेणाप्युक्तम्—''होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात्'' (१/३)। समस्तवचनेन ''होरा''शब्देन अहोरात्रस्यैव बोधो भवति। लग्नस्य राशेश्चार्धभावात्मकोंऽशः (१५ अंशः) होराशब्देन कथ्यते। यथा बृहज्जातके—''होरेति लग्नं भवनस्य चार्द्धम्'' इत्युक्तम्। यो हि संसारे प्रसिद्धजातकशास्त्रस्य नाम्ना व्यवहृतो भवति, तदेव ''होराशास्त्र''मस्ति अथवा होराशब्दो भाग्यादिविचारस्य पर्यायवाची।

मानवमात्रस्य मस्तिष्के (भाग्ये) पूर्वजन्मार्जितकर्मानुसारेण शुभाशुभसूचकम् अर्थात् सुख-दुःखादिसूचकं विधिना लिखितं तल्ललाटाक्षरं होराशास्त्रस्य मर्मज्ञो निर्मलदृष्टियुक्तो दैवज्ञ एव स्पष्टरूपेण ज्ञातुं शक्नोति न त्वन्यः। यथा सारावल्याम्—

विधात्रा लिखिता याऽसौ ललाटेऽक्षरमालिका।

दैवज्ञस्तां पठेदव्यक्तं होरानिर्मलचक्षुषा।। (२।१)

यथा पूर्वमेव मयोक्तं यदिदं ज्यौतिषशास्त्रं प्रकाशशास्त्रमस्ति, यस्मिन् कालस्य नियामकौ सूर्यचन्द्रौ स्तः, याभ्यां समयस्य ज्ञानं भवति।

घटिकादीनां रचना अत्यधिकं पश्चात्काले जाता, अत एव सम्भवतो जनाः सूर्यं सप्ताश्वयुतरथोपरि स्थितं प्रदर्शितवन्तः। इमे सप्ताश्वा एव सप्तग्रहरूपेण वयं स्वीकुर्मः। राहुकेतू पातग्रहौ (छायाग्रहौ) स्तः। अस्माकं ग्रहा अपि मुख्यतया सप्तवर्णेषु विभक्ताः सन्ति। आधुनिकवैज्ञानिकयुगेऽपि सूर्यकिरणेषु सप्तवर्णाः सन्तीति स्वीकुर्वन्ति वैज्ञानिकाः। अत एतेषां प्रकाशकिरणानां सम्पातो येनांशेन यस्मिन् देशे, यस्मिन् जीवे, यस्मिन् जीवजन्तौ एवं प्रकृत्यादेरुपरि पतति, तेनानुसारेण तान् जीवादीन् शुभाशुभरूपेण परिवर्तयति। वैज्ञानिकदृष्ट्याऽपि मानवसंरचनाकालादेव मनुष्येषु मुख्यरूपेण सप्तविधलवणस्य (साल्टस्य) सम्भावना वर्तते, येषु सप्तविधलवणमध्ये कस्यचिदपि एकस्य लवणस्य न्यूनता अथवा अधिकता यदा भवति, तदा मानवशरीरे रोगादीनामुत्पत्तिर्जायते। ते स्वकीयाधुनिकप्रक्रियया औषधिद्वारा रोगस्य निवारणं कुर्वन्ति। तेनैव प्रकारेण होराशास्त्रस्य सूक्ष्मज्ञातारोऽपि, तत्तद्ग्रहाणां रत्नैः, एवञ्च दैवावलम्बनस्य सहयोगं नीत्वा जातकसुखशान्तिप्रदानाय अहर्निशं संलग्नाः सन्ति, ग्रहागतेभ्यो दुष्टकिरणेभ्यो जातकस्य रक्षां कुर्वन्ति च।

इदं ज्यौतिषशास्त्रं लोककल्याणाय ऋषिभिः प्रतिपादितम्। अस्मिन् शास्त्रे ऋषयः स्वकीयानुभवद्वारा आकाशीयतारामण्डलस्य, ग्रहाणाम्, उपग्रहाणाम्, पुच्छलताराणाम्, उल्कापतनादीनामनेकानेकविषयाणां चिन्तनं कृतवन्तः। भूमण्डलोपरि अघटितघटना बभूवुः। तेषां घटनानां तत्त्ववेत्तार ऋषयोऽनुभवं कृतवन्तः, अघटितघटनानां सततान्वेषणानन्तरमस्य प्रकाशशास्त्रस्य सिद्धान्तं निश्चितवन्तः, अस्य फलितज्यौतिषशास्त्रस्य।

"सिद्धान्तज्यौतिषशास्त्रस्य" (खगोलविज्ञानशास्त्रस्य) प्रादुर्भावोऽभूत्। मूलरूपेणेदमपि कथनमुचितं प्रतिभासते। लक्षणाधारोपरि लोककल्याणार्थं सर्वप्रथमं फलितशास्त्रस्याविर्भावोऽभूत्, तदेव "होराशास्त्र" इति नाम्ना प्रसिद्धिमगमत्।

भगवान् भास्कर एव सर्वशक्तिमान् ईश्वरोऽस्ति। तथा तस्यांशभूताः समस्ता ग्रहाः सन्ति। नेत्रमिव ज्यौतिषशास्त्रं विना मानवजीवने घटिता-घटितघटनानां रहस्यमन्येन केनचित् शास्त्रेण ज्ञातुं कथमपि न शक्यते। "दैवाधीनं जगत्सर्वम्" इत्युक्त्यनुसारेण समस्तग्रहा देवांशरूपाः सन्ति। अतः समस्तोऽयं संसारो ग्रहाधीनो

वर्तते। वास्तविकी स्थितिरियं वर्तते यत् सूर्यस्य प्रकाशकिरणैः समस्तचराचरजगज्जीवनं, स्थिरतां तथा गतिशीलतां प्राप्नोति। आकाशस्य, आकाशे विचरणशीलानां नक्षत्राणां देवादीनां तथा भूमण्डलस्थितानां पर्वतादीनां मानवादिनानाप्रकारस्थितजीवादीनाञ्च ज्ञानं ग्रहाणां माध्यमेन भवति। तज्ज्ञानस्य प्रकाशकरूपेण होराशास्त्रं वर्तते। होराशास्त्रं विना कथमपि तज्ज्ञातुं न शक्यते। यथा कोऽपि पुरुषो नेत्रं विना पदमेकं गमनं न कर्तुं समर्थः, तथैव होराशास्त्रं विना संसारस्य कल्याणमार्गं केनापि प्रकारेण नावगन्तुमर्हति।

वस्तुतोऽन्यशास्त्राणां फलाफलयोः सन्देहो भवति; किन्तु ''होराशास्त्रस्य'' फलाफलयोः संशयस्य स्थानं नास्ति। यत इदं शास्त्रं ''प्रत्यक्षशास्त्रम्'' अस्ति। यथा—

अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम्।
प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ।।

पूर्वजन्मार्जितानां शुभाशुभकर्मणां फलप्राप्तेः समयस्य निश्चितरूपेण कथने समर्थं केवलं होराशास्त्रमेव। यथाऽन्धकारस्थितान् घटपटादिपदार्थान् प्रकाश एव प्रकटयति नान्यः।

होराशास्त्रे लग्नादारभ्य द्वादशभावपर्यन्तं तथा सूर्यादिनवग्रहाणामनुसारेण तत्तद् भावानां वर्णानां स्वरूपस्य, स्थानबलादिकानां च सङ्केतो मिलति। यथा—

आत्मा रविः शीतकरस्तु चेतः सत्त्वं धराजः शशिजोऽथ वाणी।
ज्ञानं सुखं शुक्रगुरू मदश्च राहुः शनिः कालनरस्य दुःखम्।।

(लघुजातके - २।१)

कालरूपपुरुषस्य आत्मा सूर्यः, वेदोऽपि तथ्यमिदं पोषयति—''सूर्य आत्मा जगतस्तस्थुषश्च''। चन्द्रः चेतः (मनः), भौमो बलम्, बुधो वाणी (वचनम्), बृहस्पतिः ज्ञानम्, शुक्रः सुखम्, राहुर्मदः (गर्वः), तथा शनिर्दुःखस्वरूपेण वर्तते।

कालपुरुषस्य आत्मादयः क्रमशः सूर्यादिग्रहाः सन्ति। अस्य किं प्रयोजनमिति जिज्ञासायां शास्त्रकारैरनेन प्रकारेणोक्तम्—

यदि जन्मकाले सूर्यग्रहो जन्मकुण्डल्यां बलशाली भवति, तर्हि जातकस्याऽऽत्मा बलवान् भवति। अनेन प्रकारेण यदि चन्द्रो बलवान् तर्हि

जातकस्य मन:स्थितिर्बलवती भवति। यदि भौमो बलवान् तर्हि जातक: पराक्रमी भवति। यदि बुधो बलवान् तर्हि तस्य जातकस्य वाणी ओज:पूर्णा प्रभावोत्पादिका च भवति। यदि गुरुर्बलवान् तर्हि जातको विद्यायुक्तो ज्ञानी भवति। शुक्रो बलशाली चेत् तदा जातक: सुखी भवति। राहुर्बली चेत् तर्हि जातको मदयुक्त: (गर्वी) भवति। यदि शनिर्बलवान् तर्हि जातको दु:खी भवति। यदि सूर्यादिग्रहा निर्बला बलरहिता: सन्ति तर्हि विपरीतफलकारका भवन्ति। यथा—

आत्मादयो गगनगैर्बलिभिर्बलवत्तरा:।
दुर्बलैर्दुर्बलास्ते तु विपरीतं शने: फलम्।। (लघुजा. २।१)

राशीनां स्वरूपविषयेऽपि आचार्याणां स्पष्टमुल्लेखो लभ्यते, यथा—

मत्स्यौ घटी नृमिथुनं सगदं सवीणं
चापीनरोऽश्वजघनो मकरो मृगास्य:।
तौली सशस्यदहना प्लवगा च कन्या
शेषा स्वनामसदृशा: खचराश्च सर्वे।। (बृ.जा. १।५)

एषां राशिग्रहाणामाधारेण जातकस्य स्वरूपवर्णगुणादयोऽपि ज्ञातुं शक्यन्ते। तत्तद्ग्रहाणां कथितदिशासु यात्रायां व्यापारादिकार्ये च कृते सति जातको लाभान्वितो भवति। अर्थाद् व्यापारस्याधिपस्य यो वर्ण:, या च दिशा तस्यां दिशायां तद्ग्रहस्य वर्णानुरूपवस्तुव्यापारेण लाभो भवति। यथा—

रक्त: श्वेत: शुकतनुनिभ: पाटलो धूम्रपाण्डु-
श्चित्र: कृष्ण: कनकसदृश: पिङ्गल: कर्बुरश्च।
बभ्रु: स्वच्छ: प्रथमभवनाद्येषु वर्ण: प्लवत्वं
स्वाम्याशाख्यं दिनकरयुताद्भाद् द्वितीयं च वेशि:।।

(बृहज्जातके-१।२०)

अभिप्रायोऽयं वर्तते यद् मेषराशे रक्तवर्ण:, वृषस्य श्वेतवर्ण:, मिथुनस्य हरितवर्ण:, कर्कस्य किञ्चिद् रक्तवर्ण:, सिंहस्य ईषत् श्वेतवर्ण:, कन्याया: चित्रवर्ण: (अनेकवर्णयुक्ता कन्या भवति), तुलाया: कृष्णवर्ण:, वृश्चिकस्य सुवर्णसदृशवर्ण:, धनूराशे: पीतवर्ण:, मकरस्य कर्बुरवर्ण: (मिश्रितवर्ण:), कुम्भस्य नकुलसदृशवर्णस्तथा मीनराशेर्मत्स्यसदृशवर्णो भवति।

मेषादिराशीनामधिपस्य या दिशा वर्तते सा दिशा तद्राशेः प्लवो भवति। यथा—मेषवृश्चिकयोः स्वामी भौमः, तस्य दक्षिणदिशाऽस्ति, अतो मेषवृश्चिकयोर्दक्षिणदिशायां प्लवत्वं भवति। वृषतुलयोः स्वामी शुक्रः, तस्य दिगग्निकोणोऽस्ति, अतो वृषतुलयोरग्निकोणे प्लवत्वं भवति। अनेनैव प्रकारेण सर्वासां राशीनां स्वामिदिशायां प्लवत्वं भवति।

**प्राच्यादिदिगधीश्वराः**

भानुः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशिः।
सौम्यस्त्रिदश मन्त्री च प्राचादिदिगधीश्वराः।। (सारावली–४।८)

अर्थात् पूर्वदिशायाः स्वामी सूर्यः, अग्निकोणस्य शुक्रः, दक्षिणस्य भौमः, नैर्ऋत्यकोणस्य राहुः, पश्चिमस्य शनिः, वायव्यकोणस्य चन्द्रः, उत्तरस्य बुधः, ईशानकोणस्य स्वामी बृहस्पतिर्भवति।

जातकपारिजातानुसारेणापि अनेनैव प्रकारेण दिक्स्वामिनां वर्णनं वर्तते। यथा—

"प्रागादिका भानुसिताररराहुमन्देन्दुविद् देवपुरोहिताः स्युः"।

बृहज्जातकानुसारेणापि यथा—

"प्रागाद्या रवि-शुक्रलोहितितमःसौरेन्दुवित्-सूरयः"।

लघुजातकानुसारेणापि यथा—

"प्राच्यादिशा रवि-सित-कुज-राहु-यमेन्दु-सौम्य-वाक्पतयः"

सूर्यादिग्रहाणां वर्णास्तेषामधिदेवताश्च—

"ताम्र-सितारुण-हरितपीतविचित्रा सिता इनादीनाम्।
पावक-जल-गुह-केशव-शक्र-शची-वेधसः (ब्रह्मा) पतयः"।।

(सारावली—४।१२)

अधिदेवानां स्वीकारे किं प्रयोजनम्?

अर्कादिकग्रहदैवतमन्त्रैः सम्पूज्य तामाशाम्।
कनक-गज-वाहनादीन् प्राप्नोति गतोऽरितः शीघ्रम्।।

(सारावली—४।१३)

यस्य ग्रहस्य योऽधिदेवता वर्तते, तस्याधिदेवस्य पूजनं तस्य मन्त्रेण विधाय, तस्य ग्रहस्य दिशायां गमनेन राजा स्वशत्रुं शीघ्रं पराजित्य सुर्वण-रत्न-हस्त्यश्वादीनां लाभं कृत्वा स्वराजधानीमायाति। यो हि पुरुषो ग्रहस्याधिदेवं तन्मन्त्रेण तस्य देवस्य पूजनं विधाय तद्ग्रहस्यैव दिशां गच्छति तर्हि तस्य मनोरथाः पूर्णतां गच्छन्ति।

कस्य ग्रहस्य को रसः, किं स्थानम्, कीदृग्वस्त्रम्, को धातुः? इत्यादि-विषयेऽपि ऋषयोऽन्वेषणं विधाय लिखितवन्तः। यथा—

"कटु-लवण-तिक्त-मिश्रित-मधुराम्ल-कषाय-रसविशेषाणाम्।
सुर-तोयाग्नि-विहारार्थ-शयन-पांसूत्कराणां च"।।

(सारावली—४।१५)

"वस्त्राणां स्थूला-हत-शिखि-जल-हत-मध्य-दृढ-सुजीर्णानाम्।
ताम्र-मणि-हेम-मिश्रित-रूप्यक-मुक्ताऽऽयसां वापि"।।

(सारावली—४।१६)

को ग्रहः कस्य कालस्य एवं कस्य ऋतोः कः स्वामी भवति, इत्यादि विषयाणामन्वेषणं ऋषिवर्य्यैर्विधाय लिखितम्। यथा—

"अयन-क्षण-दिवसर्तु-मास-तदर्ध-शरदां दिनेशाद्याः।
शिशिरादीनामीशाः शनि-सित-भौमेन्दु-बुध-जीवाः"।।

(सारावली—४।१७)

अयनस्य स्वामी सूर्यः, क्षणस्य (मुहूर्तस्य) स्वामी चन्द्रः, दिनरात्रयोः स्वामी भौमः, ऋतूनां स्वामी बुधः, मासस्य स्वामी गुरुः, पक्षस्य स्वामी शुक्रः, वर्षस्य स्वामी शनिर्भवति। अनेनैव प्रकारेण शिशिरस्य स्वामी शनिः, वसन्तस्य शुक्रः, ग्रीष्मस्य भौमः, वर्षायाश्चन्द्रः, शरदो बुधः, हेमन्तस्य स्वामी गुरुर्भवति।

वेदानामपि ग्रहा अधिपा भवन्ति। यथा—

ऋग्वेदाधिपतिर्जीवो यजुर्वेदपतिः सितः।
सामवेदाधिपो वक्रः शशिजोऽथर्ववेदराट्'।। (सारावली—४।१९)

ऋग्वेदस्य गुरुः, यजुर्वेदस्य शुक्रः, सामवेदस्य भौमः, अथर्ववेदस्याधिपो बुधो भवति। को ग्रहः शुभकारकः? को ग्रहः पापकारकः? एतदपि शास्त्रकारैः निर्णीतम्। यथा—

"गुरु-बुध-शुक्राः सौम्याः सौरि-कुजार्कास्तु निगदिताः पापाः।
शशिजोऽथ शुभसंयुतः क्षीणश्च निशाकरः पापः।।

(सारावली—४।९)

ग्रहाणां यद् रस-वर्ण-स्वरूपादीनां वर्णनमाचार्यैः कृतम्, तेनैव प्रकारेण जातकस्य जन्मकुण्डलीवशाद् अथवा द्रेष्काणवशात् फलमपि निर्दिष्टम्। यथा—

"मूर्द्ध-लोचन-कर्ण-गन्धवहनं गण्डौ हनुश्चाननं
ग्रीवास्कन्दभुजं तु पार्श्वहृदयं क्रोडश्च नाभिः पुनः।
वस्ति-लिङ्ग-गुदे च मुष्कयुगलं चारुद्वयं जानुनी
जङ्घे पादयुगं विलग्नभवनात् पार्श्वद्वयं कल्पितः"।।

(सारावली—४।५)

जन्मसमये (जन्मकुण्डल्यां) यदि लग्ने प्रथमद्रेष्काणो भवेत् तर्हि लग्नाद् मस्तिष्कस्य विचारः, द्वितीयभावाद् दक्षिणनेत्रस्य, द्वादशभावतो वामनेत्रस्य, तृतीयभावतो दक्षिणकर्णस्य, एकादशभावतो वामकर्णस्य, चतुर्थ-दशमभावतो नासिकायाः, पञ्चम-नवमभावतो गण्डस्य (कपोलस्य), षष्ठाष्टमभावतो हनुः (हिन्दीभाषायां ठुड्ढी), सप्तमभावतो जातकमुखस्य विचारः करणीयः।

जन्मसमये यदि लग्ने द्वितीयद्रेष्काणो भवेत् तर्हि लग्नभावतो ग्रीवायाः (कण्ठस्य विचारः), द्वितीयद्वादशभावतः स्कन्धस्य, तृतीय-एकादशभावतो हस्तयोर्विचारः, चतुर्थदशमभावतः पार्श्वभागस्य, पञ्चमनवमभावतो हृदयस्य, षष्ठाष्टमभावत उदरस्य, सप्तमभावतो नाभेर्विचारः करणीयः।

जन्मसमये यदि लग्ने तृतीयद्रेष्काणो भवेत् तर्हि लग्नतो वस्तिप्रदेशस्य (उपस्थनाभेर्मध्यभागस्य), द्वितीयभावतो लिङ्गस्य, द्वादशभावतो गुदस्य, तृतीय-एकादशभावतोऽण्डकोशस्य, चतुर्थ-दशमभावत उरुप्रदेशस्य, पञ्चम-नवमभावतो जानुनोः, षष्ठाष्टमभावतो जङ्घयोस्तथा च सप्तमभावतः पादयोर्विचारः करणीयः। अनेन प्रकारेण द्रेष्काणवशाद् लग्नाऽऽधारं स्वीकृत्य दक्षिणवाम-विभागयोः कल्पनां विधाय समस्तावयवानां शुभाशुभफलं ज्ञातव्यम्। यतोऽङ्गज्ञानस्य प्रयोजनमपि शास्त्रकारैः लिखितम्—

पापा वृणं लाक्षनमेषु सौम्याः स्वांशे स्वराशावयवस्थितेषु।
कुर्वन्ति जन्मोत्थितमेषु चिह्नमेषु ग्रहास्तद्विपरीतसंस्थाः।।

(सारावली—४।६)

एतदतिरिक्तं ग्रहाणां दृष्टिः, मित्रता-शत्रुता-नवमांश-द्वादशांश-त्रिंशांशादि-भागस्थितेः, उच्चराशिस्थितग्रहाणां तथा नीचराशिस्थग्रहाणां विचारश्च सूक्ष्मदृष्ट्या शास्त्रकारैः कृतः।

जन्मकुण्डली-वर्षकुण्डली-गोचरकुण्ड़ल्यादीनामाधारेण जातकस्य सम्पूर्ण-जीवनस्य विषये शुभाशुभफलकथने होराशास्त्रमिदं पूर्णरूपेण समर्थमस्ति। यथा—

''यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः प्राप्तिम्।
व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव''।।

(लघुजा. १।३)

जातकाय धनोपार्जने साहाय्यं करोति होराशास्त्रम्। शुभग्रहस्य दशायां लाभः, अशुभग्रहस्य दशायां हानिश्च भवति। विपत्तिरूपसमुद्रे पोत (नौका) इव कार्यं सम्पादयति। यात्रायां मन्त्रिरूपेण साहाय्यं ददाति। अर्थाद् यथा मन्त्री उचितमन्त्रणाद्वारा राज्ञः साहाय्यं करोति, तथैव होराशास्त्रमप्युचितमार्गनिर्देशं विधाय जातकस्य कल्याणं सम्पादयति। होराशास्त्रं विहाय नान्यच्छास्त्रमेतादृशं वर्तते। यथा—

अर्थार्जने सहायः पुरुषाणामापदर्णवे पोतः।
यात्रासमये मन्त्री जातकमपहाय नास्त्यपरः।। इति।

(सारावली—२।५)

●

# ज्योतिषशास्त्रीयग्रन्थानां साहित्यसौन्दर्यम्

**डॉ. नागेन्द्रपाण्डेयः**
उपाचार्यः, ज्योतिषविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

"सहितयोः, सहितानां वा भावः साहित्यम्" अनया व्युत्पत्त्या साहित्यशब्दस्य बहुविधपदार्थानां परस्परं सम्मिलनमेव वाच्यार्थः। शब्दार्थ-गुणालङ्कारादिपदार्थाः परस्परं मिलित्वा रसादिरूपं व्यङ्ग्यार्थमभिव्यञ्जयन्ते, अत एवात्र साहित्यभावं साहित्यमुच्यते। कुत्रचित् काव्यपदेनाप्यस्यैव बोधो भवति। महाकविभर्तृहरिस्तु मानवजीवनस्य कृते साहित्यस्य महत्त्वमनिवार्यतया स्वीचकार—

साहित्यसङ्गीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः।
तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम्।।

प्राचीनशास्त्राणां संरचना काव्यात्मकेषु छन्दःस्वेव दृश्यते। तत्र विविधानां छन्दसामलङ्काराणाञ्च प्रयोगाः प्रचुरतया प्राप्यन्ते। तैः प्रयोगैर्यत्र स्वारस्यपूर्णानां श्लोकानां स्मरणे सौकर्यं भवति स्म, तत्रैव विविधोपमानैर्विषयाणां स्पष्टीकरणमपि सहजतया जायते स्म। अथ च काव्यमयी रचना विदुषां प्रतिभाया वैशिष्ट्यमपि प्रस्थापितवती आसीत्। यथा केनापि विदुषोक्तम्— "काव्यं तु जातु जायेत कस्यचित् प्रतिभावतः"। एवमेव श्लोकरचनायां न केवलं पाण्डित्यस्य प्रकाशनमपि तु सहृदयताया अपि प्रकटीकरणं ज्ञायते स्म। यथात्र सत्यमेवोक्तम्—

उद्भटश्लोकसङ्गीतबाललीलावलोकनैः।
मनो न भिद्यते यस्य स योगी ह्यथवा पशुः ।।

ज्योतिषशास्त्रे सर्वेऽपि आचार्यप्रणीतग्रन्था: श्लोकेष्वेव निबद्धाः सन्ति। गणितीयसूत्राणां तत्राङ्कात्मकमानानाञ्च निरूपणमपि श्लोकेषु कृतम्। एवं क्लिष्टा

अपि प्रयोगाः साङ्केतिकशब्दैर्व्यवहृताः सन्ति। अत्र शास्त्रे साहित्यिक-काव्यप्रतिभायाः प्रस्तुतिकरणं लक्ष्यं नासीत्, परञ्च विषयाणां विवेचनमेव मुख्य-मुद्देश्यम्। शृङ्गारजनितकाव्यरसानन्दस्य नास्त्येवात्रावकाशः। स्वविषयोपस्थापनस्य हेतुरेव शास्त्रप्रयोजनम्। यथा केनापि विदुषा सत्यमेवोक्तं यत् साहित्यिकशृङ्गारेण समाजस्य लाभो नैव भवति, अपि तु विकृतिरेव समुत्पद्यते—

यदा प्रकृत्यैव जनस्य रागिणो भृशं प्रदीप्तो हृदि मन्मथानलः।
तदात्र भूयः किमनर्थपण्डितैः कुकाव्यहव्याहुतयो निवेशिताः।।

अतः केवलं साहित्यकल्पनालोकस्य भ्रमणार्थं रसातिशयानन्दस्य प्राप्त्यर्थमेवास्मदाचार्याणां प्रवृत्तिर्नैव दृश्यते। तथापि ज्योतिषशास्त्रस्य अनेकेषामाचार्याणां कृतिषु लालित्यपदसमवेतानां साहित्यसौन्दर्ययुक्तानां पदानां प्रयोगा दृश्यन्ते। ज्योतिषशास्त्रस्य प्राचीनतमः प्रख्यातविज्ञानाचार्यवराहमिहिर-स्त्रिस्कन्धज्योतिषस्य प्रणेता एव मन्यते। तस्य गणितज्योतिषविषयिकी "पञ्चसिद्धान्तिका" गणितीया रचना तथा बृहज्जातकं, लघुजातकञ्चेति फलितविषयकौ ग्रन्थावपि च बृहत्संहितानामको ग्रन्थः संहिताशास्त्रस्य मानकत्वेन स्वीक्रियते। आचार्योऽयं स्वविषये यथा पाण्डित्यं स्वग्रन्थेषु प्रकटितवान्, तथैव सरसपद्यानां निर्माणेऽपि कौशलं प्रदर्शितवान्। उदाहरणार्थं केचन श्लोका उपस्थाप्यन्ते।

बृहत्संहितायाः ७३ अध्यायः स्त्रीप्रशंसानामधेयः स्त्रीणां महत्त्वं प्रख्यापयति। ये केऽपि जना नारीणां विषये दोषातिसमूहं पश्यन्ति, तेषां कृते वराहमिहिराचार्योऽलिखदत्रेन्द्रवज्राछन्दसा—

येऽप्यङ्गनानां प्रवदन्ति दोषान्
वैराग्यमार्गेण गुणान् विहाय।
ते दुर्जना मे मनसो वितर्कः
सद्भाववाक्यानि न तानि तेषाम् ।। (७३।५)

एवमेव वराहमिहिराचार्यः सृष्ट्युत्पादने नारीणां श्रेष्ठतां स्वीकरोति—

जाया वा स्याज्जनित्री वा सम्भवः स्त्रीकृतो नृणाम्।
हे कृतघ्नास्तयोर्निन्दां कुर्वतां वः कुतः शुभम्।। (७३।११)

अहो धाष्टर्यमसाधूनां निन्दतामनघाः स्त्रियः।
मुष्णतामिव चौराणां तिष्ठ चौरेति जल्पताम्।। (७३।१५)

न केवलं नारीणां दोषापकरणमेव तेन कृतम्, अपि तु स्त्रीणां कमनीयतायाः, लावण्यस्य, सौन्दर्यस्य च सूक्ष्मान्वेषणमपि कृतम्। कुत्रचित् तु तासां विषये नवीना एव दृष्टिर्विद्यते—

ब्राह्मणाः पादतो मेध्या गावो मेध्याश्च पृष्ठतः।
अजाश्वा मुखतो मेध्याः स्त्रियो मेध्यास्तु सर्वतः।। (७३।८)

अत्र स्त्रियः सर्वाङ्गेभ्यो मेध्याः पवित्रा भवन्तीति आचार्याभिप्रायः। अन्येषां मेध्यपदार्थानां काऽपि सीमाऽत्र निर्धारिताऽस्ति, परञ्च स्त्रीणां विषये नास्ति सीमा। वस्तुत एताः सर्वतः पवित्रा भवन्ति।

जीवनस्य सुखसर्वस्वं तु नारीरत्नमेव। नूनं तास्तु ब्रह्मणा सर्वथा सृष्टेराह्लादकारिण्य एव विनिर्मिताः।

सत्यमेतद् यत् श्रुत्वा, दृष्ट्वा, स्पृष्ट्वा, स्मृत्वा च नारी आनन्दातिशयं किमपि विशिष्टं स्फूर्तिभावं समुत्पादयतीति नात्र चित्रम्। यथा वराहमिहिरोऽत्र शिखरिणीच्छन्दसा प्रस्थापयति—

श्रुतं दृष्टं स्पृष्टं स्मृतमपि नृणां ह्लादजननं
न रत्नं स्त्रीभ्योऽन्यत् क्वचिदपि कृतं लोकपतिना।
तदर्थं धर्मार्थौ सुतविषयसौख्यानि च ततो
गृहे लक्ष्म्यो मान्याः सततमबला मानविभवैः।। (७३।४)

पुरुषः यत् किमपि पुरुषार्थं विजयसम्मानधनोपार्जनादिकं सम्पादयति तत् सर्वं सुखार्थमेव, परञ्च सर्वस्य सुखस्य सारभूतं तत्त्वं किम्? विषयेऽत्राचार्योऽवादीत् शार्दूलविक्रीडितेन छन्दसा—

आकारं विनिगूहतां रिपुबलं जेतुं समुत्तिष्ठतां
तन्त्रं चिन्तयतां कृताकृतशतव्यापारशाखाकुलम्।
मन्त्रिप्रोक्तनिषेविणां क्षितिभुजामाशङ्किनां सर्वतो
दुःखाम्भोनिधिवर्तिनां सुखलवः कान्तासमालिङ्गनम्।। (७३।३)

नारीं प्रति पुरुषस्याकर्षणं प्राकृतं सहजञ्च स्वीकृतमस्ति। यत इदं समस्तं जगत् स्त्रीपुरुषयोः सम्बन्धेनैव समुत्पन्नम्, अतः कथमप्यनयोः सम्बन्धे कदापि दोषयुक्ता विकृतभावना लज्जा वा नैव करणीया।

आबद्धकीटान्तमिदं निबद्धं
पुंस्त्रीप्रयोगेण जगत् समस्तम्।
व्रीडाऽत्र का यत्र चतुर्मुखत्व-
मीशोऽपि लोभाद् गमितो युवत्याः।। (७३।२०)

एवं धरित्र्यां नार्या वैशिष्ट्यं तस्या महत्त्वञ्च वराहमिहिरः सम्यक्तया उपस्थापितवान्। कामिनी सर्वस्य कृते आनन्दप्रदायिका भवति, सा सर्वस्य जनस्याकाङ्क्षायाः केन्द्रे भवति, सर्वस्मै सा रोचते, इत्यस्मिन् विषये वराहमिहिरो रथोद्धताछन्दसा कथयति—

कामिनीं प्रथमयौवनान्वितां
मन्दवल्गुमृदुपीडितस्वनाम्।
उत्स्तनीं समवलम्ब्य या रतिः
सा न धातृभवनेऽस्ति में मतिः।। (७३।१८)

उपजातिछन्दसा तत्रैव—

जये धरित्र्याः पुरमेव सारं
पुरे गृहं सद्मनि चैकदेशः।
तत्रापि शय्या शयने वरा स्त्री
रत्नोज्ज्वला राज्यसुखस्य सारः।। (७३।१)

एभिर्वर्णनैर्नारीणां सात्त्विकसौन्दर्यस्यैव उद्भावनां स्वीकरोत्याचार्यो वराहमिहिरः। अमर्यादितस्य केवलं भोगापन्नस्योच्छृङ्खलस्य व्यवहारस्य नायं पोषकः। यथाऽत्र दम्पत्योः प्रेमभावस्यैव महत्त्वं प्रतिपादयति। तत्रापि नारी एव श्रेष्ठा स्वीकृता—

दम्पत्योर्व्युत्क्रमे दोषः समः शास्त्रे प्रतिष्ठितः।
नरा न तमवेक्षन्ते तेनात्र वरमङ्गनाः।। (७३।१२)

प्रसङ्गादत्र ज्ञेयं यन्न केवलं नारीसौन्दर्यमेव तस्य वर्णनस्य विषयवस्तु विद्यते, अपि तु पुरुषसौन्दर्यमपि सः साधुतया वर्णितवान् वसन्ततिलका-छन्दसा—

जात्यं मनोभवसुखं सुभगस्य सर्व-

माभासमात्रमितरस्य मनोवियोगात्।

चित्तेन भावयति दूरगताऽपि यं स्त्री

गर्भं बिभर्ति सदृशं पुरुषस्य तस्य।। (७४।१)

आचार्यवराहमिहिरस्य ग्रन्थेषु विविधछन्दसां विविधभावानुबन्धानां प्रकृतिचित्रणचमत्कृतीनाञ्च निदर्शनं भवति। अस्य रचनायां कवित्वयोग्यतायाः संस्पशो विद्वन्मनोहारी विद्यते। यद्यपि महानुभावोऽयं ज्योतिषशास्त्रपारङ्गतो विद्वान्, तस्योद्देश्यं साहित्यसंरचना नैवास्ति, तथापि "ग्रामं गच्छंस्तृणं स्पृशती"ति न्यायेन विविधस्थलेषु विषयानुरूपं सुष्ठुभावसम्प्रेषणार्थं काव्यमयं वर्णनञ्चकार। यथाऽत्र सुधीभिः काव्यसौष्ठवं विभावनीयं यच्च शिखरिणीछन्दस्यस्ति—

समुद्रोऽन्तः शैलैर्मकरनखरोत्खातशिखरैः

कृतस्तोयोच्छ्रित्या सपदि सुतरां येन रुचिरः।

पतन्मुक्तामिश्रैः प्रवरमणिरत्नाम्बुनिवहैः

सुरान् प्रत्यादेष्टुं मितमुकुटरत्नानिव पुरा।। (१२।१)

अत्र श्लोके गभीरस्य सागरस्य यथा रोचकं, यथा च विषयानुगुणं छन्दःप्रयोगं, शब्दगुम्फनं कृतं तत्तु नूनमेव चित्ताकर्षकं विराजते। एवमेव शरद्वर्णनं चमत्कृतिवैचित्र्यं समुत्पादयति। नदीनां प्रतिदिनं जलाल्पत्वात् पुलिनानि प्रकटितानि भवन्ति। पुलिनेषु हंसा रमन्ते। तत्र पुलिनस्य पार्श्वद्वये चक्रवाका अधितिष्ठन्ति। सस्वनहंसपङ्क्तिः शरत्ताम्बूलरक्तोत्कषिता अग्रदन्ती योषिदिव शोभत इत्युत्प्रेक्षते ग्रन्थकारः। यथाऽत्र द्रष्टव्यमुपजातिछन्दःप्रयोगम्—

पार्श्वद्वयाधिष्ठितचक्रवाका-

मापुष्णती सस्वनहंसपङ्क्तिम्।

ताम्बूलरक्तोत्कषिताग्रदन्ती

विभाति योषेव शरत् सहासा ।। (१२।८)

अन्यच्चापि उपजाति-वसन्ततिलकाछन्दःप्रयोगम्—

इन्दीवरासन्नसितोत्पलान्विता शरद् भ्रमत्षट्पदपङ्क्तिभूषिता।

सभ्रूलताक्षेपकटाक्षवीक्षणा विदग्धयोषेव विभाति सस्मरा।। (१२।९)

इन्दोः पयोदविगमोपहितां विभूतिं
द्रष्टुं तरङ्गवलया कुमुदं निशासु।
उन्मूलयत्यलिनिलीनदलं सुपक्ष्म
वापी विलोचनमिवासिततारकान्तम्।। (१२।१०)

मेघानां वर्णनं भगवतः श्रीकृष्णस्य पीताम्बरवेष्टितशरीरस्य कान्तिं चोरयतामिव द्रष्टव्यम् इन्द्रवज्राछन्दसा—

सन्ध्यानुरक्ते नभसि स्थितानामिन्दीवरश्यामरुचां घनानाम्।
वृन्दानि पीताम्बरवेष्टितस्य कान्तिं हरेश्चोरयतां यदा वा।।

एवमेव मेघानां वर्णनं विविधरूपेण सुललितच्छन्दोभिश्च द्रष्टुं शक्यते।

भुजङ्गप्रयातच्छन्दोनिबद्धं मेघवर्णनमिदम्—

तडिद्धैमकक्ष्यैर्बलाकाग्रदन्तैः स्रवद्वारिदानैश्चलत्प्रान्तहस्तैः।
विचित्रेन्द्रचापध्वजोच्छ्रायशोभैस्तमालालिनीलैर्वृतं चाब्दनागैः।।

द्रुतविलम्बितछन्दोनिबद्धं च तत्—

सशिखिचातकदर्दुरनिःस्वनैर्यदि विमिश्रितमन्द्रपटुस्वनाः।
खमवतत्य दिगन्तविलम्बिनः सलिलदाः सलिलौघमुचः क्षितौ।।

एवमेव प्राकृतिकचित्रणे वराहमिहिरस्य काव्यपाटवं कुत्रचिदनुपममिव दृश्यते। ग्राम्याञ्चलस्य, शस्यस्य, गोपालकादिकस्य मनोहारिवर्णनं तस्य प्रौढ-कवित्वप्रतिभायाः पाटवं व्यनक्ति, यथाऽत्र याथातथ्येन काव्यमाधुरीयं पेपीयतां वसन्ततिलकाछन्दसा निबद्धम्—

शालीक्षुमत्यपि धरा धरणीधराम-
धाराधरोज्झितपयः परिपूर्णवप्रा।
श्रीमत्सरोरुहतताम्बुतडागकीर्णा
योषेव भात्यभिनवभरणोज्ज्वलाङ्गी।। (१९।१६)

क्षत्रं क्षितौ क्षपितभूरिबलारिपक्ष-
मुद्घुष्टनैकजयशब्दविरावितारम्।
संहृष्टशिष्टजनदुष्टविनष्टवर्गां
गां पालयन्त्यवनिपा नगराकराढ्याम्।। (१९।१७)

इत्थं मया ४१२ शकाब्दे समुत्पन्नस्याचार्यवराहमिहिरस्य साहित्यसौन्दर्यविषये कानिचित् स्थलानि प्रस्तुतानि। वस्तुतोऽस्य सर्वे ग्रन्था नैवोपलब्धाः सन्ति, तथापि तद्विरचिता बृहत्संहिता एव साहित्यसौष्ठवप्रदर्शने पर्याप्ताऽस्ति। अतस्तस्या आधारेणैव मया तस्य साहित्यविषयकं विवेचनं कृतम्।

**भास्कराचार्यस्य ग्रन्थेषु साहित्यसौन्दर्यम्**

कर्णाटकप्रदेशस्य सह्याद्रिपार्श्वे "बीजापुर"ग्रामे परमवैष्णवो महेश्वरात्मजो भास्कराचार्यो ज्योतिर्जगत्यनुपमेयं स्थानं लब्धवान्। अस्य १०३६ शकाब्दे जनिरभूत्।

अयं हि भास्कराचार्यः सिद्धान्तज्योतिषशास्त्रस्य, खगोलविज्ञानस्य मूर्धन्यतमो वेत्ताभवत्। "लीलावती"-नामिकाऽङ्कगणितीयरचना तथा च बीजगणिताख्याव्यक्तगणितीयरचना एवञ्च "सिद्धान्तशिरोमणिः" इत्याख्या सिद्धान्तज्योतिषविषयिकी रचना ज्योतिर्वित्सु सुप्रचलिता, सुविख्याता चास्ति। अस्य तुलनायामिदानीं यावन्नास्ति एकोऽपि ज्योतिर्गणितज्ञः। यथाऽस्य गणितशास्त्रे अप्रतिमं वैदुष्यं दरीदृश्यते, तथैव कवित्वशक्तेरपि निदर्शनं प्राप्यते। सिद्धान्तशिरोमणौ काव्यप्रणयनस्य महत्त्वं प्रतिपादयन् स रसिकानां कृते तस्यानिवार्यतामपि समुद्घोषितवान्। आचार्योऽयं सत्कवीनां भारतीं सर्वेषां जनानां चेतसां समाकृष्टकारिणीं स्वीकृतवान्। को नरः सत्कवीनां वाचमाकर्ण्य हृतचित्तो न भवति। यथाऽत्र तस्याभिमतं सिद्धान्तशिरोमणौ गोलाध्याये, ऋतुवर्णने मालिनीछन्दसा—

> सरसमभिलपन्ती सत्कवीनां विदग्धा-
> नवरतरमणीया भारती कामितार्थम् ।
> न हरति हृदयं वा कस्य सा सानुरागा
> नवरतरमणी या भारती कामितार्थम्।।
> न भवति हृतचित्तो वाचमाकर्ण्य रम्यां
> परभृतसरसां ना कोऽमलां सत्कवीनाम्।
> सततमुपगतानां साम्बुजैर्वा पयोभिः
> परभृतसरसां नाकोमलां सत्कवीनाम्।। (१३-१४)

श्लेषालङ्कारस्योदाहरणमेकं मालिनीछन्दसैव—

त्रिदिवमधरयन्तस्तीरपङ्केन नाना-
रुचिरसिकतया वाश्लेषिताङ्गैः सुवृत्तैः।
कृतिन इह रमन्ते रम्यसारस्वतौघे
रुचिरसिकतया वा श्लेषिताङ्गैः सुवृत्तैः।। (१५)

अत्र श्लोके प्रथमोऽर्थस्तु सरस्वतीनदीप्रवाहे नदीतीरपङ्केन अवलिप्ताङ्गैः सुवृत्तैः (सज्जनैः) नानारुचिरसिकतया (सुशोभनैर्बालुकाकणैः) कृतिनो विद्वांसः स्वर्गमभिलषन्त इहात्र रमन्ते। द्वितीयोऽर्थस्तु नानारुच्या रसिकत्वं रसिकता तयेह रम्यसारस्वतौघे वाक्यसमूहे, चतुरवचननिचये कृतिनो रमन्ते। कैः कृत्वा। सुवृत्तैः श्लक्ष्णैः श्लोकैः। मालिनीप्रभृतिभिः। किं कृत्वा। श्लेषिताङ्गैः। श्लेषोक्ति-युक्तचरणैः। पादवृत्तिप्रभृतिभिः। किं कुर्वन्तः। त्रिदिवमधरयन्तः। त्रिदिवसुखादपि काव्यरतिसुखमधिकं मत्वेत्यर्थः।

एवमेवैकत्र स्थले चन्द्रमसः पूर्णतायाः कारणं तस्य च कान्तिक्षयस्य कारणं विवेचयन् सदाचारस्य महत्त्वं प्रदर्शयन्नलिखत् शार्दूलविक्रीडितेन छन्दसा—

शुक्लस्य द्विजराज एष महसो हान्या कुवृत्तः कुतः
सद्वृत्तत्वगतोऽप्यहो भ्रमभवाद्दोषातिसङ्गादिव।
सम्प्राप्याथ पुनस्त्रयीतनुमतस्तस्याश्रयेणैव किं
शुक्लस्य क्रमशस्तथैव महसो वृद्ध्यैति सद्वृत्तताम्।।

(सि.शि. भुवनकोशे, १०)

श्लोकोऽयमर्थद्वयं धारयति। द्विजराजश्चन्द्रः सद्वृत्तत्वं, सुवर्तुलतां पौर्णमास्यां गतोऽपि पुनः कथं कुवृत्तः कुवर्तुलो भवति? तस्य कारणमत्र भ्रमभवाद्दोषातिसङ्गादिव, अर्थाद् दोषा रात्रिः, तथा पौर्णमास्यां सकलया सकलस्यापि चन्द्रस्य यः सङ्गः सोऽतिसङ्गः। तत्सङ्गानन्तरं शुक्लस्य तेजसो हानि-र्भव, तया हान्या कुवृत्तः कुत्सितवृत्तो, वक्रः स्यादितीव प्रतिभाति। यथा द्विजराजो ब्राह्मणोऽपि सद्वृत्तत्वं सदाचारत्वं गतोऽपि भ्रमभावाच्चित्त-चलनसम्भवाद्दोषातिसङ्गात्, पापातिसङ्गाच्छुक्लस्य शुद्धस्य तेजसो हानिं याति। तया कुत्सितवृत्तः स्यात्। अथ पुनस्त्रयीतनुमादित्यं प्राप्य ततोऽनन्तरं शुक्लस्य

तेजसो वृद्ध्या तथैव सद्वृत्ततां सुवर्तुलतां प्राप्नोति। तस्य भगवतस्त्रयीतनोराश्रयेणैव। यथा कुवृत्तो ब्राह्मणस्त्रयीतनुं त्रैविद्यं पर्षत्त्रैविद्यमेव वेति स्मृत्युक्तं पर्षद्रूपमन्यं ब्राह्मणं प्राप्य तेन कृतानुग्रहस्तेजोवृद्धिं तथा पुनः सुवृत्ततामेतीत्यर्थान्तरम्।

एवमत्र श्लोके भास्कराचार्यो गोलीयप्रश्नानां मध्ये जनानां सच्चारित्र्यमुपदिदेश। तस्य साहित्यिकाभिरुचेस्तु प्रमाणं गोलाध्यायस्य हृदयावर्जकमृतुवर्णनं प्रतिभाति। तेनेदं स्वीकृतमपि यत् सहृदयानां रसिकानां काव्यविदां प्रीत्यै मनोहरा कविता प्रदर्शिताऽस्ति। यथात्रोपस्थाप्यन्ते ऋतुवर्णनपरा श्लोकाः (१-१२)। अत्र प्रथमपद्यं शार्दूलविक्रीडितेन, द्वितीयं तु द्रुतविलम्बितेन, तृतीयं मिश्रोपजात्या, चतुर्थं वंशस्थेन, पञ्चमं मालिनीछन्दसा, षष्ठं सप्तमं च वसन्ततिलकया, अष्टमं मालिन्या, नवमं वंशस्थेन, रचितानि सन्ति—

उत्फुल्लन्नवमल्लिकापरिमलभ्रान्तभ्रमद्भ्रामरे
रे पान्थाः कथमव्यथानि भवतां चेतांसि चैत्रोत्सवे।
मन्दान्दोलितचूतनूतनघनस्फारस्फुरत्पल्लवै-
रुद्वेलन्नववल्लरीष्विति लपन्त्युच्चैः कलं कोकिलाः।।१।।

स्वकुसुमैर्मलिनामिव मालतीम-
वहसन्ति वसन्तजमल्लिकाः।
उपवनं विनिवारयतीव ताः
किसलयैर्मलयानिलकम्पितैः।।२।।

विहाय सौधं तृणकुड्यमण्डपे
प्रसिच्यमाने सलिलैः समन्ततः।
शुचौ रमन्ते विरलं विलासिनः
प्रियाजनैः सीकरसेचनोन्मुखाः।।३।।

निदाघदाहार्तिविघातहेतवे
वनाय कामोच्छ्रितचूतकेतवे।
व्रजन्ति वापीजलकेलिलालसाः
शुचौ रतिस्वेदगलज्जलालसा।।४।।

मदनदहनखिन्नामागतेऽप्येत्य काले
परिमलबहलानां मालतीनां नदीनाम्।
अदय दयित सिञ्चस्यात्मदृग्वारिणा किं
परिमलबहलानां मालतीनां न दीनाम्।।५।।

उच्चैर्विरौति हि मयूरकुलं यदम्ब
मन्दं कदम्बमकरन्दविमिश्रितश्च।
वातः प्रवाति पतिरेति न तेन मन्ये
येनास्ति निर्घृणविकर्णविहृत्त्वमस्य।।६।।

एवंविधं विरहिणी विरहेण खिन्ना
भिन्नाञ्जनच्छविघने गगने घनर्तौ।
मत्वा प्रियं तदभयं हृदयं प्रविष्टं
ब्रूते सपेशलमलं परिहासमिश्रम् ।।७।।

स्वतनुजवनराज्या पुष्पवत्याश्लिषन्त्या
ह्यनुचितकृतसङ्गोऽस्मीति शैलोऽनुतप्तः।
निशि शशिकरचञ्चन्निर्झरैरश्रुकल्पैः
शरदि हृदिजखेदस्वेदवान् रोदितीव।।८।।

सहस्यकाले बहुशस्यशालिनीं
चितामवश्यायकमौक्तिकोत्करैः।
प्रहृष्टपुष्टाखिलगोकुलामिलां
विलोक्य हृष्यन्त्यधिकं कृषीबलाः।।९।।

अरुणनीलनिमीलितपल्लवं
प्रचुरफुल्लसमुल्लसनैः श्रियम्।
वहति काञ्चन काञ्चनकाननं
नवतरां नितरां शिशिरागमे।।१०।।

अपटुतिग्ममरीचिमरीचिभि-
र्नहि तथा शिशिरे शिशिरक्षतिः।
निशि यथोष्मलपीनघनस्तनी-
भुजनिपीडनतः स्वपतां नृणाम्।।११।।

ऋतुव्यावर्णनव्याजादीषदेषा प्रदर्शिता।
कविता तद्विदां प्रीत्यै रसिकानां मनोहरा।।१२।।

अत्र भास्कराचार्यः कविरूपेण रसिकानां प्रीत्यै संश्लिष्टं पद्यबन्धं यथा कृतवान् तत्तु नूनं तस्य काव्यपाटवं दर्शयति। कस्यापि रससिद्धकवेरिव ऋतुवर्णनं ज्योतिर्जगत्यनुपमेयमेवास्ति, अत्र नास्ति सन्देहः।

भास्कराचार्यस्य कवित्वप्रतिभा विलक्षणैव दृश्यते। शुष्के क्लिष्टे चापि गणितविषये सः सुकल्पनया नूतनोपमया च सरसतामानीतवान्। यथाऽत्र बीजगणिते खहरराशेरनन्तताया विषये समुदाहरति उपजातिछन्दसा—

अस्मिन् विकारः खहरे न राशावपि प्रविष्टेष्वपि निःसृतेषु।
बहुष्वपि स्याल्लयसृष्टिकालेऽच्युते भूतगणेषु यद्वत्।।४।।

एवमेव बीजगणितस्य मङ्गलाचरणे अव्यक्तगणितं परमेश्वरं च समतुलयन् उक्तवानुपजातिछन्दसा—

उत्पादकं यत् प्रवदन्ति बुद्धेरधिष्ठितं सत्पुरुषेण सांख्याः।
व्यक्तस्य कृत्स्नस्य तदेकबीजमव्यक्तमीशं गणितं च वन्दे।।१।।

लीलावत्याः क्षेत्रव्यवहारे एकादशसूत्रस्योदाहरणे पश्यतामयं श्लोको मन्दाक्रान्ताछन्दसा—

चक्रक्रौञ्चाकुलितसलिले क्वापि दृष्टं तडागे
तोयादूर्ध्वं कमलकलिकाग्रं वितस्तिप्रमाणम्।
मन्दं मन्दं चलितमनिलेनाहतं हस्तयुग्मे
तस्मिन् मग्नं गणक! कथय क्षिप्रमम्भः प्रमाणम्।।१।।

अत्र श्लोके सानुप्रासं मन्दाक्रान्ताछन्दः कस्य चेतो न हरति?

भास्कराचार्यस्य लीलावतीग्रन्थस्य शीर्षकविषये विद्वांसो बहुचर्चां कुर्वन्ति। केचिद् वदन्ति यत् लीलावती भास्कराचार्यस्य पुत्री आसीत्। केचन वदन्ति सा भास्कराचार्यस्य भार्याऽऽसीत्। केषाञ्चिन्मते सा तस्य प्रेमिकाऽभवत्। अन्ये च कामपि कल्पितां युवतिं नायिकां मन्यन्ते। यत् किमपि भवतु लीलावतीनाम्ना भास्कराचार्यस्य सरसतायाः सहृदयतायाश्च प्रवाहोऽत्र प्रस्फुटितोऽस्ति। गणितविषयस्य मध्ये लीलावत्याः संयोजनं कृत्वा नूनमेव भास्कराचार्येण

सुरसरिदिव रसं प्रवाहितम्। यथाऽत्र श्लोके द्रष्टव्यं भावप्रवहणं शार्दूलविक्रीडितेन छन्दसा—

बाले बालकुरङ्गलोलनयने लीलावति प्रोच्यतां
पञ्चत्र्येकमिता दिवाकरगुणा अङ्काः कति स्युर्यदि।
रूपस्थानविभागखण्डगुणने कल्याऽसि कल्याणिनि
च्छिन्नास्तेन गुणेन ते च गुणिता जाताः कति स्युर्वद।।

(अभिन्नपरिकर्माष्टके-५।१)

अव्यक्तगणितस्यैकं सरसमुदाहरणमवलोकनीयमस्ति। क्वचिदेको भ्रमरसमुदायो विद्यते। अस्य समुदायस्य पञ्चमांशः कदम्बपुष्पं प्रत्यगमत्। तृतीयांशश्च शिलीन्ध्रपुष्पमगमत्। तयोः पञ्चांशत्र्यंशयोर्विश्लेषोऽन्तरं त्रिगुणितं कुटजं गिरिमल्लिकां प्रत्यगच्छत्। अपरश्चैको भृङ्गो एकस्मिन्नेव काले केतकमालती-प्रियापरिमलैः प्राप्तसन्देशो दोलायमान आकाशे इतस्ततो भ्रमति, तदा भ्रमर-समूहस्य कियती संख्याऽऽसीदिति प्रश्नः। अस्य एकवर्णसमीकरणप्रकरणे भावपूर्णं सचित्रमुपस्थापनं दर्शनीयमेवास्ति। शार्दूलविक्रीडितेन छन्दसा यथा—

पञ्चांशोऽलिकुलात् कदम्बमगमत्र्यंशः शिलीन्ध्रं तयो-
र्विश्लेषस्त्रिगुणो मृगाक्षि कुटजं दोलायमानोऽपरः।
कान्ते केतकमालतीपरिमलप्राप्तैककालप्रिया-
दूताहूत इतस्ततो भ्रमति खे भृङ्गोऽलिसंख्यां वद।।६।।

लीलावत्या मङ्गलाचरणेऽनुप्रासालङ्कारस्य छटा दर्शनीयाऽस्ति। यथाऽत्र निदर्शनार्थं प्रस्तूयते—

लीलागललुलल्लोलकालव्यालविलासिने।
गणेशाय नमो नीलकमलामलकान्तये।।१।।

लीलावत्या उपसंहारे सुललितपद्येन तस्या महत्त्वं प्रतिपादयन् श्लेषेण भास्कराचार्य उक्तवान् वसन्ततिलकाछन्दसाऽत्र यथा—

येषां सुजातिगुणवर्गविभूषिताङ्गी
शुद्धाऽखिलव्यवहृतिः खलु कण्ठसक्ता।
लीलावतीह सरसोक्तिमुदाहरन्ती
तेषां सदैव सुखसम्पदुपैति वृद्धिम्।।२।।

अनेन पद्येनेदमपि स्पष्टं भवति यल्लीलावती भास्कराचार्यस्य कन्या नैवाऽऽसीत्। यतोऽत्र श्लोके कस्या अपि तथाविधाया युवत्या वर्णनमस्ति, या कण्ठसक्ता भूषिताङ्गी सरसोक्तिमुदाहरन्ती सदैव सुखस्य वृद्धिं करोति। एवंविधा काप्यन्या एव नायिका भवितुमर्हति या निश्चप्रचेन प्रेयसी अथवा कवेः कल्पनालोके विचरन्ती कापि रमणीया नायिका स्यात्।

प्रायो गणितशास्त्रे लोकरुचेरभावो भवति। जना गणितस्य नाम्नैव बिभ्यति। भास्कराचार्यस्येदं महत्त्वं यत् स गणितविषयेऽपि सुरुचिसम्पादनाय मनोहरपद्यानां लालित्यभावानां लोकानुरञ्जनसम्पादनसमर्थानामुदाहरणानां सफलतया संयोजनं समलञ्चकार। उदाहरणार्थं विप्रलम्भशृङ्गारस्यैकं पद्यमेतत्। एको भ्रमरः परिमललुब्धो निशि कमलकोषे मधुपानरतो रात्रिवशाद् निरुद्धोऽभवत्। तस्य प्रिया अलिनी भ्रमरं प्रति आकृष्टा सती कमलकोषस्य बहिर्भागे गुञ्जन्ती आसीत्। अत्र भागमूलदृष्टे गणिते प्रसङ्गोऽयं प्राप्तोऽस्ति, यथाऽत्र मालिनीछन्दसा वर्णनम्—

अलिकुलदलमूलं मालतीं यातमष्टौ
निखिलनवमभागाश्चालिनी भृङ्गमेकम्।
निशि परिमललुब्धं पद्ममध्ये निरुद्धं
प्रति रणति रणन्तं ब्रूहि कान्तेऽलिसंख्याम्।।५।।

न केवलं शृङ्गाररसस्यैव वर्णने भास्कराचार्यो दक्ष आसीत्, अपि तु विषयानुरूपमन्येषामपि रसानां समायोजनं कृतवान्। वीररसस्य महार्णवस्तु महाभारतमेव। वीररसानुरूपं भावं सङ्ग्राह्य महाभारतीयपात्राणां माध्यमेन गणितशास्त्रे उदाहरणमददात्। यथाऽत्र लीलावत्याः श्लोकेऽस्मिन् द्रष्टव्यं शार्दूलविक्रीडितेन वीररसस्य प्रवहणम्—

पार्थः कर्णवधाय मार्गणगणं क्रुद्धो रणे सन्दधे
तस्यार्धेन निवार्य तच्छरगणं मूलैश्चतुर्भिर्हयान्।
शल्यं षड्भिरथेषुभिस्त्रिभिरपि च्छत्रं ध्वजं कार्मुकं
चिच्छेदास्य शिरः शरेण कति ते यानर्जुनः सन्दधे।।४।।

इत्थमत्र भास्कराचार्यस्य सिद्धान्तशिरोमणि-बीजगणित-लीलावत्याश्चालोडनं कृत्वा साहित्यसौन्दर्यस्य विषयाः प्रदर्शिताः।

**मानसागरीफलितग्रन्थस्य साहित्यसौष्ठवम्**

ग्रन्थोऽयं ज्योतिषशास्त्रस्य फलितविषये लोकप्रियो बहुप्रसिद्धश्चास्ति। अत्र जन्मपत्रिकानिर्माणविधिः फलादेशश्च ज्योतिर्विदां बहूपयोगी विद्यते। ज्योतिषानुरागिजनानां कृते नूनमेव कल्पद्रुमोऽयम्। उत्तरभारते सर्वेषां दैवज्ञानां गृहे ग्रन्थोऽयं प्राप्यते, अनेनैव अस्योपयोगिताया लोकप्रियतायाश्च प्रामाणिकता सिद्ध्यति। अस्य लेखकः कोऽपि मानसागरः अथवा मानसिंहस्य राज्यकाले तस्य प्राशस्त्यै केनाप्यज्ञातेन विदुषाऽस्य रचना कृता, अथवा गुर्जरदेशस्य (गुजरातप्रदेशस्य) शाण्डिल्यगोत्रोत्पन्नो हरजीमहोदयोऽस्य रचयिता आसीत्। केचन योगिनीदशायाः प्रणेता हरजीमहोदयस्तथा च तस्य पिता जनार्दनदैवज्ञो ग्रन्थकर्ता आसीदिति वदन्ति। यथोक्तं मानसागर्या अन्तिमे भागे शार्दूलविक्रीडितेन छन्दसा—

आसीद् गुर्जरमण्डले द्विजवरः शाण्डिल्यगोत्रोद्भवः
श्रीमद्याजिकवंशमण्डनमणिर्ज्योतिर्विदामग्रणी।
श्रौतस्मार्त्तरतो जनार्दन इति ख्यातः स्वकीयैर्गुणै-
स्तत्सूनुर्हरजी दशां स्फुटतरां चक्रे परां योगिनीम्।।४४२।।

ग्रन्थकारस्य नामविषये वैमत्यं तु विद्यत एव। परञ्च ग्रन्थोऽयं स्वनाम्नैव ख्यातिमगात्। अस्य ग्रन्थस्य रचनाकालः १७६५ शकाब्दः (१८४३ खीष्टाब्दः) अस्ति। अस्य ग्रन्थस्य श्लोका बहुरमणीयास्तथा च लालित्यपरिपूर्णाः सन्ति। अत्र केचन सुप्रसिद्धाः श्लोकाः प्रदर्श्यन्ते, ये विदुषां मुखाग्रे तिष्ठन्ति। शार्दूल-विक्रीडितेन छन्दसा रचिता इमे श्लोकाः—

सूर्यः शौर्यमथेन्दुरुच्चपदवीं सन्मङ्गलं मङ्गलः
सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः सुखं शं शनिः।
राहुर्बाहुबलं करोतु विपुलं केतुः कुलस्योन्नतिं
नित्यं प्रीतिकरा भवन्तु भवतां सर्वे प्रसन्ना ग्रहाः।।५।।

कल्याणं कमलासनः स भगवान् विष्णुः सजिष्णुः स्वयं
प्रालेयाद्रिसुतापतिः सतनयो ज्ञानं च निर्विघ्नताम्।
चन्द्रज्ञास्फूर्जिदर्कभौमधिषणच्छायासु तैरन्वित-
ज्योतिश्चक्रमिदं सदैव भवतामायुश्चिरं यच्छतु ।।६।।

सूर्यो यच्छतु भूपतां द्विजपतिः प्रीतिं परां तन्वतां
माङ्गल्यं विदधातु भूमितनयो बुद्धिं विधत्तां बुधः।
गौरं गौरवमातनोतु च गुरुः शुक्रः सशुक्रार्थदः
सौरिर्वैरिविनाशनं वितनुतां रोगक्षयं सैंहिकः।।७।।

जन्मपत्रिकाया आदौ सर्वेऽपि फलितशिरोमणय अस्यैव ग्रन्थस्य मङ्गलाचरणं लिखन्ति, यथाऽत्र—

वंशो विस्तरतां यातु कीर्तिर्यातु दिगन्तरम्।
आयुर्विपुलतां यातु यस्यैषा जन्मपत्रिका।।१३।।
यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं तथान्ये।
विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय।।१४।।
आदित्याद्या ग्रहाः सर्वे सनक्षत्राः सराशयः।
सर्वान् कामान् प्रयच्छन्तु यस्यैषा जन्मपत्रिका।।१५।।

एवमत्र ग्रन्थे ज्योतिषशास्त्रीयफलादेशविषयकाः श्लोका अध्यायक्रमेण सम्यग् विरचिताः सन्ति।

अत्र सर्वेऽपि श्लोका विविधछन्दस्सु सुललितेषु च पद्यबन्धेषु निबद्धाः सन्ति। शब्दानां चयनमर्थविन्यासश्च भावानुरूपं सर्वत्रैव कृतमस्ति। उदाहरणार्थं सूर्यादिग्रहाणां मेषादिराशिस्थे सति फलद्योतकानीमानि पद्यानि प्रस्तुतानि सन्ति, यानि द्रुतविलम्बितछन्दसि विरचितानि सन्ति—

भवति साहसकर्मकरो नरो
रुधिरपित्तविकारकलेवरः।
क्षितिपतिर्मतिमान् हितकृत्सदा
सुमहसां महसामधिपे क्रिये।।३१३।।
परिमलैर्विमलैः कुसुमासनैः
सुवसनैः पशुभिः सुखमद्भुतम्।
गवि गतो हि रविर्जलभीरुतां
विहितमाहितमादिशते नृणाम्।।३१४।।

स्थिरमतिश्च पराक्रमतोऽधिको
विभुतयाऽद्भुतकीर्तिसमन्वितः।
दिनकरे करिवैरिगते नरो
नृपरतः परितोषकरो भवेत्।।३१७।।

दिनपतौ युवतौ समवस्थिते
नरपतेश्च नरो द्रविणं लभेत्।
मृदुवचः श्रुतगेयपरायणः
समहिमामहिमापहताहितः।।३१८।।

नरपतेरतिभीतिमहर्निशं
जनविरोधविधानमघं दिशेत्।
कलिमनाः परिकर्मरतिर्घटे
दिनमणिर्न मणिर्द्रविणादिकम्।।३१९।।

कृपणतां कलहं च भृशं रुषं
विषहुताशनशस्त्रभयं दिशेत्।
अलिगतः पितृमातृविरोधितां
दिनकरो न करोति समुन्नतिम्।।३२०।।

**मुहूर्तचिन्तामणेः साहित्यसौन्दर्यम्**

ज्योतिषशास्त्रे मुहूर्तविषयस्य मान्यता प्राचीनकालादेव सर्वैः स्वीकृता। यद्यपि मुहूर्तविषयका बहवो ग्रन्था विद्यन्ते, तथाप्यस्य मुहूर्तचिन्तामणिग्रन्थस्य महत्त्वं किञ्चिदधिकमेव दृश्यते। अस्य कर्ता श्रीरामदैवज्ञोऽनन्तदैवज्ञात्मजः १५२२ शकाब्दे मुहूर्तचिन्तामणिं रचयामास। अयं हि प्रख्यातज्योतिर्विदो नीलकण्ठदैवज्ञस्यानुज आसीत्। अस्य ग्रन्थस्य रचना काश्यामेवाभवत्।

मुहूर्तचिन्तामणिग्रन्थे श्लोकानां रचना विविधछन्दस्सु पाण्डित्यपूर्णा राजते। स्वल्पेषु शब्देषु सुविस्तृतविषयाणां सम्प्रेषणं रचनाकारस्य वैशिष्ट्यमस्ति। यथा रवियोगस्य लक्षणमेकेनैवानुष्टुभा कृतं दृश्यते—

सूर्यभाद्वेद-गो-तर्क-दिग्विश्वनख-सम्मिते।
चन्द्रर्क्षे रवियोगाः स्युर्दोषसङ्घविनाशकाः।।२७।।

आचार्यः सुललितपद्यबन्धेऽपि निपुणो विद्यते। ग्रन्थस्यास्य मङ्गलाचरणे नवीनैव कल्पना कल्पिता। गजाननो गणेश एकदन्तेन सुप्रसिद्धः प्रथितोऽस्ति। परञ्च भगवत्या मातुः पार्वत्याः कर्णालङ्कारभूतस्य केतकीपत्रस्य स्वशुण्डेन तत् केतकीपत्रं स्वमुखाग्रे दत्वा द्वितीयदन्तोत्पत्तेश्चामत्कारिकं नवीनं स्वरूपं परिकल्पितम्। बालका जनन्या अङ्के स्वाभाविकरूपेण बालसुलभचाञ्चल्यात् क्रीडन् मातुराभूषणानां स्पर्शं कुर्वन्ति, क्रीडन्ति च। अत्र गणेशोऽपि तथैव कुर्वन् द्विदन्तः समभवत्। अस्यैव भावस्य चित्रणमत्र आचार्यकृतमेवमस्ति, यथा—

गौरीश्रवः केतकपत्रभङ्गमाकृष्य हस्तेन ददन्मुखाग्रे।
विघ्नं मुहूर्ताकलितद्वितीयं दन्तप्ररोहो हरतु द्विपास्यः।।१।।

विवाहमुहूर्तस्यौचित्यं प्रतिपादयन् तर्कपूर्णा युक्तिस्तेनोपस्थापिता। भार्याग्रहणं गार्हस्थ्यजीवनस्यानिवार्यभूतम्। भार्यैव धर्मार्थकामस्य त्रिवर्गस्य प्राप्तये सहायिका भवति। सापि यदा शुभशीलयुक्ता स्यात्तदैव त्रिवर्गस्य सम्प्राप्तिः परिकल्प्यते। सा लग्नवशेनैव शुभशीलयुक्ता जायते। अत एव सुमुहूर्तस्य, सुलग्नस्य च महत्त्वमस्ति। अतो विवाहसमये मुहूर्तविचारस्यावश्यकता निरूपिता। यथाऽत्र विवाहप्रकरणस्य प्रथमश्लोकः —

भार्या त्रिवर्गकरणं शुभशीलयुक्ता
शीलं शुभं भवति लग्नवशेन तस्याः।
तस्माद्विवाहसमयः परिचिन्त्यते हि
तन्निघ्नतामुपगताः सुतशीलधर्माः।।

यात्राप्रकरणे कथं सुललितेन श्लोकेन यात्राविषयिणी चर्चा तिथिनक्षत्रदिवसानां परिकथनपूर्वकं कृतेति द्रष्टुं शक्यते, येनाचार्यस्य काव्यकौशलं सम्यग् ज्ञायते—

न षष्ठी न च द्वादशी नाऽष्टमी नो
सिताद्या तिथिः पूर्णिमाऽमा न रिक्ता।
हयादित्य-मैत्रेन्दुजीवान्त्यहस्त-
श्रवोवासवैरेव यात्रा प्रशस्ता।।९।।

विजयादशमीतिथिः सर्वेषु कार्येषु शुभा भवति। अस्मिन् दिने सीमोल्लङ्घनमपि कुर्वन्ति राजानः। अत्रैव श्रवणनक्षत्रयुक्ता तिथिरेषा महाशुभकरी

भवति। अस्य सुललितपद्येनोपस्थापनं कृतमस्ति आचार्येण, यस्य श्रवणमात्रेण कण्ठाग्रता समुत्पद्यते। तद्यथा—

इषमासि सिता दशमी विजया
शुभकर्मसु सिद्धिकरी कथिता।
श्रवणर्क्षयुता सुतरां शुभदा
नृपतेस्तु गमे जयसन्धिकरी।।७७।।

**जातकाभरणग्रन्थस्य साहित्यलालित्यम्**

जातकाभरणस्य रचयिता ज्योतिर्विदग्रगण्यो ढुण्ढिराजदैवज्ञो गोदावर्या नद्याः सुरम्यतटस्य नातिदूरे पार्थनगरे समजनि। अयं हि ज्ञानराजाचार्यस्य शिष्य आसीत्, तेन ज्ञानराजस्य कालादनुमीयते यदस्य कालः १४६३ शकाब्दोऽस्ति। यद्यप्यनेन क्वापि स्वसमयस्य चर्चा न कृता, तथापि ज्ञानराजस्य शिष्यत्वं स्वीकृतवान् स्वकीये जातकाभरणस्य तृतीयश्लोके। अस्य फलितविषयकग्रन्थस्य जातकाभरणस्य लोकप्रियता ज्योतिर्विदां समवाये व्यापृता वर्तते। केवलमनेनैकेन ग्रन्थेन समग्रमपि फलितज्ञानं प्राप्तुं शक्यते। यत्रास्य ग्रन्थस्य जातकानां फलादेशकथने महत्त्वं, तत्रैव विविधछन्दस्युपनिबद्धं सुललितपद्यजनितं साहित्यसौन्दर्यमपि महत्त्वाय परिकल्प्यते। यथात्रोदाहरणार्थं गणेशविषयकस्यास्य श्लोकस्य विद्वद्भिरवगाहनं कर्तव्यम्। अत्रानन्देन सर्वाङ्गान्दोलनपूर्वकं गजाननो विघ्नेश्वरः श्रीगणेशो वन्दितोऽस्ति। शार्दूलविक्रीडितेन छन्दसा विरचितोऽयं श्लोक एवमस्ति—

शुण्डामण्डलसम्प्रसारकरणैर्मौलिस्थलान्दोलनै-
र्नेत्रोन्मीलनमीलनैरविरलश्रीकर्णतालक्रमैः।
दानालिध्वनितैर्विलासचरितैरूर्ध्वाननोद्गर्जितै-
र्जातानन्दभरः करीन्द्रवदनो नः श्रेयसे कल्पताम्।।७।।

एवमेवात्र उपजातिछन्दसा धनुर्लग्नजातस्य जातकस्य फलमनुप्रासालङ्कारयुतं दर्शनीयमस्ति। यथा च—

प्राज्ञश्च राज्ञः परिसेवनज्ञः सत्यप्रतिज्ञः सुतरां मनोज्ञः।
सुज्ञः कलाज्ञश्च धनुर्विधिज्ञश्चेन्नृर्धनुर्यस्य जनुस्तनुः स्यात्।।९।।

अत्रास्मिन् पद्ये द्रुतविलम्बितछन्दसा मिथुनराशिगतशुक्रस्य फलं द्रष्टव्यं, यत्र सुललितशब्दैर्विषयस्योपस्थापनं कृतमस्ति, यथा—

भृगुसुते जनने मिथुनस्थिते सकलशास्त्रकलामलकौशलम्।
सरलता ललिता किल भारती सुमधुरा मधुरान्नरुचिर्भवेत्।।६३।।

इन्द्रवज्राछन्दसा मङ्गलाचरणस्योपनयनमपि हृदयावर्जकमस्ति। प्रथमपाद-पूजितस्य द्विपास्यस्य पादारविन्दवन्दना मनोरमा विद्यते। सा विद्वद्भिरास्वादनी-याऽस्ति—

श्रीदं सदाहं हृदयारविन्दे पादारविन्दं वरदस्य वन्दे।
मन्दोऽपि यस्य स्मरणेन सद्यो गीर्वाणवन्द्योपमतां समेति।।१।।

**सारावल्याः सौष्ठवम्**

कल्याणवर्मनामकेन दैवज्ञेन सारावलीग्रन्थस्य रचना ८२१ शकाब्दे कृताऽस्ति। अस्य जन्मस्थलं रीवाँराज्यस्य करवीक्षेत्रस्य ''देवग्रामः'' आसीत्। विपुलेऽस्मिन् सारावलीग्रन्थे जातकपद्धत्या जन्माङ्गानुसारेण फलादेशकथनस्य सर्वेऽपि विषयाः सङ्कलिताः सन्ति। विविधानां योगानां निरूपणं, शुभाशुभोत्पादकानां विषयाणां विवेचनं ग्रन्थकारस्य वैशिष्ट्यमस्ति। ग्रन्थेऽस्मिन् सुललितपद्यैः श्लोकरचना रचिता विद्यते। मङ्गलाचरणे भगवतो भास्करस्य प्रभावविषये सुरुचिपूर्णं भावं समुपस्थापितं राजते, तद्यथा—

यस्योदये जगदिदं प्रतिबोधमेति
मध्यस्थिते प्रसरति प्रकृतिक्रियासु।
अस्तं गते स्वपिति चोच्छ्वसितैकमात्रं
भावत्रयो स जयति प्रकटप्रभावः।।१।।

अत्र मीनराशिस्थचन्द्रस्य फलविचारे कमनीयोऽयं श्लोको मार्मिकं भावमुत्पादयति, तद्यथा—

शिल्पोत्पन्नाधिकारोऽहितजयनिपुणः शास्त्रविच्चारुदेहो
गेयज्ञो धर्मनिष्ठो बहुयुवतिरतः सौख्यभाग् भूपसेवी।
ईषत्कोपो महत्कः सुखनिधिधनभाक् स्त्रीजितः सत्स्वभावो
यानासक्तः समुद्रे तिमियुगलगते शीतगौ दानशीलः।।७९।।

अत्र राजयोगप्रकरणे आर्याछन्दसा शब्दानां सुष्ठुसञ्चयनं प्रबलं भावमुपस्थापयति, यथा—

व्योम्नि शङ्खधवलो निशाकरो भार्गवस्तपसि संस्थितः शुचिः।
आयगाश्च यदि सर्व एव ते स्यान्महीपतिरतुल्यपौरुषः।। (३५।१६६)

'स'कारस्य सम्यक् संयोजनेनात्र श्लोकेऽनुप्रासालङ्कारस्य छटा दर्शनीयाऽस्ति—

लग्ने कर्कटके सशीतकिरणे वा सद्ग्रहैः सङ्गते
स्वर्क्षस्थैर्जगतोऽस्य सृष्टिमकरोद्विश्वेश्वरः शाश्वतीम्।
यस्यैवं भवति प्रसूतिसमये पुंसः स सम्पालयेत्
त्रैलोक्यं सुरसुन्दरीजनवृतः क्रीडां समासेवते।। (५३।२)

**होरारत्नस्य साहित्यचारुता**

श्रीबलभद्रमिश्रोऽस्य फलितविषयकग्रन्थस्य रचयिता विद्यते। अयं पण्डित-श्रीदामोदरस्यात्मजो ज्योतिषशास्त्रे सुप्रसिद्धोऽस्ति, गणिते, फलिते चानेकेषां ग्रन्थानां रचनाञ्चकार। प्रखरपाण्डित्यपूर्णस्य बलभद्रमिश्रस्य जन्मस्थलं कान्यकुब्जं (कन्नौज) विद्यते। अस्य कालः १७१० वैक्रमाब्दोऽस्ति। ग्रन्थकारेण ग्रन्थस्यान्ते समुल्लिखितं यत् १७१० विक्रमसंवत्सरे ग्रन्थोऽयं पूर्णतामगात्।

ग्रन्थेऽस्मिन् फलितज्योतिषस्य सर्वाणि उपयोगीनि ज्ञानरत्नानि सङ्कलितानि सन्ति। यथास्य संज्ञास्ति तथैव विषया अपि रत्नत्वेन सञ्चिता विद्यन्ते। यद्यप्यत्र बहूनामाचार्याणां मतानि दत्तानि, तथापि ग्रन्थकारविरचिताः श्लोका नवीनमेव सौन्दर्यमुपस्थापयन्ति। विविधेषु छन्दस्सु ज्योतिषशास्त्रं, साहित्यशास्त्रं, शब्दशास्त्रं च सम्यगवलोक्यन्ते। यथाऽत्र मङ्गलाचरणस्य श्लोकोऽयं विविधदेवानां स्तुतौ प्रस्तुतः —

नित्यं सङ्कटनाशिनीमभयदां श्रीसङ्कटामीश्वरीं
भूतेशं भुवि पूजितं सुरवरैः श्रीशङ्करं शङ्करम्।
बालं गोपमहीपतेर्हि विपदां कालं तमालद्युतिं
वन्दे वीरधुरन्धरं धरणिजाशोकापहं मारुतिम्।।

उच्चराशिगतसूर्यस्य फलं सुललितमत्र लेखकेनोपन्यस्तम्, तद्यथा—

पुण्यैर्धनैः परिजनैः सुतदारकोशै-
श्चण्डप्रतापनिकरैर्विजितारिसङ्घः।
कोपः कुले निजजनैः परिपूज्यमान-
स्तुङ्गर्क्षगे दिनकरे भवति प्रजातः।। (४।१)

अत्रैव वृत्तान्तरेणोच्चराशिगतचन्द्रस्य फलमाचार्येणोक्तम्—

दाता भोक्ता प्रचुरयुवतीनायको विश्वबन्धु-
र्नानाक्रीडापरिणतमतिश्चञ्चलात्मा स्वभावः।
पुत्रीपुत्रैर्हयगजरथैः पूर्णगेहो विलासी
चन्द्रे तुङ्गे भवति मनुजो लोकमान्यः प्रसन्नः।। (४।२)

एवमत्र ग्रन्थे आचार्यबलभद्रो नैकेषां छन्दसां प्रचुरं प्रयोगं कृतवान्। विस्तृतोऽयं ग्रन्थः स्वलालित्यपदेन विदुषां चेतांसि समाकर्षणे नितान्तं समर्थो विद्यते। अत्र कतिपयैः श्लोकैर्मयाऽत्र प्रयासो विहितः।

## चमत्कारचिन्तामणिस्तस्य साहित्यिकसौन्दर्यञ्च

फलितज्योतिषविषयिणीयं रचना सुललितपद्यात्मिका बहुमान्यास्ति फलितज्ञानां विदुषां कृते। अस्य ग्रन्थस्य प्रणेता आचार्यनारायणभट्टो विद्यते। अयं हि आचार्यः स्वकीयेऽस्मिन् ग्रन्थे एकेनैव छन्दसा सार्धशतपद्यानां रचनाञ्चकार। यद्यपि रचनाकारस्य श्रीनारायणभट्टस्य देशकालविषये क्वाप्युल्लेखो नास्ति, तथापि अस्य रचना द्वादशशताब्द्याः पश्चादेव परिकल्प्यते। अन्तिमे श्लोके 'राज्ञां तोषकारिणीयं रचना' इति ग्रन्थोक्तमस्ति। तेन ज्ञायते यद् यस्मिन् काले राज्ञां महत्त्वमधिकमासीत्, तदैव कृतिरियं रचिता। नारायणनाम्ना बहवो दैवज्ञाः समभवन्। तेषु द्वयोः समुल्लेखो गणकतरङ्गिण्यां सुधाकरद्विवेदिना कृतमस्ति, परञ्चात्र चमत्कारचिन्तामणेर्विवरणं नास्ति।

चमत्कारचिन्तामणिर्वस्तुतो चमत्कारोत्पादिका रचनाऽस्ति। अत्र पद्यानां लालित्यं माधुर्यं चातीव मनोहरं विद्यते। यथाऽत्र लग्नगतस्य शुक्रस्य फलं द्रष्टव्यं यच्च गेयछन्दसा रचितमस्ति—

समीचीनमङ्गं समीचीनसङ्गः
समीचीनबह्वङ्गनाभोगयुक्तः।
समीचीनकर्मा समीचीनशर्मा
समीचीनशुक्रो यदा लग्नवर्ती ।।१।।

मुखं चारुभावं मनीषाऽपि चार्वी
सुखं चारु चारूणि वासांसि तस्य।
कुटुम्बे स्थितः पूर्वदेवस्य पूज्यः
कुटुम्बेन किं चारु चार्वङ्गिकामः।।२।।

**जातकपारिजातस्य साहित्यिकं वैशिष्ट्यम्**

अस्य ग्रन्थस्य रचयिता आचार्यो वैद्यनाथः १३४७ शकाब्दस्य मन्यते। ग्रन्थेऽस्मिन् विविधानामाचार्याणां मतान्युद्धृतानि सन्ति। आचार्यस्य स्वकीयाः श्लोका अपि साहित्यरसपूरिताः सन्ति। अत्र विविधछन्दस्सु पद्यानां रचना रचनाकारस्य वैशिष्ट्यं प्रदर्शयति। यथा हि मङ्गलाचरणस्य पद्यमिदं मननीयमस्ति—

श्रीकान्ताजशिवस्वरूपममरज्योतिर्गणस्वामिनं
मायातीतमशेषजीवजगतामीशं दिनेशं रविम्।
नत्वा गर्गपराशरादिरचितं सङ्गृह्य होराफलं
वक्ष्ये जातकपारिजातमखिलज्योतिर्विदां प्रीतये।।

राजयोगाध्यायस्य श्लोकोऽयं लालित्यगुणयुक्तो विद्यते—

उपचयगृहसंस्थो जन्मपो यस्य चन्द्रात्
शुभगृहनवमांशे केन्द्रयाताश्च सौम्याः।
सकलबलवियुक्ता ये च पापाभिधानाः
स भवति नरनाथः शक्रतुल्यो बलेन।। (७।२३)

एवमेव वृत्तान्तरेण द्रष्टव्योऽयं श्लोकः—

उच्चाभिलाषी सविता त्रिकोणे
स्वर्क्षे शशी जन्मनि यस्य जन्तोः।
स शास्ति पृथ्वीं बहुरत्नपूर्णां
बृहस्पतिः कर्कटकोपगश्चेत्।। (७।२३)

पुनश्च छन्दसान्तरेण पर्वतयोगस्य कथनप्रकरणे श्लोकोऽयं साहित्यसौष्ठवयुतोऽस्ति। यथाऽत्रावलोकनीयम्—

सौम्येषु केन्द्रगृहेषु सपत्नरन्ध्रे
शुद्धेऽथवा शुभयुते यदि पर्वतः स्यात्।
लग्नान्त्यपौ यदि परस्परकेन्द्रयातौ
मित्रेक्षितौ भवति पर्वतनाम योगः।। (७।१२८)

एवं प्रकारेण विविधेषु छन्दस्सु ज्योतिषशास्त्रस्य सारभूता विषयाः सङ्कलिताः सन्ति। अस्य ग्रन्थस्य फलितविषये बहुमान्यता विद्यते। गम्भीरार्थ-प्रतिपादकानां विषयाणां तथा च सुललितपद्यबन्धानां कारणाद् ग्रन्थेऽत्र क्वापि नीरसता नास्ति।

### भावकुतूहलस्य साहित्यिकं वैशिष्ट्यम्

श्रीकरुणाकरदैवज्ञस्य पौत्रः, शम्भुनाथदैवज्ञस्य सूनुः श्रीजीवनाथः भावकुतूहलग्रन्थस्य रचनाञ्चकार। अयं मैथिलप्रदेशोद्भवः फलितविषयस्य प्रखरपण्डितोऽभवत्। ग्रन्थेऽस्मिन् जातकानां जन्मवशाद् भविष्यनिर्धारणार्थं सुललितपद्येषु श्लोका रचिताः सन्ति। उदाहरणार्थमत्र केचन श्लोका विदुषां प्रतीत्यर्थं प्रस्तौमि—

परमोच्चमजे दशभिर्वृषभे शिखिभिर्मकरे गजयुग्मलवैः।
तिथिभिर्युवतीभवने विधुभे किल पञ्चभिरेव झषे त्रिधनैः।।८।।
कृतिभिश्च तुलाभवने रवितः कथितं मदने खलु नीचमतः।
मिथुने तमसः शिखिनो धनुषि प्रथमे बुधभे गुरुभे भवनम्।।९।।

भौमस्यावस्थाया वर्णनप्रसङ्गे चित्ताकर्षकोऽयं श्लोकः मननीयोऽस्ति—

मदननन्दनगोऽवनिनन्दनः शयनगश्च कलत्रसुतक्षयम्।
प्रथमतः कुरुते रिपुणेक्षितो रिपुग्रहे करभङ्गमनङ्गतः।।४।।

### उत्तरकालामृतम्

दक्षिणभारतस्य प्रसिद्धेऽस्मिन् ग्रन्थे सुललितपद्येन फलितशास्त्रस्य विषया विवेचिताः सन्ति। अस्य लेखकः कालिदासो दक्षिणभारतीय एव विद्यते। अस्य कालो ग्रन्थेन नैव ज्ञायते, परञ्च विषयभाषाविवेचनरीत्या पञ्चदशशतकादनन्तरमेव प्रतिभाति। प्रख्यातस्य महाकवेः कालिदासस्येयं कृतिर्नास्ति। अयं हि कालिदासः

कोऽप्यन्य एव दैवज्ञः कालिदासो विद्यते। सम्पूर्णोऽयं ग्रन्थः शार्दूलविक्रीडितेन छन्दसा प्रणीतोऽस्ति। उदाहरणार्थं पद्यमिदमवलोकनीयम्—

प्रागेवाद्यदले समस्तमुदितं संज्ञादिकं विस्तराद्
ज्ञेयं जातकपद्धतिं बुधमुदेऽथ प्राश्निकं च क्रमात्।
स्पष्टं सूक्ष्मतरं त्रिकालफलदं शार्दूलवृत्तिश्चितं
सम्पद्वश्यकरं प्रवच्मि बहुधा कालामृते तूत्तरे।।३।।

कालिदासस्यास्मिन्नुत्तरकालामृते यथा पद्यानां लालित्यं दृश्यते, तथैव भावानामप्युपस्थापनं सुकल्पनायुतं वर्तते। यथाऽत्र ग्रन्थारम्भस्य प्रथमः श्लोकः—

श्रीमद्वक्त्रचतुष्टयाच्युतहरस्वर्णायकाद्यैः सुरैः
कार्यारम्भविधौ समर्चितपदद्वन्द्वं द्विपेन्द्राननम्।
पाशाद्यायुधलड्डुकप्रविलसद्धस्तैश्चतुर्भिर्युतं
श्रीमद्विक्रमसूर्यपालनपरं वन्दे भवानीसुतम्।।

एवमत्र शब्दविन्यासे सर्वत्रैव दाक्षिणात्यशैली सुष्ठुरूपेण सम्यग् दृश्यते।

## खेटकौतुकस्य साहित्यालोडनम्

नवाबखानखानाकृतः फलितविषयकोऽयं ग्रन्थः फारसीशब्दैर्मिश्रितोऽस्ति। लेखकोऽयं मुगलकालीनो मन्यते। अस्य श्लोकाः संस्कृतफारसीमिश्रिता बहुरोचकतां धारयन्ति। यद्यप्ययं यवनो विद्यते तथापि संस्कृताचार्याणां परम्परानुसारं मूर्तिपूजनं प्रणामाञ्जलिना स्वीचकार। यथाऽत्र मङ्गलाचरणे—

यत्पादपङ्कजरेणोः प्रसादमासाद्य सर्वभवनेषु।
प्रणमामीष्टसुमूर्तिं तामहममराः प्रभुत्वमपि यान्ति।।

फारसीमिश्रितस्य पद्यस्य छन्दोबद्धताया आनन्दं गृह्णन्त्वत्र रसिकशिरोमणयः—

यदा चश्मखाने भवेदाफताब-
स्तदा ज्ञानहीनोऽथ गुस्सर्वमुद्दाम्।
सदा तङ्गदिल्शख्तगो द्रव्यहीनः
कुवेषो गदा स्याद् बहोशो दिवासाम्।।४।।

यदा मादरागारगः सम्शखेटः
सुखी नो हि शंसः परेशानकः स्यात्।
सदा म्लानचित्तोऽथ वेश्यारतो वा
तथा जायते बेखुशी हिर्जगर्दः।।६।।

**गोलप्रकाशः श्रीनीलाम्बराचार्यविरचितः**

मैथिलब्राह्मणोऽयं नीलाम्बरझाशर्मा बिहारराज्यस्य पाटलिपुत्रनगरनिवासी १७४५ शकाब्दे प्रादुरभूत्। गणितशास्त्रे प्रख्यातपण्डितोऽयं विविधगणितीय-ग्रन्थानां निर्माणे प्रसिद्धिं प्राप्तवान्।

यद्यप्यस्य गोलप्रकाशनाम्नी रचना खगोलीयगणितप्रपञ्चस्य प्रचारिका, तथापि सुललिते पद्यबन्धेऽपि महत्त्वमस्य विराजते। यथाऽत्र गोलीयरेखागणितस्य मङ्गलाचरणे भगवतः श्रीकृष्णचन्द्रस्य सुमनोहरं वर्णनं द्रष्टव्यम्—

मनोऽनुकूले यमुनासुकूले गोपीदुकूलेन विनोदमानम्।
गतं कदम्बे सुखमाकदम्बे सतां कदं वेणुधरं भजामि।।

अत्र ग्रन्थे प्रायशः सर्वेषां प्रसिद्धछन्दसां प्रयोगोऽस्ति। यथाऽत्र वृत्तान्तरेण निदर्शनार्थं श्लोकद्वयं प्रस्तौमि—

यदा खाङ्कभागास्पकौ वाऽधिकौ तौ
भुजौ कर्णचापं तदा खाङ्कतोऽल्पम्।
यदैको नवत्यंशतोऽल्पोऽधिकोऽन्य-
स्तदा चापजात्ये श्रुतिः खाङ्कगुर्वी।।

भूमेरल्पविवर्धनेन गदितो लम्बः समीपाभिध-
स्तज्जा लहववद्या भवेल्लघुभुजे लग्ना परं दोर्युतिः।
वृत्तार्धाल्पमिताथ दोर्युगयुतिः खाष्टेन्दुभागाधिका
सा लघ्वी त्ववद्या बृहद्भुजगता या प्रोक्तलम्बाश्रिता।।

**महामहोपाध्यायसुधाकरद्विवेदी**

काशीस्थोऽयं सुधाकरद्विवेदिमहाभागो गणितज्योतिषस्य मौलिक-चिन्तकोऽभवत्। पण्डितप्रवरोऽयं गणितविषये बहूनां ग्रन्थानां रचनाञ्चकार।

अयं १८४७ वर्षे गणकतरङ्गिण्या रचनामकरोत्, येनास्य समयोऽवगम्यते। तद्यथा—

नगसागररत्नभूमिवर्षे गणकानन्दकरीं तरङ्गिणीम्।
नगसागररत्नभूमिवर्षे समकार्षीत् सुखदे सुधाकरः।।

अयं हि गणितीयविवेचनेन सहैव छन्दरचनायामपि पटुरासीत्। तदानीन्तने काले हिन्दीभाषायाः कविरूपेणास्य प्रसिद्धिर्जाता। चलनकलनग्रन्थस्य मध्ये तु बहूनि हिन्दीभाषायाः पद्यकाव्यानि विराजन्ते। संस्कृतभाषायाः सुघटितशब्दानां संश्लेषणेऽस्य पाटवं प्रशंसनीयमस्ति। यथा च वास्तवचन्द्रश्रृङ्गोन्नतिग्रन्थे प्रस्तावनायामयं श्लोकः —

तव चन्द्रसितादिविधिं पठितुं
मतिरिच्छति चेत्पठ मद्विहितम्।
परिलेखयुतं विधुश्रृङ्गविधौ
वरलेखविशेषविदां च हितम्।।
अमलं ललितोक्तिमहो सततं
शशिगोलविचारकलासहितम्।
विधिमार्यवरैः सुनरैरपि सज्जन!
युक्तिविभेदततं महितम्।।

आचार्यज्ञानराजस्य मतानि खण्डयतः सुधाकरद्विवेदस्य कथनमत्र मननीयमस्ति—

अयं कविर्हास्यरसैकशीलः सर्वं जगादात्र पुराणरूपम्।
नो चेत्तदा मादकवस्तुसङ्गान्मतिर्विनष्टेति विभाति मेऽस्य।।४९।।

अत्रैव सुललितपद्यस्यास्यावगाहनं कुर्वन्तु साहित्यरसलोलुपाः शिलीमुखसाहित्यिकाः —

दिनकरं हि निधाय हृदि ब्रुवे
रघुवरान्वयकारणमव्ययम्।
हिमकरस्य सिताङ्गुलसाधनं
गणितगोलविदां विदुषां मुदे।।

एवमत्र सुमहत्प्रसिद्धस्य महान् गणितज्ञस्य रचनासु स्वल्पा एव प्रदर्शिताः सन्ति। वस्तुतोऽस्य महाविदुषः साहित्यिककार्यविषये स्वतन्त्रान्वेषणस्यावश्यकताऽस्ति। एवं कृते तस्य काव्यप्रतिभायाः सम्यक् समीक्षणं भवितुमर्हति।

विदन्ति सर्वेऽपि सरसहृदया विद्वांसो ज्योतिषशास्त्रस्य गभीरत्वम्। अत्र ज्योतिषे शताधिकानां विदुषां सहस्राधिकानाञ्च ग्रन्थानां महार्णवो विराजते। तेषु केचन सुप्रसिद्धा एव विद्वांसोऽत्र विवेचिताः सन्ति। परम्परागतानां ज्योतिर्विदामेवात्र पुस्तकानि समीक्षितानि सन्ति मया।

शास्त्रीयपरम्परातो भिन्नाः स्फुटश्लोका यत्र तत्र प्राप्यन्ते। येषु लालित्यपूर्णं साहित्यमाधुर्यं सहृदयग्राह्यं वर्तते। ज्योतिषशास्त्रे प्रयुक्तानां द्वादशराशीनां सङ्ख्यात्मकस्वरूपमाधृत्य विरचितस्यास्य श्लोकस्यानन्दमङ्गीकुर्वन्तु साहित्यरसिकाः, यश्चात्र प्रस्तूयते, यथा—

सम्प्राप्ता दशमध्वजातिगतिना सम्मूर्च्छिता निर्जले
तूर्यद्वादशवद् द्वितीयमतिमन्नेकादशाभस्तनी।
सा षष्ठी कटिपञ्चमीह नवमभ्रूः सप्तमीवर्जिता,
प्राप्ता चाष्टमवेदनां प्रथम रे! तूर्णं तृतीयो भव।।

अत्र श्लोके कमपि नायकमुपदिशति, कोऽपि तस्य वयस्यः। नायकस्य प्रेयसी नायिका दशमध्वजातिगतिना, दशमध्वजो मकरध्वजो यतो ज्योतिषे दशमसङ्ख्या मकरराशेः कृते भवति। अतः स मकरध्वजस्य कामदेवस्यातिवेगेन, अर्थात् कामातिवेगेन निर्जले भूमितले मूर्च्छिता मूर्च्छां सम्प्राप्ताऽस्ति। सा नायिका द्वादशवदर्थाद् मीनवत् सञ्जाताऽस्ति। अत्र द्वादशशब्दस्य मीनसंज्ञा कृताऽस्ति। सा च एकादशाभास्तनी अर्थात् कुम्भस्तनी विद्यते। नायकश्चात्र—'त्वं द्वितीयमतिमन्! अर्थाद् वृषभबुद्धिशाली असि'। अत्र द्वितीयशब्दस्य ज्योतिषे वृषभसंज्ञा भवति। वृषभबुद्धिस्तु जडबुद्धेर्मन्दबुद्धेर्वा परिचायिकाऽस्ति नायकस्य, येन सः सम्प्राप्तयौवनायाः कामोद्रेकसुखं नावगच्छति।

सा नायिका षष्ठी अर्थात् कन्या वर्तते। यतो ज्योतिषे षष्ठीपदेन कन्याया ग्रहणं भवति। तस्या नायिकायाः कटिभागः सिंहसदृशः, अर्थात् सा मृगेन्द्रकटी विद्यते, अर्थात् कृशकटी साऽस्ति। पञ्चमशब्देन सिंहस्य ग्रहणमत्र। नवमभ्रूः, अर्थाद् भ्रूः धनुषाकारो वक्रो विद्यते। नवमशब्देन धनुश्शब्दस्यात्र ग्रहणम्। या च सप्तमीवर्जिता अर्थादतुलनीया, अनुपमेयाऽस्ति। अत्र सप्तमीशब्दस्य तुलार्थे

ग्रहणम्। सप्तमीवर्जिताशब्दस्य तुलनारहितेति वाच्यार्थः। इत्थंभूता सुभोग्या नायिकाष्टमवेदना अर्थाद् मृत्युपीडामनुभवती वर्तते। अष्टमशब्दस्य मृत्युसंज्ञा गृहीतास्त्यत्र। रे प्रथम! अर्थाद् रे मेष! (मेषबुद्धे) तूर्णं शीघ्रं तृतीयमर्थाद् मिथुनं, सम्भोगं कुरु। अत्र प्रथमशब्दस्य मेषार्थस्तथा च तृतीयशब्दस्य मिथुनोऽर्थो विद्यते।

अस्य श्लोकस्य भावार्थोऽयं यत् सम्भोगयोग्या सुस्तनी, कमनीया कामिनी, तन्वी बाला, कामोद्वेगेन पीडिता मूर्च्छावस्थां प्राप्ताऽस्ति। अस्याः कामावस्थायाः सम्यगवबोधो नास्ति, मन्दबुद्धिमज्ञातकामकेलिकलापं जडनायकम्। अन्यः कोऽप्यत्र सुहृत् सज्जनो नायकं नायिकया सह सम्यग् रमणार्थमुपदिशति।

पद्येऽस्मिन् शृङ्गाररसप्रपूरितस्य भावस्य सहजं सुमधुरं चित्ताकर्षकञ्चित्रं चित्रितमित्यत्र नास्ति सन्देहः। दैवज्ञभाषाभाषितेन केनाप्यज्ञातसुकविना संयोगशृङ्गारस्याद्भुतमेव वर्णनं कृतमत्र शार्दूलविक्रीडितेन छन्दसा।

इत्थमेव आचार्याभ्रदेवसूरिकृते आख्यानकर्मणि कोशवृत्तौ सङ्कलितस्यैकस्य श्लोकस्य भावो ज्योतिषविषयानुरूपो विद्यते। अत्र लोकापवादविषये सूर्यस्योपमया स्वकथ्यस्योपस्थापनं कृतं कविना।

लोकापवादः सत्यं भवेदसत्यं वा अपकीर्तिकर एव भवति। तेन सुप्रतिष्ठिता अपि जनाः प्रतिष्ठारहिता जायन्ते। उदाहरणार्थम्—

तुलाराश्यनन्तरं वृश्चिकादिषु राशिषु गतः सूर्यः शैत्यापनयनेऽसमर्थो भवति। अत्र किं कारणमिति प्रश्ने समाधत्तं यत् तुलाराशिपूर्वं कन्याराशिर्भवति, अतः कन्याया भोगं कृत्वा तुलाराशिमुत्तीर्याग्रिमराशिषु गतः सूर्यः प्रखरतेजरहितो मन्दरश्मिवान् जायते। एवमत्र सूर्यस्यापि कृतेऽपवादो घटते। यथेदं पद्यम्—

> अकार्ये तथ्यो वा भवतु वितथो वा किमपरं
> तथाप्युच्चैर्धाम्नां हरति महिमानं जनरवः।
> तुलोत्तीर्णस्यापि प्रकटनिहिताशेषतमसो
> रवेस्तादृक् तेजो नहि भवति कन्यां गत इति।।

श्लोकेऽस्मिन् तुलाशब्दस्य कन्याशब्दस्य च श्लेषेणार्थद्वयं भवति। प्रथमार्थस्तु तुलायास्तोलनार्थे प्रयोगः कन्यायाश्च अविवाहितकन्यार्थे। तात्पर्योऽयं यत् तुलोत्तीर्णः, तोलनेन परीक्षणेन उत्तीर्णोऽपि रविः कन्यागतत्वात्, कन्यया निषिद्धसम्भोगकारणादागामिनि काले तेजोहीनो भवति। द्वितीयोऽर्थस्तु तुलाराशिं

सम्प्राप्य अग्रिमराशिगतोऽपि सूर्यस्तादृशस्तेजयुक्तो न भवति, यतः कन्याराशित एव क्रमशो दक्षिणायनगतत्वाद् गमनराशेरुपमानेन रचनाकारः श्लेषमाध्यमेन उक्तिवैचित्र्यं समुपस्थितवान्। अस्य श्लोकस्य साहित्यमाधुर्यं नितरां विदुषां चेतांसि आनन्दातिशयेन मोदयतीति किमाश्चर्यम्?

एवं प्रकारेणात्र ज्योतिषविषयकप्रमुखानां केषाञ्चन ग्रन्थानां साहित्यसौन्दर्यस्य विषये मया किञ्चिद् विचारितम्। यद्यपि बहवो ग्रन्था ज्योतिषशास्त्रे विरचिताः सन्ति, तथापि लघुनिबन्धेऽस्मिन् केचन प्रचलिता एव ग्रन्था विवेचिताः। ये च ग्रन्थाः सामान्यपठनपाठने प्रचलिताः सन्ति, त एव सुगमतया प्राप्तिकारणात् सङ्कलिताः सन्ति। मन्ये, ममास्य प्रयासस्य प्रोत्साहनाय समर्थनं करिष्यन्ति विद्वांसः। साहित्यशास्त्रविषये ममापि गतिर्नास्ति, तथापि कालिदासस्य कथनानुसरणे "तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः" तथा च "गमिष्याम्युपहास्यताम्" इति सर्वं विज्ञायैव ममायं प्रयासः। मन्ये, भास्कराचार्यस्य कथनानुसारं मन्दा मूर्खत्वेन तथा च विद्वांसो मम परिश्रमेण तोषमेष्यन्तीति।

●

# भास्करोक्तभूगोले पुरविभागव्यवस्था

**डॉ. देवीप्रसादत्रिपाठी**
प्राध्यापकः, ज्योतिषविभागस्य
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठे
नवदेहल्याम्

❀ ❀ ❀

लङ्का कुमध्ये यमकोटिरस्याः प्राक् पश्चिमे रोमकपत्तनं च।
अधस्ततः सिद्धपुरं सुमेरुः सौम्येऽथ याम्ये वडवानलश्च।।
कुवृत्तपादान्तरितानि तानि स्थानानि षड्गोलविदो वदन्ति।
वसन्ति मेरौ सुरसिद्धसङ्घा और्वे च सर्वे नरकाः सदैत्याः।।
यस्तत्र तिष्ठत्यवनीतलस्थमात्मानमस्या उपरि स्थितं च।
स मन्यतेऽतः कुचतुर्थसंस्था मिथश्च ये तिर्यगिवामनन्ति।।
अधःशिरस्काः कुदलान्तरस्थाश्छायामनुष्या इव नीरतीरे।
अनाकुलास्तिर्यगधः स्थिताश्च तिष्ठन्ति ते तत्र वयं यथात्र[1]।।

**विषयेऽस्मिन् श्रीपतिमहोदयस्य विचाराः**

क्षितिपरिधिचतुर्थे प्राचि लङ्कानगर्या
निवसति यमकोटिः पश्चिमे रोमकञ्च।
उदग्दिशि गिरीन्द्रो दक्षिणे वाडवाग्निः
क्षितिपरिधिदलेऽधःपत्तनं सिद्धपूर्वम्[2]।।

भूगोलोऽयं द्विधा विभक्तो विद्यते सौम्ययाम्ययोर्विभागेन। सुविज्ञातमिदं यत् कस्यापि गोलस्य परिधेः परमत्वं कस्माच्चिदपि स्थानान्नवत्यंशेन भवति। भूमावुत्तरध्रुव उत्तरगोलस्य याम्यश्च ध्रुवो याम्यगोलस्य नियामकत्वेन वर्तते। मध्ये

१. सि.शि., गो.भु.,श्लो. १७-२०;  २. सि.शे., १५.३०।

शून्यमक्षांशविषुवद्रेखा वर्तते, या नाडीवृत्तस्य समानान्तरा भूमौ वर्तते। अस्योत्तरदिशि उत्तरगोलीयाः प्रदेशा याम्ये च दक्षिणगोलीयाः प्रदेशाः सन्ति। भूमध्यरेखोपरि चत्वारो बिन्दवश्चतुर्दिक्षु दिङ्नियामकत्वेन वर्तन्ते।

भास्कराचार्यैः 'लङ्का कुमध्ये' इति लिखितम्, परं गोलस्योपरि सर्वत्र मध्यबिन्दुर्भवितुमर्हति। अतो लङ्कायाः स्थितिः स्थानसापेक्ष्यैव भवितुमर्हति। अतो भारतवर्षमाश्रित्य लङ्का कुमध्य इति तर्कयामि। तत आरभ्य प्राग्देशे नवत्यंशे यमकोटिः पश्चिमे नवत्यंशे रोमकपत्तनम्। लङ्कातोऽधोभागे १८० अंशान्तरे सिद्धपुरं तथा ९० अंशान्तरे सौम्ये सुमेरुः, याम्ये च ९० अंशान्तरे कुमेरुरिति सुप्रसिद्धम्। आधुनिकी लङ्कानगरी (लङ्कादेशः) निरक्षरेखायां नास्ति।

या लङ्का निरक्षरेखायामासीत्, सा रावणराजधानीरूपा लङ्का इदानीं जले निमग्ना इति श्रूयते। अतः सत्यमेतद् यद् भारतीयज्योतिर्विदां योऽभीष्टनिरक्षदेशः, स वर्तमानमानचित्रस्थितलङ्कादेशाद् भिन्न एव। अतो या लङ्का प्राचीनैरुपवर्णिता साऽधुना नास्ति। कालप्रभावेण बहवो भूभागाः परिवर्तिताः। केनापि प्राकृतिकेन भूकम्पादिना कारणेन परिवर्तनं समायाति। यत्र स्थलं तत्र जलं यत्र जलं तत्र स्थलं नगरमरण्यमरण्यञ्च नगरमित्येवम्भूतानि परिवर्तनानि जायन्ते।

एतत्प्रसङ्गे कस्यचिद् भूस्तरविद्याविदुषो मुखाच्छ्रुतं यद् महाराष्ट्रप्रान्तस्थनागपुरासन्नभूमिः कस्मिंश्चित् समये जलमग्नासीत्, तत्रास्मिन् कालेऽपि खननेन सामुद्रबालुकाकणादय उपलभ्यन्ते, येन तत्र जलस्य समुद्रस्य वा सत्ता सिद्ध्यति। एवमन्यदप्येतादृशं भौगोलिकं परिवर्तनं दृश्यते। अतो नामसाम्येन प्राचीनानां नगराणां स्थितिविषये काचन असङ्गता धारणा शास्त्रस्य हिताय न भविष्यति; यतो हि प्रत्यक्षतो दृश्यते यद् निरक्षरेखायां लङ्कातो नवत्यंशान्तरे एलिस-गिल्वर्टद्वीपयोः समीपे किञ्चन स्थानं, यद्यपि तदिदानीं प्रसिद्धं नास्ति।

तथा च लङ्कातो नवत्यंशान्तरे शून्याक्षांशरेखायां पश्चिमदिशि रोमकपत्तनं वर्तते। 'एटली'देशस्थं रोमनगरं लङ्कातो नवत्यंशान्तरे वर्तते, परन्तु निरक्षरेखायां नास्ति। निर्दिष्टस्थानेऽधुना कश्चिद् देशो नास्ति। **सूर्यसिद्धान्तस्य** मध्यमाधिकारस्य—

'न मे तेजः सहः कश्चिदाख्यातुं नास्ति मे क्षणः।
मदंशः पुरुषोऽयं ते निःशेषं कथयिष्यति'।।

इति षष्ठश्लोके पूर्वार्धानन्तरं 'रोमके नगरे ब्रह्मशापाद् म्लेच्छावतारधृक्' अयमधिकः पाठः प्राचीनपुस्तकेषूपलभ्यते। सूर्यारुणसंवादे ब्रह्मशापात् सूर्यस्य

म्लेच्छावतारः प्रसिद्धः। नव्यानां मतेऽयमेव सूर्यांशः पुरुषो मिस्त्र(एजिप्त)देशनिवासी हीरोसंज्ञकः। यदैवम्भूता कल्पना क्रियते, तदैतद् रोमकपत्तनमभीष्टरोमकनगरादतीव भिन्नम्। मिस्त्रदेशो लङ्कातः पश्चिमदिशि तावत्यन्तरे नास्ति। तथा च निरक्षवृत्तेऽपि नास्ति। अतः पौराणिकभूगोलवर्णितरोमकपत्तनं कुत्र किन्नामकमित्यद्यावधि संशयास्पदमेव। एवञ्च लङ्कातोऽधोभागे भूगोलार्धान्तरे सिद्धपुरं वर्तते। सिद्धपुरममेरिकायां स्थितं कञ्चन नगरं कल्पयितुं शक्यते।

यद्यपि वर्णितस्थानेऽमेरिकादेशस्य कश्चित् प्रदेशो नास्ति, तथापि तदासन्नस्थाने मध्यामेरिकादेशप्रदेशो वर्तते। एवञ्च लङ्कात उत्तरदिशि नवत्यंशान्तरे यद् उत्तरध्रुवस्थानं तदेव इलावृत्तनाम्ना प्रसिद्धमस्ति। केनचिद् विदुषा इलावृत्तस्य परिचयः 'Upper Mangolia and Eastern Turkistan' एभिः शब्दैर्दत्तः। परमत्र वर्णितमिलावृत्तं सुवर्णमयं वर्तते। अनयोर्देशयोः सुवर्णोत्पत्त्याऽपि समानधर्मत्वं नास्ति, किं पुनः स्थानस्थित्या। अनयोर्देशयोः स्थानं तूत्तरध्रुवदेशादतीवदूरे भिन्न-भिन्नस्थले वर्तते, अत एव पौराणिकमिलावृत्तमद्याप्रसिद्धमेव।

लङ्कादेशाद् दक्षिणदिशि नवत्यंशान्तरे दक्षिणध्रुवस्थानम्। तत्र केवलं समुद्रस्थितिः। तथा च वडवानलस्य प्रदेशः। आधुनिकसमयेऽपि दक्षिणध्रुवस्थानं समुद्रे वर्तते। मानचित्रनिर्माणे प्राचीनकाले आसीन्नूनं काठिन्यम्। परं प्राक्तनैः संसारभ्रमणं कृतमिति निर्विवादमेव। भारतवासिनो बहुकालाद् भूगोलतत्त्वं जानन्ति स्म। तैर्योगप्रभावेण स्वाध्यवसायबलेन वा प्राचीनकालादेव चिरतुषारावृत-योरुत्तरकुरुसोमगिरिनामकस्थानयोर्ज्ञानं कृतमासीत्।

ऐतरेयब्राह्मणे उत्तरकुरूत्तरभद्रयोरुल्लेखो वर्तते। वाल्मीकिरामायणे किष्किन्धाकाण्डे सीतान्वेषणसमये सुग्रीवकृतं समुद्रतटवर्त्यनेकजनपदानां वर्णनमुपलभ्यते। अनेन ज्ञायते भारतवासिनो जनाः प्राचीनकालाद् भूमण्डलस्य दूरदेशानां ज्ञातार आसन्।

एवञ्च तैर्दूरातिदूरस्थभूमण्डलीयदेशानां भ्रमणमपि कृतमासीत्। अत एवामेरिकादेशेष्वपि भारतीयसंस्कृतेः स्मारकचिह्नानि समुपलभ्यन्ते। अतो यथाशक्ति प्राचीनर्षिभिर्या भूगोलस्थलकल्पना कृता, सा प्रायशः समुचितैव प्रतिभाति। यथा— उत्तरध्रुवासन्नदेश इलावृत्तम्, तच्च सुवर्णमयमिति वर्णयन्त्याचार्याः। सत्यमेतत्। यतो ह्युत्तर-अमेरिका-सोवियतसङ्घादय उत्तरध्रुवासन्नस्थदेशाः सुवर्णपूरिताः सन्ति।

तत्र सुवर्णबाहुल्यात् 'रुचिरकाञ्चनचित्रमहितम्' विशेषणमुपयुक्तमेव। साधनरहितेऽपि समये एवम्भूतभूभागानां दर्शनं वर्णनं च सर्वथा चमत्करोत्यस्मान्[१]।

**भूमेरुत्तरगोलार्धः**

भारतीयैः प्राचीनाचार्यैर्भूगोलस्य सौम्ययाम्यनाम्ना विभागद्वयं यत् कल्पितं तदुत्तरीयगोलार्धं जम्बूद्वीपनाम्ना प्रसिद्धं वर्तते। जम्बूद्वीपस्य नवभागाः कल्पिताः, तेषां वर्णनमाचार्यभास्करः **सिद्धान्तशिरोमणौ** एवंरूपेण कृतवान्—

लङ्कादेशाद्धिमगिरिरुदग्घेमकूटोऽथ तस्मात्
तस्माच्चान्यो निषध इति ते सिन्धुपर्यन्तदैर्घ्याः।
एवं सिद्धादुदगपि पुराच्छृङ्गवच्छुक्लनीला
वर्षाण्येषां जगुरिह बुधा अन्तरे द्रोणिदेशान्।।

भारतवर्षमिदं ह्युदगस्मात् किन्नरवर्षमतो हरिवर्षम्।
सिद्धपुराच्च तथा कुरु तस्माद्धिद्धि हिरण्मयरम्यकवर्षे।।

माल्यवांश्च यमकोटिपत्तनाद्रोमकाच्च किल गन्धमादनः।
नीलशैलनिषधावधी च तावन्तरालमनयोरिलावृतम्।।

माल्यवज्जलधिमध्यवर्ती यत् तत् तु भद्रतुरगं जगुर्बुधाः।
गन्धशैलजलराशिमध्यगं केतुमालकमिलाकलाविदः।।

निषधनीलसुगन्धसुमाल्यकैरलमिलावृतमावृतमाबभौ।
अमरकेलिकुलायसमाकुलं रुचिरकाञ्चनचित्रमहीतलम्[२]।।

अत्र भूगोलस्यार्धमुत्तरं जम्बूद्वीपम्। तस्य क्षाराब्धेश्च सन्धिर्निरक्षदेशः। तत्र लङ्का, रोमकं, सिद्धपुरं, यमकोटिरिति पुरचतुष्टयं भूपरिधिचतुर्थांशान्तरं किल कथितम्। तेभ्यः पुरेभ्यो यस्यां दिशि मेरुः सोत्तरा। अतो लङ्काया उत्तरतो हिमवान् नाम गिरिः पूर्वापरसिन्धुपर्यन्तदैर्घ्योऽस्ति। तस्योत्तरे हेमकूटः।

सोऽपि समुद्रपर्यन्तदैर्घ्यः। तथा तदुत्तरे निषधः। तेषामन्तरे द्रोणिदेशा वर्षसंज्ञाः। तत्रादौ भारतवर्षम्। तदुत्तरं किन्नरवर्षम्। ततो हरिवर्षमिति। एवं सिद्धपुरादुत्तरतः शृङ्गवान् नाम गिरिः। ततः श्वेतगिरिः। ततो नीलगिरिरिति। तेऽपि सिन्धुपर्यन्तदैर्घ्याः। तेषामन्तरे च वर्षाणि। तत्रादौ कुरुवर्षम्। तदुत्तरे हिरण्मयम्। ततो

---

१. सारस्वती सुषमा, १६.३-४।२०१८; २. सि.शि., गो.भु., श्लो. २६-३०।

रम्यकमिति। अथ यमकोटेरुत्तरतो माल्यवान् नाम गिरिः। स तु निषधनीलपर्यन्तदैर्घ्यः। तस्य जलधेश्च मध्ये भद्राश्ववर्षम्। एवं रोमकादुत्तरतो गन्धमादनः। तस्य जलधेश्च मध्ये केतुमालम्। एवं निषधनीलमाल्यवद्गन्धमादनैरावृत्तमिलावृत्तं नाम नवमं खण्डम्। सा स्वर्गभूमिः। अतस्तत्र देवक्रीडागृहाणि। प्रसङ्गेऽस्मिन्नेकं काल्पनिकं चित्रं स्पष्टार्थं प्रस्तूयते मया—




चित्रम्-१ : जम्बूद्वीपः (उत्तरगोलार्द्धम्)

अत्र **श्रीपतिना**—

उत्तरायतगिरिश्च माल्यवान् कीर्तितः स यमकोटिपत्तने।
रोमके च खलु गन्धमादनो नीलशैलनिषधावधी च तौ[1]।।

'सारस्वती-सुषमा'पत्रिकायां 'ज्योतिषे भूगोलवर्णनम्' इत्याख्ये लेखे पण्डितमीठालालओझामहोदयैरत्रैव प्राचीनार्वाचीनदृष्ट्या द्वीपानां नामकरणं प्रदर्शितम्। प्राचीनाचार्यैर्यस्य भूगोलविभागस्य कल्पना कृता, यच्च नामकरणं कृतम्, तस्याधुनिकसमये यन्नाम भवितुमर्हति, तदत्र निर्दिश्यते[2]—

१. सि.शे., १५.३८; २. सारस्वती सुषमा, १६.३-४, २०१८।

लङ्कात उत्तरदिशि भारतवर्षम्। ततो हिमालयः। हिमालयत उत्तरभागे किन्नरवर्षं चीनदेशः। केषाञ्चन मते किन्नरदेशः तिब्बतदेशः, तत उत्तरदिशि हरिवर्षं रूसादिदेशाः। कैश्चिद् हरिवर्षेण चीनदेशो गृह्यते। लङ्काया अधोभागे सिद्धपुरं तत उत्तरतः कुरुवर्षं, साइबेरियाप्रदेशस्यारण्यपर्वतमयभागः।

उत्तराः कुरव इति ये प्रसिद्धास्ते तु बृहद्भारतान्तर्गता एव। अर्थादुत्तरकुरुपर्यन्तं भारतीयानां राज्ञां शासनमासीदिति प्रसिद्धिरासीत्। भारविरपि अस्योल्लेखं कृतवान्[१]। कौरवाणां शासनं कियति प्रमाणे भूभागे आसीदिति प्राचीनेतिहासविदो जानन्ति। महाभारतादेतत्प्रतीयते यदाधुनिकभारतसीमातो बहिरपि भारतीयशासनस्य प्रभाव आसीत्।

यथा महाभारतयुद्धे बृहद्भारतेतरराष्ट्राणां सहयोगः संलक्ष्यते। महाभारतोद्योगपर्वणि दुर्योधनस्य सैन्यवर्णनावसरे उक्तम्—

भगदत्तो महीपालः सेनामक्षौहिणीं ददौ।
तस्य चीनैः किरातैश्च काञ्चनैरिव संवृतम्।।
बभौ बलमनाधृष्यं कर्णिकारवनं यथा[२]।।

एतादृशवर्णनप्रसङ्गे स्पष्टमनुमीयते यदस्य देशस्य सम्बन्धो विशाल आसीत्। कुरुवर्षादुत्तरदिशि हिरण्यवर्षं दक्षिणपूर्वसाइबेरियादेशस्य भागः, तदुत्तरभागे रम्यकवर्षं, यनीसिनदी इत्यारभ्य बालकसझीलपर्यन्तम्। यमकोटेरुत्तरतो भद्रतुङ्गं मञ्चुरियादेशः। एवञ्च रोमकनगरादुत्तरतः केतुमालं रूसियनटर्कीस्थानम्। सर्वेषामुत्तरत इलावृत्तम्। मङ्गोलियादेशस्योर्ध्वभागस्तथा च पूर्वीयटर्कीप्रदेश इलावृत्तम्[३]।

## भूमेर्दक्षिणगोलार्धः

पुराणानामाधारमधिकृत्य समुद्राणां द्वीपानां च विवेचनमुपस्थापयन् श्रीमीठालालमहोदयेनोक्तं यत् क्षारसागरेण भूगोलस्य समद्विभागो भवति। दक्षिणगोलार्धमुत्तरगोलार्धञ्च। प्राचीनाचार्याणां मते दक्षिणगोलार्धे मानवानां निवासो नास्ति।

---

१. श्रियः कुरूणामधिपस्य पालिनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।
स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः।। (किरातार्जुनीयम्-१.१)

२. महाभारतम्, उद्योगपर्व, १९.१५-१६।

३. सारस्वती सुषमा, १६.३-४, २०१८।

ग्रहलाघवीयत्रिप्रश्नाधिकारस्य 'गोलौ स्तः सौम्ययाम्यौ' इत्यादिश्लोकस्य व्याख्यायामुक्तं श्रीमल्लारिणा—'लङ्कातो दक्षिणे मनुष्यसञ्चार एव नास्त्यतस्ते नोक्ताः' इत्यतोऽस्य गोलार्धस्य विस्तृतं वर्णनं ज्योतिषे नास्ति। तस्माद् यथोपलब्धं प्रस्तूयते। अस्मिन् भागे उत्तरोत्तरं दक्षिणाभिमुखं चक्राकाराः सप्तसमुद्राः लवणदुग्धदधिघृतेक्षुमद्यस्वादुजलानां सन्ति।

एषु द्वयोर्द्वयोर्मध्ये द्रोणाकाराणि षड्द्वीपानि शाकशाल्मलकुशक्रौञ्च-गोमेदपुष्कराख्यानि क्रमश उत्तरतो दक्षिणाभिमुखानि सन्ति। पुराणेषु द्वीपानामयं क्रमो नास्ति। तत्र प्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्करा इति[१]।

एतेषां द्वीपानां समुद्राणाञ्च मनोहरं ललितकाव्यमयं वर्णनं श्रीभास्कराचार्येण **सिद्धान्तशिरोमणौ** कृतम्। यथा—

भूमेरर्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्यवर्याः।
अर्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः।।

लवणजलधिरादौ दुग्धसिन्धुश्च तस्मादमृतममृतरश्मिः श्रीश्च यस्माद्बभूव।
महितचरणपद्मः पद्मजन्मादिदेवैर्वसति सकलवासो वासुदेवश्च यत्र।।

दध्नो घृतस्येक्षुरसस्य तस्मान्मद्यस्य च स्वादुजलस्य चान्त्यः।
स्वादूदकान्तर्वडवानलोऽसौ पातालालोकाः पृथिवीपुटानि।।

चञ्चत्फणामणिगणांशुकृतप्रकाशा एतेषु सासुरगणाः फणिनो वसन्ति।
दीव्यन्ति दिव्यरमणीरमणीयदेहैः सिद्धाश्च तत्र च लसत्कनकावभासैः।।

शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च।
द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति[२]।।

प्रसङ्गेऽस्मिन् श्रीपत्यादिसर्वैराचार्यैर्भास्कराचार्यसदृशमुक्तम्[३]। स्पष्टार्थमेकं चित्रं प्रस्तूयते—

---

१. सारस्वती सुषमा, १६.३-४, २०१८।
२. सि.शि., गो.भु., श्लो. २१-२५।
३. सि.शे., १५.३२-३३।




चित्रम्-२ : **जम्बूद्वीपेतरद्वीपाः सागराश्च ( दक्षिणगोलार्द्धम्)**

सम्प्रति एतेषां समुद्राणां कानि नामानि सन्तीति जिज्ञासोत्पद्यते। श्रीमन्तो मीठालालमहोदयाः समुद्राणां विषये स्वमतान्यत्र प्रदर्शयन्ति। यथा—

| **प्राचीन-नामानि** | **आधुनिक-नामानि** |
|---|---|
| १. लवणसमुद्रः | साइबेरियाऽधोभागस्थः केस्पियनसागरपश्चिम-सर्पिवा-देशभागेषु वर्तमानो भूभागः। |
| २. इक्षुसमुद्रः | बाल्टिकसागरः काला-भूमध्यसागरसमवायः। |
| ३. सुरासमुद्रः | रक्तसागरः। |
| ४. घृतसागरः | अटलाण्टिकसागरः। |
| ५. दधिसमुद्रः | उत्तरसागरः। |
| ६. क्षीरसमुद्रः | प्रशान्तमहासागरः। |
| ७. जलसमुद्रः | दक्षिण-एटलाण्टिकसागरः। |

परन्त्वेतेषां सङ्गतिर्ज्यौतिषे वर्णितसमुद्रैः सह न भवति। यतो हि ज्यौतिषवर्णितसमुद्रा निरक्षरेखातो दक्षिण एव सन्ति; परन्त्वाधुनिकरीत्या वर्णिताः सागरा निरक्षरेखातो दक्षिणोत्तरतः सन्ति। अतो ज्यौतिषोक्तसागराणां यथार्थतो ज्ञानं दुष्करमिव जातम्। एवमेव तदन्तर्वर्तिद्वीपानामपि यथार्थतः स्थानज्ञानमशक्यमेव[1]।

उक्तकल्पनाया विरुद्धं श्रीमाधवाचार्यैरपि इक्षुरसादिसमुद्रैः सहाधुनिकवर्णितानां सागराणां तुलना कृता। ते कथयन्ति यदधुनापि सागराणां नामानि बहुधा पुराणसदृशैव दृश्यन्ते[2]। यथा—

| प्राचीन-नामानि | आधुनिक-नामानि |
|---|---|
| १. इक्षुसागरः | सीमोरसागरः |
| २. सुरासागरः | अटलाण्टिकसागरः |
| ३. सर्पिस्सागरः | हटसनसागरः |
| ४. दधिसागरः | अण्टरेक्टिकसागरः |
| ५. क्षीरसागरः | ह्वाइटसागरः |
| ६. स्वादूदकसागरः | रूमसागरः |
| ७. लवणसागरः | हिन्दसागरः |

पुराणेषु वर्णितानां क्षीरदधिसुराक्षारादिसमुद्राणां यादृशी भौगोलिकी स्थितिः प्रदर्शिता वर्तते, न तादृशी सम्प्रति भूमौ दृश्यते। अतः पौराणिकानां समुद्राणामाधुनिकैः समुद्रैः सह तुलना न भवितुमर्हति। उभयोर्भौगोलिकी स्थितिः सर्वथा भिन्ना वर्तते, तथा च तेषां स्वरूपाण्यपि भिन्नानि सन्ति।

## पुराणेषु सप्तद्वीपा वसुमती

प्राचीनभारतस्य भौगोलिकस्थितिरैतिहासिकं विवेचनञ्च बहुषु स्थलेषूपलभ्येते। यद्यपि पुराणेषु भौगोलिकस्थितिवर्णनं विस्तृतरूपेण मिलति परन्त्वाधुनिकदृष्ट्या समीचीनं नास्ति। एतस्य कारणमस्तीदं यत् पुराणानां भाषात्यन्तगूढा आलङ्कारिकी, अनेकार्थिकी चास्ति।

पुराणानामाधार इयं पृथिवी सप्तभागेषु विभक्ता, एते सप्तभागाः सप्तद्वीपा अपि कथ्यन्ते। अतोऽस्याः पृथिव्या एको नाम सप्तद्वीपा वसुमत्यप्यस्ति। इमे द्वीपाः पृथक् पृथग्रूपेण सागरैरावृताः सन्ति। सन्तीमे ते सप्त द्वीपाः—

---

१. सारस्वती सुषमा, १६.३-४, २०१८; २. पुराणदिग्दर्शनम्, पृ. ७५७।

१. जम्बूद्वीपः २. प्लक्षद्वीपः
३. शाल्मलिद्वीपः ४. कुशद्वीपः
५. क्रौञ्चद्वीपः ६. शाकद्वीपः
७. पुष्करद्वीपः।

एषु जम्बू-प्लक्ष-शाल्मलीति तु वृक्षाणां नामानि। कुशः 'कुशा' इत्युच्यते। कौञ्चः पुष्करश्च पर्वतयोर्नामनी स्तः। वर्णितद्वीपानां मध्ये पृथक् पृथग्रूपेण जम्बूप्लक्षद्वीपौ विहाय प्रतिद्वीपं सप्तवर्षाणि सप्तनद्यश्च सन्ति। जम्बूद्वीपे भारतवर्षादयो नववर्षाः सन्ति।

आधुनिका भौगोलिकवैचारिका जम्बूद्वीपं 'यूरेशिया'महाद्वीपमिति कथ्यन्ते; परन्तु सर्वेषां मतमिदं नास्ति। भास्कराचार्यानुसारेण तु जम्बूद्वीप उत्तरगोलार्धमस्ति[१]। प्रसङ्गेऽस्मिन् डॉ.एस.एम. अलीमहोदयेन स्वपुस्तके ('दि जीओग्राफी ऑफ दि पुराणाज') विभिन्नानि मतानि प्रदर्श्य स्वमतमपि प्रतिपादितम्। यथा—

**सप्तद्वीपानां सन्दर्भे विभिन्नानि मतानि**

| द्वीपाः | विचारकाः[२] | | | | |
|---|---|---|---|---|---|
| | कृष्णमाचार्लुः | विल्फर्डः | गेरिनी | अली[३] | माधवाचार्यः[४] |
| १. जम्बूः | जम्बूकाश्मीरः पञ्जाबश्च | भारतवर्षम् | भारतवर्षम् | यूरेशिया | यूरेशिया |
| २. प्लक्षः | वर्तमान-पारसदेशः | टर्की-आरमेनिया-प्रदेशश्च | अराकान-ब्रह्मा | भूमध्यगेरवीय-देशाः (ग्रीसादि), | आण्टरैक्टिका-विक्टोरिया-लैण्डः |
| ३. शाल्मलिः | उत्तरपूर्व-अफ्रीका | मध्ययूरोपः | मलाया | पूर्वी अफ्रीका | ग्रीनलैण्डः |
| ४. कुशः | यूनानःयूनानं-परितश्च सर्वे देशाः | फारसः,अफगानि-स्तानश्च | सुन्दाद्वीप-समुदायः | ईरान-इराक-समीपस्थदेशाः | दक्षिणी अमेरिका |
| ५. क्रौञ्चः | यूरोपः | पश्चिमी-यूरोपीयदेशाः | दक्षिणी-चीनदेशाः | यूरोपः | उत्तरी अमेरिका |
| ६. शकः | रूसः,साइबेरिया-प्रदेशश्च | ब्रिटिशद्वीप-समुदायः | इमाम(थाई) कम्बोडिया | दक्षिणीचीनः मलाया च | आस्ट्रेलिया-देशः |
| ७. पुष्करः | बुखाराक्षेत्रम् | आइसलैण्डक्षेत्रम् | सौम्यचीनप्रदेशौ | — | अफ्रीका |

१. सि.शि., गो.भु., श्लो. २६-३०।
२. भौगोलिक विचारधाराएँ एवं विधितन्त्र, पृ. १४१-१४५।
३. श्रीमद्भागवत का सांस्कृतिक अध्ययन, पृ. २६०-२८२।
४. पुराणदिग्दर्शनम्, पृ. ७५७।

**जम्बूद्वीपः**

पुराणोक्तो जम्बूद्वीप इदानीमाधुनिकैर्भौगोलिकैर्यूरेशियापदेन व्यवह्रियते[१]। अस्य द्वीपस्य नव उपखण्डाः सन्ति। एषु मध्ये सप्तखण्डानां पर्वतानाञ्च वर्णनं पुराणेषु विस्तृततरूपेण दरीदृश्यते। जम्बूद्वीपस्य मुख्यः पर्वतः 'मेरुः' अस्ति। आधुनिका मेरुं 'पामीर' इति स्थानविशेषनाम्ना जानन्ति। पामीरतः (मेरोः) चतुर्दिक्षु पर्वतश्रृङ्खला निर्गताः सन्ति।

मेरुं परित इलावृत्तवर्षमस्ति। मेरोः पूर्वदिशि भद्राश्ववर्षम् (चीनदेशः), पश्चिमदिशि केतुमालवर्षम् (ईरान-इराक-अरबदेशाश्च), दक्षिणदिशि भारतवर्षम्, किन्नरवर्षम् (तिब्बतस्य पठारीयभागः), हरिवर्षञ्च (हिरातः), उत्तरदिशि रम्यकवर्षम् (मध्य-एशिया अथवा दक्षिणी पश्चिमी सिक्याङ्ग), हिरण्यवर्षम् (उत्तरी सिक्याङ्ग), उत्तरकुरुवर्षम् (मतान्तरेणोत्तरकोरिया अपि भवितुं शक्नोति) इत्येते नव खण्डाः स्थिताः सन्ति[२]। समीक्षात्मकं चित्रमवलोकयन्तु तावत्।




चित्रम्- ३

१. भौगोलिक विचारधाराएँ एवं विधितन्त्र, पृ. १४१-१४५।

२. तदेव।

यद्यपि सर्वेषु पुराणेषु जम्बूद्वीपस्य विस्तृतं विवेचनं समुपलभ्यते; किन्तु तेषां पृथक् पृथग् विवेचनं न युक्तिसङ्गतं प्रतिभाति। अत: केवलं विष्णुपुराणमाधारीकृत्य किञ्चिद्विविच्यते। यथा—

जम्बूद्वीप: समस्तानामेतेषां मध्यसंस्थित:।
तस्यापि मेरुमैंत्रेय मध्ये कनकपर्वत:।।
हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे।
नीलश्वेतश्च शृङ्गी च उत्तरे वर्षपर्वता:।।
लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथापरे।
दिक्सहस्रमिताश्छाया विस्तारे द्विसहस्रका:।।
भारतं प्रथमं वर्षं तत: किम्पुरुषं स्मृतम्।
हरिवर्षं तथैवान्यद् मेरोर्दक्षिणतो द्विज।।
रम्यकश्चोत्तरं वर्षं तस्यैवानु हिरण्मय:।
उत्तरा: कुरवश्चैव यथा वै भारतं तथा।।
सा तत्र पतिता दिक्षु चतुर्धा प्रतिपद्यते।
सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात्[१]।।

## जम्बूद्वीपस्य नववर्षाणि

१. इलावृत्तवर्षम् २. भद्राश्ववर्षम्
३. केतुमालवर्षम् ४. रम्यकवर्षम्
५. हिरण्मयवर्षम् ६. उत्तरकुरुवर्षम्
७. हरिवर्षम् ८. किन्नरवर्षम् (किम्पुरुषवर्षम्)
९. भारतवर्षम्।

## इलावृत्तवर्षम्

जम्बूद्वीपस्य मध्यभागे सुमेरु: पर्वतो वर्तते। इमं पर्वतं परित इलावृत्त-वर्षमस्ति। प्रसङ्गेऽस्मिन् श्रीमद्भागवतपुराणे भगवता वेदव्यासेनोक्तं यद् यस्मिन्नव-वर्षाणि नवयोजनसहस्रायामान्यष्टभिर्मर्यादागिरिभि: सुविभक्तानि भवन्ति। एषां मध्य

---

२. विष्णुपुराणम्, २.२.७.१०-१३,३.३।

इलावृत्तं नामाभ्यन्तरवर्षं यस्य नाभ्यामस्ति सौवर्णः कुलगिरिराजो मेरुद्वीपायामसन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्ध्नि द्वात्रिंशत्सहस्रयोजनविततो मूले षोडशसहस्रं तावतान्तर्भूमौ प्रविष्टः। उत्तरोत्तरेणेलावृत्तं नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मय-कुरूणां वर्षाणां...[१]। इलावृत्तेऽर्थात् सुमेरुं परितश्चत्वारो वृक्षाः, चत्वारश्शैलाः, चत्वारि वनानि, चत्वारि सरांसि सन्ति। यथा—

| | | |
|---|---|---|
| **वृक्षाः** | : | कदम्बः, जम्बूः, वटः, पिप्पलः। |
| **शैलाः** | : | मन्दराचलः, सुगन्धः, विपुलः, सुपार्श्वः। |
| **वनानि** | : | चैत्ररथः, नन्दनः, घृतम्, वैभ्राजः। |
| **सरांसि** | : | अरुणः, मानसः, महाह्रदः, श्वेतः। |

स्पष्टार्थं 'मेरोः स्वरूपम्' चित्रद्वारा प्रदर्श्यते—




**चित्रम्-४**

---

१. श्रीमद्भागवतपुराणम्, ५.१६.६-२०।

## भद्राश्ववर्षम्

मेरोः पूर्वपार्श्वे भद्राश्ववर्षं वर्तते। 'पूर्व एशिया'-भूभागमेवाधुना भद्राश्ववर्षमामनन्त्याधुनिकाः। वर्त्तमानचीनदेशः पूर्वी एशिया-भूखण्डे स्थितः। अनेन कारणेन भवितुं शक्यते यत् चीनदेशो भद्राश्ववर्षम्।

अलीमहोदयानुसारेण 'तरीम-ह्वागहो'-नद्योः मध्यस्थ'वेसिन'प्रदेशः (सम्पूर्णः सिक्याङ्गक्षेत्रस्य सौम्यचीनदेशस्य च भूभागः) भद्राश्ववर्षमस्ति। भद्राश्ववर्षस्य सीमावर्त्ती यो नीलपर्वतः, स एवेदानीं 'त्यानशेन'पर्वतोऽस्ति। वादडल-वरकोल-करविल-ताद्य एताः पर्वता अप्यस्मिन्नेव पर्वते सन्निहिताः सन्ति। निषधपर्वतशृङ्खला 'कुनलुन'पर्वतशृङ्खलाऽस्ति। महाभारतानुसारेण निषधपर्वतं यावन् महाराज-युधिष्ठरः शासनञ्चकार[१]।

## केतुमालवर्षम्

अस्ति मेरु-इलावृत्तयोः पश्चिमपार्श्वे केतुमालम्। केतुमाल-इलावृत्तयो-र्विभाजकः पर्वतो गन्धमादनोऽस्ति। अत्रैव कामदेवो निवसति स्म। पुराणानुसारमस्य वर्षस्योत्तरभागे नीलगिरिः, पूर्वभागे गन्धमादनः, दक्षिणपार्श्वे निषधः, पश्चिमपार्श्वे च सागरोऽस्ति।

श्रीअलीमहोदयानुसारं केतुमालवर्षस्य सीमाऽनेन प्रकारेणास्ति— दक्षिणपार्श्वे हिन्दुकुश-कुनलुनपर्वतमाला, उत्तरदिशि जफरसेनतियेनसेनपर्वतमाला, पूर्वदिशि गन्धमादनपर्वतः, पश्चिमपार्श्वे कैस्पियनसागरोऽस्ति[२]।

## रम्यकवर्षम्

इलावृत्तस्योत्तरपार्श्वे नीलशुक्लपर्वतयोर्मध्ये यः प्रदेशस्तदस्ति रम्यकवर्षम्। रम्यकवर्ष-इलावृत्तयोर्विभाजको नीलपर्वतोऽस्ति। उक्तञ्च श्रीमद्भागवतपुराणे— उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति'[३]।

अत्रैवादिमनुमहोदयोऽपि भगवतो मत्स्यावतारस्य दर्शनं कृतवान्। तेऽद्यावधि तत्रैव भगवतो मत्स्यावतारस्योपासनां कुर्वन्ति[४]। श्री एस.एम. अलीमहोदयानुसारं नूरतोआ-तुर्किस्तान-जरफशानहिसाश्रेण्या आवृतः प्रदेशो रम्यकवर्षमस्ति[५]।

---

१. श्रीमद्भागवत का सांस्कृतिक अध्ययन, पृ. २६०-२८२।
२. तदेव; ३. श्रीमद्भागवतम्-५.१८.२४।
४. तदेव।
५. श्रीमद्भागवत का सांस्कृतिक अध्ययन, पृ. २६०-२८२।

## हिरण्मयवर्षम्

मेरोरुत्तरदिशि शुक्लशृङ्गवत्पर्वतयोर्मध्ये यत् क्षेत्रं तदस्ति हिरण्मयवर्षम्। अस्य वर्षस्य पूर्वपश्चिमयोरुभयपार्श्वे क्षारसागरो विद्यते। अलीमहोदयानुसारेण पौराणिकहिरण्मयी नदी एव जरफशानो वर्तते। जरफशान-हिरण्मय्योर्द्वयोः शब्दयोर्मध्येऽर्थसाम्योऽस्ति। अनेन कारणेन स़ोविदयाना-जफरशानयोर्मध्यप्रदेशः 'बेसिन' एव हिरण्मयवर्षं भवितुं शक्यते[१]।

## उत्तरकुरुवर्षम्

श्रीमद्भागवतपुराणे कुरु-उत्तरकुरुप्रदेशयोर्वर्णनं विद्यते। जम्बूद्वीपस्योत्तरपार्श्वे उत्तरकुरुप्रदेशे भगवान् वराहरूपेण निवसति। अस्य प्रदेशस्य याम्यदिशं विहाय सर्वत्र क्षारसागरो विद्यते[२]। पौराणिकवर्णनानुसारं वर्तमान-एशियाप्रदेशस्य सौम्यभागोऽस्त्युत्तरकुरुवर्षम्। अलीमहोदयानां मते प्राच्यसाइबेरियानामकप्रदेश एवोत्तरकुरुरस्ति[३]।

## हरिवर्षम्

मेरोर्याम्यपार्श्वे निषधहेमकूटपर्वतयोर्मध्ये यो प्रदेशोऽस्ति तदेव हरिवर्षम्। अत्रैव भगवान्नृसिंहरूपेण निवसति। पौराणिकवर्णनानुसारं हेमकूटपर्वतस्योत्तरदिश्ययं प्रदेशो वर्तते। हेमकूटपर्वतो लद्दाखकैलाशपर्वतस्य शृङ्खलाऽस्ति, अतः पौराणिकवर्णनानुसारं हरिवर्षं हिमालयस्योत्तरपार्श्वे कुनलुनपर्वतस्य च याम्यदिशि स्थितचीनदेशस्य याम्यप्रदेशं यावद् विस्तृतमस्ति[४]। दिग्विजयप्राप्त्यर्थम्, अर्जुनोऽस्मिन् प्रदेशे गतवानासीत्[५]।

## किन्नरवर्षम्

अस्य वर्षस्य याम्यसौम्यपार्श्वयोः क्रमशो हेमकूटहिमवन्नामकौ द्वौ पर्वतौ स्तः। प्राच्यप्रतीच्यदिशोः क्षारसमुद्रो विद्यते। अत्रैव रामभक्तो हनुमान् निवसति। पुराणानुसारं हिमालयस्योत्तरभागे किन्नरवर्षं स्थितमस्ति। सम्प्रति किन्नरवर्षस्य स्वरूपं लद्दाखे तिब्बतप्रदेशे चैव दृश्यते[६]।

---

१. श्रीमद्भागवत का सांस्कृतिक अध्ययन, पृ. २६०-२८२।
२. श्रीमद्भागवत - ५.१६.८; ५.१८.३४।
३. श्रीमद्भागवत का सांस्कृतिक अध्ययन, पृ. २६०-२८२।
४. तदेव।
५. महाभारत की नामानुक्रमणिका, पृ. ४०३।
६. श्रीमद्भागवत का सांस्कृतिक अध्ययन, पृ. २६०-२८२।

**भारतवर्षम्**

भारतवर्षं जम्बूद्वीपस्य दक्षिणपार्श्वे स्थितमस्ति। उत्तरदिशं विहाय सर्वत्र क्षारसागरो विद्यते। अस्य वर्षस्योत्तरभागे विशालो 'हिमवान्'नामकः पर्वतो वर्तते। महाभारतानुसारं दुष्यन्तपुत्रस्य भरतस्य नाम्नाऽस्य देशस्य नाम भारतवर्षमभूत्। यथा—

शकुन्तलायां दुष्यन्ताद् भरतश्चापि जज्ञिवान्।
यस्य लोके सुनाम्नेदं प्रथितं भारतं कुलम्[१]।।

पुराणेष्वस्य देशस्य नामाजनाभवर्षमप्यासीत्। भागवते निगदितं यत्— 'अजनाभं नामैतद्वर्षं भारतमिति यद् आरभ्य व्यपदिशन्ति'[२]। अपि च कालान्तरे ऋषभात्मजस्य भरतस्य नाम्नाऽस्य देशस्य नाम भारतवर्षमभूत्[३]। एतदतिरिक्तं भारतवर्षस्य विशदं विवेचनं पुराणानाधारीकृत्य श्रीमता भास्कराचार्येणापि सिद्धान्तशिरोमणौ कृतम्[४]। तत्र ऐन्द्राद्या भारतान्तर्गता नव भागाः सुष्ठु विवेचिताः सन्ति। तेषु नवभागेषु पर्वतानामपि स्थितिः प्रदर्शिता विद्यते[५]।

पुराणेषु भारतवर्षस्यातीवविस्तरेण व्याख्यानं वर्ततेऽतस्तेषामुल्लेखनमत्रा-नावश्यकमिति मत्वा केवलं विशिष्टा विषया एवात्र समुपस्थाप्यन्ते। बृहद्भारतस्य वर्णनं विविधेषु प्रसङ्गेषु कूर्मचक्ररूपेण व्याख्यातं वर्तते। तस्य समासेनात्रोपस्थापनं क्रियते।

**कूर्मचक्रम्[६]**

प्राचीनाचार्यैर्देशादीनां शुभाशुभज्ञानायानेकमार्गानुसरणं कृतमस्ति। तत्र कूर्मचक्रानुसारेणापि विचारो विहितोऽस्ति। बृहद्भारतवर्षे कूर्माकारं प्रकल्प्य

१. महाभारतम्, आदिपर्व., ७४.१३१।
२. श्रीमद्भागवतम्, ५.१७.३।
३. तदेव, ११.१६.१७, द्रष्टव्यम्- लिङ्गपुराणम्, ४७२।२-२४; मार्कण्डेयपुराणम्, ५३.३९; वायुपुराणम्, ३३.५१-५२।
४. ऐन्द्रं कशेरुशकलं किल ताम्रपर्णमन्यद्गभस्तिमदतश्च कुमारिकाख्यम्।
नागं च सौम्यमिह वारुणमन्त्यखण्डं गान्धर्वसंज्ञमिति भारतवर्षमध्ये।।
वर्णव्यवस्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजना निवसन्ति सर्वे।।
(सि.शि., गो.भु., श्लो. ४१-४२)
५. माहेन्द्रशुक्तिमलयर्क्षकपारियात्राः सह्यः सविन्ध्य इह सप्त कुलाचलाख्याः।
(तदेव, श्लो. ४२)
६. सारस्वती सुषमा, १६.३-४, २०१८, पृ. १००-१०२।

तदङ्गविभागद्वारा देशविभागस्य फलकल्पना विहिता। कूर्मे शिर:पादचतुष्टय-दक्षिणवामकुक्षिद्वयपुच्छमध्यभागात्मका नवविभागा: कल्पिता:। तत्र कूर्मशिर: पूर्व-भागे स्थापिताश्चत्वारश्चरणाश्चतुर्दिक्षु शिरो दक्षिणे पुच्छं वामकुक्षाविति चतस्रो दिशस्तथा च कूर्ममध्यभागो मध्यमिति कूर्मे दिक्कल्पना एवं सन्ति।

कूर्मचक्रीयनवविभागेषु देशकल्पनायामाचार्याणां परस्परं मतभेदा: सन्ति। एतत्कूर्मचक्रं बृहत्संहितायां नरपतिजयचर्यायां पराशरादिप्राचीनाचार्यग्रन्थेषु च वर्तते। अथ कूर्मविभागस्य देशानां नामानि सङ्क्षेपतो निर्दिश्यन्ते। तत्तु चित्रे अवलोकयन्तु। यथा—




चित्रम्-५

तत्र कूर्ममध्यभागगता देशा: —

साकेतं मिथिला चम्पा कौशाम्बी कौशिकी तथा।।
अहिच्छत्रं गया विन्ध्यमन्तर्वेदी च मेखला।
कान्यकुब्जं प्रयागश्च मध्यदेश: प्रकीर्तित:।।

पूर्वदेशा: —

सगौडो हस्तिबन्धश्च पञ्चराष्ट्रं च कामरु:।।

चरेन्द्री च तथा ज्ञेया मगधश्च तथैव च।
रेवातटं च नेपालः पूर्वदेशाः प्रकीर्तिताः।।

आग्नेयकोणीयदेशाः —

अङ्गबङ्गकलिङ्गाश्च पूर्वजाश्चैव कोसलाः।।
डाहली च जयन्ती च तथा चैव सुलज्जिका।
उडियानं वराडं च अग्निदेशाः प्रकीर्तिताः।।

दक्षिणदेशाः —

दुर्दरं च महेन्द्रं च वनवासं ससिंहलम्।।
तापी भीमरथी लङ्का त्रिकूटं मलयस्तथा।
श्रीपर्वतश्च किष्किन्धा इति तिष्ठन्ति दक्षिणे।।

नैर्ऋत्यकोणीयदेशाः —

नासिक्यं च सुराष्ट्रं च घृतमालवकं तथा।।
पर्यली च प्रकाशं च भृगुकच्छं च कोङ्कणम्।
खेटापूरं च मोटेरं देशा नैर्ऋत्यकोणगाः।।

पश्चिमस्था देशाः —

पारावतं मरुत्कच्छमवन्ती पूर्वमालवम्।।
पाराशरं बर्बरं च द्वीपं सौराष्ट्रसैन्धवम्।
जलस्थाश्च.....................................।।

वायव्यकोणीयदेशाः —

गुर्जराह्वं यामुनं च मरुदेशं सरस्वती।।
जालन्धरं वराटं च बालुकोदधिसंयुतम्।
मेरुशृङ्गं.................................।।

उत्तरस्था देशाः —

नेपालः कीरकाश्मीरं मृञ्जनं खुरसानकम्।।
माधुरं म्लेच्छदेशश्च खशं केदारमण्डलम्।
हिमाश्रयाश्च राजन्ते देशा ये चोत्तराश्रिताः।।

ईशानकोणीयदेशाः —

> गङ्गाद्वारं कुरुक्षेत्रं श्रीकण्ठं हस्तिनापुरम्।
> अश्वचक्रैकपादाश्च गजकर्णास्तथैव च।।

इत्येवंरूपो देशविभागो दृष्टिपथमायाति। आधुनिकसमये प्राचीनदेशानां वर्तमाननामान्यपेक्ष्यन्ते, बहूनां तु नामान्यद्यत्वेऽपि तथैव सन्ति। अतोऽवशिष्टानामन्वेषणं परमावश्यकम्। इतोऽधिकविभागकल्पना भारते नाभवत्। एतदेव ज्यौतिषनिबद्धं भूगोलस्वरूपम्।

**जम्बूद्वीपस्याष्टावुपद्वीपाः**

तद्यथा—

> स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्तनो रमणको
> मन्दरहरिणः पाञ्चजन्यः सिंहलो लङ्केति[१]।।

भूगोलवेत्ता डॉ.एस.डी.कौशिकमहोदयेन प्रतिपादितं यज्जम्बूद्वीपस्य सीमाप्रदेशे ये द्वीपाः स्थिताः सन्ति, त उपद्वीपाः[२]। यथा—

१. स्वर्णप्रस्थः (सुमात्रा) २. चन्द्रशुक्लः (फिलिपाइनद्वीपः)
३. आवर्तनः (ब्रिटिशद्वीपः) ४. रमणकः (नार्वे स्वीडनदेशश्च)
५. मन्दरहरिणः (नोवाया जेमलया) ६. पाञ्चजन्यः (जापानः)
७. सिंहलः (श्रीलङ्का) ८. लङ्का (अज्ञातः)।

**जम्बूद्वीपस्य प्रमुखा नद्यः**

अस्मिन् द्वीपे मुख्यतया चतस्रो नद्यः प्रसिद्धाः सन्ति। तेषां नामानि— १. सीता, २. चक्षुः, ३. भद्रा, ४. अलकनन्दा। पुराणाधारेण विष्णुपादोद्भवा गङ्गाऽन्तरिक्षाद् (स्वर्गाद्) मेरौ पतिता। तत्र पतिताया गङ्गाया धारा चतुर्षु दिक्षु विभाजिता जाताः। पूर्वस्यां दिशि सीतानाम्ना, उत्तरस्यां दिशि भद्रा-नाम्ना, प्राच्यां चक्षुः, दक्षिणदिशि चालकनन्दा-नाम्ना प्रसिद्धाः सन्ति। श्रीमद्भागवतपुराणेऽस्मिन् प्रसङ्गे गदितम्—

तत्र चतुर्धा भिद्यमाना (विभक्ता) चतुर्भिर्नामभिश्चतुर्दिशमभिस्यन्दन्ती नदनदीपतिमेवाभिनिविशति सीताऽलकनन्दाचक्षुर्भद्रेति[३]।

१. श्रीमद्भागवतम्, ५.१९.३०।
२. बेचन दूबे, जियोग्राफिकल कॉन्सेप्ट्स इन एन्स्येण्ट इण्डिया, पृ. ८४।
३. श्रीमद्भागवतम्, ५.१७.५।

चतुर्णां धाराणां प्रसङ्गे इदानीं बहूनि मतमतान्तराणि समुपलभ्यन्ते। महामहोपाध्यायगिरिधरशर्मचतुर्वेदिमहोदयानां मते तु गङ्गायाः प्रथममवतरणं मेरौ (पामीरपर्वते) अभवत्। यस्य प्राचीनसंज्ञा प्राङ्मेरुरासीत्[१]।

**सीता**—मेरोः पूर्ववाहिनी धारा सीता त्रिपथगा भूत्वा पूर्वस्यां दिशि पूर्वसमुद्रे पतति[२]। अलीमहोदयस्य मते तु 'किजित्सु'-नदी वर्तते इदानीम्[३]।

**चक्षुः**—इयं नदी मेरोः माल्यवान्-केतुमालवर्षाभ्यां भ्रमन्ती प्राच्यां दिशीदानीं 'कैस्पियनसागरे' पतति[४]।

**भद्रा**—इयं नदी भद्रशोभा नाम्नाऽपि प्रसिद्धाऽस्ति। पर्वतशिखरात् पतितवती उत्तरकुरुवर्षं स्पृशती उत्तरस्यां दिशि समुद्रे पतति[५]।

**अलकनन्दा**—अलकापुरी-नगर्याः समीपे वहति तथा च हेमकूटहिमालयपर्वताभ्यां भूत्वा भारतवर्षे आगच्छति[६]। अलकनन्दा दक्षिणतो भारतवर्षं पावयन्ती रत्नाकरं पुनाति। या आकर्णिता आधारिता स्पृष्टा अवगाहिता पीता उक्ता स्मृता वा बहुधाऽपि पापिनः पुरुषान् पुनाति। गङ्गां यामीत्युपक्रमं कुर्वत्यपि नरे तस्य पितॄणां नरकस्थानां यमपाशबन्धास्त्रुट्यन्ति। अथ गच्छति मार्गलग्ने तत्पितरो वल्गन्ति। अस्मत्कुलजो गङ्गां गच्छति। अतोऽस्माकं दुष्कृतकर्मविच्छेदादूर्ध्वगतिर्भविष्यतीति हर्षेणोत्पतन्ति।

अथ प्राप्ततटे गङ्गासन्नस्थिते स्वकुलजे गङ्गाबलेन मुष्टिघातादिभिरन्तकदूतान् जित्वा देवलोकं यान्ति। एवंविधाया गङ्गाया मन्दाकिन्याः सर्वश्रेष्ठत्वं भारतीया अङ्गीकुर्वन्तीति। यथोक्तं भास्करेण—

> विष्णुपदी विष्णुपदात् पतिता मेरौ चतुर्धाऽस्मात्।
> विष्कम्भाचलमस्तकशस्तसरः सङ्गतागता वियता।।
> सीताख्या भद्राश्वं सालकनन्दा च भारतं वर्षम्।
> चक्षुश्च केतुमालं भद्राख्या चोत्तरान् कुरून् याता।।
> याऽऽकर्णिताऽभिलषिता दृष्टा स्पृष्टाऽवगाहिता पीता।
> उक्ता स्मृता स्तुता वा पुनाति बहुधाऽपि पापिनः पुरुषान्।।

---

१. पुराणपरिशीलनम्, पृ. ३२६; २. तदेव।
३. श्रीमद्भागवत का सांस्कृतिक अध्ययन, गङ्गाप्रकरण।
४. पुराणपरिशीलनम्, पृ. ३२६; ५. श्रीमद्भागवतम्, ५.१७.८।
६. तदेव, ५.१९.१८।

यां चलिते दलिताखिलबन्धो गच्छति वल्गति तत्पितृसङ्घः।
प्राप्ततटे विजितान्तकदूतो याति नरे निरयात् सुरलोकम्[1]।।

जम्बूद्वीपस्यान्येषां द्वीपानामपि वर्णनं बहुषु स्थलेषु पुराणेषु च दरीदृश्यते। पुष्करद्वीपं विहाय प्रत्येकस्मिन् द्वीपे सप्त उपखण्डाः सप्तपर्वताः सप्तनद्यश्चत्वारो वर्णाश्च सन्ति। तथा च प्रतिद्वीपमेक उपास्यदेवोऽप्यस्ति। यथा—

**प्लक्षद्वीपः**[2]

**उपखण्डाः**— १. शिववर्षम्, २. यववर्षम्, ३. सुभद्रवर्षम्, ४. शान्तवर्षम्, ५. क्षेमवर्षम्, ६. अमृतवर्षम्, ७. अभयवर्षम्। **पर्वताः**— १. मणिकूटः, २. वज्रकूटः, ३. इन्द्रसेनः, ४. ज्योतिष्मान्, ५. सुपर्णः, ६. हिरण्यष्ठीवः, ७. मेघसालः। **नद्यः**— १. अरुणा, २. नृम्णा, ३. आङ्गिरसी, ४. सावित्री, ५. सुप्रभाता, ६. ऋतम्भरा, ७. सत्यम्भरा। **वर्णाः**— १. हंसः, २. पतङ्गः, ३. ऊर्ध्वागमः, ४. सत्याङ्गः। **उपास्यदेवः**— सूर्यः।

**शाल्मलिः**[3]

**उपखण्डाः**— १. सुरोचनः, २. सौमनस्यः, ३. रमणकः, ४. देववर्षम्, ५. पारिभद्रः, ६. आप्यायनः, ७. अविज्ञातः। **पर्वताः**— १. स्वरसः, २. शतशृङ्गः, ३. वामदेवः, ४. कुन्दः, ५. मुकुन्दः, ६. पुष्पवर्षम्, ७. सहस्रश्रुतिः। **नद्यः**— १. अनुमतिः, २. सिनीवाली, ३. सरस्वती, ४. कुहूः, ५. रजनी, ६. नन्दा, ७. राका। **वर्णाः**— १. श्रुतधरः, २. वीर्यधरः, ३. वसुन्धरः, ४. इषन्धरः। **उपास्यदेवः**— चन्द्रः।

**कुशद्वीपः**[4]

**उपखण्डाः**— १. वसुः, २. वसुदानः, ३. दृढरुचिः, ४. नाभिगुप्तः, ५. स्तुत्यव्रतः, ६. विविक्तः, ७. वामदेवः। **पर्वताः**— १. चक्रः, २. चतुःशृङ्गः, ३. कपिलः, ४. चित्रकूटः, ५. देवानीकः ६. ऊर्ध्वरोमा, ७. द्रविणः। **नद्यः**— १. रसकुल्या, २. मधुकुल्या, ३. मित्रविन्दा, ४. श्रुतविन्दा, ५. देवगर्भा, ६. घृतच्युता, ७. मन्त्रमाला। **वर्णाः**— १. कुशलः, २. कोविदः ३. अभियुक्तः, ४. कुलकः। **उपास्यदेवः**— अग्निः।

---

१. सि.शि., गो.भु., श्लो. ३७-४०; २. श्रीमद्भागवतम्, ५.२०.३-४।
३. तदेव, ५.२०.९-११; ४. तदेव, ५.२०.१४.१७।

**क्रौञ्चद्वीपः**[१]

**उपखण्डाः**— १. आमः, २. मधुरुहः, ३. मेघपृष्ठः, ४. सुधामा, ५. भ्राजिष्ठः, ६. लोहितार्णः, ७. वनस्पतिः। **पर्वताः**— १. शुक्लः, २. वर्धमानः, ३. भोजनः, ४. उपबर्हिणः, ५. नन्दः, ६. नन्दनः, ७. सर्वतोभद्रः। **नद्यः**— १. अभया, अमृतौघा, ३. आर्यका, ४. तीर्थवती, ५. वृत्तिरूपवती, ६. पवित्रवती, ७. शुक्ला। **वर्णाः**— १. पुरुषः, २. ऋषभः, ३. द्रविणः, ४. देवकः। **उपास्यदेवः**— वराहः।

**शाकद्वीपः**[२]

**उपखण्डाः**— १. पुरोजवः, २. मनोजवः, ३. पवमानः, ४. धूम्रानीकः, ५. चित्ररेफः, ६. बहुरूपः, ७. विश्वधारः। **पर्वताः**— १. ईशानः, २. उरुशृङ्गः, ३. बलभद्रः, ४. शतकेसरः, ५. सहस्रस्रोतः, ६. देवपालः, ७. मनानसः। **नद्यः**— १. अनघा, २. आयुर्दा, ३. उभयस्पृष्टिः, ४. अपराजिता, ५. पञ्चपदी, ६. सहस्रस्रुतिः, ७. निजधृतिः। **वर्णाः**— १. ऋतव्रतः, २. सत्यव्रतः, ३. दानव्रतः, ४. अनुव्रतः। **उपास्यदेवः**— वायुः।

**पुष्करद्वीपः**[३]

अस्मिन् द्वीपे सहस्रदलं स्वर्णमयमेकं पुष्करनामकं पुष्पं वर्तते। अतोऽस्य द्वीपस्य नाम पुष्करद्वीपः। इदं पुष्पं विधेरासन्नरूपेण वर्तते। प्रियव्रतस्य पुत्रो वीतिहोत्रोऽस्य प्रदेशाधीश्वर आसीत्। तैर्द्वीपस्य भागद्वयं कृतम्। द्वयोर्भागयोरधीश्वरो पृथक् पृथग्रूपेण तेषां द्वौ पुत्रौ धातकिरमणकावभवताम्। अस्य द्वीपस्यापि विस्तृतं वर्णनमुपलभ्यते श्रीमद्भागवतपुराणे।

'एवमेव दधिमण्डोदात्परतः पुष्करद्वीपस्ततो द्विगुणायामः समन्तत उपकल्पितः समानेन स्वादूदकेन समुद्रेण बहिरावृतो यस्मिन् बृहत्पुष्करं ज्वलनशिखामलकनकपत्रायुतायुतं भगवतः कमलासनस्याध्यासनं परिकल्पितम्। तद्द्वीपमध्ये मानसोत्तरनामैक एवार्वाचीनपराचीनवर्षयोर्मर्यादाचलोऽयुतयोजनोच्छ्रायायामो यत्र तु चतसृषु दिक्षु चत्वारि पुराणि लोकपालानामिन्द्रादीनां यदुपरिष्टात्सूर्यरथस्य मेरुं परिभ्रमतः संवत्सरात्मकं चक्रं देवानामहोरात्राभ्यां परिभ्रमति। तद्द्वीपस्याप्यधिपतिः प्रैयव्रत्रो वीतिहोत्रो नामैतस्यात्मजो रमणकधातकिनामनी वर्षपती

१. श्रीमद्भागवतम्, ५.२०.२१-२२; २. तदेव, ५.२०.२५-२७।
३. तदेव, ५.२०.२९-३१।

नियुज्य स स्वयं पूर्वजवद् भगवत्कर्मशील एवास्ते'[१]। श्री एस.एम. अलीमहोदयैः 'दि ज्योग्रेफी ऑफ दि पुराणाज'-नामके पुस्तके द्वीपानां सागराणाञ्च यादृशं समीक्षात्मकं विवेचनमुपस्थापितं तस्य प्रतीतिः प्रस्तुतसरण्या भवितुमर्हति[२]—

| द्वीपाः सागराश्च | पुराणाः | | | | | शिरोमणिः[४] |
|---|---|---|---|---|---|---|
| | भागवतादि-पुराणानि[३] | मत्स्यः | वराहः | स्कन्दः | महाभारतम् पद्मश्च | |
| १. द्वीपः | जम्बूः | जम्बूः | जम्बूः | जम्बू | जम्बूः | जम्बूः |
| १. सागरः | क्षारः | क्षारः | क्षारः | क्षारः | क्षारः | क्षारः |
| २. द्वीपः | प्लक्षः | शाकः | शाकः | शाकः | शाकः | शाकः |
| २. सागरः | इक्षुरसः | दुग्धम् | दुग्धम् | दुग्धम् | — | दुग्धम् |
| ३. द्वीपः | शाल्मलिः | कुशः | कुशः | पुष्करः | कुशः | शाल्मलिः |
| ३. सागरः | सुरा | घृतम् | दधि | घृतम् | — | दधि |
| ४. द्वीपः | कुशः | क्रौञ्चः | क्रौञ्चः | कुशः | क्रौञ्चः | कुशः |
| ४. सागरः | घृतम् | दधि | घृतम् | दधि | — | घृतम् |
| ५. द्वीपः | क्रौञ्चः | शाल्मलिः | शाल्मलिः | क्रौञ्चः | पुष्करः | क्रौञ्चः |
| ५. सागरः | दधि | सुरा | सुरा | घृतम् | — | इक्षुः |
| ६. द्वीपः | शाकः | गोमेदः | गोमेदः | शाल्मलिः | — | गोमेदः |
| ६. सागरः | क्षीरः | इक्षुरसः | इक्षुरसः | इक्षुरसः | — | मद्यः |
| ७. द्वीपः | पुष्करः | पुष्करः | पुष्करः | गोमेदः | — | पुष्करः |
| ७. सागरः | स्वादुः | स्वादुः | स्वादुः | स्वादुः | — | स्वादुः |

## सिद्धान्तशिरोमणेर्मेरुवर्णनम्[५]

इह हि मेरुगिरिः किल मध्यगः कनकरत्नमयस्त्रिदशालयः।
द्रुहिणजन्मकुपद्मजकर्णिकेति च पुराणविदोऽमुमवर्णयन्।।

विष्कम्भशैलः खलु मन्दरोऽस्य सुगन्धशैलो विपुलः सुपार्श्वः।
तेषु क्रमात् सन्ति च केतुवृक्षाः कदम्बजम्बूवटपिप्पलाख्याः।।

१. श्रीमद्भागवतम्, ५.२०.२९.३१।
२. श्रीमद्भागवत का सांस्कृतिक अध्ययन, पृ. २५९।
३. श्रीमद्भागवत., गरुड., वामन., ब्रह्म., लिङ्ग., मार्कण्डेय., कूर्म., ब्रह्माण्ड., अग्नि., देवीभाग., विष्णु., इत्यादयः।
४. सि.शि., गो.भु., श्लो. २५।
५. तदेव, श्लो. ३१-३६।

जम्बूफलामलगलद्रसतः प्रवृत्ता जम्बूनदी रसयुता मृदभूत् सवर्णम्।
जाम्बूनदं हि तदतः सुरसिद्धसङ्घाः शश्वत् पिबन्त्यमृतपानपराङ्मुखास्तम्।।

वनं तथा चैत्ररथं विचित्रं तेष्वप्सरोनन्दननन्दनं च।
धृत्याह्वयं यद्धृतिकृत् सुराणां भ्राजिष्णु वैभ्राजमिति प्रसिद्धम्।।

सरांस्यथैतेष्वरुणं च मानसं महाह्रदं श्वेतजलं यथाक्रमम्।
सरःसु रामारमणश्रमालसाः सुरा रमन्ते जलकेलिलालसाः।।

सद्रत्नकाञ्चनमयं शिखरत्रयं च मेरौ मुरारिकपुरारिपुराणि तेषु।
तेषामधः शतमखज्वलनान्तकानां रक्षोऽम्बुपानिलशशीशपुराणि चाष्टौ।।

तस्यैलावृत्तस्य मध्ये कनकरत्नमयो मेरुगिरिः कर्णिकाकारस्तदेव देवानामालयम्। तत्र मेरावुपरि शिखरत्रयम्। तेषु शिखरेषु मुरारेर्ब्रह्मणः पुरारेश्च पुराणि सन्ति। शिखराणामधः समन्तादिन्द्रादिलोकपालानां पुराणि सन्ति। अथ मेरोर्विष्कम्भशैला इत्याधारपर्वताः।

यस्यां दिशि यमकोटिस्तद्दिक्प्रभृतिमन्दर-सुगन्धविपुलसुपार्श्वा दिक्षु सन्ति। मन्दरे कदम्बः केतुवृक्षचैत्ररथं वनमरुणोदं सरः। सुगन्धशैलमस्तके केतुवृक्षो जम्बूः। येनेदं जम्बूद्वीपमुच्यते। नन्दनं वनं मानसं सरः। विपुलशैलमस्तके केतुवृक्षो वटो वृतिर्वनं महाह्रदः। सुपार्श्वमस्तके केतुवृक्षः पिप्पलो वैभ्राजं वनं श्वेतोदं सरः। स्पष्टार्थं पूर्वमुद्धृतं चित्रं ४ द्रष्टव्यम्।

मेरुपर्वतस्य वर्णनं विस्तृतरूपेण प्रत्येकेषु पुराणेषु इतिहासग्रन्थेषु च दरीदृश्यते। अयं पर्वतः सर्वेषां वर्षाणामुत्तरदिशि वर्तते। 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः'[१]। अस्य मेरोर्वर्णनं भगवता व्यासेन श्रीमद्देवीभागवत[२]-श्रीमद्भागवतादिपुराणेषु[३] विस्तृतरूपेण कृतम्। यथा—

अव्यक्तात् पृथिवीपद्मं मेरुपर्वतकर्णिकम्[४]।।
इलावृत्तं तु तन्मध्ये सौवर्णो मेरुरुच्छ्रितः[५]।
जम्बूद्वीपो द्वीपमध्ये तन्मध्ये मेरुरुच्छ्रितः[६]।।

---

१. विष्णुपुराणम्, २.४.३; २. श्रीमद्देवीभागवतम्, ७.१.११।
३. श्रीमद्भागवतम्, ५.१६.७।
४. वायुपुराणम्, ३४.३७, ५.८०, १.३५, ११.१६।
५. अग्निपुराणम्, १०८.९।
६. तदेव, १०८.३, १०८.११-१२. कूर्मपुराणम्, ४५.१५.१६।

उपर्युक्तवर्णनानामाधारेण स्पष्टं भवति यद् मेरुर्भारतवर्षादुत्तरदिशि स्थितोऽस्ति, परन्तु विष्णुपुराणानुसारं सर्वेषां वर्षाणामुत्तरभागे स्थितं वर्तते मेरुपर्वतम्। श्री-अनन्तशास्त्रिफडकेमहोदयैर्मेरुप्रभृतीनां चित्रं स्वकीये निबन्धे[1] प्रदर्शितम्, यत्—

एको मेरुः सर्वेषां वर्षाणामुत्तरतस्तिष्ठति यतोऽनन्तरं देशो नास्ति। अपरश्च 'मध्य-एशिया'-स्थाने जम्बूद्वीपे 'पामीर'(पमेरु)संज्ञको विद्यते। अतः फडके-महोदयानुसारं त्वेको मेरुपर्वतो द्वितीयः सुमेरुपर्वतः। इदानीं मेरुपर्वतोऽस्ति पामीरुः, तथा च सुमेरुरस्त्युत्तरीध्रुवः। चित्रेण स्पष्टं जायते—




चित्रम्-६ : **जम्बूद्वीप-भारतवर्ष-भारत-पाताल-नरकबोधकं मानचित्रम्**

१. सारस्वती सुषमा, फाल्गुनपूर्णिमा, २०१५,पृ. २०३।

कोऽस्ति मेरुः? कोऽस्ति सुमेरुः? पण्डितरघुनाथशर्ममहोदयानुसारं तु सुमेरुपर्वतोऽऽधुनिक'एवरेस्ट'पर्वतोऽस्ति, यतो ह्ययं सर्वोन्नतपर्वतो वर्तते। जम्बूद्वीपे सुमेरुपर्वतस्य का स्थितिर्वर्तते? चित्रे स्पष्टं जायते[१]। अवलोकयन्तु तत्—




चित्रम्-७

आधुनिक-भौगोलिक-दृष्ट्या तु शर्ममहोदयस्य मतं समीचीनं नास्ति। पण्डित-रघुनाथशर्ममहोदयाः कथयन्ति यद् यथा भूगोलस्य मध्यभागे सुमेरुः पर्वतो वर्तते, तथैवान्तरिक्षेऽपि ब्रह्माण्डस्य मध्यगतो मेरुर्वर्तते। अस्यापि स्थितिः शर्ममहोदयैः चित्रे प्रदर्शिता। तदवलोकयन्तु—

---

१. सारस्वती सुषमा, ३३.३-४, वि.सं. २०३५।




चित्रम्-८

आचार्यबलदेव-उपाध्यायमहोदयस्य मते पामीरपर्वत एव मेरुः पर्वतोऽस्ति[१]। माधवाचार्यमहोदयानुसारं 'यूराल'नामकः पर्वतः सुमेरुः पर्वतो भवितुं शक्यते[२]। आधुनिकभूगोलपुराणविदनुसारं पौराणिककाञ्चनमयः सुमेरुरस्ति पामीरपर्वतः, परन्तु ज्योतिर्विदः कथयन्ति यदुत्तरीध्रुव एव सुमेरुरस्ति[३]।

केषाञ्चनाचार्याणां मते पामीरपर्वतोऽस्ति सुमेरुः। केषाञ्चन मते 'यूराल'पर्वतोऽस्ति सुमेरुः, केषाञ्चन मते उत्तरध्रुवप्रदेशोऽस्ति सुमेरुः, केषाञ्चन मते 'पामीर'पर्वतोऽस्ति केवलं प्राङ्मेरुः। प्राङ्मेरुसंज्ञा मेरोरपि भवितुं शक्यते; परन्तु प्राङ्मेरुः सुमेरुः कदाऽपि नैव भवितुं शक्यते। पूर्वं कथितं यत् 'सर्वेषां वर्षाणामुत्तरे स्थितोऽस्ति सुमेरुः' अर्थात् सुमेरुरस्त्युत्तरध्रुवप्रदेशः कुमेरुश्च दक्षिणध्रुवप्रदेशः।

अतो निष्कर्षरूपेणेदं तथ्यं समायाति यद् मेरुपर्वत एव प्राङ्मेरुः सुमेरुर्वा। अतः सुमेरुपर्वतस्य मेरुपर्वतस्य च पृथगपृथगस्तित्वमिति स्वीकारे सति प्राचीनानामर्वाचीनानाञ्च सिद्धान्तयोर्मध्ये साम्यं समायाति।

---

१. पुराणविमर्शः, पृ. ३१७।
२. पुराणदिग्दर्शन, तृतीय संस्करण, पृ. ७५७।
३. सूर्यसिद्धान्तः, विज्ञानभाष्यम्, पृ. ५९, ७२८।

**भास्कराचार्यस्य दिग्व्यवस्थानामाधारेण मेरोः स्थितिः**

लङ्कापुरेऽर्कस्य यदोदयः स्यात्तदा दिनार्धं यमकोटिपुर्य्याम्।
अधस्तदा सिद्धपुरेऽस्तकालः, स्याद्रोमके रात्रिदलं तदैव।।
यत्रोदितोऽर्कः किल तत्र पूर्वा तत्रापरा यत्र गतः प्रतिष्ठाम्।
तन्मत्स्यतोऽन्ये च ततोऽखिलानामुदक्स्थितो मेरुरिति प्रसिद्धम्[1]।।

यस्मिन् समये लङ्कानगर्यां सूर्योदयो भवति तस्मिन्नेव समये यमकोटिपुर्य्यां मध्याह्नकालः, सिद्धपुरेऽस्तकालः, रोमकपत्तनेऽर्धरात्रिर्भवति। यस्मात् स्थानात् सूर्योदयो भवति तत्पूर्वदिक्, यस्यां दिशि सूर्यास्तं भवति सा पश्चिमदिक्।

उदयस्थानाद् नवत्यंशेन यद् ऊर्ध्वाधोवृत्तं मेरु-(ध्रुव)पर्यन्तं गच्छति तदस्ति याम्योत्तरवृत्तम्। लङ्कारोमकपत्तनयमकोटिसिद्धपुराख्यानि सर्वाणि नगराणि निरक्षदेशीयानि सन्तीति। प्रतिनिरक्षदेशमुत्तरस्यां दिशि नवत्यंशेन सुमेरुरस्ति। चित्रे स्पष्टा भवति मेरोः स्थितिः। अवलोकयन्तु तावच्चित्रम्—




चित्रम्-९

निरक्षदेशे एकस्थानात् प्राच्यां यदि किञ्चन पुरं स्थानं वा स्यात्, तदा तस्मात् स्थानात् प्रथमं स्थानं प्रतीच्यामेव भवति। परमेतादृशी स्थितिः साक्षे देशे

१. सि.शि., गो.भु., श्लो. ४४-४५।

न भवितुमर्हति। साक्षदेशे तु यथोज्जयिन्या भूवृत्तचतुर्थांशात् प्राग् यमकोटिरस्ति, ततो यमकोटेः साऽवन्ती नगरी प्रतीच्यां दिशि नैव भवतुमर्हति, परन्तु यमकोटेः लङ्कानगरी प्रतीच्यां दिशि अस्ति। एवं तु केवलं निरक्षदेशे भवति साक्षदेशे तु प्राचीप्रतीच्योर्वैचित्र्यं दृश्यते[1]।

यथोज्जयिन्याः कुचतुर्थभागे प्राच्यां दिशि स्याद्यमकोटिरेव।
ततश्च पश्चात्र भवेदवन्ती लङ्कैव तस्याः ककुभि प्रतीच्याम्।।
तथैव सर्वत्र यतो हि यत्स्यात्प्राच्यां ततस्तत्र भवेत्प्रतीच्याम्।
निरक्षदेशादितरत्र तस्मात्प्राचीप्रतीच्यौ च विचित्रसंस्थे[2]।।

याम्योत्तरवृत्तोपरि खस्वस्तिकबिन्दौ लम्बवृत्तं यत्तदेव तत्पूर्वापरवृत्तं भवति, पूर्वापरनाडीवृत्तयोर्योग एव तत्पूर्वं स्वस्तिकम्। तन्निरक्षदेशगतमेव। अथ तत्पूर्वबिन्दौ यस्य खस्वस्तिकं, तस्य याम्योत्तरवृत्तं तु तत्साक्षदेशीयोन्मण्डलमेव, तदेव तत्स्थानस्य क्षितिजवृत्तञ्चापि भवति। अतो ध्रुवस्थानान्नवत्यंशेन कृतं नाडीवृत्तमेव तत्स्थानस्य पूर्वापरवृत्तं भवति।

अथ खस्वस्तिकात्पश्चिमस्यां दिशि नवत्यंशान्तरे पूर्वापरवृत्ते एव पश्चिमबिन्दुस्तेन साक्षदेशस्य यत्पूर्वं ततः पश्चिमं तु निरक्षदेशगतम्, न हि साक्षदेशस्तत्पश्चिमबिन्दौ भवतीति गोलविदां स्पष्टं मतम्। यथोक्तं भट्टेन—

एवं निरक्षदेशेषु यतः प्राच्यां तु यद्भवेत्।
ततस्तच्च प्रतीच्यां च नियतं गोलविद्वर।।
भूवृत्ततुर्यभागे तूज्जयिन्याः प्राक् सदा भवेत्।।
यमकोटिस्ततः पश्चादवन्ती नैव किन्तु सा।
लङ्कैव पश्चिमे चैवं व्यक्षादन्यत्र दृश्यते[3]।।

अत्र स्वपक्षमुपस्थापयत आचार्यभास्करस्य मतं प्रदर्शितं श्रीकमलाकरभट्टेन। अतः सुस्पष्टं यद् उभयोर्मतमस्मिन् प्रसङ्गे समानमेव। एतेनायमेव निष्कर्षः समायाति यत् सुमेरुपर्वत उत्तरध्रुवप्रदेश एवेति।

●

---

१. सिद्धान्ततत्त्वविवेकः, मध्यमाधिकारः, श्लो. १४०-१४२ भाष्ये।
२. सि.शि., गो.भु., श्लो. ४६-४७।
३. सिद्धान्ततत्त्वविवेकः, मध्यमाधिकारः, श्लो. १४०-१४२ भाष्ये।

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

श्रुतम् मे गोपाय

# दार्शनिकी सुषमा

नानावादमहाऽमरद्रुमलसत्सिद्धान्तसौरभ्यहृद्
भूयोऽप्यास्तिकनास्तिकोक्तधिषणातेजःप्रकर्षाद्धुता ।
श्रीमच्छङ्करहेमचन्द्रविहितव्याख्यानविख्यापिता
सेयं दार्शनिकी विभाति सुषमा युक्तिप्रयुक्तिव्रता ।।

# ब्रह्मणो जिज्ञास्यत्वनिरूपणम्

**प्रो. पारसनाथद्विवेदी**
आचार्योऽध्यक्षश्च, वेदान्तविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

❀ ❀ ❀

सीताद्वितीयमपि शाश्वतमद्वितीय-
मेकं गुणाश्रयमनाश्रयनिर्विशेषम्।
हेतुं समस्तजगतो निखिलात्मरूपं
ज्ञानं विभुं सुखमहं प्रणमामि रामम्।।१।।

काशीश्वरं गिरिसुतासहितं नमामि
विघ्नेश्वरादिगणशोभितपार्श्वभागम्।
पीत्वा हलाहलमहो जगदेकनाथो
यः संररक्ष शरणागतवत्सलं तम्।।२।।

वाचां रसं गहनतर्कधियो विदन्ति
येषां प्रभा सदसि सूर्यसहस्रतुल्या।
व्याख्यानतः करतलस्थमिवार्थजातं
तेषां नमामि चरणाम्बुरुहं गुरूणाम्।।३।।

नत्वा गणेशं वरदाञ्च वाचं
ध्यात्वा गुरूणां वचनं महार्थम्।
तातं शिवं रामसखीं प्रणम्य
अम्बां समीडे परनिर्विशेषम्।।४।।

श्रुतीनां खलु सर्वासां निर्विशेषे परात्मनि।
तात्पर्यं परमं सिद्धं तज्ज्ञानं मोक्षसाधनम्।।५।।

कर्मोपासादिभिर्भिन्नैः सृष्ट्यादिप्रतिपादनैः।
विशेषगुणधर्मैश्च तदेव श्रुतिसम्मतम्।।६।।

निर्विशेषं परं ब्रह्म क्षुरधारसमं गतौ।
विशेषं तु समारोप्य श्रुत्या मात्रेव गद्यते।।७।।

**ब्रह्मणो जिज्ञास्यत्वोपपत्तिः**

धर्मार्थकाममोक्षाणां चतुर्विधानामपि पुरुषार्थानां मोक्ष एव सकलसमूलानर्थभूताविद्यात्यन्तिकनिवृत्तिरूपत्वात् स्वरूपावाप्तिरूपत्वाच्च परमः पुरुषार्थः। परमेष्टलाभार्थं शोकमोहादिसमूलनिवृत्तिकामस्य कर्मोपासनादिलभ्यफलेषु पितृदेवादिलोकेषु ऐहलौकिककर्मादिचितफलविनाशवत् क्षयितां कर्मोपचितत्वाद् अनुमिमानस्य स एव श्रेयान्। स च मोक्ष आत्मयाथात्म्यज्ञानादेव लभ्यते आत्मभावरूपः। 'तरति शोकमात्मविद्' (छा. ७।१।३) 'ब्रह्मविद् ब्रह्मैव भवति' (मु. २।२।१) इत्यादिश्रुतेः, 'यज्ज्ञात्वा मोक्ष्यसेऽशुभात्', 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इत्यादिस्मृतेश्च। तत्र 'कर्मणा पितृलोकः, विद्यया देवलोकः, प्लवा ह्येते अदृढा यज्ञरूपाः, अष्टादशोक्तमवरं कर्म येषु', 'नेदं यदिदमुपासते' इत्यादिश्रुतेः, 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन', 'नैनं वेदा वृजिनात् तारयन्ति' इत्यादिस्मृतेश्च।

कर्मोपासनानां मोक्षातिरिक्तानित्यफलदर्शनात्। अधिकारिस्वरूपफलविनियोगादिभेदाद् ज्ञानेन सह समुच्चयाभावान्न मोक्षसाधकत्वम्; अपि तु निष्कामभावेनानुष्ठितानां तेषामन्तःकरणशुद्धिः प्रयोजनम्। तत्र मनःशुद्धिर्मलनिर्मोचनम्। नित्यादिकर्मानुष्ठानाद् ममान्तःशुद्धमिति बुद्धिरुदेति। उपासनाभिश्च अकामेन कृताभिः चित्तैकाग्रता क्रियते। तत्र एकाग्रता कर्मणा क्षालितस्यान्तःकरणस्यानित्यफलकामाभावात् स्थैर्यम्। एवञ्च निष्कामकर्मोपासनानुष्ठानेन विशुद्धान्तःकरणस्य मुमुक्षोः श्रवणादावधिकारः।

एतत्सर्वम् 'अथातो ब्रह्मजिज्ञासा' (ब्र.१।१।१) इति प्रथमसूत्रे अथशब्दस्यानन्तर्यार्थं प्रतिपादयद्भिर्भगवत्पादैरुक्तमेव। साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्त्तव्या। साधनानि इहामुत्रफलभोगविरागः, शमदमादिसम्पत्तिः, नित्यानित्यवस्तुविवेकः, मुमुक्षुत्वञ्चेति चतुर्विधानि। तत्र नित्यानित्यवस्तुविवेक आपाततः। एवञ्च शोकमोहादिनिवृत्तिरूपमोक्षकामेन ब्रह्मज्ञानमपेक्ष्यते, अतस्तज्जिज्ञासा कार्या।

उपासनैर्नो विविधैश्च कर्मभिर्भवार्णवात् पारमुपैति कश्चन।
मुमुक्षुभिर्बोधकृतैः ससाधनैः परञ्च जिज्ञास्यमिति श्रुतेर्मतम्।।१।।
विभज्य विद्यां द्विविधां परापरां विनिन्द्य कर्म क्षयि शंसति श्रुतिः।
तथार्तिनाशः परयैव विद्यया परश्च तस्या विषयोऽमृतो यतः।।२।।

फलैः स्वरूपैर्विषयाधिकारिभिर्विरुद्धधर्मैश्च तमःप्रकाशवत्।
समुच्चयो नैव सहात्मसंविदा ततस्तदिच्छेत्तु यथोक्तसाधनः।।३।।

न च मुमुक्षुणा आत्मा न जिज्ञास्यः संशयप्रयोजनरहितत्वात्, स्फीतालोकवर्तिघटकरटदन्तादिवद् इति। तथा हि—आत्मनि कस्यापि संशयो विपर्ययो वा न भवति—अहं वा अनहं वेति। न वाऽऽत्मज्ञानस्य प्रयोजनं किञ्चिदस्ति, अविद्यायाश्चाहमित्याकारकात्मज्ञानेन सहानुवृत्तिदर्शनात्।

न चाहमित्याकारकज्ञानाद् अतिरिक्तमात्मज्ञानं किञ्चिदस्तीति वाच्यम्, अहमर्थ-स्यानात्मत्वात्। न हि अहमित्याकारकानुभवे यथोक्त आत्माऽवभासते; अपि तु अध्यस्तानेकशोकदुःखकर्तृत्वभोक्तृत्वादिधर्म आत्माऽवभासते। अत आत्मयाथा-त्म्यज्ञानं न श्रुतेरतिरिक्तप्रमाणेन ज्ञातुं शक्यते, श्रुतिश्च शोकादिमुक्त-मात्मानमुपदिशति। अहमनुभवश्च न तथा इति भवति संशयः, अधीतश्रुतीनां प्राकृतानाञ्च देहादावेवात्मविपर्ययो दृष्ट इति।

किञ्च संसारनिवृत्तिः प्रयोजनं श्रुतिस्मृतिसिद्धमात्मज्ञानस्य। न हि अहमिति ज्ञानमात्मज्ञानं येन तेन सह संसारस्यानुवृत्तिर्भवेत्। 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति श्रुतेरात्मयाथात्म्यज्ञाने सति संसारनिवृत्तिदर्शनात्। अतो मुमुक्षुणा आत्मा जिज्ञास्यः संशयविपर्ययसहितत्वात् सप्रयोजनत्वात् स्थाणुपुरुषादिवत् शुक्तिरजतादिवच्च।

तत्र ज्ञानं निश्चयः, तत्त्वसाक्षात्कारः, अहं ब्रह्मास्मीत्याकाराकारितमनोवृत्ति-विशेषः। 'आत्मा वा अरे द्रष्टव्यः' इत्यादौ दृश्धातोर्ज्ञानार्थकत्वाद् ज्ञातव्य इत्यर्थः। वाशब्द एवकारार्थकः। आत्मैव द्रष्टव्यो नान्य इति। ज्ञानस्य च पुरुषतन्त्रत्वाभावाद् विधातुमशक्यत्वाद् द्रष्टव्य इत्यत्र 'अर्हे कृत्यतृचः' इति अर्हार्थे 'तव्यत्', न विधौ। एवमेव जिज्ञासितव्य इत्यत्रापि बोध्यम्, ब्रह्मसाक्षात्कारयोग्य इत्यर्थः।

ब्रह्मात्मैकत्वविज्ञानाद् मिथ्याज्ञानं निवर्तते।
आत्मानात्मविवेकोऽसौ बन्धोऽनादिः प्रवर्तते।।

आत्मभावाच्च्युतिर्मृत्युः प्रमादो वै कीर्तितो बुधैः।
अप्रमादो विमृत्युः स्यात् स यथोक्तात्मबोधनात्।।

मुक्तिरात्मस्वरूपाप्तिर्नित्याप्तस्यापि ब्रह्मणः।
अनावाप्तिभ्रमे नष्टेऽपूर्वैवाप्तिर्निरुच्यते।।

आत्मा द्रष्टव्य इत्यादौ जीवो ब्रह्मैव कथ्यते।
जीवब्रह्मविभेदात्तु कुतो जीवो विमोक्ष्यते।।

समानविषयत्वं हि निवर्तकनिवर्त्ययोः।
सामानाधिकरण्यञ्च ज्ञप्त्यज्ञप्त्योर्निरुच्यते।।
ब्रह्मज्ञानान्न जीवस्य स्वात्माऽज्ञानं निवर्तते।
ब्रह्मज्ञानाद् विमुक्तिश्चासकृच्छ्रुतिभिरुच्यते।।
अतो जीवस्य परतो भेदो नो परमार्थतः।
अथातो ब्रह्मजिज्ञासेत्यत्रात्मा ब्रह्म वेद्यते।।
जिज्ञास्यत्वेन रूपेण न च जीवात्मनोर्भिदा।
एवमात्मसुविज्ञानाद् ब्रह्मभावः प्रवर्तते।।

ब्रह्मात्मैकत्वविज्ञानाद् मिथ्याज्ञानरूपबन्धनिवृत्तिः, ब्रह्म च तस्माज्जिज्ञास्यम्। तच्च ब्रह्म किं स्वरूपं किं प्रमाणकञ्चेति जिज्ञासायामुच्यते—

## ब्रह्मलक्षणम्

### ब्रह्मणः स्वरूपम्

तैत्तरीयोपनिषदि ब्रह्मवल्ल्यां ब्रह्मविदाप्नोति परमिति वाक्येन ब्रह्मवेदनस्य अविद्यानिवृत्तिप्रयोजनं प्रदर्श्य तल्लक्षणमुच्यते—'सत्यं ज्ञानमनन्तं ब्रह्म', 'यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वकामान् सह ब्रह्मणा विपश्चितेति'। सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणवाक्यम्। अत्र ब्रह्म विशेष्यं वेद्यतया, विशेषणानि च सत्यादिपदानि इतरव्यावर्तकतया ब्रह्मस्वरूपं निर्धारयन्ति। न चात्र नीलमुत्पलमिति वाक्यवद् विशेष्यविशेषणभावबोधकत्वमेव लक्षणवाक्यत्वमिति वाच्यम्, लक्षणार्थानामेव विशेषणानामुपादानात्। सजातीयव्यावर्तकं विशेषणवाक्यम्, लक्षणं तु सजातीयविजातीयव्यावर्तकं भवति।

सत्यमबाधितम्, यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत् सत्यं यद्रूपेण यन्निश्चितं तद्रूपं व्यभिचरद् अनृतमिति। यथा रज्जुः सर्परूपेण निश्चिता सर्परूपत्वं बाधज्ञानकालात् पश्चात् त्यजति। परमार्थस्थले तु न रज्जुत्वं जहाति।

एवञ्च अबाधितत्वं सत्यत्वमुक्तं भवति। सत्यं ब्रह्म विकारोऽनृतम्। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति दृष्टान्तेन सत एव सत्यत्वं विकारस्य च पराधीनसत्ताकस्य प्रपञ्चस्यानृतत्वमुक्तम्। विकारस्य स्वरू-व्यभिचारात्। ब्रह्म च सत्त्वेन निर्वाच्यं न सत्यत्वं व्यभिचरति। तथा च सत्यपदं ब्रह्मणो विकारान्निवर्तयति।

ननु सत्यविशेषणेन विकारभिन्नत्वं ब्रह्मणः प्राप्तम्, ततश्च कारणत्व-मप्यागतम्। कारणत्वाच्च मृदादिरूपवज्जडत्वमापादयतीति ज्ञानमित्युच्यते। तच्च

ब्रह्मज्ञानं चिद्रूपमित्यर्थः। ज्ञानशब्दो भावसाधनो ज्ञप्तिवाची न तु ज्ञानवतो बोधकः, ज्ञानकर्तृत्वस्य वा, सत्यानन्तपदसाहचर्यात्। न हि ज्ञानकर्तृत्वे सत्यत्वं सम्भवति, ज्ञानक्रियावत्वात्। न च ज्ञानकर्तृत्वे ज्ञानज्ञेयाभ्यां विभक्तत्वाद् अनन्तत्वं सम्भवतीति न ज्ञानकर्तृ ब्रह्मापि तु ज्ञानरूपमेव।

यत्र नान्यद् विजानाति स भूमा इति भूमलक्षणे ज्ञानकर्तृत्वनिषेधात्। न चात्मानं विजानातीति प्राप्तमिति वाच्यम्, तत्र नान्यद् विजानाति नान्यत्पश्यतीति वाक्येन भूमलक्षणस्य प्रतिपाद्यत्वात् प्रसिद्धस्यान्यकर्तृकान्यदर्शनस्य निषेधमुखेन सर्वदर्शनकर्तृत्वं निषिध्यते। ज्ञानस्यापि लोके अन्तवत्त्वदर्शनाद् ब्रह्मणोऽन्तवत्त्वं प्राप्तमिति अनन्तमुच्यते। न अन्तः ध्वंसो यस्य तद् अनन्तमिति नित्यमित्यर्थः। एवञ्च सत्यानन्तज्ञानपदैस्तत्तदर्थव्यावर्तकैर्लक्ष्यमाणं ब्रह्म सत्यं ज्ञानरूपं नित्यमिति विज्ञायते।

ननु सत्यादिपदानि असत्याद्यर्थनिवर्तकत्वाद् विशेषणान्येव, तथा च ब्रह्मणो लक्षणशून्यत्वाद् अलीकता प्रसज्यते। यथा वन्ध्यापुत्रस्य द्वित्रविशेषणप्रदानेन नैव सत्त्वं निर्धार्यते। तथात्राप्रसिद्धत्वाद् ब्रह्मण इति चेत्, न, सत्यादिपदानि तु साक्षाद् ब्रह्मैवाखण्डं लक्षयन्ति, अनृतादिव्यावृत्तिस्तु आर्थिकी। तेषां पदानां ब्रह्मस्वरूप-निर्धारणे एव तात्पर्यम्। निर्धारिते च ब्रह्मस्वरूपे इतरस्य व्यावृत्तिरर्थतो भवति। यथा गोस्वरूपे निर्धारिते सति सास्नादिमद्भिन्नस्य इतरस्य निवृत्तिर्भवति।

न च 'ब्रह्म अनित्यं ज्ञानत्वात् लौकिकज्ञानवद्' इत्यनुमानेन, ज्ञानस्य धात्वर्थत्वात् क्रियारूपतया अनित्यत्वात् कर्त्रादिपराधीनत्वान्न तद्रूपत्वं ब्रह्मण इति वाच्यम्, आत्मनो नित्यज्ञप्तिस्वरूपत्वात्। ज्ञप्तिश्च चैतन्यं सर्वावभासकं न धात्वर्थः। 'अयं घटः, अयं पटः' इत्याकारकमनःपरिणामरूपवृत्तिरेव चैतन्यप्रकाश्या धात्वर्थः।

चैतन्यं तु तदभिव्यङ्ग्यं तदवभासकं नित्यमन्यदेव। उक्तञ्च श्रुतौ प्रतिबोधविदितं मतमिति। बोधा वृत्तयः। बोधं बोधमिति प्रतिबोधं बोधव्यापकमित्यर्थः। तथा वृत्तिभासकत्वेन व्यापकं ब्रह्म न वृत्तिरूपमेवेति। कामः सङ्कल्पो विचिकित्सेत्यादि सर्वं मन एवेति श्रुत्या वृत्तेर्मनःपरिणामत्वप्रतिपादनात्। एवञ्चाबाधितनित्यव्यापकचित्स्वरूपं ब्रह्मेति फलितम्।

ननु असाधारणधर्मो लक्षणम्। ब्रह्मणि च निर्विशेषे निर्धर्मके कस्यापि धर्मस्याभावात् कथं सत्यादिपदं लक्षकम्? न च जात्यादिप्रवृत्तिनिमित्तरहिते शब्द-प्रवृत्तिः क्वचिद् दृष्टेति। अलक्षणं वा ब्रह्म सत्यत्वादिधर्मकं वेति। अलक्षणे अलीकत्वापत्तिः सधर्मकत्वे अनित्यत्वापत्तिरिति चेत्, न, आरोपितैरेव सत्यत्वादि-धर्मैः सत्यादिपदैर्ब्रह्म लक्ष्यते न त्वभिधीयते। ब्रह्मणः सर्वप्रमाणागोचरत्वात्।

'न तत्र चक्षुर्गच्छति, न वाग् गच्छति, नो मनः, विद्मो न विजानीमो यथैतदनुशिष्याद् अन्यदेव तद् विदिताद् अविदितादधि इति शुश्रुम पूर्वेषां ये न तद् व्याचचक्षिरे।

यद् वाचाऽनभ्युदितं येन वागभ्युपपद्यते।

यन्मनसा न मनुते येनाहुर्मनो मतम्'।। (केन. २.४.५)

इत्यादिश्रुतिभिरिन्द्रियमनोवाग् अविषयत्वप्रतिपादनात्। तथा चाखण्डं निर्विशेषं ब्रह्म सत्यादिपदेन लक्ष्यते। न चासाधारणधर्मस्य लक्षणत्वात् सत्यत्वादेश्च परापरजातितया साधारण्यान्न लक्षकत्वमिति वाच्यम्, आपेक्षिकसत्यत्वादेरन्यत्र भावादपि परमार्थसत्यत्वस्य ब्रह्मस्वरूपलक्षणत्वात्। त्रैकालाबाध्यत्वं हि सत्यत्वमभिहितम्। न च ब्रह्मातिरिक्तं किञ्चित् त्रिकालाबाध्यम्।

न चासाधारणधर्मरूपलक्षणवाक्यस्य सखण्डार्थत्वनियमात् कथं सत्यादिवाक्यमखण्डं ब्रह्म बोधयेदिति वाच्यम्, स्वरूपलक्षणवाक्यानां सर्वेषाम् अखण्डार्थबोधकत्वात् तादृशनियमासिद्धेः। प्रकृष्टप्रकाशश्चन्द्र इत्यादौ स्वरूपबोधके वाक्ये चन्द्ररूपार्थमात्रबोधकत्वस्य दृष्टत्वात्। तत्र मन्दप्रकाशादीनां व्यावृत्तिस्त्वार्थिकी न शाब्दीति। तटस्थलक्षणस्य तु सखण्डार्थबोधविषयो भवतु नाम।

न चाद्वैतवेदान्तमते सत्यत्वादीनां ब्रह्मस्वरूपातिरिक्तत्वाभावाद् अभिन्नत्वाद् अभेदे लक्ष्यलक्षणभावानुपपत्तिः, न हि देवदत्त एव देवदत्त इत्युक्ते किञ्चित्प्रतिपद्यत इति वाच्यम्, सत्यत्वादीनामन्तःकरणवृत्तिनिबन्धनाकारभेदमादाय तथोपपत्तेः।

एवञ्च यया प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्येन प्रकृष्टप्रकाशोपलक्षित चन्द्रस्वरूपमात्रमवबुध्यते तयैव सत्यादिवाक्येनापि आरोपितैः सत्यत्वादिगुणैरुपलक्षितं ब्रह्म बोध्यते।

न चारोपितैर्धर्मैः कस्यापि लक्षकत्वे घटादीनामपि तदारोपितैः पटत्वादिभिर्धर्मैर्लक्षणं स्यात्, शुक्तेश्च रजतत्वधर्मवत्त्वं लक्षणं स्यादिति वाच्यम्, सधर्मकस्थले आरोपितधर्मैस्तथादर्शनात्। तादृशधर्मस्य चासाधारण्याभावात्। निर्धर्मकस्थले तु आरोपितधर्म एव शरणमित्यदोषात्। न च सत्यत्वादिधर्माः परमार्थत एव ब्रह्मनिष्ठाः किं न स्वीक्रियन्त इति वाच्यम्, निर्गुणनिराकारनिर्विशेषत्वप्रतिपादकश्रुतेर्विरोधात्।

न च किमर्थं सत्यत्वादिधर्मारोप इति वाच्यम्, प्रमाणानां स्वभावतः सविशेषे प्रवृत्तियोगात्। शब्दस्य जात्यादिप्रवृत्तिनिमित्तयोगात्। निर्गुणे कथञ्चिद गुणमारोप्य जिज्ञासवः श्रुत्या बोध्यन्ते। न च तर्हि सत्यं ज्ञानमनन्तमित्यादिना सविशेषमेव ब्रह्म स्वगतभेदभिन्नं बोध्यताम्। अगृहीतसम्बन्धे शब्दाप्रवृत्तेः,

सम्बन्धग्रहश्च यत्किञ्चिद्धर्मपुरस्कारेणेति वाच्यम्, साक्षात् शब्दव्यापार-विषयत्वाभावाद् ब्रह्मणः। न ह्यभिधयैव सत्यादिपदैर्ब्रह्म बोध्यते।

उपलक्षणविधया अन्योन्यव्यावर्तकतया मिश्रितपदैर्ब्रह्म समर्प्यते। तथा हि सत्यमित्यादिवाक्येन सत्यत्वादिविशिष्टमभिधया बोध्यते, तत्र श्रुतितात्पर्यानुपपत्त्या च सत्यत्वादिधर्मरहितमखण्डं चिन्मात्रं लक्ष्यते। श्रुतितात्पर्यं च षड्भिर्लिङ्गैरुपेतया निर्गुणेऽखण्डे ब्रह्मण्येवाद्वैतवादिन्या निर्धार्यते। अतोऽद्वैते तात्पर्यवत्या भगवत्याः श्रुतेरनुपपत्त्या सत्यादिपदानामपि अखण्डे ब्रह्मणि लक्षकत्वं निर्धार्यते।

सर्वत्रैव लक्षणवाक्ये तथानुगमात्। न च सत्यादिपदैरेकमेव निर्धर्मकं ब्रह्म बोध्यते चेत्? पदान्तरवैयर्थ्यम्, अनृतत्वादिव्यावृत्तिद्वाराखण्डब्रह्मबोधनान्न पदान्तरवैयर्थ्यम्। न चैकार्थबोधकत्वात् सत्यादिपदानां पर्यायतापत्तिस्तथा च पदान्तरवैयर्थ्यं तदवस्थमेवेति वाच्यम्, भिन्नप्रवृत्तिनिमित्तत्वात्।

न च निर्धर्मके ब्रह्मणि कस्यचिद् व्यावर्तकधर्मस्याभावाद् आरोपितधर्मेण च व्यावृत्तेरसम्भवात् सत्यमित्यादिना स्वरूपबोधे च व्यावृत्तेरभावात् कथं सत्यादिवाक्यतां लक्षणाभिधायित्वमिति वाच्यम्, सत्यादिवाक्यानां स्वरूपमात्र बोधकत्वाद् गौरित्युक्तेऽपि नाश्वो न गर्दभ इति आर्थिकी व्यावृत्तिर्भवत्येव। न च सत्यत्वादिधर्मराहित्यात् सत्यं ब्रह्मेति सामानाधिकरण्यानुपपत्तिः, ऐक्ये सामानाधिकरण्यावबोधनात्। चतुर्धा हि सामानाधिकरण्यं बाधायां विशेष्यविशेषणभावे अध्यासे ऐक्ये च। 'स्थाणुः पुरुषः', 'नीलो घटः' 'इदं रजतम्' 'सोऽयं देवदत्त' इत्यादीनि क्रमेणोदाहरणानि। भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे तात्पर्यबोधकत्वं सामानाधिकरण्यम्।

यथा बहुषु जलेषु बिम्बप्रतिबिम्बभावेन नानात्वेन भासमानेषु रविमण्डले-ष्वम्बरस्थः सविता सत्य इति वाक्ये सत्यपदस्यार्थवत्त्वम्, एकत्वेऽपि सवितु-स्तथैव प्रकृतेऽपि सत्यत्वेन भासमानेष्वाकाशादिषु ज्ञानं सत्यमिति लक्षणेन बोध्यते। ज्ञानञ्चापि वृत्तौ प्रसिद्धमनन्तपदेन वृत्तिभासकं चैतन्यं बोध्यत इति परस्पर-विरोधिधर्मव्यावर्तनेन लक्षणयाऽखण्डं ब्रह्म बोध्यते। प्रत्येकं वा लक्षणम्। सत्यं ब्रह्म ज्ञानं ब्रह्म अनन्तमिति। यथा कं ब्रह्म खं ब्रह्मेति।

न च मानान्तरयोग्यत्वाभावात् कथमखण्डपदस्य ब्रह्मणो लक्ष्यत्वम्? इति वाच्यम्, मानान्तरयोग्यत्वस्य लक्ष्यत्वाप्रयोजकत्वात्, किन्तु प्रतीतियोग्यत्वस्य। तस्मात् सिद्धमसत्यत्वादिभ्रमनिवृत्तिपूर्वकं सत्यादिवाक्यस्य निर्विशेषपरत्वम्।

उक्तञ्च समन्वयसूत्रे पञ्चपादिकायाम्—'सम्यगन्वयः समन्वयः। पदानां परस्परमवच्छिन्नार्थानामनन्याकाङ्क्षाणामव्यतिरिक्तैकरसप्रातिपदिकार्थमात्रान्वयः सोऽयमित्यादिपदानामिव' इति।

पञ्चपादिकाविवरणेऽपि तद्व्याख्यायामुक्तम्— 'एकं सत्यानन्तादिशब्दा भेदमिथ्यात्वद्वैताभावाभिधानद्वारेण तत्र लक्षणया वर्तन्ते। सर्वज्ञः सर्वशक्तिरित्यादिशब्दाश्चानिर्वचनीयप्रपञ्चोपाधितया तत्र वर्तन्ते। अयमात्मा, तत्त्वमसीति शब्दाश्च मुख्यवृत्तिलक्षणाभ्यां ब्रह्मण्येन वर्तन्त इति सर्वे जगत्कारणविषयाः शब्दा मुख्यवृत्तिलक्षणोपाधिभिरेकरसमेव ब्रह्म प्रतिपादयन्ति'।

अखण्डं निर्विशेषञ्च निर्गुणञ्च निराकृति।
ब्रह्म जिज्ञास्यमेवेति विशेषोपहितं न च।।

अत एव सिद्धान्तबिन्दौ मधुसूदनसरस्वतीभिरुदीरितम्—सत्यज्ञानमित्यादिवाक्यं, तत्पदस्य लक्ष्यार्थसमर्पकमिति।

ननु सत्यमित्यादिपदैरखण्डं निर्विशेषं ब्रह्म लक्षणया बोध्यते। लक्षणा च शक्यसम्बन्धः। तत्र सत्यमित्यादिपदानां क्व शक्तिग्रहः कश्च ब्रह्मणाऽखण्डेनासङ्गेन सम्बन्ध इति चेत्, न, सत्यादिपदानां सत्यत्वादिविशिष्टे शक्तिग्रहः सम्भवति। तथा च तद्धर्मावच्छिन्नशाब्दबुद्धित्वावच्छिन्नं प्रति वृत्तिविशिष्टं ज्ञानं हेतुः। ज्ञाने वृत्तिवैशिष्ट्यञ्च स्वाश्रयपदविषयकत्वं स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यमित्युभयसम्बन्धेनेति कार्यकारणभावेन सत्यादिपदैः शक्त्या विशिष्टार्थयोस्तादात्म्यं सामानाधिकरण्यानुरोधात् प्रथमं बोध्यते।

तथा च भिन्नप्रवृत्तिनिमित्तकशब्दशक्त्योपस्थापितानां सत्यत्वादिविशिष्टानां कथं तादात्म्यमिति विरोधप्रतिसन्धानद्वारा निर्गुणनिर्विशेषाद्वैतश्रुतितात्पर्यानुरोधात् सत्यत्वादिधर्मपरित्यागपूर्वकं वाक्येन शुद्धं ब्रह्म लक्ष्यते। उपलक्ष्यधर्मिबुद्धौ चोपलक्षणीभूतधर्मविशिष्टबुद्धेर्हेतुत्वम्। अत एवाद्वैतसिद्धौ तत्राद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वाद्द्वैतमिथ्यात्वमेव प्रथममुपपादनीयमिति वाक्यव्याख्यावसरे चन्द्रिकाकृद्भिरुक्तम्—

'एकमेवाद्वितीयं ब्रह्मेत्यादिश्रुत्या जायमाने अद्वैतोपलक्षितब्रह्मनिर्विकल्पकनिश्चये ब्रह्मणि द्वैताभावविशिष्टबुद्धेर्द्वारत्वाद्' इति। तत्रैव च विट्ठलेशोपाध्यायेनोक्तम्— 'एवञ्च तादृशश्रुतेः सकाशात् प्रथमतो ब्रह्मणि द्वैताभावप्रकारबोधो जायते। ततस्तादृशाभावोपलक्षितब्रह्मरूपधर्मिमात्रबोधः। उपलक्ष्यधर्मिबुद्धौ चोपलक्षणीभूतधर्मविशिष्टबुद्धेर्हेतुत्वम्। एवञ्च ब्रह्मणि द्वैताभावविशिष्टबुद्धेर्द्वारतानिर्वाहः'।

सत्यमित्यादिलक्षणवाक्येऽपि निर्विकल्पकबोधात् प्राक् सत्यत्वादिविशिष्टस्य बोध आवश्यकः। अन्यथा विरोधप्रतिसन्धानाभावाल्लक्षणाया अवताराभावः। तथा च प्रथमं सत्यत्वविशिष्टस्य ज्ञानत्वविशिष्टस्याभेदो बोध्यते। तथा च शक्यतावच्छेदकयोरपि तादात्म्यापत्तौ तद्विरोधानुसन्धानद्वारा लक्षणया शुद्धब्रह्मबोधः। तथा च सत्यादिपदानां न वैयर्थ्यं पर्यायतापत्तिर्वा। उक्तञ्च सङ्क्षेपशारीरके—

सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः।
पश्चादेव विशेषणेतरतया पश्चाद् विरोधोद्भवः।।
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डार्थधीः।
सर्वैरिव ततः पदैरयमिह ज्ञेयः क्रमः सूरिभिः।।

एवञ्च सत्यत्वज्ञानत्वादितादाम्यविशिष्टब्रह्मेति सप्रकारकबोधस्य द्वारता युक्ता। तदनन्तरं विरोधः, तदनन्तरं लक्षणयाऽखण्डार्थबोध इति क्रमः। तादात्म्यञ्च भेदाभावः।

यद्वा सत्यादिपदैः प्रथमत एव निर्विकल्पकबोधो जायते, ततश्चार्थापत्त्या सत्याद्युपलक्षितयोरभेदबोध इति तदा सत्यत्वादिप्रकारकज्ञानस्य द्वारतया नोपयोगः, निर्विकल्पकबोधश्च सत्यादिपदोपलक्षिताभेदं विना नोपपद्यत इति।

अत एव सिद्धान्तबिन्दावुक्तम्—'वाच्यार्थभेदावभासान्न पौनरुक्त्यमिति'। लक्ष्यस्य चाखण्डत्वं एकत्वाच्छुद्धत्वाद् बोध्यम्। एवञ्च विरोधिधर्मसंशयभ्रम-निवृत्त्यर्थं पदान्तराणामुपयोगः। न च सखण्डं सत्यत्वादिविशिष्टमेव ब्रह्म किं बोध्यत इति वाच्यम्, तथा सति ब्रह्म प्रकारतया विशेष्यतया वा ज्ञायते। अन्यतरत्वेन ज्ञातस्य मिथ्यात्वात् संसर्गप्रतियोग्यनुयोगित्वात्। तज्ज्ञानं न प्रमा न च तेन तादृशेन ज्ञानेन दृश्योच्छेदः, अधिष्ठानशुद्धविषयकत्वाभावात्।

न च परप्राप्तिः, अत एव ब्रह्मविदाप्नोति परमिति प्रतिज्ञया उद्देश्यतावच्छेदकप्रयोज्यत्वं विधेये भासत इति नियमात् पराप्तौ ब्रह्मवेदनस्य प्रयोजकत्वात्। वेदनस्य चाधिष्ठानब्रह्मविषयत्वं स्वीकार्यम्। तच्च ब्रह्म सत्यमित्यादि निर्विशेषरूपम्।

तथा च ईशावास्योपनिषदि श्रुत्या लक्ष्यते—'यस्मिन् सर्वाणि भूतानि आत्मैवाभूद् विजानतः, तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्यादिना। आत्मैकत्वविज्ञानस्य शोकमोहरूपानर्थोच्छेदकत्वमुक्त्वा आत्मलक्षणमुच्यते—

'सपर्यगात् शुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्। कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः'। पर्यगात् = समन्ताद गतवान् सर्वगतो व्यापकः। शुक्रं = ज्योतिष्मत्। अकायम् = अशरीरो लिङ्गशरीररहितः। अव्रणम् = अक्षतम्। अस्नाविरं = स्नायुपरिवर्जितम्। अव्रणास्नाविरशब्दाभ्यां स्थूलशरीरप्रतिषेधः। शुद्धं = निर्मलमविद्यादोषरहितमनेन कारणशरीर-प्रतिषेधः। अपापविद्धं = धर्माधर्मादिरहितम्। कविः = क्रान्तदर्शी सर्वदृक् इत्यर्थः। नान्योऽतोऽस्ति द्रष्टा इति श्रुतेः। मनीषी = मनसः ईशिता सर्वज्ञः = ईश्वरः। परिभूः—परि = उपरि भवति इति परिभूः स्वयंभूः = स्वयम्भवति अत्र भवतिः =

सत्ता। स = नित्यमुक्त ईश्वरो याथातथ्यत: = यथाभूतकर्मफलसाधनतोऽर्थान् व्यदधात् = व्यभजत्, शाश्वतीभ्य: = नित्याभ्य: समाभ्य: = संवत्सरेभ्य: प्रजापतिभ्य इत्यर्थ:। अनेन मन्त्रेण ब्रह्मण: स्वरूपलक्षणं तटस्थलक्षणञ्चोक्तम्।

केनोपनिषदि सर्वेन्द्रियमनोबुद्धिवाचामविषयत्वमुक्तं ब्रह्मण:। तदपि निर्विशेषमेव ब्रह्म बोधयति। यस्यामतं तस्य मतमित्यादिना च सर्वमिति विषयत्वाभाव एव उक्त:। मुण्डके च ब्रह्मण: स्वरूपमुक्तम्—

'यत् तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षु:श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा:' इति। अनेन निर्विशेषमेव ब्रह्म बोध्यते सर्वविशेषप्रतिषेधात्। माण्डूक्येऽपि—'अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय:'। इत्यादिना तादृशं निर्विशेषमेव ज्ञेयत्वेनोच्यते। अत: निर्विशेषमेव ब्रह्म जिज्ञास्यम्। तथा निर्गुणं निष्क्रियं शान्तं निरवद्यं निरञ्जनमित्यादिश्रुतिभिश्च निर्विशेषब्रह्मस्वरूपं प्रतिपाद्यते। तदेवमेतत् श्रुतितात्पर्यानुरोधात् सत्यमित्यादिलक्षणवाक्येन शुद्धतात्पर्यात् शुद्धमेव बोध्यते।

लक्ष्यगतस्वरूपं संशयभ्रमनिवृत्त्यर्थं स्वरूपलक्षणमुक्तम्। तटस्थलक्षणञ्च ब्रह्मणो निर्विशेषस्य 'जन्माद्यस्य यत:' इत्यादिसूत्रेण जगज्जन्मादिहेतुत्वरूपमुक्तम्। तथा च श्रुति:—'यतो वा इमानि भूतानि जायन्ते यस्मिन् जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म तद्विजिज्ञासस्वेति' (तैत्तिरीयोपनिषद्)। जगज्जन्मादिहेतुभूतब्रह्म जिज्ञासितव्यमिति श्रुत्या बोध्यते। यतो वा इमानीति वाक्यमपि स्वार्थं बोधयित्वा निर्गुणश्रुतितात्पर्यानुरोधाद् विरोधप्रतिसन्धानद्वारा लक्षणयाऽखण्डनिर्विशेषं ब्रह्मैव बोधयति। तथा च जगज्जन्मादिहेतुत्वोपलक्षितं ब्रह्मेति फलितम्।

तथा च जगज्जन्मादिहेतुत्वविशिष्टबोधद्वारा अखण्डार्थबोध:। अथवा विशिष्टे शक्तिग्रहेऽपि शुद्धांशे श्रुतितात्पर्यवशात् स्मरणे तद्वाक्येन शुद्धस्य निर्विकल्पबोध इति। यतो वेति वाक्यं तत्त्वमसीति महावाक्यस्य तत्पदशक्यार्थस्य समर्पकमिति। अत: प्रथमं विशिष्टबोधस्तदनन्तरं लक्षणया निर्विकल्पकबोध इति मन्तव्यम्। भाष्ये प्रथमं तटस्थलक्षणमेवोक्तं जगज्जन्मादिहेतुत्वरूपं सर्वज्ञ: सर्वशक्तिरित्यादि तु अनन्तरं स्वरूपलक्षणमुक्तम्।

सर्वथा ज्ञायमानं वस्तु प्रथमतस्तटस्थलक्षणेनापाततोऽनन्तरं स्वरूपलक्षणेन प्रतिपाद्यते। यथा—'कश्चन्द्र:' इति जिज्ञासायां 'शाखाग्रश्चन्द्र:' 'प्रकृष्टप्रकाशश्चन्द्र:' इत्युभयलक्षणे अभिहिते। प्रथमं तटस्थलक्षणेन अत्यन्तविजातीयमात्रव्यावृत्ति:। तत: स्वरूपलक्षणेन 'प्रकृष्टप्रकाशश्चन्द्र' इत्यादिना सदृशविजातीयव्यावृत्ति:। तथा

यल्लक्षणं वस्तुगत्या न लक्ष्यगतं भवति सामान्यतो लक्ष्यस्वरूपोपस्थापकं तत् तटस्थलक्षणम्। तत्र लक्षणेन लक्ष्यसम्बन्धः कल्पितोऽपि न दोषावहः। यथा शाखाचन्द्रयोर्विशिष्टसम्बन्धाभावेऽपि तटस्थलक्षणत्वं सम्भवति। स्वरूपलक्षणं तु विशेषतो लक्ष्यगतं सत् लक्ष्यस्वरूपनिर्णायकं भवति। यथा— प्रकृष्टप्रकाशश्चन्द्र इति। एवं सति जगज्जन्मादिहेतुत्वेन सामान्यतो ब्रह्मणो सत्तां निरूप्य तत् स्वरूपजिज्ञासायां सत्यज्ञानादिस्वरूपलक्षणं प्रवृत्तम्। एतच्च यत्पञ्चमीप्रकृत्या यच्छब्देन सूचितम्, अत एव यच्छब्दस्य सर्वज्ञादिति भाष्ये विवरणमुक्तम्।

ननु जन्मस्थितिभङ्गाः लक्षणं न भवितुमर्हन्ति तेषां जगद्धर्मत्वाल्लक्ष्यान्तर्गतत्वाभावात्। न वा जगदेव लक्षणम्, तस्य जगद्धर्मत्वाभावाद् असाधारणधर्मो लक्षणमिति स्वीकारात्। न च तादात्म्येन जगदेव ब्रह्मणो लक्षणमिति वाच्यम्, जडस्य जगतोऽजडेन ब्रह्मणा तादात्म्यायोगादिति चेत्, न, जगज्जन्मादिहेतुत्वेन ब्रह्म लक्ष्यम्। जगज्जन्मादिहेतुत्वं लक्षणं भवितुमर्हति।

ननु तदपि जगज्जन्मादिहेतुत्वं किं लक्षणान्तर्गतं किं वा लक्ष्यान्तर्गतमिति चेदत्रोच्यते—यथा काकवन्तो देवदत्तस्य गृहा इत्यादौ काकाधिकरणंत्वं न लक्ष्यान्तर्गतमपि तु उपलक्षणविधया काको गृहस्य बोधको भवति। एवमेव तादृशहेतुत्वस्य लक्ष्यान्तर्गतत्वाभावेऽपि तदुपलक्षणं भवितुमर्हति। अतो इदमुपलक्षणमेव जगज्जन्मादिहेतुत्वम्।

ननु यदि उपलक्षणीभूतधर्मेण उपलक्ष्यस्य सम्बन्ध एव नास्ति चेत्, अन्यस्याप्युपलक्ष्यत्वप्रसक्तेरवश्यं सम्बन्धो बोध्यः। स च निर्धर्मके ब्रह्मणि न सम्भवतीति चेत्, न, अविद्याकल्पितत्वं जगत्कर्तृत्वादिकं ब्रह्मणि स्वीकृत्य उपलक्षणायोगात्। तेन च न धर्मलक्षणेन सत्यत्वादिना न वोपलक्षणेन जगज्जन्मादिहेतुत्वादिना वा लक्ष्यस्य ब्रह्मणो परिच्छेदः।

न ह्यविद्याकल्पितं रजतं स्वाधिष्ठानं शुक्तिस्वरूपमुपलक्षयदपि शुक्तिस्वरूपमन्यथयति भिनत्ति वा। तथैव प्रकृतेऽपि बोध्यम्। भवति यद्रजतं सा शुक्तिरिति व्यपदेशे रजतं शुक्तेर्लक्षणम्। एवं जगद्धेतुत्वं लक्ष्यब्रह्मान्तर्गतत्वेऽपि तटस्थं सद् ब्रह्म उपलक्षयतीति सिद्धम्। जगद्धेतुत्वञ्च कीदृशं ब्रह्मणि इत्युपरिष्टाद् वक्ष्यते।

न च सत्ययोरेवोपलक्ष्योपलक्षणभावो घटादिषु दृष्टः कथमसत्यस्य जगत्कारणत्वसत्यत्वसर्वज्ञत्वस्य ब्रह्माधिष्ठितत्वं स्यादिति वाच्यम्, ब्रह्मातिरिक्तस्य सत्यत्वं निरूपयितुमशक्यत्वात्। इदं रजतमित्यादिषु कल्पितेनापि रजतेन शुक्तिस्वरूपबोधनात्। एवञ्च सत्यत्वादिना धर्मलक्षणेन जगत्कर्तृत्वादिना च तटस्थलक्षणेन निर्विशेषमेव ब्रह्म बोध्यते, तज्ज्ञानादेव प्रपञ्चोपशमादिति सिद्धम्।

●

# अध्यासस्वरूपविमर्शः

**डॉ. रामकिशोरत्रिपाठी**
व्याकरणविभागाध्यक्षः
श्रीमाथुरचतुर्वेदसंस्कृतमहाविद्यालये
डैम्पियरनगरम्, मथुरा (उ.प्र.)

सत्यानृतसमाश्लिष्टं जगदेतत्प्रवर्तते।
अज्ञानेनावृता रज्जुः सर्पत्वमधिगच्छति।।

शुक्तावालोकवैचित्र्याद् रजतमवभासते।
तथेदं जगदाकारं चैतन्यञ्च विवर्तते।।

हेतुस्तत्र हरेरिच्छाऽज्ञानं च सर्वदेहिनाम्।
तस्य शक्तिद्वयाक्रान्तः सृजति प्रपञ्चं हरिः।।

आवृणोतीति सज्ज्ञानं विक्षेपाज्जगदुद्भवः।
शक्तिद्वयनिमित्तेन ब्रह्मण्यध्यस्यते जगत्।।

मायोपहितचैतन्येऽहन्तत्त्वमवभासते।
तत्र कामादयोऽध्यस्ताः शरीराध्यासहेतवः।।

वासनावशमापन्ना विषयाः सर्वदेहिषु।
चैतन्ये सर्वभूतानि भासन्ते प्रतिबिम्बवत्।।

अनादिवासनावशादन्तःकरणावच्छिन्नो जीवपदवाच्यश्चायमात्मा रागादिना नित्यानित्यवस्तुविवेकशून्यः, नित्यशुद्धस्वभावोऽपि सन् स्वस्वरूपानभिज्ञः कृताकृतकर्मविपाकभागित्वाज्जन्मजन्मान्तरेष्वपि जरामरणादिदुःखादनिर्मुक्तो महान्धकारात्मके कूपे पतितो निर्गमनमार्गमन्विष्यति। तदर्थं काले काले नैकानि नित्यानित्यवस्तुविवेचनपराणि परमतनिरसनपुरःसरस्वमतप्रतिपादकानि दर्शन-शास्त्राणि ऋषिभिर्निर्मितानि, तत्र ज्ञानप्रधानतया वेदान्तशास्त्रमेव सर्वतोभावेन

तमोनिवृत्तौ क्षमम्। 'ब्रह्मविदाप्नोति परम्[१]', 'सत्यं ज्ञानमनन्तं ब्रह्म[२]', 'तमेवं विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय[३]' इत्यादिश्रुतेः। भ्रमादुत्पन्नं प्रपञ्चभूतमिदं जगद् दैहिकदैविकभौतिकसुखदुःखादीनां निमित्तम्। भ्रमोत्पत्तिनिमितञ्चाज्ञानम्। अत एव सकलप्रपञ्चनिवृत्तौ ब्रह्मज्ञानमेव हेतुः। 'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य[४]' इति श्रुतेः। गीतायामपि— 'न हि ज्ञानेन सदृशं पवित्रंमिह विद्यते[५]', 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति[६]', 'तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः[७]'।

अज्ञानं हि आवरणविक्षेपशक्तिद्वयेन चैतन्यमावृत्य प्रपञ्चमुद्भावयति[८]। इयमविद्यैव प्राणिमात्रस्य भ्रमोत्पादने हेतुः। सैवाविद्याऽनाद्यनिर्वचनीयतया विपर्ययोपादानभूतत्वाच्च विक्षेपशक्तिप्रधाना मायेति व्यवह्रियते। यद्यप्यधिष्ठानज्ञाननिवर्त्यतया रजतमविद्यायाः परिणामो न मायायाः। यतश्च माया नैन्द्रजालिकादिस्वाश्रयेषु भ्रममुत्पादयति, तथापि लोकेऽविद्यानिर्मितेषु हस्त्यश्वरथादिषु मायाशब्द एव प्रसिद्धो नाविद्याशब्दः, एवञ्चानिर्वचनीयत्वे सति तत्त्वावभासप्रतिबन्धविपर्यायासरूपहेतुत्वस्योभयत्र सत्त्वादविशिष्टम्।

तत्राविद्योपहितचैतन्यस्य मायोपहितचैतन्यस्य च सत्ता पृथङ्निर्दिश्यते। तथा हि ब्रह्मणस्त्रिकालाबाधविषयत्वेन पारमार्थिकसत्त्वं मायोपहितचैतन्यस्य व्यावहारिकसत्त्वमविद्योपहितचैतन्यस्य च प्रातिभासिकसत्त्वम्। पूर्वपूर्वसत्ताज्ञानोत्तरमुत्तरोत्तरसत्ताबाधात्, शुक्तिरूपाधिष्ठानज्ञानेन प्रातिभासिकरजतनिरासः, व्यावहारिकशुक्तेश्च ब्रह्मज्ञानेन बाधात् पारमार्थिकज्ञानोत्तरमुपाधिविरहेण चैतन्यमेवावशिष्यते। ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वात् शुक्तिरूप्यवदित्यनुमानेन सोपाधिकसत्तयोः सामान्येन बाधान्नाविद्यामाययोर्वास्तविको भेदः। उक्तञ्च—

'देहात्मैक्यभ्रमे यद्वज्जीवाविद्याप्रकल्पिते।
जीवापरोक्ष्यमस्त्येव नाविद्यामाययोर्भिदा'[९]।।

इयमविद्याऽऽवरणशक्त्या चैतन्यस्य सच्चिदानन्दस्वरूपमावृत्य विक्षेपशक्त्या ब्रह्मादिस्थावरान्तं जलबुद्बुदवन्नामरूपात्मकं प्रपञ्चं सृजति।

---

१. तैत्तिरीयोपनिषद्-२।१; २. तदेव-२।१।
३. श्वेताश्वतरोपनिषद्-३।८; ४. मुण्डकोपनिषद्-२।१०।
५. गीता-५।३८; ६. तदेव-५।३९।
७. तदेव-५।४२; ८. मधुसूदनसरस्वतीकृताद्वैतसिद्धौ।
९. सदानन्दकृताद्वैतसिद्धान्तसारे।

नन्वपरिच्छिन्नस्य प्रकाशचिद्रूपाखण्डपरिपूर्णस्वरूपस्यात्मनः परिच्छिन्नेनानित्येन जडतमोरूपेणाव्यापकेनाज्ञानशक्तिविशेषेण कथमावरणमित्याशङ्क्योच्यते—वस्तुतोऽज्ञानस्यात्माच्छादकत्वाभावेऽपि प्रमातृमात्राच्छादकत्वेनाज्ञानस्यात्माच्छादकत्वमुपचर्यते। तद्यथाऽत्यल्पोऽपि मेघोऽनेकयोजनविस्तीर्णमादित्यमण्डलमवलोकयितृपुरुषदृष्टिमात्राच्छादकत्वेनाच्छादयतीत्युपचर्यते, तथातितुच्छं परिच्छिन्नमप्यज्ञानं प्रमातृबुद्धिमात्राच्छादकत्वेनात्मानमाच्छादयतीत्युपचारः। इयमेवावरणशक्तिरात्मनो भेदबुद्धिजनकत्वेन संसारहेतुरिति भावः। उक्तञ्च—

'घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढः।
तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा'[१] ।। इति।

इयमेवावरणशक्तिरात्मनो भेदबुद्धिजनकत्वेन संसारहेतुः। यथा रज्जुविषयमज्ञानं स्वावृतायां रज्जौ विक्षेपशक्त्या सर्पादिकमुद्भावयति, एवमेवात्मविषयकमज्ञानमपि स्वावच्छिन्न आत्मनि विक्षेपशक्तिप्रभावेणाकाशादिप्रपञ्चमुद्भावयति, तादृशं हि सामर्थ्यमज्ञानस्य। तदुक्तम्—'विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेत्'[२]।

तत्रेदमाशङ्क्यते—किमयमात्मा चराचरात्मकप्रपञ्चस्य निमित्तकारणमुपादानकारणं वा? तत्र 'तत्सृष्ट्वा तदेवानुप्राविशद्'[३] इति श्रुत्या कारणस्य कार्यानुप्रवेशनियमस्योपादानकारणविषयत्वेन निमित्तकारण-विषयत्वाभावान्नात्मनो निमित्तकारणम्। अचेतनजडप्रपञ्चं प्रत्यात्मन उपादानत्वे कार्यकारणयोरभेदेन प्रपञ्चस्यापि चैतन्यरूपत्वान्नित्यत्वप्रसङ्गः।

तत्समाधत्ते— 'शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तं स्वोपाधिप्राधान्यतयोपादानं च भवति'[४]। यथाऽयस्कान्तसन्निधाने जडमयलोहं चेष्टते, तथा चैतन्यसन्निधाने जडमयमज्ञानं चेष्टत, इत्यज्ञानविज्ञानं प्रति चैतन्यस्य निमित्तत्वम्। जडाकाशादिकार्यं प्रति मायायाः साक्षादुपादानत्वेन मायाविन ईश्वरस्यापि परम्परयोपचारादुपादानत्वमपि।

यथा लूता स्वोत्पाद्यमानं तन्तुलक्षणं कार्यं प्रति स्वचैतन्यप्रधानतया निमित्तं चैतन्यसन्निधानव्यतिरेकेण जडस्य देहस्य मृतशरीरवत्तन्तुजनकत्वासम्भवात्स्वशरीरप्राधान्येनोपादानं च भवति। अशरीरस्य साक्षात्तन्तुजनकत्वा-

---

१. सदानन्दकृतवेदान्तसारे; २. वेदान्तसारे श्रुतिरियम्।
३. तैत्तिरीयोपनिषद्-२।६।१; ४. वेदान्तसारे।

सम्भवाच्छरीरस्य साक्षात्तन्तूपादानत्वेन तदवच्छिन्नचैतन्यस्याप्युपादानत्वेनोपचारः। एवमीश्वरस्यापि स्वचैतन्यप्रधानतया निमित्तत्वं स्वोपाधिप्रधानतयोपादानत्वं च भवति। इदमत्र वैशिष्ट्यम्, चैतन्यं स्वस्वरूपापरित्यागेन प्रपञ्चोपादाने हेतुत्वाद्विवर्तोपादानं न तु दध्युत्पादने दुग्धवत्परिणामरूपम्। उक्तञ्च वेदान्तसारे—

'सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदीरितः'[१]।।

समसत्ताककार्यापत्तिरूपपरिणामाद्भिन्नो हि विषमसत्ताककार्यापत्तिरूपो विवर्तः। तथा चोक्तम्—'प्रातिभासिकरजतं चाविद्यापेक्षया परिणमश्चैतन्यापेक्षया विवर्त इति'[२]। अथ च चक्रचीवरदण्डादिवन्नानात्वाभावादभिन्नतया निमित्तम्। अत एवोक्तं स्वोपाधिप्रधानतयोपादानत्वम्। आकाशादिप्रपञ्चोत्पत्तौ चैतन्योपाधि-रूपाऽविद्यैव परिणामत्वेनोपादानम्। स्वप्राधान्येन निमित्तप्रतिपादनान्निरुपाधिक-मभिन्नञ्च चैतन्यं प्रपञ्चोत्पत्तौ हेतुः।

यथा रज्ज्ववच्छिन्नचैतन्यनिष्ठाज्ञानस्य रज्जुस्वरूपापरित्यागेन सर्पादिस्व-रूपान्तरप्रदर्शकत्वं तथेश्वरचैतन्यनिष्ठाशक्तेरपि चैतन्यस्वरूपापरित्यागेनाकाशादि-स्वरूपान्तराकारेण प्रदर्शकत्वम्। अयमेव वस्तुनि अवस्त्वारोपोऽध्यारोप इत्युच्यते। सत्ये वस्तुनि मिथ्यावस्तुतादात्म्येनाध्यस्यतेऽतोऽध्यासपदेन व्यवह्रियते। सत्यानृतसम्भेदावभासोऽध्यास इति वचनात्। उक्तञ्च—

'अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत् कथञ्चन परिस्फुरति भ्रमेषु।
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्वचन्द्रैकताप्रभृतिकानुपलम्भनेन'[३]।।

नित्यशुद्धमुक्तस्वभावात्मके निर्मलदर्पणवत्प्रतिबिम्बग्रहणक्षणे चैतन्येऽन्तः-करणवृत्तिस्वरूपं प्रतिबिम्बते। तेनैव प्रतिबिम्बेन प्रतिबिम्बितं निर्मलमपि चैतन्यं जपाकुसुमादिसान्निध्याद्रक्तं पीतं स्फटिकमिवावभासते।

तथा चाह सिद्धान्तबिन्दौ— 'दर्पणादिवत्स्वच्छत्वेन चित्प्रतिबिम्बग्राह-कत्वाच्चित्तादात्म्याध्यासाद्वा'[४]। अतः शुद्धचैतन्यं नाध्यासहेतुः। अपि च स्वोपाधिकमेवाध्यस्यते तत्रैव च प्रपञ्चाध्यासः। उक्तञ्च भामतीकारेण— 'यथा

---

१. वेदान्तसारे; २. वेदान्तपरिभाषा-प्रत्यक्षपरिच्छेदे।
३. संक्षेपशारीरके-१।३६; ४. सिद्धान्तबिन्दौ प्रथमश्लोकः।

रज्ज्वज्ञानसहितरज्जूपादाना धारा रज्ज्वां सत्यामस्ति, रज्ज्वामेव च लीयते, एवमविद्यासहितब्रह्मोपादानं जगद् ब्रह्मण्येवास्ति, तत्रैव च लीयते'[१]। रज्ज्ववच्छिन्नेऽविद्यापरिणतिः सर्पादिवद् अन्तःकरणवृत्तेरेव परिणतिरखिलं जगद् नानुपहितचैतन्यस्य निरवयवस्याप्यन्तःकरणस्य सादिद्रव्यत्वेन सावयवत्वात् 'तन्मनोऽसृजत्' इत्यादिश्रुतेः।

अन्तःकरणवृत्तिरत्र ज्ञानम्, तदुक्तं विवरणे— 'अन्तःकरणवृत्तौ ज्ञानत्वोपचारात्'[२], 'सत्यं ज्ञानमनन्तं ब्रह्म'[३] इति श्रुत्या ज्ञानस्य ब्रह्मस्वरूपत्वेनानादित्वेऽपि व्यञ्जकोपाधिवशात्तस्य सादित्वं जन्यत्वञ्च परिकल्पयन्ति स्माचार्याः। तथा चोक्तम्— 'चैतन्ययानादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षादिना जायत इति वृत्तिविशिष्टं चैतन्यमादिमदित्युच्यते, शरीरारोपितेन्द्रियादीनां प्रपञ्चारोपिताकाशादिविषयाणाञ्च तादात्म्येनावभासोऽध्यासः'[४]। अध्यस्यति चैतन्यस्वरूपमभिव्याप्य तादात्म्येनाकाशादिविषयान् स्थूलशरीरनिष्ठेन्द्रियादीनि क्षिपति, अधीत्युपसर्गस्याभिव्यापकत्वम् असुधातोश्च क्षेपणमर्थः सर्वाभिमतत्वात्। स चाध्यासः कार्यकारणोपाधिभेदाद् भिद्यते। तथा चोक्तम्— 'वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते'[५]।

वर्णाध्यासो यथा— 'राजा राजसूयेन यजेत' इत्यत्र क्षत्रियत्वमारोप्यते, शूद्रस्य शासकत्वेऽपि राजसूयक्रतावनधिकारित्वात्। आश्रयाध्यासो यथा— 'गृहस्थः सदृशीं भार्यां विन्देत्' इत्यत्र भार्यालाभेन गार्हस्थ्ये सम्भावितेऽपि गृहस्थशब्दारोपादन्याश्रमिणां भार्यासान्निध्यमतिवर्ज्यते।

वयोऽध्यासो यथा— 'कृष्णकेशोऽग्नीनादधीत' इत्यत्र कृष्णकेशत्वेन युवत्वारोपाद् वार्धक्येऽग्न्याधानं निषिध्यते।

अवस्थाध्यासो यथा— 'अप्रतिसमाधेयव्याधीनां जलादिप्रवेशेन प्राणत्यागः' इत्यत्र व्याध्युपचारासम्भवेऽवस्थाविशेषमारोप्य प्राणत्यागोपायं निर्दिशति। आदिग्रहणं महापातकोपपातकसङ्करीकरणापात्रीकरणमलिनीकरणाद्यध्याससङ्ग्रहार्थम्। महापातकं ब्रह्मवधादि, उपपातकं गोवधादि, सङ्करीकरणादीनि च मनुनोक्तानि—

---

१. भामती, ब्र.सू.भा. १।११।२;
२. विवरणप्रमेयसङ्ग्रहेऽध्यासनिरूपणे।
३. तै.उ. २।१।१;
४. वेदान्तपरिभाषा, प्रत्यक्षपरिच्छेदे।
५. शा.भा., ब्र.सू. १।१।१।

'खराश्वोष्ट्रवराहाणामजाविकवधस्तथा।
सङ्करीकरणं ज्ञेयं मीनाऽहिमहिषस्य च।।
निन्दितेभ्यो धनाऽऽदानं वाणिज्यं शूद्रसेवनम्।
अपात्रीकरणं ज्ञेयमसत्यस्याभिभाषणम्।।
कृमिकीटवयोहत्या मद्यानुगतभोजनम्।
फलौघः कुसुमस्तेयमधैर्यं च मलावहम्'[१]।।

विषयाध्यासो हि विषयावच्छिन्नचैतन्येन सह प्रमात्रवच्छिन्नचैतन्यस्य तादात्म्येनावभासात्। तत्र तु घटादिविषयाः स्वावच्छिन्नचैतन्येऽध्यस्ततयाऽन्तः-करणवृत्त्यवच्छिन्नचैतन्ये तादात्म्येनावभासन्ते। 'घटादेः स्वावच्छिन्नचैतन्येऽध्य-स्ततया विषयचैतन्यसत्तैव घटादिसत्ता अधिष्ठानसत्ताऽतिरिक्ताया आरोपितसत्ताया अनङ्गीकारात्'[२]। आरोपितसत्ताऽधिष्ठानसत्तायां तादात्म्येन भासते। तथा हि— चित्तस्य द्रव्यरूपो वृत्त्याख्यः परिणाम इन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य सूक्ष्मावस्थारूपविषयवासनावशात् तत्तद्विषयाकारेण परिणमते। तत्र वृत्त्याश्रय-तयाऽऽत्मनो विषयतया च घटादीनां प्रत्यक्षम्। तथा चोक्तम्— 'संविदाश्रयतयैवाऽऽत्मा प्रत्यक्षः, घटादयस्तु संविद्विषयतया प्रत्यक्षाः'[३]।

यथा स्वल्पेनापि वपुषाऽपरिमितो व्यापकश्चात्मा परिच्छिन्न इव देहीति व्यवह्रियते, तथैवाहङ्काराध्यासेनाध्यस्तात्मन्यहङ्काराध्यस्तविषया अवभासन्ते। 'अध्यस्तमल्पवपुरस्य न वास्तवं तत् प्रत्यक्परागद्वयमिदं हि परस्परस्मिन्। अध्यस्ततां प्रति समर्थमबोधमात्रमन्योऽन्यरूपमिथुनीकरणे निमित्तम्'[४]। यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव च चतुष्कोणाद्याकारं भवति, तथा तैजसमन्तःकरणमपि चक्षुरादीन्द्रियद्वारेण निर्गत्य घटादिदेशं गत्वा, घटादिविषयाकारेण परिणमते। तत्रान्तःकरणस्य विषयाकारेण परिणामश्चेन्द्रियेण सहैव भवति। इन्द्रियविशिष्टमन्तःकरणं विषयाकारेण परिणमतीति भावः, तथा चेन्द्रियदोषात्तत्सम्बद्धान्तःकरणस्यापि सदोषत्वेन तादृशस्यैव च तस्य विषयाकारेण परिणामादिन्द्रियगतदोषाणां विषयेऽप्युपलब्धिः। तथा चोक्तम्— 'चित्तस्य विषयाकारपरिणामरूपा वृत्तिश्चेन्द्रियेण सहैव, अत एव रसनेन्द्रियगतपित्तान्वयेन 'गुडः कटुः' इति नयनगतपित्तान्वयेन च 'शङ्खः पीतः' इत्याद्युपपद्यते'[५] इदमत्र

१. मनु., अ. ११, श्लो. ६८-७०;
२. वेदान्तपरिभाषाप्रत्यक्षपरिच्छेदे।
३. विवरणप्रमेयसङ्ग्रहे, अध्यासविचारे;
४. संक्षेपशारीरके-१।२७।
५. वै.सि.ल.मञ्जूषायां बौद्धार्थनिरूपणे।

बोद्धव्यम्। जाग्रदवस्थायां हि प्रमातृप्रमाणप्रमेयव्यवहारा भवन्ति। तत्र प्रमाणैर्योऽर्थं प्रमिणोति स प्रमाता येन प्रमिणोति तत्प्रमाणं यत्प्रमीयते तत्प्रमेयमिति सर्वतन्त्रसिद्धान्तः। अत्राद्वैतवादेऽविद्यावृततया सर्वत्राप्रकाशमानमप्यात्मचैतन्यमन्तः-करणसंसृष्टं सदवभासते, दर्पणद्रव्यसंसृष्टरविरश्मिवत्। तदुक्तं परमार्थसारे—

'यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्वेषु।
तद्वत्सकलोपाधिष्ववस्थितो भाति परमात्मा'[१]।।

तच्चान्तःकरणमदृष्टादिसहायं विषयसंवेदनवेलायां तडागकुल्याक्षेत्रगतोदक-प्रवाहवद्देहतद्बाह्यदेशतद्गतविषयानभिव्याप्यावतिष्ठते। तत्र च तिसृष्वप्यवस्था-स्वात्मचैतन्यं तदात्मनैवाभिव्यज्यते। तत्र देहमध्यान्तःकरणभागावच्छिन्नं चैतन्यं प्रमातृसंज्ञां भजते। देहविषययोर्मध्ये दीर्घप्रभाकारेणेन्द्रियद्वारा निर्गतान्तः-करणभागावच्छिन्नं चैतन्यं प्रमाणसंज्ञाम्, विषयमभिव्याप्य विषयाकार-तयाऽवस्थितान्तःकरणभागावच्छिन्नञ्च चैतन्यं प्रमेयसंज्ञां लभते।

तथा चोक्तम्— 'त्रिविधं चैतन्यं प्रमातृचैतन्यं प्रमाणचैतन्यं विषयचैतन्यं चेति'[२]। ईदृक् त्रिविधचैतन्यतादात्म्येनैवाध्यस्यते, इदं जगत्। अज्ञानावृतशुक्त्यादौ रजतादिप्रतिभानवत्।

एवमतिस्थूलबुद्धिः पुत्रादिषु स्नेहातिरेकात्तेषामुत्पत्तावपूर्वानन्दमनुभवति। 'आत्मा वै जायते पुत्रः'[३] इति श्रुत्या स्वस्मिन्निव पुत्रेऽपि प्रेमदर्शनात्, पुत्रादिषु पुष्टेष्वहमेव पुष्टस्तेषां कृशत्वेऽहमेव कृश इत्यनुभवात् तेषु नष्टेष्वहमेव नष्ट इत्यनुभवाच्च स्वशरीरे आत्मत्वभ्रमवत्पुत्रादिष्वात्मत्वभ्रमादत्यन्तबाह्यधर्मान-विशेषेणात्मन्यध्यारोपयति। उक्तञ्च शाङ्करभाष्ये— 'पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति'[४], देहतादात्म्यमात्म-न्यध्यस्य देहधर्मं पुत्रकलत्रादिस्वाम्यञ्च कृशत्वादिवदारोप्याहमेव कृशः स्थूलो वेत्यनुभवति। अत्र बाह्यधर्माध्यासेऽप्यनाद्यविद्यावशादन्तःकरणवृत्तिरेव शरणम्।

उक्तञ्च सिद्धान्तबिन्दौ—'तद्विशिष्टे बाह्यानां पुत्रभार्यादीनां साकल्य-वैकल्यादिधर्माध्यासः'[५]।

---

१. प.सा. २३;
२. वेदान्तपरिभाषाप्रत्यक्षपरिच्छेदे।
३. के.उ. २।११;
४. शा.भा., ब्र.सू. १।१।१।
५. सिद्धान्तबिन्दौ प्रथमश्लोके।

प्रदीप्तगृहात्स्वपुत्रादिकमपि विहाय निर्गमनदर्शनात् स्थूलोऽहं कृशोऽहमित्याद्यनुभवात्। 'स वा एष पुरुषोऽन्नरसमयः'[१] इत्यादिश्रुतेश्च। ममेदं शरीरमिदं शरीरं ममेति भेदमपरित्यज्याहं गच्छामीत्यनुभवात्तादात्म्येन देहावभासकत्वाद् देहाध्यासः। देहाध्यासेनैव देहगतस्थूलत्वादिधर्मानात्मन्यारोप्य स्थूलोऽहं कृशोऽहमित्यनुभवः। शरीरमाध्यमेन सम्पद्यमानक्रियाणामारोपाच्चाहं गच्छामि लङ्घयामि चेति व्यवहारः। स च व्यवहारोऽनुभवात्मक एव।

'तथा चोभयविधोऽनुभवः— इदं शरीरमहं देहोऽहं मनुष्योऽहं ब्राह्मणः'[२]। मनुष्यत्वादिगौरत्वाद्यवान्तरधर्मविशिष्टरूपेण देहादीनामध्यासः, न तु देहत्वादि-सामान्यधर्मविशिष्टरूपेण। अहं देह इत्यादिप्रत्ययस्यैवाप्रसिद्ध्या तज्जन्य-संस्कारस्याप्रसिद्धेर्न तादृशाध्यासनिमित्तत्वम्। अहं मनुष्य इत्यादिप्रत्ययस्तु पूर्वपूर्वधीजन्यसंस्कारवशात्तादृशाध्यासकल्पनया च तादृशाध्यास इति। तथा चोक्तं सिद्धान्तबिन्दौ— 'तद्विशिष्टे स्थूलदेहाध्यासो धर्मपुरस्कारेणैवाहं मनुष्य इत्याद्याकारः, न तु स्वरूपतः अहं देह इत्यध्यासः, तथा प्रतीत्यभावात्'[३]।

समष्टिरूपस्थूलशरीराविर्भूतः 'सहस्रशीर्षा पुरुषः....'[४] इत्यादिश्रुतिबोध्यो वैश्वानरो विराडित्युच्यते। स च चैतन्याध्यासेनैवाहं सृजामि नाशयामि चेत्यनुभवति। व्यष्टिरूपेण च देवमनुष्यपशुसरीसृपादिशरीराणामात्मन्यध्यासः। तथा चोक्तम्—

'देवाः मनुष्याः पशवः पक्षिवृक्षसरीसृपाः।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम्।।
ज्ञानस्वरूपमत्यन्तनिर्मलं परमात्मनः।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्'[५]।।

सादित्वपरिच्छिन्नत्वादिविशिष्टदेहादेरनाद्यपरिच्छिन्नपरमात्मनि परम्परया प्राप्तानादिसंस्काररूपेणाध्यासः। देहादीनामवस्तुतया कथमध्यास इति चेत्, न, प्रातिभासिकप्रत्यये वस्तुसत्ताया अनावश्यकत्वात्। उक्तञ्च— 'अनादित्वे सति पूर्वपूर्वाध्यासोपदर्शितस्य देहादेः संस्काररूपेण स्थितस्योत्तरोत्तराध्यासहेतुत्वात्। न च देहादेरवस्तुत्वादनारोप इति वाच्यम्, प्रतीतिमात्रेणारोप्यत्वसिद्धौ वस्तुसत्ताया अप्रयोजकत्वात्। 'इदं रजतम्' इत्यादौ हि सत्यानृतयोः शुक्तिरजतयोस्तादात्म्यमध्यस्यते'[६]।

---

१. तै.उ. २।१।१;
२. वे.परि., प्रत्यक्षपरिच्छेदे।
३. सिद्धान्तबिन्दौ, श्लो. १;
४. पुरु.सू. १।
५. वि.पु. १।२।६;
६. विवरणप्रमेयसङ्ग्रहे अध्यासनिरूपणे।

देहाध्यासनिमित्तं त्वहमित्याकाराकारितचित्तवृत्तिस्तत्संस्कारश्च सहकारिकारणम्। अहमित्याकारकोऽन्तःकरणस्यानुभवो विषयः। अहमित्याकारकसंस्कारसहकृता विद्यैवोपादानकारणम्। अविद्योपाधिनाऽन्तःकरणवृत्तिस्तद्रूपेणाध्यस्यते।

तथा चोक्तम्— 'अहमाकारानुभवाहितसंस्कारसहिताविद्याकार्यत्वादन्तःकरणादेरहमाकारानुभवविषयत्वम्। शरीरेन्द्रियादेरुभयविधानुभवसंस्कारसहिताविद्याकार्यत्वादुभयविधानुभवविषयत्वम्'[१]।

देहेषु घाताद्युपस्थितावक्षिसङ्कोचादिदर्शनात् शरीरादेरपीन्द्रियाणां प्रियत्वम्, तेषु विकृतेषु काणोऽहं खञ्जोऽहं बधिरोऽहमित्यनुभवादात्मनो वैकृत्यप्रतीत्येन्द्रियधर्मानात्मनि समारोपयति। इन्द्रियाध्यासरूपोऽयमारोपः। 'अन्योऽन्तर आत्मा प्राणमयः'[२] इत्यादिश्रुतेः। काणत्वादिधर्मसंसर्गेणेन्द्रियाणामध्यासः। इन्द्रियमात्रस्यातीन्द्रियत्वेनाप्रत्यक्षत्वान्नाहङ्कारविशिष्टचैतन्ये तादात्म्येनाध्यासः। अहं चक्षुरहं श्रोत्रमिति प्रतीतेरभावात्।

तथा चोक्तम्— 'इन्द्रियधर्माणाञ्च काणत्वबधिरत्वक्लीबत्वादीनामध्यासः। इन्द्रियाणां तु परोक्षत्वान्नापरोक्षधर्म्यध्यास इति सिद्धान्तः'[३]। न च काणत्वादयो मनोधर्माः, मनः काणमित्यादिव्यवहारापत्तेः।

एवमेव सङ्कल्पविकल्पादयो मनोधर्मा वृत्तिमन्तराऽऽत्मन्यध्यस्यन्ति। अहं सङ्कल्पयामि शोचामि चेत्यनुभवात्। 'अन्योऽन्तर आत्मा मनोमयः'[४]। अज्ञानप्रतिबिम्बितत्वविशिष्टचैतन्येऽहङ्काररूपान्तःकरणस्याज्ञोऽहमित्यात्मकोऽध्यासः। तद्विशिष्टे च कामसङ्कल्पविचिकित्सादीनामध्यासः।

तथा चोक्तम्— 'तद्विशिष्टे कामसङ्कल्पादीनामहङ्कारधर्माणाम्'[५]। काणत्वादीन्द्रियधर्माणां बाह्यत्वेन तेभ्योऽन्तरङ्गतयाऽहङ्काराध्यस्तान्तःकरणस्य कामसङ्कल्पादयो धर्माश्चैतन्येऽध्यस्यन्ति। तथा चाह वाचस्पतिः—'ततोऽप्यन्तरङ्गस्यान्तःकरणस्याध्यस्तात्मभावस्य धर्मान् कामसङ्कल्पादीन् आत्मन्यध्यस्यति'[६]।

अन्तःकरणधर्माणामध्यस्ततयाऽहं सुखी दुःखीत्यनुभवः। इच्छामि स्मरामि चेति व्यवहारः। ननु सुखादीनामन्तःकरणधर्मत्वेन तेषामन्तःकरणस्थतया,

---

१. वे. परि., प्रत्य. परि.;
२. तै.उ. २।२।४।
३. सिद्धान्तबिन्दौ प्रथमश्लोके;
४. तै.उ. २।३।१।
५. सिद्धान्तबिन्दौ प्रथमश्लोके;
६. भामती, शा.भा., ब्र.सू. १।१।१।

अन्तःकरणवृत्तेश्च सुखादीनाञ्चाभेदात्कथं प्रत्यक्षम्? इत्याह—सुखादय आन्तरविषया नैतेषां प्रत्यक्षे घटादिबाह्यविषयप्रत्यक्षनियमः। बाह्यविषयाकारवृत्तिरिन्द्रियसन्निकर्षापेक्षया विषयदेशं प्राप्य तदाकाराकारेण परिणमते, आन्तरविषयाकारवृत्तिस्तु स्वतस्तदाकाराकारेण परिणता सती प्रमातृचैतन्याभेदेन बोधं जनयतीति आन्तरबाह्यविषयप्रत्यक्षयोर्विशेषः। यद्वैकस्मिन्नन्तःकरणरूपे देशे स्थितं यदुपाधिद्वयं सुखादि तद्वृत्तिरूपञ्च, ताभ्यामवच्छिन्नचैतन्यस्य भेदात्। सुखाद्यवच्छिन्नचैतन्यस्य सुखाद्याकारपरिणतान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य च सोपाधिकभेदात्प्रत्यक्षमिति नियमः। उक्तञ्च—'सुखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य च नियमेनैकदेशस्थितोपाधिद्वयावच्छिन्नत्वाद् नियमेनाहं सुखीत्यादिज्ञानात्प्रत्यक्षम्'[१]।

तदित्थमखिलं प्रपञ्चजातं कर्तृत्वभोक्तृत्वादि स्वाज्ञानेन परिच्छिप्तं दृशौ चिदात्मन्यध्यस्तम्। तथा हि भोग्यं प्रपञ्चः, भोक्ता चान्तःकरणावच्छिन्नचैतन्यमित्येतद्द्वयं स्वाज्ञानावृतं परमात्मविषयकज्ञानाभावेन तस्मिन्नेवाध्यस्ततया भोग्यभोक्तृत्वादिरूपमापद्यते। तथा चोक्तम्—'तस्मादध्यस्तमेतत्सकलमपि दृशौ भूमरूपातिरिक्तम्। रूपं स्वाज्ञानमात्रादिति भवति परब्रह्मधीबाध्यमेतत्'[२]।

स्वप्नावस्थायां सकलप्रपञ्चजातस्य जाग्रद्वासनाधीनतयाऽन्तःकरणे लयात्पार्थक्येन प्रतिभासाभावेन चैतन्यमात्रावशेषाच्चैतन्यमेव विषयत्वेनाधिष्ठानतया च परिकल्पते। तथा च श्रुतिः—'स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिः'[३]।

तत्रान्तःकरणमेव विषयत्वेनान्तःकरणरूपाधिष्ठाने आरोपितजागरितवासनावशादध्यस्यति। स चाध्यासश्चैतन्यमात्रस्य तत्रानुभूयमानरथादिविषयाणामभावात्। तथा चेयं श्रुतिः—'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते'[४]।

स्वप्नावस्था चैतन्यस्य स्थूलशरीरस्य तदिन्द्रियाणामिन्द्रियविषयाणाञ्च लयस्थानमित्युच्यते। 'सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नोऽत एव स्थूलशरीरलयस्थानमिति चोच्यते'[५]। स्थूलप्रपञ्चविज्ञानमयादिकोशत्रयसहितं लिङ्गशरीरमेव स्वप्ने सूक्ष्मशरीरत्वेनावतिष्ठते। यतश्च स्वप्ने मनसो

---

१. वे. परि. प्रत्यक्षपरिच्छेदे; २. सङ्क्षेपशारीरके-१।५७।

३. बृहदारण्यको. ४।३।९; ४. तत्रैव-४।३।१०।

५. वेदान्तसारे।

लयाभावाज्ज्ञानेन्द्रियैः सह परिरमन्मनो वासनानिर्मितमाभ्यन्तरस्थप्रपञ्चमनुभवति। वासनामयत्वं चास्य श्रुतिराह—'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजतं वासो यथा पाण्ड्वाविकम्'[१]। स्वप्नेऽन्तःकरणं विषयत्वेन विषयित्वेन च भासमानं स्वप्रकाशेन प्रकाशितं वासनाजायमानं विषयं भुङ्क्ते। भोक्ता भोग्यं स्वयमेव स्थानकालादिकमपि वासनामयमन्तःकरणमेवास्ति। उक्तञ्च—'स्वेन भासा विषयभूतेन, स्वेन च ज्योतिषा तद्विषयिणा विविक्तरूपेण अलुप्तदृक्स्वभावेन तद् भारूपं वासनात्मकं विषयीकुर्वन् प्रस्वपिति'[२]।

मूलाविद्यैव स्वप्नाध्यासस्य कारणम्। सा च सुषुप्तिरूपा यत्र जाग्रत्स्वप्नयोरवस्थानम्। 'सुषुप्त्याख्यं तमोऽज्ञानं यद् बीजं स्वप्नबोधयोः'[३]। तदन्ये ब्रह्मप्रभातिरिक्तजाग्रत्पदार्थज्ञानेन बाधाच्छुक्तिरूप्यादिवद् भ्रम इत्युच्यते। तत्र जाग्रत्कालिकप्रपञ्चमन्तःकरणावच्छिन्नचैतन्यञ्चावृत्य तमोमयो निद्रारूपाविद्या यावज्जाग्रत्प्रपञ्चो नोदेति तावत्स्वाप्निकप्रपञ्चमुद्भावयति।

'जाग्रत्प्रपञ्चमावृत्य जीवं निद्रा तमोमयी।
स्वाप्नमाविष्करोत्यर्थं बोध्यं प्राग् जीवबोधतः'[४]।।

व्यावहारिकप्रपञ्चस्य कारणं मूलाविद्या स्वाप्नप्रपञ्चस्तु तमःप्रधानया निद्रयाऽभिव्यज्यत इति कारणभेदात्, व्यावहारिकस्य ब्रह्मज्ञानेन बाधः. स्वाप्नस्तु व्यावहारिकज्ञानेनैव बाध्यत इति निवर्तकभेदाच्चोभयोर्भेदः। तथा चोक्तम्—'प्राग् ब्रह्मात्मदर्शनाद् वियदादिप्रपञ्चो व्यवस्थितः, स्वाप्नस्तु प्रतिदिनं बाध्यत इति विशेषः'[५]। जाग्रत्सुषुप्त्योः सन्धिभूतत्वात् सान्ध्योऽयमुच्यते। ब्रह्मातिरिक्तत्वेनो-भयोर्मिथ्यात्वं तुल्यं मूलाविद्याया निद्राविशेषाविद्यायाश्चाविद्यात्वेनैक्यात्कारणैक्यञ्च तयोः। अतो जाग्रत्प्रपञ्चस्वाप्नप्रपञ्चयोश्च नात्यन्तिको भेदः, अद्वैतसिद्धान्ते व्यावहारिको दीर्घस्वप्न एवास्ति। 'यथा तन्त्रान्तरे घटादिप्रपञ्चस्य पारमार्थिकत्वं तथा तत्रापि न स्वाप्नस्येत्यर्थः। अस्माकं तु व्यावहारिकोऽपि प्रपञ्चो दीर्घस्वप्न एवेति बोध्यम्'[६]।

देहाभिमानरूपवृत्तेर्निद्रया दूरीकरणं स्वप्नः। तत्र हि जाग्रद्भोगजनककर्मक्षये स्वाप्नभोगजनककर्मोदये च सति निद्राख्यया तामस्या वृत्त्या स्थूलदेहाभिमाने

---

१. बृहदारण्यको. २।३।६;
२. शा.भा., बृहदारण्यको. ४।३।९।
३. सिद्धान्तलेशसङ्ग्रहे;
४. तत्रैव।
५. शा.भा., ब्र.सू. २।१।१४;
६. वै.सि. लघुमञ्जूषायां बौद्धार्थनिरूपणे।

दूरीकृते सर्वेन्द्रियेषु स्वस्वव्यापारेभ्य उपरतेषु निर्व्यापारतया तेषु लीनेषु प्रपञ्चलय एव स्वप्नावस्था। तथा चोक्तम्—'तत्र चान्तःकरणगतवासनानिमित्त इन्द्रियवृत्त्यभावकालीनोऽर्थोपलम्भः स्वप्नः'[1]।

प्रपञ्चाध्यासवत्स्वप्नोऽध्यस्यति। तत्रेयान् विशेषो देशकालयोरतिरिक्तत्वेन मानाभावात्तावप्यध्यस्यतः। तथा चाह—'देशविशेषोऽपि चिदध्यस्तः प्रातिभासिकः'[2]। स्वरूपतोऽभिन्नत्वेऽपि तयोः साम्यमस्त्येव। तद्यथा—

'स्वप्नश्च जागरितमप्युभयं तथैव
मोहप्रसूतमपि कर्मफलं विभाति।
कर्मक्षये तदखिलं परमात्ममाया-
माश्रित्य सूक्ष्ममवतिष्ठत एव लीनम्'[3]।।

अथ किमधिष्ठानं स्वप्नाध्यासस्य? अनवच्छिन्नचैतन्यमहङ्कारोपहितचैतन्यं वा? आद्ये स्वप्नगजादेरहङ्कारोपहितसाक्षिणो भिन्नदेशत्वेन सुखादिवदन्तः-करणवृत्तिसंसर्गमनपेक्ष्य भासमानस्य चक्षुरादीन्द्रियायोगान्न प्रत्यक्षम्। द्वितीये 'इदं रजतम्', इतिवद् 'अहं गजः, अहं सुखी' इतिवच्च 'अहं गजवान्' इत्यध्यासः स्यात्। अत्र केचिदाद्यपक्षमेव समर्थयन्ते—अहङ्कारानवच्छिन्नचैतन्यं न देहाद् बहिः स्वाप्नप्रपञ्चस्याधिष्ठानं किन्तु तदन्तरेव। अत एव दृश्यमान-परिमाणोचितदेशसम्पत्त्यभावात् स्वाप्नगजादीनां मायामयत्वमुच्यते। तथा चोक्तम्—'एवं चाहङ्कारानवच्छिन्नचैतन्येऽध्यस्यमाने स्वाप्नगजादौ तत्समनियताधिष्ठा-नगोचरान्तःकरणादिवृत्तिकृताभेदाभिव्यक्त्या प्रमातृचैतन्यस्यापि 'इदं पश्यामि' इति व्यवहारः'[4]।

अपरे तु द्वितीयं पक्षं समर्थयन्ते—'अहङ्कारावच्छिन्नचैतन्यमधिष्ठानम्, तत्रा-हङ्कारस्य विशेषणभावेनाधिष्ठाने न प्रवेशः; किन्त्वहङ्कारोपहितं तत्प्रतिबिम्बरूप-चैतन्यमात्रमधिष्ठानमिति, अतो न अहं गज इत्याद्यनुभवप्रसङ्गः, अधिष्ठानचैतन्यावच्छेदकोपाधित्वात्'[5]।

स्वस्वपक्षमुपस्थापयद्भिराचार्यैश्चैतन्यस्योभयरूपमधिष्ठानत्वेनाङ्गीकृतम्। वादि-प्रवादिभ्यां परपक्षेषु दोषा उद्भाविताः, स्वसिद्धान्तेन च निराकृताः। उक्तञ्च

---

१. सिद्धान्तबिन्दौ, श्लो. ८;
२. वे.परि., प्रत्यक्षपरिच्छेदे।
३. संक्षेपशारीरके-३।११९;
४. सिद्धान्तलेशसङ्ग्रहे द्वि.परि.।
५. विवरणप्रमेयसङ्ग्रहे।

सिद्धान्तबिन्दौ—'मतभेदेनोभयमपि, उपाधिभेदस्याप्रयोजकतया चैतन्यमेवावशिष्यते तच्चोभयमतसिद्धमधिष्ठानमतो नातिप्रसङ्गः'[1]।

जाग्रत्प्रपञ्चस्य स्वाप्नप्रपञ्चस्य चाधिष्ठानमेकमेव, भेदे बीजाभावात्, 'एकस्मिन्नेव नानाप्रतिभासः स्वप्नदृशीव'[2], 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातम्'[3], 'एकं बीजं बहुधा यः करोति'[4] इत्यादिश्रुतेः। गीतायामपि—

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया'[5]।।

तच्चान्तःकरणोपहितमविद्योपहितं वा वृत्त्यवच्छिन्नं साक्षिरूपमेव। शुक्तिरूपस्वाधिष्ठानेऽध्यस्तमपि रजतमन्तःकरणोपहितचैतन्याभिन्नतया साक्षिरूपचैतन्य एवाध्यस्यते। अतः सर्वं सुखादिवत्साक्षिवेद्यमेवेति। 'विषयचैतन्यस्य तदन्तःकरणोपहितचैतन्याभिन्नतया विषयचैतन्याध्यस्तमपि रजतं साक्षिण्यध्यस्तं केवलसाक्षिवेद्यं सुखादिवदनन्यवेद्यमिति चोच्यते'[6]।

अथ कोऽयं साक्षी यो जाग्रत्स्वाप्नप्रपञ्चाश्रयः, तदुच्यते उभयविधदेहाधिष्ठानं कूटस्थं स्वावच्छेदस्य देहद्वयस्य साक्षादीक्षणात्कर्तृत्वाद्यभिमानशून्यः साक्षीति। यथाऽभिनयरूपकादिषु सर्वाण्यपि पात्राणि सूत्रधारमनुसृत्य प्रवर्तन्ते, तथैवेन्द्रियाण्यपि चैतन्यमनुकृत्य स्वस्वविषयेषु प्रवर्तन्ते। तच्च सुषुप्त्यादावहङ्काराहित्येऽपि दीप्यमानं चिदाभासविशिष्टाहङ्काररूपजीवभ्रमाधिष्ठानकूटस्थचैतन्यम्। तद्यथा—

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च'[7]।।

सर्वभूतान्यध्यस्ततया वसन्त्यस्मिन्निति सर्वभूताधिवास उच्यते। अविद्योपाधिको जीव एव साक्षाद् द्रष्टृत्वात् साक्षीति केचित्। 'जीवो मुख्यप्राणसचिवः सेन्द्रियः, समनस्कोऽविद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यते'[8]। तत्र पूर्वप्रज्ञाशब्देन प्रतिपत्तव्यदेहविषय उद्बुद्धसंस्कारः।

---

१. सिद्धान्तबिन्दौ, श्लो. ८;
२. तत्त्वदीपिका (चित्सुखी)।
३. छा. ६।१।१;
४. श्वेता. ६।१२।
५. गीता-१८।६१;
६. वे. परि., प्रत्यक्षपरिच्छेदे।
७. सङ्क्षेपशारीरके-३।१८३;
८. शा.भा., ब्र.सू. ३।१।१।

उक्तञ्च विवरणकारेण—'पूर्वपूर्वप्रमातृत्वादिसंस्कारेण सविकल्पकमेव चैतन्यमहङ्काराद्यध्यासाधिष्ठानम्'[१], चेतनो हि द्रष्टा भवति नाचेतनः। साक्षी च दर्शितविषयो भवति यस्मै प्रदर्श्यते विषयः स साक्षी। यथा हि लोकेऽर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः, एवं प्रकृतिरपि स्वचरितविषयं पुरुषाय दर्शयतीति पुरुषः साक्षी। उक्तञ्च सांख्यशास्त्रे—'तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य'[२]।

अन्ये त्वस्तु जीवः साक्षीति न कोऽपि विमत्सरः, किन्तु सर्वगते नाविद्योपहितरूपेण न। व्यापकीभूताविद्योपहितरूपेण साक्षिस्वीकारे पुरुषान्तरान्तःकरणादीनामपि पुरुषान्तरं प्रति स्वान्तःकरणभासकसाक्षिसंसर्गाविशेषेण प्रत्यक्षत्वापत्तेः। न चान्तःकरणभेदेन प्रमातृभेदात् तदनापत्तिः, साक्षिभास्येऽन्तःकरणादौ सर्वत्र साक्ष्यभेदे सति प्रमातृभेदस्याप्रयोजकत्वात्। तस्मादन्तःकरणोपधानेन जीवः साक्षी। न चाविद्याप्रतिबिम्बितं चिद्रूपमीश्वरमिति। उक्तञ्च तत्त्वदीपिकायाम्— 'सर्वप्रत्यग्भूतं विशुद्धं ब्रह्मात्र जीवाभेदेन साक्षीति प्रतिपाद्यते'[३]। कारणमत्र त्रिगुणात्मिकाऽविद्या या नित्येऽखिलाधारे चैतन्ये भ्रममुत्पादयति। तथा चाह परमार्थसारे—

'त्रिगुणा चैतन्यात्मनि सर्वगतेऽवस्थितेऽखिलाधारे।
कुरुते सृष्टिमविद्या सर्वात्मा स्पृश्यते तया नात्मा'[४]।।

अविद्याकल्पितोऽयं सकलजगद्व्यवहारः। वासनावशाच्चैतन्ये विषयाणामवभासकत्वम्। वासनैवाविद्या यथा चोदितोऽन्तःकरणोपहितश्चैतन्यस्वरूपः साक्षी तत्तद्विषयाकारेणाध्यस्यते। यद्वा विषया वासनामयत्वेनोपभोक्त्र्याकाङ्क्षया साक्षिण्यध्यस्यन्ति। ईश्वरस्य सर्वव्यापकत्वेन सर्वविषयवेद्यत्वेन च तस्य साक्षित्वमविद्योपहितचैतन्यतयाऽङ्गीक्रियते। तथा च श्रुतिः—'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति'[५]। एवञ्च तत्त्वदीपिकायाम्— 'ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया च विमुच्यते'[६]।

अत्राध्यासेऽविद्योपादानत्वेन ब्रह्म चाधिष्ठानत्वेन कारणम्। अधिष्ठानमेवाविद्यावृत्तं विवर्तते। अतः सोपाधिकं ब्रह्मैव विवर्तोपादानम्। अविद्योपाधिनैव

---

१. विवरणप्रमेयसङ्ग्रहे; २. सांख्यकारिका-१९।
३. तत्त्वदीपिका-चतुर्थपरिच्छेदे; ४. पर. सा. ४९।
५. कठोप. २।२।१२; ६. तत्त्वदीपिका-चतुर्थपरिच्छेदे।

संसरति ब्रह्मणो व्यवहारः, न तु निरवयवस्य निर्विशेषस्य। तथा हि श्रुतयः— 'देवात्मशक्तिं स्वगुणैर्निगूढाम्'[१], 'इन्द्रो मायाभिः पुरुरूप ईयते'[२], 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्'[३], 'हेतुनानेन कौन्तेय जगद्विपरिवर्तते'। 'अथातो ब्रह्मजिज्ञासा'[४] इति सूत्रेण ब्रह्म जिज्ञासितव्यमिति प्रतिपाद्य द्वितीयेन च सूत्रेण 'जन्माद्यस्य यतः'[५] इत्यनेन ब्रह्मणो जगज्जन्मादिकारणत्वं तल्लक्षणमुक्तम्। शाङ्करभाष्येऽपि— 'अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाऽप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति तद् ब्रह्मेति'[६]। 'तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः'[७] इत्यादिश्रुतेश्च।

आनन्दमयत्वं सर्वज्ञत्वं स्वप्रकाशत्वञ्च ब्रह्मणः स्वतः सिद्धम्। अतीतानागतादिविषयाकारपरिणतोपाधौ तस्य प्रतिबिम्बितत्वेन भासकत्वम्। अनिन्द्रियग्राह्यस्य साक्षिप्रत्यक्षस्याकाशस्य जलादौ प्रतिबिम्बवत्साक्षिस्वरूपात्मनोऽप्यन्तःकरणे प्रतिबिम्बः। अविद्योपहितचैतन्यस्य बिम्बत्वमन्तःकरणावच्छिन्नचैतन्यस्य प्रतिबिम्बत्वमुरीकृतं शास्त्रज्ञैः। तस्यैव च साक्षित्वमध्यासाधिष्ठानत्वञ्चाभिमतम्, न तु शुद्धब्रह्मणः। तथा चोक्तम्—'अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अज्ञानप्रतिबिम्बचैतन्यं जीव इति वा, अज्ञानानुपहितं शुद्धचैतन्यमीश्वरः, अज्ञानोपहितं जीव इति वा मुख्यो वेदान्तसिद्धान्त एकजीववादाख्य'[८]। देहावच्छिन्नानां भेदेऽपि अविद्यावच्छिन्नरूपेण जीवैक्यं न विरुद्धमिति भावः। एवमेव—'अविद्याकल्पितेन नामरूपलक्षणेन भेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदम्, पारमार्थिकेन रूपेण सर्वव्यवहारातीतम्'[९]। बिम्बप्रतिबिम्बाभ्यामध्यस्तं चैतन्यमीश्वरजीवपदाभिधेयम्। अत्रापि निमित्तमज्ञानमेव, अविद्यामन्तरेणाध्यासस्यैवासम्भवात्।

प्रपञ्चाध्यासविधौ मायापरिणामित्वेन चैतन्यञ्चाविवर्ताधिष्ठानत्वेन निमित्तम्। तस्माद् ब्रह्मणो जगदुपादानत्वमारोपितम्, निरवयवस्य विकारित्वासम्भवात्। मायापरिणामे ब्रह्मणो विकारित्वं मनागपि न सम्भवति, आरोपितेनाधिष्ठानस्य संश्लेषासम्भवात्। न ह्यारोपितेन रजतेन मनागपि शुक्तिसंश्लेषो भवति। एवञ्च

१. श्वेता. १।१;
२. ऋ.सं. ६।४७।१८।
३. गीता-९।१०;
४. ब्र.सू. १।१।१।
५. तदेव-१।१।२;
६. शा.भा., ब्र.सू. १।१।२।
७. तै.उ. २।१।१;
८. सिद्धान्तबिन्दौ।
९. शा.भा., ब्र.सू. २।१।२७।

मायोपहितं ब्रह्म जगत्कारणम्। उक्तञ्च विवरणकारैः—'तस्मादनिर्वचनीयमाया-विशिष्टं ब्रह्म कारणमिति प्राप्तम्'[१]। तत्र द्वैतवादिनां मते निमित्तमुपादानञ्चेति। अद्वैतवेदान्तमतेऽभिन्ननिमित्तोपादानत्वमधिष्ठानत्वेन विवर्तोपादानञ्चेति।

अविद्याया विकारित्वेनोपादानत्वं सर्वसम्मतम्। सा च सदसद्विलक्षणत्वाद-निर्वचनीयेति व्यपदिश्यते। तदुक्तं बृहन्नारदीये—

'नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।
अनिर्वाच्या ततो ज्ञेया मिथ्याभूता सनातनी'[२]।।इति।

अज्ञानमेव न विदन्त्यनयेति व्युत्पत्त्याऽविद्यापदं भजते। तस्याश्च ज्ञाननिवर्तकत्वेन मायेति व्यपदेशः। मया प्रमया यातीति, व्युत्पत्त्या मायाशब्दस्य सिद्धिः। ब्रह्मज्ञानेन निवर्ततेऽविद्येति सर्वसम्मतिः। तद्यथा—

'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।
अजमनिद्रमस्वप्नमभद्वैतं बुध्यते तदा'[३]।।इति।

मूलकारणाविद्यारूपभावपदार्थनिमित्तकोऽध्यासोऽप्यनिर्वचनीयः, सत्या-नृतमिथुनीकृत्य जायमानत्वात्। प्रतिमादौ देवताद्यध्यासो ज्ञानाध्यास इति केचिद् व्यवहरन्ति।

नव्यास्तु असन्निकृष्टे पर्वतादौ भ्रमात्मकवह्न्यनुमितौ विषयस्यासत्त्वेन योऽध्यासः स ज्ञानाध्यास इति वदन्ति। तर्हि सर्वत्र तथैवास्तु, किमनेन द्वैविध्येन। किञ्चातिरिक्ताविद्याया अपि संस्कारादिरूपेण परिणामद्वारा कारणत्वेन लाघवात्, क्लृप्तसंस्कारादृष्टैरेवोपपत्तौ तत्कल्पने मानाभावाच्च। तथा चोक्तम्—'ज्ञानाध्यासस्त्वर्थाध्यासाविनाभूतत्वान्न पृथक् साधनीयः'[४]।

संसाधितोऽयमध्यासः सर्वशास्त्रसुसम्मतः।
मद्धियाऽप्यवशिष्टं तद् विभावयन्तु विद्वराः।। इति शम्।

●

१. विवरणप्रमेयग्रन्थे; २. बृहन्नारदीये।
३. गौ. कारि. १।१६; ४. विवरणप्रमेयसंग्रहे।

# शक्तिस्वरूपविमर्शः

**आचार्यश्रीकेदारनाथत्रिपाठी**
दर्शनविभागाध्यक्षचरः,
काशी-हिन्दू-विश्वविद्यालयस्य
वाराणसी

❀ ❀ ❀

प्रस्तूयमानेऽस्मिन् निबन्धे शक्तेः स्वरूपसत्त्वे तस्याः पदगतत्वेऽर्थगतत्वे चोपतिष्ठमाना उपस्थापिताश्च पूर्वं वादिभिर्नैके प्रश्नाः समीक्ष्यन्ते। तत्र शक्तिनाम्नाऽभिधीयमानोऽर्थोऽस्ति कश्चिन्न वा? सन्नपि वा स किमात्मक इत्यस्ति विचारणीयः। नैयायिका वैशेषिकाश्च सिद्धान्तं स्थिरीकुर्वन्ति—द्रव्यगुणकर्मसामान्यविशेषसमवायाभावनामानः सप्तैव पदार्थाः सन्ति, एष्वेव हि सप्तसु विश्वस्य समस्तं वस्तुजातमन्तर्भावमर्हतीति। मीमांसकास्तु संशेरते—अस्ति शक्तिनामाऽतिरिक्तोऽपि पदार्थो वह्न्यादौ दाहाद्यनुकूलोऽष्टमः।

इयं हि तेषां वाचोयुक्तिर्यद् मणिमन्त्रादिसमवहितेन वह्निना दाहो न जन्यते, जन्यते तु मण्याद्यपसारणेन तत्रोत्तेजकसमवधानेन वेति। कल्प्यते चैतेन यत्तत्र मण्यादिना वह्निगता दाहकताशक्तिर्नश्यति, प्रतिबन्धकमण्यपसारणेन तत्रोत्तेजकसमवधानेन च तत्रोत्पद्यते। पुनः शक्तिर्दहति च स एव वह्निरिति शक्तिनामातिरिक्तं वस्तु तत्रावश्यं स्वीकरणीयम्। अतिरिक्ताष्टमत्वं च तस्या द्रव्यादिसप्तपदार्थेषु मध्ये क्वाप्यन्तर्भावयितुमशक्यत्वेन तैः समर्थ्यते।

यतः सा न द्रव्यं गुणादावपि तस्याः सत्त्वात्। यथा गुरुत्वादिगुणेऽपि पातगादिशक्तिर्भवति। यद्धि द्रव्यं तन्न गुणाश्रितं भवति, शक्तिस्तु गुरुत्वगुणाश्रिता दृष्टा, अतो न सा द्रव्यमिति निश्चीयते। एवं शक्तिर्गुणकर्मणोरप्यन्तर्भवितुं नार्हति, गुणस्य गुणे कर्मणश्च कर्मण्यनङ्गीकारात्। नापि शक्तिः सामान्यविशेषसमवायाभावान्यतमरूपोत्पत्तिमत्त्वे सति विनाशित्वात्। प्रागभावो विनाश्यपि नोत्पत्तिमान्, ध्वंस उत्पत्तिमानपि न विनाशीति नायं हेतुर्व्यभिचारी। सा च शक्तिर्वह्निसहभावेन

वह्निवद् दाहकारणतया स्वीक्रियताम्, वह्निनिष्ठदाहजनकतावच्छेदकतया वा मन्यताम्, नात्राग्रहो मीमांसकानाम्, शक्तेः पदार्थान्तरत्वसाधनमात्रे तेषां तात्पर्यात्। मण्यादेर्दाहप्रतिबन्धकत्वमपि दाहानुकूलधर्मविघटकत्वरूपं तेऽभिप्रयन्ति। अतो दाहानुकूलशक्तिरूपधर्मविघटकत्वेन मण्यादेर्दाहप्रतिबन्धकत्वमपि साधूपपद्यत इति।

एवं शक्तावनुमानमपि प्रमाणं भवति। यथा—वह्निर्दाहानुकूलाद्विष्ठातीन्द्रियधर्मसमवायी, दाहजनकत्वात्, अदृष्टसमवाय्यात्मवत्। वह्निद्व्यणुकत्वमादाय सिद्धसाधनवारणाय दाहानुकूलेति विशेषणम्। वह्निद्व्यणुकेन्धनसंयोगमादाय सिद्धसाधनवारणाय अद्विष्ठेति विशेषणम्। वह्निनिष्ठोष्णस्पर्शमादाय सिद्धसाधनवारणाय अतीन्द्रियेति विशेषणमुक्तम्।

एवं शक्तिमन्तरेण कार्यविशेषं प्रति कारकविशेषोऽपि न स्यात्। पादपं छेत्तुं यथा कश्चित् परशुमुपादत्ते न तथा पादुकाम्। तत्र को हेतुः? परशुगता छेदनशक्तिरेवेति स्वीकरणीयम्। शक्तेरनभ्युपगमे द्रव्यत्वाविशेषात् सर्वस्मात् सर्वदा कार्योत्पत्तिः स्यात्। एवं कृष्यादिकार्यसाम्येऽपि फलवैचित्र्यं दृश्यते, तदर्थं नैयायिकैरतीन्द्रियं धर्मादिकं कल्प्यते तथा शक्तिरपि कल्पनीयैव।

अत्राहुर्नैयायिकाः—मणिसमवधानासमवधानकालयोरुत्तेजकाभावोत्तेजकसद्भावकालयोश्च शक्तिनाशोत्पादावङ्गीकृत्य दाहाजनन-दाहजनन-व्यवस्थापने अनन्तशक्तितत्प्रागभावध्वंसकल्पनाया अनौचित्याद् उत्तेजकाभावविशिष्टमण्यभावस्य दाहं प्रति सहकारिकारणत्वस्वीकार एव परमलाघवं भवेत्।

एवं शक्तिसाधने प्रयुज्यमानमनुमानमपि विपक्षे बाधकाभावादप्रयोजकम्। अर्थाद् वह्नौ दाहजनकत्वं हेतुरस्तु तथोक्तशक्तिसमवायित्वरूपसाध्यं मास्तु, का हानिः? न हि दृष्टान्तमात्रं किमपि साध्यं साधयितुमीष्टे। यदुक्तम्— पादपच्छेदनार्थं परशुरेवोपादीयते न पादुकादिः, अतश्छेदनक्रियायां परशावेव शक्तिरस्तीति कल्प्यत इति, तदयुक्तम्, अन्वयव्यतिरेकाभ्यां वृद्धव्यवहारादेव वा भावानां परस्परं कार्यकारणभावो निर्धार्यते। तदनुसारमेव छेदनक्रियां प्रति परशुरेव कारणं न पादुकादिः। यच्च कारणं भवति तदेवोपादीयते नाकारणम्। अत एव हि छेदनक्रियार्थं परशुरेवोपादीयते न पादुकादिरिति व्यर्था शक्तिकल्पना।

यच्चोक्तम्— शक्तेरनभ्युपगमे परश्वादिस्वरूपेऽविशेषात् सर्वदा सर्वस्मात् छिदादिकार्योत्पत्तिः स्यादिति, तन्न युक्तम्, स्वरूपवत् सहकारिणामप्यपेक्षणीयत्वादिति पूर्वमुक्तम्। धर्माधर्मादिकन्तु फलवैचित्र्यात् कर्म सहकारि मन्यते। शक्तिस्तु न फलवैचित्र्याय कल्प्यते, किन्तर्हि? कार्योत्पादाय। कार्यन्तु सहकारिसहिताद् व्यवहारसिद्धकारणसद्भावादेव भवतीति किं शक्त्या?

किञ्च, अभ्युपगम्यमाना शक्तिः पदार्थस्वरूपवत् स्थिराऽभ्युपगम्येत कार्या वा, स्थिरत्वे सर्वदा कार्योदयप्रसङ्गः। स्थिरत्वेऽपि सहकार्यपेक्षायां तु पदार्थ-स्वरूपमेव सहकार्यपेक्षया कार्यं जनयिष्यतीति व्यर्था शक्तिकल्पना। यदि शक्तिर्न स्थिरा, किन्तु कार्या तदा कार्यभूततया तस्या अप्युत्पत्त्यर्थं यत् कारणमुत्तेजकादि तत्रापि शक्त्यन्तरापेक्षणात् तत्र तत्रापीत्यनवस्था प्रसज्येत। ततो वरं सहकारिसहितं कारणमेव कार्यं जनयेदिति। कारणत्वमेव शक्तत्वं शक्तिर्वा, न पृथक्। पृथक् शक्तिस्वीकारे सहकारिष्वपि शक्तिस्वीकारापत्त्या गौरवं स्यात्। किञ्च, कारणगतानां तत्सहकारिगतानाञ्च शक्तीनामपि पृथक् कारणकोटावन्तर्भावे द्विगुणित-कार्यकारणभावस्वीकारापत्तिः। पदार्थतत्सहकारिणौ कारणं तदुभयगतशक्तिरपि कारणमिति रीत्या। शक्तेः कारणकोटावनन्तर्भावे तु कारणबहिर्भूतत्वान्निरर्थकत्वमेव शक्तीनामित्यायातम्। तद्दृष्टान्तेनैव वह्निगता प्रथमाऽपि शक्तिर्निरर्थिकैवेति मन्तव्यम्।

इत्थं हि न्यायवैशेषिकयोः शक्तेर्द्रव्यादिसप्तपदार्थेभ्यः पृथक् पदार्थान्तरत्वेन स्वीकारेऽपि गवादिपदेषु गवादिविषयकबोधजननशक्तिः कथमङ्गीक्रियते? गोपदं गवार्थ एव शक्तं न महिषाद्यर्थ इति। एकत्र अन्यतमपदार्थे वह्नौ शक्तेः प्रतीकारः अन्यत्र च पदार्थविशेष एव शब्दे महता संरम्भेण शक्तिनिरूपणं क्रियत इति द्वैविध्यं कथमुपपद्यते?

अत्रेयमुपपत्तिर्न्यायवैशेषिकयोः—एतदुभयसिद्धान्तयोरङ्गीक्रियमाणा शक्तिर्न पदार्थान्तरम्, किन्त्वीश्वरसङ्केतरूपैव। सा च गुण एवान्तर्भूता न सप्तपदार्थतो भिन्ना स्वीकृता। स च सङ्केतोऽस्मात् पदादयमर्थो बोद्धव्य इतीश्वरेच्छारूप एव। इच्छा च गुणपदार्थ एवान्तर्भूतेति नात्र मते काचिदनुपपत्तिः।

अत एव न्यायमते ईश्वरसङ्केत एव शब्दार्थयोः सम्बन्धो न स्वाभाविकः। तथा चाह महर्षिरक्षपादो मतान्तरं निरस्यन् न्यायसूत्रम्—सामयिकत्वात् शब्दार्थ-सम्प्रत्ययस्येति समयोऽत्र सङ्केतः।

येऽपि स्वाभाविकं शब्दार्थसम्बन्धमातिष्ठन्ते, तेषामपि स सम्बन्धो न सत्तामात्रेणार्थबोधकः, किन्तु ज्ञातस्सन्। तस्य सम्बन्धस्य ज्ञाने च 'अयमस्य वाचक इति वा, अस्मादयं बोद्धव्य इति वा' सङ्केत एवोपायः। वृद्धव्यवहारात् तत् सम्बन्धज्ञानस्वीकारे स वृद्धव्यवहारोऽपि गवादिशब्दानां सङ्केतपूर्वक एव नान्यथा। यथा देवदत्तादिनामव्यवहारः पितृकृतसङ्केतानन्तरमेव जनेषु भवति, तद्वत्। अतो वरमस्तु सङ्केत एव सम्बन्धः, कृतमत्र स्वाभाविकसम्बन्धस्वीकारेण।

तन्मात्रादेव शब्दप्रयोगव्यवहाराणां पदार्थज्ञानव्यवहाराणां चोपपत्तेः। वैशेषिक-सूत्रप्रणेता मुनिप्रवरः कणादोऽपि स्वाभाविकसम्बन्धाभावदशायां शब्दार्थयोः संयोगसमवायावपि सम्बन्धौ न सम्भवत इति निरूपयन् सूत्रद्वयमाह स्म— 'संयोगिनो दण्डात् समवायिनो विशेषाच्च' इति, 'सामयिकः शब्दार्थ-संप्रत्ययः' इति च (वै.द. ७।२।१९-२०)।

अयमत्र प्रकारः— परमेश्वरेण सृष्ट्यादौ यो गवादिशब्दानां सङ्केतः कृतः, तं सङ्केतं बाला अपि वृद्धव्यवहारेषु तेषां शब्दानां प्रयोगं दृष्ट्वा ग्रहीतुं शक्नुवन्ति। तथा हि 'गामानय' इत्युत्तमवृद्धस्यादेशवचनमाकर्ण्य मध्यमवृद्धस्य गवानयनादौ प्रवृत्तिं दृष्ट्वा तया प्रवृत्त्या बालोऽनुमिनोति यदयं मध्यमवृद्ध उत्तमवृद्धस्य वचनस्यार्थं ज्ञात्वैव गवानयने प्रवृत्त इति। तदनन्तरम् 'अश्वमानय, गां बधान' इति वाक्ययोः पदानामवापोद्वापाभ्यां (प्रक्षेपोत्क्षेपाभ्यां) तथैव प्रवृत्त्या अश्व-गो-आनय-बधान इति प्रत्येकं पदस्य तस्मिन् तस्मिन्नर्थे सङ्केतग्रहं करोति बालः। इत्थं च व्यवहार एव साम्प्रतिकानां सङ्केतग्रहोपायः। अपि चादौ परमेश्वरकृतस्य परिपालनमेव व्याकरणशास्त्रप्रयोजनम्। येनार्थेन सह यस्य शब्दस्य परमेश्वरेण सङ्केतः कृतपूर्वः, स शब्दस्तस्मिन्नर्थे साधुरसाधुश्च विपरीतार्थ इति विभागप्रदर्शनेन व्याकरणशास्त्रमर्थवद् भवतीति। तस्मात् सङ्केत एव पदपदार्थयोः शक्तिर्न पदार्थान्तरमिति निश्चीयते।

इयं हि शक्तिर्मतभेदेन पदार्थान्तरं वा भवतु, ईश्वरसङ्केतरूपा वा भवतु, तथापि तस्या आश्रयः क इत्यत्राप्यस्ति विप्रतिपत्तिः। भाट्टमतानुयायिनो मीमांसका मन्यन्ते जातावेव पदानां शक्तिः व्यक्तिबोधस्त्वाक्षेपात्, न हि जातिर्निराश्रया प्रतीयेतेति हेतोः। न्यायमते तु जात्याकृतिविशिष्टायां व्यक्तावेव शक्तिः, 'जात्याकृतिव्यक्तयस्तु पदार्थाः' इति गौतमसूत्रोक्तेरिति।

अयमाशयो भाट्टमतानुयायिनाम्— नागृहीतविशेषणा बुद्धिर्विशेष्यमुप-सङ्क्रामतीति न्यायाज्जातावेव शक्तिकल्पना उचिता, न तु व्यक्तौ, अनन्ताभिर्व्यक्तिभिः सह सम्बन्धग्रहणस्याशक्यत्वात्। नन्वेवं सति शाब्दकाले व्यक्तेर्बोधः कथं स्यादिति चेत्, आनयनक्रियाकर्मत्वं गवीयम्, गोवृत्तिगोत्व-निष्ठकर्मतात्वाद् इत्यनुमानरूपाक्षेपेणैव कर्मत्वेन गोव्यक्तिबोधलाभसम्भवात्।

ननु युगपदेव जातिव्यक्त्योर्बोधदर्शनात् कथमाक्षेप्याक्षेपकभावो गोव्यक्तिबोधजातिबोधयोरिति चेत्, जातिविशिष्टानन्तगोव्यक्तिषु शक्तिस्वीकारे गौरवाद् आक्षेपादेव व्यक्तिलाभसम्भवेन तत्र युगपद् बोधप्रतीतिर्भ्रान्तेति कल्पनस्यैवो-चितत्वात्। तस्माज्जातावेव शक्तिरिति।

अत्रोच्यते नैयायिकैः—आक्षेपं विनाऽपि 'गामानय' इत्यादिवाक्याद् गवादिकर्मकानयनादिबोधस्यानुभविकत्वात्। गौर्गच्छतीत्यादौ शुद्धगोत्वे गमनानुभवाभावात्, गोत्वत्वाद्यनुपस्थित्या गोत्वं गच्छतीत्यनुभवस्यासम्भवाच्च जातिशक्तिकल्पनाया दुःशक्यत्वात्। गोत्वत्वे च सकलगोसमावेशस्यावश्यकत्वाद् गौरवस्य दुष्परिहरत्वात्।

मण्डनमिश्रास्तु—जातिबोधः शक्त्या व्यक्तिबोधस्तु लक्षणयेत्याहुः। तदुक्तम्—

जातेरस्तित्वनास्तित्वे न हि कश्चिद् विवक्षति।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे।।इति।

अतो गौर्गच्छति गौर्नश्यतीत्यादौ सर्वत्र गोत्वादिजातिशक्तेर्नैव गवादिपदेन लक्षणया गोत्वादिविशिष्टा व्यक्तिर्बोध्यते, व्यक्तीनां बहुत्वेन तत्र शक्तेरकल्पनात्। यथा प्रवाहशक्तेन गङ्गापदेन तत्तीरं लक्ष्यते, तद्वत्।

तदपि न विचारसहम्— व्यक्तिं विना गोत्वादिजातौ गवादिपदस्य मुख्य-प्रयोगाभावेन जातिमात्रे न गोपदशक्यत्वग्रहः। अस्यां स्थितौ तद्वति गवादौ लक्षणाऽपि कथं वक्तुं शक्येत? प्रवाहे तु गङ्गापदस्य मुख्या शक्तिर्गृहीताऽस्तीति तत्सम्बन्धिनि तीरे लक्षणा उपपद्यत एव। तस्मान्मण्डनाचार्यमतमपि शक्तिसम्बन्धि न सम्भवीति।

प्राभाकरास्तु— शक्तिर्हि कार्यापेक्षया कल्पनीया, गोपदशक्तिज्ञानकार्यञ्च गोत्वविशिष्टगोज्ञानमेकमेव तुल्यवित्तिवेद्यत्वात्। अत एकैव सा विशिष्टे शक्तिरिति। इयांस्तु विशेषः—जातौ सा शक्तिर्ज्ञाता सत्युपयुज्यते व्यक्तौ तु स्वरूपसतीति। किन्तु गुरूणामियमुक्तिरर्धजरतीयं न्यायमनुहरति—एकत्र ज्ञाताऽपरत्र स्वरूपसती शक्तिर्विशिष्टबोधकारणं भवतीति। यतो हि पदार्थोपस्थित्यर्थमेव शक्तिः कल्प्यते। स्वरूपशक्तिस्तु न पदार्थोपस्थित्यङ्गं भवितुमर्हति, तथा स्वीकारे जातावपि सा स्वरूपसत्येव बोधकारणमस्तु इत्यपि वक्तुं शक्यते। अतो जातिरिव व्यक्तिरपि पदशक्या। यथासम्भवमाकृतिरपि पदार्थः। इत्यभिप्रेत्यैवाचार्येणोक्तम्— 'जात्याकृतिव्यक्तयस्तु पदार्थः' इति।

आचार्यश्रीकरस्त्वाह — पदं हि जातिवाचकं भवति, अतो जातिवाचक-पदाज्जातिबोधः शाब्दः, व्यक्तिबोधस्त्वौपादानिक एवेति। किन्त्वेतदप्यनुपादेयमेव मतम्। यतो ह्युपादानं यदि अर्थापत्तिरूपमभिप्रेयते, तदाऽऽक्षेपाभिन्नतया

भट्टमताविशेषात् तद्वदेवेदमपि मतं परिहरणीयं स्यात्। यद्युच्येत जातिबोधः शाब्दः, व्यक्तिबोधस्तु जात्यैव भवति, जातिकरणकत्वमेव व्यक्तिबोधस्यौपादानिकत्वमिति, तदपि नौचित्यमावहति, व्यक्तिबोधाय जातेः प्रमाणान्तरत्वकल्पनापेक्षया व्यक्तिशक्तिकल्पनाया एव युक्ततरत्वात्।

अनेनेश्वरीयसङ्केतरूपशक्तिसम्बन्धेन पदपदार्थयोर्वाच्यवाचकभावो भवति, पदं वाचकं भवति, अर्थश्च वाच्यो भवतीति। आधुनिकसङ्केतरूपपरिभाषासम्बन्धेन च शब्दार्थयोः परिभाष्यपारिभाषिकभावो भवति, यथा भ्वाद्यर्थः परिभाषितो भवति, धातुशब्दश्च पारिभाषिको भवंतीति। इत्थञ्च पदपदार्थयोः सम्बन्धद्वयमस्ति—सङ्केतो लक्षणा च। तदुक्तं शक्तिवादे गदाधरभट्टाचार्यैः—सङ्केतो लक्षणा चार्थे पदवृत्तिरिति। अत्र वृत्तिर्नाम सम्बन्धः, चकारार्थो द्वित्वम्। तथा पदप्रतियोगिकोऽर्थानुयोगिकः अर्थप्रतियोगिकः पदानुयोगिकः शाब्दबोधौपयिकः सम्बन्धः सङ्केतलक्षणाद्वय-मित्युक्तवचनार्थः। अनयोक्त्या आलङ्कारिकाणामभिमतं व्यञ्जनाया वृत्तित्वं नास्तीति न्यायमतं स्फुटीभवति।

ननु शाब्दबोधप्रयोजकत्वेन व्यञ्जनायाः पदवृत्तित्वानङ्गीकारे काव्यं पठतः श्रृण्वतश्च जनस्य कथं व्यङ्ग्यार्थबोधो भवतीति चेत्, उच्यते—तत्र एकसम्बन्धिज्ञान-मपरसम्बन्धिस्मारकमिति नियमात् तत्तत्पदार्थस्य स्मृतिसहकारेण मानस एव व्यङ्ग्यार्थबोधस्तत्र सम्भवतीति वृत्तिकल्पना न समुचिता। नन्वेवं गामानयेत्यादि-वाक्यश्रवणानन्तरं तत्तत्पदार्थस्मृतिसहकारेण मनसैव विशिष्टबोधः स्यात् किं शक्त्यादेर्वृत्तित्वकल्पनयेति चेत्, न, यतः पदजन्यपदार्थोपस्थितिकाले सम्बन्धान्तरज्ञानजन्या पदार्थान्तरस्याप्युपस्थितिर्जाता तत्रत्ये विशिष्टबोधे तथाविधं पदार्थान्तरं न भासते, अतो वाक्यजन्यबोधस्य नियन्त्रितविषयकत्वमावश्यकम्। नियन्त्रणञ्च शक्तिलक्षणान्यतरसम्बन्धकृतमेवेति न सम्बन्धान्तरज्ञानकृतोपस्थिति-विषयपदार्थान्तरबोधस्य तत्र समावेशः।

पदशक्तिवादिष्वपि मतद्वयं प्रवृत्तमास्ते—अन्विताभिधानवादः, अभिहितान्वयवादश्चेति। अन्विताभिधानवादो मीमांसकानामभिहितान्वयवादश्च नैयायिकानाम्। अन्विताभिधानवादिमते पदार्थसंसर्गोऽपि वाच्य एव भवति पदार्थवत्, तन्मते इतरान्वितो घटो घटपदवाच्य इत्येतादृशमेव शक्तिज्ञानं शाब्दबोधे प्रयोजकं भवति। घटो घटपदवाच्य इत्याकारकस्यान्वयांशानन्तर्भावेन शक्तिग्रहस्य शाब्दबोधजनकत्वे पदार्थसंसर्गस्य शाब्दबोधविषयत्वानुपपत्तिरिति।

मतमिदमभिहितान्वयवादिनो नैयायिका न सहन्ते। तेषामियं वाचोयुक्तिः—सामान्यतस्तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितित्वेन न हेतुता, स्वतन्त्रवृत्तिज्ञानाद् विशृङ्खलभावेन एकपदोपस्थितयोः पदार्थतत्त्वावच्छेदकयोर्विशेष्यविशेषणभावेन शाब्दबोधापत्तेः। यथा—पशुपदं लोम्नि शक्तं लाङ्गूलवति च शक्तम्, धेनुपदं धावनकर्मत्वे शक्तं गवि च शक्तमिति वृत्तिज्ञाने सति पशुर्धावतीत्यत्र लोमवल्लाङ्गूलवान् धावतीति, धेनुर्गच्छतीत्यत्र चोत्तरदेशसंयोगानुकूलकृतिमती धावनकर्म गौरिति च शाब्दबोधाकारो जायेत।

अतः शाब्दबोधोपस्थित्योस्तथाविधकार्यकारणभावं परित्यज्य तद्धर्मप्रकारेण तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्मावच्छिन्नतद्विषयकोपस्थितित्वेनैव हेतुता वाच्या। एवञ्च तत्संसर्गकबोधस्य किञ्चिद्धर्मप्रकारेण तद्विषयकत्वाभावाद् वृत्तिज्ञानात् तदनुपस्थितावपि तत्संसर्गकः शाब्दबोधः सम्भवत्येवेति तत्र संसर्गे वृत्तिस्वीकारो नावश्यकः। तस्मादभिहितान्वयवाद एव स्वीकारार्हः। पदैरभिहितानां पदार्थानां परस्परमन्वयो बुध्यते संसर्गमर्यादयेति।

सामान्यतोऽत्र शक्तिविचारे जाते प्रसङ्गाद् विशेषशक्तिविचारोऽपि कतिपयपदानां समासेन प्रस्तूयते। यथा आकाशपदस्य शब्दाश्रयत्वोपलक्षिते शक्तिर्न तु शब्दाश्रयत्वावच्छिन्ने, शब्दाश्रयत्वस्य घटपदवाच्यघटत्ववद् आकाशपदवाच्यत्वाभावात्। अत एव शब्दाश्रयत्वे आकाशपदप्रवृत्तिनिमित्तत्ववारणाय प्रवृत्तिनिमित्तलक्षणे वाच्यत्वविशेषणोपादानं प्राचीनैः क्रियते, वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वं प्रवृत्तिनिमित्तत्वमिति ते लक्षणं कुर्वन्ति। अतः शब्दाश्रयत्वस्योपलक्षणत्वेन प्रकारत्वासम्भवाद् आकाशपदात् शब्दाश्रयत्वाप्रकारक एव शाब्दबोधः प्राचीनैः स्वीक्रियते। विभक्त्युपस्थापितैकत्वप्रकारमादायैव तेन सह संसर्गावगाहनेनाकाशबोधस्य सप्रकारकत्वं शाब्दत्वं च निर्वहति।

नव्यास्तु गोत्वादेर्गवादिपदवाच्यत्ववत् शब्दाश्रयत्वस्याप्याकाशपदवाच्यत्वमस्त्येव। उक्तप्रवृत्तिनिमित्तलक्षणे च वाच्यत्वविशेषणमनुपादेयमेवेति। एवञ्च शब्दाश्रयत्वावच्छिन्न एवाकाशपदशक्तिर्न तु शब्दाश्रयत्वोपलक्षित इति मन्यन्ते।

पुष्पवन्तपदस्य चन्द्रसूर्ययोः समुदितयोरेव शक्तिः। अतः पुष्पवन्तपदात् चन्द्रत्वं परित्यज्य न केवलं सूर्यत्वप्रकारको बोधो न वा सूर्यत्वं परित्यज्य केवलं चन्द्रत्वप्रकारको बोधो भवति, किन्तु चन्द्रत्वसूर्यत्वोभयप्रकारकश्चन्द्रसूर्योभयविशेष्यक एव शाब्दबोध एकया शक्त्या भवतीति सिद्धान्तः। तथा

चोक्तममरकोशकारैः—"एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इति। अत्र उक्तिपदं शक्तिपरं पुष्पवन्तपदं तत्प्रतिपाद्यपरमस्ति। तथा च सूर्याचन्द्रमसावेकशक्त्या पुष्पवन्तपदप्रतिपाद्याविति कोशवाक्यार्थः।

एवं स्वर्गपदं दुःखासम्भिन्नत्वसुखत्वोभयविशिष्टस्य वाचकम्, धेनुपदं च धावनकर्मत्वगोत्वोभयविशिष्टस्य वाचकं भवति। न हि ताभ्यां पदाभ्यामेकधर्मं परित्यज्य धर्मिणोर्बोधः। तथा सति दुःखासम्भिन्नायां सुषुप्तौ दुःखमिश्रिते सुखे वा स्वर्गपदस्य तथा धावनकर्मणि महिष्यां पुंगवि वा धेनुपदस्य च प्रयोग आपद्येत।

पुष्पवन्तपदवत् सर्वनामपदानामपि शक्तेरैक्यमेव। तथा च बुद्धिविषयतावच्छेदकधर्मावच्छिन्ने तदादिपदानामेकैव शक्तिः। एवं युष्मदस्मत्पदयोरात्ममात्रे न शक्तिः; किन्तु स्वोच्चारयितरि अस्मत्पदस्य तथा स्वसम्बोध्ये युष्मत्पदस्य शक्तिः। अनयोः शब्दयोरनुगमकधर्मघटितलक्षणे तु शक्तिवादादिग्रन्थतोऽवधेये।

सर्वे घटा रूपवन्त इत्यादौ घटत्वाद्यवच्छिन्नस्याशेषताप्रतीतेरशेषत्वं सर्वपदार्थः, अशेषत्वविशिष्टे च सर्वपदशक्तिः। अशेषत्वं यावत्त्वम्। एवं 'सर्वं गगनम्' इत्यप्रयोगादनेकत्वमपि सर्वपदार्थः। अत्रोभयधर्मावच्छिन्ने सर्वपदशक्तिरेकैवास्ति। अनेकत्वमात्रस्य सर्वपदार्थत्वे सर्वं द्रव्यं रूपवदिति प्रयोगस्यापि प्रामाणिकत्वप्रसक्तिः, अनेकेषां द्रव्याणां रूपवत्त्वे बाधाभावात्। अशेषत्वमात्रस्य च सर्वपदार्थत्वे सर्वं गगनमिति प्रयोगस्यापि प्रामाणिकत्वं प्रसज्येत। अतोऽनेकत्वे सत्यशेषत्वं सर्वपदार्थः।

एवं 'चैत्रो दधि भुङ्क्ते, मैत्रः पयो भुङ्क्ते, देवदत्तो घृतं भुङ्क्ते, विष्णुमित्रः सर्वं भुङ्क्ते' इत्यादि प्रयोगस्थले भुजिक्रियाकर्मसु सन्निहितेषु दधित्व-पयस्त्व-धृतत्वैरवच्छिन्नेषु त्रिषु एव सर्वपदस्य शक्त्यन्तरमप्यङ्गीक्रियते। अतस्तत्र विष्णुमित्रवृत्तिभुजिक्रियायाः कर्मभूतानि दधिपयोघृतानि सर्वपदार्थः, न तेभ्यो न्यूनो नाप्यधिक इति व्युत्पत्त्यन्तरं सर्वपदस्य। 'किम्'पदस्य जिज्ञासिते शक्तिः। 'किमिन्दुः? किं पद्मम्? किमु मुकुरबिम्बम्? किमु मुखम्'? इत्यादौ अव्ययकिमः वाशब्दस्येव वितर्कोऽर्थः। वितर्कश्च सम्भावनात्मकं ज्ञानम्, सम्भावना चात्रैकधर्मिणि नानाविरुद्धकोटिद्वयाद्यवगाहिज्ञानरूपः संशय एव। कुत्सार्थकमपि क्वचित् किंपदम्। यथा किं गौः किं पुरुष इत्यादौ।

तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषये 'यत्'पदस्य शक्तिः। अत एव 'यत्'-पदेनार्थप्रत्यायने नियमतः 'तत्'पदस्यापेक्षा भवति। पूर्वप्रक्रान्तेऽपि 'यत्'शब्दस्य

शक्तिरतस्तादृशस्थले 'तत्'पदाभावेऽपि न दोषः। यथा, 'आगतश्चैत्रः यस्तत्रावलोकितः' इत्यादौ। दृश्यते हि एकस्यापि पदस्य विभिन्नार्थेषु पृथक् पृथक् शक्तिः, यथा 'हरि'पदस्य यमे अनिले इन्द्रे चन्द्रे अर्के विष्णौ सिंहे अंशौ वाजौ शुके सर्पे कपौ भेके कपिले चेति चतुर्दशस्वर्थेषु पृथक्-पृथक् शक्तिरस्ति।

एवं 'यत्'पदोपस्थाप्ये 'तत्'पदस्य शक्तिः। यथा—'तमानय य इहास्ति' इत्यादौ। प्रत्यक्षबुद्धिविषये 'इदम्'शब्दस्य 'एतत्'शब्दस्य च शक्तिः। परोक्षविषये 'अदस्'शब्दस्य शक्तिः। 'स्व'पदस्य समभिव्याहृतपदोपस्थाप्ये शक्तिः। यथा—'चैत्रः स्वं पश्यति' इत्यत्र 'स्व'पदस्य चैत्रे शक्तिः। समभिव्याहृतत्वं तु एकवाक्यघटकत्वम्। 'एक'शब्दस्य कैवल्यादिविशिष्टे शक्तिः, कैवल्यं च स्वसजातीयद्वितीयरहितत्वम्। यथा—'एकोऽत्र वीरः' इत्यत्र वीरत्वजातिमान् द्वितीयो नास्तीत्यर्थो बुध्यत इति शम्।

●

# विशिष्टाद्वैतवेदान्तसम्मतं कालस्वरूपम्

**डॉ. कौस्तुभानन्दपाण्डेयः**
वरिष्ठप्रवक्ता, संस्कृतविभागस्य
कुमाऊँविश्वविद्यालये
अल्मोड़ा (उ.प्र.)

❀ ❀ ❀

कालतत्त्वविषये भारतीयदर्शने बहु विवेचितमस्ति। केषुचिद्दर्शनेषु काल एकं स्वतन्त्रं द्रव्यं वर्तते, अन्येषु केषुचिदचित्तत्त्वरूपेण, केषुचिच्च जडद्रव्य-विशेषरूपेणास्य सत्ता दार्शनिकैः स्वीक्रियते। कालस्यैकत्वं विभुत्वमुपाधिभेदा-न्नानात्वमतीतानागतवर्तमानत्वं नित्यत्वमखण्डत्वं खण्डत्वञ्च दर्शनशास्त्रेषु बहुधा प्रपञ्चितमस्ति। कालस्यापलापः कस्यामपि विचारधारायां नास्ति, भवतु सा आस्तिकविचारधारा नास्तिकविचारधारा वा, तस्यापलापं कुत्रापि कर्त्तुं न सम्भाव्यते। चार्वाकः, बौद्धः, सांख्ययोगौ, अद्वैतिनो ये केऽपि कालतत्त्वविषये पृथगद्रव्यरूपेण तत्त्वार्थविचारणे यद्यपि बहु न भाषन्ते, तथापि तस्यापलापं कर्त्तुं नैव शक्ष्यन्ति। प्रत्यक्षप्रमाणवादी चार्वाकोऽपि वर्तमानकालं स्वीकरोत्येव। तस्य मतेऽस्ति कालोऽतीतानागतविषयकः, एतत्तु कथं प्रत्यक्षं भवेत्, वाऽनुमानागमिको भवेत्, तन्मते प्रत्यक्षप्रमाणमात्रस्वीकृतत्वात्। कालस्य प्रत्यक्षप्रमाणसाध्यताविषयेऽपि तन्मते न प्राप्यते विवेचनम्। बौद्धदर्शनेऽपि कालस्वरूपं विशेषेण न प्रस्तुतम्; किन्तु वर्तमानसत्ताविषये बौद्धा अपि न सन्ति विरोधिनः, अतीतानागतविषये तेषां नास्ति श्रद्धा मनागपि। बौद्धपरम्परायां कालस्य प्रज्ञप्तिमात्रता एव स्वीकृता विद्यते, यया सर्वे व्यवहाराः कल्पिताः सन्ति[१]। कालः कलनात् सिद्धो भवति। कालापेक्षयैव सर्वाणि प्रत्यक्षादीनि ज्ञानानि सम्भवन्ति, अतः कालमवश्यमेवाभ्युपगन्तव्यम्। कालस्य स्वरूपं व्यापकं भवति। कुत्रापि नास्त्यभावः कालस्य। सृष्टिकालः, प्रलयकाल इत्यपेक्षया अपि कालतत्त्वं सिद्धं भवति। अतः कालः प्रत्यक्षं भवेद्

---

१. अट्ठशालिनी, १।३।१६१।

वानुमितं भवेत् तस्यापलाप: कर्त्तुं न शक्य:। बौद्धमतेऽपि क्षणिकत्वभावना कालसापेक्षैव सिद्ध्यति, अत: कालं तेऽपि मन्यन्त एव।

सांख्ययोगिनोऽपि कालस्य स्वतन्त्ररूपेण प्रमेयविचारणे नोल्लेखं कुर्वन्ति, किन्त्वाकाशतत्त्वान्तर्गतत्वमस्य स्थितिं स्वीकुर्वन्त: कालस्यापलापं कर्त्तुं न प्रभवन्ति। यतो हि सृष्टिप्रक्रिया सर्वा एव कालापेक्षिता सम्भवति। कालो वस्तुशून्य: शब्दज्ञानानुपाती वस्तुस्वरूपत्वेनावभासते[1]। अद्वैतवेदान्तदर्शनेऽपि काल: स्वीकृत एव। तत्र देशं कालञ्च ब्रह्माभिन्नत्वेन अद्वैतिन: मन्यन्ते, ब्रह्मणो देशकालापरिच्छिन्नत्वात्। तत्त्वार्थविचारणे प्रातिभासिकव्यावहारिकपारमार्थिकसत्त्वानि कालमपेक्ष्य एव सम्भवन्ति। प्रत्यभिज्ञादर्शने शक्तिविशिष्टाद्वैतदर्शने च कालस्य षट्त्रिंशत्तत्त्वेषु गणना भवति[2]।

सम्प्रति कालस्य द्रव्यरूपेण तत्त्वरूपेण वा विचारं कुर्वतां दार्शनिकमतानां विमर्श: क्रियते। तेषु जैन-मीमांसा-वैशेषिक-विशिष्टाद्वैतवेदान्तेषु कालो द्रव्यरूपेण स्वीकृतोऽस्ति। जैनदर्शने सप्तविधद्रव्यमध्येऽजीवान्तर्गतेऽरूपी कालतत्त्वं समय: अद्धा इति स्वीकृतम्। कालस्य द्रव्यत्वं माधवाचार्येण जैनदर्शननिरूपणप्रस्तावे प्रदर्शितम्[3]। द्रव्यानामुत्पादपरिणमने कालाख्यं द्रव्यमेव परिवर्त्तनशीलं सद् द्रव्याणां परिवर्त्तनेऽपि सहकारी भवति। पारमार्थिकं व्यावहारिकं च द्विविधं कालतत्त्वम्।

तत्र नित्यं निरवयवं कालं पारमार्थिकम्, द्रव्यपरिमाणानुमितं दण्ड-घटी-पलादिभेदै: सम्पन्नं कालं व्यावहारिकं मन्यन्ते जैनमतानुयायिन:। कालस्यासंख्या: प्रदेशा भवन्ति। कालमपेक्ष्य एव अतीतानागतादिव्यवहारा: सम्भवन्ति। तत्त्वार्थसूत्रे जैनपरम्परायामेव काल: स्वतन्त्रं द्रव्यं न स्वीक्रियते[4]। मीमांसादर्शने कालं द्रव्यं मन्यमाना भाट्टास्तु प्रत्यक्षं प्राभाकरास्त्वानुमानिकमेनं वर्णयन्ति। 'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते' इति श्लोकवार्त्तिके कालस्य स्वीकृतिर्भाट्टमते विद्यते। कालो द्रव्यमस्ति। परिमाणाश्रयं हि द्रव्यं भवति। एकत्वेन विभुत्वेन सर्वाधारत्वेन च कलाकाष्ठादिभेदैरुपाधिवशान्नानात्वमस्य कालस्य मीमांसका

---

१. (क) सांख्यतत्त्वकौमुदी, पृ. २६२।

(ख) स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माण: शब्दज्ञानानुपाती लौकिकानां व्युत्थित-दर्शनानां वस्तुस्वरूप इवावभासते। (पातञ्जलयोगदर्शनम्, व्यासभाष्यम्, पृ. ३९४)

२. सर्वदर्शनसमन्वय:, पृ. २४, ५२।

३. सर्वदर्शनसङ्ग्रह:, पृ. १५४।

४. कालश्चेत्येके। (तत्त्वार्थसूत्रम्, ५।३८)

मन्यन्ते। भाट्टमते कालः प्रत्यक्षमस्ति, एको नित्यो विभुश्चास्ति[१]। यथा वर्णो ध्वन्युपाधिवशान्नित्यः सर्वगतोऽपि दीर्घादिभेदेन विभक्तो भासते तद्वदेव, कालोऽपि सूर्यस्य गतिक्रियोपाधिवशाद् विभक्तः प्रतीयते[२]। नारायणद्वयी अपि कालस्य द्रव्यत्वं प्रत्यक्षत्वं च स्वीकरोति[३]। प्रत्यक्षसाधकमनुमानमित्थञ्च भवति— दिक्कालाकाशाः प्रत्यक्षाः, अमनस्त्वे सति विभुत्वाद् आत्मवदिति[४]। कालस्य विभुत्वेऽप्युपाधिवशादौपाधिको भेदव्यवहारोऽस्ति। श्लोकवार्त्तिके कालस्य प्रविभागविषये स्पष्टमाख्यातं यद् ध्वन्युपाधिवशात् कालस्य क्षणादिविभागा जायन्ते[५]।

न्यायमते कालो दिग्विपरीतपरत्वापरत्वानुमेयो भवति। काले संख्यापरिमाणपृथक्त्वसंयोगविभागनामका गुणा विद्यन्ते[६]। कालः कार्यमात्रं प्रति असाधारणनिमित्तकारणमेवास्ति, यतो ह्ययं स्वाश्रयसंयोगिसंयोगरूपः सिद्धो भवति। स्वस्य सूर्यपरिस्पन्दस्य आश्रयः सूर्यः, तत्संयोगी कालः, तत्संयोगश्च घटादिविषय इति तत्सम्बन्धघटकतया कालः सिद्ध्यति[७]। वैशेषिकमते तु कालः स्वतन्त्रं द्रव्यमिति मन्यते। सूत्रकारेण 'अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि'[८] इति कालानुमेयत्वं सूत्रितम्। कालः पिण्डमार्त्तण्डोभयसंयुक्तो विभुः इति शङ्करमिश्रः प्रतिपादयति[९]। काल एक इति 'तत्त्वम्भावेन' इति सूत्रकृतैव सूत्रितम्। शङ्करमिश्रः सत्तावदेकत्वं कालस्य स्वीकरोति, क्षणलवमुहूर्त्तयाम-

---

१. श्लोकवार्तिकम्, पार्थसारथिमिश्रकृतं न्यायरत्नाकरम्, पृ. ३०३।

२. तदेव, पृ. ५७१।

३. कालस्य तु युगपदादिप्रत्ययस्य कालविषयत्वेन्द्रियजन्यत्वयोर्वक्ष्यमाणत्वात् तस्य च सर्वेन्द्रियजन्यत्वात् सर्वैरपीन्द्रियैः संयोगाद् ग्रहणम्।
(मानमेयोदयः, स्वामीयोगीन्द्रानन्दकृतटीकायाम्, पृ. १)

४. तदेव, पृ. १७९।

५. आनुपूर्वी च वर्णानां ह्रस्वदीर्घप्लुताश्च ये।
कालस्य प्रविभागास्तैर्जायन्ते ध्वन्युपाधयः।।
कालश्चैको विभुर्नित्यः प्रविभक्तोऽपि गम्यते।
वर्णवत् सर्वभावेषु व्यज्यते केनचित् क्वचित्।।
(श्लोकवार्त्तिकम्, श्लो. ३०२,३०३, पृ. ५७०)

६. तर्कभाषा, पृ. २५०।

७. न्यायदर्शनविमर्शः, पृ. २७।

८. वैशेषिकसूत्रम्, २।२।६

९. उपस्कारटीका, पृ. १६२।

दिवसाहोरात्रपक्षमासर्त्वयनसंवत्सरादिभेदभानस्योपाधिनिबन्धनत्वञ्च स्वीकरोति[१]। कालः सर्वोत्पत्तिमतामेकमसाधारणं नित्यं कारणम्[२]। एतस्य कालस्यावच्छेदकत्रित्वाधीनत्वमपि भवति[३]। विश्वनाथः 'जन्यानां जनको कालो जगतामाश्रयो मतः'[४] इति कालं लक्षयति। भाषापरिच्छेदे परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययकारणं द्रव्यं कालइति लक्षितम्[५]। अन्नंभट्टः कालोऽतीतादिव्यवहारहेतुरिति लक्षयति[६]। व्यवहारस्तु भवति— इदमतीतमिदं वर्तमानमिदं भविता इत्यादिशब्दप्रयोगाणां कारणमेव काल इति कालद्रव्यस्वरूपम्। द्वैताद्वैतमते श्रीमध्वाचार्योऽपि कालं विंशतिसंख्यकेषु द्रव्येषु स्थापयति। तन्मते उपादानकारणत्वं द्रव्यत्वं कथ्यते। समग्ररूपेण कथयितुं शक्यते यत् प्रकृतविवेच्यविशिष्टाद्वैताभिमतं कालतत्त्वं सर्वेऽपि आस्तिका नास्तिकाश्च दार्शनिकाः स्वीकुर्वन्ति।

विशिष्टाद्वैतिनस्तु कालं जडद्रव्यविशेषरूपेण प्रामुख्येण वर्णयन्ति। 'अहमेव अक्षयः कालः'[७] इति भगवद्गीतोक्तवचनेन, तथा च 'ब्रह्मदक्षादयः कालः...... जनार्दनविभूतयः'[८] इति विष्णुपुराणवचनेन च कालस्येश्वरानन्यत्वं सिद्ध्यति। 'कालो नाम गुणत्रयरहितो जडद्रव्यविशेषः'[९] इति विशिष्टाद्वैतिनः कालं लक्षयन्ति। आत्मकालाभेदवचनानि अनुसृत्य रामानुजीयाः कालमचिद्द्रव्येषु स्वीकुर्वन्ति। यतो हि विशिष्टाद्वैते कालनामकाचिद्विशेषेण द्रव्येण सहात्मनो भवत्यद्वैतमिति कालस्य विशिष्टं स्वरूपं प्रतिपादितमत्र।

---

१. तदेव, पृ. १६४।

२. नित्येषु आकाशादिषु युगपज्जातः, चिरं जातः, क्षिप्रं जातः, इदानीं जातः, दिवा जातः, रात्रौ जात इत्यादिप्रत्ययस्याभावादनित्येषु च घटपटादिषु यौगपद्यादिप्रत्ययानां भावाद् अन्वयव्यतिरेकाभ्यां कारणं काल इत्यर्थः। (तदेव, पृ. १६५-१६६)

३. येन हि वस्तुना यः कालोऽवच्छिद्यते, स तस्य वर्तमानः, यत्प्रागभावेन यः कालोऽवच्छिद्यते, स तस्य भविष्यत्कालः, यत् प्रागभावेन यत्प्रध्वंसेन यः कालोऽवच्छिद्यते, स तस्यातीतकालः। (तदेव, पृ. १६५-१६६)

४. कारिकावली, ४५।

५. भाषापरिच्छेदः, का. ४५-४६।

६. अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च। (तर्कसङ्ग्रहः, पृ. ४५)

७. भगवद्गीता।

८. विष्णुपुराणवचनम्।

९. यतीन्द्रमतदीपिका, पृ. १००।

यद्यपि विशिष्टाद्वैतिनोऽपि कालं जडद्रव्यमेव स्वीकुर्वन्ति, तथापि लीलाविभूतौ एनमीश्वरस्य क्रीडापरिकरं मन्यन्ते। तेषां मते कालः खण्डाखण्ड-कालत्वेन द्विविधो वर्तते। तत्राखण्डकाल एव नित्यः, खण्डकालस्त्वनित्य एव[१]। लीलाविभूतावीश्वरः कालाधीन एव कार्यं करोति। नित्यनैमित्तिकप्राकृतप्रलयाः सर्वे कालाधीना एव सिद्ध्यन्ति। 'एकोऽहं बहु स्यामिति प्रजायेय' इति सङ्कल्पः परमेश्वरस्य कालाधीनसृष्टिकार्यकरत्वं प्रतिपादयति। अतः कालस्य स्वरूपं विशिष्टाद्वैतधरातले बहु प्रपञ्चितमस्ति। अस्मिन् शोधलेखें भारतीयदर्शनान्तर्गत-कालतत्त्वस्य लक्षणस्वरूपादिकं सङ्क्षेपेण प्रस्तूय सम्प्रति विशिष्टाद्वैतमत एव कालस्यावधारणा प्रतिपादनीया वर्तते।

चिदचिदीश्वरतत्त्वत्रयं विशिष्टाद्वैतमते मायाजीवेश्वरभेदेनापि स्वीकृतम्। सामान्येन वैशेषिकोक्तद्रव्याणि विशिष्टाद्वैतमते मायाकालात्मपरमात्मधर्मभूत-ज्ञाननित्यविभूतिभेदैः स्वीकृतेषु तत्त्वविभागेष्वन्तर्भवन्ति। चिद्द्रव्ये तु जीवात्मा परमात्मा च भवतः। अचिद्द्रव्याणि मायाकालधर्मभूतज्ञाननित्यविभूतयश्च सन्ति। तत्र माया कालश्च जडद्रव्यविशेषौ, अस्वयंप्रकाशकत्वात्। धर्मभूतज्ञानं नित्यविभूतिश्चाजडद्रव्यविशेषौ, स्वयंप्रकाशजीवात्मपरमात्मधर्मवत्त्वात्। स्वयंप्रकाशधर्मत्वमपि प्रत्यग् परागिति द्विविधम्। तत्र जीवात्मपरमात्मनोः स्वयंप्रकाशत्वं प्रत्यक् भवति, धर्मभूतज्ञाननित्यविभूत्योः स्वयंप्रकाशत्वं अचिद्द्रव्यभावित्वेन पराक्कोटौ मन्यते। प्रकृतिर्माया वा विशिष्टाद्वैते सत्त्वरजस्तमोरूपगुणत्रयाश्रयरूपा जानीयते[२]। कालस्तु सत्त्वशून्यं तथा च गुणत्रयरहितो जडद्रव्यविशेष इति भवति चिदचिद्द्रव्ययोर्विवेकः।

विशिष्टाद्वैतमते काल एको नित्यो विभुरनाद्यनन्त ईश्वरीयविभूतियुक्तः प्रत्यक्षं द्रव्यं तत्त्वं चास्ति। काल एव सत्त्वादिगुणत्रयशून्यं तत्त्वम्। श्रीनिवास-दासस्यापि कालो नित्यो विभुरतीतादिव्यवहारवान् निमेषकाष्ठाकलामुहूर्त्त-दिवसपक्षमासऋत्वयनसंवत्सरादिभेदवान् चाभिमतोऽस्ति[३]। प्राकरणिके ग्रन्थे मानमेयप्रकाशिकायां कालः मायागुणेषु सृष्ट्यादिषु क्षोभजनकत्वविशिष्टो मतोऽस्ति। कालस्य मायारूपकार्यपदार्थेषु नित्यप्रकारकत्वमस्ति। मायिकानां

---

१. तदेव, पृ. १०३।

२. तदेव, पृ. ३६।

३. यतीन्द्रमतदीपिका, पृ. ७५।

पदार्थानामुत्पत्तिस्थितिविनाशाश्च कालाधीना एव सन्ति[१]। अयमेव कालः प्रकृतेः प्राकृतपदार्थानां महदादीनां च परिणामस्य कारणं भवति। ईश्वरोऽपि सृष्टिकालं प्रलयकालमपेक्ष्य एव प्रकृतिं महदादिरूपेण परिणमयति। कालमपेक्ष्य एव सकार्या प्रकृतिर्नानाविधपरिणामत्वेनात्मानं प्रकटयति। न्यायवैशेषिके कालस्य सिद्धिरनुमानसापेक्षा अस्ति, विशिष्टाद्वैते त्वयं प्रत्यक्षागमप्रमाणद्वयाभ्यां सिद्ध्यति[२]। बौद्धपक्षेऽपि पूर्वपश्चाद्व्यवहारेण कालं विशिष्टाद्वैतिन इच्छन्त्येव। देशविशेषेषु पौर्वापर्येण भूतभविष्यद्वर्तमानत्वेन च सर्वव्यवहाराणां कालाधीनत्वं स्वीक्रियते[३]। औद्धवमते काले सत्त्वादिरहिताचिद्द्रव्यवत्त्वं नित्यविभूतिभिन्नत्ववत्त्वं तादात्म्येन कारणवत्त्वं सर्वाधारवत्त्वं च वर्तते[४]। सर्गात्पूर्वं प्रलयादनन्तरं च पूर्वं पश्चादिति व्यपदेशाः कालविशेषसम्बन्धेनैव सिद्ध्यन्ति[५]। व्यवहारानुगुणं कालस्य विवेचनं रामानुजसिद्धान्त एव विवृतमद्वैतिनस्तु व्यावहारिकत्वेन स्वीकुर्वन्तोऽपि कालं मायिकमेव मन्यन्ते।

लोकाचार्येण गुणत्रयरहितत्वे सति ज्ञानशून्यत्वे सति विकारास्पदं काल इति लक्षितम्[६]। काल एव प्रकृतेस्तद्गतविकाराणाञ्च कारणम्। अत एव सर्वेऽपि कालपरिणामानां विकारत्वं भजन्ते। ज्येष्ठे कालकृतं परत्वं क्षणसम्बन्धस्य प्रकर्षः कनिष्ठे कालकृतमपरत्वं क्षणसम्बन्धस्याल्पत्वम्। अचिद्द्रव्येषु गुणत्रयशून्यधर्मवत्त्वेनैवास्य भिन्नत्वम्।

परमेश्वरो मायया सृष्टौ कालापेक्षया एव परिणामान् प्रकटयति। लीलाविभूतौ कालेनैव तस्य प्रपञ्चस्य परमेश्वरकर्त्तृत्वं सिद्ध्यति। कालो विभुरस्ति। विभुत्वेन नित्यविभूतावपि कालो विद्यते, कालिकसम्बन्धेनैवास्य नित्यविभूतिभिन्नत्वं भवति। नित्येश्वरस्य क्रीडासाधनं शरीरञ्च काल एव भवति[७]।

---

१. मानमेयप्रकाशिका, पृ. २०६-२०७।

२. तदेव, पृ. २०६।

३. न्यायसिद्धाञ्जनम्, पृ. १३०।

४. सत्त्वादिरहिताचिद्द्रव्यत्वं कालिकसम्बन्धेन नित्यविभूतिभिन्नं कार्यसामान्यं प्रति तादात्म्येन कारणत्वं कालिकसम्बन्धेन सर्वाधारत्वं च कालस्य लक्षणं भवति।
(मानमेयप्रकाशिका, पृ. २०९)

५. तदेव, पृ. २०८।

६. तत्त्वत्रयम्, व्या., पृ. १९०-१९१।

७. इदं च प्रकृतिप्राकृतपरिणामहेतुभूतं कलाकाष्ठादिरूपेण परिणामार्हं नित्यमीश्वरस्य क्रीडापरिकरभूतं शरीरभूतं च। (तत्त्वत्रयम्, व्या., पृ. १९०)

## कालस्यातिरेकत्वम्

कालो व्यापकं द्रव्यमस्ति। 'अनादिर्भगवान् कालः'[१] इति विष्णुपुराणे तस्य कीर्त्तनमनेनैव कारणेन सम्पत्स्यते। ईश्वरस्य सर्वव्यापकत्वेनान्तर्यामित्वेन च कालस्येश्वराभिन्नत्वं तत्र तत्र पुराणेषूपवर्णितमस्ति। विष्णुपुराणे निगदितं यत् प्रधानं पुरुषश्च निरुपाधेर्विष्णोरेव स्वरूपे स्तः, सृष्टिकाले पृथग्भूतौ सदैवाव्यक्ते च लयं गच्छतः[२]। 'अहमेवाक्षयः कालः' इति श्रीकृष्णेनापि स्वस्य कालाभिन्नत्वं निगदितम्। ईश्वरस्य सर्वव्यापकत्वान्तर्यामित्वादिभिर्धर्मैः कालस्य च एकत्वविभुत्वनित्यत्वादिभिर्धर्मैरिवोभयोरनन्यत्वं प्रकल्प्यते। ईश्वरस्य सर्वव्यापकत्व-सर्वान्तर्यामित्वादिधर्मविशेषैरेव कालस्यैकत्वविभुत्वसर्वाधारत्वादिभिश्चोभयोरभेदोऽत्र विवक्षितोऽस्ति। ईश्वरीयविभूतिवत्त्वेन कालो द्रव्यान्तरमेव सिद्ध्यति।

## कालस्यानाद्यनन्तत्वं विभुत्वञ्च

कालस्याद्यनाद्यनन्तत्वं विभुत्वं चापि विशिष्टाद्वैतिनो मन्यन्ते। प्रलयेऽपि श्रुतिः कालास्तित्वं स्वीकरोति। 'सदेव सोम्य इदमग्र आसीदि'ति छान्दोग्ये अस्यैव कथनं विद्यते। नित्यविभूतौ 'सदा पश्यन्ति सूरयः' इति श्रुत्यनुसारं देशेनापि कालपरिच्छेदो न सम्भवति। यतो हि कालोऽखण्डः सन्नपि खण्डभेदत्वेन प्रतीयते। अतोऽखण्डकालो नित्यः कलाकाष्ठामुहूर्त्तादिभिर्व्यपदिष्टं कालं सखण्डमनित्यं चाभिमन्यते। परिणामविशेषैरेव काल ईश्वरस्य क्रीडायां सहकारी भवति। लीलाविभूतौ कालाधीनं कार्यं करोति ईश्वरः। नित्यविभूतावपि कालो भवत्येव, किन्तु ईश्वरः स्वातन्त्र्येणापि कार्यं कर्त्तुं प्रभवति[३]।

कालसत्त्वेऽपि नित्यविभूतौ प्राकृतानां गुणत्रयाणामभावो भवति। नित्ये विभौ च काले क्षणादिव्यवहारः सूर्यपरिस्पन्दादिभिरुपाधिभिर्भवति। तदैव अतीतानागतादिविभेदास्सम्भवन्ति। मानमेयप्रकाशिकायां कथितम्—'प्रकृतशब्दप्रयोगाधिकरणभूतः कालो वर्तमानः, वर्तमानकालिकध्वंसप्रतियोगी अतीतः, वर्तमानकालिकप्रागभावप्रतियोगी चागामी बोध्यः' इति[४]। कालस्य विभुत्वं परममहत्परिमाणवत्त्वेनास्ति। तदेव द्रव्यं विभु, यत् परममहत्परिमाणवद्भवति[५]।

१. विष्णुपुराणम्, २।२।२६।
२. तदेव, १।२।२४।
३. य.म.दी., पृ. ७७।
४. मानमेयप्रकाशिका, पृ. २०१।
५. विभुत्वं परममहत्परिमाणवत्त्वम्। (न्यायसिद्धान्तमुक्तावली, पृ. २०४)

क्षणलवादिपरिणामा अपि कालोपाधित्वेनैव भवन्ति। अवस्थाभेदेनैव सर्वे विकाराः कालस्य सिद्ध्यन्ति, तत्तत्सूर्यपरिस्पन्दादिलक्षणोपाधिभेदात् क्षणादिव्यवहारोपपत्तेः। 'विश्वमिदानीं वर्तते' इति कालस्य विकाराणामपि विभुत्वमेव सिद्ध्यति। तदेवं क्षणादिविकारा अपि विभुत्वेनैवाभिमन्यन्ते[१]। एकेनैव क्षणेनास्य विश्वस्यापि काललवतत्क्षणानां च व्यापित्वमवगम्यते। कालेश्वरयोर्भेदत्वं शास्त्रवचनैरेव सिद्ध्यति।

### कालस्य प्रत्यक्षत्वम्

विशिष्टाद्वैतिनो भाट्टमीमांसकाश्च कालस्य प्रत्यक्षत्वं मन्यन्ते। विशिष्टाद्वैते कालः प्रत्यक्षागमाभ्यां सिद्ध्यति। नैयायिकाभिमतं कालस्यानुमेयत्वं विशिष्टाद्वैतिनो नाङ्गीकुर्वन्ति। कालस्य षडिन्द्रियवेद्यत्वेन प्रत्यक्षयोग्यता एव प्रमाणं भवति। 'इदानीं घटः, इदानीमत्र रक्तं रूपम्, इदानीं मधुरो रसः, इदानीं सुरभिर्गन्धः, इदानीमुष्णः स्पर्शः, इदानीं शब्दो मन्दः, इदानीं मे सुखमि'ति हरिजीवनदासेन कालस्य षडिन्द्रियवेद्यत्वं प्रतिपादितम्[२]। कालस्य षडिन्द्रियवेद्यत्वं लोके ह्यबाधितं प्रतीयत इति सार्वजनीनोऽनुभवः। वेदान्तदेशिकोऽपि कालानुमाननिरसनं करोति[३]। सर्वे प्रत्ययाः कालोपश्लिष्टा एव भवन्ति। केवलागममात्रत्वं कालस्य न भवति, अनुमानसिद्धत्वं तु एतस्य विशिष्टाद्वैते नास्त्येव[४]।

### कालस्य निमेषादिभेदाः

विष्णुपुराणे कालस्य निमेषादिभेदाः स्वीकृतास्सन्ति। तदनुसारं मानवस्य निमेष एव मात्रा, पञ्चदशनिमेषाणामेका काष्ठा, त्रिंशत्काष्ठानामेका कला, पञ्चदशकलानामेका नाडिका, द्वयोर्नाडिकयोरेको मुहूर्त्तः, त्रिंशन्मुहूर्त्तानामहोरात्रम्, त्रिंशदहोरात्रस्यैको मासः, द्वादशमासस्यैकं वर्षम्, तदेव देवानामहोरात्रमेकम्। एतादृशानामष्टत्रिंशद्वर्षाणामेकं दिव्यं वर्षं भवति[५]। मानमेयप्रकाशिकायामपि एकमात्रलघ्वक्षरोच्चारणक्रियोपलक्षितः कालो निमेषः, दिव्यैर्वर्षैर्द्वादश-

---

१. न्यायसिद्धाञ्जनम्, श्लो. १४, पृ. १३२।

२. मानमेयप्रकाशिका, पृ. २१०।

३. कालसम्बन्धरूपोऽयं परत्वादिरिति स्थिते। लिङ्गसिद्ध्यैव कालस्य प्रत्यक्षत्वमुपागतम्।।
(न्यायसिद्धाञ्जनम्, श्लो. २४, पृ. २१०)

४. अतोऽनुमानमात्रेण कालोऽन्यो नैव सिद्ध्यति। केवलागमसिद्धिश्च न लोकव्यवहार्यता।।
(तदेव, श्लो. २५, पृ. २१०)

५. विष्णुपुराणम्, ६।३।६-७,९-११।

सहस्रैश्चतुर्युगमिति प्रलिखितं कालस्य परिमाणम्[१]। कालस्य निमेषादिपरिणामा अधोलिखितास्सन्ति—

| | | |
|---|---|---|
| पञ्चदशनिमेषाः | — | एका काष्ठा |
| त्रिंशत् काष्ठाः | — | एका कला |
| त्रिंशत् कलाः | — | एको मुहूर्तः |
| त्रिंशद् मुहूर्ताः | — | एकं दिनम् |
| त्रिंशद् दिनानि | — | द्वौ पक्षौ, मास एको वा |
| द्वौ मासौ | — | ऋतुरेकः |
| ऋतवस्त्रयः | — | एकमयनम् |
| द्वे अयने | — | एकं वर्षम् |

ईदृशाः षष्ट्युत्तरत्रिंशन्मानववर्षाणामेकं दिव्यं वर्षं तथा च द्वादशसहस्रदिव्यवर्षाणां चतुर्युगमानम्[२]।

अनयैव रीत्या चतुर्युगमाननिरूपणमपि प्राप्यते—

चतुःसहस्रदिव्यवर्षकालिकं कृतयुगम्, त्रिसहस्रदिव्यवर्षयुक्तं त्रेतायुगम्, द्विसहस्रदिव्यवर्षात्मकं द्वापरयुगम्, एकसहस्रदिव्यवर्षात्मकं कलियुगस्य मानं च भवति। तत्र कृतयुगस्य पूर्वसन्ध्या चतुःशतमुत्तरसन्ध्यापि तावदेव, त्रेतायुगस्य पूर्वसन्ध्या त्रिशतं तावदेवोत्तरसन्ध्यापि, द्वापरस्य पूर्वसन्ध्या द्विशतं चोत्तरसन्ध्यापि द्विशतमेव, कलेः पूर्वसन्ध्या एकं शतम्, उत्तरसन्ध्यापि तावदेव भवति। एवं चतुर्युगैकसप्ततिरेकैकस्य मनोः कालः, तथा च चतुर्दशमन्वन्तरस्य ब्रह्मणः दिनमेकं तावती च रात्रिरपि भवति। एतादृशमहोरात्रप्रमाणेन अयनसंवत्सरादिक्रमेण ब्रह्मा शतायुर्भवति। अत एव तस्यायुः परमं कथ्यते। ब्रह्मणः शतवर्षार्द्धभागः परार्द्धो भवति, तस्माद् द्विपरार्द्धकालो ब्रह्मायुर्भवति[३]।

'एकं शतं शतमस्मात्सहस्रमयुतं ततः परं लक्षं
प्रयुतं कोटिमथार्बुदमब्जं सर्वं ततो निखर्वं च।
तस्मान्महासरोजं शङ्कुं सरितां पतिं ततश्चान्त्यं
मध्यं परार्द्धमाहुर्यथोत्तरं दशगुणं हि वै तज्ज्ञाः।।

१. मानमेयप्रकाशिका, पृ. २११।
२. तत्त्वत्रये, मध्यवीथीभट्टार्यकृतवार्त्तामाला, पृ. १९३।
३. मानमेयप्रकाशिका, पृ. २१२।

इति मानमेयप्रकाशिकायामेवं कालपरिमाणमुद्धृतमस्ति[1]। विष्णुपुराणेऽपि परार्द्धमानमित्थं प्रदर्शितम्—

स्थानात्स्थानं दशगुणमेकस्माद् गण्यते द्विज।
ततोऽष्टादशमे भागे परार्द्धमभिधीयते[2]।।

ब्रह्मणोऽह्नि चतुर्दश मनवः। तथेन्द्रास्सप्तर्षयश्च। एकैकमनोरेकसप्तति-चतुर्युगपरिमाणकालः। एवं ब्रह्ममानेन ब्रह्मणश्शतवर्षजीवित्वमिति यतीन्द्रमतदीपिकायां ब्रह्मायुः प्रदर्शितं विद्यते[3]। कालस्यैतद्विभागो विशिष्टाद्वैतिनां विशेषेण सम्मतः, एष त्वन्येषु भारतीयदर्शनेषु विस्तरेण निर्दिष्टो नास्ति।

**कालस्य भगवद्विभूतिमत्त्वम्**

काल एवानन्तपरिणामविशेषैः आब्रह्मस्तम्बपर्यन्तानां वस्तूनामुत्पत्तिस्थिति-विनाशकारणम्। अयमेवेश्वरस्य लीलाविभूतौ सृष्ट्यादिकार्यजातानां साधनीभूतं द्रव्यं चास्ति। सर्वशक्तिमान् ईश्वरोऽपि कालमपेक्ष्यैव प्राकृतसृष्ट्यादिकार्याणां कर्त्ता भवति।

परमेशस्य सृष्टिस्थितिसंहाररूपकार्याणां सम्पादने कालस्य शक्तिरूपत्वं स्पष्टमेव सिद्ध्यति। ईश्वरीयविभूतिरूपः कालः परमात्मनः शक्तित्वेन सृष्ट्यादौ साधनं भवति[4]। सर्वे जीवधारिणः सर्वकारणमीश्वरश्च कालाधीना एव सिद्ध्यन्ति।

परमात्मा नित्यविभूतौ यदा स्वातन्त्र्येण कार्यं करोति, तदा काल ईश्वराधीनं भवति। अनेनैव कालस्येश्वरभिन्नत्वमपि सिद्धं भवति। विशिष्टाद्वैतिनः कालस्योपर्यपि परमात्मनो नियन्तृत्वं स्वीकुर्वन्ति[5]। वासुदेवमाहात्म्येऽपि चतुर्विधप्रलयान् परमात्मनः कालशक्त्या एवोपपन्नान् मन्यते[6]। सत्सङ्गिजीवनेऽपि चतुर्विधं प्रलयं कालशक्त्या प्रसूतं मन्यते[7]।

इत्थं कालस्य भगवद्विभूतिमत्त्वं विशिष्टाद्वैतिभिः सम्यक् साध्यते। भारतीयदर्शनेषु कालस्य एतादृशो विचारो विशिष्टाद्वैतिनां मत एवोपलभ्यते। अतः सर्वानुभवसिद्धः कालः प्रत्यक्षं भवतु, आनुमानिकमागमिकं वा भवतु, एतत्तु परमं तत्त्वमेवेत्यलम्।

●

१. मानमेयप्रकाशिका, पृ. २१२; २. विष्णुपुराणम्, ६।३।४।
३. यतीन्द्रमतदीपिका, पृ. १०२; ४. सत्सङ्गिजीवनम्, १।३४।१४।
५. हरिवाक्यसुधासिन्धुः, तरङ्गः १२५, श्लो. ३६।
६. वासुदेवमाहात्म्यम्, अ. २५, श्लो. ४,६० एवं ६१।
७. सत्सङ्गिजीवनम्, १।३५।७-९।

# आचार्यबदरीनाथशुक्लाभिमतनव्यदेहात्मवादपरीक्षणम्

**डॉ. राजारामशुक्लः**
वरिष्ठप्राध्यापकः
न्यायवैशेषिकविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

वन्दे तान् परमोदारान् तार्किकाग्रेसरान् गुरून्।
वेदाविरुद्धमर्थं ये तर्केण प्रत्यपीपदन्।।

भारतीयदर्शनानां मुख्यं प्रतिपाद्यं खल्वात्मतत्त्वम्। सर्वैरप्याचार्यैः शाश्वततत्त्वेनात्मतत्त्वं महत्याऽऽस्थया समाद्रितम्। तच्चैतद् बोध्यते भगवत्या श्रुत्याऽपि 'अविनाशी वा अरे अयमात्मा', 'अशरीरं वा वसन्तम्' इत्यादिना, स्मृत्या चापि समर्थितम्—'अजो नित्यः शाश्वतोऽयं पुराणो' 'न हन्यते हन्यमाने शरीरे' इत्यादिभिर्वचनरत्नैः। शरीराद्यतिरिक्तत्वमात्मनः प्रतिपादयितुं प्रवृत्तैराचार्यैः शरीरमात्मेति कश्चन पूर्वपक्षः खण्डनायोपस्थापितः खण्डितश्चेति विदितमेव। सोऽयं पक्षश्चार्वाकमतमिति नाम्ना प्रसिद्धिं गत इति वदन्ति।

अयमसौ कश्चन पूर्वापेक्षया विलक्षणो देहात्मवाद आचार्यबदरीनाथ-शुक्लमहोदयैः प्रतिपादितः[१] इदानीं नव्यदेहात्मवाद इत्याख्यया प्रसिद्धिं गतोऽपि नाधिकं परिशीलितः समाद्रितो वा विद्वद्भिः। देह आत्मा इति शब्दश्रवणमात्रेण कोऽपि जुगुप्साभावः समुदेति विदुषां चेतसीत्यतो वोपेक्षितः। श्रुतौ शरीराति-रिक्तस्यैवात्मनः प्रतिपादितत्वेन तत्प्रामाण्यरक्षाहेतुभूतस्य न्यायशास्त्रस्यापि[२] तत्रैव

---

१. 'न्यायशास्त्रीयविचारपद्धत्या देहात्मवादस्य सम्भाव्यता' इति शीर्षकान्वितः शुक्लमहोदयानां प्रबन्धः सारस्वत्यां सुषमायां प्रकाशितः, सारनाथे न्यायपरिचर्चायां विचारितश्च।

२. न्यायविस्तरस्तु मूलस्तम्भः सर्वविद्यानां वेदप्रामाण्यरक्षाहेतुत्वात्—न्यायमञ्जरी।

निर्भरः। सूत्रभाष्यादिष्वपि महता प्रबन्धेन शरीराद्यतिरिक्तत्वेनैवात्मा प्रतिपादितः। अतो न्यायशास्त्रे देहात्मवादस्य सम्भावनान्वेषणं साहसमात्रम्।

किन्तु न्यायशास्त्रीया या तार्किकी पद्धतिर्यत्र युक्तीनां महत्त्वमस्ति, तया पद्धत्या देहात्मवादव्यवस्थापनं सम्भवति न वेति विचारपरैः शुक्लमहाशयैः प्रयासोऽयं विहितः। यद्यपि तर्केणाप्यतिरिक्त एवात्मा साधितस्तार्किकैस्तथापि युक्तीनां निरवधित्वेन 'अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते' इति न्यायेन शुक्लमहाशयैः काश्चन युक्तयः प्रस्तुताः। एतद्युक्तिबलेन शरीरात्मवादे समागतानां केषाञ्चनाक्षेपाणां समाधने तैः प्रवृत्तं न पुनस्तद्विरोधिश्रुतिवाक्यसङ्गमने आत्मा व्यापारितः।

एतद्विचारक्रमे न्यायशास्त्रीयसिद्धान्तान् परिरक्षितुमपि यथासम्भवं तैः प्रयतितम्। क्वचित्तु पुनः गत्यन्तरविरहेण ते सिद्धान्ता अनादृता अपि। अतः सर्वात्मनाऽयं वादो न्यायसिद्धान्ताविरोधीति वक्तुमशक्यम्। किन्त्वैतत्परिशीलनेनेदन्तु निश्चप्रचं यदयं वादः पूर्वविलक्षणो युक्तिमात्राश्रितश्च। अतः सिद्धान्तं व्यवस्थापयितुमिच्छद्भिरप्येतासां युक्तीनां परीक्षणमेव करणीयं तत्रैव च विप्रतिपत्तयः प्रदर्शनीयाः। परीक्षायामस्यामुभयपक्षतो बहु विवेचयितुं शक्यम्। अत्र तु पुनः सङ्क्षेपेण किञ्चिदेव प्रस्तूयते।

आत्मा नातिरिक्तद्रव्यं देहमनोभ्यामेव तत्साधनीयस्य निखिलप्रयोजनस्य निर्वर्तयितुं शक्यत्वादिति हि तेषां प्रतिज्ञावाक्यम्। यद्यपि देहात्मवादो मन आत्मवाद इति वादद्वयमपि प्रायः सर्वेषु वैदिकदर्शनेषु पूर्वपक्षित्वेन चर्चितं सयुक्ति खण्डितञ्च, तथाऽप्ययं ततो विलक्षणः कश्चिद् देहात्मवादः शुक्लमहोदयैरुपस्थापितो यत्र मनोऽधिष्ठितस्य शरीरस्यात्मत्वं व्यवस्थापितम्।

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराख्या नव गुणा ये नैयायिकैरात्मविशेषगुणत्वेन स्वीकृतास्तेषामत्र द्विधा विभागः कृतः— योग्यगुणा अयोग्यगुणाश्चेति। तत्र बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना योग्यास्ते च शरीरगुणाः। एवं धर्माधर्मभावना अयोग्या मनसो गुणाः। ज्ञानादीनां मनोगुणत्वे मनसोऽणुत्वेनाप्रत्यक्षतया तेषामप्यप्रत्यक्षतापत्तेः। तथैव धर्माधर्मादीनां देहगुणत्वे तेषां प्रत्यक्षतापत्तेः। अत ईदृशो विभागस्तैः स्वीकृतः।

अत्र ज्ञानादीनां देहगुणत्वे तैरयमाक्षेपः प्रस्तावितः—पार्थिवविशेषगुणानां द्विविधोत्पत्तिर्दृष्टा—कारणगतैः सजातीयगुणैः, यथा कपालरूपाद् घटरूपोत्पत्तिः, एवं पाकेन, यथा वैशेषिकनये परमाणुरूपं न्यायनये च घटादेरपि। तत्र देहे बुद्ध्यादिगुणस्वीकारे कारणगतैः सजातीयगुणैस्तदुत्पत्तिः स्वीकरणीया। तथात्वे

देहावयवेष्वपि बुद्ध्यादि स्वीकरणीयं भवेत्। तच्च देहावयवानां जडतया न सम्भवति[१]। अतो देहे बुद्ध्याद्युत्पत्तिर्न सम्भवति। नापि पाकेन तत्र बुद्ध्याद्युत्पत्तिः, यतो हि पाकजगुणाः सजातीयगुणध्वंसपूर्वका दृष्टाः। यथा घटे पाकजं रूपं श्यामरूपनाशपूर्वकं, तत्सत्त्वे तदनुत्पत्तेः। तच्च बुद्ध्यादेर्दुर्घटम्। इत्थमाशङ्क्य तैर्बुद्ध्यादीनां देहस्य सामान्यगुणत्वमङ्गीकृत्य दोषोऽयं वारितः। तथा हि पृथिव्याः सामान्यगुणानामुत्पत्तावरवयवगतसजातीयगुणानां पाकस्य वाऽपेक्षा नास्तीति देहे संख्यादेरिव बुद्ध्यादेरपि प्रकारान्तरेणोत्पत्तिः सम्भवत्येवेति।

अत्रेयमाशङ्का स्यात्—सामान्यगुणा अवयवगतसजातीयगुणसापेक्षा न भवन्तीत्युक्तम्। न चैतद्युक्तम्, घटपरिमाणस्य कपालपरिमाणजन्यत्वदर्शनात्। एवमेव शरीरपुस्तकसंयोगः करपुस्तकसंयोगजन्यः, घटगतगुरुत्वं कपालगतगुरुत्वजन्यमित्येवमादि[२]।

अत्र तेषामयमाशयः स्यात्—नह्यस्माभिः सामान्यगुणानां कारणगुणजन्यत्वं निषिध्यते, अपि तु पार्थिवविशेषगुणानामवयवगतसजातीयगुणजन्यत्वं नियम्यते। तथा च यत्र यत्र सामान्यगुणत्वं तत्र तत्रावयवगुणजन्यत्वमिति न व्याप्तिः, द्वित्वसंयोगादौ व्यभिचारात्[३]। किन्तु यत्र यत्र पार्थिवविशेषगुणत्वं तत्र तत्र पाकावयवगुणान्यतरजन्यत्वमिति व्याप्तिरस्त्येव। तथा च बुद्ध्यादेः पार्थिवविशेषगुणत्वस्वीकारे उक्तव्याप्तिर्व्यभिचरिता स्यादतस्तेषां सामान्यगुणत्वाङ्गीकारः।

ततस्तैर्बुद्ध्यादेः शरीरस्य सामान्यगुणत्वाभ्युपगमे रूपादीनामिव[४] यावच्छरीरभावित्वमापादितम्। परिमाणादयः सामान्यगुणा यावद् द्रव्यभाविनो दृष्टाः, बुद्ध्यादयोऽपि चेत् सामान्यगुणाः, यावद् द्रव्यभाविनः स्युः। न चैवमस्ति, शरीरे विद्यमानेऽपि ज्ञानादेर्निवृत्तिदर्शनात्। तेषां विशेषगुणत्वाभ्युपगमे तु नेयमापत्तिः, शब्दो विशेषगुणोऽयावद् द्रव्यभावी दृष्टस्तथैव ज्ञानादिकमपीति। ततस्ते

---

१. किन्नाम जडत्वं? कुतश्च तद् देहावयवेष्वस्ति? अवयविनि देहे च नास्तीत्यादिकं तैः किमपि न स्पष्टीकृतम्।

२. अपाकजास्तु स्पर्शान्ता द्रवत्वञ्च तथाविधम्।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम्।।
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः।। (कारि., का.सं. ९५-९६)

३. द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः।। (कारि., का.सं. १०७)
संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः।। (कारि., का.सं. ९७)

४. अत्र परिमाणादीनामिवेति वक्तव्यमासीत्, रूपस्य विशेषगुणत्वात्। अथवैतन्मते रूपत्वेन रूपं न विशेषगुणः। स्पष्टमेतदग्रे।

समादधति—शरीरगतानां संयोगादिसामान्यगुणानामिव तद्‌गतानां बुद्ध्यादि-सामान्यगुणानामपि शरीरसत्त्वे निवृत्तिसम्भवात्। तथा च सामान्यगुणत्व-यावद्‌द्रव्यभावित्वयोर्न व्याप्तिः संयोगादौ व्यभिचारादिति भावः।

अत्रेयं विप्रतिपत्तिः—न हि संयोगो व्यभिचारिदृष्टान्तत्वेनोपस्थापयितुं शक्यः, संयोगत्वेन संयोगस्य यावद्‌द्रव्यभावित्वमस्त्येव। अयावद्‌द्रव्यभावित्वं तु तत्तत्संयोगत्वेन, द्रव्ये संयोगसामान्याभावे मानाभावात्[1]। शरीरे विद्यमानेऽपि यथा ज्ञानसामान्याभावः स्थातुं शक्नोति तथा संयोगसामान्याभावो न स्थातुं शक्नोति, पूर्वदेशसंयोगे नष्टेऽप्युत्तरदेशसंयोगस्य सत्त्वात्। अत एव रूपस्य यावद्-द्रव्यभावित्वकथनं सङ्गच्छते श्यामरूपनाशेऽपि रूपान्तरोत्पत्ते रूपसामान्या-भावस्यासत्त्वात्। कथमन्यथा पाकजरूपस्यायावद्‌द्रव्यभावित्वेऽपि[2] रूपादी-नामिवेत्यादिना रूपस्य यावद्‌द्रव्यभावित्वकथनं सङ्गच्छेत।

वस्तुतस्तु स्वसमवेतत्वे सति स्वसमानकालीनध्वंसप्रतियोगित्वमयावद्-द्रव्यभावित्वम्। तच्च तत्संयोगव्यक्तेरेव। न तु तादृशप्रतियोगितावच्छेदकजातिमत्त्वं तादृशप्रतियोगितासमानाधिकरणगुणत्वव्याप्यजातिमत्त्वं वा, अन्यथा तत्तत्संयोग-व्यक्तिवृत्तितादृशप्रतियोगितासमानाधिकरणगुणत्वव्याप्यसंयोगत्वजातिमत्त्वेन संयोग-त्वावच्छिन्नस्यायावद्‌द्रव्यभावित्वोपपत्तावपि पाकजरूपनिष्ठतादृशप्रतियोगिता-समानाधिकरणगुणत्वव्याप्यरूपत्वजातिमतोऽपाकजरूपस्य, तद्वदेव नैमित्तिकद्रवत्व-वृत्तितादृशप्रतियोगितासमानाधिकरणगुणत्वव्याप्यद्रवत्वत्वजातिमतः सांसिद्धिक-द्रवत्वस्यापि यावद्‌द्रव्यभावित्वं न स्यात्। अत एव यत्र घटविशेषे रूपान्तरोत्पत्तिरेव न जाता तत्र पाकजमपि रूपं यावद्‌द्रव्यभाव्येव वक्तव्यम्। तथापि वेगनैमित्तिकद्रवत्वादयो व्यभिचारिदृष्टान्तत्वेनोपादातुं शक्यन्त एव।

किञ्चास्तु तावदेवम्, तथापि शरीरे ज्ञानसामान्याभावसम्भवेन तत्र शरीरत्वव्यवहारेऽप्यात्मत्वव्यवहारो नोपपद्यते। न च समानो दोषः, मोक्षदशायां भवताऽपि ज्ञानसामान्याभाववत्त्वस्यात्मनि स्वीकारादिति वाच्यम्, न ह्यस्माकं ज्ञानवत्त्वेनात्मत्वप्रत्ययोऽपि तु ज्ञानसामान्याभावानधिकरणत्वेन ज्ञानसमानाधि-करणद्रव्यत्वव्याप्यजातिमत्त्वेन वा। तादृशस्य धर्मस्य मोक्षकालावच्छिन्नात्मन्यपि सत्त्वान्नास्माकमापत्तिः। शरीरत्वजातिमादाय भवता तथा स्वीकारे तु मृतशरीरे व्यभिचारः स्यादेव, मृतशरीरे आत्मत्वप्रतीतेर्भवताऽप्यसम्मतत्वात्। तस्मादगत्या

१. सिद्धान्तलक्षणदीधितिः।
२. प्रशस्तपादभाष्यम्, पृ. २४९।

ज्ञानावच्छिन्नत्वेनैव शरीरस्यात्मत्वं वक्तव्यं न तु शरीरत्वेन। तथा च ज्ञानावच्छिन्नशरीरे ज्ञानस्य यावद् द्रव्यभावित्वमस्त्येवेति तदापाद्य तन्निरसनप्रयासो व्यर्थ एव।

वस्तुतस्त्वेतन्नये मनो धिष्ठितशरीरस्यैवात्मत्वेन तादृशे शरीरे ज्ञान-सामान्याभावो नास्त्येव। अथवा त्वक्संयुक्तमनो धिष्ठितं शरीरं ज्ञानाश्रयमिति, तेन सुषुप्तिकालेऽपि नापत्तिः।

यदि च ज्ञानव्यक्तिरिव न काऽपि संयोगव्यक्तिर्यावच्छरीरं तिष्ठतीति[1] युक्त एव संयोगस्य व्यभिचारिदृष्टान्ततयोपन्यास इत्युच्यते, तदाऽपि रूपस्य दृष्टान्त-त्वेनोल्लेखो न युक्तः, पाकजरूपस्य सति द्रव्ये निवृत्तिदर्शनादिति।

ज्ञानादीनां विशेषगुणत्वाभावे प्रमाणान्तरं प्रस्तुवद्भिस्तैस्तेषां विशेषगुण-लक्षणानाक्रान्तत्वमुच्यते। विशेषगुणलक्षणं हि — द्रव्यविभाजकोपाधिविशिष्ट-जातिमद्गुणत्वमिति[2]। वैशिष्ट्यञ्च स्वाश्रयवृत्तितावच्छेदकत्वस्वानाश्रयवृत्तितान-वच्छेदकत्वोभयसम्बन्धेन। गन्धस्य पृथ्वीविशेषगुणत्वं यथा—द्रव्यविभाजकोपाधिः पृथ्वीत्वं, तद्विशिष्टा जातिर्गन्धत्वं, तत्र स्वाश्रयपृथ्वीवृत्तितावच्छेदकत्वस्य स्वानाश्रयजलवृत्तितानवच्छेदकत्वस्य च सत्त्वात्। तद्वत्त्वस्य च गन्धे सत्त्वाल्लक्षणसमन्वयः।

अत्र द्रव्यविभाजकोपाधिवैशिष्ट्यस्योक्तोभयसम्बन्धेन गुणत्वव्याप्यजातावेव सम्भवात् लक्षणे गुणत्वप्रवेशोऽनावश्यकः। यदि च तिर्यग्गमनं वायुमात्रनिष्ठं तदा तिर्यग्गमनत्वरूपजातिमादाय तत्र वायुत्ववैशिष्ट्यस्य सत्त्वेन तदाश्रयस्य तिर्यग्गमनस्यापि विशेषगुणत्वापत्तिवारणाय तद्देयमेव। अथवा स्वाश्रयकपालादि-वृत्तितावच्छेदकघटत्वादिजातिमादायातिव्याप्तिवारणाय तदावश्यकमिति। किन्तु वैशिष्ट्यनियामकद्वितीयसम्बन्धेनैव निर्वाहे स्वाश्रयवृत्तितावच्छेदकत्वसम्बन्धः किमभिप्रायेणेति विचार्यमेव।

एवं द्रव्यविभाजकजात्युक्तावाकाशत्वस्यापरिग्रहे शब्दस्य लक्षणाक्रान्तत्वं न स्यादत उपाधिपदम्। तादृशोपाधिविशिष्टोपाधिनिवेशे पृथ्वीत्वविशिष्टोपाधिपदेन गन्धसंयोगोभयत्वस्यापि परिग्रहे तद्वत्त्वेन तादृशोभयत्वावच्छिन्नस्य, संयोगस्यापि वा विशेषगुणत्वप्रसक्तिरित्यतो जातिनिवेशः। अतीतानागतगन्धादेरपि विशेषगुणत्व-व्यवहारसम्पत्तये जातिपर्यन्तानुधावनम्। अन्यथा स्वाश्रयवृत्तित्वस्वानाश्रया-

---

१. शरीराकाशसंयोगविषये चिन्तनीयम्; २. तादृशजातिमत्त्वे सति गुणत्वमित्यर्थः।

वृत्तित्वोभयसम्बन्धेन द्रव्यविभाजकोपाधिविशिष्टत्वे सति गुणत्वमित्येवालम्। प्रथमसम्बन्धमात्रोक्तौ संयोगादेरपि पृथ्वीत्वादिविशिष्टत्वसम्भवेन संयोगस्य विशेषगुणत्वापत्तिरतस्तन्निवेशः।

अस्तु, एतल्लक्षणानुसारं रूपत्वेन रूपं रसत्वेन रसो वा न विशेषगुणो लक्षणागमनात्। तादृशोपाधिविशिष्टजातिपदेन रूपत्वादिपरिग्रहो न सम्भवति स्वानाश्रयजलादिवृत्तितानवच्छेदकत्वाभावात्; अपि तु रूपत्वव्याप्यनीलत्वादिकम्, अनुष्णाशीतस्पर्शत्वव्याप्यपाकजन्यतावच्छेदकं वैजात्यम्, अभास्वरशुक्लत्व-व्याप्यपाकजन्यतावच्छेदकं वैजात्यम्, मधुरत्वव्याप्यपाकजन्यतावच्छेदकं वैजात्यञ्च पृथ्वीत्वविशिष्टजातिपदेन धर्तव्यम्। तथा च— तादृशजात्याश्रया गन्धादयः पृथिव्या विशेषगुणाः। एवमेव शीतस्पर्श-स्नेह-सांसिद्धिकद्रवत्व-अपाकजमधुरादयो जलविशेषगुणाः। उष्णस्पर्श-भास्वरशुक्लादयस्तेजोविशेषगुणाः। अपाक-जानुष्णाशीतस्पर्शो वायुविशेषगुणः। शब्दो नभोविशेषगुण इत्येवं रीत्या विशेषगुणव्यवस्था।

अत्रायं विशेषो यद् धर्माधर्मभावना मनोमात्रनिष्ठा इति ते मनसो विशेषगुणा अङ्गीकृताः। बुद्ध्यादयस्तु शरीरनिष्ठा न ते विशेषगुणाः। तथा हि द्रव्यविभाजकोपाधिपदेन पृथ्वीत्वस्य परिग्रहे तदाश्रयवृत्तितावच्छेदकत्वस्य ज्ञानत्वादौ सत्त्वेऽपि स्वानाश्रयजलीयतैजसादिशरीरवृत्तितावच्छेदकत्वस्यैव ज्ञानत्वादौ सत्त्वाद् द्वितीयसम्बन्धाभावेन ज्ञानत्वादेर्न पृथ्वीत्वादिवैशिष्ट्यमिति तदाश्रयस्य ज्ञानादेर्न विशेषगुणत्वमिति।

अत्रेदं विचारणीयम्—पार्थिवविशेषगुणेषु तैः पाकजानुष्णाशीत-स्पर्शस्योल्लेखः कृतः, किन्तूक्तलक्षणानुसारं पाकजस्पर्श एवालम्, तत्रानुष्णा-शीतत्वविशेषणमनावश्यकम्। तथैव पाकजाभास्वरशुक्लं पार्थिवविशेषगुण इत्युक्तं, तत्रापि पाकजशुक्लमेवालम्। पाकजरूपमित्येव वास्तु। एवं पाकजरसत्वापाकज-रसत्वाभ्यामपि च विशेषगुणत्वोपपत्तिः सम्भवति।

पाकजानुष्णाशीतस्पर्शत्वादीनां जातित्वमस्ति न वेत्यपि विचार्यमेव[1]। यदि च तन्तुद्वयसंयोगत्वादिकमपि[2] जातिस्तदा तस्या अपि निरुक्तोभयसम्बन्धेन पृथ्वीत्व-विशिष्टतया तदाश्रयस्य तादृशसंयोगादेरपि विशेषगुणत्वापत्तिः। विजातीयेनैव

---

१. विजातीयस्पर्शजनकतावच्छेदकतया वायुत्वजातिः साध्यते—मुक्ता. का.सं. ४२।

२. तूलकादिपरिमाणजनकतावच्छेदकं प्रचयत्वमपि बोध्यम्।

तन्तुद्वयसंयोगेन पटोत्पत्तेः पटासमवायिजनकतावच्छेदिकायास्तन्तुद्वयसंयोगत्व-जातेरङ्गीकारे बाधकाभावात्।

एवमपाकजानुष्णाशीतस्पर्शो वायुविशेषगुण इत्युक्तम्। किन्तु तादृश-जातेर्वायुत्ववैशिष्ट्यं न सम्भवति, वायुत्वानधिकरणे पटादावप्यपाकजस्यैवा-नुष्णाशीतस्पर्शस्य सत्त्वात् पटे पाकासम्भवात्। अत एव 'अपाकजोऽनुष्णा-शीतस्पर्शस्तु पवने मतः'[1] इत्यत्रापाकजानुष्णाशीतस्पर्शवत्त्वमात्रे लक्षणे कृते पटादावतिव्याप्तिमाशङ्क्य 'अपाकजानुष्णाशीतस्पर्शवन्मात्रवृत्तिद्रव्यत्वसाक्षाद्-व्याप्यजातिमत्त्वं', 'पाकजस्पर्शवदवृत्त्यनुष्णाशीतस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्-व्याप्यजातिमत्त्वं' वा तदर्थः कृतः[2]। पार्थिवपरमाणुमात्रे पाकसम्भवेन पटीय-परमाणुरूपस्य पाकजत्वात् तेन तज्जन्यपटरूपस्यापि पाकजत्वं (पाकप्रयोज्यत्वं) निर्वहतीत्यप्याहुः।

एवं ज्ञानस्य पृथ्वीत्वाश्रय-पृथ्वीत्वानाश्रयोभयविधशरीरवृत्तित्वान्न विशेष-गुणत्वमित्युक्तम्। तत्रापि विचार्यम्—पार्थिवजलीयादिषु सर्वेषु शरीरेष्वेकजातीयमेव ज्ञानमुत विजातीयम्? विजातीयञ्चेद्, ज्ञानादीनामपि विशेषगुणलक्षणा-क्रान्तत्वमस्त्येवेति।

ततस्तैर्बुद्ध्यादीनां शरीरगुणत्वे बहिरिन्द्रियग्राह्यत्वमापाद्य बहिर्द्रव्यगुण-ग्राहकेन्द्रियत्वं बहिरिन्द्रियत्वमिति स्वीकृत्य मनसो बाह्यशरीरगुणग्राहकतया बहिरिन्द्रियत्वमेवेति स्वीकृतम्। शरीरान्तर्वर्तमानत्वाच्चान्तरिन्द्रियत्वव्यपदेशः। अथवा ज्ञानादीनां शरीरान्तर्भागावच्छेदेन वृत्तेस्तद्ग्रहणार्थमन्तरिन्द्रियस्यैवापेक्षा। बहिर्भागावच्छेदेन विद्यमानानां गुणानां बाह्येन्द्रियग्राह्यत्वनियमः।

अत्रेदं विचार्यं परिमाणादिव्याप्यवृत्तिगुणानां सर्वावयवावच्छेदेन वृत्तेस्तेषां किमिन्द्रियेण प्रत्यक्षं स्यात्? शरीरान्तर्भाविरूपरसादीनां मानसत्वञ्च कुतो न स्यादिति?

शरीरगुणानां रूपादीनां स्वीय-तदितरोभयेन्द्रियग्राह्यत्वमिव ज्ञानादीनामपि शरीरगुणत्वे स्वावच्छिन्नमनसेवान्यमनसाऽपि ग्रहणं स्यादित्यापाद्य तैरित्थं समाधीयते—इन्द्रियाणां सन्निकृष्टग्राह्यत्वनियमः। अन्यशरीरस्था रूपादयोऽ-न्येन्द्रियेण सन्निकृष्टाः सन्तो गृह्यन्ते न त्वसन्निकृष्टाः। किन्त्वेकशरीरान्तःस्था-ज्ञानादयोऽन्यशरीरस्थेनाणुना मनसा न सन्निकृष्टा इति न तेन गृह्यन्त इति।

---

१. कारि., का. ४२; २. तत्रैव दिनकर्याम्।

बाल्येऽनुभूतस्य स्थावरे स्मरणानुपपत्तिः, चैत्रेणानुभूतस्य मैत्रेण स्मरणापत्तिश्च तैरित्थं वार्यते—शरीरगतानुभवजन्यसंस्कारो मनस्युत्पद्यते, संस्कारं प्रत्यनुभवस्य स्वाश्रयविजातीयसंयोगसम्बन्धेन कारणत्वस्वीकारात्। तथा च बालवृद्धयोः शरीरभेदेऽप्युभयत्रैकस्यैव नित्यस्य मनसः सत्त्वेन तद्गतसंस्कारवशाद् वृद्धशरीरे स्मरणं सम्भवत्येव। स्मरणं प्रति संस्कारस्यापि स्वाश्रयविजातीय-संयोगसम्बन्धेन कारणत्वाङ्गीकारेण मनोनिष्ठसंस्कारेण वृद्धशरीरे स्मृतिसम्भवात्। अत एव चैत्रेणानुभूतस्य मैत्रेण स्मरणापत्तिरपि न, चैत्रीयानुभवजन्यसंस्कारवन्मनो-विजातीयसंयोगस्य मैत्रशरीरेऽभावादिति। बालकस्य स्तन्यपाने प्रवृत्तिरपि तत उपपद्यते। संयोगे वैजात्यकथनेन मनःसंयोगस्य शरीरेणेवेन्द्रियेण घटादिनाऽपि वा सम्भवेऽपि तत्र विजातीयसंयोगस्याभावेनेन्द्रियादौ न स्मृत्युत्पत्त्यापत्तिः।

अनुभवसंस्कारयोः संस्कारस्मरणयोश्चायं कार्यकारणभावोऽतिरिक्तात्म-वादीयकार्यकारणभावापेक्षया गुरुतरस्तत्रोभयत्र समवायसम्बन्धस्यैव कारणतावच्छेद-कत्वात्।

यद्यपि शङ्केयं तैरित्थं वार्यते यत् क्लृप्तपदार्थाश्रयणेनैव लघुगुरु-कार्यकारणभावोपस्थितौ लघुकार्यकारणभावस्यादरादिति, तथापि नैतदति-रिक्तात्मस्वीकारे युक्तितयोपन्यस्तम्। किन्तु प्रमाणान्तरैरतिरिक्तात्मसिद्धौ संस्कारोत्पत्तिर्मनस्यात्मनि वा कुत्र स्वीकरणीया? इति प्रश्ने लाघवगौरवचर्चेयम्।

स्वपक्षसमर्थने तैः 'इच्छाद्वेषसुखदुःखज्ञानान्यात्मनो लिङ्गम्'[१] इति गौतमीयं सूत्रं प्रमाणत्वेन प्रस्तुतम्। ज्ञानेच्छाद्वेषसुखदुःखप्रयत्ना यत्र वर्तन्ते तत्रैवात्मत्वव्यवहार इति सूत्रार्थस्तैर्गृहीतः। तथा च तादृशगुणानामेतन्नये शरीरवृत्तितया तत्रात्मत्वव्यवहारः सूत्रसम्मतः। सूत्रे धर्माधर्मसंस्काराणामनुल्लेखान्न त आत्मगुणा इति।

किन्तु सूत्र इच्छादय आत्मलिङ्गत्वेनोक्ता न तु त एवात्मगुणा इति। शब्दस्याकाशलिङ्गत्वे न हि सङ्ख्यादय आकाशगुणा नेति वक्तुं युज्यते। तस्माद् धर्माधर्मादीनामनात्मगुणत्वं सूत्रसम्मतमिति वचो न युक्तम्। धर्मादीनामतीन्द्रियत्वेन न तेषां लिङ्गत्वेन सूत्रे व्यपदेशः।

शेषमखिलमतिरिक्तात्मवादतुल्यं यथाकथञ्चिदुपपादितं वेति न तत्राधिकं विचार्यते। सारांशतो बुद्ध्यादीनां शरीरस्य सामान्यगुणत्वाङ्गीकार एव मुख्यं बलमस्य वादस्य।

---

१. सू.सं. १-१-१०।

अथेदमत्र किञ्चिदवधातव्यम्—बुद्ध्यादयो न सामान्यगुणाश्चक्षुरग्राह्यत्वे सति योग्यगुणत्वाद् रसवदित्यनुमानेन बुद्ध्यादीनां सामान्यगुणत्वाभावः सिध्यति। एवमपि ज्ञानादयो विशेषगुणा एकेन्द्रियग्राह्यत्वे सति गुणत्वाद् रूपवत्। योग्यसामान्यगुणानां द्वीन्द्रियग्राह्यत्वं दृष्टं यथा संख्यादेः। यद्यपि द्वीन्द्रियग्राह्यस्याप्येकेन्द्रियग्राह्यत्वमक्षतं तथाप्येकमात्रेन्द्रियग्राह्यत्वमिति वक्तव्यम्। अथवा द्वीन्द्रियाग्राह्यत्वे सति योग्यगुणत्वं हेतुर्वाच्यः। एवं बुद्ध्यादीनां विशेषगुणत्वे सिद्धे— बुद्ध्यादयो न भूतविशेषगुणा बहिरिन्द्रियाग्राह्यत्वाद्, रूपं व्यतिरेकदृष्टान्तः। यद्यपि भूतविशेषगुणे परमाणुरूपादौ बहिरिन्द्रियग्राह्यत्वं नास्ति, तथापि बहिरिन्द्रियग्राह्यत्वसमानाधिकरणगुणत्वव्याप्यजात्यभावस्य हेतुत्वे दोषाभावः।

यदि देहात्मवादोक्तरीत्या मनसोऽपि बहिरिन्द्रियत्वं स्वीक्रियते, तदा— बुद्ध्यादयो न पृथिव्यादिचतुष्टयविशेषगुणा अवयवगुणारम्भकत्वसमानाधिकरण-गुणत्वव्याप्यजात्यभावाच्छब्दवत्, अथवा बुद्ध्यादयो न स्पर्शवद्विशेषगुणा अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वाच्छब्द-वदित्याद्यनुमानैस्तेषां पृथिव्यादिचतुष्टयविशेषगुणत्वाभावे सिद्धे नाप्याकाश-विशेषगुणाः श्रोत्राग्राह्यत्वाद्रूपवत्, नापि दिक्कालगुणा विशेषगुणत्वात्, यद्यप्युक्तहेतुनैव मनोगुणत्वाभावोऽपि साधयितुं शक्यस्तथापि पूर्वपक्षिणा मनसो विशेषगुणवत्त्वस्य स्वीकृतत्वाद् हेत्वन्तरं प्रस्तूयते—

बुद्ध्यादयो न मनोगुणाः प्रत्यक्षत्वाद्रूपवदिति। एवं ज्ञानाद्याश्रयतयातिरिक्त आत्मा सिध्यति। एवमतिरिक्तात्मनि सिद्धे धर्माधर्मभावनाश्रयत्वस्य मनसि स्वीकरणमात्रं विशेषोऽवशिष्यते। तत्रापि कार्यकारणभूतयोरनुभवसंस्कारयोः संस्कारस्मृत्योश्च परम्परासम्बन्धेन सामानाधिकरण्यकल्पनापेक्षया समवायेन संस्काराश्रयत्वस्याप्यात्मन्येव स्वीकारे लाघवम्। एवं धर्माधर्मयोर्ज्ञाननाश्यत्वात् तयोरप्यात्मन्येव स्वीकार उचित इति नात्र प्रतिपादितमतितरां युक्तमुत्पश्यामः।

तदेव हि ध्रुवं यत्तु श्रौतसिद्धान्तसम्मतम्।<br>
साध्यं तदेव तर्केण नान्यत्तर्कप्रयोजनम्।।इति।

●

# भारतीयदर्शनेषूपनिषत्परम्परा

**डॉ. हरिप्रसाद-अधिकारी**
प्राध्यापक:
तुलनात्मकधर्मदर्शनविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

❀ ❀ ❀

'मन्त्रब्राह्मणयोर्वेदनामधेयम्' मन्त्रब्राह्मणे वेदावित्यापस्तम्बादिषूपलभ्यते। मन्त्रभाग: संहिताभागनाम्नापि सम्बोध्यते। प्रायशो मन्त्रा: पद्ये ब्राह्मणानि गद्ये सन्ति। ब्राह्मणे विशेषतो यज्ञादीनां विधि: समुपवर्णितोऽस्ति। ब्राह्मण-भागस्यारण्यको भाग आरण्यकनाम्ना प्रथते। आरण्यकेष्वेकान्तस्थाने स्थित्वा जगद्रहस्यविषये चिन्तितं निगूढतरं चिन्तनमुपलभ्यते। तत्र हि यागादिप्रतिपादकेभ्यो विधिनिषेधरूपेभ्यो विचारेभ्यो निवृत्तिस्तथा च शुद्धदार्शनिकचिन्तनेषु प्रवृत्ति: प्रदर्शिता आस्ते। आरण्यकानामेवान्तिमो भागराशिरुपनिषदस्ति। यस्यां हि वैदिकदर्शनसारतत्त्वं सङ्ग्रथितमस्ति। ब्राह्मणस्य पूर्वभागो मन्त्रभागश्च कर्मकाण्डप्रधानौ स्त:। अन्तिमो भागस्तु (उपनिषद्) ज्ञानकाण्ड इति प्रथां भजते[१]।

उपनिषदोऽनुपमया शैल्या सरलया सुबोधया हृदयस्पर्शिन्या च भाषयात्यन्तं गभीरतत्त्वविवेचनं कुर्वन्ति। वेदानामन्तिमभागत्वादेतासामपरा संज्ञा 'वेदान्त' इति च वर्तते। सम्पूर्णे भारतीयदर्शनवाङ्मये किमप्येतादृग् महत्त्वपूर्णं चिन्तनन्नास्ति, यन्मूलमुपनिषदि नोपलभ्येत।

**उपनिषद्दार्शनिका:**

यद्यपि परम्परागतभारतीयमान्यतानुसारं वेदा अपौरुषेया:। उपनिषदोऽपि वेदाङ्गतया अपौरुषेय्य एव। तथापि मन्त्रद्रष्टृरूपेण बहूनामृषीणां नामान्यपि

---

१. बुद्धदर्शन और वेदान्त, पृ. ९९।

स्मर्यन्ते। एवमेवोपनिषदामपि कैश्चिद् मुनिभिः सह विशेषसम्बन्धो दरीदृश्यते। तद्विवरणञ्चेत्थमस्ति—

छान्दोग्यस्य— रैक्व-जनश्रुति-सत्यकाम-उपकोशलाः।

बृहदारण्यकस्य— अजातशत्रु-गार्ग्य-दध्यङ्ङाथर्वण-अश्विनीकुमार-गार्गी-मैत्रेयी-याज्ञवल्क्य-जनकाः।

कठोपनिषदः— यमो नचिकेता च।

तैतिरीयस्य— वरुणो भृगुश्च।

मुण्डकस्य— आङ्गिरसः शौनकश्च।

प्रश्नोपनिषदः— पिप्पलादयः।

एत एव प्रायशो मुख्या उपनिषद्दार्शनिकाः सन्ति। एतेषु सर्वेषु याज्ञवल्क्यः चकास्तितराम्[१]।

**दर्शनस्य द्विधा प्रवृत्तिः**

दर्शनस्योभयविधा प्रवृत्तिर्भवति। प्रथमा खण्डनपरा द्वितीया च मण्डनपरा। उपनिषदि द्वयोरेव मूलमुपलभ्यते। खण्डनप्रवृत्तेर्मूलमस्ति 'नेति नेति', मण्डनपरकं वाक्यञ्चास्ति 'तत्त्वमसि'।

**तत्त्वे वाचामप्रवेशः**

उपनिषदामियं सुस्पष्टा घोषणास्ति यद् वाण्या बुद्धेश्च प्रवेशो नास्ति तत्त्वे। यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। द्रष्टुर्दर्शनं, श्रोतुः श्रवणं, ज्ञातुर्ज्ञानञ्चासम्भवमस्ति। यथोक्तं बृहदारण्यकोपनिषदि—

केन कं जिघ्रेत्? तत्केन कं पश्येत्? तत्केन कं शृणुयात्? तत्केन किं वदेत्? केन कं मन्वीत? तत्केन कं विजानीयात्? येनेदं सर्वं विजानाति तं केन विजानीयात्? विज्ञातारमरे केन विजानीयादिति[२]?

अस्तु, उपनिषदो भारतीयदर्शनस्योत्सरूपाः सन्तीति वक्तुं शक्यते। न केवलं भारतीया एवापि तु नैके वैदेशिका विद्वद्वरा अप्युपनिषन्महत्त्वं सश्रद्धं प्रतिपादयन्ति। सर्वमेव भारतीयं चिन्तनमुपनिषत्प्रभावितमिति न तिरोहितं विदुषाम्।

---

१. बुद्धदर्शन और वेदान्त, पृ. ७७।

२. बृहदारण्यकोपनिषदि - २.४.१४।

**उपनिषच्छब्दनिर्वचनम्**

उपनिषच्छब्दस्य वास्तविकार्थविषये किमपि चिन्तनीयमेवात्र। विषयेऽस्मिन्मतभेदबाहुल्यदर्शनाद् विवेचनमिदं किञ्चिदुपकारकं सेत्स्यतीति विश्वस्यते।

प्रायशः पाश्चात्त्यास्तदनुयायिनश्च विद्वांस उप-न्युपसर्गयुतात् सद्धातोरुपनिषच्छब्दनिष्पत्तिं तदनुकूलं गुरोर्नीचैरुपविश्य गृह्यमाणं ज्ञानञ्चोपनिषच्छब्दवाच्यतां गच्छतीति प्रतिपादयन्ति; परन्तु प्राचीनैर्भारतीयविद्वद्भिरुपनिषच्छब्दस्यार्थो न तथा प्रतिपादितो यथा प्रतिपादयन्ति पाश्चात्त्याः।

भारतीयवाङ्मये प्रायश उपनिषदां कृते रहस्यशब्दः प्रयुक्तोऽवलोक्यते। अस्य तात्पर्यन्त्वनधिकारिणे शिष्यायास्याः समुपदेशप्रतिषेध एव[१]।

सङ्क्षेपतः पाश्चात्त्या उपनिषच्छब्दतात्पर्यमित्थं प्रतिपादयन्ति—

१. रहस्यमयी व्याख्या सत्याऽनृता वा।

२. उपर्युक्तव्याख्याजन्यं ज्ञानम्।

३. प्राप्तज्ञानरक्षायै पालनीया नियमाः।

४. एवंविधज्ञानदानसमर्था ग्रन्थाश्च[२]।

पाश्चात्त्यदार्शनिक-डायसनानुसारेण रहस्यमयं ज्ञानमेवोपनिषच्छब्देन गृह्यते। परं कथनमिदं न तथा समीचीनं प्रतिभाति। यतो ह्यनधिकारिणे शिष्याय न दातव्यमिति कृत्वैवात्र रहस्यादिशब्दप्रयोगः कृतोऽस्तीति साधितं पूर्वमेव[३]।

अथ च पाश्चात्त्यविद्वद्भिः कृतो गुरोर्नीचैरुपविश्य गृह्यमाणज्ञानराशिरुपनिषदित्यपि न सुस्पष्टयति तात्पर्यम्। यतो हि भारतीयायां परम्परायां गुरोर्नीचैरुपविश्य न केवलमुपनिषदामध्ययनं क्रियते, अपि त्वत्र सर्वशास्त्राध्ययनावसर एव शिष्यो गुरोर्नीचैः समुपविशति। एवंविधजगत्प्रसिद्धविषयस्योपनिषदा सह सम्बन्धो नोचितः।

---

१. य इदं परमं गुह्यं श्रावयेद् ब्रह्मसंसदि। (कठ. ३.१७)
ते वा एते गुह्या आदेशाः। (छा.उ. ३.५.२)

२. उपनिषद्रहस्यम् (विषयप्रवेशे), पृ. १।

३. दि फिलॉसफी ऑफ दि उपनिषद्स्, पृ. १०-१५।

पुनश्चात्रोपनिषल्लक्ष्यविषये वर्ण्यविषये वा नैव किमपि स्पष्टीकृतम्। यस्मिन् स्थाने यस्य विषयस्य वस्तुनो वा प्रादुर्भावो भवति, ये च तस्य द्रष्टारो निर्मातारो वा भवन्ति, यैश्चोपनिषदस्तत्त्वानि न केवलं मनोविनोदाय प्रतिपादितान्यपि तु तदनुकूलं समाचरणं विहितं, स्वजीवनमेव तत्प्रतिपादने प्रसारणे च यापितम्, त एवोपनिषच्छब्दस्यार्थनिरूपणे परिभाषानिरूपणे वा स्वीकर्त्तव्याः, नान्ये। भारतीयेषु मध्ययुगीयेषूपनिषदर्थप्रतिपादकेष्वाचार्येषु शङ्करो वरिष्ठः। तद्वरिष्ठत्वं बहुभिराधुनिकैरपि विद्वद्भिः स्वीकृतमस्ति[१]।

## शाङ्करीयपरिभाषा

आद्यशङ्कराचार्यस्तु सदेर्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य क्विप्-प्रत्ययान्तस्य रूपमुपनिषदिति प्रत्यपादयत्। ब्रह्मविद्यासाक्षात्करणे सहायकत्वात् 'ब्रह्मविद्या' एवोपनिषद्वाच्यतां गच्छतीत्यप्यवर्णयत्। परिभाषेयमन्यपरिभाषापेक्षया सुतरां महत्त्वपूर्णा प्रतिभाति[२]।

परिभाषार्थयोर्निरूपणानन्तरमुपनिषत्कालविषयेऽपि स्वल्पं चिन्त्यते।

इदमत्रावधेयं यद् भारतीयपरम्परानुसारं वेदाः सनातना अनादिरूपा अपौरुषेया वा मन्यन्ते।

ननु कर्तारं तिरस्कृत्य कथं कार्यसम्भव इति जिज्ञासायां समुत्पन्नायां समादधति पारम्परिका एवम्—वेदशब्दस्य निष्पत्तिर्ज्ञानार्थकाद् विद्धातोर्भवति। ज्ञानं तु सृष्टिकालादारभ्येदानीं यावदविच्छिन्नरूपेणायात्येव। तस्यैव ज्ञानस्य समये समये साक्षात्कारः क्रियते ध्यानावस्थितैर्महर्षिभिः। अत एव ऋषयो मन्त्रद्रष्टार इति कथ्यते। अनयैव भावनया भाविता भारतीयाः प्रायशो वेदमपौरुषेयं सनातनं वा मन्यन्ते। परन्तु पाश्चात्त्यविदुषां दृष्टिरितो सुतरां भिन्ना परिलक्ष्यते वेदविषये।

अस्तु, पाश्चात्त्याः सर्वं कृत्वोपनिषदां रचनाकालं (५००-२०००) ई. पूर्वतोऽधिकं न मन्यन्ते। परमस्य सिद्धये तैर्न किमपि पुष्टतरं प्रमाणं समुपस्थापितं व्यर्थकल्पनामन्तरा। तदेव भारतीयैर्विद्वद्धौरेयैरपि बहुत्रानुसृतम्। सम्यगनुशीलनानन्तरं तेषां निःसारत्वमप्रामाणिकत्वञ्च सुसिध्यत्येव[३]।

---

१. उपनिषद्रहस्यम्, पृ. ३, अद्वैतवेदान्ते (विषयप्रवेशे), पृ. १।
२. कठोपनिषदि (शाङ्करभाष्ये) मन्त्रः-१।
३. उपनिषद्रहस्यम्, पृ. ५४।

उपनिषद्विषयकाणां सर्वेषां वादविवादानामत्रोल्लेखोऽसम्भवोऽनावश्यकश्च। तदपीदानीं यावत् प्रतिपादिता उपनिषद्विषयिकाः कालनिर्धारणधारणा न तथा सत्यसंवलिताः, अपि तु केवलमनुमानप्रमाणप्रमाणिता एव प्रतीयन्ते।

**तिलकमतम्**

श्रीमता बालगङ्गाधरतिलकमहोदयेन 'ओरायन'नामके ग्रन्थेऽन्यापेक्षया तर्कयुक्तानि प्रमाणानि समुपन्यस्तानि। गणनापद्धत्याऽपि विचारितं तेन सम्यक्तया। फलतो वेदरचनाकालः ४५०० ई. पूर्वतः पश्चाद्वर्ती भवितुं नार्हति।

यद्यपि वेदेषूपनिषत्सु च श्रीमतां मैक्समूलरडायसनप्रभृतीनां प्रयासाः श्लाघनीयः; परन्तु त एवोपनिषदादीनां परिभाषा-काल-अभिधेयत्वादिप्रतिपादनेऽपि स्वीकर्त्तव्या इति बहूनां तदनुयायिनां मतानि न तथा श्लाघनीय-तमानीत्यवधेयमत्र[1]।

केचन तु भगवतो बुद्धस्याविर्भावानन्तरमप्युपनिषदां कालमुपवर्णयन्ति। पुनश्चोपनिषद्भिः प्रतिपादिता निवृत्तिरूपा सरण्यपि बुद्धप्रभावादेव प्रस्फुटितेत्यपि मन्यन्ते केचन। परमत्र प्रमाणं विना नहि किमपि वक्तुमुचितं बहुविवादभरिते विषये।

**उपनिषत्संख्या**

यथोपनिषत्परिभाषाकालादीनां निर्णये मतभेदाः परिलक्षितास्तथैव वर्तते तत्संख्यानिर्धारणविषयेऽपि। मुक्तिकोपनिषदि प्रथमेऽध्याये उपनिषदो वेदशाखारूपेण समुपवर्णिताः। शाखाश्च १. ऋग्वेदस्य-२१, २. यजुर्वेदस्य-१०९, ३. सामवेदस्य-१०००, ४. अथर्ववेदस्य-५० सन्ति। सर्वमाहत्य वेदशाखानां संख्या ११८० भवन्ति। अत एवोपनिषत्संख्यापि ११८० भवितव्या; परन्त्वेतावत्संख्या उपनिषदो न कुत्रापि समुपलभ्यन्ते।

मुक्तिकोपनिषद्युक्तम्— 'सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम्'। एतेनो-पनिषत्स्वष्टोत्तरशतोपनिषदां वैशिष्ट्यं सुसिध्यति। अत्र च नारायणोपनिषदो द्वे व्याख्ये, नृसिंहतापिन्युपनिषदः पूर्वोत्तरभागकरणेनेयं संख्या द्वादशाधिकं शतमापद्यते[2]।

१. उपनिषद्रहस्यम्, पृ. ४२।

२. तदेव, पृ. १५।

सङ्क्षेपतोऽर्थकाल-संख्या-विवेचनानन्तरमुपनिषदां प्रतिपाद्यविषयः चिन्तनीयः। परं विषयोऽयं पूर्ववर्णितविषयेभ्योऽपि गहनतमो वर्तते। यतो हि भिन्नभिन्नसम्प्रदायवादिन उपनिषदामर्थं स्व-स्वसम्प्रदायानुकूलमेव प्रतिपादयन्ति। अन्यप्रतिपादितमर्थं साग्रहं सोत्साहञ्च खण्डयन्ति। अतः सरलतमानामप्युपनिषदामर्थबोधः सञ्जातो दुष्करतमः सामान्यजनानां विदुषाञ्च कृते।

वस्तुतोऽद्वैतद्वैतादीनां मूलरूपमुपनिषदि समुपलभ्यते। द्वैतभावसमर्थका मन्त्राः —

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकसीति[१]।।

अद्वैतभावसमर्थकाश्च—

मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।
यदेवेह तदमुत्र यदमुत्र तदन्विह
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति[२]।।

एतानेव विभिन्नार्थप्रतिपादकान् मन्त्रानाधृत्याचार्याः परस्परं विवादमकुर्वन्निति न तिरोहितं दार्शनिकानाम्। परं शान्तचेतसा विचार्यते चेदस्य विवादस्य समाधानमप्युपनिषद्येव समुपलभ्येत।

वस्तुतस्तु किमप्याग्रहस्थापनमयुक्तमस्त्युपनिषन्मतानुसारम्—

यदि मन्यसे सुवेदेति दभ्रमेवापि
नूनं त्वं वेत्थ ब्रह्मणो रूपम्।
यदस्य त्वं यदस्य देवेष्वथ नु
मीमांस्यमेव मन्ये ते विदितम्[३]।।

सनातनपरम्परायामुपनिषदां स्थानमतीवमहत्त्वपूर्णमिति कथनं नावश्यकम्। उपनिषद्विषये गीतामाहात्म्यादावुक्तम्—

---

१. मुण्डकोपनिषद् - ३.११।
२. कठोपनिषद् - २.१.१०-११।
३. केनोपनिषद् - २.१।

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्।।

अस्तु, अतः परमुपनिषदां श्रुतित्वमथवाऽश्रुतित्वमिति बहुविवादसमाकुले विषये स्वल्पं चिन्त्यते।

**उपनिषदां वेदमूलकत्वम्**

कतिपये जना उपनिषदां वेदत्वविषये शङ्काशीला दृश्यन्ते, परं वेदोपनिषदोर्मध्ये नास्ति पार्थक्यं यतो हि कतिपया उपनिषदो वेदेष्वविकलं प्राप्यन्ते।

यथेशावास्योपनिषच्छुक्लयजुर्वेदस्य चत्वारिंशत्तमोऽध्यायोऽस्ति। एवमेव तैत्तिरीयोपनिषद् ऋग्वेदस्यैतरेयब्राह्मणस्य द्वितीयारण्यकस्य चतुर्थ-पञ्चमषष्ठाध्यायानां सङ्ग्रहभूताऽस्ति। केनोपनिषदपि सामवेदीयतवल्कारब्राह्मणस्य भागोऽस्ति। प्रश्नोपनिषच्चाथर्ववेदस्य पैप्पलादसंहिताया अङ्गभूताऽस्ति। अनयैव रीत्या यदि सूक्ष्मेक्षिकयाऽवलोकनं क्रियेत, तदा सर्वा एवोपनिषदो वेदसम्बद्धाः सिध्यन्ति। अतो द्वयोर्मध्ये भेदकल्पनमनुचितं प्रतिभाति। पुनश्चोपनिषदो वेदशाखात्वेन सम्बोध्यन्ते। अतोऽस्यां स्थितौ वृक्षशाखयोर्मध्ये भेदकल्पनं कियदुचितं भविष्यति? अवधेयोऽयं विषयो विद्वद्भिः[१]।

**शारीरकसूत्राणि तदीयभाष्याणि च**

उपनिषदां मन्थनं विधाय वेदव्यासेन ब्रह्मसूत्राणां रचना कृतेति सर्वसम्मतो विषयः। अयञ्च सूत्रसमूहो वेदान्तसूत्र-शारीरकसूत्र-शारीरकमीमांसोत्तरमीमांसादि-नामभिः सम्बोध्यते। बादरायणेन भिक्षूणां कृतेऽस्य रचना कृता, अतो भिक्षुसूत्रनाम्नाप्ययं सूत्रराशिः सम्बोध्यते[२]।

अत्र सन्ति चत्वारोऽध्यायाः। प्रत्यध्यायञ्च भवन्ति चतुः पादाः। प्रायशः सर्वैरेव वैदिकपरम्परानुयायिभिर्दार्शनिकैः स्वमतपुष्ट्यै शारीरकसूत्राण्येव प्रमाणत्वेनोपन्यस्तानीति रुचिकरो विषयः। सर्वैरिवाचार्यैः स्व-स्वसम्प्रदायदृष्ट्या वेदान्तप्रतिपादनं कृतमस्ति, स्वमतमेव च श्रुतिमूलकमिति साधनाय भगीरथप्रयासोऽपि कृतोऽस्ति। सर्वेष्वेतेषु भाष्येषु शाङ्करभाष्यं प्रशस्यतरं मन्यते[३]।

---

१. उपनिषद्रहस्यम् पृ. ५६।
२. भारतीय दर्शन (पी.एन.सिंह), पृ. ५१७।
३. श्रीशङ्करात्प्रागद्वैतवादः, पृ. ७३।

परं कतिपये तु विशिष्टाद्वैतप्रतिपादकं श्रीभाष्यमेवोपनिषदां तात्पर्यं सम्यग्विवृणोतीति कथयन्ति[१]।

वस्तुतस्तु वेदान्तशब्देनोपनिषदामेव बोधो जायते स्म पुरा काले। परं शनैः शनैस्तदुपकारीणि शारीरकसूत्रादीनि च वेदान्तनाम्ना ख्यातिमलभन्त[२]।

सम्प्रति तु शाङ्करवेदान्त-रामानुजवेदान्त इत्यादिनामभिर्वेदान्तानां सम्बोधनं क्रियते।

## शङ्कराचार्यात् पूर्ववर्त्याचार्याणां सङ्क्षिप्तविवरणम्

यथा गौतमबुद्धोपदेशेषु गूढरूपेणावस्थितं शून्यतातत्त्वमार्यनागार्जुनस्य लेखनीसहकारेण प्राकट्यमलभत, तथैव वेदवेदान्तेष्वव्यवस्थितरूपेणावस्थितमद्वैततत्त्वमाचार्यशङ्करसहयोगेन व्यवस्थिततां सर्वजनज्ञेयरूपताञ्चाजायत। परमत्र प्रतिपाद्यविषयस्त्वन्य एव। सामान्येन अद्वैतवेदान्तस्य प्रादुर्भावः आचार्यशङ्करादेव जात इति विश्वस्यते जनैः। वार्तेयं सामान्यजनानां कृतेऽवगन्तव्या। रहस्यमिदं सर्वसामान्यमाश्रयेदिति धियाऽऽचार्यशङ्करात्पूर्ववर्तिनामद्वैतवेदान्ताचार्याणां यथाप्राप्तं विवरणं प्रस्तूयतेऽत्र। आचार्याणां नामानीत्थं वर्तन्ते—

बोधायनः, उपवर्षः, गुहदेवः, कपर्दी, भारुचिः, भर्तृहरिः, भर्तृमित्रः, ब्रह्मानन्दी, टंकः, द्रविडाचार्यः, ब्रह्मदत्तः, भर्तृप्रपञ्चः, सुन्दरपाण्ड्यः, गौडपादादयश्च। अत्रैतेषामाचार्याणां दार्शनिककृतीनां सिद्धान्तानाञ्च स्वल्पं विवेचनं क्रियते[३]।

### १. बोधायनः

उपर्युक्तेष्वाचार्येषु बोधायनोऽयं सर्वप्राचीनो मन्यते। अस्य स्थितिकालः प्रथमा द्वितीया वा शताब्दी मन्यते। बादरायणसूत्राण्याश्रित्यानेनैका विस्तीर्णा वृत्तिर्लिखिताऽऽसीत्। अस्या वृत्तेः समुल्लेखः डॉ. थीबोमहोदयेन ब्रह्मसूत्रभाष्यभूमिकायां कृतोऽस्ति। अस्या एव वृत्तेर्नाम कृतकोटिरस्ति।

श्रीरामानुजीयविशिष्टाद्वैतसिद्धान्तो जैमिनेर्मीमांसादर्शनञ्चेमां वृत्तिमाश्रित्य पल्लवितम् इति मन्यन्ते केचन; परन्तु सुविख्यातो जर्मनदेशीयो विद्वान् जैकोबीमहोदयस्तु बोधायनेन मीमांसासूत्रेष्वपि वृत्तिर्लिखितासीदिति मन्यते।

१. भारतीय दर्शन की मर्मकथा (हिन्दी संस्करण), पृ. २२२, २२९, २४३।

२. वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च। (वेदान्तसारप्रारम्भे)

३. अद्वैतवेदान्ते, पृ. १३०।

**२. उपवर्षः**

उपवर्षेण ब्रह्मसूत्र-मीमांसासूत्रयोर्वृत्तिर्लिखिताऽऽसीदिति विश्वस्यते। उपवर्षनामोल्लेखो मीमांसासूत्रे (१.१.५), शाङ्करभाष्ये (३.३.५३) चोपलभ्यते[1]।

**३-४ गुहदेवः कपर्दी च**

रामानुजाचार्यरचितवेदार्थसङ्ग्रहे श्रीनिवासदासरचितायां यतीन्द्र-मतदीपिकायाञ्च गुहदेव-कपर्दी-भारुचीनां नामानि वेदान्ताचार्यत्वेन गृहीतानि सन्ति। पं. विधुशेखरभट्टाचार्यमतानुसारमेते विशिष्टाद्वैतमतपक्षपातिनः सम्भवन्ति।

**५. भारुचिः**

विज्ञानेश्वरमाधवाचार्याभ्यां पाराशरसंहिताटीकायां भारुचिरयं धर्मशास्त्र-कारत्वेन स्मृतः। सरस्वतीविलासेऽप्यस्य धर्मशास्त्रकारत्वेन समुल्लेखो वर्तते; परन्तु धर्मशास्त्रकारो वेदान्तपथपथिकश्च भारुचिरेकोऽथवा भिन्नोऽस्मिन् विषये सन्देहलेशो वर्ततेऽद्यापि[2]।

**६. भर्तृहरिः**

बौद्धोऽयमथवा ब्राह्मणो विषयेऽस्मिन् चलन्ति शास्त्रार्थाः। परं कतिपयैरन्तर्वर्तिभिः प्रमाणैरस्य वेदान्तिकत्वं सुसिध्यति। अस्य वाक्यपदीयं वर्तते शब्दाद्वैतवादसमर्थकं ग्रन्थरत्नम्। इदमाश्रित्यैवाचार्यमण्डनमिश्रेण ब्रह्मसिद्धिनामको ग्रन्थो व्यरचीति विश्वस्यते।

उमामहेश्वरकृतायां तत्त्वदीपिकायामेतद्विषये लिखितम् 'महाभाष्यं व्याचक्षाणो भगवान् भर्तृहरिरपि अद्वैतमेवाभ्युपगच्छति। एतेनायं निश्चितरूपेण शब्दब्रह्मद्वैतवादसमर्थकः सिध्यति।

**७. भर्तृमित्रः**

जयन्तकृतन्यायमञ्जर्यां यामुनाचार्यरचितसिद्धित्रये च भर्तृमित्रस्योल्लेखः समुपलभ्यते। मीमांसाशास्त्रधुरन्धरेण कुमारिलेनाप्यस्योल्लेखः श्लोकवार्तिके कृतोऽस्ति।

---

१. अत एव च भगवतोपवर्षेण 'प्रथमे तन्त्रे आत्माहितत्त्वाभिधानप्रसक्तौ शारीरके वक्ष्यामः, इत्युद्धारः कृतः।.

२. अद्वैतवेदान्ते, पृ. १३१।

पार्थसारथिकृतायां न्यायरत्नाकरटीकायाञ्च भर्तृमित्रकृतमीमांसाटीकायाः समुल्लेखो मिलति। मीमांसकवेदान्तिभर्तृमित्रयोर्विभेदकं नास्ति किमपि पुष्टं प्रमाणम्।

## ८. ब्रह्मानन्दी

मधुसूदनसरस्वतीमहोदयेन स्वसंक्षेपशारीरकटीकायां ब्रह्मानन्दी 'वाक्यकार'नाम्ना सम्बोधितोऽस्ति। आचार्यभास्करमतानुसारं ब्रह्मानन्दी परिणामवादसिद्धान्तसमर्थक आसीत्; परन्तु मधुसूदनमहोदयस्तु ब्रह्मानन्दिनमिममद्वैतवेदान्तसिद्धान्तानुयायिनमिव मन्यते। अयं विवर्तवादसमर्थक आसीदिति विश्वस्यते।

कैश्चन ब्रह्मानन्दीतः पश्चात् पृथक् टङ्कनामकस्याचार्यस्योल्लेखः कृतो दृश्यते[१]। परमयं टंको ब्रह्मानन्दी एवेति बहुभिः प्रमाणैः सिध्यति। श्रीब्रह्मानन्दिनः 'सिद्धं तु विवर्तकत्वात्' इति सूत्रास्याद्वैतवेदान्ते[२] महानादरः[३]। परमुपर्युक्तं सूत्रं ब्रह्मानन्दिन उत वा द्रविडाचार्यस्येति विषये नैकमत्यं दृश्यते विदुषाम्[४]।

## ९. श्रीद्रविडाचार्यः (७५०ई.)

अस्य नामोल्लेखो भारतीयदर्शनग्रन्थेषु बहुत्रोपलभ्यते। अयमद्वैतवादी विशिष्टाद्वैतवादी वा वर्ततेऽत्र सन्देहलेशः। यतो हि शङ्कराचार्यप्रभृतिभिरद्वैतवादिभिरयं ससम्मानं सम्प्रदायविदित्युपाधिना विभूषितः[५]।

एवमेव रामानुजप्रभृतिभिर्वैष्णवाचार्यैरप्ययं सत्कृतः। अतोऽस्मिन् विषये सुस्पष्टतया कथयितुं न शक्यते।

## १०. ब्रह्मदत्तः

अस्य स्थितिकालनिर्धारणविषये सन्ति बहूनि वैमत्यानि। शङ्कराचार्यपूर्ववर्त्याचार्येष्वस्यातिमहत्त्वपूर्णं स्थानम्। सुरेश्वराचार्यकृतनैष्कर्म्यसिद्धि-

---

१. अद्वैतवेदान्ते, पृ. १३३।

२. कैश्चन टङ्क इति नाम्नाप्ययमभिधीयते। टङ्को ब्रह्मानन्दी एक एव व्यवहृतः। (शङ्करात्प्रागद्वैतवादः, पृ. १३२)

३. तदेव, पृ. १५३।

४. माण्डूक्यकारिका (हृषीकेशप्रकाशिता), पृ. १०८।

५. अद्वैतवेदान्ते, पृ. १३३ प्रो. राममूर्तिशर्मणः।

ग्रन्थानुसारेणायमद्वैतवाद्यासीत्। ब्रह्मदत्तोऽयं ज्ञानकर्मसमुच्चयवादसमर्थक आसीदिति प्रमाणन्नैष्कर्म्यटीकायां समुल्लिखति ज्ञानोत्तमः—

वाक्यजन्यज्ञानोत्तरकालीनभावनोत्कर्षाद् भावनाजन्यसाक्षात्कारलक्षण-ज्ञानान्तरेणैवाज्ञानस्य निवृत्तेः ज्ञानाभ्यासदशायां ज्ञानस्य कर्मणा समुच्चयो-पपत्तिः[१]।

**११. भर्तृप्रपञ्चः**

अयमासीत् प्राचीनाचार्यो वेदान्तस्य। अनेन बादरायणसूत्राणि व्याख्यातान्यासन्निति मधुसूदनसरस्वतीमहोदयो निर्दिशति। कैश्चित् तत्सूत्रं व्याचक्षाणैर्भर्तृप्रपञ्चादिभिः कठादीनामप्युपनिषदामयं भाष्यमकार्षीदिति विश्वस्यते[२]।

**१२. सुन्दरपाण्ड्यः** (अष्टमी शती)

सुन्दरपाण्ड्योऽयमासीत् मूर्धन्यवेदान्तिको मीमांसकश्च। अस्योपाधिः 'अरिकेशरी' इत्यासीत्। शैवाचार्यतिरुज्ञानसम्बन्धप्रभावेणाचार्यसुन्दरपाण्ड्यो जैनधर्मं परित्यज्य शैवधर्ममङ्गीकृतवान्। अयं स्वीयोपासनमहिम्ना प्रसिद्धेषु त्रिषष्टिशैवाचार्येषु प्रमुखस्थानमलमकरोत्। अस्य वेदान्तविषयको ग्रन्थोऽधुना नोपलभ्यते, केवलं वेदान्तविषयकाणि श्लोकवार्तिकानि कतिपयानि पूर्वोत्तर-मीमांसाग्रन्थेषु प्राप्यन्ते[३]। भामती-कल्पतरु-परिमलग्रन्थेष्वप्यस्योल्लेखो मिलति।

एवं रीत्या प्राचीनकालादेव समागच्छत्यद्वैतपरम्परा। यथालब्धसाधनमेतेषां शङ्करपूर्ववर्तिनामद्वैताचार्याणां दिङ्निर्देशः कृतः। परमेत एव मौलिका इति धारणाधारणमिदानीमपि नोचितमित्यवधेयमत्र।

अतः परं गौडपादीयदर्शनविषये किञ्चिद्विस्तरेण चिन्त्यते। यतो ह्यस्य विषये बहवः परस्परसम्बद्धालापाः प्रचलिता विद्वत्सु। अत्रैव तद्विषये किमपि तत्त्वात्मकं चिन्तनं भविष्यतीति कथनं तु मन्येऽविश्वासयोग्यं भविष्यति। अतः केवलं ज्ञानवृद्धिदृष्ट्यैवैतेषां गौडपादविषयकमतभेदानामत्रोपस्थापना क्रियते।

---

१. नैष्कर्म्यसिद्धिः – १.६७।

२. Agamshastra of Gaudapada, P. CXI.

३. शङ्करात्प्रागद्वैतवादः, पृ. २९४।

**गौडपादकालविषये विदुषां सन्देहः**

प्रायो विद्वांस ईशोत्तरमष्टशतकमस्य कालमिति समामनन्ति[१]। परमन्यत्र गौडपादशङ्करयोर्मध्ये सप्ताचार्याणां स्थितिर्वर्णिता—

'गौडादिशङ्करान्ताश्च सप्त संख्याः प्रकीर्तिताः।
एकसप्ततिसंख्याश्च गुरवः शिवरूपिणः'[२]।।

एतेन शङ्कराचार्यस्य कालविषयेऽपि सन्देहः समुत्पद्यते। श्रीमता भट्टाचार्येणाप्यभिधर्मकोशादीनां प्रमाणानि समुपस्थापयता एवमेव सन्देहः प्रकटीकृतः[३]।

भवतु, यः कोऽपि तदाविर्भावकालः। परमिति तु सर्वसत्यं यदाचार्य-गौडपादः शङ्कराचार्यपूर्ववर्त्याचार्येष्वग्रगण्योऽद्वैतविदासीत्। शङ्करेणायं बहुत्र स्वग्रन्थेषु स्मृतः ससत्कारम्। माण्डूक्यकारिकाभाष्ये तद्वन्दनाऽपि कृता—

यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि[४]।

**तदीयकृतयः**

एतत्कृतिविषये बहुविवादोऽस्ति। निम्नोक्ता ग्रन्था अस्य कृतित्वेनोप-वर्ण्यन्ते—

१. माण्डूक्योपनिषत्कारिका (आगमशास्त्रम्)

२. सांख्यकारिकाभाष्यम्

३. नृसिंहोत्तरतापिन्युपनिषद्व्याख्या

४. श्रीदुर्गासप्तशतीटीका

---

१. शङ्करात्प्रागद्वैतवादः, पृ. ३०७।

२. श्रीविद्यार्णवे प्रथमश्वासे, पृ. १९९।

३. नूनमयं कालो विरुणद्धि परम्परागतं कालं शङ्करस्य तच्छिष्यपरम्परायाश्च। न चायमद्यापि सिद्धान्तितः केनापि निःसंशयम्। अपि नाम तन्मठाम्नायवृत्तान्ता वस्तुतस्तथा यथा ते तत्तत्कर्तृभिरिष्यन्ते। किं बहुना, एतस्मिन्नीदृशे कर्मणि महति व्यतिकरे नूनमतिदुर्लभः सः पन्था येन याथातथ्येन निर्णीयेत काल आचार्यगौडपादस्य।

(आगमशास्त्रम्, अवतरणिकायाम्)

४. माण्डूक्योपनिषद्, हृषीकेशप्रकाशिता, पृ. २८७।

५. सुभगोदयः

६. श्रीविद्यारत्नसूत्रम्

एषु माण्डूक्योपनिषत्कारिका आचार्यगौडपादस्य प्रसिद्धतमा कृतिः। अत्र नास्ति केषामपि सन्देहः, परमन्येषु सन्देहो वर्तते[१]। माण्डूक्यकारिकायाः सम्यगवलोकनेनेदं सुसिध्यति यदयं निरभिमानी सर्वसमन्वयवादी चासीदिति। यतो ह्यनेन शिष्टशब्दप्रयोगपुरःसरमेवाद्वैतसिद्धान्ताः समुपवर्णिताः। अन्येषामपि यद्युपयोगीनि तथ्यानि सन्ति चेत् तानि स्वीकृतान्यनेन। एतेनास्य विशालहृदयत्वं सम्यक्सुसिध्यति[२]। प्राचीनाद्वैतस्य पूर्णतया विकसितं रूपं गौडपाददर्शने समुपलभ्यते, गौडपादस्य दार्शनिकः प्रभावस्तत्परवर्तिष्वाचार्यशङ्करप्रभृतिषु पूर्णतयाऽवलोकयितुं शक्यते।

इदमत्रावधेयं यद् महामहोपाध्यायविधुशेखर-डॉ. वलेस-जैकोबी-डॉ. दासगुप्तप्रभृतिभिर्विद्वद्भिर्गौडपादसिद्धान्ते बौद्धदर्शनप्रभावः प्रदर्शितोऽस्ति। म.म. पं. विधुशेखरेण तु कारिकामूलभूतोपनिषच्च व्याख्याभूतेति प्रतिपादितम्। तेन तत्तत्स्थलेषु गभीरतया चिन्तितं विचारितञ्चास्ति[३]। परमद्वैतपथानुयायिनः कथनमिमं नाङ्गीकुर्वन्ति[४]।

सामान्येन गौडपादीयदर्शनं बाध्यार्थप्रतिषेधनपरं द्वैतभावनिवर्तन-बद्धपरिकरं संलक्ष्यते। प्रतिपाद्यञ्चास्ति निर्विशेषं ब्रह्म। ब्रह्मतत्त्वञ्चास्त्य-निर्वचनीयमस्य कृते। अतोऽनिर्वचनीयदृष्ट्या शून्यवादेन, बाह्यार्थप्रतिषेधनदृष्ट्या च विज्ञानवादेन सहास्य साम्यं सिद्ध्यत्येव गौडपादोऽयमथर्ववेदीय-माण्डूक्योपनिषदाधारीकृत्यैव स्वकथनीयं कथयतीति सिध्यत्येवास्य वैदिकत्वं ब्राह्मणत्वं वा।

इदं सत्यं तथ्यमस्ति यद् माण्डूक्यकारिकाणां बौद्धग्रन्थीयपद्यैर्भावैश्च सहातुलनीयसम्बन्धो वर्तते। परस्परविरोधिदर्शनयोरेवंविधं साम्यमभूतपूर्वं वक्तुं शक्यते। परमेतेनानुकरणेन स्वीकरणेन वा गौडपादाचार्यः प्रच्छन्नबौद्धो जातो न

---

१. शङ्करात्प्रागद्वैतवादः, पृ. ३०८।

२. विज्ञानवादिनो बौद्धस्य बाह्यार्थवादिपक्षप्रतिषेधपरमाचार्येणानुमोदितम्।

(माण्डूक्यकारिका, शाङ्करभाष्यम्, २४,२८)

३. आगमशास्त्रम् (अवतरणिकायाम्)।

४. शङ्करात्प्रागद्वैतवादः, पृ. ३०३।

वेति वक्तुं न शक्यते; किन्तु परस्परद्वेषविद्वेषभरिते समयेऽप्येवंविधं मित्रताया निमन्त्रणमाचार्यगौडपादेन प्रदत्तमिति तु तद्वैशिष्ट्यमेवाभिव्यनक्ति[१]।

## समानभावानां माण्डूक्यमाध्यमिककारिकाणां विवेचनम्

अत्रार्यनागार्जुनकारिकाभिः सहैक्ययुक्तानां गौडपादीयानां कासाञ्चन कारिकाणां प्रदर्शनं क्रियते—

माण्डूक्योपनिषत्कारिका[२]—

स्वतो वा परतो वापि न किञ्चिद् वस्तु जायते।
सदसत्सदसद्वापि न किञ्चिद् वस्तु जायते।। (४।२२)

मूलमाध्यमिककारिका[३]—

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन।। (१।३)

मा.का.—

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा।
प्रकृतेरन्यथा भावो न कथञ्चिद् भविष्यति।। (४।७)

मू.का.—

यद्यस्तित्वं प्रकृत्या स्यान्न भवेदस्य नास्तिता।
प्रकृतेरन्यथा भावो नहि जातूपपद्यते।। (१५।८)

मा.का.

हेतोरादिफलं येषामादिहेतुः फलस्य च।
हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते।। (४।१४)

मू.का.

एकत्वे फलहेत्वोः स्यादैक्यं जनकजन्ययोः।
पृथक्त्वे फलहेत्वोः स्यात्तुल्यो हेतुरहेतुता।। (२०।२०)

---

१. बौद्धदर्शन और वेदान्त, पृ. २२३, डॉ. चन्द्रधरशर्मणः।
२. शङ्करपरमाचार्यगौडपादविरचिताद्वैतप्रतिपादिका।
३. आर्यनागार्जुनविरचितो महायानीयशून्यवादस्य प्रमुखो ग्रन्थः।

मा.का.—

यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेतुतः।
कतरत् पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया।। (४।१८)

मू.का.—

यदीन्धनमपेक्षाग्निरपेक्षाग्निर्यदीन्धनम्।
कतरत् पूर्वनिष्पन्नं यदपेक्षाग्निरिन्धनम्।। (१०।८)

मा.का.—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता।। (२।३२)

मू.का.—

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम्।। (१।१)

अपि च—

न बध्यन्ते न मुच्यन्ते उदयव्ययधर्मिणः।
संस्काराः पूर्ववत् सत्त्वो बध्यते न च मुच्यते।।

एवंविधान्युदाहरणानि बहवः सन्ति। सर्वेषां तेषामत्रोल्लेखोऽनावश्यकः। जिज्ञासुभिस्तद्ग्रन्थेष्वेवावलोकनीयम्[1]। अत्र त्वेकमतीव रोचकं तथ्यं समुद्घाट्यायमुपक्रमः समाप्यते।

वस्तुतस्त्वागमशास्त्रे म.म.विधुशेखरभट्टाचार्यैः प्रदर्शिता दृष्टिर्व्याख्या च सुतरां तर्कसङ्गता तथ्यपूर्णा च प्रतिभाति। यद्यपीदं तथ्यं नाङ्गीकुर्वन्त्यद्वैत-पथपथिकाः। विशेषतः 'श्रीशङ्करात्प्रागद्वैतवादः' इतिनामकपुस्तके भट्टाचार्यमत-खण्डनप्रयासो दरीदृश्यते। तथापि पूर्णतया तन्मतं निरस्तमिति वक्तुं न शक्यते। माण्डूक्यकारिकाऽऽगमशास्त्रानुगामिनीत्यत्रापि बहूनां शङ्का वर्तते। एतस्य स्पष्टमुदाहरणमपि समुपलभ्यते तत्रैव। यथा—

कल्पयत्यात्मनात्मानमात्मदेवः स्वमायया।
स एव कुरुते भेदानिति वेदान्तनिश्चयः[2]।।

---

१. वी.एस. भट्टाचार्यविरचितम् आगमशास्त्रम्, श्रीशङ्करात्प्रागद्वैतवादस्तथा बौद्धदर्शन और वेदान्त।

२. माण्डूक्योपनिषत्कारिका (वैतथ्यप्रकरणे), श्लोकः १२।

स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः[१]।।

अस्यां स्थितौ बौद्धग्रन्थोऽयमिति कथनं (वी.एस. भट्टाचार्यस्य) कियत् सङ्गच्छते?

आगमशास्त्रे एवमेव वर्तते महान् भेदोपप्लवः। अत्र तु केवलं बुद्धशब्दमधिकृत्य प्रचलितां विवादसरणिमेव सम्प्रदर्श्य विरम्यते—

अत्रेदमतिरोहितं यद् गौडपादकारिकामधिकृत्य द्विविधा चिन्तनपरम्परा प्रवर्तितेति। एका शङ्करानुयायिनी द्वितीया च सौगतमार्गानुयायिनी। म.म. पण्डित-विधुशेखर - म.म. पण्डितराहुलादयो ग्रन्थमिमं शून्यवादीयसांवृत्तिकवादप्रभावितं मन्यन्ते[२]। शङ्करानुयायिनस्तु न तथा मन्यन्ते। तत्रैकस्यैव श्लोकस्य कथं भिन्नं भिन्नमर्थं प्रतिपादयन्ति विद्वद्वरेण्या इत्यवलोकनीयमत्र—

**द्वयोर्विदुषोर्भिन्ना व्याख्या**

यथा भवति बालानां गगनं मलिनं मलैः।
तथा भवत्यबुद्धानामात्मापि मलिनो मलैः।।

(मा.का. ३।८)

***शाङ्करभाष्यम्***

तथा भवत्ययमात्मा परोऽपि यो विज्ञाताप्रत्यक्क्लेशकर्मफलमलैर्मलिनोऽबुद्धानां प्रत्यगात्मविवेकरहितानां नाऽऽत्मविवेकवताम्।

***वी.एस. भट्टाचार्यः***

एवमेव केचनाबुद्धा अज्ञा मन्यत आत्माक्लेशादिभिर्मलैर्मलिन इति।

ज्ञानेनाकाशकल्पेन धर्मान्यो गगनोपमान्।
ज्ञेयाभिन्नेन सम्बुद्धस्तं वन्दे द्विपदां वरम्।। (मा.का. ४।१)

***शाङ्करभाष्यम्***

सम्बुद्धः सम्बुद्धवानित्ययमेवेश्वरो यो नारायणाख्यस्तं वन्देऽभिवादये द्विपदां वरं द्विपदोपलक्षितानां पुरुषाणां वरं प्रधानं पुरुषोत्तममित्यभिप्रायः।

---

१. माण्डूक्योपनिषत्कारिका (वैतथ्यप्रकरणे) - श्लो. ३१।
२. शङ्करोत्तर वेदान्त में मिथ्यात्व निरूपण, पृ. १२।

***वी.एस. भट्टाचार्यः***

सम्बुद्धः सम्बुद्धवान् द्विपदां मानवानां वरं श्रेष्ठमहं वन्दे। सुगतमिति भावः।

उपलम्भात् समाचारात् अस्तिवस्तुत्ववादिनाम्।
जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा।। (मा.का. ४।४२)

***शाङ्करभाष्यम्***

यद्यपि बुद्धैरद्वैतवादिभिर्जातिर्देशितोपदिष्टा।

***वी.एस. भट्टाचार्यः***

तस्मादेवानुत्पादात्त्रसतां कम्पमानानां विभ्यतां पुंसां सम्बन्धे बुद्धैस्तथागतैर्जातिर्देशितोपदिष्टा।

निवृत्तस्याप्रवृत्तस्य निश्चला हि तथा स्थितिः।
विषयः स हि बुद्धानां तत्साम्यमजमद्वयम्।। (मा.का. ४।८०)

***शाङ्करभाष्यम्***

स हि यस्माद् विषयो गोचरः परमार्थदर्शिनां बुद्धानां तस्मात् तत्साम्यं परं निर्विशेषमजमद्वयञ्च।

***वी.एस. भट्टाचार्यः***

स एव बुद्धानां सुगतानां विषयो भूमिः।

अवस्त्वनुपलम्भञ्च लोकोत्तरमिति स्मृतम्।
ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्तितम्।। (मा.का. ४।८५)

***शाङ्करभाष्यम्***

सदा सर्वदैतल्लौकिकादिविज्ञेयान्तं बुद्धैः परमार्थदर्शिभिर्ब्रह्मविद्भिः प्रकीर्तितम्।

***वी.एस. भट्टाचार्यः***

स्मृतं शास्त्रेषु सौगतेषु। एवं बुद्धैः सुगतैर्ज्ञानं ज्ञेयं च सदा विज्ञेयमवगन्तव्यं प्रकीर्तितं प्रख्यापितम्।

अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः।
आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः।। (मा.का. ४।२८)

***शाङ्करभाष्यम्***

प्रकृतिनिर्मलाः स्वभावशुद्धा आदौ बुद्धास्तथा मुक्ता यस्मान्नित्य-बुद्ध-शुद्ध-मुक्तस्वभावाः।

***वी.एस. भट्टाचार्यः***

इति नायका बुद्धाः सुगताः (अलातशान्तावुपक्रमे ४।१) स किल भगवान् बुद्धो ज्ञानेन सर्वान् सम्बुद्ध इति व्यक्तम्।

क्रमते नहि बुद्धस्य ज्ञानं धर्मेषु तायि(प)नः।
सर्वे धर्मास्तथा ज्ञानं नैतद् बुद्धेन भाषितम्।। (मा.का. ४।९९)

***शाङ्करभाष्यम्***

ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम्। यद्यपि बाध्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम्। इदं तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः।

***वी.एस. भट्टाचार्यः***

तायिनः स्वाधिगतमार्गदेशकस्य बुद्धस्य सुगतस्य मते ज्ञानं धर्मेषु न क्रमते गच्छति, असङ्गत्वात् (३।३२,४।७२,७९,९६)। न ज्ञानं कमपि विषयं गृह्णातीति भावः। न ज्ञानविषयोर्मिथः संसर्गः। यत्पुनः परमार्थतः प्रतिपत्तव्यं तदिदम्। किम्? सर्वधर्माः सर्वे धर्माः पदार्थास्तथा तेषां धर्माणां ज्ञानमिदं द्वयमपि बुद्धेन न भाषितमुक्तम्।

किमवितथमिदं बुद्धेन तन्नोक्तमिति। हन्त भो! न केवलं तद्द्वयमेव नोक्तम्, अपि तु किञ्चिदपि नोक्तम्। किं बहुना, एकमप्यक्षरं तेन नोक्तम्। अत एवाह स स्वयमेव—

यस्यां च रात्र्यां विगमो यस्यां च परिनिर्वृतिः।
एतस्मिन्नन्तरे नास्ति मया किञ्चित् प्रकाशितम्।। (लं.सू., पृ. २४४)

अत्र पाठकैरवलोकयितुं शक्यं यद् माण्डूक्यकारिकायां सप्तस्थलेषु बुद्ध-शब्दः प्रयुक्तो दृश्यते। तत्र ३।८ पद्यं विहायान्येषां सर्वेषामेव बुद्धशब्दानां श्रीमता भट्टाचार्येण सुगतार्थे प्रयोगः कृतः। शङ्करेण तु ज्ञानिनां नारायणस्य चार्थेऽयं शब्दो गृहीतः। एतदवलोक्य महान् विभ्रमो भवति वास्तविकार्थविषये।

पुनश्चात्रैव श्रीमता शङ्कराचार्येणान्तिमपद्यप्रयुक्तबुद्धशब्दस्यार्थः सुगतार्थे प्रयुक्तः। अन्यत्र च तद्विपरीतार्थो गृहीतः। कथमेतत्? एक एव गौडपादः कथमिमं शब्दं भिन्नार्थेषु प्रयुङ्क्ते? यदि भट्टाचार्योऽङ्गीकर्तव्यस्तदा कथं समाधेयं पदे पदे 'इति वेदान्तनिश्चयः' इति घोषणां कुर्वतीनां गौडपादीय-कारिकाणां तात्पर्यम्? विषयेऽस्मिन्नीरक्षीरविवेचकाः सुधिय एव प्रमाणमिति।

## शङ्कराचार्यस्याविर्भाव ऐतिहासिकं स्वरूपञ्च

आचार्यशङ्करस्याविर्भावकालविषये वर्तन्ते मतभेदाः। ईशाब्दतः पूर्वं पञ्चमशताब्द्या आरभ्येशाब्दस्याष्टमशताब्दीमध्येऽस्याविर्भावकालो दोलायमानो वर्तते। कालनिर्धारणविषये धार्मिकपरम्परानुयायिनामाधुनिकानाञ्च विचाराः परस्परं साम्यं नैव बिभ्रति। आधुनिकाः पाश्चात्त्याः पौरस्त्याश्चेतिहासविदोऽस्य जन्मसमयमेवमुपवर्णयन्ति—

१. श्रीमैक्समूलरमहोदयः ७८८ ईशवीयः
२. श्रीमेकडानलमहोदयः ७८८ ईशवीयः
३. श्री के.वी. पाठकः ७८८ ईशवीयः
४. श्रीकीथमहोदयः ८२० ईशवीयः
५. श्रीरामावतारशर्मा ७०१-७६५ मध्ये
६. श्रीतिलकमहोदयः ६८८ ईशवीयः
७. श्रीराजेन्द्रघोषः[२] ६८६ ईशवीयः
८. श्रीस्वामिप्रज्ञानन्दः २०० ईशापूर्वः
९. श्री टी.आर.चिन्तामणिः ६५५तः ६८८ पर्यन्तम्[१]
१०. श्रीकोलब्रूक-विल्सनौ = ८ तो नवमशताब्दीमध्ये
११. श्रीकृष्णस्वामी ७८८ ईशवीयः
१२. श्रीटेलरः ९०० ईशवीयः

---

१. श्रीशङ्करात्प्रागद्वैतवादः, पृ. ११।
२. Shankara and Ramanuja, P. 787-807.

| | | |
|---|---|---|
| १३. | श्रीटौजसन: | ८०० ईशवीय: |
| १४. | श्रीमैकेञ्जी | ५०० ईशवीय: |
| १५. | श्रीवेङ्कटेश्वर: | ८०५ त: ८९७ मध्ये |
| १६. | श्रीवर्नेलमहोदय:[१] | ७०० ईशवीय: |
| १७. | श्रीवेबरमहोदय:[२] | ७४० त: ७६७ पर्यन्तम् |

अस्तु ! मतभेदानामन्तो नास्ति। अत: शङ्कराचार्यस्य कालनिर्धारणे कानिचन शास्त्रीयान्तरङ्गप्रमाणानि प्रस्तूयन्ते—

आचार्यशङ्करविरचिते उपदेशसाहस्रीनामकपुस्तकस्याष्टादशतमे प्रकरणे बौद्धविदुष: प्रमाणवार्तिकग्रन्थस्य श्लोक: समुल्लिखितोऽस्ति। स चेत्थं तत्रोट्टङ्कित:—

अविभागोऽपि बुध्यात्मा विपर्यासितदर्शनै:।
ग्राह्यग्राहकसंवित्तिर्भेदवानिव लक्ष्यते[३]।।

ऐतिहासिकानां मान्यतानुसारेण धर्मकीर्ते: काल: ६३५ ईसवीत: सप्तमशताब्दीमध्ये निर्धारितोऽस्ति। अत: शङ्करस्तत्पूर्वकालिको भवितुं नार्हति। एवमेव ब्रह्मसूत्रेऽन्यत्र च बहून्यन्तरङ्गप्रमाणानि सन्ति, यै: शङ्कराविर्भावकाल: ७०० त: ८०० ईशवीयमध्ये सुसिध्यति[४]।

सम्प्रति ७८८ ईशवीयवत्सर: शङ्कराविर्भावकालत्वेन सर्वै: सम्मान्यते; परन्त्वयं कालोऽपि विचारार्ह एव[५]।

इदमत्रावधेयं यत् शङ्कराविर्भावसमये जैन-बौद्धधर्मयो: प्रचुर: प्रचार आसीद् भारतवर्षे। जैनधर्मापेक्षया बौद्धधर्मप्रभावोऽधिक आसीत् समाजे। बौद्ध-धर्मेण वैदिको धर्म: प्रचोदित: शास्त्रार्थाय। तदानीं बौद्धधर्म: प्राप्तराज्याश्रय आसीत्[६]।

---

१. South Indian paleography.
२. History of Indian literature, P.15.
३. प्रमाणवार्तिकम् (प्रत्यक्षपरिच्छेदे ३५४-श्लोके)।
४. आद्य शङ्कराचार्य आविर्भावकाल (समीक्षा व निर्णय), शृङ्गेरीमठप्रकाशिते।
५. शङ्करात्प्रागद्वैतवाद:, पृ. १५।
६. आदि शङ्कराचार्य—जीवन और दर्शन, पृ. १३।

वस्तुतस्तु बुद्धदेवोपदेशेषूपनिषत्सु च बहुसाम्यमस्तीति विषयो नाविदितो विदुषाम्। तथाप्येतयोर्मध्ये बहुवैमत्यमपि वर्ततेऽस्मिन्विषये नास्ति शङ्कालेशः। मूलतो ब्राह्मणाः श्रुतिप्रमाणपक्षपातिनः, आत्मास्तित्वसमर्थकाश्च भवन्ति। बौद्धास्तु विषयेऽस्मिन् सुतरां विरुद्धं मतं धारयन्ति। अतो हेतोर्द्वयोर्मध्ये शास्त्रार्थप्रसङ्गः समुद्भूत इति नाश्चर्यकरो विषयः।

इदं सत्यं तथ्यमस्ति यच्छङ्कराचार्याविर्भावकाले बौद्धधर्मो गलितोत्साह आसीत्। निर्विशेषाद्वैतवादेन सह बौद्धधर्मीयसिद्धान्तानां साम्यमप्यासीदेव। तच्च यथास्थानं प्रदर्शितमेव।

शङ्करप्रादुर्भावो भारतवर्षीयकेरलप्रान्ते कालटीनामके स्थाने वैशाखशुक्लपञ्चमीदिने समजायतेति प्रसिद्धिः। अस्य पितुर्नाम 'शिवगुरुः', मातुर्नाम च आर्याम्बा आसीत्। प्रसिद्धेयमुक्तिः शङ्करविषये—

अष्टवर्षे चतुर्वेदी द्वादशे सर्वशास्त्रवित्।
षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरभ्यगात्[१]।।

शङ्कराचार्याविर्भावविषये बहुभिर्विद्वद्भिर्बहुत्र सम्यग् विचिन्तितमस्ति। अतस्तेषामत्रोल्लेखः पिष्टपेषणमेव भवेदिति धिया विरम्यते।

**शङ्कराचार्यकृतयस्तद्वैशिष्ट्यञ्च**

सामान्यतः शङ्कराचार्यविरचितानां ग्रन्थानां संख्या 'शतद्वयं' वर्ण्यते; परं किमेते ग्रन्था गोविन्दपादशिष्येणाद्यशङ्कराचार्येणैव विरचिताः? उत वा पश्चाद्वर्तिभिरपि तत्र योगदानं दत्तमिति बहुविवादग्रस्तो विषयः। यतो हि बहुभिराचार्यैर्गोविन्दपाद एव स्वगुरुत्वेन स्वीकृतः। वास्तविकं नाम न प्रकाशितं गुरुश्च गोपितः। अस्यामवस्थायां ग्रन्थस्यान्तरङ्गपरीक्षामन्तरा नास्ति कोऽपि पन्थाः। यतो ह्याद्यशङ्कराचार्यशैली नितान्तं प्रौढा, प्रसादगुणोपेता, सुबोधा च वर्तते। परन्त्विदं कार्यमपि तत्सर्वपुस्तकावलोकनमन्तरा ह्यसम्भवम्। सामान्येनाद्य-शङ्कराचार्यरचितग्रन्थाश्चतुर्षु भागेषु विभक्तुं शक्याः (क) भाष्यग्रन्थाः (ख) स्तोत्रग्रन्थाः (ग) प्रकरणग्रन्थाः (घ) तन्त्रग्रन्थाश्च। भाष्यग्रन्थाश्च भागद्वये विभक्तुं शक्याः—(क) प्रस्थानत्रयीभाष्याणि (ख) इतरभाष्याणि च।

अतः परं शङ्कराचार्यकृतीनां वैशिष्ट्यवर्णनं क्रियते—

---

१. आद्य शङ्कराचार्य आविर्भावकाल (समीक्षा व निर्णय) पृ. ८, शङ्करात्प्रागद्वैतवेदान्तश्च, पृ. १५।

## प्रस्थानत्रयीभाष्यम्

### १. *शारीरकमीमांसा*

भाष्यमिदं व्यासकृतब्रह्मसूत्राणां तात्पर्यप्रकाशकमद्वितीयञ्चास्ति। वेदान्तदर्शनप्रयोजनमुपनिषद्वाक्यार्थनिर्णयपूर्वकं ब्रह्मजीवैक्यरूपाखण्डार्थ-बोधोत्पादकमस्ति। अत एवास्य द्वितीयं नामोत्तरमीमांसास्ति। मीमांसापदस्य भारतीयदर्शने पारिभाषिकोऽर्थोऽस्ति। तच्च जिज्ञासाविषयविषयक-संशयासम्भावनाविपरीतभावनादिनिवर्तको विचारः। प्रधानतया वेदार्थौ द्वौ स्तः— १. कर्मकाण्डसम्बन्धिपूर्वमीमांसाया विषयो धर्मः, २. ज्ञानकाण्डीयोपनिषत्स-म्बन्ध्युत्तरमीमांसाविषयकं ब्रह्म।

फलतः पूर्वमीमांसाजिज्ञास्यो धर्मोऽस्ति, उत्तरमीमांसाजिज्ञास्यञ्च ब्रह्मास्ति। उत्तरमीमांसायाः प्रथमसूत्रमस्ति— अथातो ब्रह्मजिज्ञासा[१]। भाष्येऽस्मिन्नाचार्य-शङ्करेणाद्वैतसंस्थापनाय भगीरथप्रयासः कृतोऽस्ति। स चाद्वैतवादः, केवलाद्वैतवादः, निर्विशेषाद्वैतवादः, ब्रह्माद्वैतवादः, औपनिषदद्वैतवाद इत्यादिभिरभिधेयैरभिहितोऽस्ति शास्त्रेषु। यतो ह्यत्र केवलं निर्विशेषं ब्रह्मैवैकं तत्त्वमुपनिषत्प्रतिपाद्यमिति साधितं स्वीकृतञ्च। ब्रह्मातिरिक्तः सर्वो दृश्यमानो जगज्जीवप्रपञ्चो मिथ्या[२]।

अस्योपरि विंशतितोऽधिकाष्टीकाः सञ्जातास्तासु पण्डितवाचस्पतिमिश्रकृता 'भामतीटीका' शाङ्करतात्पर्यप्रकाशनाय सर्वतो महत्त्वपूर्णेति विद्वांसो वदन्ति। भाष्यमिदं शारीरकभाष्यनाम्नापि ख्यातमस्ति[३]।

### २. *श्रीमद्भगवद्गीताभाष्यम्*

भाष्येऽस्मिन् शङ्करेण गीताया निवृत्तिपरा व्याख्या कृतास्ति। तेनात्रेदं साधितुं बहुप्रयत्नः कृतो यद् ब्रह्मज्ञानं तत्त्वज्ञानेनैव सम्भवति। न तु ज्ञानकर्मसमुच्चयेन। भाष्येऽस्मिन् तेन कर्मसिद्धान्तः सोत्साहं खण्डितः। यथाह सः—'तस्माद् गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणाऽऽत्मज्ञानस्य समुच्चयो न केनचिद् दर्शयितुं शक्यः'[४]।

---

१. ब्र.सू.शा.भा. (हनुमानदासषट्शास्त्रीकृतहिन्दीयुतम्), पृ. २३।

२. शङ्करात्प्रागद्वैतवादः, पृ.२३।

३. आदि शङ्कराचार्य जीवन और दर्शन, पृ. २५७।

४. गीता, द्वितीयाऽध्याये (उपोद्घाते) शाङ्करभाष्यम्।

शङ्करात्पूर्वं गीतामाश्रित्य यानि भाष्याणि विरचितानि तेष्वेकमपि नोपलभ्यते सम्प्रति। भर्तृप्रपञ्चभाष्यस्योल्लेखः खण्डनञ्चाचार्येण स्वयं कृतमस्ति। भर्तृप्रपञ्चानुसारेण ज्ञानकर्मसमुच्चयेन मोक्षप्राप्तिः सम्भवति। शङ्कराचार्यस्तु ज्ञानैकपक्षपाती वर्तते। अयमेव भेदो वर्तते। एकायनसम्प्रदायमते आत्मा परमेश्वरस्यांशस्तदाश्रितश्चास्ति। उपनिषद आत्मब्रह्मणोरभिन्नतां निरूपयन्ति। पुनश्च गीतायां जीवब्रह्मणोर्भेदप्रदर्शकवाक्यान्यपि मिलन्ति। यथा—

'ममैवांशो जीवलोके जीवभूतः सनातनः'[१]।।

ईश्वरशरणागत्यैव जीवोद्धारः सम्भवः, भक्तिविरहितं ज्ञानञ्च शुष्कमित्यपि ध्वन्यते गीतायाम्—

'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज'[२]।।

एतेन सुसिध्यति यत् पाञ्चरात्रसिद्धान्ता अपि गीतायां सुस्पष्टतया लभ्यन्ते; परन्त्विदमपि सहसा वक्तुं न शक्यते यद् गीता शङ्कराचार्यसिद्धान्तसमर्थनं न करोतीति[३]।

### ३. उपनिषद्भाष्याणि

ईश-केन-कठ-प्रश्न-मुण्डक-माण्डूक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य-बृहदारण्यक-श्वेताश्वतर-नृसिंहतापिनीषूपनिषत्सु शाङ्करभाष्याणि समुपलभ्यन्ते; परन्तु केन-श्वेताश्वतर-माण्डूक्य-नृसिंहतापिनीनां भाष्याण्याद्यशङ्कराचार्येणैव लिखितानीत्यत्र विदुषां सन्देहो वर्तते[४]।

शङ्कराचार्यग्रन्थावल्यान्तु—ईश-केन-कठ-प्रश्न-मुण्डक-माण्डूक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य-बृहदारण्यकोपनिषदः शाङ्करभाष्ययुताः प्रकाशिता वर्तन्ते। तत्रोपर्युक्ता शङ्का नोत्थिता[५]। उपर्युक्तासूपनिषत्सु बृहदारण्यकोपनिषद्भाष्यं सर्वेभ्यो विद्वत्तापूर्णं व्यापकं प्राञ्जलञ्चास्ति। अस्या महत्त्वमेवमुपवर्णितम्—

---

१. गीता, १५.७।

२. तदेव, १८.६६।

३. तदेव (शाङ्करभाष्यहिन्दीयुतायां गोरक्षपुर, गीताप्रेस), पृ. ७.।

४. आदि शङ्कराचार्य जीवन और दर्शन, पृ. २५८।

५. The principles Upanishadas with shankar Bhashya— Motilal Banarasidas.

'उपनिषदन्तरेभ्यो ग्रन्थपरिमाणातिरेकादस्य बृहत्त्वं प्रसिद्धमर्थतोऽपि तदस्ति ब्रह्मणोऽखण्डैकरसस्यात्र प्रतिपाद्यत्वात् तज्ज्ञानहेतूनां चान्तरङ्गबहिरङ्गाणां भूयसामिह प्रतिपादनात्, अतो बृहत्वादारण्यकत्वाच्च बृहदारण्यकम्'[१]।

## इतरग्रन्थभाष्याणि

यद्यपि शङ्कराचार्यभाष्यसंख्या शतादप्यधिका समुपवर्ण्यते, तथापि तेषामाद्यशङ्कराचार्यकृतित्वे वर्तते सन्देहो विदुषाम्। निःसन्दिग्धरचनाश्चात्र प्रस्तूयन्ते[२]।

### १. *विष्णुसहस्रनामभाष्यम्*

अत्र भगवतः प्रत्येकनाम्नो युक्तियुक्ता शास्त्रप्रमाणपरिपुष्टा च व्याख्या कृताऽस्ति।

### २. *सनत्सुजातीयभाष्यम्*

सनत्सुजातमुनिप्रदत्तमिदमाध्यात्मिकमुपाख्यानं महाभारतीयोद्योगपर्वणि ४२-तः ४६ अध्यायपर्यन्तं वर्तते। तदाधारीकृत्य विरचितं भाष्यं सनत्सुजातीय-भाष्यमिति प्रथां भजते। अस्योपरि शङ्कराचार्यभाष्यमस्तीति प्रसिद्धिरस्ति।

### ३. *ललितात्रिशतीभाष्यम्*

ललितात्रिशत्यां भगवत्याः ललितायाः शतत्रयं नामानि सन्ति। आचार्यप्रवरो ललितादेव्या उपासक आसीदिति ज्ञायतेऽस्यानुशीलनेन। अस्याः शाङ्करी व्याख्या सुतरां पाण्डित्यपूर्णा चित्ताकर्षणक्षमा च वर्तते।

### ४. *माण्डूक्यकारिकाभाष्यम्*

श्रीशङ्कराचार्यस्य परमगुरुर्गौडपादाचार्यो माण्डूक्योपनिषदाधारीकृत्य कारिकारचनां चकार। अद्वैतसिद्धान्तप्रतिपादनप्रसङ्गे गौडपादीयकारिकाणां महत्त्वपूर्णं स्थानमस्ति[३]। एतद्विषये शङ्करात्पूर्ववर्त्याचार्याणां सङ्क्षिप्तविवरणमिति शीर्षके पूर्वमेव प्रपञ्चितम्।

---

१. The principles Upanishadas with shankar Bhashya— Motilal Banarasidas, P. 607.

२. आदि शङ्कराचार्य जीवन और दर्शन, पृ. २५८।

३. तदेव, पृ. २५९।

**स्तोत्रग्रन्थाः**

आचार्यशङ्करः परमार्थतः परमाद्वैतवादी सन्नपि व्यावहारिकदशायां सगुणेश्वरपूजायां श्रद्धावानासीत्। सः शिवादीनां देवानां देवीनाञ्च भावपूर्णस्तुतीनां रचनां चकार। तत्कृतरचना भावपूर्णा मनुष्यहृदयाप्लावनसमर्थाश्च सन्ति। स्तुतीनां भाषा हृदयस्पर्शिन्यलङ्कारपरिपूर्णा च वर्तते। शङ्कराचार्यनाम्ना सङ्कलितानि मुख्यस्तोत्राणीमानि सन्ति—

१. गणपतिसम्बद्धानि = चत्वारि स्तोत्राणि
२. शिवसम्बद्धानि = अष्टादशस्तोत्राणि
३. देवीसम्बद्धानि = एकोनविंशतिस्तोत्राणि
४. विष्णुसम्बद्धानि = दशस्तोत्राणि
५. युगलदेवसम्बद्धानि = चत्वारि स्तोत्राणि
६. नदीतीर्थविषयकाणि = पञ्च स्तोत्राणि
७. सामान्यस्तोत्राणि = चत्वारि

प्रकाशितान्यप्रकाशितानि च २४० स्तोत्राणि शङ्करनाम्ना मिलन्ति। परमेतेषामाद्यशङ्कराचार्यकृतित्वे वर्तते सन्देहावसरः। बहुषु स्तोत्रेषु कृत्रिमताया अपरिपक्वतायाश्च दर्शनमपि भवति[१]।

निम्नलिखितानि स्तोत्राणि प्रामाणिकानि मन्यन्ते—

***१. आनन्दलहरी***

इदं भगवत्या देव्या अनुपमं स्तोत्ररत्नमस्ति। अस्य सर्वाणि पद्यान्यनुपमचमत्कारभावभावनापूरितानि हृदयावर्जकानि च सन्ति। अस्योपरि टीकिताः प्रायशस्त्रिंशट्टीका अस्य स्तोत्ररत्नस्य महत्त्वं संसूचयन्ति। अस्याष्टीकैका स्वयमाद्यशङ्करेण विरचितेति विश्वस्यते।

***२. गोविन्दाष्टकम्***

शङ्करग्रन्थावल्यां प्रकाशितेऽस्मिन् स्तोत्रे आनन्दतीर्थस्य व्याख्या समुपलभ्यते।

---

१. आदि शङ्कराचार्य जीवन और दर्शन, पृ. २६०।

### ३. *दक्षिणामूर्तिस्तोत्रम्*

दशशार्दूलविक्रीडितच्छन्दोसंवलितमिदं स्तोत्रं वेदान्ततन्त्रशास्त्रयोः सम्मिश्रणस्थलमिव प्रतीयते। बह्वीषु सतीष्वप्याचार्यसुरेश्वरविरचिता मानसोल्लासनाम्नी टीका सिद्धतमा।

### ४. *दशश्लोकी*

अत्रातिसरलया पद्धत्याऽद्वैततत्त्वं समुपवर्णितमस्ति। मधुसूदनसरस्वतीकृता सिद्धान्तबिन्दुनामिका टीकाऽस्या वर्तते।

### ५. *चर्पटपञ्जरिका*

अत्र गीतमयानि सुसुन्दराणि द्वादशपद्यानि सन्ति। अस्याः प्रसिद्धतमोऽयं श्लोकः—

> बालस्तावत् क्रीडासक्तस्तरुणस्तावत् तरुणीरक्तः।
> वृद्धस्तावच्चिन्तामग्नः परमे ब्रह्मणि कोऽपि न लग्नः।।

### ६. *द्वादशपञ्जरिका*

अत्रापि सुन्दरतमानि द्वादशपद्यानि सन्ति। वैराग्योत्पादनमेव प्रयोजनमस्त्येषाम्।

### ७. *षट्पदी*

षट्टीकायुतोऽयमपि ग्रन्थोऽद्वैततत्त्वमेवोपवर्णयति।

### ८. *हरिमीडेस्तोत्रम्*

स्तोत्ररत्नमिदं बहुटीकायुतमस्ति।

### ९. *मनीषापञ्चकम्*

नवपद्यसंवलितमिदं स्तोत्ररत्नं चाण्डालवेशधारिणं शङ्करं स्तोतुमाचार्यशङ्करेण प्रयुक्तमिति विश्वस्यते।

### १०. *सोपानपञ्चकम्*

उपदेशपञ्चकापरनामधेयेऽस्मिन् स्तोत्रे वेदान्ताचरणोपदेशोऽविकलः प्राप्यते[१]।

---

१. आदि शङ्कराचार्य जीवन और दर्शन।

### ११. *शिवभुजङ्गप्रयातस्तोत्रम्*

स्तोत्रेऽस्मिन् चतुर्दशपद्यानि सन्ति। अस्य प्रसिद्धतमोऽयमस्ति श्लोकः—

महादेव देवेश देवाधिदेव स्मरारे पुरारे ययारे हरेति।
ब्रुवाणः स्मरिष्यामि भक्त्या भवन्तं ततो मे दयाशील देव प्रसीद।।

### प्रकरणग्रन्थाः

अद्वैततत्त्वं सरलतया लोका जानीयुरिति धियाऽऽद्यशङ्कराचार्येणातिलघूनां प्रकरणग्रन्थानां रचानाऽक्रियत। तेषु गभीरतमस्याद्वैततत्त्वस्यातिसङ्क्षिप्ततया सरलतया च सर्वजनसुलभरूपेण सङ्ग्रथनं कृतमस्तीति न तिरोहितम्। एवं-विधानां प्रकरणग्रन्थानां संख्या न्यूनतोऽपि चत्वारिंशद् वर्तते। परमेतेषां सर्वेषामाद्य-शङ्कराचार्यकृतित्वे सन्देहलेशो वर्तत एव। अत एवासन्दिग्धानामेव कृतीनां विवरणं समुपस्थाप्यतेऽत्र।

### १. *अपरोक्षानुभूतिः*

ग्रन्थेऽस्मिञ्चत्वारिंशदधिकमेकशतं पद्यानि सन्ति। अत्र ह्यात्मसाक्षात्कार-मार्गस्यात्मस्वरूपस्य च वर्णनपुरःसरमद्वैतसिद्धान्तविवेचनमतीवमनोहारिरूपेण कृतमुपलभ्यते।

### २. *आत्मबोधः*

अत्र अष्टषष्टिश्लोकाः सन्ति। पुस्तकेऽस्मिन् शरीरेन्द्रियमनोबुद्ध्यादिभ्यः पृथगात्मनः सत्ताऽस्तीति नानोदाहरणादिभिः संसाधितमस्ति।

### ३. *उपदेशसाहस्री*

एतन्नाम्ना ग्रन्थद्वयं लभ्यते। उभयत्रैव वेदान्तप्रतिपाद्यचिन्तनमस्ति।

### ४. *पञ्चीकरणप्रकरणम्*

सुरेश्वराचार्यकृतवार्तिकसंवलितमिदं पुस्तकं गद्ये सङ्ग्रथितमस्ति। ग्रन्थ-ममुमाश्रित्य शिवराम-आनन्दगिरिप्रभृतिभिर्विद्वद्भिर्बह्व्यष्टीकाष्टीकिताः सन्ति।

### ५. *प्रबोधसुधाकरः*

अयं ग्रन्थो वेदान्ततत्त्वप्रतिपादनैर्ध्यानमार्गोपदेशैश्च संवलितोऽस्ति, यत्र हि सांसारिकाणां विषयाणां निःसारत्वं वैराग्यप्रशंसा चातीवमनोहारिण्या शैल्या प्रतिपादितमस्ति।

**६. लघुवाक्यदृष्टिः**

अष्टादशानुष्टुब्छन्दोयुतेऽस्मिन् पुस्तके जीव-ब्रह्मणोरेकत्वप्रतिपादनं कृतमस्ति। अनेकटीकासंवलितेऽस्मिल्ँलघुपुस्तके टीकैकाऽऽद्यशङ्कराचार्यस्यापि वर्तत इति विश्वस्यते। विद्यारण्यस्वामिकृता (पुष्पाञ्जलि) टीकाऽप्यत्रोपलभ्यते।

**७. वाक्यवृत्तिः**

पुस्तकेऽस्मिन् त्रिपञ्चाशच्छ्लोकाः सन्ति। अत्र विशेषतस्तत्त्वमसीति पदार्थवाक्यार्थयोर्विशदविवेचनमस्ति।

**८. विवेकचूडामणिः**

ग्रन्थेऽस्मिन्नेकाशीत्यधिकपञ्चशतं श्लोकाः सन्ति। अयं वेदान्तशास्त्रस्योत्कृष्टतमो ग्रन्थो मन्यते। अत्र गुरुशिष्ययोर्लक्षणप्रतिपादनपुरःसरं विवेक-वैराग्य-शम-दम-श्रद्धा-समाधान-उपरति-तितिक्षा-मुमुक्षुत्व-समाधिप्रभृतीनां विषयाणां चित्ताकर्षणक्षमं वर्णनमुपलभ्यते। भारतीयासु मुख्यासु भाषासु अस्य ग्रन्थस्यानुवादाः समुपलभ्यन्ते।

**९. शतश्लोकी**

शतश्लोकसंवलितोऽयं ग्रन्थो वेदान्तविवेचनपरोऽस्ति। आनन्दगिरिकृता टीकाऽप्यस्मिन् पुस्तके मिलति। एका टीका स्वयं शङ्कराचार्येण विरचितासीदिति कल्प्यते।

## सन्दिग्धा ग्रन्थाः

१. अद्वैतपञ्चरत्नम् २. अद्वैतानुभूतिः ३. अनात्मश्रीविगर्हणम् ४. उपदेशपञ्चकम् ५. एकश्लोकी ६. कौपीनपञ्चकम् ७. जीवनमुक्तानन्दलहरी ८. तत्त्वबोधः ९. तत्त्वोपदेशः १०. धन्याष्टकम् ११. निर्गुणमानसपूजा १२. निर्वाणमञ्जरी १३. निर्वाणशतकम् १४. परापूजा १५. प्रश्नोत्तररत्नमालिका १६. प्रौढानुभूतिः १७. ब्रह्मज्ञानावलिमाला १८. ब्रह्मानुचिन्तनम् १९. मणिरत्नमाला २०. मायापञ्चकम् २१. मुमुक्षुपञ्चकम् २२. योगतारावलिः २३. वाक्यसुधा २४. विज्ञाननौका २५. वैराग्यपञ्चकम् २६. सदाचारानुसन्धानम् २७. सर्ववेदान्तसिद्धान्तसारसङ्ग्रहः २८. सर्वसिद्धान्तसारसङ्ग्रहः २९. स्वात्मनिरूपणम् ३०. स्वात्मप्रकाशिका।

## तन्त्रग्रन्थाः

**१. सौन्दर्यलहरी**

अस्य शङ्कराचार्यकृतित्वेऽपि सन्दिह्यन्ते कतिपये विद्वांसः; परन्त्वयं ग्रन्थः शङ्कराचार्यप्रणीत एवेति मन्यन्ते प्रायशश्चिन्तकाः। यथा काव्यदृष्ट्या ग्रन्थोऽयमतीव-

महत्त्वपूर्णस्तथैव पाण्डित्यदृष्ट्याऽप्येतस्य शीर्षस्थं स्थानमस्ति। ग्रन्थेऽस्मिन् तन्त्रस्य रहस्यमयसिद्धान्तानां रोचकतापूर्णशैल्या प्रतिपादनमस्ति। अस्य महत्त्वाधायकं तथ्यमिदमस्ति यदिदमाश्रित्य न्यूनतोऽपि पञ्चत्रिंशद्भिर्विद्वद्धौरेयैः स्वलेखनी-कण्डूतिर्निवारिता। येषु लक्ष्मीधर-कैवल्याश्रम-भास्करराय-कामेश्वरसूरिप्रभृतीनां टीका प्रामुख्यमभजन्त। शिखरिणीछन्दोयुतेऽस्मिन् ग्रन्थरत्ने काव्यतन्त्रयोरपूर्वं सामञ्जस्यं दृष्टिपथमायाति। विविधरसभावप्रभाभासुरोऽयं ग्रन्थः संस्कृतसाहित्ये स्वोत्कृष्टतमं स्थानमारक्षितुं सुतरां समर्थोऽस्तीति नात्र चित्रम्।

**२. *प्रपञ्चसारः***

परम्परानुसारेणायं ग्रन्थोऽप्याचार्यशङ्करस्यैव कृतिर्मन्यते। तन्त्रसिद्धान्तानां विशदविवरणयुतोऽयं ग्रन्थः कश्मीरस्थाने प्रणीत इति विश्वस्यते[१]।

सङ्क्षेपतः शङ्कराचार्यकृतीनां समुल्लेखः सञ्जातः। तत्कृतयः क्षुद्रसाम्प्रदायिकविद्वेषरहिताः, ऐक्यप्रतिपादिकाः, उदात्तभावनाभरिताः, विश्वमान-वेष्वेकतासमुत्पादनक्षमाश्च सन्तीति नात्र सन्देहावसरः। तथ्यमिदं प्रमाणितं स्वयमेवाचार्येण—

न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपञ्चः।
स्वरूपावबोधो विकल्पासहिष्णु-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम्।।

**शङ्कराचार्यदर्शनं तत्परवर्तिप्रभावश्च**

शङ्कराचार्यानुसारेण तत्त्वं ब्रह्मास्ति। तच्च ज्ञानस्वरूपं भवति। इदञ्च मूलरूपेण निर्विकल्पं निर्विशेषं निर्गुणञ्चास्ति; परन्त्विदमेव यदा मायासम्पर्कयुक्तं भवति, तदा सविकल्पं, सविशेषं सगुणताञ्चाङ्गीकरोति। इदमेवेश्वरशब्दवाच्यमस्ति। इदमेव विश्वोत्पत्तिस्थितिलयानां कारणमस्ति[२]।

---

१. आदि शङ्कराचार्य जीवन और दर्शन, पृ. २६४।

२. तत्रैवं सत्युपाधिस्वभावभेददृष्टिलक्षणयाऽविद्यया मोहितः सन् इह ब्रह्मण्यनानाभूते परस्मा-दन्योऽहं मत्तोऽन्यत्परब्रह्मेति नानेव भिन्नमिव पश्यत्युपलभते, स मृत्योर्मरणान्मृत्युं मरणं पुनर्जननमरणभावमाप्नोति प्रतिपद्यते। तस्मात्तथा न पश्येत। विज्ञानैकरसं नैरन्तर्येणाकाशवत्परिपूर्णं ब्रह्मैवाहमस्मीति पश्येदिति वाक्यार्थः।

—कठोपनिषद् २।१।१० (शा.भा.)।

जगाद शङ्करः स्वयमेव—

'यतो यस्माद्वा इमानि ब्रह्मादीनि स्तम्बपर्यन्तानि भूतानि जायन्ते, येन जातानि जीवन्ति प्राणान् धारयन्ति वर्धन्ते। विनाशकाले च यत्प्रयन्ति यद् ब्रह्म प्रतिगच्छत्यविसंविशन्ति तादात्म्यमेव प्रतिपद्यते। उत्पत्तिस्थितिलयकालेषु यदात्मतां न जहति भूतानि तदेतद् ब्रह्मलक्षणम्'[१]।

इदमेव ब्रह्मतत्त्वं विषयिविषयरूपेणावभासते। शङ्कराचार्यसमर्थितोऽद्वैतवादः केवलाद्वैतवादः, निर्विशेषाद्वैतवादः, ब्रह्माद्वैतवादः, औपनिषदद्वैतवाद इत्यादि-नामभिः प्रसिद्धः। यतो ह्यत्र केवलं निर्विशेषं ब्रह्मैवैकं तत्त्वमिति स्वीकृतम्। जगज्जीवश्च मिथ्या। दृश्यमदृश्यञ्च सर्वं ब्रह्मैव। ब्रह्मजगज्जीवानां तावदेव द्वैततया भानं भवति, यावद् ब्रह्मज्ञानं नोदेति। ब्रह्मजगज्जीवानां द्वैततया भानेऽविद्याऽज्ञानं वा कारणम्। अज्ञाने नष्टे भेदबुद्धेरपगमे सति जगज्जीवरूपप्रपञ्चस्याभावो भवति। प्रपञ्चाभावे एकमद्वैतं ब्रह्मावभासते[२]।

एतदर्थमाचार्यशङ्करेणाध्यासवादो विवर्तवादोऽविद्या(माया), अनिर्वचनीय-ख्यातिः, प्रातिभासिकसत्ता, व्यावहारिकसत्ता, पारमार्थिकसत्ता, अभिन्ननिमित्तो-पादानवादः, बिम्बप्रतिबिम्बवादः, अवच्छेदवादः, आभासवादः, अजातिवादः, दृष्टिसृष्टिवादादयश्च प्रतिष्ठापिताः। शङ्करसिद्धान्तप्रस्फोटनायैतेषां स्वल्पविमर्शः क्रियते—

### १. *अध्यासवादः*

आत्मा चैतन्यरूपो वर्तते देहश्च जडः। एतयोर्धर्मौ विपरीतौ। चेतनधर्मोऽस्ति प्रकाशरूपता, जडधर्मश्चास्त्यन्धकारता जडता वा। एतयोर्विषयविषयिणो-र्विपरीतधर्मयोरप्येकत्वेन ग्रहणमज्ञानमूलकमेव। अज्ञानादध्यासः, अध्यासाच्च शरीरेन्द्रियधर्माणामात्मधर्मत्वेन ग्रहणम्। तदनन्तरञ्चाहं काणः, कृष्ण इत्यादीनां शरीरधर्मणामारोपणं क्रियत आत्मनि[३]।

शङ्करेणाध्यासलक्षणं कुर्वता प्रोक्तम्— 'स्मृतिरूपः परत्र पूर्वदृष्टावभावः'। यद्धि ज्ञानं स्मृतिरिव संस्कारयुक्तत्वात् स्मृतिरूपसमीपवर्तिवस्तुविषयकमस्ति। एतेनैवान्यवस्तुषु शुक्लादिषु यदवभासो भवति स एवाध्यासशब्देनावगम्यते[४]।

---

१. तैत्तिरीयोपनिषद् - १।१।१ (शाङ्करभाष्यम्)।

२. आप्ते च नानात्वप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वादिह ब्रह्मणि नाना नास्ति किञ्चनाणु-मात्रमपि। (कठोपनिषद् - २।१।११)

३. ब्र.सू., शा.भा. (उपोद्घाते)।

४. तत्रैव, अध्यासभाष्ये।

**३. *विवर्तवादः***

अध्यासेन सद्ब्रह्मणि असतो जगत्प्रपञ्चस्य प्रतीतिर्भ्रान्तिः। इयञ्च प्रतीतिर्न ब्रह्मणो विकाररूपा परिणामरूपा वा; किन्तु विवर्तरूपा। विकारपरिणामौ वा तात्त्विकान्यथाभावरूपौ भवतः। यथा हि पयसो दधिरूपेण परिणमनम्। विवर्तश्चातात्त्विकोऽन्यथाभावो भवति। रज्जौ सर्पवत् शुक्तौ रजतवच्च। एवमेव सकलमिदं दृश्यप्रपञ्चरूपमखिलं जीवो जगच्च ब्रह्मणो विवर्तरूपं न तु परिणामस्वरूपम्। यतो हि यथा रज्जौ सर्पबुद्धौ सञ्जातायां भ्रान्तिनाशे रज्जुरेवावतिष्ठते। एवमेवाविद्यानिवृत्तौ ब्रह्मसाक्षात्कारे सञ्जाते प्रपञ्चनाशे च केवलं निष्कलङ्कं ब्रह्मैवावतिष्ठते[1]।

माया सन्नास्ति यतो हि त्रिकालाबाध्यं भवति सत्। असदपि नास्तीयं यतो ह्यत्यन्ताभाव एवासदुच्यते। वन्ध्यापुत्रशशशृङ्गखपुष्पतुल्यया मायया न हि कार्योत्पत्तिः सम्भवति। तर्हि किमस्ति मायास्वरूपम्? अत्रैवाचार्यशङ्करेण शुक्तिरजतसर्पादीनां समुद्भावना कृता। अस्यैवापरं नामास्त्यध्यास इति। मायेयं वस्तुतो यत्र यन्नास्ति, तत्र तस्योपलब्धिस्तस्मिंस्तद्बुद्धिरूपाऽस्ति। शुक्तौ रजतं रज्जौ च सर्पविभ्रम एवाध्यासशब्देनोच्यते। यतो हि शुक्तिरज्वोरधिष्ठानेऽज्ञानपारवश्येन रजतसर्पयोरारोपः क्रियते। इयमेव भ्रान्तिरस्ति। अस्य निराकरणं ज्ञानद्वारा भवति। अनेनैव प्रकारेण ब्रह्माधिष्ठानेऽविद्यामूलकानां जीवजगदादीनां प्रपञ्चानामध्यासो जायते। यस्य नाशो ज्ञानद्वारा कर्तुं शक्यते[2]।

शङ्करमायावर्णनप्रसङ्गे प्रसिद्धोऽयं श्लोकः—

सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो।
साङ्गाप्यनङ्गाप्युभयात्मिका नो महाद्भुताऽनिर्वचनीयरूपा[3]।।

**४. *अनिर्वचनीयख्यातिः***

भारतीयदर्शने ख्यातिवादसिद्धान्तोऽस्ति महत्त्वपूर्णः। ख्या-प्रकथने धातोः क्तिन्प्रत्यये कृते ख्यातिशब्दोऽयं निष्पद्यते। शुक्तौ रजतादिज्ञानं ख्यातिरेव वर्तते।

ख्यातिविषये विभिन्नदर्शनानां पृथक् पृथग् धारणा एवं सन्ति—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
तथाऽनिर्वचनीयख्यातिरित्येतत्ख्यातिपञ्चकम्।।

---

१. श्रीशङ्करात्प्रागद्वैतवादः, पृ. २४।

२. बौद्धदर्शन और वेदान्त, पृ. १२२।

३. विवेकचूडामणिः - १०९।

उपर्युक्तासु पञ्चख्यातिष्वात्मख्यातिर्योगाचाराणामसत्ख्यातिर्माध्यमिकानामन्यथाख्यातिर्नैय्यायिकानामख्यातिः प्राभाकराणां सत्ख्यातिर्वैष्णवानामनिर्वचनीयख्यातिश्चाद्वैतवेदान्तिनाञ्च सिद्धान्तविश्लेषणे सहयोगं कुर्वन्ति। अत्र त्वनिर्वचनीयख्यातिमाश्रित्यैव विवेच्यते किञ्चित्—

आनन्दबोधाचार्येणानिर्वचनीयख्यातिलक्षणं विशदीकुर्वता लिखितम्—'सविलासा विद्या निवृत्तेरवबाधस्तद्गोचरतैवानिर्वाच्यता'[1]। अत्र कार्यादिविलासयुक्ताया अविद्याया गोचरता निर्वाच्यताऽस्ति। तस्याश्च निवृत्तिर्बाधशब्दवाच्यतां गच्छति। शुक्तादावध्यस्तरजतादीनामनिर्वाच्यत्वमत्र सुसङ्गतमेव। तन्मूलभूतमायाया अनिर्वचनीयत्वात्। शुक्तौ रजतोदाहरणे रजतसत्तोपर्युक्तानामात्मख्यात्यादीनामिव नास्ति विश्लेषणीयम्। अनिर्वचनीयख्यातिवादिनः शुक्तावध्यस्तरजतं सदसद्विलक्षणं प्रातिभासिकसत्तासम्पन्नं चाङ्गीकुर्वन्ति। अनयैव रीत्याऽविद्याजन्यजगतोऽनिर्वचनीयत्वञ्च संसाधितमस्ति'[2]।

### ५. *सत्तात्रयम्*

#### १. *प्रातिभासिकसत्ता—*

यत्र हि प्रतीतिकालेऽसतोऽपि वस्तुनः सत्यवद् भासनं तथोत्तरकाले च बाधो जायते, तत्र प्रातिभासिकसत्ता। यथा शुक्तौ रजतमिति ज्ञानम्।

#### २. *व्यावहारिकसत्ता—*

ब्रह्मण्यध्यस्तस्य जगतः सत्यत्वव्यवहारो व्यावहारिकसत्ता। पारमार्थिकदृष्ट्याऽस्य जगत्प्रपञ्चस्य मिथ्यात्त्वात्।

#### ३. *पारमार्थिकसत्ता—*

यत्त्रिकालाबाध्यं भवति तदेव पारमार्थिकसत्तानाम्नोच्यते, भूते भविष्यति वर्तमाने च केनापि ज्ञानेन ब्रह्मज्ञानबाधो न भवति, यथा जगतो भ्रान्तिकारणापगमे प्रातिभासिकसत्तायास्तथा ब्रह्मसाक्षात्कारे व्यावहारिकसताया बाधो भवति।

### ६. *अभिन्ननिमित्तोपादानवादः*

वादोऽयं विवर्तवादस्यैव विषयमनुहरति।

---

१. न्यायमकरन्दे, पृ. ७२५ (चौखम्बा-संस्करणम्)।

२. अद्वैतवेदान्ते, पृ. २०४।

### ७. अवच्छेदप्रतिबिम्बाभासवादाः

आचार्यशङ्करस्य जीवपरमात्मनोरभेदविषयकं वाक्यन्तु सामान्यमेव, किन्तु तदनुयायिनो विद्वांसो व्याख्यातारः शनैः शनैरनेकवादसमुद्भावनां कृतवन्तः। तत्रावच्छेदवादो भामतीकारस्याचार्यवाचस्पतिमिश्रस्य, प्रतिबिम्बवादः पञ्चपादिका-कारस्य श्रीमतः प्रकाशात्मयतिनः, आभासवादपक्षश्चाचार्यसुरेश्वरस्य।

### ८. दृष्टिसृष्टिवादः

वादमिममनुसृत्य परस्परं विवदन्ते वेदान्तिनः। अत एवास्य पक्षद्वयं वर्तते। प्रथमपक्षपातिनां मते जगतोऽस्तित्वं दृष्टिसमकालीनमेव वर्तते। जाग्रत्कालिकवस्तूनां ज्ञानमपि स्वप्नकालीनज्ञानमिव कल्पितं मन्यते। दृष्ट्यपेक्ष्यसृष्टिस्वीकरणाच्चैते दृष्टिसृष्टिवादिनोऽभवन्। वेदान्तसिद्धान्तमुक्तावलीकारप्रकाशानन्दप्रभृतयो विद्वांसो दृष्टिमेव विश्वदृष्टित्वेन स्वीकुर्वन्ति। स्वप्रकाशज्ञानरूपा दृष्टिरेव प्रपञ्चसृष्टिरस्ति। द्वितीयपक्षपातिनस्तु विश्वसृष्टिर्दृष्टिसमकालिकी कथमपि भवितुं नार्हतीति साधयन्तो वदन्ति—'स्वप्रकाशज्ञानस्वरूपमात्मनः पृथग् दृश्यजगतोऽस्तित्वं नैव सिध्यति'। उक्तञ्च तैः—

ज्ञानस्वरूपमेवाह जगदेतद्विचक्षणः।
अर्थस्वरूपं भ्राम्यन्तः पश्यन्त्यन्ये कुदृष्टयः[1]॥

एभिरुपर्युक्तोदाहरणमाध्यमैः शङ्करपूर्ववर्तिभिरद्वैतवादिभिः, शङ्करेण तत्परवर्तिभिश्चाद्वैततत्त्वं प्रतिपादितम्। सर्वं कृत्वा निष्कर्षरूपेणेदं वक्तुं शक्यं यत् शङ्कराचार्यमते केवलं ब्रह्मण एव सत्ता वर्तते[2]। नामरूपात्मकत्वान्मायिकत्वाच्चास्य जगतः पारमार्थिकी सत्ता नास्ति। प्रमाणप्रमेयादिसर्वव्यवहारात् पूर्वमेवात्मनः सिद्धिरस्ति। अतः सर्वनिराकरणानन्तरमध्यात्मनिराकरणमसम्भवम्। यतो हि कस्यापि समुत्पन्नस्य वस्तुनो निराकरणं सम्भवम्, न तु स्वभावस्य। किं कदाप्यग्नेरुष्णताया निराकरणं कर्तुं शक्यते? ज्ञातव्येऽन्यथाभावपरिवर्तनं सम्भवति, न तु ज्ञातरि।

प्रमाणसिद्धेः कारणभूत आत्मा कथं प्रमाणबलेनैव सिध्यति? अत आत्मनः सत्ता स्वतः सिद्धा, स्वास्तित्वविषये कस्यापि प्राणिनः सन्देहाभावात्।

---

१. अद्वैतवेदान्ते, पृ. २१४।

२. संसारो न तु परमार्थतोऽस्तीत्यसकृद् अवोचाम (ब्र.सू., शा.भा., २।१।७।२२)। अपि च—परिपूर्णशक्तिकं तु ब्रह्म। न तस्यान्येन केनचित् पूर्णता सम्पादयितव्या। (ब्र.सू., शा.भा., २।१।८।२४)।

**जगत्सृष्टिः**

सृष्टिरियं ब्रह्मणः स्वभावरूपा। ब्रह्मणः प्रवृत्तिर्लीलारूपा। यथाह शङ्करः—एवमीश्वरस्यानपेक्ष्यं किञ्चित्प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति[१]। इयञ्च सृष्टिर्न परमार्थविषया। उदिते ब्रह्मज्ञाने रज्जुसर्पभ्रमवदस्या बाधो जायते। अत्राह शङ्कराचार्यः—

'न चेयं परमार्थविषया सृष्टिश्रुतिः, अविद्याकल्पितनामरूपव्यवहारगोचरत्वाद् ब्रह्मात्मभावप्रतिपादनपरत्वापरत्वाच्चेत्येतदपि नैव विस्मर्तव्यम्'[२]। संसारचक्रमिदमनादि वर्तते। स्मृतावप्यनादित्वं संसारस्योपलभ्यते—

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा।

पुराणेषु चातीतानामनागतानाञ्च कल्पानां न परिमाणमस्तीति स्थापितम्[३]। शङ्करप्रतिपादितं ब्रह्म निष्प्रपञ्चं निर्विशेषमतर्कावगाह्यञ्च वर्तते। तत्र तर्कबुद्धेः प्रवेशो नास्ति। श्रुत्यवगाह्यमेवेदमतिगम्भीरं ब्रह्म न तर्कावगाह्यम्[४]।

अस्तु ! अनपेक्ष्यं ब्रह्म कथं सृष्टिकर्मणि प्रवर्तते? प्रश्नस्यास्य समाधानं स्वभाव-माध्यमेन कृतमाचार्यशङ्करेण; परन्त्वकरणं ब्रह्म कथं प्रवर्तयति जगज्जालम्? इति विषयं पुनः समादधाति शङ्करः—"इत्थङ्करणस्यापि ब्रह्मणः सर्वसामर्थ्ययोगं दर्शयन्ति"। अस्य परिदृश्यमानजगत्प्रपञ्चस्यास्ति न वोपयोगित्वमित्यत्र वक्ति शङ्करः—'दृष्टादृष्टसृष्टिः।' अदृष्टसिद्धैर्दृष्टमिदं सोपानीभूतमिति मन्यन्ते ते[५]।

आत्मा एकोऽद्वितीय आकाशवद् विभुश्च वर्तते। स एवास्ति जगत आधारः। इदमेव व्यापकं चैतन्यं यदा विशुद्धमायोपाधिनोपहितं भवति, तदा सगुणेश्वरशब्दवाच्यतां गच्छति, परन्तु यदेदमेव चैतन्यमिन्द्रियमनोऽहङ्कारादिभिरुपाधिभिरुपहितं भवति, तदा जीवाख्यां भजते। यथोक्तमाचार्येण—'पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते। मनोबुद्ध्यहङ्काराद्यन्तःकरणोपाधिभिर्जीवो विभुत्वभावात् प्रच्युतो भवति। आत्माऽतीन्द्रियचैतन्यमस्ति, जीवश्च व्यावहारिकचैतन्यम्। न त्वयमात्मनोंऽशो न च

---

१. ब्र.सू.शा.भा., २।१।१२।३३, पृ. ४३६।
२. तत्रैव।
३. तत्रैव, २।१।१२।३६।
४. तत्रैव, २।१।११।३१।
५. तत्रैव, २।१।१।२१।

परिणामोऽपि तु प्रतीतिरेव। शरीरादयो भावा अविद्यापरिणामभूता अवास्तविकाः। यदैव जीवगताऽविद्या नश्यति, तदैव तस्यात्मस्वरूपं प्रस्फुटति। मायानिर्मित-जीवस्याविद्याप्रत्युपस्थापितस्याविद्यानाशः स्वभावरूपत्वात्'[१]। शङ्करदर्शनसार-भूतेयमुक्तिः सुतरां महत्त्वपूर्णा—

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः।
ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।।

नूनमेवाचार्यशङ्करोऽप्रतिमो विद्वान् आसीदित्यत्र नास्ति विदुषां सन्देहः। सर्वेषामेव वादविवादानां निपुणनिरीक्षणं विधायाचार्येणायमद्वैतवादः प्रतिष्ठापित इति स स्वयमेव लिलेख—

न चैकं तदन्यद् द्वितीयं कुतः स्याद्
न वा केवलत्वं न चाकेवलत्वम्।
न शून्यं न चाशून्यमद्वैतकत्वात्
कथं सर्ववेदान्तसिद्धं ब्रवीमि[२]।।

शङ्करदिग्विजयेऽप्येतस्य महिमेत्थं वर्णितः—

शाक्यैः पाशुपतैरपि क्षपणकैः कापालिकैर्वैष्णवै-
रप्यन्यैरखिलैः खलैः खलु खिलं दुर्वादिभिर्वैदिकम्।
पन्थानं परिरक्षितुं क्षितितलं प्राप्तः परिक्रीडते
घोरे संसृतिकानने विचरतां भद्रङ्करः शङ्करः[३]।।

अस्तु! सङ्क्षेपेणाचार्यशङ्करप्रतिपादितमद्वैततत्त्वं प्रपञ्चितम्। अतः परं तत्परवर्तिप्रभावान्वेषणं क्रियते।

इदमत्रावधेयं यदाचार्यशङ्करः शास्त्रानुगामी वर्तते। शास्त्रं पुरस्कृत्यैव सः स्वकीयमद्वैततत्त्वं विशदीचकार। यथोक्तं तेन— 'शास्त्रादेव प्रामाण्याज्जगतो जन्मादिकारणं ब्रह्मावगम्यत इत्यभिप्रायः'[४]।

---

१. श्रीमद्भगवत्पाद आद्यशङ्कराचार्य—जीवन और दर्शन, पृ. २५।
२. शङ्करदशश्लोकी (दशमः श्लोकः)।
३. शङ्करदिग्विजये, तृतीयसर्गे, श्लोकः ८३।
४. ब्र.सू.शा.भा., १।१।३।३।

मूलरूपेण जीवेश्वरजगद्विषयिकाः समस्या एव कमप्यन्वेषणशीलं दार्शनिकमवरुन्धते। एतेषां सम्यग् व्याख्यानमृते दार्शनिकपदं कल्पनास्थानमिव प्रतीयते। तत्र केचन जगतः सत्तामङ्गीकृत्य जीवेश्वरयोरपलापं कुर्वन्ति, इतरे तत्त्वमेव निराकुर्वते, अपरे तत्त्वत्रयं स्वीकृत्य प्रवर्तन्ते। भगवान् शङ्कराचार्योऽप्यनया जटिलतमया समस्यया ग्रस्तः सन्नद्वैतसरण्याऽऽत्मानं पारमुत्तारयितुमचेष्टत। परमिदमपि नासीदनाक्षिप्तमनाक्रान्तं वाऽन्यदार्शनिकैः। मुख्यतो वैष्णवाचार्यैरद्वैततत्त्वे बहून्यसङ्गतानि दूषणानि वा समुद्भावितानि[१]।

शङ्कराचार्यात्पूर्वमसंस्कारितमणिरिवावस्थितमद्वैततत्त्वं शङ्करप्रतिभारूपसंस्कारं प्राप्य सर्वजनवेद्यतां प्राप। तद्दर्शनेन न केवलं तत्परम्परानुयायिनः प्रभाविताः, अपि त्वन्ये तत्प्रतिपक्षिणोऽपि सर्वं विहायाद्वैतखण्डन एव दत्तावधाना दरीदृश्यन्ते।

शङ्कराचार्यशिष्यपरम्परा विशाला वर्तते। सर्वेषामेवात्रोल्लेखोऽसम्भवोऽनपेक्षितश्च। अतस्स्वल्पविवरणमेवात्र प्रस्तूयते— शङ्कराचार्येण संहितोपनिषदारण्यकब्राह्मणसूत्रगीतादीनां शास्त्राणां मन्थनं कृत्वा यदद्वैतरूपं नवनीतं समासादितं तद्रक्षण-संवर्धनपरिष्कारार्थञ्च शङ्करशिष्याः सुतरां जागरूका जाता इति नाश्चर्यकरम्। तच्छिष्यपरम्परेयमासीत्—

### १. *सुरेश्वराचार्यः*

मण्डनमिश्रापरनामधेयोऽयं शास्त्रार्थे शङ्करेण निगृहीतस्तच्छिष्यत्वमङ्गीचकार। शङ्करसमर्थकोऽपि सः कतिपयस्थानेषु स्वबुद्ध्याऽभिनववादस्योद्भावनां कृतवान्।

### २. *पद्मपादाचार्यः*

अयं शङ्करशिष्येष्वग्रगण्य आसीत्। अनेन पञ्चपादिका आत्मानात्मविवेकप्रपञ्चसारादयो ग्रन्था लिखिताः।

### ३. *वाचस्पतिमिश्रः*

अयमद्वितीयो विद्वान् अप्रतिमप्रतिभायुक्तश्चासीदिति तद्ग्रन्थावलोकनेन विज्ञायते। अस्य शाङ्करभाष्यतात्पर्यप्रकाशिका 'भामती'टीकाऽद्वैतवेदान्तविदुषां काशीत्वेनावगम्यते। न केवलमसावद्वैतवेदान्ते लिलेखापि तु सर्वाणि प्रमुख-

---

१. शतदूषणी, श्रीभाष्यम्, यतीन्द्रमतदीपिका (वैष्णवग्रन्थाः)।

भारतीयदर्शनानि तल्लेखनीस्पर्शसुखमनुभूयात्मानं गौरवान्वितममन्यन्तेति नाविदितं प्रज्ञावताम्।

***४. सर्वज्ञात्ममुनिः***

नित्यबोधाचार्यापरनामधेयोऽयं शृङ्गेरीमठाध्यक्षपदमपि सुशोभयामास। रचनाऽस्य सङ्क्षेपशारीकमस्ति।

***५. अद्वैतानन्दबोधेन्द्रः***

शारदापीठाधिष्ठितोऽयं चिद्विलास-आनन्दबोधादिभिर्नामभिः ख्यातिमलभत। ब्रह्मविद्यारमण-शान्तिविवरण-गुरुप्रदीपनामकग्रन्थानां प्रणेतृत्वेनायं सम्मान्यते।

***६. आनन्दबोधभट्टारकाचार्यः***

अद्वैतवेदान्तसमीक्षकस्यास्य न्यायमकरन्द-प्रमाणमाला-न्यायदीपावलि-नामधेया ग्रन्थाः सुतरां प्रसिद्धिं गताः।

***७. प्रकाशात्मयतिः***

अस्य पञ्चपादिकाटीकाया विवरणस्थानस्याद्वैतवेदान्ते महती प्रतिष्ठाऽवलोक्यते।

***८. विमुक्तात्मा***

अनेनेष्टसिद्धिमाध्यमेनाज्ञानादीनामनेकदुरूहस्थलानां सारपूर्णं विवरणं प्रस्तुतमस्ति।

***९. आचार्यचित्सुखः***

नैय्यायिकैर्वैष्णवैश्चाक्रमितेऽद्वैतवेदान्तदर्शनेऽवाततारोऽयं चित्सुखाचार्यः। अद्वैतवेदान्तपरिरक्षणार्थमेवानेन 'तत्त्वप्रदीपिका'या रचना व्यधायि। ग्रन्थेऽस्मिन् निपुणतया खण्डितानि प्रतिपक्षमतानि।

***१०. अमलानन्दः***

अनेन वेदान्तकल्पतरु-शास्त्रदर्पण-पञ्चपादिकादर्पणप्रभृतिग्रन्थानां रचनां कृत्वा दृष्टिसृष्टिवादस्योद्भावना कृता।

***११. विद्यारण्यः***

षोडशग्रन्थाः प्रणीता अनेन। तेषु महत्त्वपूर्णो मन्यते पञ्चदशीग्रन्थः। ग्रन्थेऽस्मिन् जगत्कारणभूतस्यात्मनः, परमात्मनः, जीवस्य, बन्धनस्य, बन्धनहेतोः,

आत्मविचारस्य, अधिकारिपुरुषस्य, सच्चिदानन्दमोक्षादीनां मोक्षसाधनविषयाणाञ्च सम्यग्विवेचनं कृतमस्ति।

### १२. *प्रकाशानन्दः*

अनेन प्रणीता 'वेदान्तसाहित्यमुक्तावली' वेदान्तशास्त्रस्य प्रामाणिकं ग्रन्थरत्नमस्ति। अद्वैतसिद्धान्तवर्णनप्रसङ्गेऽत्रानेन स्वपाण्डित्यपरिचयोऽप्यदीयत।

### १३. *मधुसूदनसरस्वती*

शङ्करोत्तरवेदान्ताचार्येषु प्रमुखतमोऽयमस्ति। एतेन सिद्धान्तबिन्दुप्रभृतिभिः कृतिभिर्वेदान्तशास्त्रं मण्डितम्। अद्वैतसिद्धिः प्रमुखो ग्रन्थोऽस्याचार्यस्य। अस्य ग्रन्थानुशीलनेनास्याप्रतिमं पाण्डित्यं सूक्ष्मदृष्टिश्चावगम्यते।

### १४. *ब्रह्मानन्दसरस्वती*

अद्वैतसिद्धिमाश्रित्य कृताऽस्य 'ब्रह्मानन्दी'टीकाऽतीवश्रद्धयाऽवलोक्यते वेदान्तिभिः। तत्त्वमस्यादीनां महावाक्यानां सारगर्भं विवेचनं कृतमनेन पुस्तकेऽस्मिन्।

### १५. *धर्मराजाध्वरीन्द्रः*

वेदान्तपरिभाषालेखकोऽयमासीत् प्रमुखो विद्वान् वेदान्तशास्त्रस्य। ब्रह्मसाक्षात्कारसम्बन्धेऽस्य मतमस्ति यद् ब्रह्मज्ञानिनो लोकान्तरगमनं न भवत्यपि तु प्रारब्धकर्मक्षयपर्यन्तं सुखदुःखयोर्भोगः क्रियते। विगते देहे च कैवल्यता-माप्नोति। एवमेवान्यैरपि बहुभिराचार्यैर्वेदान्ततत्त्वचिन्तनं कृतमस्ति।

एतदतिरिक्ता अपि लेखकाः सम्भवन्तीत्यवधेयमत्र। एतेषां स्थितिकाल एकादशताब्दीतोऽष्टादशशताब्दीमध्ये स्वीक्रियते।

भारतीयसमकालीनदार्शनिकैः स्वामिश्रीरामकृष्णपरमहंस-स्वामिश्रीविवेका-नन्द-महर्षि-अरविन्दप्रभृतिभिरद्वैततत्त्वस्य लोकोपयोगिनी व्याख्या कृता।

अद्वैतमहत्त्वं न केवलं पारमार्थिकमपि तु लोकेऽपि तन्महत्त्वमस्तीति प्रतिपादितं महर्षिणाऽरविन्देन। अरविन्दस्याद्वैतविषयिणी दृष्टिः सुतरां मौलिक्यस्तीति।

●

# बौद्धदर्शनेषु मोक्षस्य स्वरूपम्

**डॉ. रमेशकुमारद्विवेदी**
उपाचार्यः, बौद्धदर्शनविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

धर्मप्रधाने भारते वर्षे धार्मिकपरिक्षेत्रेऽनादिकालतोऽनेकधार्मिक-सम्प्रदायानामुद्भवो विकासश्चाजायत। विभिन्नानां सम्प्रदायानां धर्माचार्याः स्व-स्वाध्ययनानुभवाधारे 'निर्वाणस्य' तथ्यात्मकरहस्योपरि प्रकाशं प्रक्षिप्तवन्तः। तत्र सर्वप्रथममेतत्कथनं नासङ्गतं भविष्यति यत् सामान्यदृष्ट्या मानवजीवनस्य धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्था एव मुख्या लक्ष्याः सन्ति। मनुष्या एतान् चतुरः पुरुषार्थान् प्राप्तुं सततं प्रयत्नशीला दृश्यन्ते। एषु धर्मादिषु चतुर्षु पुरुषार्थेषु प्रथममारभ्य तृतीयं यावत् त्रयमेते परस्परं सापेक्षं वर्तन्ते; परन्तु अन्तिमो मोक्षात्मकः पुरुषार्थो निरपेक्षो वर्तते। यतो हि धर्मार्थकामेषु त्रिषु अननुसन्धानादेव निर्वाणाधिगमसम्भवोऽस्ति। वस्तुतस्तु सुखदुःखयोः पापपुण्ययोरेतेषां सर्वेषां व्यवच्छेद एव निर्वाणोऽस्ति। सम्प्रत्यधो निर्वाणशब्दस्य व्युत्पत्तिपुरस्सरं तत्स्वरूपस्य विभिन्नाचार्याणां मतमतान्तरप्रदर्शनपूर्वकं विवेचनं प्रस्तुतं भविष्यति।

अत्र पूर्वं यदि विचारयेत्तर्हि क्रियमाणैषा व्युत्पत्तिरपि कञ्चित् तोषं जनयति, विदुषामाकाङ्क्षां प्रति—'निवार्यते दुःखत्रयं येनासौ निर्वाण' इति। अर्थाद् एतदनुसारं दैहिक-दैविक-भौतिकादीनां दुःखानामात्यन्तिकाभाव एव निर्वाणस्य स्वरूपं परिलक्ष्यते। अत्रैव यदि बकारवकारयोरभेदं मत्वा विचारयेत्तर्हि निःशेषम् अखिलः सर्वतोभावेन वार्यते (वारणं क्रियते) बाणः पञ्चबाणः कामः सांसारिकी विविधेच्छा येनासौ निर्वाण इति निष्पद्यते, अर्थाद् यस्योपलब्ध्या कामदेवपुरस्सर-सांसारिकसमस्तेच्छानामात्यन्तिकाभावो भवेत्, स एव निर्वाणशब्दस्य वाच्यार्थोऽस्ति। एवमत्राग्रे बौद्धधर्मदर्शनमनुसरन् पाश्चात्यमतानां भारतीय-

मतानाञ्चोल्लेखं कृत्वा निर्वाणस्य विवेचना भविष्यति। निर्वाणस्य विषये पाश्चात्यविदुषां विभिन्नमतानि सन्ति—तत्र हि वर्थेलेमी, सेष्टहिलेरी, चाइल्डर्स, रीजडेविड्स तथा पिशलादीनां पाश्चात्यविदुषां कथनमस्ति यद् बुद्धस्तथा तदनुयायिनः 'निर्वाण' इत्यस्य स्वरूपमभावमात्रं स्वीकुर्वन्ति; परन्तु रीजडेविड्स इदमपि कथयति यद् बुद्धवचनानुसारं निर्वाणः 'श्रामण्यः' अप्यस्ति। यत् किञ्चित् स्यात्; परन्तु सर्वे विद्वांसः स्वीकुर्वन्ति यद् बौद्धोपासकानां दृष्टौ निर्वाण एकरूपेण स्वर्गोऽस्ति।

पाल्यभिधम्मानुसारं निर्वाणस्य लक्षणम्-'दुःखनाशः', 'विरागः', 'रागक्षयः' चेति प्रतिपादितमस्ति। उपर्युक्तविचारसरण्या निर्वाणमैहिकसुखमपि वक्तुं शक्यते; परन्त्विदमेव परमं लक्ष्यमिति तु कथमपि न सम्भाव्यते। केषाञ्चित् सूत्रान्तानामनुसारं निर्वाणः— अजातामृतानन्तरूपात्मकः प्रमाणितो भवति। यूरोपीय-विद्वान् 'वर्नूफ' इत्यस्य कालतः पुनः पुनरेतदेव मतं प्रकटितं यन्निर्वाणः केवलमभावमात्रमेव विद्यते। सन्दर्भेऽस्मिन् 'पूसे' प्रवदति यद् बौद्धो 'योगी' आसीत् तथा अवाच्यस्य अभिज्ञतां स्थापितवान्, यन्न भावात्मकं न चाभावात्मकमिति। वस्तुतो निर्वाणः प्रपञ्चातीतोऽस्ति। 'पूसे' इत्यस्य विचारे, एतत्कथनं कठिनमस्ति यद् बौद्धा निर्वाणम्, अमृतं, योग-क्षेमं, तथा अच्युतमिति कथं वदन्ति; परन्तु निर्वाणोऽभावस्य समानार्थकः शब्दो नास्ति।

रीजडेविड्स इत्यनुसारम्—अमृतम्, आर्याणामाहारो वर्तते तथा निर्वाणो वीतरागपुरुषस्य सम्यक् प्रज्ञा वर्तते। सन्दर्भेऽस्मिन् रीजडेविड्स इत्यस्य कथनानुसारं बुद्धस्य आदर्श आध्यात्मिकमासीत्। तथा तस्य निर्वाणस्यार्थोऽस्मिन् लोके प्रज्ञया तथा सम्यक् शान्त्या मोक्षोपलब्धिरासीत्; परन्तु तस्यानुयायिनस्तस्य तद्विचारान् अबुद्ध्वा अमृतानन्तादि-व्याख्याः कृतवन्तः। सेनार्त इत्यस्यानुसारं निर्वाणशब्दस्यार्थो भारतवर्षे सदैव परमं क्षेमं तथा मोक्ष एवाबुध्यत, यच्च अभावसंज्ञातो दूरवर्ती वर्तते। एतन्मते बौद्धधर्मस्योद्गमस्थानं योगः स्वीकृतमस्ति, यतो हि योगी सततं मोक्षार्थं प्रयत्नवान् भवति। प्रसङ्गेऽस्मिन् वर्थस्यापि कथनं ध्येयमस्ति—तन्मते एतदुक्तमस्ति यद् ये निर्वाणमभावमात्रं नाङ्गीकुर्वन्ति, तैस्तद्धर्मस्य संज्ञा विवेचनीया, यल्लक्षणं बौद्धानुसारं शाश्वततत्त्वं वर्तते; परन्त्वत्रायं प्रश्नोऽपि समुदेति किं शाश्वतधर्मो निर्वाणो नास्ति, यच्च पालिभाषायाम् 'अमता'-धातु इत्युदीरितोऽस्ति। वस्तुतोऽध्ययनेन कतिपयवचनैः सुस्पष्टमस्ति यद् बुद्धस्य विचारे निर्वाणः परमार्थ इति।

पूसे-द्वारा स्वीये 'निर्वाण'नाम्नि पुस्तके प्रसङ्गेऽस्मिन् स्वीया आलोचना प्रस्तुता। तन्मते बौद्धधर्मस्य स्वरूपद्वयमस्ति—

१. उपासकानां धर्मः, २. भिक्षूणां धर्मः।

अनयोरुपासकाः स्वर्गप्राप्त्यर्थं जागरूका भवन्ति; परन्तु भिक्षवस्तु निर्वाणमार्गस्य 'पथिका' इति। उपासकाः स्तूप-चैत्यादीनामुपासनां कुर्वन्ति तथा बौद्धतीर्थयात्रां, पञ्चशीलस्य समादानं, पापविरतिम्, उपवासव्रतादिकं, दानं, धर्म-श्रवणं, शीलरक्षणं, दानादिद्वारा पुण्यार्जनं, धर्मश्रवणादिकं यथावद् सम्पाद्या-भ्युदयं लभन्ते। यद्यप्येतत् सत्यमस्ति यद् बौद्धा जीवने कस्मिन्नपि क्षणे निर्वाणं प्रति आशान्विताः; परन्तु निर्वाणमार्गे तदैव प्रवेशो भवितुमर्हति यदा भिक्षुभावो भवेत्। अभिधर्मकोशानुसारम्[1] उपासकः अर्हन् भवितुं शक्नोति। यस्मिन् क्षणे स अर्हन् भवति, तदैव स भिक्षुर्भवति, तदानीं सङ्घे प्रविशति। मिलिन्दप्रश्नोऽपि मतस्यास्य समर्थकोऽस्ति। केषाञ्चिद् विदुषामनुसारमनागामिफलं प्राप्तुं शक्नोति; परन्तु कस्यामप्यवस्थायामर्हतत्वं न सम्भाव्यते। केवलं भिक्षुरेव अर्हद् भवितुं शक्नोति, एवं भिक्षवे एव निर्वाणमार्गोऽस्ति।

आर्यमार्गस्य चर्यैव निर्वाणस्य चर्यास्ति। सङ्घभद्रानुसारं निर्वाणस्य विचारविमर्शे विचिकित्सोत्पादः कदापि न कर्तव्यः। वस्तुतो निर्वाणलाभाय एव श्रमणाः संसारं परित्यजन्ति सङ्घे च प्रविशन्ति। निर्वाणः स्वर्गस्य विपर्यय इवास्ति। जीवस्य यच्च दीर्घकालिकं संसरणमस्ति तत्र स्वर्गमेकं स्थानमस्ति, निर्वाणस्तु संसारस्यान्तो वर्तते। स्वर्गः पुण्यस्य विपाकोऽस्ति; परन्तु निर्वाणः पापपुण्ययो-र्दूरे वर्तते। निर्वाणस्य एकमात्रं लक्ष्यमस्ति क्लेशरागयोर्विनाशः। निर्वाणस्य प्राप्तिः प्रतिजनैः स्वयमेव करणीया। निर्वाणः कः? प्रश्नेऽस्मिन् कथनमिदं निःसन्दिग्धं यत्— ‚अयं हि परमः क्षेमः, दुःखस्य संसारस्य चान्तोऽस्ति, जन्मजरामरणोपरि परमो विजयः।

विदुषामत्र विचारवैभिन्न्यमस्ति। केऽपि निर्वाणमभावमात्रम्, अन्येऽमृतमिति स्वीकुर्वन्ति। यत् किञ्चिदपि भिक्षूणां कृते उत्तरोत्तरं यथाक्रममभ्युन्नतिः प्रधानमस्ति। केषाञ्चिन्मते निर्वाणस्यानुसन्धानमनावश्यकमस्ति। अन्ये तु इमममृतपदं वदन्ति तथा च सर्वरागदुःख-पुनर्जन्मादीनां च निरोधमात्रमिति। यदा आनन्देन बुद्धः पृष्टो यत् सुगतस्य धातुगर्भं प्रति भिक्षूणां को भावो भवेत्? तदा तेनोक्तम्— 'हे

१. द्रष्टव्यः-अभिधर्मकोशः–४।४९।

आनन्द! मम धातूनां पूजायाश्चिन्ता न कार्या। श्रद्धालवः क्षत्रियादयो मम धातूनां पूजां करिष्यन्ति। युष्माभिर्मोक्षसाधनायां संलग्नैर्भवितव्यम्'[1]। तत्र च (कथावत्थु-१७।१) इत्यस्य सन्दर्भादवगम्यते यद् अर्हद्द्वारा स्तूपानामुपरि माल्यगन्धादिभिः पूजा क्रियते स्म। एवं वयं निर्वाणचर्यां धर्मात् पृथक्कर्तुं न शक्नुमः। मार्गे स एव प्रवेशार्हो येन पूर्वजन्मनि कुशलमूलस्या[2]रोपणं कृतम्।

## निर्वाणस्य कल्पना

सर्वेक्षणेन प्रतीयते यन्निर्वाणवादोऽपि योगाद् गृहीतोऽस्ति। सामान्यतः सर्वे स्वर्गकामनया सन्तुष्टा भवन्ति। एतत्तु सत्यं यत् कामनाः परस्परं भिन्ना भिन्ना एव जायन्ते। केचित् स्वर्गे अप्सरसो लाभाय, अन्ये अलौकिकसिद्धये, परन्तु यथार्थ-दृष्टियुता भिक्षवोऽध्रुवे ध्रुवान्वेषणं कुर्वन्ति। मोक्षस्य प्राचीनतमा लाक्षणिकसंज्ञा 'अमृत' इत्येवास्ति।

अतो निर्वाणस्य मोक्षसंज्ञा सुनिश्चिता। एतच्च चेतसो विमुक्तिरस्ति। वस्तुतस्तु मृत्योरुपरि विजय एव बुद्धस्य बुद्धत्वमासीत्। बुद्धत्वस्य[3] प्राप्त्यनन्तरं शाक्यमुनेरयमेवोद्घोष आसीत्, यद् अमृतलाभः कृतो मया। यथा हि निर्वापिता ज्योतिरदृश्यत्वं भजते तथैव परिनिवृत्त आर्यः, जीवः, पुद्गलचित्तं वा नावशिष्यते। एवं सांसारिकाः सर्वैः परिचिता आकाराः, अथवा ये कल्पयितुं शक्याः सन्ति, तेषां सर्वेषामतिक्रमणमेव मोक्षः, निर्वाणोऽस्ति। नायमभावोऽस्ति। निर्वाणस्तु सुखवेदनाया अभाव एवास्ति। केषाञ्चिन्मते निर्वाणोऽचेतनावस्था विद्यते, यत्र वेदनाया अभावो वर्तते, तथा विमुक्तः पाषाणवत् स्थितो भवति। सौत्रान्तिका निर्वाणमभावमिति स्वीकुर्वन्ति; किन्तु वैभाषिकास्तं भावमिति स्वीकुर्वन्ति। सौत्रान्तिकानां मते निर्वाणो हेतुफलपरम्परानाश्चोच्छेदोऽस्ति। वैभाषिकाणां मते अस्योच्छेदस्य हेतुर्निर्वाणस्य प्रतिलाभोऽस्ति। एतदनुसारं निर्वाणे प्रतिसन्धेर्मृत्योश्च सर्वथा निरोधोऽस्ति। निर्वाणस्तु अजाताऽविपरिणामी च विद्यते, स च क्लेश-दुःखभावानां च निरोधकः सेतुरस्ति।

## निर्वाणस्य मुख्याकारः

निर्वाणस्य मुख्यतम आकारः क्षयात्मकोऽस्ति। वस्तुतो निर्वाणो निरोधोऽस्ति। निर्वाणोऽप्रादुर्भावो विद्यते। अयं हि तृष्णा-क्षय-दुःखानां

१. द्र. दीघनिकाय-२।१४१।
२. अभिधर्मकोशः-४।७५, ६।२४, ७।३३,३४।
३. मज्झिमनिकाय-१।७२, महावग्ग-१।६, १२।

निरोधोऽस्ति। सर्वास्तिवादिनस्तं प्रतिसंख्यानिरोधं मन्यन्ते। आर्यसमाधावस्य स्वरूपमवलोक्यते; परन्तु यदि तत्त्वसाक्षात्कारः केवलं समाधावेव जायते, तर्हि स तु वाण्या अविषयोऽस्ति। शास्तृद्वारा अस्य निरोधो व्याकृतश्च। निर्वाणः कुशलोऽस्ति, द्रव्यं तथा नित्योऽस्ति, अयं हि निरोधो विसंयोगो मन्यते

**निर्वाणस्य नवस्वरूपम्**

सर्वास्तिवादे वैभाषिकनये च आकाशनिर्वाणौ धर्मावास्ताम्। सौत्रान्तिकैर्धर्मो न स्वीक्रियते। एवमेव माध्यमिकैरपि धर्मो नाभिमन्यते। यतो हि तेषां नये उक्तमस्ति—'अनपेक्षः स्वभावः' इति। एवं हि स्यादेव वैभाषिकमते—यदनुसारं निर्वाणो धर्मे सदैव विज्ञानं निरुद्ध्यते, अथवा सौत्रान्तिकमतानुसारं निर्वाणः क्लेशस्य जन्मनश्चाभावमात्रं स्यादिति। उभयत्रैषा कल्पनास्ति निर्वाणात् पूर्वं किमपि वस्तु सद्-रूपेणासीद् यत् पश्चान्निरुद्धं भवति। अतो निर्वाणः केवलं शून्यमेव नास्ति, अपि तु संस्कृतमपि वर्तते।

माध्यमिकानामनुसारं निर्वाणसंसारयोर्नास्ति सूक्ष्ममात्रमप्यन्तरम्। हेतु-प्रत्ययसामग्रीणां चाश्रयमादाय यज्जन्म, मरणं, प्रबन्धश्च व्यवस्थापितो भवति, तत्रैव यदा हेतुप्रत्यययोरुपेक्षा जायते, तदा निर्वाणो व्यवस्थाप्यते। केवलं हीनयाने एव निर्वाणोऽचैतन्यो न स्वीकृतः, अपि तु न्यायवैशेषिकमतेऽपि मोक्षोऽचैतन्यः सर्वदुःखोच्छेदोऽस्ति[1]। एवं हि सर्वे मनीषिणः स्वस्वानुभवानुसारं निर्वाणं निरूपितवन्तः; परन्तु 'अन्धाभिजने हस्तिप्रवेशः' इतिवद् यैर्यदंशोऽनुभूतः, तैस्तद्रूपो गजः परिभाषितः; परन्तु केनापि गजस्य सम्यक् स्वरूपं न परिभाषितम्। तथैवात्रापि येन विदुषा यदंशोऽनुभूतस्तेन तथा निर्वाणो निरूपितः। निर्वाणस्य परं स्वरूपमद्याप्यनुसन्धेयम्।

●

---

१. वात्स्यायनभाष्यम्–१।१।२।

# जैनधर्मेऽपरिग्रहवादविमर्शः

**डॉ. फूलचन्द्रो जैनः 'प्रेमी'**
उपाचार्यः, जैनदर्शनविभागाध्यक्षश्च
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

❀ ❀ ❀

परम्परानुसारं जैनधर्मोऽनादिरनन्तश्चास्ति। सृष्टेरभिनवकल्पे धर्मोपदेशाय तीर्थङ्कर उत्पद्यते। अनेन प्रकारेण चतुर्विंशतिः तीर्थङ्करास्समुत्पन्नाः। तेषु प्रथमः— ऋषभदेव एव, अन्तिमस्तीर्थङ्करो महावीरश्च। इत्थं जैनधर्मस्य प्रथमप्रवर्तकः तीर्थङ्कर-ऋषभदेव आसीत्।

जैनधर्मः प्राधान्येन आचारविचाराणां प्रतिपादकः परिपोषकश्च धर्मोऽस्ति। अत्र त्रीणि मोक्षसाधनानि—सम्यग्दर्शनज्ञानचारित्राणीति। एतानि त्रीणि साधनानि जैनधर्मे रत्नत्रयमित्येतेन नाम्ना प्रथितानि सन्ति। सम्यक्चारित्रान्तर्गते व्रतरूपेणा-परिग्रहवादस्य प्रतिपादनं भवति।

वस्तुतस्तु लोककल्याणाय अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रहाख्यानां पञ्चव्रतानां परिपालनं सर्वेषां कृते भगवता महावीरेण समुपदिष्टम्। अहिंसा तु सर्वोच्चव्रतमेव। किन्तु एषां पञ्चव्रतानां मध्ये 'अहिसा' अपरिग्रहव्रतस्य मेरुदण्डत्वेन स्वीकृता विद्यते। अपरिग्रहं विना अहिंसायाः सम्यगाचरणं न सम्भवति। भगवता महावीरेण बाह्यहिंसाया निवारणार्थमनेकान्तवादस्य स्याद्वादस्य च रूपेण समतावादस्य निरूपणं कृतम्। तथा चान्तरिकहिंसाया निवारणार्थं अपरिग्रहवादस्यावश्यकता प्रतिपादिता। यद्यपि अन्तरङ्गत्वेन भावात्मकदृष्ट्या चापरिग्रहस्य अहिंसायामन्तर्गतत्वं स्वीकर्तुं शक्यते, तथापि अहिंसायाः परिपूर्णतायै अथ च निःशल्यरूपेण स्वलक्ष्यं प्रति गमनार्थं पृथग् व्रतरूपेणापरिग्रहस्य वैशिष्ट्यं जैनधर्मे स्वीकृतम्। कार्यक्षेत्रभेदाद् बाह्यव्यवहारभेदाच्च द्वयोः पृथक्-पृथग् निरूपणमावश्यकमासीत्।

अपरिग्रहशब्दः परिग्रहस्य निषेधसूचकः। परिग्रहो नाम परि = समन्ताद् मोहबुद्ध्या गृह्यते यः स परिग्रहः, अर्थाद् मोहबुद्ध्या परितो यदा पदार्थादीनां ग्रहणं भवति, स एव परिग्रह उच्यते। आचार्येण उमास्वामिना तत्त्वार्थसूत्रनामक-ग्रन्थे (७-१७) 'मूर्च्छा परिग्रहः' इति प्रतिपादितम्। अत्र का मूर्च्छा? बाह्यानां गोमहिषमणिमुक्तादीनां चेतनाचेतनानां रागादीनामुपधीनां च संरक्षणार्जन-संस्कारादिलक्षणाव्यापृतिर्मूर्च्छा। अत्र मूर्च्छेतिरयं मोहसामान्ये वर्तते। अतः पूज्यपादाचार्यः सर्वार्थसिद्धिग्रन्थे उक्तम्— 'ममेदं बुद्धिलक्षणः परिग्रहः' (६।१५।३३३) ममेदमिति हि सति सङ्कल्पे संरक्षणादयः सञ्जायन्ते। तत्र च हिंसाऽवश्यम्भाविनी तदर्थमनृतं जल्पति, चौर्यं वा आचरति, मैथुने च कर्मणि प्रयतते। तत्त्वार्थवार्तिके (६।१५।३।५२५) अकलङ्कदेवोऽप्याह यद् ममेदं वस्तु अहमस्य स्वामीत्यात्मात्मीयाभिमानः सङ्कल्पः परिग्रह इत्युच्यते। षट्खण्डागमस्य धवलाटीकायां (१२।४,२,८,६।२८२) उक्तं यत् परिगृह्यत इति परिग्रहो बाह्यार्थः क्षेत्रादिः परिगृह्यते अनेनेति च परिग्रहो बाह्यार्थग्रहणहेतुरत्र परिणामः।

**परिग्रहस्य भेदाः**

मूलतः परिग्रहस्य द्वौ भेदौ — बाह्यः, आभ्यन्तरश्च। अत्र बाह्यपरिग्रहस्य दशभेदा भवन्ति—क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यभाण्डरूपेण; किन्तु आभ्यन्तरपरिग्रहस्य चतुर्दश प्रकारा भवन्ति। यथा मिथ्यात्व-हास्य-रति-अरति-शोक-भय-जुगुप्सा-स्त्री-पुन्नपुंसक-वेदाक्रोध-मान-माया-लोभाः। मूलाचारेऽपि (५।२१०,२११) वट्टकेरस्वामिना उक्तम्—

> मिच्छत्तवेदरागा तहेव हस्सादिया य छद्दोसा।
> चत्तारि तह कसाया चोद्दस अट्ठमन्तरा गंथा।।
> खेत्तं वत्थुधणधण्णगदं दुपदचतुप्पदगदं च।
> जाणसयणासणाणि य कुप्पे भंडेसु दस होति।।

वट्टकेराचार्या अपरिग्रहस्य असङ्गस्य वा व्याख्यां वैज्ञानिकदृष्ट्या प्रतिपादयन्ति। यथा—

> जीवणिबद्धाऽबद्धा परिग्गहा जीवसम्भवा चेव।
> तेसिं सक्कच्चागो इयरम्हि य णिम्ममोऽसंगो।। (मूलाचारः-१)

जीवनिबद्धः परिग्रहः, जीवाबद्धः परिग्रहः, जीवसम्भवः परिग्रहश्च त्रिप्रकाराः परिग्रहा भवन्ति। अर्थाद् जीवनिबद्धाः प्राण्याश्रिता मिथ्यात्व-वेद-राग-हास्य-रति-

अरति-शोक-भय-जुगुप्सा-क्रोध-मान-माया-लोभादयो दासीदास-गोऽश्वादयो वा। जीव-अबद्धा अर्थाद् अनाश्रिता जीवपृथग्भूताः क्षेत्रवास्तु-धनधान्यादयः परिग्रहाः। तृतीयो जीवसम्भवाः, अर्थात् जीवोद्भवा मुक्ताफल-शङ्खशुक्तिचर्मदन्तकम्बलादयः क्रोधादयो वा श्रामण्यायोग्याः, तेषां सर्वेषां शक्त्या त्यागः, अर्थात् सर्वात्मस्वरूपेणानभिलाषः सर्वथा परिहारः त्यागो वा। तथा च संयमज्ञानशौचोपकरणेषु ममत्वरहितत्वं निःसङ्गत्वमसङ्ग(अपरिग्रह)व्रतत्वम्। अस्मिन् प्रसङ्गे सुत्तपाहुडग्रन्थे कुन्दकुन्दाचार्यैरुक्तं यत्—

जस्स परिग्गहगहणं अप्पं बहुयं च हवइ लिङ्गस्य।
सो गरहिउ जिणवयणे परिगहरहिओ निरायारो।।१९।।

यस्य मुनेरल्पं बहुकं च परिग्रहग्रहणं भवति, स वेषो निन्दितो भवति। परिग्रहरहितो हि मुनिर्निरागारोऽनगारो यतिर्भवति। अर्धमागधीप्राकृतागमस्य दशवैकालिकसूत्रे उक्तम्—

न सो परिग्गहो वुत्तो नायपुत्तेण ताइणा।
मुच्छा परिग्गहो वुत्तो, इइ वुत्तं महेसिणा।। (६।१०)

अर्थाद् ज्ञातृपुत्रेण महर्षिणा महावीरेण अत्र धनधान्यादयः परिग्रहा नोक्ताः, अपि तु परिग्राह्य-वस्तुनः प्रति मूर्च्छारूपेण यन्ममत्वं स एव परिग्रह इति। अन्यस्मिन्नपि आगमे उक्तं यत्—

गंथच्चाओ इंदिय णिवारणे अंकुसो व हत्थिस्स।
णयरस्स खाइया वि य इंदियगुत्तो आसंगत्तं।।

अर्थात् परिग्रहत्यागः किल हस्तिनो वशीकाराय अङ्कुश इवावश्यकः। यथा नगरस्य रक्षार्थं परिखा भवति, तथैवेन्द्रियाणां वशीकारायापरिग्रहो नितान्तमुपादेयः।

वस्तुतः 'त्यागाच्छान्तिः' इति भारतीयदर्शनस्य सङ्क्षेपः। अतोस्मिन् संसारे यावन्ति वस्तूनि विद्यन्ते, तानि मोहकराणि सन्ति। मनुष्यः कुरङ्ग इव रागाधीनोऽमीभिर्वध्यते। इदं मम, इदं मम, इदं ममेति च ब्रुवाणो मृत्युपर्यन्तमपि न तृप्यति। एष द्व्यक्षरो ममकार एव बन्धनं शरीरिणाम्। एवं च ममकार-पराङ्मुखः परां शान्तिमाप्नोति[१]।

१. श्रीमहावीरपरिनिर्वाणस्मृतिग्रन्थे आचार्यश्रीविद्यानन्दस्य 'विश्वधर्म' शीर्षकलेखाद् उद्धृतः।

वस्तुतस्तु मन-इन्द्रियाणां चञ्चलत्वाद् मनस्यसंख्याकाः सङ्कल्पविकल्पाः समुत्पद्यन्ते। ते च सर्वदा नवीनामिच्छां समुत्पादयन्ति। अत एव परिग्रहस्य मूलं कारणं मनसि जायमाना इच्छा एव। मनोवैज्ञानिकदृष्ट्या मनुष्याणां मनसि सर्वप्रथममनधिकृतसामग्रीप्राप्तेरिच्छा भवति। ईदृशीच्छा परिग्रह एव। सामग्रीप्राप्तेरिच्छानन्तरमभीप्सितस्य वस्तुनः सङ्ग्रहाय प्रवृत्तिर्भवति। अयं सङ्ग्रहरूपः परिग्रहो भवति। सहैव सङ्ग्रहीतवस्तुनि ममत्वमुपजायते। तदा ईदृशं ममत्वमेव आसक्तिरूपेण परिणतो भवति। ममत्वस्य भावना यादृशी भवति, तादृशी एव सङ्ग्रहवृत्तिरपि भवति। यद्यपि बाह्यरूपेण कोऽपि मनुष्योऽपरिग्रही भवितुमर्हति; किन्तु ममत्वभावसम्पन्ने सति स एव आन्तरिकरूपेण महापरिग्रही भवितुमर्हति। एतद्विपरीतं ममत्वभावरहितानासक्तवृत्तियुक्तो मनुष्यो योऽतुलवैभवमध्येऽपि अपरिग्रहाणुव्रतस्य धारको भवितुमर्हति, यतो ह्यपरिग्रहो नाम वस्तुनि निहितस्य ममत्वस्य मूर्च्छाया वा परित्यागः, न तु वस्तुनः परित्यागः। वस्तुनोऽनावश्यकसङ्ग्रहस्तदैव शाम्यति, यदा वस्तुनः परित्यागात्पूर्वं तस्मिन् वस्तुनि निहितस्य ममत्वस्य परित्यागो भवति।

यथार्थतो मनुष्याणामाकाङ्क्षा आकाश इवानन्ताः। यथा यथा आसां पूर्तिर्भवति तथा तथा लोभस्य मोहस्य च अभिवृद्धिर्भवति। अथ च एतादृशो मनुष्योऽनैतिकरूपेण धनस्य अर्जने सङ्ग्रहे च संलग्नो भवति। मोहबुद्धिवशात् स अनैतिकरूपेण धनसङ्ग्रहे एव साफल्यं सुखञ्च स्वीकरोति। तदा तस्य मनसि एतादृशस्य भावस्य जागरणं न भवति, यद् ममाऽस्य क्षणिकस्य सुखस्य कृते अनेकेषां जनानां सुखस्य हानिर्भविष्यतीति। आत्मरक्षा-ऐन्द्रियसुख-सुखदभविष्यज्जीविकाया अनिश्चितताद्यनेकानि कारणानि विद्यन्ते, यस्मात् कारणाद् अत्यधिकसङ्ग्रहस्य प्रवृत्तिर्भवति। अस्याः प्रवृत्तेः प्रभावादेव अन्ये नैके नगरवासिनो देशवासिनश्चाभावग्रस्ता दुखिताश्च भवन्ति। अथ च आपणके आवश्यकवस्तूनां कृत्रिमोऽभावो जायते, यस्मात् कारणाद् आवश्यकवस्तूनां मूल्यवर्द्धनमपि भवति। अस्यां परिस्थितौ विषमतायाः प्रादुर्भावो भवति।

सम्प्रति सङ्ग्रहशीलवर्गस्य विरोधे यद् वर्गसङ्घर्षः प्रचलति, तस्य कृते सङ्ग्रहशीलो जनो वर्गो वा उत्तरदायी नान्यः। इदानीं विश्वस्मिन् सर्वत्रैव जना विभिन्नमाध्यमेनासहजभावेन अर्थोपार्जने सङ्ग्रहे च संलग्ना दरीदृश्यन्ते। अस्याः प्रवृत्तेः प्रभावादेव सर्वत्रैव जन-जनमध्ये विषमतायाः स्थितिः समुद्भूता। यत इदानीन्तने युगे व्यक्तेर्वस्तुनश्च मानदण्डो धनमेव सञ्जातः। यद्यपि सामाजिक-

व्यवस्थाया आधार उदरपूर्तेश्च साधनभूतं धनमेवास्ति; किन्तु तृष्णावशाद् यदा साधनमेव साध्यरूपेण परिणतं भवति, तदा तस्य प्राप्त्यर्थं जना विवेकाविवेकयोः, न्यायान्याययोर्मध्येऽभेदं मत्वा येन केन प्रकारेण धनसङ्ग्रहे संलग्ना भवन्ति।

यदा 'पूँजी' कतिपयजनानां मध्ये तिष्ठति, तदा पूँजीवादस्य प्रादुर्भावो भवति। पूँजीवादश्च आर्थिकविषमताया द्योतकः। वादोऽयमार्थिकविषमतायाः, ईर्ष्यायाः, द्वेषस्य, वैमनस्यस्य जन्मदाता भवति। शिवार्यकृत-भगवत्याराधनायां (गाथा ११२१) कथितमस्ति यद् यदा मनसि लोभ-मोह-रागाश्च समुत्पद्यन्ते, तदा आत्मनि 'बाह्यपरिग्रह'-ग्रहणस्य आवश्यकता प्रतीयते। वस्तुतो वयं बाह्यदृष्टावेव अभ्यस्ताः, अथ च तस्यामेव वयं मूर्च्छिताः। बाह्यदृष्टिमतिरिच्य वयं किमपि न पश्यामः। आश्चर्यन्तु इदमेव यदस्या मूर्च्छायाः स्थितिरेव जागरणं स्वीक्रियते।

भगवता महावीरेणोक्तं यत्—'असंविभागी न हु तस्स मोक्खो' (दशवैकालिक-९।२।२३) ये जना वितीर्य न खादन्ति, ते न मुक्तिभाजो भवन्ति। व्यावहारिकदृष्ट्या सिद्धान्तोऽयमित्थं वर्णयितुं शक्यते यद् यस्मिन् राष्ट्रे प्रजामध्ये समानवितरणव्यवस्था नास्ति, तद् राष्ट्रं वस्तुतः स्वतन्त्रं न भवति। जैनधर्मस्य आचारपक्षे दानप्रसङ्गे प्रयुक्तः 'संविभागपरिग्रहपरिमाणनाम्नो व्रतस्यापि विधानं परिग्रहस्य सीमानिर्धारणं करोति। अनिवार्यरूपेण स्वावश्यकतानुरूपं वस्तूनां सङ्ग्रहं कृत्वा अवशिष्टसामग्रया अभावग्रस्तेषु जनेषु वितरणं परिग्रहस्यैव परिणामः। यद्यपि गृहस्थाः पूर्वरूपेण परिग्रहविरता भूत्वा जीवनयापने काठिन्यमनुभवन्ति, किन्तु तस्य परिग्रहस्य परिसीमनं भवितुमर्हति। आचार्य-समन्तभद्रस्वामिनाऽपि रत्नकरण्डश्रावकाचारे कथितं यत्—

> धनधान्यादिग्रन्थं परिमाय ततोऽधिकेषु निस्पृहता।
>
> परिमितपरिग्रहः स्यादिच्छापरिमाणनामापि।।६१।।

अर्थाद् ये जना धनधान्यादिबाह्यदशापरिग्रहेषु ममत्वं परित्यज्य निर्ममत्वे निरताः सन्तो मायारहितस्थिरसन्तोषवृत्तिधारणे तत्परास्ते सञ्चितपरिग्रहाद् विरक्ताः, अर्थात् परिग्रह-त्याग-प्रतिमाया धारकाः श्रावका भवन्ति।

समभावमाधारीकृत्य सर्वहितकारिसर्वोदयसमाजस्य स्थापना प्रजातान्त्रिक-देशस्योद्देश्यं भवति; किन्तु जनेषु सङ्ग्रहप्रवृत्तेराधिक्याद् उक्तलक्ष्यप्राप्तिर्न भवति। सम्प्रति दरिद्रजनानां धनसम्पन्नजनानां मध्ये विभेदं निवारयितुं समाजवादस्य साम्यवादस्य च चर्चा प्रचलति; परन्तु आभ्यां वादाभ्यां यासां विकृतीनां निवारणाय

प्रयासो भवति, तत्र तासां विकृतीनामेव साधनरूपेण प्रयोगो भवति, फलतः पारस्परिकान्तरिककलहस्य, प्रतिद्वन्द्विताया:, प्रतिशोधस्य, आतङ्कस्य च निर्माणो भवति।

वस्तुतो लोकतन्त्रं समाजवादश्च इमे द्वे समतामूलकसमाजरचनायां बाह्यप्रयोगौ स्तः। येषां बाह्यप्रयोगाणां साफल्यं तदैव सम्भविष्यति, यदा मनुष्याणां चेतस्यपरिग्रहस्य भावना प्रतिष्ठिता भवेत्, यतो हि समतामूलकसमाज एव यथार्थमानवतायाः कल्पना कर्तुं शक्यते। सामाजिक-राष्ट्रियसन्दर्भे समताया अयमेवार्थो यत् स्वस्थसमाजस्य स्थापनार्थं प्रतिव्यक्तीनां कृते प्रकृतिप्रदत्तगुणानां विकासाय समुचितोऽवसरः प्राप्यते। अपरिग्रहवाद आर्थिकसमतायाः क्षेत्रं विस्तारयति। भगवता महावीरेणोक्तं यत् स्वावश्यकतातिरिक्तसङ्गृहीतवस्तुनो वितरणं जनकल्याणाय कर्त्तव्यम्। धनसङ्ग्रहेण अपव्ययप्रवृत्तेर्विकासो भवति, अथ च नैतिकमूल्यानां ह्रासोऽपि भवति। वस्तुतो मानवजीवने नैतिकमूल्यानां वैशिष्ट्यमेवमस्ति यद् नैतिकमूल्यं परित्यज्य कोऽपि मनुष्यः कियदपि वैभवं प्राप्नुयात्, स समाजद्वारा निन्दितो भवति, तस्य आत्माऽपि तं धिक्करोति।

गान्धियुगे मानवतायाः परिष्करणाय चत्वारः सिद्धान्ता विशेषतः स्वीकृताः, ते सिद्धान्ताः— सर्वोदयः, सत्याग्रहः, समन्वयः, साम्ययोगाश्च सन्ति। येषां सिद्धान्तानां साफल्यमपरिग्रहवाद एव सन्निहितमस्ति। साम्ययोगस्य व्याख्यायां विनोबाभावेमहोदयेनोक्तं यत्—'अभिधेयं परमं साम्यम्' अर्थाद् अस्माकं चिन्तनस्य लक्ष्यमिदमस्ति यद् मानवजीवने समतायाः प्रतिष्ठा भवेत्। साम्ययोगस्य सफलतायै व्यावहारिकजीवने आर्थिकसमतायाः स्थापना परमावश्यकी। आर्थिकविषमताया निवारणार्थं गान्धिमहाभागस्य 'ट्रस्टीशिप'-सिद्धान्तो महत्त्वपूर्णसाधनरूपेण स्वीकृतः, तस्य मूले अपरिग्रहवादस्यैव भावना निहिता विद्यते।

समाजे अपरिग्रहवादस्य स्थापनार्थमिदमत्यावश्यकमस्ति यज्जनैर्न्यायपूर्वकं स्वावश्यकतानुसारं च धनोपार्जनं कर्त्तव्यम्। स्वेच्छया सम्पत्तिसीमाया निर्धारणं जनानां कृते परमावश्यकम्। यतो ह्यपरिग्रहस्य भावनां विना वास्तविकस्य समाजवादस्य अथवा साम्यवादस्य स्थापना, अथ च दारिद्र्यनिवारणं न भवितुं शक्नोति। इदानीं इदमावश्यकमस्ति यद् अपरिग्रहवादस्य सम्यक् प्रचारो भवेत् तदैव यथार्थरूपेण समतावादस्य, प्रजातन्त्रवादस्य वा स्वप्नस्साकारो भविष्यतीति।

●

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

श्रुतम् मे गोपाय

# साहित्यिकी सुषमा

कूजत्कोकिलकाकलीकलकलाविष्कारसंस्कारभूः
काव्यालापकलाललामललनालालित्यलीलामयी ।
लीलालास्यविलासबालकलनाकल्लोलकल्लोलिनी
सर्वेषां सुधियां पुरस्तु सुषमा साहित्यिकी शोभताम् ।।

# राजशेखरे वैदिकदर्शनस्य प्रभावः

**पण्डितश्रीशिवजी-उपाध्यायः**
अध्यक्षः, साहित्यविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

❀ ❀ ❀

वेदोद्भूतसनातनाध्वनिदधत्तत्त्वार्थसार्थोन्मिषद्
यच्छास्त्रैकनिदर्शनं मतिमतामात्मीकृतं दर्शनम्।
तद्भूयो विविधप्रकृष्टरचनैः काव्यात्मनाट्यात्मकै-
रातेने कविराजशेखरकृती सत्कीर्तिकाष्ठाङ्गतः।।

अथैष कविराजो राजशेखरो नवमोत्तरपूर्वदशमशताब्द्यां जन्मनाऽधिभारत-देशमवतीर्य मध्यप्रदेशीयविदर्भभूमिष्ठवत्सगुल्मनामस्थानकमलञ्चकारेति भूयसां प्रेक्षावतां समीक्षकाणामभिमतं मतम्। स्वजन्मभुवि सविशेषादरप्रदर्शनधिया तस्यास्यामेव काव्यपुरुषस्य साहित्यविद्यावध्वाश्च गान्धर्वविधिना पाणिग्रहणवर्णनात्त-दुपपत्तिः सङ्गच्छते।

यथोक्तं काव्यमीमांसायां तृतीयाध्याये— 'तत्रास्ति मनोजन्मनो देवस्य क्रीडावासो विदर्भेषु वत्सगुल्मं नाम नगरम्; तत्र सारस्वतेयस्तामौमेयीं गन्धर्ववत् परिणिनाय''। इदं स्थानं हि महाभारतोक्तेः प्रामाण्येन नर्मदासरिदुद्गमस्थलम-मरकण्टकमधिपार्श्वमुद्दिष्टं तिष्ठति स्मेति प्रत्यवगम्यते। केचिन्महाराष्ट्रजनिमन्तं तमाचक्षते, स्वपूर्वपुरुषस्य तत्रत्याकालजलदस्य प्रपौत्रत्वेनात्मनस्तेनोक्तत्वादित्य-नुमीयते।

यथोक्तं बालरामायणे बृहत्तरे स्वप्रणीते नाटके स्वयं तेनैव— 'तदाऽमुष्यायणस्य महाराष्ट्रचूडामणेरकालजलदस्य चतुर्थो दौर्दुकिः शीलवतीसूनुरुपाध्यायश्रीराजशेखर इत्यपर्याप्तं बहुमानेनेति'।

वस्तुतो राजशेखरेण स्वजन्मभूविषयानुबन्धिनः सप्रमाणोल्लेखस्य स्पष्टतया अनिर्दिष्टत्वादेवायं तज्जन्मविषयीकृतो विसंवादो विदुषामालोचकानां लोके प्रादुरस्तीति मन्यामहे; किन्तु सत्स्वपि तत्पूर्वपुरुषेष्वकालजलदप्रभृतिषु महाराष्ट्रवास्तव्येषु तदीयजनकस्य दर्दुकस्य च मध्यप्रदेशान्तर्भुवि राज्याश्रयप्राप्ते-स्तत्रोषितत्वाद् राजशेखरस्यापि सैव जन्मभूरिति तद्ग्रन्थोक्तसन्दर्भप्रमाणेन सुदृढीभवतीति नः प्रतिभाति।

तस्य वंशो यायावरीयो द्विजातीयः, तत्रापि क्षत्रियत्वशङ्कोद्भावनं केषाञ्चन कीथप्रभृतिपाश्चात्यानामज्ञानविजृम्भितं मतमनादरणीयमेव। श्रीमद्भागवतोक्तनिदर्शनेन 'वार्ताशालीनयायावरशिलोञ्छनेति चतुर्वृत्तीनामुत्तरोत्तरबलीयस्त्वेन द्विजातीनामे-वाचारतयोपात्तत्वाद् यायावरो न ब्राह्मणेतरः क्षत्रियादिरिति निश्चप्रचं निर्णीयते। राजशेखरस्य विश्रुताऽवन्तिसुन्दरी नाम सुविदुषी कवयित्री पत्नी चौहानकुलोद्भवा क्षत्रियाऽऽसीदिति तद्वचोविन्यासेनैव वेद्यते, न तावता तस्यापि क्षत्रियत्व-मित्यङ्गीकार्यम्। अस्तु, परिकरश्लोकाश्चात्र यथा—

कविराजत्वमासाद्य यायावरकुलोद्भवः।
मध्यदेशमहीमात्मजन्मनाऽलञ्चकार यः।।१।।

काव्यनाट्योभयप्रोद्यत्प्रतिभानप्रभोज्ज्वलः।
चकाशे भारतव्योम्नि यश्च भास्वानिवोदितः।।२।।

श्रुतिस्मृतिपुरावृत्तपुराणोपनिषद्गतम्।
ज्ञानराशीकृतस्त्रोतो यस्य साहित्यमुद्बभौ।।३।।

सोऽयं कविवृषोदात्तचारित्र्यो राजशेखरः।
लोकानालोकयाञ्चक्रे लोकोत्तरयशःश्रिया।।४।।

कविराजराजशेखरस्य समग्रसाहित्यप्रणयनौपयिकसामग्रीसङ्कलनस्त्रोतो विस्तरेण वैशद्येन च सुबहुव्यापकमशेषश्रुतिस्मृत्यागमकाव्योपनिषत्पुराणादिगर्भं सकलशास्त्रसन्दर्भसम्भारसम्भृतं विशिष्य वैदिकाध्वदर्शनवैदुष्यपरिष्कृतं परिचकास्तीति तन्निगूढाध्ययनेन मर्मविदो विपश्चिदपश्चिमाः सुतरां वेत्तुमर्हन्ति।

यावन्तोऽपि काव्यनाट्यशास्त्रप्रणीयमानगद्यपद्यादिप्रतिपाद्यमानाः प्रकाराः सन्ति, तेषु निखिलेष्वतलस्पर्शिपाण्डित्यपाटवप्रकर्षेण प्रणयननैपुण्यमसौ प्राक्तनेदानीन्तननवमोपात्तपुण्यपरिपाकेन प्रादर्शयदित्येतदीयसौशब्द्यसाम्राज्यसमृद्ध-मनवद्यहृद्यनिष्कृष्टार्थनिगूढमनुपदमलङ्कारगुणवृत्तिरीतिरसभावनिर्व्यूढमुदात्तसाहित्य-मधीत्य सम्यक् परिचेतुं शक्यते। सर्वभाषावित्त्वेन यथास्य कविराजत्वं तथाऽशेष-

काव्यप्रकरणकरणचणत्वेन महाकवित्वं समस्तश्रुत्यागमदर्शनादिप्रशस्तशास्त्रवेतृत्वेन महाविद्वत्त्वञ्चेति नूनमाश्चर्यकारिप्रज्ञोत्कर्षवैशिष्ट्यमुज्जृम्भते।

तेनास्मिन्नेकत्र कवित्वविद्वत्त्व-बहुभाषाभिज्ञत्वानेकदेशाचारव्यवहारव्याहार-पटुत्वमिति विविधगुणधर्माणां सामञ्जस्यमुद्भासते। इत्येतत्सर्वमुपर्युक्तनिर्विचिकित्स-तथ्यं याथार्थ्येन यथा—'स्वतन्त्रस्य पुनरेकवत्सर्वा अपि भाषाः स्युः', 'संस्कृतवत्सर्वास्वपि भाषासु यथासामर्थ्यं यथारुचि यथाकौतुकं चावहितः स्यात्', 'प्रतिभाव्युत्पत्तिमाँश्च कविर्भवति' इत्यादिभिः स्वप्रणीतप्रतिनिधीकृतप्रमाणग्रन्थे काव्यमीमांसायां तदुक्तिभिः सुस्पष्टमवसीयते। उदात्तचारित्र्येण चायं सर्वभाषावत् सर्वशास्त्रवच्च सर्वधर्मान् सम्प्रदायाँश्चापि तदानीन्तनान् समानमानान् कृतादरानविशेषेण व्यलोकयदित्यप्यस्य व्यक्तिनिष्ठविशिष्टोदारसौहार्दसद्भाव-साम्यसमन्वयोत्कृष्टदृष्टिरित्युपलक्ष्यते। सम्प्रति सम्प्रतिपन्नसमस्तश्रौतागमो-पनिषत्पुराणस्मृतिशास्त्रवैदुषीकः कविराजराजशेखरः स्वकीयसाहित्यसृष्टिस्त्रोतोभूत-प्रभूतार्षवाङ्मयात् पूर्वाचार्यप्रणीताद् ग्रन्थोच्चयाच्च प्रतिपाद्यविषयविशेषानाजग्राहेति यथाप्रतिभानमुल्लिख्यते— तदेष विषयवस्तुनिरूपणं कौटल्यकृतार्थशास्त्राद् वात्स्यायनविहितकामशास्त्राद् धर्ममीमांसा-ब्रह्ममीमांसाप्रभृतिमानकशास्त्रेभ्यः प्रत्यग्रहीत्। तद्विवेचनवैचक्षण्यं रुद्रटानुसारि प्रसमीक्ष्यमाणमपि वैदिकौपनिषदिक-बोधवैशद्येन तदपेक्षया व्यापकमुद्द्योतते।

किञ्चायं सारस्वतेयकाव्यपुरुषस्याख्यानं वायुपुराणाद् हर्षचरिताच्च अधिकरणावचयनमौपनिषदाख्यानाधिकरणसन्दर्भात् कामशास्त्राच्च विद्याविमर्श-नमर्थशास्त्रादागमसन्दर्भाच्च रसस्य काव्यात्मत्वाङ्गीकरणं भरतस्य नाट्यशास्त्रा-न्नन्दिकेश्वराच्च शिष्याणां वर्गसर्जनं वामनस्य काव्यालङ्कारसूत्रात् तन्त्रशास्त्राच्च वाचः पञ्चप्रकारान् तर्कशास्त्राद् विष्णुधर्मोत्तराच्च अर्थविभाजनस्य प्रकारद्वयमुद्भटभामहप्रणीतालङ्कारग्रन्थाभ्यासात् पदार्थहरणानुगतकविविभागप्रदर्शनं ध्वन्यालोकात् काव्यालङ्काराच्च जम्बूद्वीपभारतवर्षादिवर्णनं वाय्वादिपुराणप्रकरणाद् नाट्यवस्तुवृत्तानि रामायणमहाभारतादिस्वोपज्ञप्रज्ञानानुबन्धीन्यैतिह्यगर्भाच्चाध्य-ग्रहीदिति तत्तदध्ययनानुसन्धानदृगुन्मीलनेन प्रज्ञातुमर्हन्ति सूक्ष्मेक्षिकाः समीक्षकाः। परिकरश्लोकाश्चात्र—

व्युत्पत्तिप्रतिभोद्रिक्तवैदुष्यनिकषीकृतः।
आददे काव्यशास्त्रेभ्यो विशेषान् राजशेखरः।।५।।

कौटल्याद् रुद्रटात् किं वा वामनाद् भामहादपि।
आनन्दवर्धनान्नाट्यशास्त्राच्छ्रौतागमोच्चयात्।।६।।

निर्माणनैपुणीमाप्य साहित्यं स्वीयमुन्नतम्।
निर्ममे संस्कृतापारकाव्याकूपारवृद्धये।।७।।
धर्मदर्शनसम्बन्धानुबन्धिप्रतिभानभृत्।
तत्प्रभावपरिस्पन्दनिस्यन्दो बहुविस्तरः।।८।।

किञ्च धारणार्थलक्षणस्वभावस्वरूपानुभूयमाननिखिलार्थक्रियाभिव्यज्यमान-लोकशास्त्राचारोद्दिश्यमानो धर्मपदार्थः प्राथम्येन ऋग्वेदे प्रथममण्डलीयद्वादश-सूक्तान्त उपात्तः— 'त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन्' इति। यत्किञ्चिद्वस्त्वदत्त्वात्मानात्मनिष्ठवृत्तिरेव धर्म इत्युच्यते, पुनश्चास्य देशकालव्यक्तिपरिच्छिन्ना भूयांसो भेदाः पर्यवतिष्ठन्ते। तत्रेश्वरीयसत्ताभ्युपगमादप्यनभ्युपगमादपि धर्मो निरर्गलो निष्प्रत्यूहश्चाभ्युपेयो भवति, बौद्धजैनादिधर्माणां तादवस्थ्येन दृढास्पदीकृतत्वात्। सत्यपीश्वरसत्तापाये सर्वेष्वपि धर्मेष्वाध्यात्मिकत्वानपायात्तदापाद्यमानलोकोत्तरसुखेच्छापरमशान्तिजगद्बन्धनिवृत्ति-प्रवृत्त्युपचीयमानं द्रष्टृदृश्यदृष्टित्रिपुटीस्फुटीभवदिदं दर्शनमात्मपदमुन्नमयतीति नात्र केषाञ्चिदपि दार्शनिकतत्त्वविदां विसंवादः स्यात्।

स्वलक्षणेन व्यावहारिकधारणार्थोपस्कृतस्य धर्मस्य सैद्धान्तिकदृश्यमानार्थ-तत्त्वनिरूपणपरेण दर्शनेन सहोद्भिद्यमानभेदस्य जागरूकत्वेऽप्युभयोः परस्परोपकार्योपकारकभावसंसर्गः सम्भवति। तदुभयं समग्रं जगदाख्याति व्याख्याति विशिनष्टि विगृह्णात्यनुगृह्णाति चेत्येकान्ततो द्वयोरप्येतयोः साकाङ्क्षनिसर्गसंसर्गः समस्तविश्वप्रशस्तये शान्तये कल्याणाय च प्रभवति। तत्र राद्धान्तिकैकान्त-नियमसंयमादयो नानाप्रकारा विधयः संस्कारा व्याहारव्यवहाराश्च तत्तच्छास्त्रदृशा आविष्कृताः पुरस्कृताः परिष्कृताश्च निर्दिष्टा उपदिष्टाः प्रतितिष्ठन्ति। धर्मदर्शनयोरन्योन्याश्रयत्वेन स्थितिस्थापकत्वमुत्कृष्यते तदपहाने चापकृष्यते, तदेतदुभयं न कदापि पार्थक्यमुपयातीति भारतीयपरम्परायामुरीक्रियते। पाश्चात्त्येषु तदुभयान्यथाभावो भूयान् भवतीति तेषां पृथक् पन्थाः प्रवर्तते।

ऋग्वेदोक्तप्रथमधर्मशब्दोपादानेन वस्तुतो वेद एव तदुद्भवभूमि-स्तत्सम्बन्धानुबन्धिनो दर्शनस्य चानुग्राहकत्वमप्यस्यैव वेदज्ञानराशेरुपपद्यते, अत एवोक्तम् 'वेदोऽखिलो धर्ममूलमिति'। यान्यप्यवैदिकधर्मानुगतानि सौगतादीनि दर्शनानि, तेषामपि मूलं तत्रैवेति निर्वक्तुं युज्यते, तस्य तत्रैव प्रथमोपात्तत्वात्। सारार्थसङ्क्षेपेण जगन्मुक्तिसाधनं दर्शनं सत्पात्रतः शुभाशुभनित्यानित्यप्रकृता-

प्रकृतादिविषयवैशद्यविवेचनेनाध्यात्मिकचेतनोन्मुखीकरणं कुर्वाणं धर्मभावनामातिशय्येन द्रढयतीति नूनमेकस्मादृते तदन्यस्य नैष्फल्यं भवति, तेन धर्मदर्शनमेकवद्भावमापन्नं धार्यमाणतया धर्म एव तत्त्वतो दृश्यमानाकारतया दर्शनमिति सोपपत्तिकं प्रतिपत्तुं शक्यते। एतादृशैतदुभयप्रभावग्रहणप्रवणं सार्वसामयिककविवेधसां प्रणीयमानं गद्यपद्योभयविधं साहित्यं धर्मदर्शनानुश्रितं निर्वर्ण्यमानं स्वारस्यसारकत्वेन सामञ्जस्यसम्पादकत्वेन सौमनस्योद्भावकत्वेन विशेषेण सहृदयत्वापादकत्वेन च तदुभयोपकारकं भवतीत्यत्र को नाम सन्दिहीत। अतश्च कविराजराजशेखरोऽयं स्वीयसाहित्यमशेषेण धर्मदर्शनानुप्राणितप्रणीतमुच्चतरशिखरमारोपयाञ्चकार, तत्रापि पूर्वाचार्यप्रथितवैदिकधर्मदर्शनप्रथानुगमनेन तेन वस्तुतत्त्वानुकूलं तात्कालिकप्रभवद्वैदिकाचारविचारगर्भं धर्मदर्शनमनुश्रित्य स्वस्य सत्यसाहित्यसृष्टिर्व्यधायीति निर्विवादं वक्तुमुपयुज्यते।

परिकरश्लोकाश्चात्र यथा—

वेदोपात्ततया मूलं धर्मस्य श्रौतमिष्यते।
तन्निष्ठं दर्शनं तद्वद् वैदिकाध्वनिरूपितम्।।९।।

अन्योन्याश्रयतोऽन्योन्यमुपकार्योपकारकः।
सम्बन्धः कल्पितो भूयस्तयोः साफल्यमश्नुते।।१०।।

साहित्यमनयोः शश्वद्धर्मदर्शनयोः परम्।
प्रभावमभिसङ्गृह्योपस्करोत्युभयस्थितिम्।।११।।

पूर्वाचार्यप्रथोपेतं वेदोक्तं धर्मदर्शनम्।
राजशेखरसाहित्यान्वितमुन्नतमुद्गतम्।।१२।।

अपि चैतदवश्यं सविशेषवेद्यत्वेनाभिवेद्यं तत्त्वविद्भिर्यदमुस्मिन् भारताख्ये देशे चासृष्टेरधुनावधि धर्मेण दर्शनेन च साहित्यमनुस्यूतमनुबद्धवृत्तवर्णनोपनिबन्धनमासृज्यमानं प्रविकाशते। सम्पूर्णं संस्कृतवाङ्मयसंश्लिष्टसाहित्यमेवास्य प्रमाणत्वेन प्रस्तूयते। तेनैव हेतुना कविराजराजशेखरः काव्यार्थविविधस्रोतोऽनुसन्धानात् श्रुतिस्मृतिपुराणोपनिषत्प्रमाणविद्यासमयविद्यादीनां प्रमुखस्थानानि निर्दिदेश। प्राचामाचार्याणां मतान्युद्धरन्नसौ सुस्पष्टमुल्लिलेख काव्यमीमांसायामष्टमाध्याये—

श्रुतीनां साङ्गशाखानामितिहासपुराणयोः।
अर्थग्रन्थः कथाभ्यास; कवित्वस्यैकमौषधम्।।

किञ्च—

वेदार्थस्य निबन्धेन श्लाघ्यन्ते कवयो यथा।
स्मृतीनामितिहासस्य पुराणस्य तथा तथा।।

एवञ्च—

नमोऽस्तु तस्यै श्रुतये यां दुहन्ति पदे पदे।
ऋषयः शास्त्रकाराश्च कवयश्च यथामति।।

इत्येताभिस्तदुक्तिभिरेव तदीयादरातिशयः कियानस्ति श्रुतिस्मृत्यादि-सन्दर्भग्रन्थान् प्रतीति प्रत्यवगन्तुं सुतरां शक्यते। अपि च तेन स्वतोऽपि साङ्गशाखान् निगमागमान् पर्यालोच्य स्मृतीतिहासपुराणादिवेदार्थोपबृंहकानि तदङ्गानि सर्वाणि शास्त्राणि च पर्यवेक्ष्य स्वसाहित्यविस्तरः प्राकारीति तन्मुखोदीरणादेवावगम्यते।

अद्यत्वे किल कविराजराजशेखरप्रणीताः षड्ग्रन्थास्तन्निर्दिष्टाः श्रूयन्ते, 'विद्धि नः षट्प्रबन्धान्' इत्युक्त्वा तेन तदीयसंख्या प्रमाणिता, किन्तु तेषु सम्प्रति केवलं पञ्चैवोपलभ्यन्ते— 'बालरामायणम्, बालभारतम्, विद्धशालभञ्जिका, कर्पूरमञ्जरी, काव्यमीमांसा' चेति। षष्ठो महाकाव्यत्वलक्षणनिष्ठो हरविलासाख्यो ग्रन्थो दैवदुर्विपाकात्प्रणष्टो नाद्यावधि क्वचिद् दृष्टिपथमगात्। नामानुरूपमनूपोत्तम-देवतयोर्हरोमयोर्विलासलीलोल्लासपरमिदं महाकाव्यं स्वस्य कविराजत्वान्महा-कवित्वपदोत्कर्षेण राजशेखरः प्रणिनायेत्यनुमीयते। उपर्युक्तेषु पञ्चस्वपि ग्रन्थेषु चरमां काव्यमीमांसामतिरिच्य चत्वारोऽपि नाट्यग्रन्थाः, तत्रापि 'कर्पूरमञ्जरी' प्राकृतभाषीयत्वान्नाटिकाभेदान्तरं सट्टकमित्यभिधीयते। सर्वत्रापि कविराजस्य नाट्याभिनेयवस्तुविन्यासतदनुकूलसंवादकपात्रादिचित्रणापेक्षया कवित्वप्रकर्ष एवाक्षिलक्ष्यीकृतस्तदीयशास्त्रीयकवित्वकौशलमुल्लासयति। तत्रापि काव्यमीमांसा परमाकरो ग्रन्थः, अष्टादशाधिकरणात्मकः श्रूयमाणः साम्प्रतं यावद् भागभागुपलभ्यते तावता तस्य महावैदुष्यमवद्योतयति, नेतः पूर्वमेतादृगभिष्टुतो ललितोपन्यासशैलीककाव्यशास्त्रैतिह्यादिविपुलविषयोपस्थापनपरः साहित्य-स्याकरग्रन्थः प्रादुरभूदित्यवधार्यते। काव्यमीमांसोपन्यसनमौपनिषदिक-वाक्यविन्यासमनुश्रियमाणं चूर्णकहृद्यगद्येनोदाहृतपद्यनिबन्धनेन च वस्तुतः काव्योपनिषदित्यभिधानमन्वर्थयति।

तत्र सारस्वतकाव्यपुरुषपरिकल्पनमनल्पप्रतिभानवता कविराजराजशेखरेण वेदपुरुषानुकरणेन कृतमिति प्रत्यवभासते। राजशेखरः शैवो वा वैष्णवो वा शाक्तो

वेति प्रेक्षावतां प्राच्यपाश्चात्त्य-समीक्षकाणामैकमत्यं नास्ति। स हि याथार्थ्येन निजोदारस्वभावोदात्तमानसः समस्तसाम्प्रदायिकसमानदृष्टिवदुक्तसमग्रदेवोपासनानुकूलाचारोचितामभिमतिमादधान आसीदित्यभिज्ञायते। तात्कालिकसमाजप्रवृत्तिः पारस्परिकसकलदेवधर्मसम्प्रदायसहिष्णुतया प्रवर्तमानाऽभूदित्यैतिह्यप्रामाण्येन परिचीयते। बौद्धधर्मस्य ह्रासेन वैदिकप्रभावः प्रसरत्पदः सर्वत्र व्याप्नुवानः प्राभूत्, तत्रापि शाक्ताः शैवास्तान्त्रिका वामदक्षिणाचाराः कौलप्रचाराश्चेत्यादयो विविधोपासनापद्धतिसमाश्रिताः स्वातन्त्र्येण प्रातिष्ठन्त। राजशेखरस्तत्र सर्वत्र धृतादरो बभूवेति तस्योदारव्यक्तित्ववैशिष्ट्येन प्रतीयते। चतुरस्रनैरपेक्ष्येण समीक्षणादेव तदीयसर्वसमन्वयोदीयमानप्रातिभप्रकाशः सर्वासु दिक्षु प्रासरत्।

वैदिकं पन्थानमनुरुन्धानोऽयं कश्चनर्षिरिव साहित्यसृष्टिं वितन्वानो निःशेषजगदुपाकार्षीदिति, तदर्थमनर्थयुक्तिर्नात्युक्तिमनुविन्दति मनागपि, नापि संशीतिलेशं जनयति। परिकरश्लोकाश्च—

तत्र तत्राकरस्थानात्सारार्थान् विषयोचितान्।
सङ्गृह्य प्रतिभोत्कर्षाद् विस्तरेणाततान सः।।१३।।

विरोधादविरोधाच्च पक्षतो निरपेक्षतः।
स्वमतं दर्शयामास केवलं राजशेखरः।।१४।।

पूर्वाचार्यानुरोधेन श्रौतमार्गानुमोदितम्।
तदीयं रचनास्रोतः स्रोतः सारस्वतं महत्।।१५।।

कवीनां शास्त्रकाराणां राजमानोऽधिशेखरम्।
द्विजराज इवारेजे कविराड्राजशेखरः।।१६।।

इत्थं संक्षिप्य यथाप्रज्ञमाहृत्य तत्तदनुकूलग्रन्थसन्दर्भोपन्यस्तविपर्यस्तप्रकृतोपयोगिमतवैविध्यमात्मदृशा सर्वात्मदृशामाश्रितौचित्येन मयाऽयं श्रीकविराजराजशेखरविषयको विमर्शो विदुषां मनाङ् मनस्तोषाय ध्रुवं स्यादित्यलं पल्लवितेन। अन्ते च—

राजशेखरकवीन्द्रभारती भारतीयकविताश्रुतित्रयी।
राजतेऽधिभुवनं स्वरोल्लसच्छान्दसश्रियमिव प्रतन्वती।।इति।

●

# पञ्चभरतम्

**डॉ. पारसनाथद्विवेदी**
सङ्कायाध्यक्षचरः
साहित्यसंस्कृतिसङ्कायस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

❀ ❀ ❀

एवमनुश्रूयते यत्पुरा वैवस्वतमनोस्त्रेतायुगस्यादौ त्रिदशैः सम्प्रार्थितेन करुणार्द्रचेतसा वेधसा 'ऋग्वेदात् पाठ्यम्, सामवेदाद् गीतम्, यजुर्वेदादभिनयान्, अथर्ववेदाच्च रसान्' सङ्गृह्य नाट्यवेदं निर्मायाभिनयार्थं भरतायोपदिष्टम्। ततो लोकपितामहेन पितामहेन सर्वप्रथमं महर्षये नारदाय गीतम्, स्वातये वाद्यम्, भरताय च नाट्यमशिक्षि। भरतश्च तेभ्योऽधिगम्य नाट्यविद्यां प्रथमम् 'अमृतमन्थनम्' नाम नाट्यं प्रायुङ्क्त। तदाऽमृतमन्थनस्य प्रयोगसफलतामालोक्य वेधसाऽऽदिष्टेन भरतेन त्रिपुरदाहस्य भित्तयोऽप्यदर्शि भगवते त्रिपुररिपवे पार्वतीपतये। ततः प्रयोगमिममवलोक्य भृशं तुष्टेन शिवेनादिष्टस्तण्डुर्भरताय पूर्वरङ्गशोभाभिवृद्धये नानालङ्करणसंयुक्तानङ्गहारानशिक्षयत्। तस्मिन्नेवावसरे शिवानुरोधेन भगवत्या पार्वत्या तस्मै लास्यमप्युपदिष्टम्।

कोऽसौ भरतः? इति विचारचर्चायामभिनवगुप्तमहोदयानां कथनमस्ति यद्भरतशब्दो नटमात्रस्य वाचको भरतवंशपरम्पराया द्योतकश्च। भरतस्य सन्तानत्वात्ते भरता उच्यन्ते (भरतैरिति नटैः), स्वतो वंशकरं नामधेयं येषां तैः (भरतैः), भरतसन्तानत्वात्तद्धिते भरताः। नाट्यशास्त्रेऽपि भरतवंशस्योल्लेखो वर्तते भरतानां च वंशोऽयं भविष्यं च प्रवर्तितः, एवञ्च— भरताः, भरतैः, भरतानामित्यादिबहुवचनान्तप्रयोगोऽपि भरतानां परम्परां सङ्केतयति। एवञ्च भरतानुसारं नटनकर्त्तारो भरता उच्यन्ते। एवमेवानुवंश्यश्लोकाः सूत्रानुविद्धाऽऽर्या अपि भरतपरम्परां द्योतयन्ति। शारदातनयमतानुसारं भाषावर्णोपकरणैर्नानाप्रकृतिसम्भवं वेषं वयः कर्म चेष्टां च विभ्रन्नटो भरत उच्यते।

श्रीमद्भागवतपुराणानुसारं ब्रह्मावर्त्ते प्रियव्रतवंशे ऋषभदेवो नाम नृपतिर्बभूव। तस्यैव नृपतेरात्मजो भरतो बभूव। स च ब्रह्मावर्त्तात्स्वनिकेतनाद् वैशालीक्षेत्रे पुलहाश्रमं जगाम। तस्य पञ्चपुत्रा आसन्[1]। तेषु सुमतिनामैकः पुत्रो नाट्यशास्त्रस्य विद्वानासीत्। एकाऽपराऽऽख्यायिका वर्तते। तदनुसारमिक्ष्वाकुकुले सोमदत्तो नाम नृपतिर्बभूव। स निःसन्ततिरासीत्। स च भरतपुत्रं सुमतिं दत्तकपुत्ररूपेण परिजग्राह[2]। एवं सुमतिर्दत्तकपुत्र आसीत्। अत एव स दत्तकनाम्ना दत्तिलनाम्ना वा प्रसिद्धिं जगाम। स एव 'दत्तिलभरत' इत्युच्यते।

तमिलभाषायां 'पञ्चभरतम्'-नाम्नी रचनैकोपलभ्यते। एषा नारदेन सम्बन्धिता प्रतिपाद्यते, सम्भवतो नारदेन ग्रन्थेऽस्मिन् सङ्गीतस्य पञ्चप्रकाराणामुपरि विचारो विहितो भवेत्, यश्च नर्तनेन नाट्येन वा सम्बद्धः सम्भवेदत एवास्याभिधानं पञ्चभरतम् इति वर्तते। यतश्चादिभरतं मातविङ्गभरतं (मतङ्गभरतम्) नन्दिभरत-मर्जुनभरतं हनुमद्भरतमिति भरतसम्बद्धानि पञ्च नामानि श्रूयन्ते। एषु 'आदिभरतम्' एकः सङ्ग्रहग्रन्थो वर्तते, यत्र नाट्यस्य नृत्यस्य च सिद्धान्ताः प्रतिपादिताः। 'मातविङ्गभरतम्' पश्चाद्भवा लक्ष्मणाचार्यस्य कृतिरस्ति। 'नन्दिभरतः' सङ्गीताचार्य आसीत्, येन सङ्गीतविषयमधिकृत्य पुस्तकं लिखितम्। 'अर्जुनभरतम्' अर्जुनाचार्यविरचितं प्राचीनं पुस्तकं वर्तते, यत्र तालहस्तौ विशेषतो विचारितौ। 'हनुमद्भरतम्' आञ्जनेयस्य रचना प्रतीयते।

भावप्रकाशनानुसारं भरतपरम्परायाः कश्चिन्मुनिः पञ्चभिः शिष्यैः सह नाट्यप्रयोगाय ब्रह्मणोऽन्तिकं जगाम। तदा ब्रह्मा तानादिशत्— यन्नाट्यवेदं भरतः। तस्मात्ते भरतनाम्ना प्रख्याताः। के इमे पञ्चभरताः? इत्यस्मिन् विषये न किमप्युल्लिखितं वर्तते भावप्रकाशने। सम्भाव्यते वृद्धभरतं नन्दिभरतं कोहलभरतं दत्तिलभरतं मतङ्गभरतमित्येते पञ्चभरता आसन्[3]। एतेषामेव सिद्धान्तानां समवेतसम्पादनं भवेन्नाट्यशास्त्रम्। नाट्यवेदभरणादेते भरता उच्यन्ते। अत एव भरतानां वृद्धभरतनन्दिभरतकोहलभरतदत्तिलभरतमतङ्गभरतादीनां शास्त्रं शासनोपायं ग्रन्थं नाट्यशास्त्रम्। एषु वृद्धभरतो भरतानामादिपुरुष आसीदत एव स आदिपुरुष उच्यते। नाट्यशास्त्रे काव्यमालासंस्करणान्ते पुष्पिकायां लिखितं वर्तते—

---

१. भागवतम् - ५।७।८।

२. वाल्मीकिरामायणम्, ४७।११-१२।

३. भरतानां वृद्धभरत-नन्दिभरत-कोहलभरत-दत्तिलभरत-मतङ्गभरतादीनां शास्त्रं नाट्यशास्त्रम्। (नाट्यशास्त्रस्य भूमिकायाम्, पृ. १८)

'समाप्तश्चेदं नन्दिभरतसङ्गीतपुस्तकम्'। एतेन ज्ञायते यदासीत् कश्चिद् नन्दिभरताचार्यो येन सङ्गीतविषयकं पुस्तकमलेखि। नाट्यशास्त्रस्यान्तिमेऽध्याये वृद्धभरतेन स्वयं कथितम्— 'शेषमुत्तरतन्त्रेण कोहलः कथयिष्यति', 'कोहलैर्भरतैः' इत्यादिकथनेन ज्ञायते यत्कोहलाचार्योऽप्येको भरत आसीत्, येन नाट्यशास्त्रस्य कश्चिद् ग्रन्थोऽवश्यं लिखितः। दत्तिलभरतोऽप्येको भरतो गान्धर्वशास्त्रस्य विद्वानासीत्। मतङ्गभरतः सङ्गीतशास्त्रस्य प्रामाणिक आचार्य आसीत्। एते सर्वे भरतपरम्पराया नाट्यशास्त्रस्य सङ्गीतशास्त्रस्य चाचार्या आसन्। एतेषामेव विचाराणां सङ्ग्रहग्रन्थो नाट्यशास्त्रं प्रतीयते। एवं चैतेषां सर्वेषामेव नाट्यशास्त्रनिर्माणे योगदानमासीत्।

**आदिभरतः**

भारतीयनाट्यपरम्परायामादिभरतस्य विशिष्टं स्थानमस्ति। अस्यैवापरं नाम वृद्धभरतोऽप्यासीत्। भागवतविष्णुपुराणानुसारं भरतो नाम नृपते ऋषभदेवस्य पुत्र आसीत्। स ब्रह्मावर्त्तात् स्वनिकेतनाद् वैशाल्यां पुलहाश्रमं जगाम। ततश्च स दक्षिणकर्णाटकान् देशान् गतवान्[१]। तत्रैव तेन नाट्यशास्त्रं विरचितम्। अभिनवगुप्तमतानुसारं नाट्यशास्त्रस्य प्रणयनं प्रथमं सदाशिवेन, ब्रह्मणा भरतेन च कृतम्[२]। पश्चाच्च भरतः स्वशिष्यान् बोधयामास। भरतोऽयं भरतानामादिपुरुष आसीदत एव स आदिभरतनाम्ना प्रसिद्धिमवाप। अस्यैव नामान्तरं वृद्धभरतश्च। प्रो. रामकृष्णकविमतानुसारं सदाशिव एवादिभरत आसीत्[३]।

शारदातनयमतानुसारं भरतैर्नाट्यवेदात्सारं सङ्गृह्य संस्करणद्वयं सम्पादितम्। प्रथमसंस्करणं द्वादशसाहस्त्री संहितेति नाम्ना व्यवहृतम्, यस्मिन् द्वादशसहस्राणि श्लोका आसन्, यस्य कथनं वृद्धभरतेनादिभरतेन वा कृतम्। द्वितीयसंस्करणे षट्सहस्राणि श्लोका आसन्, या षट्साहस्त्री संहितेति नाम्ना व्यवहृता। प्रो. रामकृष्णकविमहोदयानां कथनमस्ति यद्वृद्धभरतेन द्वादशसहस्र-श्लोकैरेको ग्रन्थो लिखितः, यस्य किञ्चिदंशोऽद्योपलभ्यते[४]। वृद्धभरतेन रचितो ग्रन्थः 'आदिभरतम्'-नाम्ना प्रसिद्धः। 'आदिभरतम्' शिवपार्वत्योः संवादरूपेण

---

१. भागवतम्, ५।७।८।

२. एतेन सदाशिवब्रह्मभरतमतत्रयविवेचनेन ब्रह्ममतसारप्रतिपादनाय मतत्रयीसारासारविवेचनं तद्ग्रन्थखण्डप्रक्षेपेण विहितमिदं शास्त्रम्। (अभिनवभारती, भाग-१)

३. भाण्डारकर-प्राच्यविद्या-पत्रिका, १३, पृ. ९२-९३।

४. जर्नल आफ द आन्ध्र हिस्टोरिकल रिसर्च सोसाइटी, भाग-३, पृ. ४५३।

लिखितो नाट्यग्रन्थोऽस्ति, यत्र नाट्यस्य नृत्यस्य च सिद्धान्ताः प्रतिपादिताः। अस्मिन् ग्रन्थे पञ्च स्कन्धाः, द्वात्रिंशदध्यायाः, द्विशतोत्तरैकविंशतिसंख्याकानि प्रकरणानि, द्वादशसहस्रसंख्याकाः श्लोकाश्चासन्। शारदातनयानुसारमस्य रचना वृद्धभरतेनादिभरतेन वा कृता। आन्ध्रलिप्याम् आदिभरतनामैको हस्तलिखितो ग्रन्थः प्राप्यते, यश्च नाट्यशास्त्रस्य प्रतिरूपः प्रतीयते[१]। भाण्डारकरप्राच्यविद्यामन्दिरे सङ्गृहीतहस्तलिखितग्रन्थसूच्यां 'नाट्यसर्वस्वदीपिका'नामिकैका कृतिरुपलब्धा, साऽऽदिभरतस्य टीकोच्यते[२]। एवञ्चादिभरतं वृद्धभरतप्रणीतो नाट्यग्रन्थोऽस्ति, वृद्धभरतश्च प्रथमनाट्यकारः।

**नन्दिभरतः**

नन्दिभरतः सङ्गीतशास्त्रस्याचार्यः शिवस्यान्तेवासी मुख्यगणश्चासीत्। नाट्यशास्त्रस्य काव्यमालासंस्करणस्यान्तिमेऽध्याये पुष्पिकायां नन्दिभरतस्योल्लेखो वर्त्तते— 'समाप्तश्चायं ग्रन्थो नन्दिभरतसङ्गीतपुस्तकम्'। एतेन ज्ञायते— आसीत् कश्चिन्नन्दिभरतनामाचार्यः, येन सङ्गीतविषयको ग्रन्थो लिखितः। सम्भाव्यते यन्नाट्यशास्त्रस्य सङ्गीतभागस्य लेखको नन्दिभरतो भवेत्, तथा एतदपि सम्भाव्यते यत्तस्य कृतेर्नाम नन्दिभरतो भवेत्। यतश्च मैसूरकुर्गयोर्हस्तलिखितग्रन्थसूच्यां नन्दिभरताख्यकृतेरुल्लेखो वर्तते[३], या च नन्दिभरतस्य रचना प्रतीयते। राइसमहोदयैरपि 'नन्दिभरत'-नामकस्य सङ्गीतविषयकग्रन्थस्योल्लेखो विहितः[४]। मद्रासपुस्तकालयस्य हस्तलिखितग्रन्थसूच्यां नन्दिभरतनामैको हस्तलिखितग्रन्थो विद्यते, यस्यैकस्याध्यायस्य नाम 'नन्दिभरतोक्तसङ्करहस्ताध्यायो' वर्तते[५]। अयं नन्दिभरतस्य रचना प्रतीयते। भरतार्णवे नन्दिभरतः सप्तलास्यस्य प्रवक्ता कथितः[६]। तमिलभाषायामुपलब्धायां पञ्चभरतनामिकायां कृतावुल्लिखितेषु पञ्चसु भरतेषु नन्दिभरतस्य महत्त्वपूर्णं स्थानं वर्तते। उपर्युक्तविवरणैर्ज्ञायते यन्नन्दिभरतः सङ्गीतशास्त्रस्याचार्य आसीत्। तस्य कृतेर्नामापि 'नन्दिभरतम्' एवासीत्।

कोऽसौ नन्दिभरतः? किमयमेकः, उत वा द्वौ पुरुषौ? किमेकस्य द्वयोर्वाभिधानमिदमिति विचारणीयं वर्तते। श्रीमदभिनवगुप्तपादाचार्यो नन्दिनं भरतं

१. भाण्डारकर-प्राच्यविद्या-पत्रिका, १२, पृ. १६७-१६९।
२. तत्रैव, ७, पृ. ४५३।
३. मैसूर एवं कुर्ग कैटलाग, पृ. २९२।
४. संस्कृत काव्यशास्त्र का इतिहास (दे) पृ. १९।
५. मद्रास कैटलाग, ७।१३०००९।
६. भरतार्णवे, पृ. ७५२।

च पृथक् पृथग् आचार्यद्वयं मनुते। तथा तयोरपरं नाम तण्डुर्मुनिश्चाभिधत्ते—तण्डुमुनिशब्दौ नन्दिभरतयोरपरनामनी[१]।

नाट्यशास्त्रेऽपि लिखितं वर्तते यद् दक्षयज्ञविध्वंसानन्तरं कदाचित् सन्ध्यायां काललयानुगैरनेकैरङ्गहारैस्सह प्रानृत्यद् भगवान् पार्वतीपतिः। तदा नन्दिवीरभद्रादयो गणाः पिण्डीबन्धानालोक्य तेषां लक्षणनामानि चक्रुः—'ईश्वरस्येश्वरी पिण्डी नन्दिनस्यापि पट्टसी'[२]। एवञ्च नाट्यशास्त्रेऽभिनवभारत्यां चानेकस्थलेषु नन्दिनस्तथा नन्दिनोऽपरपर्यायस्य तण्डोर्वा नाम्नोऽवलोकनेन प्रतीयते यदयं नन्दी तण्डुर्वा ताण्डवनृत्यप्रयोक्ता भरतसमकालिको भगवतो विश्वनाथस्य शिवस्य मुख्यगण आसीत्।

कन्हैयालालपोद्दारमहोदयेन 'नन्दिभरत'शब्दस्यार्थः 'नन्दिशिष्यो भरतः' इत्यनुमीयते[३]। तदनुसारं भरतो नन्दिशिष्य आसीत्। अभिनवगुप्तोऽपि नन्दिनं भरतशिक्षकः कथयति, तस्यापरं नाम तण्डुश्चाभिदधाति। तदनुसारं नन्दी भरताय नृत्यशिक्षां प्रादात्[४]। एवञ्च नाट्यसङ्गीतशास्त्रनिर्माणे प्रयोगे नन्दिनो विशेष-योगदानमासीत्।

वात्स्यायनकामसूत्रे महादेवस्य शिवस्यानुचररूपेण नन्दिन उल्लेखो वर्तते, येन सहस्रेणाध्यायैः पृथक् कामसूत्रं प्रोक्तम्[५]। सिंहभूपालमतानुसारं नन्दिनः प्रथमा कृतिः 'नन्दीश्वरसंहिता' वर्तते; किन्तु ग्रन्थोऽयमधुनाऽनुपलब्ध एवास्ति। केवलं समुद्धरणमात्रेण सत्ताऽस्य वरीवर्ति। 'नन्दीश्वरसंहिता' नाट्यपरो ग्रन्थः प्रतिभासते, यत्र चानुमीयते नाट्यशास्त्रस्य संवादाभिनयगीतवाद्यरसादिप्रमुखविषयाणां विवेचनं भवेत्? एतदपि सम्भाव्यते यन्नन्दीश्वरसंहितायाः कश्चित् खण्डितांशो भवेत्प्राप्तः, यमाधारीकृत्याभिनयपरानध्यायान् संयोज्याभिनयदर्पणः, सङ्गीतपरानध्यायान् संयोज्य च भरतार्णवः सम्पादितो भवेत्। शेषश्च विषयः कालकलया विनाशमुपगतः। नन्दिनश्चैका कृतिः 'रुद्रडमरूद्भवसूत्रविवरणम्' प्राप्यते। सङ्गीतकलादृष्ट्या च ग्रन्थोऽयमतीवमहत्त्वपूर्णो राजते।

अनुमीयते यदयं नन्दी योगतन्त्रकामसूत्रसङ्गीतनाट्यशास्त्रादिविषयाणां विद्वानासीत्। शिवावतारत्वेनापि गण्यतेऽसौ बुधैरिति। अस्यैवापराणि नामानि

---

१. अभिनवभारती, भाग-१, पृ. ८८।

२. नाट्यशास्त्रम्, ४।२५३।

३. संस्कृत साहित्य का इतिहास (पोद्दार) पृ. २३।

४. नाट्यशास्त्रम्, ४।१७-१८।

५. कामसूत्रम्, १।१।८।

नन्दिः, नन्दीश्वरः, तण्डुश्चेत्यादीनि सन्ति। अनेनैव नाट्यशास्त्रं प्रोक्तम्, अनेनैव सङ्गीतशास्त्रं प्रणीतम्। अनेनैवाभिनयनिरूपणं कृतम्। एतेनैव कामसूत्रं विरचितम्, अनेनैव रसविषयकग्रन्थोऽपि लिखितः; किन्तु कालक्रमेण विनष्टानि तानि सर्वाणि नाद्योपलभ्यन्ते।

## कोहलभरतम्

कोहलोऽप्येको भरत आसीत्। नाट्यशास्त्रप्रणेतृषु येषां भरतानामुल्लेखो वर्तते, तेषु कोहलभरतस्य विशिष्टं स्थानं वर्तते। नाट्यशास्त्रस्यान्तिमेऽध्याये भरतेन स्वयमेव नाट्याचार्यरूपेण कोहलः सम्मानितः— 'शेषं प्रस्तारतन्त्रेण कोहलः कथयिष्यति'। तस्मिन्नेवाध्यायेऽन्यत्र नाट्यप्रयोगप्रसङ्गे वात्स्यशाण्डिल्य-धूर्त्तिलैः सह कोहलाचार्यस्याप्युल्लेखो वर्तते[1]। नाट्यशास्त्रस्य षष्ठेऽध्याये कोहलमतानुसारं नाट्यस्य रसभावादीन्येकादशाङ्गानि निर्दिष्टानि[2]।

एतद्विषयेऽभिनवगुप्तमहोदयस्य कथनमस्ति यद् यद्यपि नाट्यस्याभिनयत्रयं गीतमातोद्यं चेति पञ्चाङ्गानि निर्दिष्टानि, किन्तु प्रस्तुते श्लोके नाट्यस्य यान्येकादशाङ्गानि परिभाषितानि, तानि कोहलमतानुसारं कथितानि[3]। अभिनव-भारत्यामन्यत्रापि कोहलस्य मतान्युद्धृतानि। एतदतिरिक्तं रामचन्द्र-गुणचन्द्र-हेमचन्द्र-शारदातनय-राजशेखर-शिङ्गभूपाल-शार्ङ्गदेव-प्रभृतिभिर्विद्वद्वरैरपि नाट्यशास्त्रस्य सङ्गीतशास्त्रस्य चाऽऽचार्यरूपेणोल्लेखः कृतः, तस्य मतान्य-प्युद्धृतानि स्वीयेषु ग्रन्थेषु।

कोहलाचार्यस्तु भरतसमकालिको विद्वानासीत्। तेन कोहलरहस्यम्, कोहलमतम्, कोहलीयम्, काललक्षणम्, सङ्गीतमेरुः, अभिनयशास्त्रमित्येते ग्रन्था विरचिताः।

भरतेन ये सिद्धान्ताः सङ्क्षिप्ततया प्रतिपादिताः, कोहलेन ते सिद्धान्ताः प्रस्तारतन्त्रेण व्याख्याताः; किञ्च यत्र तत्र मौलिकसिद्धान्ता अपि विवेचिताः। यथा भरतेन नाट्यस्य पञ्चाङ्गानि निर्दिष्टानि; किन्तु कोहलेन नाट्यस्यैकादशाङ्गानि परिगणितानि। भरतेन रूपकस्य दशभेदा वर्णिताः, किन्तु कोहलेन

---

१. कोहलादिभिर्भरतैर्वा वात्स्यशण्डिल्यधूर्त्तिलैः। (ना.शा. ३६।७१)

२. रसा भावा ह्यभिनया धर्मी वृत्तिप्रवृत्तयः।
सिद्धिः स्वरास्तथातोद्यं गानं रङ्गश्च सङ्ग्रहः।। (नाट्यशास्त्रम्- ६।१०)

३. अभिनयत्रयं गीतातोद्ये चेति पञ्चाङ्गं नाट्यम्। अनेन तु श्लोकेन कोहलमतेनैकादशत्वमुच्यते, न तु भरते। (अभि. भाग-१, पृ. २६४)

भाषाकृतवैचित्र्यमाधारीकृत्य रूपकस्यानेके भेदाः कल्पिताः। कोहलेनोपरूपकस्य विंशतिभेदाः परिकल्पिताः।

नाट्यशास्त्रस्य कोहलविषयकविवरणैर्ज्ञायते यत्कोहल उपरूपकस्य जनक आसीत्। कोहलस्य कथनमस्ति यद् यथा नाटकप्रकरणलक्षणयोगान्नाटिका कथ्यते, तथैव कारिकोक्तपदप्रयोगाणां पारस्परिकसम्बन्धवैचित्र्याद्रूपकस्य तोटक-सट्टक-रासकादयोऽनेके भेदा भवितुमर्हन्ति। कोहलानुसारमुपरूपकाणि नृत्यगीतप्रधानानि भवन्ति।

हस्ताभिनयविषये कोहलाचार्यस्य कथनमस्ति यद्भरतप्रतिपादिता एतावन्त एव हस्ता न भवन्ति, अपि त्वन्येऽपि हस्ता भवितुमर्हन्ति। तेन च शून्य-भास्वर-विद्युदाद्यन्येऽपि नवीना हस्ताः प्रतिपादिताः[१]। सङ्गीतमेरौ तेन च चतुर्विंशतिर्हस्त-विन्यासक्रिया निरूपिताः। हस्तविन्यासक्रिया हस्ताभिनये सौन्दर्यमुत्पादयन्ति। एताश्च हस्तविन्यासक्रियाः समस्तव्यस्तहस्तसंयोजनात् क्रमशो द्रुतमध्यविलम्बितादिवैचित्र्यात् सहस्रशो भवितुमर्हन्ति। एते हस्ता यदा विविधभावभङ्गैः रेचन्ते, चाल्यन्ते तदा नाट्यवेत्तारस्तान् चालनं कथयन्ति। कोलहानुसारं चालनस्य पञ्चाशद्भेदा भवन्ति[२]।

**गतिप्रचारः**

कोहलमतानुसारं पादगतिरुत्तमानां विषये चतुर्गुरुसमन्विता द्विपदी कर्त्तव्या। यतो हि तत्रोत्क्षेपनिपाताभ्यां पादद्वयं भवेत्[३]। कोहलानुसारं रौद्ररसे नर्तनकोत्फुल्लकगतिभ्यां प्रचरणं कर्त्तव्यम्। एवमेव कम्पमानवृद्धकञ्चुकादिगतौ खञ्जकहेलाविलम्बितादिगतिः प्रयोक्तव्या। प्रच्छन्नकामुकविषये सुभद्राभिधानो ध्रुवातालो प्रयोक्तव्यः। एवमेव ककुभरागेण सह जम्भरिकालयस्य ठक्करागेण सहोल्लसनलयस्य च प्रयोगः कर्त्तव्यः। एवमेव मालववेसरिक-मालवकैशिक-रागाभ्यां सह प्रयोजनीयो लयो निर्दिष्टः कोहलेन।

**सामान्याभिनयः**

कोहलमतानुसारं वाचिकाङ्गिकसात्त्विकाहार्याभिनयानां समन्वितरूपः सामान्याभिनय उच्यते। कोहलमतानुयायिभिर्वृद्धैः सामान्याभिनयः षोढा भण्यते—

---

१. शून्यभास्वरविद्युदाद्यभिनयविषये नृत्याचार्यप्रवाहसिद्धः कोहललिखितोऽपि हस्तः सङ्गतो भवति। (अभिनवभारतीकारः)

२. संगीतरत्नाकरे, पृ. ११४।१२४।

३. स्यादुत्तमानां द्विपदी चतुर्गुरुसमन्विता। तत्रोत्क्षेपनिपाताभ्यां यस्मात् पादद्वयं भवेत्।। (अभिनवभारती, भाग-२, पृ. १३३)

शिष्टं मिश्रं कामं वक्रं सम्भूतमेकयुक्तत्वं चेति। एवमेव चित्राभिनयोऽप्यनेकविधः प्रदर्शितः कोहलेन।

**सङ्गीतविधानम्**

श्रवणेन्द्रियग्राह्यो ध्वनिः श्रुतिरुच्यते। यदि ध्वनिररञ्जको भवेत्तु श्रुतिरुच्यते; किन्तु यदि ध्वनी रञ्जको भवेत्तु स्वर उच्यते। श्रुतिसंख्याविषये तु तन्मतं स्थिरं नास्ति। यथा चाह कोहलः —

> द्वाविंशतिं केचिदुदाहरन्ति श्रुतिं श्रुतिज्ञानविधानदक्षाः।
> षट्षष्टिभिन्नाः खलु केचिदासामानन्त्यमेव प्रतिपादयन्ति।।

स्वरसंख्याविषये तु तस्य कथनमस्ति—

> जातिभाषादिसंयोगादनन्तः स्वरः कीर्तितः।।

कोहलमतानुसारं जातिरागभाषादिसिद्धये मूर्च्छनाक्रमो लक्ष्यानुसारी कर्त्तव्यः। तस्य मतमस्ति यद्रागरूपामृतह्रदे गायकानां श्रोतृणां च चित्तनिमग्नता मूर्च्छना कथिता। एवं सङ्गीतक्षेत्रे कोहलस्य विशिष्टं स्थानमस्ति।

**दत्तिलभरतम्**

भारतीयसङ्गीतनाट्यपरम्परासु कोहलेन सह दत्तिलस्य नामान्यतमं वर्तते। दत्तिलोऽप्येको भरत आसीत्। नाट्यशास्त्रप्रणेतृषु यानि पञ्चभरतानि परिगणितानि, तेषु दत्तिलभरतोऽप्येकः। नाट्यशास्त्रे भरतपुत्रेषु दत्तिलस्योल्लेखो वर्तते। दत्तिलस्यैवापरं नाम दन्तिलो दत्तकश्चाप्यासीत्। वात्स्यायनविरचिते कामसूत्रे दत्तकस्योल्लेखो वर्तते[१]। कुट्टनीमते दत्तकाचार्यरूपेण तस्योल्लेखो वर्तते[२]।

कर्णाटकप्रदेशस्यैकस्मिन् शिलालेखे 'दत्तकसूत्रवृत्ति'नामकस्य ग्रन्थस्योल्लेखो मिलति। यस्य लेखकः कोङ्कणिवर्मणः पुत्रो माधव आसीत्[३]। एतेन ज्ञायते यद् दत्तकस्य कश्चित् सूत्रग्रन्थ आसीत्। माधवेन यस्य वृत्तिर्लिखिता।

अभिनवगुप्तपादाचार्यैरऽभिनवभारत्यामनेकस्थलेषु तस्य मतान्युद्धृतानि। भरतभाष्ये, रसार्णवसुधासागरे, रसरत्नप्रदीपिकायाम्, सङ्गीतसमयसारे, सङ्गीतरत्नाकरे, बृहद्देश्यां चास्य दत्तिलस्य नाट्याचार्य-सङ्गीताचार्यरूपेण वोल्लेखो

---

१. कुट्टनीमतम्, १२२-१२३।
२. कामसूत्रम्, १।१।११, ६।२।५५, ६।३।४४।
३. संस्कृत काव्यशास्त्र का इतिहास (काणे), पृ. २१।

वर्तते। भरतपुत्रत्वादयं भरतसमकालिकः प्रतीयते। दत्तिलम्, गान्धर्ववेदसारश्चास्य रचना उच्यते। दत्तिलकोहलीयमेकाऽपरा रचना दत्तिलकोहलयोर्मतानां सङ्ग्रहग्रन्थः प्रतीयते।

दत्तिलो गान्धर्वस्य प्रवक्ताऽऽसीत्। तन्मतानुसारं पदाश्रितस्वरसंघातो यदा तालेन सुमितोऽवधानेन प्रयुक्तश्च तदा गान्धर्वमुच्यते[१]। तन्मते दक्षिणाचित्रा-वृत्तयश्चेति तिस्रो वृत्तयो भवन्ति। तासु गीतप्रधाना दक्षिणा, वाद्यप्रधाना चित्रा, गीतवाद्योभयप्रधाना च वृत्तिरुच्यते[२]। तन्मते च द्वौ ग्रामौ द्वाविंशतिश्रुतयः सप्तस्वराश्च भवन्ति। तत्र षड्जमध्यमग्रामयोः द्वाविंशतिश्रुतयो भवन्ति, तथा षड्जग्रामे सप्त स्वराः, मध्यमग्रामेऽपि सप्त स्वरा भवन्ति। तत्र प्रतिस्वरं मूर्च्छनानां चातुर्विध्यमुक्तम्— पूर्णा, षाडवा, औडुविता, साधारणा चेति[३]। तत्र सप्तभिः स्वरैर्गीयमाना मूर्च्छना पूर्णा, षड्भिः स्वरैर्गीयमाना षाडवा, पञ्चभिः स्वरैर्गीयमाना औडुविता तथाऽन्तरगान्धारैः काकलीनिनादैश्च गीयमाना मूर्च्छना साधारणी प्रोक्ता। तन्मतानुसारं षड्जमध्यमग्रामयोर्यावन्तः स्वरास्तावन्त एव मूर्च्छना भवन्ति। दत्तिलमतानुसारं पञ्च षड् वा स्वराणां मूर्च्छनास्ताना उच्यन्ते। तानाश्च चतुरशीतिरुक्ताः[४]। दत्तिलेन च तन्त्र्यां तानक्रिया द्विधा प्रोक्ता— प्रवेशो निग्रहश्चेति। तत्र स्वरसादृश्यं प्रवेशः, स्पर्शहीनता (मुक्तवादनं) च निग्रह उच्यते[५]।

दत्तिलमतानुसारं द्वाविंशतिविधो ध्वनिर्नृणामुरसि मन्द्रस्थानात्, कण्ठे मध्यस्थानात्, शिरसि च तारस्थानाद् निःसृतो भवति[६]। दत्तिलमतेऽष्टादशजातयो मताः। ताश्च शुद्धा, विकृता, सङ्करोद्भवेति त्रिवर्गे विभाजिताः। दत्तिलेन तालक्रियायाः सप्त भेदाः कथिताः— आवाप-निष्क्राम-विक्षेप-प्रवेशन-शम्या-तालसन्निपाताश्चेति। तन्मतानुसारं ताले समपाणिरुपरिपाणिरवपाणिश्चेति त्रिविधः

---

१. पदस्थस्वरसङ्घातस्तालेन सुमितस्तथा।
प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते।। (दत्तिलम्-३)

२. दक्षिणावृत्तिचित्राश्च वृत्तयस्तास्वयं विधिः।
प्रधानं गीतमुभयं वाद्यं चेति यथाक्रमम्।। (दत्तिलम् - ४३)

३. मतङ्गदत्तिलौ तु मूर्च्छनानां चातुर्विध्यमवादिष्टाम्।

४. दत्तिलम् - ३०।

५. तानक्रिया द्विधा तन्त्र्यां प्रवेशान्निग्रहात्तथा।
तत्र प्रवेशो ध्वन्यैक्यसंस्पर्शस्तु निग्रहः।। (दत्तिलम्, पृ. ३६)

६. दत्तिलम्, ८।

पाणिः, द्रुत-मध्य-विलम्बिताश्चेति त्रिविधो लयः, तथा समा स्रोतोगता ,गोपुच्छा चेति त्रिविधा यतिश्च भवति।

**मतङ्गभरतः**

मतङ्गभरतो भरतमुनेः शिष्यः सङ्गीतशास्त्रस्य नाट्यशास्त्रस्य योगशास्त्रस्य मोक्षशास्त्रस्य च प्रामाणिक आचार्य आसीत्। तेन च नादश्रुतिस्वरादीनां तु सूक्ष्मं वैज्ञानिकं च व्याख्यानं कृतम्। किञ्च, तेन तादात्म्यवादस्य विवर्तवादस्य परिणामवादस्याभिव्यक्तिवादस्य च समीक्षाऽपि कृता। तेनैव श्रुतिस्वरयोस्तादात्म्यं स्थापितम्। स एव किन्नरीवीणाया आविष्कर्त्ताऽप्यासीत्। तस्य स्थितिकालं प्रथमशताब्दीं मन्यन्ते विद्वांसः। मतङ्गभरतस्य एकैव कृतिः 'बृहद्देशी' अपूर्णोपलभ्यते। अपूर्णस्य ग्रन्थस्य षष्ठाध्यायान्ते लिखितम्—

विबुधानां विबोधाय प्रबन्धाः कथिता मया।
इदानीं कथयिष्यामि वाद्यस्य निर्णयो मया।।

एतेन ज्ञायते यदतः परं बृहद्देश्यां वाद्यतालनृत्तादीनां विवेचनं भवेत्; किन्तु कालकवलान्नोपलभ्यतेऽवशिष्टोंऽश इदानीम्।

मतङ्गमतानुसारं नकारः प्राणः प्रोक्तो दकारश्चाग्निवाचकः, तयोः संयोगाद् ध्वनिरुत्पद्यते, स एव 'नाद' उच्यते। मतङ्गानुसारं समस्तं जगन्नादात्मकमस्ति। नादं विना न गीतस्य सत्ता वर्तते। न च जगत्सत्ताऽस्ति।

मतङ्गमतानुसारं नादस्य पञ्च भेदाः सन्ति— सूक्ष्मोऽतिसूक्ष्मो व्यक्तोऽव्यक्तः कृत्रिमश्च। तत्र सूक्ष्मनादो गुहायामतिसूक्ष्मो हृदये व्यक्तः कण्ठेऽव्यक्तस्तालुप्रदेशे कृत्रिमश्च मुखे तिष्ठति।

मतङ्गमतानुसारं श्रवणाच्छ्रुतिरुच्यते। एकैव श्रुतिरिति मतङ्गः। स्वयं राजत इति स्वरः। मतङ्गमतानुसारं श्रुतिरेव स्वरः। श्रुतिस्वरयोः पार्थक्यं नास्ति। द्वयोस्तादात्म्यसम्बन्धोऽस्ति। यथा तन्तुपटयोस्तादात्म्यं वर्तते, तथैव श्रुतिस्वरयोरपि तादात्म्यमस्ति।

अन्ये कथयन्ति श्रुतिस्वरयोर्विवर्त्तभावो विद्यते। यथा रज्जुः सर्परूपेण प्रतीयते तथैव श्रुतिश्च स्वररूपेण प्रतीयते, वस्तुतः श्रुतिरेव स्वर इति वेदान्तिनां मतम्।

अपरे सांख्याचार्याः स्वरं श्रुतिपरिणामं कथयन्ति 'तन्मतानुसारं यथा पयो दधिरूपेण परिणमते, तथैव श्रुतिरपि स्वररूपेण परिणमते, इति सांख्यवादिनां मतम्।

नैयायिकास्तु श्रुतिस्वरयोः कार्यकारणभावसम्बन्धं मन्यन्ते। तन्मतानुसारं यथा तिलेभ्यस्तैलमुत्पद्यते तथैव श्रुतिभ्यः स्वर उत्पद्यते।

अपरेषामभिव्यक्तवादिनां कथनमस्ति यथा दीपद्वारा तमसि स्थितो घटादिरभिव्यज्यते, तथैव श्रुतिभिः स्वरोऽभिव्यज्यते।

मतङ्गमतानुसारं स्वराः सप्त कीर्त्तिताः— षड्जर्षभगान्धारमध्यम-पञ्चमधैवतनिषादाश्च। मतङ्गस्तु भरतप्रतिपादिताः सप्त मूर्च्छनाः स्वीकरोति, तथापि रागसिद्धये द्वादशस्वरमूर्च्छना अपि स्वीकरोति। तस्य कथनमस्ति— 'यद्यप्याचार्यैः सप्त स्वरमूर्च्छनाः प्रतिपादितास्तथापि मन्द्रमध्यतारादिस्थानत्रितयप्राप्त्यर्थं द्वादशस्वरैरेव मूर्च्छनाः प्रयुक्ताः' इति[१]।

मतङ्गमतानुसारं स्वराणामारोहावरोहक्रमं मूर्च्छना उच्यते। तदनुसारं मूर्च्छना द्विविधा भवति— सप्तस्वरमूर्च्छना द्वादशस्वरमूर्च्छना चेति। तत्र सप्तस्वरमूर्च्छना चतुर्विधा भवति— पूर्णा षाडवा औडुविता साधारणी चेति। तत्र सप्तभिः स्वरैर्गीयमाना मूर्च्छना पूर्णा, षड्भिः स्वरैर्गीयमाना षाडवा, पञ्चभिः स्वरैर्गीयमाना औडुविता, काकल्यन्तरैः स्वरैर्गीयमाना मूर्च्छना साधारणी कथ्यते[२]।

मतङ्गमतानुसारं षड्जादिस्वरैः स्थायिवर्णैश्च विभूषितश्चित्तरञ्जको ध्वनि-विशेषो 'राग' उच्यते। रागश्च सप्तविधः प्रोक्तः— शुद्धा भिन्ना गौणिका रागगीतिः साधारणी भाषा विभाषा चेति।

मतङ्गमुनिः किन्नरीवीणाया आविष्कर्त्ता प्रोच्यते। इतः पूर्वं वीणा सारिका-विहीना भवति स्म; किन्तु मतङ्गस्य वीणायां चतुर्दशतः प्रारभ्याष्टादश सारिकाः भवन्तिस्म। अद्यतनस्य तन्त्रीवाद्यानि किन्नरीवीणाया विकसितरूपाणि सन्ति। मतङ्गश्च सुषिरवाद्यस्य विद्वानासीदिति।

१. बृहद्देशी, २२; २. तदेव, ९४-९५।

# स्वर्णसौरभम्

**डॉ. शिवदत्तशर्माचतुर्वेदः**
अध्यक्षचरः, साहित्यविभागस्य, संस्कृतमहाविद्यालये
काशीहिन्दूविश्वविद्यालयस्थे
वाराणसी

राष्ट्रस्वतन्त्रतायाः स्वर्णजयन्तीमहोत्सवोल्लासे।
जनजनहृदयोत्साहो गच्छति चरमामहो काष्ठाम्।।१।।

भारतदेशस्यैतस्याऽप्यासीद्दुर्गतिः क्रूरा।
यत्र पारतन्त्र्याणामुल्लासेष्वास सञ्चारः।।२।।

सर्वस्वतन्त्रतोद्घोषणमासीदन्तिमा श्रेणिः।
उपनिषदि परामृष्टा मन्त्रेष्वेवोल्लसत्स्वान्ता।।३।।

सर्वविधोल्लासानामाद्या चैवाऽन्तिमाऽवस्था।
स्वातन्त्र्येत्याख्याता तत्राऽऽसन्दीक्षिताः सर्वे।।४।।

परतन्त्रता-मलिनता-क्षालन-नव-साधनोपायाः।
ऋषिभिर्मुनिभिर्मान्यैराचार्यैस्तावदादिष्टाः।।५।।

वैदिकमन्त्रविभागे ब्राह्मण-सद्ग्रन्थसन्दोहे।
उपनिषदामारामेष्वपि सेयं वा स्वतन्त्रता जयति।।६।।

स्वातन्त्र्यपारतन्त्र्ये गणनाऽऽनन्त्यं समायाते।
भेद-प्रभेद-गणने चैकैकमिदं न गणनार्हम्।।७।।

योऽयं स्वतन्त्रताया सुवर्णवर्णोत्सवः कालः।
शासनसंस्थाऽऽधारित-गणना जागर्ति तत्रत्या।।८।।

ऋषिभिर्नानारूपं यत्स्वातन्त्र्यं समाम्नातम्।
तस्यैकः प्रविभागः शासनसंस्थां परामृशति।।९।।

शासननिकायजागृति-सेवा-संसार-साम्राज्ये।
भारत-पुत्रा दीक्षित-संज्ञानाः संविभासन्ताम्।।१०।।

पूर्वं मुहम्मदीयैर्वैदेशिकयुद्धसंरम्भे-
ष्वासादित-परतन्त्रप्रान्तेयं भारते भूमिः।।११।।

ग्रीकाणां हूणानां यवनानामाक्रमणकाले।
नाना राज्यविभक्तं निखिलमिदं भारतं वर्षम्।।१२।।

स्मृतिपथमद्याऽऽगच्छति सा वा भारत-समर-भूमिः।
सर्वे भारतवीराः सपुत्रपौत्रा यदा लुप्ताः।।१३।।

सर्वा शासन-संस्था क्रमशो निस्तेजतां याता।
पारस्परिके कलहे युद्धाऽभ्यासोऽभवत्तेषाम्।।१४।।

दौर्गुण्य-दुर्विलासाऽऽयत्ता सा राजसत्ताऽऽसीत्।
वैदेशिकशत्रूणां प्रतिरोधे साऽसमर्थाऽऽसीत्।।१५।।

स्वर्णजयन्ती स्वातन्त्र्यस्यैषा या समायाता।
तस्याः संस्तुतिकाले पुरातनं नव्यतां यातम्।।१६।।

सपरिकरा राजानो वैभवमूलं तदात्मीयम्।
पाताले पश्यन्तो निश्चिन्ता भूरिशो जाताः।।१७।।

आङ्ग्लदेशीयैः सह शतशो युद्धप्रदर्शनावल्याम्।
सर्वे राजानस्ते मत्ताश्चासंस्तथा च विक्षिप्ताः।।१८।।

सुरा-सुन्दरी-सेवन-संसक्ता भारतस्य राजानः।
रजसा तमसा व्याप्ता जन-जन-धिक्कारतां याताः।।१९।।

झांसीराज्ञी तु तदा शिवाजिराजः प्रतापश्च।
भारतीयशौर्याणां प्रतीकभूता व्यजायन्त।।२०।।

एतादृशैः कतिपयैर्नरशार्दूलैस्समस्त इतिहासः।
स्वर्णाक्षरमालाभिः संविद्रूपः प्रकाशितो जातः।।२१।।

भारतशूराणां या गाथावलिरद्य सम्प्राप्ता।
सैवाऽद्यापि प्राणान्सञ्चारयतीति नो चित्रम्।।२२।।

यावद्धरा समस्ता यावच्चन्द्रो दिवाकरो यावत्।
तावत् शौर्याणां सा गाथावलिरप्यपारधारैव।।२३।।

गीतायां श्रीभगवान् श्रीकृष्णो यन्महद्दिव्यम्।
गीतं संश्रावितवानर्जुनभावे प्रदीप्तेभ्यः।।२४।।

सा सर्वा शब्दानां धारा काचित्समुज्ज्वलाऽद्यापि।
गान्धी-नेहरू-वर्यानसमान् संप्रेरयामास।।२५।।

गीता-रहस्य-कर्ता तिलकमहर्षिर्विभूतिरूपोऽसौ।
श्रीकृष्ण-वचन-रचना-सञ्चारेषु प्रवर्तयति लोकम्।।२६।।

कारागार-निवासे दिव्यं गीतारहस्यनामानम्।
ग्रन्थं रत्नं नीत्वा तिलको बहिरागतः स्तुत्यः।।२७।।

स्वातन्त्र्य-घोषणायां जन्मनि सिद्धोऽधिकारोऽस्ति।
सा घोषणा प्रविहिता तेनोच्चैस्तिलकवर्येण।।२८।।

श्रीमालवीयसदृशा महर्षयः प्रादुरासन् वा।
सर्वं विश्वं वाणीविलासभाषासु मज्जयामासुः।।२९।।

तैश्च तथा धर्माणां वर्णानामाश्रमाणां वा।
परा प्रतिष्ठा विहिता शिक्षायाः सम्प्रसारेषु।।३०।।

श्रीसुभाषचन्द्राणामसमा दीप्तिः समायाता।
संसारेषु प्रथिता नाना नवरूपतामाप्ता।।३१।।

नव्या सेना घटिता गत्वा गत्वा विदेशेषु।
तच्छौर्यं क्व नु लभ्यमासीद्यादृक्सुभाषचन्द्रे तत्।।३२।।

सत्याग्रहझंझायां या भीषणता प्रकटिताऽऽसीत्।
भारतीयजनतायाः श्रीगान्धिप्रेरिताया वा।।३३।।

क्रान्तिः क्रान्तिरितीत्थं सततं जोघुष्यमाणेन।
नवयुवकेनात्रैवोन्माथितमभवत्समस्तनवविश्वम्।।३४।।

गुप्त-सङ्गठनभाषेङ्गितसञ्चारेषु या क्रान्तिः।
जीवनसमर्पणैरथ सुस्वातन्त्र्यं समानेतुम्।।३५।।

बालैरपि नवयुवकैः प्रारब्धा भारते देशे।
निखिलेऽपि तु संसारे नैवाऽस्ते तस्य कापि तुलना वा।।३६।।

प्राणानामर्पणमथ हास्यं स्वमुखे समानीय।
युवकमृगेन्द्रैर्विहितं स्वतन्त्रताया समाह्वानम्।।३७।।

सा कम्पितवत्यखिला गौराङ्गाणां प्रभुत्वभावानाम्।
सम्भावनां समस्तां व्यस्तां ध्वस्तां तथाऽकार्षीत्।।३८।।

धर्मोन्मादस्वार्थान्धीकरणेषु प्रजागरूकेषु।
जिन्नाप्रचालितेयं सञ्जाता खण्डिता भूमिः।।३९।।

पाकिस्तानस्य तदा निर्मितिरासीद्विरोधेऽपि।
सम्प्रदायसद्भावान्दोलनमयतासमापत्तौ।।४०।।

जाता भारतभूमिः स्वतन्त्रतन्त्रा प्रधानमन्त्री च।
पण्डितपदप्रतिष्ठो जवाहरो भूमिभूषणं जातः।।४१।।

श्रीसरदारो वल्लभभाई-पटेलश्च कर्णधारत्वे।
वृतः समस्ता जनता तत्र स्फूर्तिं समाश्रयन्त्यासीत्।।४२।।

परमयोग्यतासम्पद्विभूषितैर्भारतीयशार्दूलैः।
संसारे गुणगर्जनमाविष्कृतमादिमैर्यत्नैः।।४३।।

विश्वगुरुत्वं सततं बिभ्राणं भारतं तदिदम्।
नाद्यापि प्रोन्नतनवविचारधारापराङ्मुखं दृष्टम्।।४४।।

स्वामिविवेकानन्दः प्रथिते तस्मिन्नमेरिकादेशे।
व्याख्यानानां गुम्फैर्विभूषयामास नवविश्वम्।।४५।।

योगाऽऽकाशविहारेऽरविन्दघोषोऽतुलो भातः।
संसारसभ्यतानामत्रैवाऽऽस्ते परा सम्पत्।।४६।।

जनतन्त्रात्मकशासनपद्धत्या संविधाननिर्माणे।
अम्बेडकरप्रमुखा विधान-परिषत्सुसंघटिता।।४७।।

दिव्यं विधानममलं निर्मितमासीत्समीकृतं सभया।
स्वीकृतमथ तत्सर्वैः प्रचालितं चात्र गणराज्यम्।।४८।।

अत्रत्या सा चेयं जनता साधुस्वभावपरिपूर्णा।
नो जानाति कुटिलतां सम्यगसम्यग्विभावनाभरिताम्।।४९।।

तत्रोत्सवसम्भारान्प्रकल्पयन्तो दिवाऽनिशं लग्ना।
नव नव संघटनान्यपि नेतॄणामुत्सवायालम्।।५०।।

प्रभुतासम्प्राप्तानां ये दोषाः पूर्वमुद्घुष्टाः।
दोषास्तेऽप्यत्र पदं कृतवन्तो मन्त्रिमुख्येषु।।५१।।

नानाधिकारिवर्गोऽयमद्य संसेवते सुखं किन्तु।
सर्वाऽप्यन्या जनता दुःखान्वितरूपमाधत्ते।।५२।।

नानानूतनतमदलनिर्माणानां प्रकृष्टपरिपाटी।
नेतॄणामद्यत्वे विचारधारां प्रकाशयति।।५३।।

सा साम्यवादसंस्था रशियादेशे समुत्तीर्णा।
भारतवर्षेऽप्यसमां धारां सम्यक् प्रवर्धयति।।५४।।

राजनीतिकुशलानां स्वार्थसमाराधने दोषाः।
शतशः प्रादुर्भूता विमोहयन्त्यद्य दुःखाय।।५५।।

स्वार्थान्धकुप्रवृत्तिप्रपूरिता शासनस्थेयम्।
रीतिर्नीतिर्नितरां दुर्गतिरूपं समानयति।।५६।।

नानाविधकष्टानामङ्गीकारेण लब्धेयम्।
देशस्वतन्त्रताया धारा पूरयतु सर्वाशाम्।।५७।।

सत्याऽहिंसाऽऽधारितसङ्ग्रामे भारतीयानाम्।
या धारणा प्रजाता तयैव सर्वे स्वतन्त्राः स्मः।।५८।।

नैतच्चित्रं यदिदं स्वातन्त्र्यं चाऽद्य नवनवोन्मेषे।
शासकसंस्थाऽस्थिरताभावे सञ्चेष्टते सततम्।।५९।।

परिवर्तनप्रवाहे पतिताः शासकपदाऽऽरूढाः।
यावत्कालं स्थित्वा धनमाहर्तुं समासक्ताः।।६०।।

कुतो नु धनमागच्छेद् धनस्य कुत्रोपयोगः स्यात्।
चारित्र्यं भ्रंशयितुं सर्वाऽप्येतादृशी दृष्टिः।।६१।।

भारतीयजनतायामेकीभूताऽस्ति तादृशी शक्तिः।
या विश्वं मोहयते ज्ञानेनात्मोन्नतिं कुरुते।।६२।।

असमचरित्रोन्मेषेष्वासादितवैभवो देशः।
नव्यां सर्वां धारां विज्ञानाराधितां भजते।।६३।।

केषां वा दौर्बल्यं केषां प्राबल्यमित्येषा।
स्वीयजनेष्वपि दृष्टिर्नो कुत्राऽप्यादृता भूयात्।।६४।।

उल्लासोत्साहभरैरेतद्देशस्य मानवैर्निखिलैः।
सम्पूर्णा श्रमशक्तिर्देशोन्नत्यै सुविस्तीर्णा।।६५।।

संसारस्य च ते ते समुन्नताऽमेरिकारशाद्याश्च।
सर्वविधं साहाय्यं कृतवन्तो भारतोन्नत्यै।।६६।।

तेन वयं स्मोऽद्यत्वे नानानवभावनापुष्टाः।
सत्यं शिवतायुक्तं सुन्दरमिदमस्ति जीवनं धन्यम्।।६७।।

नास्तितमा सा भीतिर्यद्वा देशो विखण्डितो भूयात्।
जनतन्त्रपद्धतिरियं सद्यो वा क्वाऽपि लीना स्यात्।।६८।।

सैषा सर्वाधारा याऽस्ति समागतविचाराणाम्।
सा त्वायाति च याति च विज्ञा नो तत्र मुह्यन्ति।।६९।।

अनुकूलमेव सर्वं यत्प्रतिकूलं विभासते पुरतः।
निःश्रेणिकैव सेयं समृद्धिमयता समाह्वाने।।७०।।

भारतवर्षस्याऽद्य तु स्वरूपमेतादृशं जातम्।
भूयः कष्टं सोढ्वाऽप्यानन्दो नूनमाभाति।।७१।।

यद्यप्यत्र च तत्र च वैसादृश्यं विलोक्यते निखिलम्।
पुनरपि सर्वविधोद्यमसन्नद्धाः सन्ति सर्वेऽपि।।७२।।

स्वातन्त्र्याणां युद्धे देशे देशे प्रवर्तमानेऽस्मिन्।
विश्वस्य तादृशी सा शक्तिः प्रथितप्रथा भुवने।।७३।।

कस्याऽप्येतादृशता नो दृष्टाऽऽस्ते यथाऽत्र देशे सा।
भरतोत्तमभूमेर्वा महिमाऽहिंसासमाराद्धा।।७४।।

कृतकार्यद्वेषाणामद्यत्वे भूयसी संख्या।
प्रत्यहमुपसर्पन्ती ग्रसनोन्मत्तेव संयाति।।७५।।

राजनीतिरिति शब्देनाऽद्यत्वे यद्विजानीमः।
रागद्वेषवशीकृतवैभवमेवाऽत्र जानीमः।।७६।।

सिद्धान्तोऽस्त्येकोऽयमहं स्वतः सर्वमूर्धन्यः।
एतादृशस्वरूपस्वीकारे मम दले गणना।।७७।।

एवं तावदिहैकायत्तं शतसहस्रलक्षमतम्।
मतपत्रपेटिकायास्तदिदं शास्त्रं हि राजनीतिरिह।।७८।।

एतेनाऽपि च भूयाँल्लाभो परितोऽपि सञ्जातः।
दीना हीना जनता किञ्चित्सुखिताऽपि सञ्जाता।।७९।।

मर्यादाया अर्थो यादृशभावेषु सुनिरूढः।
अद्य तु सोऽयं सर्वैस्तिरस्कृतः पूर्णरूपेण।।८०।।

नव्येनोत्तमदीप्तेनाद्य विधानेन सञ्चलिता।
जनतन्त्रात्मकशासनपद्धतिरसमां श्रियं तनुते।।८१।।

सर्वविधस्वातन्त्र्योद्दीप्त्यै सर्वेऽपि जागरूका वा।
दृश्यन्ते देशेऽस्मिन्नगरे नगरेषु ग्रामसद्ग्रामे।।८२।।

आंग्लैर्यच्चारित्र्योन्मूलनमत्रार्पितं व्यवस्थासु।
तेषामेवोन्मेषाः शासनकर्तरि समुन्मिषन्तीव।।८३।।

अलिखितधनलाभानां गोपनतायां परां काष्ठाम्।
कृत्वाऽनल्पफलायां नीतावस्यां निलीयते सर्वैः।।८४।।

दोषा एते सर्वां समुच्छिनन्त्येव मूलतोऽवस्थाम्।
वित्तानां दुरवस्था सम्पूर्णं क्षुब्धमातनुते।।८५।।

विघटनसङ्घटनानां प्रचुरा दृश्यावलिः सेयम्।
प्रजातन्त्रपद्धत्याः शृङ्गारः केवलं भाति।।८६।।

सर्वेऽप्येतेऽद्यत्वे वयं स्वतन्त्राः समालपितुम्।
लिखितुं पठितुं व्यवसायानां काष्ठां परां प्राप्तुम्।।८७।।

विज्ञानानां प्रचुरा प्रवाहमालापरिस्फूर्तिः।
निखिलं मानवकायं स्वात्मन्येव प्रशाम्यति।।८८।।

स्वर्णजयन्तीवर्षे सुवर्णवर्णाङ्कितं निखिलम्।
मनसां मनसां वर्णः सुवर्णलीलां समातनुते।।८९।।

देहल्यामालोक्या सुवर्णवर्षस्य सा सुषमा।
श्रीसङ्गमामहोदयपरिचालितवैभवा जाता।।९०।।

राष्ट्र-स्वतन्त्रतायाः स्वर्णजयन्तीसमारोहे।
सारस्वतीसुषमया नूतनता स्वीकृता काचित्।।९१।।

मण्डनमिश्रमहोदयनेतृत्वे सा प्रकाशधारेयम्।
हरिश्चन्द्रमणिकरगतमाधुर्यै रञ्जिता जयति।।९२।।

सारस्वतीसुषमया या धारेयं प्रवाहिता दिव्या।
ज्ञानप्रभाप्रदीप्ता सर्वं विश्वं विलोडयति।।९३।।

स्वर्णजयन्तीवर्षे भारतवर्षस्य कथमियं धारा।
नवताप्रवाहयुक्ता नो वा सर्वं समीहितं देयात्।।९४।।

राजनीतिरथ सैषा स्वीयान्दोषानपाकृत्य।
भारतवसुन्धरायाः गौरवमावाहितं कुर्यात्।।९५।।

संस्कृतभाषा सैषा केन्द्रीभूता समस्तभावानाम्।
परिपूर्णा सौन्दर्ये सत्ये शिवसामरस्येऽस्मिन्।।९६।।

स्वातन्त्र्यस्याऽद्य पुनः सुवर्णवर्षस्य सम्पूर्तौ।
संस्कृतभाषाया अपि सर्वोत्तमरूपसंस्था स्यात्।।९७।।

संस्कृतमेव तदेतत्सर्वं वा भारतं वर्षम्।
निखिलं चैतद्विश्वं संस्कृतरूपे प्रतिष्ठितं दृश्यम्।।९८।।

वेदा वेदान्ता वा दर्शनगाथाः पुराणानि।
सूत्रं भाष्यं विपुलं काव्यमहाकाव्यसर्वस्वम्।।९९।।

कुत्राऽन्यत्र विलोक्या सैषा सर्वाऽपि सम्पत्तिः।
स्वर्णे सौरभरूपं तदिदं सर्वं विलोक्य सन्धार्यम्।।१००।।

यद्यप्यत्र कलियुगे संस्कृतगाथाप्रबोधिते काले।
सामञ्जस्यं नो वा प्रजायते सत्यसन्धानाम्।।१०१।।

पुनरपि दृष्टैवेयं सरणिः काचित्प्रकृष्टतापूर्णा।
मोदामहे नितान्तं यामाश्रित्याद्य सर्वेऽपि।।१०२।।

राष्ट्र-स्वतन्त्रतायाः स्वर्णजयन्तीमहोत्सवोत्साहे।
शिवदत्तचतुर्वेदोऽयं शतकं काव्यं निवेदयति।।१०३।।

●

# कालिदाससमीक्षकेषु रुचकस्य वैशिष्ट्यम्

**डॉ. शशिधरशर्मा**
संस्कृतविभागाध्यक्षचरः,
पञ्जाबविश्वविद्यालयस्य
चण्डीगढ़नगरे

❀ ❀ ❀

प्राचीनाऽर्वाचीनानां भारतीयाऽऽलङ्कारिकाणामलङ्कारायतेऽलङ्कारसर्वस्वकारो रुय्यकाऽपरपर्य्यायो रुचिमान् रुचकः। तत्कृतान्यलङ्काराणां लक्षणानि यथा प्रसादनिर्मलानि, तदुपज्ञा वृत्तिस्तथैव दुरवगाहा गभीरा च। विद्यावतां यथार्थं चक्रवर्ती विद्याचक्रवर्ती तेन युक्तमुक्तवांस्तद्विषये—

शब्दन्यासो विषमविषयो दुर्घटाऽर्थव्यवस्था
व्याप्तव्याप्तिप्रकटनपरो न्यायचर्चो गभीरः।
इत्थं भूम्ना रुचकवचसां विस्तरः कर्कशोऽयं
(टीकाऽस्माभिः समुपरचिताऽनेन सञ्जीवनीयम्)[१]।। इति।

वृत्तिगता विवेचना वैशद्यहृद्या, उदाहरणानि हृदयहराणि, सहृदयता साधु समर्हिता। असङ्ख्येभ्यः सुकविकाव्येभ्यो रसपेशलानां परिकलितकलानां पद्यानामुदाहरणसरण्या वृत्तिकारो वलक्षं लक्षणानि सङ्गमयति, रसविह्वलः कविकुलगुरुं कालिदासं तु भूयसैवोदाहरति। प्राचां समीक्षकाणां मध्ये भूयस्येव ननु रुचिः कालिदासे रुचकस्य।

**महत्त्वम्**

वाल्मीकिव्यासौ प्रथमं महर्षी, ततः कवी। श्रेण्यकविषु तु कालिदासोऽग्रणीरिति सर्वैरेव साहित्यदर्शनिकाऽग्रेसरैरनुपेक्षणीयमन्वभूयत तदीयकृतिविभूतिभ्यः समुदाहरणम्, तथाऽप्यालङ्कारिकाणां शिरोमणिभावं

१. अलं. सर्व. सञ्जीवनी (१९६५ सं.) पृ. २३१-२३२।

बिभ्राणैर्मम्मटभट्टाद्यैस्तु प्रायेण दोषप्रसङ्गेनाऽसावुदाहियत। तेन च, 'काव्यं यशसेऽर्थकृते'[1] इत्याद्याया आद्यायाः स्वकारिकाया व्याख्याने— 'कालिदासादीनामिव यशः' इति यत्तेनोक्तं तत्रापि पर्यन्ते संशयः सञ्जायते तद्यशः स्थानेऽस्थाने वेति। अलङ्कारप्रकरणेऽपि दोषप्रसङ्गं कालिदासस्य न विस्मरति प्रकाशकारः। प्रचुरप्रचारेण साहित्यदर्पणकारेणाऽपि प्रकाशकारीयैव सरणिरादृता। सुपूर्वं सर्वरसज्ञतामावहद्भ्यां भामहमहिमभ्यामपि गम्भीरा दोषाः कालिदासे निदर्शिता अभूवन्। तदित्थं गुरुगरिम्णामाचार्यवर्याणां दोषप्रायिकत्वदृष्टिर्न खलु संवदति स्म कालिदासस्य महिम्ना, तदीयासु कृतिष्वलङ्कृतिदारिद्र्यशङ्कामपि चाऽनिशङ्कामपि तनोति स्म। प्राचुर्येण ईदृशे व्यतिकरे तत्तदलङ्कारोदाहरणतया भूम्ना कालिदासश्लोकानुल्लिखता सर्वस्वकृता कालिदासमहिमा सुप्रतिष्ठापित आलङ्कारिकाणां गोष्ठ्याम्।

किञ्च, ध्वनिवादी खलु सर्वस्वकारः, ध्वनिमतञ्च प्रतिष्ठा निखिलानां साहित्यसम्प्रदायानाम्। ध्वन्यध्वनीनेन वर्येणाऽऽचार्येण मुहुर्मुहुरुदाहरणादलङ्काराणामपि प्रयोगनैपुण्यं रसपावितसर्वलोकस्य पुण्यश्लोकस्य साधुसाधितं भवति कालिदासस्य, रीतिध्वन्यादिकौशलन्तु वामनानन्दवर्धनाद्यैरेव निरवद्यं निदर्शितमभूत्। तथा च महती प्रतीयमाना न्यूनता तदीया निराकृता कृतिना भवतीति वैशिष्ट्यं किमपि सर्वस्वकारस्य। ध्वनिसर्वस्वविदो बहुमतिर्हि रसाऽनुगुणत्वेऽपि तदुक्तीनां परमं प्रामाण्यं भजते, रसकवेरङ्गीकृतानामलङ्कृतीनां सर्वाङ्गसौष्ठवम् इति यावत्; अतश्चाऽसाधारणी धोरणी सर्वस्वकृतोदाहृतानां कालिदासनिदर्शनानाम्।

**रुचककर्तृकत्वे विवादः**

ननु स्यादेवं यद्यलङ्कारसर्वस्वस्य कर्ता रुचकः सिद्ध्येत्, न तु तथा। यतः, 'अलङ्कारसूत्रे'ति मूलनामधेयस्य ग्रन्थरत्नस्य तस्य सूत्रकर्ता राजानकरुचक इति सर्वसम्मतं मतम्। वृत्तेस्तु कर्तृत्वविषये जागर्ति विवादः। ग्रन्थरत्नस्यास्य श्रीविद्याचक्रवर्ती, जयरथश्च महारथौ टीकाकृतौ धुरीणावालङ्कारिकाणाम्। तयोरपि जयरथः स्वयं राजानकरुचकश्च काश्मीराऽभिजनौ। उभौ पूर्वोक्तौ टीकाकृतौ रुचकमेव सर्वस्वकृतमातिष्ठेते।

उपक्रम एव श्रीविद्याचक्रवर्तिनोक्तम्—

१. का.प्र. १।१।

रुचकाचार्योपज्ञे सेयमलङ्कारसर्वस्वे।

सञ्जीवनीति टीका श्रीविद्याचक्रवर्तिना क्रियते[१]।। इति।

उपसंहारेऽपि च—

इत्थं भूम्ना रुचकवचसां विस्तरः कर्कशोऽयम्[२]। इति।

उपक्रमपद्योत्तरार्धगतम्—

निजाऽलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते[३]—

इत्येतद्विवृण्वंश्च—

'निजानां स्वेनैव प्रणीतानाम् अलङ्कारसूत्राणां तात्पर्यमुच्यते। हृदयमुद्घाट्यते। केन प्रकारेण, वृत्त्या वृत्तिस्वरूपेण सन्दर्भेण' इत्याह।

जयरथोऽपि—

'निजेति परकीयाणां सूत्राणां तात्पर्यकथनेऽनवबोधोऽपि स्यादिति भावः। तथा च न कैश्चिदपि परैरीदृंशि सूत्राणि कृतानीत्यपि ध्वनितम्'[४] इत्याह।

किन्तु 'मङ्ख-मङ्खक-मङ्कके'ति त्रिविधसंज्ञया विज्ञातस्य विज्ञवरस्य प्रकृतवृत्तिकृत्त्वं केरलोद्भवसमुद्रबन्धकृतविवृतौ सनिर्बन्धमुद्घुष्टम्, तथा च तद्विवृत्युपसंहृतिपद्यमवलोकनीयतामर्हति—

मङ्खकनिबन्धविवृतौ विहितायामिह समुद्रबन्धेन।

गुणदोषमात्रमित्रैर्भविषिष्टाऽदोषदर्शिभिः सद्भिः[५]।।

तथा च प्राप्तप्रसरः संशयाऽवसरः।

यद्यपि नास्ति स्थानं प्रकृते विषयमिमं वितत्य परीक्षितुम्, तथापि शीर्षकाऽनुसृत्या इयदवश्यविनिवेद्यं यत् पर्यन्ते रुचक एव वृत्तिकृदित्यभ्युपेतव्यं प्रतिभाति। कस्मात्? देशकालापेक्षयाऽन्तरङ्गत्वात् काश्मीरपरम्परायाः। तदपेक्ष्य बहिरङ्गत्वाच्च केरलपरम्परायाः। विमर्शकारो जयरथो रुचकश्च द्वावपि

---

१. अ.स.सं. पृ. १, सञ्जीवन्युपक्रमपद्यम्, २।

२. तत्रैव, पृ. २३१।

३. तत्रैव, पृ. ३।

४. विमर्शिनी सं. (चौ.) पृ. ३।

५. समुद्रबन्धटीका, अनन्तशयनग्रन्थमालायां त्रिवेन्द्रमनगरात् प्रकाशिता।

काश्मीराऽभिजनौ। समुद्रबन्धकारः पुनः सुदूरदक्षिणाऽभिजनः सुतरां बहिर्भूतः। जयरथः कालतोऽप्यासन्नतरो रुचकस्य पञ्चसप्ततिवर्षान्तरेणैव जातत्वात्[१]। त्रयोदश्याः क्रिस्तुशताब्द्या आदौ अजायत जयरथः, समुद्रबन्धश्च तस्या मध्ये इति परतरः। जयरथश्च स्पष्टमेव रुचककृततां वृत्तेर्वक्ति। समुद्रबन्धटीकायामपि पाठान्तरे 'समाप्तं चेदमलङ्कारसर्वस्वम्, कृती राजानकश्रीरुचकस्य। शम्। इति मंखुः'? इति पाठोपलम्भात्[२]। श्रीविद्याचक्रवर्ति-विद्यानाथ-कुमारस्वामि-मल्लिनाथादयो दाक्षिणात्या विद्वांसोऽपि रुचककृततयैव सर्वस्वमभ्यधुः। लब्धप्रतिष्ठानां नव्यसमीक्षकाणां काणेवेङ्कटराघवादीनां बहुमतमपि सर्वस्वस्य रुचककृततामेव समर्थयति। मङ्खककृतत्वे पुनरुपरि धृतपूर्वः समुद्रबन्धोल्लेख एकलः प्रमाणम्। कृष्णाचार्य्यादिभिरपि तदाधारेणैव स्वमतिर्निर्मितेत्यत्र नास्ति संशयः। प्रमाणाऽन्तराऽनुद्धरणाद् वृत्तेर्मङ्खककृतत्वं ख्यापयता खलु,

'गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते'[३]।

इत्यस्मिन् पाठे महान्निर्भरः। गुरू रुचकः, तदीयसूत्राणां तात्पर्यं शिष्येण मङ्खकेनोच्यत इति तदीयं व्याख्यानम्। किन्तु 'गुर्व' इतीदृशः कर्णकटुवर्णन्यास आदावेव सहृदयवृत्तिकृता कृत इत्यत्र न प्रत्ययो भवति। भवतु, अन्य उपलभ्यमाना उल्लेखा अपि संशयं पोषयन्ति, न शोषयन्ति। यथा 'सहृदयलीला' इत्यपरा कृती रुचकस्य। परं तस्या पुष्पिकायामपि एकत्र रुचककृतत्वोल्लेखः[४], परत्र तु न तथा[५]। इयमेव गतिरप्पयदीक्षिताद्युल्लेखानामपि।

**समन्वयसरणिः**

समन्वयसरणिशरणानामस्माकं पुनरित्थम्प्रतिभाति यद् गुरुणा रुचकेन प्राणीयन्त सूत्राणि तद्वृत्तिश्चाऽपि। संशोधनपरिवर्धने तु पश्चात्तदनुज्ञया मङ्खकेन कृते स्याताम्। तत्प्रसङ्गेन च क्वचित् परिवर्तनमपि नाऽसम्भवीत्यपि

---

१. अ.स.स. जानकी - सं., पृ. २।

२. अ.स.वि. हिन्दी (चौ.सं.) पृ. १०।
अत्र पाठे मुङ्खः प्रतिपादकः अलङ्कारसर्वस्वस्य रुचककर्तृकस्य समाप्तिरिति च प्रतिपाद्यमिति सुव्यक्ततरम्।

३. अ.सं. सविमर्शभाषे चौ. संस्करणे, पृ.१।

४. कृतिः श्रीविपश्चिद्वरराजानकतिलकात्मजश्रीमदालङ्कारिकसमाजाऽग्रगण्यश्रीराजानकरुय्यकस्य राजानकरुचकाऽपरनाम्नोऽलङ्कारसर्वस्वकृत इति पिशेलसंस्करणे।

५. इति राजानकरुय्यकविरचितायां सहृदयलीलायां प्रथमः— इति निर्णयसागरीयसंस्करणे।

प्रात्यहिकप्रत्यक्षविषयोऽयं सम्पादकानाम्। तथा च वृत्तेरपि मूलकर्ता रुचक एवेति द्विविधं प्रमाणसामञ्जस्यमञ्जसा भवति।

सविमर्शसर्वस्वस्य हिन्दीव्याख्याता डॉ.रेवाप्रसादद्विवेदी प्रखरतरः समर्थको मङ्खककृतत्वस्य। स वक्ति— "शिष्यो गुरुश्च मिलित्वा यदि कमपि ग्रन्थं लिखतस्तदा नाम गुरोरेव चलति[१]"। सत्यम्, तथाऽपि गुरोर्मार्गदर्शयितृत्वं तु तस्याऽप्यनपोह्यमेव। एवं वृत्तेस्तत्सम्मतत्वमपि। तथा च वक्ष्यमाणो मार्गो रुचकस्यैवेति निष्प्रत्यूहं निष्कृष्यत इति तदीयश्रेयोऽपि स एवाऽश्नुयादिति न्यायप्राप्तम्। अथ प्रतिपाद्यमुदाहृतिभिः समर्थयामः।

उदाहृतयः—

तथा चाऽलङ्कारमात्रस्य मातृतया प्रथिताया उपमाया अनुगामितयैकरूप्येण निर्देशविषये—

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च[२]।।

इति कुमारसम्भवात्। तस्या एव दृष्टान्तवद्बिम्बप्रतिबिम्बभावे च—

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः[३]।।

इति रघुवंशात्। गुणोत्प्रेक्षायाः —

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्[४]।।

स्वरूपोत्प्रेक्षायाश्च—

कुबेरजुष्टां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज[५]।।

इति कुमारसम्भवात्।

---

१. अ.स. सविमर्शभाषे चौ. संस्करणे, पृ. ९।
२. कुमार. १।२८; अ.स., पृ. ३८।
३. रघु. ६।६०; अ.स., पृ. ३९।
४. रघु. १३।२०; अ.स., ७२-७३,७७।
५. कु.सं. ३।२५; अ.स., पृ. ७४।

भिन्ननिर्मातृनिष्ठतया सम्बन्धेऽप्यसम्बन्धरूपाऽतिशयोक्तेः—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाऽभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः[१]।।

इति विक्रमोर्वशीयात्। असम्बन्धे सम्बन्धरूपायास्तस्यास्तु—

पुष्पं प्रवालोपहितं यदि स्यान् मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य[२]।।

इति कुमारसम्भवात्। मध्यदीपकस्य—

सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः[३]।।

इति रघुवंशात्। 'प्रकृतवाक्यार्थे वाक्यार्थाऽन्तराऽध्यारोपणेन' सम्बन्धाऽनुपपत्ति-मूलाया निदर्शनाविच्छित्तेः—

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः[४]।।

इत्यभिज्ञानशाकुन्तलात्। एवं विभावनायाः,

असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे[५]।।

इति कुमारसम्भवात्। अन्योन्यस्य—

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तुलस्य।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः[६]।।

---

१. विक्रमो. १।१०; अ.स., पृ. ८२;
२. कु.स. १।४४; अ.स., पृ. ८२।
३. रघु. २।१५; अ.स., पृ. ८८;
४. अ.शा. १।१७; अ.स., पृ. ९३।
५. कु.स. १।३१; अ.स., पृ. १५५;
६. कु.सं. २।४२; अ.स., पृ. १६६।

इति कुमारसम्भवात्। अनेकपदार्थगतत्वेन तस्यैव च—

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम्।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि[१]।।

इति रघुवंशात्। एकवाक्यार्थगतत्वेन काव्यलिङ्गस्य—

मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्त्रिणः[२]।।

इति च पूर्वोक्तादेव। एकस्याऽनेकस्मिन्ननेकस्य चैकस्मिन् क्रमेण वृत्तिवपुषः पर्यायस्य, यथाक्रमम्—

विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागादरुणाच्च कन्दुकात्।
कुशाङ्कुराऽऽदानपरिक्षताऽङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः[३]।।

इति कुमारसम्भवात्,

निशासु भास्वत्कलनूपुराणां यः सञ्चरोऽभूदभिसारिकाणाम्।
नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः[४]।।

इति रघुवंशाच्च। सामान्येन विशेषसमर्थनाऽऽत्मकस्याऽर्थान्तरन्यासस्य—

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः[५]।।

इति कुमारसम्भवात्। अर्थापत्तेश्च प्राकरणिकादप्राकरणिकार्थापतनप्रभेदस्य—

पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः।
कमपरवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः[६]।।

इति कुमारसम्भवात् क्रमेण निदर्शनीचकार सर्वस्वकारः।

गुणक्रियायौगपद्यात्मनः समुच्चयस्य तदुदाहरणयुगलं तु राजानकमम्मट-भट्टैरुपात्तमेव। तयोः क्रियायौगपद्योदाहरणं कालिदासीयमेव—

---

१. रघु. १३।२३; अ.स., पृ. १७२; २. कु.सं. ५।४; अ.स., पृ. १७२।
३. कु.सं. ५।११; अ.स., पृ. १७७; ४. रघु. १६।१२; अ.स., पृ. १७८।
५. कु.सं. १।३; अ.स., पृ. १३९; ६. कु.सं. ६।९५; अ.स., पृ. १८२।

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहोभिः।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः[1]।। इति।

वितर्कौत्सुक्यमतिस्मृतिशङ्कादैन्यधृतिचिन्ताभावशबलतोदाहरणञ्चेदम्—

क्वाऽकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति[2]।।

इत्युपात्तपूर्वमुपाददतो भूयसी कालिदासे रुचिरभिव्यज्यते ग्रन्थकृतः। एवं क्वाचित्केषूदाहरणाऽन्तरेष्वप्यूह्यम्। सौक्ष्म्यम्—

न च सामान्येनोदाहरणमात्रेण सन्तुष्यति समीक्षकशिखामणिरयम्। यावता स्थाने स्थाने सूक्ष्मं विवेचनमपि प्रस्तौति। तथा हि सहोक्तिस्थले तृतीयान्तस्य परिशिष्टस्य च क्रमेण शाब्दमार्थञ्च प्राधान्यम्। तत्राऽपि नियमेनाऽतिशयोक्तिमूलत्वमस्याः। सा तु कार्यकारणप्रतिनियमरूपा तत्तुल्यकालतारूपा (न तु कार्यस्य पूर्वकालतारूपा), अभेदाऽध्यवसायरूपा च। अभेदाऽध्यवसायश्च श्लेषभित्तिकोऽन्यथा वेति परतरसर्वाऽऽलङ्कारिकाऽङ्गीकृतां सरणिमाविष्कृत्य तदनुसारेण सारः—

'एतद्विशेषपरिहारेण सहोक्तिमात्रं नाऽलङ्कारः'। यथा—

अनेन सार्धं विहराऽम्बुराशेस्तीरेषु तालीवनमर्मरेषु।
द्वीपाऽन्तराऽऽनीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः[3]।। इत्यादौ[4]।

इत्येवं रघुपद्ये सहोक्तिस्थितिं सूक्ष्मं निरास्थत्। विभावनाप्रसङ्गे च,

असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे[5]।।

अत्र द्वितीये पादे मदनस्य यदासवाख्यं कारणं, तदभावेऽपि यौवनहेतुत्वेनोपनिबन्धः कृतः। मदस्य च द्वैविध्येऽप्यभेदाऽध्यवसायादेकत्व-

---

१. विक्रमो० ४।३; अ.स., पृ. १८५।
२. विक्रमो० ४।३४;
३. रघु., ६।५७।
४. अ.स., पृ. ६९;
५. कु.सं., १।३१।

मतिशयोक्त्या। उत्थानम्, अपि तु तदनुप्राणितत्वेन[१]— इत्येवं नवं विचारं प्रावर्तयत्। यद्यपि महानत्र मतभेद आलङ्कारिकाणाम्, तथाऽपि मौलिकचिन्ताचातुर्यं तु सर्वस्वकारीयं सर्वैरपि श्लाघ्यमेव[२]। सङ्करप्रसङ्गे तु सूक्ष्मतायाः सीमानमेवाऽस्पृशत्सर्वस्वकारो रघुकारीयाऽलङ्कृतिविवेचनस्य। तथा ह्यङ्गाङ्गिभावोदाहरणतया—

अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी[३]।।

अत्राऽङ्गुलीभिरिवेत्युपमा। सैव सरोजलोचनमित्यस्या उपमायाः प्रसाधिका। रजनीमुखमिति श्लेषमूलाऽतिशयोक्तिः प्रारम्भवदनाख्ययोर्मुखयोरभेदाध्यवसायात्। अत एव तयोरङ्गाऽङ्गिभावः[४], इत्यादितदीयं विवेचनमत्र प्रमाणम्। एवमनुमानाऽर्थाऽन्तरन्यासकाव्यलिङ्गानां भेदोद्भेदनप्रस्तावे।

अयमत्र पिण्डार्थः— इहास्ति प्रत्याय्यप्रत्यायकभावः। अस्ति च समर्थ्यसमर्थभावः। तत्राप्रतीतप्रत्यायने प्रत्याय्यप्रत्यायकभावः। प्रतीतप्रत्यायने तु समर्थ्यसमर्थकभावः। तत्र प्रत्याय्यप्रत्यायकभावेऽनुमानम्। समर्थ्यसमर्थकभावे तु यत्र पदार्थो हेतुस्तत्र हेतुत्वेनोपादाने—

'नागेन्द्रहस्तात्त्वचि कर्कशत्वादेकान्तशैत्यात् कदलीविशेषाः'[५]।

इत्यादाविव न कश्चिदलङ्कारः। यत्र तूपात्तस्य हेतुत्वं यथोदाहृते विषये— 'मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षा'[६] इत्यादौ, तत्रैव काव्यलिङ्गम्। यत्र तु वाक्यार्थस्य हेतुत्वं, तत्र हेतुत्वप्रतिपादकमन्तरेण हेतुत्वोपन्यासे काव्यलिङ्गमेव। तटस्थत्वे-नोपन्यस्तस्य तु हेतुत्वेऽर्थान्तरन्यासः[७] इत्यादि सुसूक्ष्ममेतदीयं विश्लेषणम्।

**निष्पक्षता**

अपक्षपातः खलु समीक्षकस्य मुख्यो गुणः। गुणदोषयोरन्यतरप्रावण्ये प्राड्विपाकः स भवेत्, न तु न्यायाधीशः। न्यायाधीशत्वेन च तं भावयन्ति

---

१. अ.स., पृ. १५५।
२. अत्राऽऽलङ्कारिकाणां प्रतिपदं जागर्ति महती विप्रतिपत्तिः। तस्या विवेचनम्— 'असम्भृत'-मित्यादीनि 'कालिदासपद्ये आलङ्कारिकविमतिविवेचनम्' इति शीर्षकितेऽस्मच्छोधपत्रे कृतमिति तत एवाऽवसेयम्।
३. कु.सं., ८।६३;  ४. अ.स., पृ. २२२।
५. कु.सं., १।३६; अ.स., पृ. १७४;  ६. रघु. १३।
७. अ.स., पृ. १७३-१७४।

भावुकाः। अस्मिन्निकषे च रुचकः परतरः सिद्ध्यति परेभ्यः। कालिदासीयं दोषमप्यसौ जोषमुद्घाटयति। तथा हि स्मरणाऽलङ्कारप्रस्तावे,

अत्राऽनुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम्[१]।।

इत्यत्र रघुपद्ये विभावाद्यनागूरितस्वशब्दमात्रप्रतिपाद्यत्वात्तदलङ्कारवैधुर्यमवधार्य, तेनोक्तम्—

'अत्र च कर्तृविशेषणानां स्मर्तव्यदशाभावित्वे स्मर्तृदशाभावित्वमसमीचीनम्' इति[२]।

अत्राऽपि भवतु नाम रुचिभेदो वैचारिकाणाम्, समीक्षणरुचिस्तु रुचकीया सर्वथैव रोचनी। अयं दोषपक्षमपि कालिदासीयं नोपेक्षते, न तु तन्वपि दोषप्रायाऽस्य दृष्टिः।

**उपसंहृतिः**

तदित्थं कालिदाससमीक्षासाहित्येऽनितरसाधारणं रुचकस्य वैशिष्ट्यम्। तेन हि कालिदासकवितानां दोषप्रायत्वभ्रमस्याऽवसरोऽपसारितः, आलङ्कारिक-गोष्ठ्यामप्युच्चतमं तदीयमास्पदं प्रतिष्ठापितम्। किञ्च 'तत्र रसादिध्वनिः कालिदासादिप्रबन्धेषु' इति[३] स्वयं निर्धार्य यदसावलङ्कारोदाहरणत्वेन कालिदासकृतीः प्रायिकतयोदाजहार, तेन रसाऽनुबन्धेनाऽलङ्कारनिबन्धनसृतिमपि स सहृदयानां सरसीचकारेति दिक्।

●

१. रघु., १३।५१; २. अ.स., पृ. ४२।
३. तत्रैव, पृ. १६,२३।

# व्याख्यापद्धतिः

**प्रो. रहसविहारीद्विवेदी**
पूर्व-निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

'वि + आङ् + ख्या + अङ् + टाप् = व्याख्या (विवरणम्), पत् + हन् (गतौ) + क्तिन् = पद्धतिः' (वर्त्म) इति व्युत्पत्तिलभ्योऽर्थोऽनयोः शब्दयोः। भारतीयाया व्याख्यायाः स्वरूपमेवं दृश्यते—

'या लीनमर्थं प्रथते सुबोधं लुप्तं सदर्थं स्फुटितं विधत्ते।
अल्पं च शास्त्रं विदधात्यनल्पं व्याख्या समार्थैर्विवृतिः पदैः सा'।।

स्वस्वशास्त्रप्रस्थानाद्यनुरोधेन व्याख्याशिल्पे वैविध्यं दृश्यते। यथाह महाभारतकारः —

'वेदा विभिन्नाः स्मृतयो विभिन्ना नैको मुनिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः'।।

व्याख्याकाराः स्वकीय आत्मनिवेदने क्वचित्क्वचिद् व्याख्याशिल्पमपि प्रतिपादयन्ति। यथा—

'अनल्पकविकल्पिताखिलसदर्थमञ्जूषिकां
सदन्वयविबोधिकां विबुधसंशयोच्छेदिकाम्।
उदाहरणयोजनाजननसज्जनाह्लादिकां
उदाहरणचन्द्रिकां भजत वैद्यनाथोदिताम्'।।

(काव्यप्रकाशस्य प्रदीपटीकाकारः)

तथा च—

'यत्र प्रातिभशालिनामपि नृणां सञ्चारमातन्वते
सन्देहैः प्रतिभाकिरीटपटली सद्यः समुत्तार्यते।
नीरन्ध्रं विषमप्रमेयविटपिव्रातावकीर्णे सदा
तस्मिंस्तर्कपथे यथेष्टगमना जज्ञे यदीया मतिः'।।
(का.प्र.सङ्केते माणिक्यचन्द्रः)

मीमांसानयविवेकव्याख्यावैशिष्ट्यं प्रतिपादयन्नेवं वक्ति तत्कर्त्ता रविदेवः —

'ग्रन्थेऽल्पे विततेऽर्थे व्याख्या नो चेच्छ्रुतैषिणः केचित्।
गुरुकुल एव जरेयुः श्रुतमर्थं विस्मरेयुर्वा'।।

उक्तेषु व्याख्याकृतां कथनेषु व्याख्यायाः सामान्यं स्वरूपं स्फुटीभवति। अधीतिबोधाचरणप्रचारणैः स्वशास्त्रसम्पत्तिसंरक्षणे तत्संवर्द्धने संलग्ना मनीषिणस्तदर्थं विविधोपायानङ्गीकृतवन्तः। तेषामुपायानामाधाराणां वा सङ्केतो राजशेखरेण व्यधायि। द्वितीयाध्याये (काव्यमीमांसायाः) वाङ्मयं विभज्य नदीप्रवाहवद्‌यथोत्तरं विपुलानां शास्त्राणां विपुलताहेतवस्तेनैवं सङ्केतिताः—

'सरितामिव प्रवाहास्तुच्छाः प्रथमं यथोत्तरं विपुलाः।
ये शास्त्रसमारम्भा भवन्ति लोकस्य ते वन्द्याः'।।

सूत्रादिभिश्चैषां प्रणयनम्। तत्र सूत्रणात्सूत्रम्, यदाहुः—

'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः'।।

सूत्राणां सकलविवरणं वृत्तिः, सूत्रविवेचनं पद्धतिः, आक्षिप्य भाषणाद् भाष्यम्, अन्तर्भाष्यं समीक्षा, अवान्तरार्थविच्छेदश्च सा, यथासम्भवमर्थस्य टीकनं टीका, विषमपदभञ्जिका पञ्चिका, अर्थप्रदर्शनकारिका कारिका, उक्तानुक्तदुरुक्तचिन्ता वार्त्तिकमिति शास्त्रभेदाः। शास्त्रैकदेशप्रक्रिया प्रकरणम्। अध्यायादयस्त्ववान्तरभेदाः, कृतिभिः स्वतन्त्रतया प्रणीता इत्यपरसङ्ख्येया अनाख्येयाश्च। शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या। यथोक्तम्—

'इत्यनन्तोऽभियुक्तानामत्र संरम्भविस्तरः।
त्यक्तो निपुणधीगम्यो ग्रन्थगौरवकारणात्'।।

भारतीया धर्मार्थकाममोक्षाख्यपुरुषार्थसम्पत्तिर्हि शब्दार्थज्ञानाधीनेति निर्विवादम्। यदाह काव्यार्शे दण्डी—

'इदमन्धंतमः कृत्स्नं जायते भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारान्न दीप्यते'।। (१।४)

तथा च वाक्यपदीये भगवान् भर्तृहरिः—

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते'।। (१।१२३)

शब्दार्थज्ञानं हि शक्तिग्रहाधीनम्। शक्तिग्रहश्च—

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य बृद्धाः'।।

शक्तिग्राहकेषु व्यवहारस्तावच्छक्तिग्राहकशिरोमणिरिति सर्वेषामभ्युपगमः। कमपि शब्दमजानानः शिशुर्नान्यैरुपायैः शक्यो बोधितुमृते व्यवहारात्। व्यवहारतो ज्ञाताया भाषाया व्याकरणकोशादिमाध्यमेन ज्ञाने जाते शास्त्रादिज्ञानाय सूत्रकारिकादिशिल्पेन प्रणीतानां ग्रन्थानामवबोधार्थं व्याख्याभाष्याद्यन्योपाया आचार्यैरवलम्ब्य, येषामुपायानां सङ्क्षिप्ततया सङ्केतो राजशेखरेणाकारि।

उपदेशार्थमवबोधार्थं वा प्रयुक्तः शब्दस्तावत् त्रिविधः— प्रभुसम्मितः, सुहृत्सम्मितः, कान्तासम्मितश्च। तत्राद्यः शब्दप्रधानो वेदादिः। शब्दप्रधानत्वं च प्रवर्तनारूपशासनाप्रधानत्वम्। सुहृत्सम्मितो मित्रतुल्योऽर्थतात्पर्यात्पुराणेतिहासादि-प्राचीनवर्णनात्मकः। कान्तासम्मितः कान्तेव सरसतापादकः काव्यात्मकः। अत्राद्य आदेशात्मकः, द्वितीयः परामर्शात्मकः, तृतीयश्च लोकोत्तराह्लादात्मकः।

वस्तुतो वेद एव सर्वस्य भारतीयस्य ज्ञानस्य मूलम्। तज्ज्ञानस्य सम्प्रेषणशिल्पवैशिष्ट्यात्पार्थक्यं दृश्यते। यदाह महाभारते—

'सर्वेषां च स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे'।। (शान्ति. २३२।२६)

ज्ञानावबोधप्रक्रियायाः स्थितिः—

'उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते'।।

इति कारिका वाक्यपदीये (२।२४०) भर्तृहरिणा व्यलेखि। ये ये विधय उपायाः पद्धतय आचार्या अवलम्बन्ते समुपदेशाय कदाचित्स्वयं सम्पूर्णाः सत्याश्च न भवन्ति; किन्तु सत्यलाभाय ज्ञानप्राप्तये वा इमान्युपकरणानि भवन्ति। यथा— 'सत्यं ज्ञानमनन्तं ब्रह्म' इति वदद्भिरद्वैतिभिरनिर्वचनीया मायैव ब्रह्मसाक्षात्काराय उपाय इति कथ्यते।

'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यभियुक्तोक्त्या न केवलं वेदाध्ययनाय वेदाङ्गा महत्त्वमावहन्त्यपि तु लौकिकसंस्कृतभाषया प्रणीतानां ग्रन्थानामध्ययनायापि वेदाङ्गानां महत्त्वं वरीवर्त्ति, तेष्वपि व्याकरणस्य महत्त्वं सर्वाधिकं विद्यते। अतो व्याख्याविधाने तस्य सम्प्रेषणशिल्पं प्रायशः स्वायत्तीकृतं व्याख्याकृद्भिः। वृत्ति-भाष्य-वार्तिक-परिभाषादिशब्दा अपि मन्ये तत एवान्य-शास्त्रकृद्भिर्गृहीताः सन्ति। सत्यमेवोक्तम्—

शब्दार्थसम्बन्धनिमित्ततत्त्वं वाच्याविशेषेऽपि च साध्वसाधून्।
साधुप्रयोगानुमितांश्च शिष्टान्न वेद यो व्याकरणं न वेद[1]।।

अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते[2]।।

अतस्तावत्प्रथमं व्याकरणस्य व्याख्यापद्धतिः प्रस्तूयते—भगवता पतञ्जलिना व्याकरणमहाभाष्ये व्याकरणशब्दस्य पदार्थनिरूपणे व्याख्यानस्वरूपमपि प्रत्यपादि। तद्यथा आक्षेपः— अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः? समाधानम्— सूत्रम्।

आ. (वा.) सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः?

भा. सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते व्याकरणस्य सूत्रमिति, किं तर्हि तदन्यत्सूत्राद् व्याकरणं यस्यादः सूत्रं स्यात्?

आक्षेपान्तरम्—वा. शब्दाप्रतिपत्तिः।

भा. शब्दानां चाप्रतिपत्तिः प्राप्नोति। व्याकरणाच्छब्दान् प्रतिपद्यामहे इति। न हि सूत्रत एव शब्दान् प्रतिपद्यन्ते।

किं तर्हि? व्याख्यानतश्च।

---

१. वाक्यपदीये - १।१३ हरिवृषभकृतस्वोपज्ञवृत्तौ।
२. वा.प. १।१३।

आ.सा.भा. ननु तदेव सूत्रं विगृहीतं व्याख्यानं भवति।

आ.बा.भा. न केवलानि चर्चापदानि व्याख्यानम्— वृद्धि + आत् +ऐज् इति। किं तर्हि? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति। उदाहरणानि दीयन्ते, तत्र सूत्रसमन्वयः क्रियते। यदि सूत्रे कानिचित्पदान्यध्याहार्याणि भवन्ति, तान्यपि उचितेषु स्थानेषु कल्प्यन्ते, ततः प्रत्युदाहरणानि दीयन्ते, एषा पद्धतिर्भाष्यस्य। अन्यानि च सन्ति साम्प्रदायिकानि भाष्यवार्तिकादिपद्धतिसूचकानि लक्षणानि। भाषावृत्तिविवृत्यारम्भे सृष्टिधराचार्यः पञ्चलक्षणं व्याख्यानं मनुते—

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।
पूर्वपक्षसमाधानं व्याख्यानं पञ्चलक्षणम्।।

केचनाचार्याः पूर्वपक्षं समाधानम् (उत्तरपक्षं) च पृथक्कृत्य षड्विधं व्याख्यानं मन्वते—

पदच्छेदः पदार्थश्च विग्रहो वाक्ययोजना।
आक्षेपश्च समाधानं व्याख्यानं षड्विधं स्मृतम्।।

(प्रदीपोद्द्योतच्छायारम्भे)

अन्येषामवबोधकतत्त्वानां स्वरूपमेवं विद्यते—

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।। (तत्रैव)

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।
तं ग्रन्थं वार्तिकं प्राहुः वार्तिकज्ञा मनीषिणः।।

विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः।
निबन्धो यः समासेन सङ्ग्रहं तं विदुर्बुधाः।।

पञ्चाङ्गकं वाक्यं ग्रन्थः, तदुक्तम्—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्।।

भारतीयपद्धतौ शास्त्रादौ यद्वक्तव्यं भवति तद्यथा—

सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः।।

सारतया प्रणीता सुखावबोधका ग्रन्था प्रकरणमिति नाम्ना कथ्यन्ते—

शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः।।

(पराशरोपपुराणे-१८।२१)

प्रायशः ग्रन्थारम्भेऽनुबन्धोल्लेखः क्रियते—

'तत्रानुबन्धो नामाधिकारिविषयसम्बन्धप्रयोजनानि'। (वेदान्तसारे-४)।

न्यायदर्शनं प्रमाणमाश्रित्य प्रवर्तते, यतो हि प्रत्यक्षपरोक्षपदार्थविषये तदेव साधनम्। न्यायभाष्यकारो वात्स्यायनोऽनुबन्धचतुष्टयनिरूपणत एव स्वभाष्यं प्रारभते। तच्छब्दैरेव न्यायपद्धतिर्निभाल्यताम्—

'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्। प्रमाणमन्तरेण नार्थप्रतिपत्तिः, नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम्। प्रमाणेन खल्वयं ज्ञाताऽर्थमुपलभ्य तमर्थमभीप्सति, जिहासति वा। तस्येप्सा-जिहासा-प्रयुक्तस्य समीहा प्रवृत्तिरित्युच्यते। अर्थस्तु सुखं सुखहेतुश्च, दुःखं दुःखहेतुश्च। सोऽयं प्रमाणार्थोऽपरिसङ्ख्येयः प्राणभृद्भेदस्यापरिसंख्येयत्वात्।

अर्थवति च प्रमाणे प्रमाता, प्रमेयं, प्रमितिरित्यर्थवन्ति भवन्ति। कस्मात्? अन्यतमोपायेऽर्थस्यानुपपत्तेः। तत्र यस्येप्सा-जिहासाप्रयुक्तस्य प्रवृत्तिः, स प्रमाता, स येनार्थं प्रमिणोति तत्प्रमाणम्, योऽर्थः प्रमीयते तत्प्रमेयम्, यदर्थविज्ञानं सा प्रमितिः। चतसृषु चैवंविधास्वर्थतत्त्वं परिसमाप्यते'।

न्यायदर्शनदिशा—'प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्मोक्षप्राप्तिर्भवति। न च प्रमाणादीनां तत्त्वज्ञानं सम्यग्ज्ञानं भवति, यावदेषामुद्देशलक्षणपरीक्षा न क्रियन्ते। यदाह भाष्यकारः—

'त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा चेति।

उद्देशस्तु नाममात्रेण वस्तुसङ्कीर्तनम्, लक्षणं त्वसाधारणधर्मवचनम्। लक्षितस्य लक्षणमुपपद्यते न वेति विचारः परीक्षा। (तर्कभाषारम्भे) शास्त्रशब्दस्य द्विधा व्युत्पत्तिर्यथा भवति, तथैव व्याख्यापद्धतावपि भेदो दृश्यते। तद्यथा—

'शासनात् शंसनात् शास्त्रं शास्त्रमित्यभिधीयते।
शासनं द्विविधं प्रोक्तं शास्त्रलक्षणवेदिभिः।
शंसनं भूतवस्त्वेकविषयं न क्रियापरम्'।।

विधिनिषेधरूपेण शासनं कुर्वाणानि श्रुतिस्मृतिरूपाणि (वेदधर्मशास्त्ररूपाणि) सन्ति। एतानि शासनाच्छास्त्रस्यान्वर्थीभूतानि। शंसनाच्छास्त्रस्य बोधकानि दर्शनशास्त्राणि।

'संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते'।।

इत्यादिरूपेण व्याकरणसूत्राणां स्थितिः, अतो व्याकरणमपि शासनात्मकत्वमेव सूचयति। शासनशास्त्रं (अनुष्ठानपरकं) पुरुषपरतन्त्रं शंसनशास्त्रं च वस्तुतन्त्रं (ज्ञानपरकं) विद्यते। उभयोरयं भेदः प्रायशो व्याख्यास्वपि दृश्यते।

वेदान्तेऽपि शंसनात्मकमेव स्वरूपं दृश्यते। यदाह सारसङ्ग्रहे मधुसूदन-सरस्वती—

यद्बादरायणमतं परिगृह्य पूर्वं श्रेयस्करेऽनधिगते खलु चोदनायाः।
प्रामाण्यमुक्तमिदमस्य समन्वयस्य वस्तुस्वरूपकथनेऽप्यविशिष्टमस्ति।।

उपनिषत्तात्पर्यावधारणं सर्वेषां कृते समानमस्ति, तथापि वेदान्तसूत्राणां व्याख्या स्वाभिमतवादानुसारेणाचार्यैरकारि। भगवतः शङ्कराचार्यस्याभिमतः सिद्धान्तोऽद्वैतवादो विद्यते, तस्य व्याख्यापद्धतिः सङ्क्षेपेणात्र प्रस्तूयते—

एकं सूत्रं गृहीत्वा तस्य पदविभागः, ततः प्रतिपदमर्थः कृतः, तदनन्तरं पदपदार्थसम्बन्धः प्रपञ्चितः, तस्य तात्पर्यं च विशदीकृतम्, सूत्रतात्पर्यस्य पूर्वापरविषयस्य च ग्रन्थे सम्बन्धोऽवधारितः। ब्रह्मसूत्रशाङ्करभाष्यस्य प्रथमाधिकरणपद्धतिरेवम्—

१. बादरायणसूत्रम्—'अथातो ब्रह्मजिज्ञासा' इति प्रतिपादितम्।

२. 'अथ'शब्दस्यार्थः प्रतिपादितः— आनन्तर्यार्थ इति। अत्रैवाधिकारार्थत्वं मङ्गलार्थकत्वं च निराकृतम्। धर्मजिज्ञासाया आनन्तर्यमिति पूर्वपक्षीयः सम्बन्धः प्रपञ्चितः। कारणानि च स्पष्टीकृतानि, ततश्चानन्तर्यार्थकेन 'अथ'-शब्देन साधनचतुष्टयसम्पत्तिरुल्लिखिता।

३. द्वितीयस्यातःशब्दस्य हेत्वर्थः प्रतिपादितः, तस्य हेतोरर्थः सप्रमाणं व्याख्यातः।

४. 'ब्रह्म'पदस्यार्थः प्रपञ्चितः, तस्य पदस्य जिज्ञासापदेन सह सम्बन्धः कर्मणि षष्ठीति निर्धारितः। अत्रापि प्रत्यक्षकर्मत्वं सिद्धान्त इति विशदीकृतम्। 'जिज्ञासा'पदस्य सूत्रे निवेशनस्यावश्यकता नास्तीत्यपि विचारितम्। श्रुतिप्रमाणं च निरूपितं 'तद्विजिज्ञासस्व तद् ब्रह्म' इति।

५. विग्रहवाक्यमाध्यमेन ज्ञातुमिच्छा जिज्ञासेत्यर्थः प्रतिपादितः। तच्चावगतिपर्यन्तं ज्ञानं वाच्याया इच्छायाः कर्मफलविषयत्वादिच्छाया इतीच्छाज्ञानयोः सम्बन्धश्च प्रदर्शितः।

६. ज्ञानस्य ब्रह्मणश्च सम्बन्धः पुनर्निरूपितः। 'ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म' इत्यादिना।

७. पुनः सिद्धान्तः प्रत्यपादि तस्माद् ब्रह्म जिज्ञासितव्यमिति। ततश्च ब्रह्मस्वरूपनिर्णये ब्रह्मस्थितौ वादोपवादाः सङ्गृहीताः। एवं शाङ्करभाष्येऽर्थप्रतिपादनम्, तात्पर्यकथनम्, पूर्वापरसम्बन्धनिर्धारणम्, सारनिरूपणम्, अवबोधनमित्यादीनि तथ्यानि प्राप्यन्ते।

प्रसिद्धतमानां भाष्यकाराणां पतञ्जलि-वात्स्यायन-शङ्कराचार्याणां व्याख्यानपद्धतिर्दिङ्मात्रमत्र प्रदर्शिता, एतेन भारतीयाया व्याख्यापद्धतेः स्वरूपमनुमातुं शक्यते। सम्प्रति विशेषरूपेण पञ्चमीविद्याऽथवा पञ्चदशं विद्यास्थानमध्ययनाध्यापनेषु महत्त्वमावहति, अतस्तस्य व्याख्यापद्धतिः प्रस्तूयते—

वस्तुतः काव्यान्यपि वेदशास्त्रादिभावनामेव सुखादल्पधियामपि बोधनार्थं रच्यन्ते, यानि सर्वजनहिताय स्वान्तःसुखाय च भवन्ति। 'नानापुराणनिगमागमसम्मत'मिति प्रभृतिवाक्यैस्तुलसीदासादिभिरुक्तमेव। काव्यशास्त्राचार्या अपि वदन्ति—

> धर्मादिसाधनोपायः सुकुमारक्रमोदितः।
> काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः।। (वक्रोक्तिजीविते–१।३)

तथा च—

> चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
> काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते।। (साहित्यदर्पणे–१।२)

पञ्चदशविद्यास्थानं द्विविधम्— काव्यं तच्छास्त्रं च। काव्यशास्त्रम्— समीक्षात्मकमन्तर्भाष्यरूपम्। यदाह राजशेखरः 'अन्तर्भाष्यं समीक्षे'ति।

काव्यञ्च दृश्यश्रव्यरूपं द्विविधम्। यद्यपि काव्यमपि निगमागमान्वाख्यानरूपं तथाप्यस्यापि व्याख्या क्रियते, एवमेव काव्यशास्त्रमपि अन्तर्भाष्यरूपं तथाप्यस्यावबोधार्थं व्याख्या व्यधायि अभिनवगुप्तादिभिः। काव्यस्य प्रतिपदं व्याख्या मल्लिनाथादिभिः, समीक्षा च सर्वसामान्या समग्रतयाऽऽनन्द-वर्धनादिभिरकारि।

काव्यशास्त्रीये विवेचने व्याकरण-मीमांसा-न्यायशास्त्रादिप्रभावो दृश्यते, काव्येष्वपि विविधशास्त्राणां प्रभावो दरीदृश्यते। काव्यहेतुनिरूपणे लोकशास्त्र-काव्याद्यवेक्षणाद्युल्लेखो काव्यशास्त्रिणः कवेश्च योग्यतां ज्ञापयति। अस्य विद्यास्थानस्याधिकारी कश्चिद् बहुज्ञ एव भवितुमर्हति, सोऽपि प्रतिभावान् स्यादित्यावश्यकम्। यदाह भामहः—

गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम्।
काव्यं तु जायते जातु कस्यचित्प्रतिभावतः।। (काव्यालङ्कारे–१।५)

काव्यस्य प्रतिपदं व्याख्याकाराणां मल्लिनाथादीनामात्मनिवेदनेषु तद्व्याख्यापद्धतिरपि व्यज्यते। यथा—

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रिया-
शिक्षाकौतुकिनो विहर्तुमनसो ये च ध्वनेरध्वनि।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे निमङ्क्षन्ति ये
तेषामेव कृते करोमि विवृतिं माघस्य सर्वङ्कषाम्।।
इहान्वयमुखेनैव सर्वं व्याख्यायते मया।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते।।

माघोऽपि स्वकाव्यस्य द्वितीये सर्गे वक्ति व्यङ्ग्यभङ्ग्या—

शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते।
सङ्क्षिप्तस्याप्यतोऽस्यैव वाक्यार्थस्य गरीयसः।।
सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे।। (२।२४)

श्रीहर्षोऽपि व्यङ्ग्यविधानेन व्याख्यानादर्शं व्यनक्ति—

अये! ममोदासितमेव जिह्वया द्वयेऽपि तस्मिन्ननतिप्रयोजने।
गुरौ गिरः पल्लवनार्थलाघवे मितं च सारं च वचो हि वाग्मिता।।
(९।८)

कालिदासोऽपि सम्प्रेषणयोग्यां वाचं निर्दिशति—

इति तेभ्यः स्तुतीः श्रुत्वा यथार्थां हृदयङ्गमाः।
प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः।।
पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी।।

(कुमारसम्भवे-२।१६-१७)

एवं प्रशस्तकवयोऽपि सम्प्रेषणव्याख्यानयोग्यां भाषां पद्धतिं वा निर्दिशन्ति। प्रतिपदव्याख्यापद्धतौ समीहिततत्त्वानां सङ्कलनमेव कर्त्तुं शक्यते—

सन्दर्भोऽथ प्रसङ्गश्च विग्रहश्चान्वयक्रमः।
कवेरिष्टश्च शब्दार्थौ गुणालङ्काररीतयः।।
रसो ध्वनिश्च वक्रोक्तिः शास्त्रसन्दर्भसूचना।
छन्दःकोशादिसङ्केतो भावसाम्यप्रदर्शनम्।।
इत्येतान्येव तत्त्वानि यथा लब्धानि काव्यतः।
काव्यव्याख्यासु चीयन्ते मल्लिनाथादिसूरिभिः।।

काव्यशास्त्रकाराः प्रायशः स्वग्रन्थारम्भे काव्यस्य प्रयोजनं हेतुं स्वरूपं च निरूप्य ततः स्वकाव्यलक्षणपङ्क्तिं सूत्रं मत्वा स्वग्रन्थं पल्लवयन्ति। यथा वाग्देवतावतारो मम्मटः— 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि', (सर्वत्र सालङ्कारौ, क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः) इति काव्यस्वरूपं विलिख्य काव्यप्रकाशे प्रत्युल्लासं काव्यस्वरूपपङ्क्तिमेव स्फुटीकरोति। काव्यशास्त्राचार्याणां विवेचने पूर्ववर्तिनामाचार्याणां दार्शनिकानां वैयाकरणानाञ्च यथास्थलं प्रभावो दृश्यते, यथा काव्यलक्षणविवेचने पण्डितराजो न्यायसरणिमवलम्बते। 'रमणीयार्थप्रतिपादकः शब्दः' इति काव्यलक्षणम्। ततः का नाम रमणीयतेति सन्देहे— लोकोत्तराह्लादजनकज्ञानगोचरतेत्युक्तम्। पुनश्च लोकोत्तरत्वं किमित्यत्र समाधीयते—'आह्लादगतचमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जाति-विशेषः' इत्येवं प्रतिपादितम्। ततश्च नैयायिकपद्धत्या त्रिधा काव्यलक्षणं प्रस्तौति, तच्च सामान्यं परिष्कृतं निष्कृष्टं च विद्यते—

इत्थं च चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्, यत्प्रति-पादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्, स्वविशिष्ट-

जनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्वमेव काव्यत्वमिति फलितम्।

काव्यार्थत: सामान्यभाषाया: शब्दानां प्रतिपाद्योऽर्थो भिन्नो भवति। स ध्वनिकारदिशा 'सहृदयश्लाघ्य:' तथा कुन्तकदिशा 'स्वस्पन्दसुन्दरो' भवति, पण्डितराजदिशा सोऽर्थो 'रमणीयो' भवति। शब्दस्य सामान्योऽर्थो रमणीयार्थप्राप्तये साधनमात्रं भवति, यथा वक्ति ध्वनिकार:—

यथा पदार्थद्वारेण वाक्यार्थ: सम्प्रतीयते।
वाच्यार्थपूर्विका तद्वत्प्रतिपत्तस्य वस्तुन:।। (ध्वन्यालोके–१।१०)

न्यायदिशा वक्तुं शक्यते यद् भाषाशब्दानां सामान्यत: प्रतिपाद्योऽर्थ: काव्यस्य रमणीयार्थस्यावान्तरव्यापारो भवति। सामान्यार्थावबोधे चेच्छब्दज्ञानं करणं तर्हि पदार्थज्ञानमवान्तरो व्यापार:, यस्य सहकारिणी भवत्यभिधा प्रतिपाद्यं च फलं शब्दजन्यं शाब्दबोध:। काव्यार्थप्रतिपादनपद्धतौ करणस्थानीयं तु शब्दज्ञानमेव भवति; किन्तु भाषाशक्तिसहकारेणोपलब्ध: सर्वोऽपि प्रतिपादितार्थो यश्च द्वारभूतोऽथवा मध्यवर्ती भूत्वा रमणीयार्थं यावदुपसर्पति, यस्मिँश्च क्वचिद्वाच्यार्थ: क्वचिल्लक्ष्यार्थ: क्वचिच्च व्यङ्ग्यार्थो दृश्यते, स रमणीयार्थस्यावान्तरव्यापारो भवति।

एवमेव रसनिरूपणे प्रथमे द्वितीये च नव्यमते न्यायवेदान्त-प्रतिपादनशिल्पमेवानुहरति पण्डितराज:। रसनिष्पत्तिसूत्रव्याख्याने भट्टलोल्लट-शङ्कुकभट्टनायकाभिनवगुप्तमतेषु वेदान्तन्यायादिपद्धति: सर्वविदितैव विद्यते।

आनन्दवर्धनो ध्वन्यालोके 'काव्यस्यात्मा ध्वनिरिति' प्रतिज्ञावाक्यं विलिख्य भाष्यकारिकावृत्त्यादिभिरस्यैव समर्थनं करोति। प्रथमोद्द्योतस्य त्रयोदश्यां कारिकायां ध्वनिस्वरूपं प्रतिपादयति। अस्य व्याख्याने वैयाकरणानां स्फोटसिद्धान्त-पद्धतिमवलम्ब्य ध्वनेर्वैलक्षण्यं निरूपयति। तद्यथा—

यत्रार्थ: शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्त: काव्यविशेष: स ध्वनिरिति सूरिभि: कथित:।।

अस्या: कारिकाया व्याख्याने स स्वयमपि व्याकरणस्याधमर्ण्यं स्वीकरोति—'सूरिभि: कथित इति विद्वदुपज्ञेयमुक्ति:, न तु यथाकथञ्चित् प्रवृत्तेति प्रतिपाद्यते। प्रथमे हि विद्वांसो वैयाकरणा:, व्याकरणमूलत्वात् सर्वविद्यानाम्। ते

च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। तथैवान्यैस्तन्मतानुसारिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरिति उक्तः'।

काव्ये काव्यशास्त्रे च प्रायशः सर्वेषां शास्त्राणां प्रवृत्तयो यथास्थलं दरीदृश्यन्ते। अनेकैः शोधप्रबन्धैरेवास्य निरूपणं भवितुमर्हति। अत्र दिङ्मात्रनिर्देशः कृतः।

विशालस्य संस्कृतवाङ्मयस्य व्याख्यापद्धतिः कथमस्मिन् लघुकाये शोधपत्रे निर्देष्टुं शक्यते। अथ चात्र नवीनताधानमपि कथं कर्तुं प्रभवामः। अतो जयन्तभट्टकथनेन व्याख्यापद्धतिविवरणमिदं पूरयामि—

कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः।
वचोविन्यासवैचित्र्यमात्रमत्र विचार्यताम्।।इति।

# गुणालङ्कारसम्बन्धविमर्शः

**डॉ. प्रभुनाथद्विवेदी**
उपाचार्यः, संस्कृतविभागस्य
महात्मा-गाँधी-काशीविद्यापीठम्
वाराणसी

❀ ❀ ❀

अलङ्कारस्त्वलङ्कारः काव्यस्य वा नरस्य वा।
यथा लोके तथा काव्ये सुधीर्जानाति तत्त्वतः।।
गुणोऽप्येवं गुणः प्रोक्तः काव्यस्य वा नरस्य वा।
आत्मसंस्थस्तु सर्वत्र सहृदयैः समर्थितः।।
अलङ्काराश्रिता शोभा दृश्यते बाह्यतस्तथा।
अन्तःप्रकाशकाः प्रोक्ता गुणास्तत्त्वविशारदैः।।
गुणालङ्कारयोर्यस्तु सम्बन्धः काव्यवर्त्मनि।
आचार्यैश्चिन्तितो लब्धस्तद्विविच्य प्रकाश्यते।।

सुधीभिः साहित्यसम्प्रदायविशिष्टैः काव्यज्ञविपश्चिद्भिर्गुणालङ्कारयोः स्वरूपं बहुधा विमृश्य तयोः परस्परं सम्बन्धोऽपि निरूपितः। आचार्यवामनात्प्रागनयोः पार्थक्यं न केनाऽप्यनुचिन्तितमिति प्रतीयते। गुणस्य लक्षणविषये आचार्यभरतो मौनमेव भजते नापि विमृशत्यलङ्कारात्तस्य पार्थक्यम्। परस्परं शोभाहेतुभूतः स्याद् गुणोऽलङ्कारश्चेति प्रतिपादयताऽऽचार्यभरतेन द्वयोः समाश्रयता प्रतिपादिता[१]। एतद्भरतमतं नानुमन्यते दण्डिनेति हेमचन्द्रः[२]। वस्तुतो दण्डिनो नामाश्रित्य हेमचन्द्रः स्वीयं मतमिदं प्रस्तौति यतो हि दण्डी क्वचिदपि गुणालङ्कारयोराश्रयगतं

---

१. अन्योन्यसदृशा यत्र तथा ह्यन्योन्यभूषणाः।
अलङ्कारा गुणाश्चैव समाः स्युः समता मताः।। (नाट्यशास्त्रम्, १६.१०१)

२. 'भिन्नाधिकरणा हि गुणालङ्कारास्तत्कथमन्योन्यं भूषयेयुरिति दण्डी'। (काव्यानुशासनवृत्तिः)

पार्थक्यं नोल्लिखति। यथाऽऽनन्दवर्धनस्तथैव हेमचन्द्रोऽपि गुणानां रसाश्रयत्वमङ्गीकरोत्यपि चालङ्कारान् शब्दार्थगतान् मनुते। गुणाश्रयत्वं स्पष्टतोऽनुल्लिख्यापि भरतो दण्डी च केषाञ्चिद् गुणानां शब्दाश्रयत्वमर्थाश्रयत्वमुभयाश्रयत्वं वा समर्थयतीति तयोर्गुणप्रतिपादनविश्लेषणेनालक्ष्यते। वामनस्तु स्पष्टमेव गुणान् द्विधा विभज्य शब्दगुणा अर्थगुणाश्चेति प्रतिपादयति। अलङ्कारास्तु द्विविधाः शब्दार्थाश्रयत्वेनेति सर्वैरेव स्वीकृताः। एवं हि गुणालङ्कारयोराश्रयभेदस्यानाख्यानात् केचन गुणा अलङ्कारेष्वलङ्काराश्च केचन गुणेषु पर्यवसिताः। यथा, वामनस्यार्थव्यक्तिर्नाम गुणो मम्मटस्य स्वभावोक्त्यलङ्कारे समाहितः कान्तिर्नामार्थगुणश्च रसवदलङ्कारादभिन्न एव स्वीकृतः[१]। एवमेव भोजराजेन प्रेयउर्जस्विप्रभृता अलङ्कारा गुणसंज्ञयाऽभिहिताः।

भामहो गुणलक्षणं न निर्दिशति। गुणा अपि शोभाकराः काव्यस्येति मन्यमानो भामहो गुणानप्यलङ्कारान् प्रचक्षते। भाविकं प्रबन्धगुणं[२] मन्यमानोऽपि भामहो भाविकमलङ्कारमध्ये गणयति। स माधुर्यौजःप्रसादानुल्लिख्यापि तेभ्यो गुणसंज्ञां न प्रयच्छति। मन्ये, तेऽपि भामहमतेऽलङ्कारा एव। डॉ. एस.के. डे-महोदयो भामहस्य गुणधारणां स्पष्टीकरोति—'गुणोऽलङ्काराद्भिन्न इति मत्वापि भामहो द्वयोरपि समत्वं सन्धारयति। यथा हि दण्डी व्यापकेऽर्थे गुणानप्यलङ्कारानेव स्वीकरोति'[३]; किन्तु दण्डी भामहमतं नानुसरति। तस्य गुणा मार्गविभाजकतत्त्वभूता असाधारणालङ्कारत्वेनाङ्गीकृताः। तेनोपमादिभ्यो गुणानां पार्थक्यं स्पष्टीकृतम्। भामहस्तु गुणालङ्काराणामभिन्नत्वमेव गृह्णाति।

सामान्यतो दण्डी सर्वाणि काव्यशोभाकराणि तत्त्वान्यलङ्काररूपाणीति निर्दिशति[४], तथापि काव्यादर्श एव सर्वप्रथमं गुणालङ्कारयोर्भेदं प्रदर्शयितुं प्रयतितम्। काव्यशोभाकरत्वाद् गुणालङ्कारवृत्त्यादीनि तत्त्वानि सर्वाण्येकसरणिगतानि; किन्तु तेषां भेदा अपि दण्डिनोऽनुभवगोचरा आसन्। दण्डिनो विशदामलङ्कारधारणां

---

१. अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा अर्थव्यक्तिः, दीप्तरसत्वरूपा कान्तिश्च स्वीकृता। (काव्यप्रकाशः, ८.७२ वृत्तिः)

२. भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम्।
प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः।। (काव्यालङ्कारः, ३.५३)

३. Bhāmaha would not hesitate to take them in the wider acceptation of an Alaṅkāra as that which embellishes just in the same way as Dandin does.
(S.K.De, Some Problems of Sanskrit Poetics, p. 60)

४. काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते। (काव्यादर्शः, २.१)

सुनिपुणं वीक्ष्य म.म. पी.वी. काणेमहोदयः कथयति यत्काव्यादर्शे गुणालङ्कारयोः पार्थक्यं न दर्शितम्[१]। काणेमहोदयस्येयं धारणा समीचीना न प्रतीयते। दण्डिनोपमादयोऽलङ्कारा गुणा इति न कीर्तिताः। वस्तुतो दण्डिमते गुणास्तु मार्गविभाजकाः काव्यस्यासाधारणधर्माः, अलङ्कारास्तु साधारणधर्मा एव। काव्यादर्शे द्वितीयपरिच्छेदस्यारम्भे मार्गविभाजनार्थमलङ्क्रिया उक्ताः[२]। टीकाकारैः 'अलङ्क्रिया' इति पदस्य 'अलङ्कार' इत्यर्थं विधाय भ्रम उत्पादितः। दण्डी तु दोषपरिहारोद्भूतान् गुणानपि 'अलङ्क्रिया' इति प्राह। तस्येदं वचनं ध्यातव्यम्— 'संशयोत्पादनाय यदि कश्चित्कविः साभिप्रायं सन्देहयुतं वाक्यं प्रयुङ्क्ते, तत्तु तत्रालङ्कारो न तु दोष' इति[३]। एवमेव विवक्षिते सति अनुकम्पातिशये पुनरुक्तोऽपि न दोषः प्रत्युतालङ्क्रिया हि[४]। अत्र गुणं वक्तुमलङ्क्रियोक्तेति निर्विशयो विषयः।

दण्डिनो गुणधारणां समीक्ष्यैतद् ज्ञायते यत्तेन गुणाः काव्यात्मतत्त्वरूपेण सङ्केतिताः। 'ओजो गद्यस्य जीवितम्'[५], अथ च 'समाधिर्नाम गुणः काव्यसर्वस्वमि'ति[६] तेन स्पष्टमेवोद्घोषितम्। औदार्यगुणेन काव्यपद्धतिः सनाथीक्रियत इत्यपि तेन मन्यते[७]। अर्थव्यक्तिर्नाम गुणो नेयत्वदोषाभावरूपः। अतोऽर्थव्यक्तिं विना काव्यत्वहानिरित्यनेनार्थव्यक्तिस्तु काव्यस्य नित्यधर्म एव। दण्डिमतानुसारं, माधुर्यस्याग्राम्यताभेदो रसोत्कर्षायाऽलङ्कारानतिरिच्य प्रभवति[८]। अनेनात्र गुणानां महत्त्वमलङ्कारेभ्योऽधिकतरमिति स्पष्टमेव। यतो हि क्वचिदपि

---

१. Dandin's Work.......make no distinction between the Guṇās and Alaṅkāras.
(M.M.P.V. Kane. History of Sanskrit Poetics, p. 362)

२. काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः।
साधारणमलङ्कारजातमन्यत् प्रदर्श्यते।। (काव्यादर्शः, २.३)

३. ईदृशं संशयायैव यदि जातु प्रयुज्यते।
स्यादलङ्कार एवासौ न दोषस्तत्र तद्यथा।। (तत्रैव ३.१४२)

४. अनुकम्पातिशयो यदि कश्चिद् विवक्ष्यते।
न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया।। (तत्रैव, ३.१३७)

५. ओजःसमासभूयस्त्वमेतद्गद्यस्य जीवितम्। (तत्रैव, १.८०)

६. तदेतत्काव्यसर्वस्वं समाधिर्नाम यो गुणः।
कविसार्थः समग्रोऽपि तमेनमनुगच्छति।। (तत्रैव, १.१००)

७. तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः। (तत्रैव, १.७६)

८. कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति।
तथाप्यग्राम्यतैवैनं भारं वहति भूयसा।। (तत्रैव, १.६२)

दण्डी, 'अलङ्कारोऽनिवार्यं तत्त्वं काव्यस्ये'ति न कथयति। अलङ्काराभावे न काव्यत्वहानिः; किन्तु गुणराहित्ये काव्यकल्पनाऽभावप्रसङ्ग इति। एवं हि गुणालङ्कारयोः काव्यशोभाकरत्वे सत्यपि द्वयोः पार्थक्यं दण्डिनो गुणधारणाविश्लेषणेनैव स्पष्टं ज्ञायते। भट्टोद्भटस्तु गुणालङ्कारयोः स्थितिं काव्ये समवायसम्बन्धेन स्वीकरोत्यतस्तेन द्वयोर्भेदधारणैवाऽपास्तीकृता।

सर्वप्रथमं वामन एव गुणालङ्कारयोस्तात्त्विकं भेदं विशदयति। वामनकृते 'काव्यालङ्कारसूत्रे' प्रयुक्तमलङ्कारपदमर्थद्वयं व्यनक्ति। सामान्यतस्तु काव्यसौन्दर्यमलङ्कार इति[1]। अनेन काव्यसौन्दर्यहेतुभूताः समे धर्मा अलङ्कारेऽन्तर्भूताः। अतः स प्राह—'अलङ्कारबलादेव काव्यं ग्राह्यं भवतीति'[2]। नूनमेवात्रालङ्कारशब्दः सौन्दर्यस्य पर्यायरूपेण प्रयुक्तः। अलङ्कारोऽयं दोषहानाद् गुणालङ्कारादानात् सम्भवति[3]। अत्र ह्येकतोऽलङ्कारः सामान्यार्थेऽपरतस्तु विशिष्टार्थे प्रयुक्तः। ये विशिष्टास्त एवोपमादयः। आचार्यवामनः काव्यशोभाजनकत्वेन गुणान्[4], तदतिशयहेतुत्वेनालङ्काराँश्च[5] स्वीकरोति। अनेन वामनस्य गुणालङ्कारविषयिणी धारणा स्वत एव स्पष्टीभवति। वामनमतानुसारं, गुणमूलं हि काव्यसौन्दर्यम्। गुणाभावे काव्यसौन्दर्यस्य कथैव नास्ति। अशक्ताः खल्वलङ्काराः काव्यसौन्दर्यजनने। वस्तुतोऽलङ्काराः काव्यगुणाश्रितशोभासंवर्धका एव। अतः काव्ये गुणाभावेऽलङ्काराणां नास्ति किमपि प्रयोजनम्। सौन्दर्यं विना किं नाम काव्यम्? अनेन काव्ये गुणानामनिवार्यत्वं नियतत्वं वा दृढीभवति। गुणाः काव्यस्य नित्यधर्मा मताः[6]। अलङ्काराभावेऽपि काव्ये सौन्दर्यं सम्भवत्येव, अतो नास्ति तेषामनिवार्यत्वम्। एवं ह्यलङ्काराः काव्यस्यानित्यधर्माः।

अस्मिन् प्रसङ्गे वामनो लोकदृष्टान्तमपि[7] प्रस्तूय स्वाभिमतं पुष्णाति। यथा काचिद्युवती विनैवालङ्कारेण सहजसौन्दर्यबलेन मनोज्ञतां बिभर्ति, तथा चेयं

---

१. सौन्दर्यमलङ्कारः। (काव्यालङ्कारसूत्राणि, १.१.२)
२. काव्यं ग्राह्यमलङ्कारात्। (तत्रैव, १.१.१)
३. स दोषगुणालङ्कारहानादानाभ्याम्। (तत्रैव, १.१.३)
४. काव्यशोभायाः कर्तारो धर्मा गुणाः। (तत्रैव, ३.१.१)
५. तदतिशयहेतवस्त्वलङ्काराः। (तत्रैव, ३.१.२)
६. पूर्वे गुणा नित्याः। तैर्विना काव्यशोभानुपपत्तेः। (तत्रैव, ३.१.३ वृत्तिः)
७. युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव।
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः।।
यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्काराणि संश्रयन्ते।। (तत्रैव, ३.१.२ वृत्तिः)

सहजसौन्दर्यजन्या मनोज्ञताऽलङ्कारधारणेनाधिकतरं चित्ताह्लादिका सञ्जायते; किन्तु सहजशोभासम्पद्विहीना युवती तूत्तमोत्तमैरप्यलङ्कारैर्नैव विभाति, तथैव काव्येऽपि गुणसृष्टं सौन्दर्यमेवालङ्कारा अभिवर्धयन्ति; परन्तु गुणाभावे चारुत्वहीने काव्यवपुषि तेऽपि न शोभन्ते।

एवं हि वामनाभिमतो गुणालङ्कारसम्बन्धः क्वचिदपि संशयकोटिं नाधिरोहति। गुणालङ्कारौ शब्दार्थधर्माणौ काव्योत्कर्षकर्तारावतः समौ। तयोरन्तरमपि स्पष्टमेव। गुणाः काव्यशोभाहेतवोऽलङ्काराश्च काव्यशोभासंवर्धकाः। इत्थं गुणाः काव्यस्य नित्यधर्मा अलङ्कारास्त्वनित्यधर्माः। एतदेव कारणं यदलङ्काराभावेऽपि गुणमयं काव्यं चारुत्वमावहति। अतः काव्ये गुणानां स्थितिः समवायसम्बन्धेन तथा चालङ्काराणां संयोगसम्बन्धेन भवतीति निष्कर्षः। अनेनात्र भट्टोद्भटस्य मतमपि खण्डितम्। आचार्यवामनस्येयं गुणालङ्कारसम्बन्धधारणा लौकिकैर्दृष्टान्तैरपि पुष्टा तर्कसङ्गता च प्रतीयते।

भोजराजस्य गुणालङ्कारसम्बन्धधारणा वामनमतमनुसरति। स यथा काव्ये रसावियोगं नित्यं, मनुते तथैव गुणयोगमपि[१]। एतद्विपरीतं तत्रालङ्कारास्त्वनित्या भवन्ति। काव्येऽलङ्कारः स्यान्न वा, गुणं विना नैव काव्यम्। अलङ्कारोऽपि तत्रैवालङ्कारो यत्र काव्ये गुणः स्यात्। गुणाभावे न तस्यालङ्कारत्वमुपपद्यते[२]। केचनाऽलङ्कारा गुणेभ्य उत्पद्यन्तेऽतस्तेषां कार्यकारणसम्बन्धोऽपि भवति[३]।

भोजराजस्येदं सुनिश्चितं मतं यत्सालङ्कारमपि काव्यं यदि निर्गुणं स्यात्तन्न श्रवणयोग्यतामावहति। अतः काव्ये गुणयोगो मुख्यो न त्वलङ्कारयोगः[४]। काव्ये समवायसम्बन्धतो निहितो गुणः संयोगसम्बन्धतश्च स्थापितोऽलङ्कार इति द्वयोर्गुणोपादानमेव श्रेष्ठतरमलङ्कारयोगात्। काव्ये गुणानामावश्यकी स्थितिः, अलङ्काराणान्तु कवेरिच्छाधीना[५]। भोजराजो वामनस्य मतमुदाहरणञ्चोपन्यस्य स्वकमपि नूत्नमुदाहरणं प्रस्तूय प्रमाणयति यदलङ्कारो गुणमूलं काव्यसौन्दर्यमेव

---

१. नित्यो हि काव्ये गुणयोग इव रसादियोगः। (सरस्वतीकण्ठाभरणम्, आ. ५)

२. कदाचिदलङ्कारयोगोऽपि त्यज्यते, न तु रसावियोगः, गुणयोगश्च व्यभिचरितसम्बन्धाविति। (तत्रैव, आ. ५)

३. गुणभूतैरेवालङ्काराः प्राय आरभ्यन्ते। (शृङ्गारप्रकाशः)

४. अलङ्कृतमपि श्रव्यं न काव्यं गुणवर्जितम्।
गुणयोगस्तयोर्मुख्यो गुणालङ्कारयोगयोः।। (सरस्वतीकण्ठाभरणम्, १.५९)

५. तत्र गुणोपादानम्—अलङ्कारयोगयोः गुणोपादानं गरीयः। अयमेव गुणालङ्कारयोर्विशेषो यद् गुणोपादाने नियमोऽलङ्कारयोगे तु कामाचार इति। (शृङ्गारप्रकाशः)

पुष्णाति, न तु स्वयं काव्यसौन्दर्यं जनयति[१]। एवं हि भोजराजस्य गुणालङ्कार-धारणाया निष्कर्षोऽस्ति—'यथा लोके कुरूपेषु शरीरावयवेषु विधृता अलङ्कारास्तथैव गुणविरहिते काव्ये प्रयुक्ता अलङ्कारा अपि निष्फलाः' इति।

आनन्दवर्धनात्प्राग्वर्तिभिरालङ्कारिकैः प्रायेण शब्दार्थौ गुणालङ्कारयोराश्रयौ स्वीकृतौ। यद्यपि तेष्वाचार्येषु गुणालङ्कारयोर्भेदं कर्तुं प्रवृत्तिः प्रादुर्भूता, तथाप्याश्रयभेदस्यानिर्धारणात्वादनयोः स्वरूपगतो भेदो विस्पष्टो नाभूत्। यत्पूर्वैरकृतं तदानन्दवर्धनेन ध्वनिप्रतिष्ठापकपरमाचार्येण कृतमस्मिन् विषये। तेन गुणालङ्कारादि-तत्त्वानां काव्ये स्थानं निर्धारितम्। शब्दार्थमयं काव्यशरीरमिति प्रतिपाद्य स रसादिध्वनिं काव्यात्मतत्त्वमिति स्थापितवान्। एवं काव्यात्मनः काव्यदेहस्य च पार्थक्यं निरूप्य स गुणालङ्कारयोः स्वरूपगतं भेदमनायासमेव विस्पष्टीकृतवान्।

आनन्दवर्धनस्य मतानुसारं गुणा आत्मनो धर्मास्सन्ति। ते काव्यस्यात्मानं रसादिध्वनिमुपकुर्वन्ति। अलङ्कारास्तु शब्दार्थमयं काव्यकायं तथैव विभूषयन्ति यथा कटककुण्डलादयो मानवदेहम्[२]। शब्दार्थाविति काव्यशरीरमलङ्कृत्यात्मभूतानां रसादीनामुपकृतावेवालङ्काराणां सार्थकत्वमस्ति। रसादेः काव्यात्मन उपकारकत्वे नालङ्काराः न सर्वत्र नित्यं काम्याः; किन्तु रसादिध्वनेरभावे तेषां व्यर्थत्वं भवत्येव।

भवतु नामालङ्काराणां क्वचिदनुपादेयता क्वचिद् वाऽग्राह्यता; किन्तु ते कदापि न निन्द्याः। यदि कश्चित्कवी रसमुपेक्ष्यालङ्कारयोजनेऽनुचितं श्रमं कुरुते, तदा हठप्रतिष्ठापिता अलङ्काराः काव्यशोभां तिरस्कृत्य तत्र भारभूता भवन्ति; किन्तु सरस्वतीकृपाकटाक्षदृष्टस्य रससिद्धस्य प्रतिभावतः कवेः कृतौ स्वयमहमहमि-कयाऽऽगता अलङ्कारा भारतीं भूषयन्ति। काव्यगुणलुब्धा इव स्वयमेव सहजतयाऽऽपतिता इमेऽलङ्काराः काव्यसौन्दर्यं विशदयन्ति, यतस्ते शब्दार्थमयं काव्यशरीरमलङ्कृत्य रसादिध्वनिमुपकुर्वन्ति। एतदेवोपादेयत्वमलङ्काराणामिति[३]।

---

१. दीर्घापाङ्गं नयनयुगलं भूषयत्यञ्जनश्री-
स्तुङ्गाभोगौ प्रभवति कुचावर्चितुं हारयष्टिः।
मध्ये क्षामे वपुषि लभते स्थानं कूर्पासलक्ष्मीः
श्रोणीबिम्बे गुरुणि रसनादाम शोभां बिभर्ति।। (सरस्वतीकण्ठाभरणम्, २.९)

२. तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्।। (ध्वन्यालोकः, २.९)

३. अलङ्कारान्तराणि हि निरूप्यमाणदुर्घटनान्यपि रससमाहितचेतसः प्रतिभावतः कवेरहम्पूर्तिकया परापतन्ति। युक्तं चैतत्। यतो रसा वाच्यविशेषैरेवाक्षेप्तव्याः। यत्प्रतिपादकैश्च शब्दैस्तत्प्रकाशिनो वाच्या विशेषा एव रूपकादयोऽलङ्कारास्तस्मान्न तेषां बहिरङ्गत्वं रसाभिव्यक्तौ। (ध्वन्यालोकः, २.१६ वृत्तिः)

कटककुण्डलवत्कथयताऽप्यानन्दवर्धनेन सर्वेऽपि काव्यालङ्कारा लौकिकाभूषणवद् बाह्या न मन्यन्ते। अत्रालङ्कारविषयिणी मान्यताऽऽनन्दवर्धनस्य द्विधोदेति। वाच्यभूतास्त्वलङ्काराः काव्यशरीरे संयोगसम्बन्धेनोपस्थिता भवन्ति, किन्तु ध्वनिरूपा अलङ्कारास्तु काव्यस्यात्मरूपा एव यतो हि ध्वनिकारमते ध्वनयस्त्रयो रसो वस्त्वलङ्कारश्चेति[१]।

काव्ये रसास्त्वलङ्कार्याः, अतस्तेषां सद्भाव एव काव्यस्य काव्यत्वम्[२]। लोकेऽपि रुचिरवस्त्राभूषणानि जनानामन्तःकरणोल्लासं व्यञ्जयन्ति। एवमेव काव्येऽप्यलङ्कारयोगो रसभावादीनां व्यञ्जनायैव भवति[३]। योऽलङ्कारो निरायासं रसाक्षिप्तो भवति, रसादिध्वनौ स एव काम्यः[४]। यथा शौर्यादय आत्मनो धर्माः प्रसिद्धास्तथैव गुणा अपि काव्यात्मभूतानां रसादीनां धर्माः प्रथिताः। शब्दादयस्तूपचारेण मधुरा इति कथ्यन्ते, मधुरस्तु रस एव भवति। वस्तुतो माधुर्यव्यञ्जकाः शब्दाः कोमला इति व्यवह्रियन्ते। एवमेव, ओजोव्यञ्जिका पदरचना 'ओजस्विनी'ति कथ्यते। अतो यदि गुणा उपचारतया शब्दगता मन्यन्ते, तथाप्यनुप्रासादिभ्यस्तेषां पार्थक्यं स्पष्टमेव। गुणास्त्वर्थसम्बद्धा रसाश्रिताः। तान् शब्दगतान् स्वीकर्तुं तथैव यथा शौर्यादीनात्मनो गुणं स्वीकुर्वन्नपि आकृतिविशेषानुभावाच्छरीरस्य धर्म इति[५]।

ध्वन्यालोककारस्येमां गुणालङ्कारधारणां तस्य व्याख्याकारोऽभिनवगुप्तपादाचार्यो लोचने विशदयति। सुकविनाऽनायासं काव्ये सन्निविष्टा अलङ्काराः कान्ते कायेऽनुलिप्तः कुङ्कुमराग इव प्रतिभान्ति[६]। अलङ्कारस्तु रसोपकारकः।

---

१. शरीरीकरणं येषां वाच्यत्वेन व्यवस्थितम्।
तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः।। (ध्वन्यालोके, २.२८)

२. ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।
रूपकादिरलङ्कारवर्ग एति यथार्थताम्।। (तत्रैव, २.१७)

३. रसभावादितात्पर्यमाश्रित्य विनिवेशनम्।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम्।। (तत्रैव, २.५ वृत्तावुदाहरणम्)

४. रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः।। (तत्रैव, २.१६)

५. अथवा, भवन्तु शब्दाश्रया एव गुणाः। न चैषामनुप्रासादितुल्यत्वम्। यस्मादनुप्रासादयोऽनपेक्षितार्थविस्तराः शब्दधर्मा एव। शब्दधर्मत्वं चैषामन्याश्रयत्वेऽपि शरीराश्रयत्वमिव शौर्यादीनाम्। (ध्वन्यालोकः, ३.४ वृत्तिः)

६. सुकविः विदग्धपुरन्ध्रीवद् भूषणं यद्यपि श्लिष्टं योजयति, तथापि शरीरतापत्तिरेवास्य कष्टसम्पाद्या, कुङ्कुमपीतिकाया इव। आत्मतायास्तु का सम्भावना। एवम्भूता चेयं

रसस्याभावे निष्प्राणे काव्येऽलङ्कारस्य नास्त्यौचिती। नीरसे काव्येऽलङ्काराणां व्यर्थत्वं तथैव यथा शवभूते शरीरे आभूषणधारणस्य। अलङ्कार्यस्त्वात्मा। अलङ्कार्याभावेऽलङ्कारस्य प्रयोजनं नाम किम्? समुचितावयवविन्यस्तान्येवाभूषणानि शोभन्ते। अलङ्करणस्यानौचित्यात् संन्यासिनां भूषणमण्डनं तु मूलोच्छेदि तत्त्वखण्डनमेव[1]। काव्ये यद्यप्युपमया वाच्योऽर्थोऽलङ्क्रियते तथापि तस्या उपयोगित्वं वाच्यस्य व्यङ्ग्यार्थव्यञ्जनासामर्थ्य एव। ध्वनिरूप आत्मैवालङ्कार्यः। कटककेयूरादयोऽप्यलङ्काराः प्रत्यक्षतः शरीरस्य शोभावृद्धिं कुर्वन्नपि तन्माध्यमेनोल्लासादीन् विशदयन्नात्मानमेवालङ्कुर्वन्ति[2]। इत्थमभिनवगुप्तपादाचार्येणापि सुस्पष्टं व्याख्यातं यत् काव्ये गुणा अङ्गीभूतान् रसानाश्रयन्ते। अलङ्कारास्त्वङ्गभूतान् शब्दार्थानाश्रयन्ते। अतस्तयोः पार्थक्यं स्पष्टमेवेति[3]।

काव्यशास्त्रे आचार्यमम्मटस्य महनीयमवदानं सर्वविदितमेव। ध्वनि-प्रतिष्ठापकपरमाचार्योऽयं विपश्चिद् ध्वन्यालोककारस्य गुणालङ्कारधारणां काव्यप्रकाशे स्वोपज्ञैर्युक्तिभिः सुप्रतिष्ठितां विदधाति। तत्र काव्यलक्षण एव स गुणस्या-लङ्कारस्य च स्थितिं स्पष्टीकरोति। शब्दार्थौ काव्यमदोषौ सगुणौ पुनः क्वाप्यनलङ्कृती[4]। अस्य वृत्तिभागे स स्पष्टमेव प्राह—'क्वचित्स्फुटालङ्कार-विरहेऽपि न काव्यत्वहानिः'[5]। अतो मम्मटमते गुणाः काव्यस्य नियतधर्मा अलङ्कारास्त्वनियतधर्माः।

गुणं लक्षयता मम्मटाचार्येण काव्यप्रकाशे प्रतिपादितं यद्यथा मानवस्यात्मनि स्थायिनः शौर्यादयस्तस्योत्कर्षं कुर्वन्ति तथैव काव्यात्मरूपेऽङ्गीरसे स्थिरतया

---

व्यङ्ग्यता, पदप्रधानभूतापि वाच्यमात्रालङ्कारेभ्य उत्कर्षमलङ्काराणां वितरति।
(ध्वन्यालोकः, लोचनटीका)

१. अचेतनं शवशरीरं कुण्डलाद्युपेतमपि न भाति, अलङ्कार्यस्याभावात्। यतिशरीरं कटकादि-युक्तं हास्यावहं भवति, अलङ्कार्यस्यानौचित्यात्। (ध्वन्यालोकः, २.५, लोचनटीका)

२. उपमया यद्यपि वाच्योऽर्थोऽलङ्क्रियते, तथापि तत्र तदेवालङ्करणं यद्व्यङ्ग्यार्था-भिव्यञ्जनसामर्थ्याधानमिति। वस्तुतो ध्वन्यात्मैव अलङ्कार्यः। कटककेयूरादिभिरपि हि शरीरसमवायिभिः आत्मैव तत्तच्चित्तवृत्तिविशेषौचित्यसूचनात्मतयाऽलङ्क्रियते।
(ध्वन्यालोक, २.५, लोचनटीका)

३. अलङ्कार्यव्यतिरिक्तश्चालङ्कारोऽभ्युपगन्तव्यः, लोके तथा सिद्धत्वाद् यथा गुणिव्यतिरिक्तगुणाः। गुणालङ्कारव्यवहारश्च गुणिन्यलङ्कार्ये च सति युक्तः। (तत्रैव, २.२६, लोचनटीका)।

४. तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि। (काव्यप्रकाशः, १.४)।

५. तत्रैव, १.४, वृत्तिः।

विद्यमाना उत्कर्षसाधका धर्मा गुणाः कथ्यन्ते[१]। शौर्यपराक्रमादयो धर्मा आत्मनो भवन्ति, न तु शरीरस्य। एवमेव माधुर्यादयो गुणा रसस्य धर्मा न तु शब्दार्थमयस्य काव्यकायस्य। सामान्यव्यवहारतः कमपि विपुलकायं जनं दृष्ट्वा लोकस्तं शूरवीरमिति मन्यते, कमपि कृशतनुं नरं वीक्ष्य 'किं नामायं शूर' इत्युपेक्षते। 'विपुलकायः शूरवीर' इति लोकव्यवहारमवेक्ष्य शौर्यादयो धर्माः शरीराश्रिता इति धारणाबलेनात्र काव्येऽपि माधुर्यादयो गुणाः शब्दार्थाश्रिता इति तर्कसङ्गतिरूह्या। नैवमेतत्, शरीराकृतिं विभाव्य शौर्यादीनामनुमानं नोचितम्। लोकेऽपि नैतत् प्रमाणम्। केचन विपुलकाया अपि भीरवः कापुरुषाः क्षीणकायाश्चापि शूरास्तेजस्विनो दृश्यन्ते। एवमेव काव्येऽपि कोमलवर्णेष्वोजःसदृशानां दीप्तगुणानां परुषवर्णेष्वपि माधुर्यादिगुणानां सद्भावः (व्यञ्जना) स्यात्। यतो हि लोके प्रायेण पुष्टाङ्गा विपुलकायाः शूरवीरा भवन्ति, अतः सर्वेऽपि तादृशाकाराः शूरा इत्यवबुध्यन्ते, तथैव काव्येऽपि कोमलवर्णा माधुर्यगुणोपेताः परुषवर्णाश्चौजोगुणोपेता मन्यन्ते।

आचार्यमम्मटो निराकरोत्येतादृशीं भ्रान्तधारणाम्। ये रसाभिव्यक्तिविधावज्ञास्त एवैतादृशीं भ्रान्तिं पालयन्ति। रसिकाः सहृदया जानन्त्येव माधुर्यादीनां रसाश्रितत्वं कोमलवर्णैश्च तेषां व्यञ्जनत्वम्[२]। माधुर्यव्यञ्जका वर्णा मधुरा इति कथनं तूपचारमात्रमेव। यथा लोके आत्मनो धर्माः शरीरस्याप्युपचारवशान्मन्यन्ते, अतो माधुर्यव्यञ्जकाः कोमलवर्णा मधुराः; किन्तु यत्र काव्ये नास्ति माधुर्यं तत्र प्रयुक्ताः कोमलवर्णा मधुरा इति कथनं तु भ्रान्तमेव[३]।

अथ गुणा रसस्य धर्मास्ते रसोत्कर्षकास्तेषाञ्च रसेन सह सम्बन्धो नित्य इत्याचार्यमम्मटस्य गुणधारणाया निष्कर्षः।

आचार्यमम्मटेन काव्यप्रकाशेऽलङ्कारस्यापि पर्याप्तं विवेचनं कृतम्। अलङ्काराः शब्दार्थमयशरीस्य काव्यस्य धर्मा इति स प्राह। यथा लोके हारादयः

---

१. ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः।। (काव्यप्रकाशः, ८.६६)

२. आत्मन एव हि यथा शौर्यादयो नाकारस्य तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम्। क्वचित्तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनात्, 'आकार एवास्य शूरः' इत्यादेर्व्यवहारादन्यत्राशूरेऽपि वितताकृतित्वमात्रेण शूर इति शूरेऽपि मूर्तिलाघवमात्रेण 'अशूर' इति अविश्रान्तप्रतीतयो यथा व्यवहरन्ति तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्ते........व्यवहरन्ति। अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते, न तु वर्णमात्राश्रयाः। (काव्यप्रकाशः, ८.६६ वृत्तिः)।

३. काव्यप्रकाशः, ८.६६ प्रदीपटीका (काव्यप्रदीपः)।

शरीरं विभूषयन्त आत्मानमपि विभूषयन्ति, तथैव काव्येऽप्यलङ्काराः शब्दार्थमयं वपुरलङ्कुर्वन्तः काव्यात्मभूतं रसमुपकुर्वन्ति[१]। काव्ये रसे सत्येवालङ्कारास्तमुपकुर्वन्ति। यस्मिन् काव्ये रसो नास्ति, तत्र प्रयुक्ता अलङ्काराः केवलमुक्तिवैचित्र्योत्पादका एव[२]। ध्वनिवादिनामाचार्याणां काव्यभेदगणनायां यदधमं चित्रकाव्यं, तत्र त्वलङ्कारा वैचित्र्योद्भावकाः। क्वचित्तु सत्यपि रसेऽलङ्कारास्तं नोपकुर्वन्ति[३]।

इत्थं मम्मटाचार्यस्यालङ्कारधारणां विविच्यैतद्वक्तुं शक्यते— अलङ्काराः शब्दार्थमयकाव्यशरीराश्रिताः रसमुपकुर्वन्ति, क्वचिद्रसे स्थितेऽपि तं नोपकुर्वन्ति। अतः काव्येऽलङ्कारेभ्यो गुणानां महत्त्वमधिकतरम्। अलङ्काराः केवलं रसमुपकुर्वन्ति; किन्तु गुणा रसस्योत्कर्षका अपि भवन्ति। इत्थं शब्दार्थाश्रिता अनित्या अलङ्काराः काव्यस्य बहिर्भूतानि तत्त्वानि; किन्तु रससम्बद्धा गुणा नित्याः काव्यस्य चान्तर्भूतानि तत्त्वानि मतानि। रसैः सहालङ्काराणां नास्त्यनिवार्या स्थितिः, रसेभ्यः पृथगपि तेषां निरपेक्षा सत्ता; किन्तु गुणा रसानां धर्माः, अतस्ते पृथग्भवितुं नार्हन्ति। एवं हि रससापेक्ष्यमलङ्काराश्चलस्थितयो गुणास्त्वचलस्थितयो भवन्ति। अपि च, काव्ये रसस्य स्थितावेवालङ्कारास्तस्योपकारकाः, क्वचित्तेऽपकारका अपि भवेयुः[४]।

साहित्यदर्पणकारस्याचार्यविश्वनाथस्य गुणालङ्कारधारणा ध्वनिवादिनामाचार्याणां गुणालङ्कारधारणामनुसरति। आचार्यविश्वनाथेन गुणालङ्काररीतयः काव्यस्योत्कर्षहेतवः प्रोक्ताः[५]। यद्यपि गुणालङ्कारौ द्वावपि काव्यस्य सौन्दर्यकारकौ; किन्तु गुणाः काव्यात्मनो धर्मा इत्येव भेदोऽलङ्कारेभ्यो गुणानाम्[६]। रस एव काव्यस्यात्मेति विश्वनाथः[७]। अतो गुणा रसस्य धर्माः। अलङ्कारा अपि रसमुपकुर्वन्ति; परन्तु तेऽनियताः शब्दार्थाश्रिताश्च[८]। गुणास्तु काव्ये नियताः। आचार्यहेमचन्द्रो गुणालङ्कारसम्बन्धे आचार्यमम्मटमनुसरति।

---

१. उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः।। (काव्यप्रकाशः, ८.६७)

२. यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः। (तत्रैव, ८.६७ वृत्तिः)

३. क्वचित्तु सन्तमपि नोपकुर्वन्ति। (तत्रैव, ८.६७ वृत्तिः)

४. तत्रैवाष्टमे उल्लासे, उदाहरणसंख्ये ३४५-३४६।

५. उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः। (साहित्यदर्पणः, १.३)

६. रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा। गुणाः.......(तत्रैव, ८.१)।

७. वाक्यं रसात्मकं काव्यम्। (तत्रैव, १.३)

८. शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्।। (तत्रैव, १०.१)

पण्डितराजजगन्नाथस्य गुणधारणा कापि विशिष्टैव। स तत्त्वतो गुणस्य रसधर्मत्वं न स्वीकरोति। काव्यस्यात्मा रसोऽपि प्राणिन आत्मावन्निर्गुणोऽस्ति। रत्यादयः स्थायिभावाः काव्यात्मभूतस्य रसस्योपाधयो माधुर्यादयश्च गुणास्तथाभूतानामुपाधीनां धर्माः। पण्डितराजस्य स्वोपज्ञमिदं मतं न प्रामाणिकम्। अपरञ्च, एकस्मिन् गुणेऽपरस्य गुणस्य सत्ता कथमिव स्वीकरणीया? न्याय-दर्शनानुसारं गुणोऽपि निर्गुणो भवति। कस्मिंश्चिदपि गुणेऽन्यगुणस्य सत्ता न भवति। अतः पण्डितराजेनोपन्यस्ता गुणधारणाऽपास्ता। यदि शृङ्गाररसे माधुर्यं नास्ति, कथं स मधुरः? पण्डितराजः प्रयोजकतासम्बन्धमधिकृत्यैतत् समादधति। वस्तुतो रसा माधुर्यादिगुणप्रयोजकाः, अत एव मधुरा इति व्यवह्रियन्ते। इयं प्रयोजकता रसगता, शब्दार्थगता, सङ्घटनागता च भवति। एते सर्वे सम्भूय माधुर्यादिकमुत्पादयन्ति, यत्तु चित्तस्यावस्थाविशेषः। गुणो हि रसशब्दार्थसङ्घटनानां न कस्यापि धर्मः। अतो गुणालङ्कारयोर्भिन्नत्वं स्वयं सिद्धम्।

काव्यशास्त्रस्यारम्भकाले प्राक्तनैराचार्यैः काव्येऽलङ्काराणामतिशयितं महत्त्वमङ्गीकृतम्। शनैश्शनैर्गुणाः काव्यात्मसहचारिण इति मत्वा काव्येऽलङ्कारा-नतिरिच्य प्रतिष्ठापिताः। ततश्च काव्ये गुणा नित्या अलङ्काराश्चानित्या इति मतं प्रवर्तितम्। पुनश्च, गुणाः काव्यशोभाकर्तारोऽलङ्काराश्च काव्यशोभोत्कर्षका मताः। ध्वनिवादिभिः काव्यज्ञैः काव्येऽलङ्काराणां गौणत्वं निर्दिश्य प्रायस्तेषामुपेक्षैव कृता। यद्यपि ध्वनिकारेणानन्दवर्धनेन ध्वनिकाव्ये रसाक्षिप्तोऽलङ्कारो बहुमतः; किन्तु परवर्तिभिराचार्यैः स सर्वथा बहिरङ्गभूतः कृतस्तस्य नियतोपस्थितिरपि निषिद्धा। सुप्रतिष्ठितेऽपि ध्वनिसिद्धान्तेऽप्पयदीक्षित-जयदेवप्रभृतय आचार्याः पुनरपि काव्येऽलङ्कारतत्त्वं गौरवास्पदं विधातुं सन्नद्धा बभूवुः, किन्तु साफल्यं न लेभिरे।

यथा लोके तथा काव्ये, भावस्याकारस्य चापि स्वगतं वैशिष्ट्यं विभाति। अतो द्वावपि समानमानौ। रीतिसम्प्रदाये भावमुपेक्ष्य सङ्घटनां प्रत्येव पक्षपातः। एवमेव, ध्वनिसम्प्रदाये रसापेक्षया शब्दार्थौ गौणतां नीतौ। परिणामतोऽङ्गस्य गुणा अङ्गिनो गुणानामपेक्षया हीना व्यवहृताः। एतदेव रहस्यं ध्वनिसम्प्रदाये शब्दार्थाश्रितालङ्काराणामुपेक्षायाः; किन्त्वानन्दवर्धनः सहजतया प्रयुक्तानां रसाक्षिप्तानामलङ्काराणां महत्त्वं स्वीचकार। वस्तुतो रूपविधानस्यैतदेव महत्त्वं यत्स भावं कियन्मात्रं प्रभावशालिनं वितनोति। यदि काव्यं नाम न स्यादुक्तिवैचित्र्यं को भेदस्तस्य लोकवाग्व्यवहारात्? काव्यं तु लोकोत्तरवर्णनमेव[१]। अस्मिन् विषये

१. लोकोत्तरवर्णनानिपुणं कविकर्म (काव्यम्)। (काव्यप्रकाशः, १.२, वृत्तिः)

श्रीनीलकण्ठदीक्षितस्यापि वचनं ध्यातव्यम्[१]। पाश्चात्त्यैरपि काव्यज्ञविपश्चिद्भिः काव्येऽलङ्कारस्य महत्त्वमङ्गीकृतम्। मम्मटविश्वनाथादिभिराचार्यैर्लोकव्यवहारस्यारोपः काव्यव्यवहारे कृत्वा काव्यालङ्कारान् दैहिकाभूषणानीव निर्दिशद्भिर्न समीचीनमाचरितम्। मानवानामलङ्कारधारणं यदृच्छामूलम्। अलङ्काराणां शरीरे धारणं शरीराच्च तदुन्मोचनं तेषामिच्छाधीनम्। यथा लोकेऽलङ्काराणां शरीरसंयोगाद्वियोगाद्वा नरत्वस्य न कोऽपि विपर्ययः, अलङ्कारसंयोगेऽपि स नरोऽलङ्कारवियोगेऽपि स नर एव। एवं हि काव्यत्वस्यापि विषये मन्तव्यम्।

काव्येऽलङ्कारेण संयुक्तेऽलङ्काराद्वियुक्तेऽपि काव्यत्वे न किमप्यन्तरं जायते, किन्तु यथा लौकिकान्याभूषणानि मानवदेहादपाक्रियन्ते, अपि नाम काव्यविषये तथा कर्तुं शक्यते? नास्त्येव तादृग्विधानम्। काव्यालङ्कारास्तु शब्दार्थमयाः काव्यशरीरादभिन्नाः। कथं नाम मम्मटादीनां कथनं तर्कसङ्गतं समीचीनं वा काव्यालङ्कारा हारादिवदिति। लौकिकान्याभूषणानि संयोगसम्बन्धेन शरीरं विभूषयन्ति, किन्तु काव्यालङ्काराः काव्यशरीरे समावायसम्बन्धेनैव भवन्ति; यतो हि काव्यस्यालङ्कारस्य चापि द्वयोरेव शब्दार्थमयत्वम्। शब्दार्थप्रयोगैरेव काव्यं निर्मीयते तत एवालङ्कारोऽपि प्रयुज्यते। अतः काव्येऽलङ्काराणां महत्त्वं नास्त्युपेक्ष्यम्।

गुणालङ्कारसम्बन्धविषये नास्त्याचार्याणामैकमत्यम्। क्वचिद् गुणालङ्काराणामाधारभूतमभिन्नत्वं स्वीकृतं क्वचित्त्वाश्रयभेदात्तयोः पार्थक्यमपि प्रदर्शितम्। केचनालङ्कारा गुणेष्वन्तर्भूताः केचिद्गुणा अप्यलङ्कारैर्निगीर्णाः। वामनस्य शब्दार्थगता दशगुणा मम्मटाचार्येण रसाश्रितेषु त्रिषु गुणेष्वेवान्तर्भाविताः। यद्यपि रसाश्रितानां गुणानां ग्राह्यत्वमस्त्येव, तथापि वामनोक्तदशगुणानामुपादेयत्वमप्यस्ति। स्पष्टतोऽलङ्कारेभ्यो रसाश्रितानां गुणानां पृथगत्वमस्त्येव। आश्रयभेदात्तेषां स्वरूपभेदोऽपि सिद्ध्यति। आश्रयसमत्वेनैव भ्रान्तिर्भवति शब्दार्थाश्रित-गुणानामलङ्काराणाञ्चेति।

गुणाः काव्यसौदन्र्यहेतवोऽलङ्काराश्च तदतिशयहेतव इत्याचार्यैः स्वीकृते सत्यपि व्यवहारतो विप्रतिपत्तिर्जायत एव। यथा, यदि काव्येऽर्थव्यक्तिगुणेन सहैव स्वभावोक्त्यलङ्कारस्यापि सद्भावोऽस्ति, तदा द्वयोः कः काव्यसौन्दर्यस्य हेतुरिति निर्णेतुं न शक्यम्, द्वयोरेव स्वभावसाम्यात्। यद्यत्र कश्चिद्वक्ति यदर्थव्यक्तिगुणः काव्यशोभाजनकस्तदा प्रश्न उदेति कथं स्वभावोक्तिरेवैवं भवितुं नार्हति? स गुण

---

१. यानेव शब्दान् वयमालपामो यानेव चार्थान् वयमालिखामः।
तैरेव विन्यासविशेषभव्यैः सम्मोहयन्ते कवयो जगन्ति।। (शिवलीलार्णवे, १.१३)

इति शोभाजनकोऽयमलङ्कार इति नेति वक्तुं न्याय्यं न। इदं काव्यतत्त्वं गुणः, काव्यतत्त्वं चेदमलङ्कार इति निश्चेतुं तावन्न शक्यं यावदेष निर्णयो न भवेद्यद् गुणः किं कार्यं करोति यदलङ्कारः कर्तुं न शक्नोति? यावदेष निर्णयो न भवेत्तावद् गुणालङ्कारयोः पार्थक्यमसम्भवं नाम।

गुणाः काव्यशोभाकर्तारोऽलङ्काराश्च तदतिशयहेतव इति मन्यते चेत्तन्नोचितम्। यतो हि यस्मिन् काव्येऽलङ्काराः सातिशयं प्रयुज्यन्ते तत्काव्यं सातिशयं सौन्दर्ययुक्तं भवेत्, अलङ्कारातिशये सौन्दर्यातिशयादिति। यदि गुणजन्यं काव्यसौन्दर्यमलङ्कारप्रयोगेण वृद्धिमाप्नोति, तदाऽलङ्काराभावे, गुणस्य सद्भावेऽपि काव्येऽपुष्टं न्यूनतरञ्च सौन्दर्यं भवेत्। एवं हि काव्योत्कृष्टत्वमलङ्काराश्रितं स्याद्यत्त्वाचार्यैर्नाभिमतम्। सहृदयहृदयानन्दानुभूतिरेव काव्यसौन्दर्यस्य मानदण्ड इति भारतीया काव्यशास्त्रपरम्परासम्मतिः। पाश्चात्यः काव्यशास्त्रविद् आई.ए. रिचर्डमहोदयः सौन्दर्यमात्मनिष्ठं मनुते, न तु वस्तुनिष्ठम्। 'सुन्दरमिदं वस्त्वि'ति कथनस्यायमेवाशयो यत्तत्सहृदयान्तःकरणे सौन्दर्यं बोधयितुमलमिति[१]। यद्यलङ्कार एव काव्यसौन्दर्यातिशयहेतुस्तदालङ्कारस्य न्यूनाधिकप्रयोगेण काव्यस्याप्युत्कृष्टा-नुत्कृष्टा अलङ्कारकृतकोटयो भवेयुः। किन्तु नैतदपि स्वीकृतमाचार्यवर्यैः। भवतु, भवेन्नाम भूयोऽतिभूयोऽलङ्कारप्रयोगस्तत्र, गुणानामभावे तत्काव्यमेव न स्यादथ-वाऽधमं काव्यमिति।

गुणाः काव्यस्य नित्यधर्मा इति काव्ये तेषामभावः सर्वथा अकल्पनीयः; किन्तु सर्वे गुणा एकस्मिन् काव्ये समवेता सन्त्विवति सम्भावनमपि क्लिष्टतमम्। समग्रगुणोपेता वैदर्भीति वामनः[२]; किन्तु दुष्करः एवास्य व्यवहारनिर्वाहः। वैदर्भीरीतिसन्दर्भे कालिदासो विशिष्यत इति प्रसिद्धमेव; परन्त्वस्ति कालिदासकाव्ये सर्वत्र समेषां गुणानां स्थितिः? नैवम्। वस्तुतः कालिदासकाव्येषु माधुर्यप्रसादगुणयोर्बाहुल्येनैवैषोक्तिः। अतः काव्ये केचिदेव गुणा एकत्र सम्भवन्ति, न तु सर्वे। इत्थं तत्तद्गुणानामभावे तत्तुल्यालङ्काराणां महत्त्वमवगन्तुं शक्यते।

गुणानां विपर्ययः सदैव दोष एव पर्यवस्यति। गुणविपर्ययो दोष इति वामनः। सरस्वतीकण्ठाभरणे भोजराजोऽपि समाधिगुणं विहायावशिष्टानां सर्वेषां गुणानां विपर्ययो दोष इत्याहुः। अलङ्कारविपर्ययात्काव्यं न दुष्यति। गुणस्य

---

१. We are accustomed to say that a picture is beautifull insted of saying that it cause an experience in us which is valuable in certain ways. I.A.Richard, Principles of literary criticism, P. 20.

२. समग्रगुणोपेता वैदर्भी। (काव्यालङ्कारसूत्रे, १.२.११)

विपर्ययो दोषः; किन्त्वलङ्कारविपर्ययो न दोषोऽपि तु सोऽपि प्रायेणालङ्कार एव। यथा विशेषोक्तिर्विभावना च द्वावप्यलङ्कारौ परस्परं विपर्ययरूपावेव। गुणालङ्कारयोरिदं सुस्पष्टमन्तरम्।

निष्कर्षस्त्वापतत्येवमस्य विवेचनस्य—

गुणः काव्यस्य नित्यधर्मः। स काव्यसौन्दर्यस्य जनकः। गुणाभावे काव्यत्वस्य हानिः। गुणविपर्ययः काव्यदोष एव।

अलङ्कारः काव्यस्यानित्यधर्मः। स काव्यसौन्दर्योत्कर्षस्य हेतुः। अलङ्काराभावे न काव्यत्वस्य हानिः। अलङ्कारविपर्ययो न कमपि दोषं जनयति, क्वचिदलङ्कार एव पर्यवसितश्चारुत्वमेवोन्नयतीति।

गुणालङ्कारसम्बन्धो विविक्तः शास्त्रसम्मतः।
प्रमाणमत्र काव्यज्ञाः क्व शास्त्रं क्व च मे मतिः।।

यदत्र निहितं वस्तु तत्तु पूर्वैः प्रपञ्चितम्।
व्यवस्थितं कृतं किञ्चिन्मया सङ्क्षिप्य केवलम्।।इति।

●

# मीमांसादर्शनं मम्मटश्च

**डॉ. वनेश्वरपाठकः**
संस्कृतसदनम्, इर्गूरोड,
पहाड़ी साइड, राँची,
बिहार-प्रदेशः

❀ ❀ ❀

काव्यप्रकाशकारेण मम्मटाचार्येण व्यञ्जनासिद्धान्तसंस्थापनसंरम्भे मीमांसा-दर्शनीयोऽयं सिद्धान्तः 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति समुद्धृतोऽस्ति। अत्र मीमांसादर्शनम्— विनियोगविधेः सहकारिभूतानि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्येति षट् प्रमाणानि सन्ति। एतत्प्रमाणषट्कसहकृतेन विनियोगविधिना प्रयाजादीनां (प्रयाजानुयाजप्रोक्षणादीनां) दर्शपूर्णमासादियागेऽङ्गत्वं विधीयते। अङ्गत्वं पारार्थ्यापरपर्यायम्। यदुद्देशेन यद् व्याप्रियते, तत् तदङ्गमिति भावः।

विनियोगविधिस्तावत्— भगवता जैमिनिना धर्मजिज्ञासायां वेदप्रतिपादितं प्रयोजनवदर्थं यागादिमेव धर्मं प्रतिपादयता धर्मलक्षणे सन्निविष्टस्यापौरुषेय-वाक्यरूपस्य वेदस्य विधि-मन्त्र-नामधेय-निषेधार्थवादेति पञ्चविधत्वं प्रोक्तम्। तत्राज्ञातार्थज्ञापकस्य वेदभागस्य विधेरपि तेन चातुर्विध्यमुक्तम्— उत्पत्तिविधिः, विनियोगविधिः, अधिकारविधिः, प्रयोगविधिश्चेति। तत्र विनियोगविधिं परिभाष-माणेन तेन प्रोक्तम्— 'अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः' इति। अर्थाद् द्रव्यदेवतादिविषयाणामङ्गानामपरवाक्यैर्विहितैः प्रधानीभूतैः होमादिभिः सह सम्बन्ध-बोधको विधिर्विनियोगविधिः। यथा—'दध्ना जुहोति' इत्यत्र दध्नेति तृतीयाश्रुत्या बोधितस्य दधिरूपस्याङ्गस्य 'अग्निहोत्रं जुहोति' इति वाक्येन सह सम्बन्धो विधीयते। तथाऽत्र दध्ना जुहोतीति वाक्येन 'दध्ना होमं भावयेदि'त्यर्थो बोध्यते[१]।

---

१. भावना द्विविधा— शाब्दी आर्थी चेति। शाब्दी भावनाऽपि द्विधा— लौकिकी वैदिकी च। तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दी भावना। स च व्यापारविशेषो

अत्रायमभिप्राय:—विरुद्धयोर्वस्तुनोरेकत्रोपनिपाते समुच्चयो न भवति, अर्थाद् यत्रैकस्यैव पदार्थस्य प्रमाणाभ्यां पदार्थद्वयसम्बन्धो बोध्यते तत्र तयोर्विरोध:। एवं स्थिते तत्रैकस्यापरेण बाधो बोध्य:। स च बाधो बलवता दुर्बलस्येति स्थितौ दौर्बल्यप्रतिपादकमिदं सूत्रं जैमिनिना प्रोक्तम्— 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्[२]' इति। अर्थाद् यथाक्रममुक्तानां श्रुत्यादीनामेकत्रोपनिपाते परपरस्य विलम्बेनार्थोपस्थापकतया दुर्बलत्वम्, पूर्व-पूर्वश्रुत्यादे: प्राबल्यमिति। श्रुत्यादीनां मध्ये यदपेक्षया यत् परं तदपेक्षया तद् दुर्बलमिति भाव:। दुर्बलत्वे हेतुश्चार्थविप्रकर्ष:। अर्थस्य = विनियोज्यस्य, विप्रकर्ष: = दूरवर्त्तित्वम्, विलम्बेनार्थप्रत्यायकत्वात्।

मीमांसादर्शनानुसारं श्रुत्यादीनां स्वरूपाणि— यदर्थस्याभिधानं श्रवणादेवावगम्यते, स श्रुत्याऽवगम्यते। श्रवणं श्रुति:। यत् तावच्छब्दस्यार्थमभिधातुं सामर्थ्यं तल्लिङ्गम्। (लिङ्गं 'मन्त्रेषु वचनसामर्थ्यम्' तन्त्रवार्तिकव्याख्या)। एकार्थमनेकं पदं वाक्यम्[३]। कर्तव्येतिवृत्ताकाङ्क्षस्य वचनं प्रकरणम्[४]। स्थानं देशसामान्यम्[५]। क्रम: स्थानम्। यौगिकशब्द: समाख्याख्या[६]। समाख्या सम्बन्धप्रतिपादिनी।

श्रीमदापदेवेन मीमांसान्यायप्रकाशे श्रुत्यादीनां व्याख्यां कुर्वता प्रोक्तम्— 'निरपेक्षरव: श्रुति:'। 'रव:' एतावन्मात्रे उक्ते वाक्यादावतिप्रसक्ति: स्यादतो

---

लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेष:। वैदिकवाक्ये तु पुरुषाभावात् लिङादिशब्दनिष्ठ एव। प्रयोजनेच्छाजनितक्रियाविशेषव्यापार आर्थी भावना। उभयत्र भावनायामंशत्रयमपेक्ष्यते— साध्यं साधनमितिकर्तव्यता च— किं भावयेत्, केन भावयेत्, कथं भावयेदिति। तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति। साधनाकाङ्क्षायां यागादि: कारणत्वेनान्वेति। इतिकर्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यत्वेनान्वेति।

२. मीमांसादर्शनम् (पूर्वमीमांसा, द्वादशलक्षणी), ३।३।१।

३. अर्थात् परस्पराकाङ्क्षावशात् क्वचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यम्। 'समभिव्याहारो वाक्यम्' इति मीमांसान्यायप्रकाशे। अथवा शेषशेषिवाचकपदयो: सहोच्चारणं वाक्यम्। शेष: = अङ्गम्, शेषि = प्रधानम्।

४. उभयाकाङ्क्षा प्रकरणम्' अथवा 'परस्पराकाङ्क्षा प्रकरणम्'।

५. 'समानदेशत्वं स्थानम्' अथवा 'देशसामान्यं स्थानम्'।

६. समाख्या यौगिक: शब्द:। शब्दश्चतुर्विध:—यौगिक:, रूढ:, योगरूढ: यौगिकरूढश्चेति। यौगिक: = आध्वर्यवम्, पाचक इत्यादि:। रूढ: = गवादिशब्द:। योगरूढ: = पङ्कजादिशब्द:। यस्त्ववयवशक्तिसमुदायशक्तिभ्यां रूढमर्थं योगार्थं च स्वातन्त्र्येण बोधयति, स यौगिकरूढ:, यथा उद्भिदादिशब्द:। स चोर्ध्वभेदनकर्त्तृकतरुगुल्मादिकं बोधयति, यागविशेषमपि चेति।

निरपेक्षत्वविशेषणम्। निरपेक्षत्वं च स्वकरणीयत्वे (अङ्गत्वबोधे) प्रमाणान्तरानपेक्षत्वम्। इतरप्रामाण्यानधीनप्रामाण्यकत्वं वा। अथवा स्वार्थबोधे शब्दान्तरानपेक्षत्वम्। एवंभूतो रवः श्रुतिः[१]। तथा च यच्छब्दज्ञानमन्यव्यवधानमनपेक्ष्य तदर्थज्ञानं जनयति, स शब्दः (रवः) तस्मिन्नर्थे श्रुतिः। अन्यप्रमाणानि इतो भिन्नानि। तेषां स्वीकरणीयत्वे प्रमाणान्तरापेक्षा, स्वार्थबोधे शब्दान्तरापेक्षा, तथा तानि अन्यव्यवधानमपेक्ष्यैव स्वार्थं बोधयन्ति, अतः श्रुत्यपेक्षया तेषां दुर्बलत्वम्।

विनियोगविधौ श्रुतिर्लिङ्गादिभ्यः प्रबलं प्रमाणम्। लिङ्गादिषु हि न प्रत्यक्षो विनियोजकः शब्दोऽस्ति; किन्तु कल्प्यः। अर्थात् तत्र विनियोजकशब्दस्य कल्पना क्रियते। यावच्च लिङ्गादिभिर्विनियोजकः शब्दः कल्प्यते, तावत् प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वात् तेषां कल्पकत्वशक्तिर्विहन्यत इति श्रुतेः प्राबल्यम्। 'उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावः' तथा 'प्रत्यक्षं सर्वतो बलवत्' इति लोकन्यायश्च[२]।

अत एव 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र यावल्लिङ्गाद् ऐन्द्र्या ऋचा इन्द्रोपस्थानाङ्गत्वं कल्प्यते तावत् प्रत्यक्षया द्वितीयाश्रुत्या गार्हपत्योपस्थानाङ्गत्वं क्रियत इति ऐन्द्री गार्हपत्योपस्थानाङ्गत्वम्। अर्थाद् ऐन्द्रमन्त्रो गार्हपत्याग्नेरुपस्थानस्यैवाङ्गमिति। इन्द्रप्रकाशनसामर्थ्यरूपं लिङ्गं तु विलम्बेनैव विनियोगं करिष्यति। यतो हि मन्त्रपदात् सर्वप्रथमं स्ववाच्यार्थस्य बोधो भविष्यति। ततो मन्त्रे वस्तुप्रकाशनसामर्थ्यस्य निश्चयो भविष्यति। ततो वस्तुप्रकाशनसामर्थ्येन साधनत्ववाचिनः प्रधानत्ववाचिनश्च कल्पना भविष्यति। ततः कल्पितशब्देन ऐन्द्रमन्त्रेण इन्द्रस्योपस्थानं भवेदिति विनियोगो भविष्यति। एवञ्च मन्त्रपदस्यार्थप्रतिपादनस्य विनियोगस्य च मध्ये सामर्थ्यनिश्चयः शब्दकल्पना चेति

---

१. केचन तु 'अभिधातुं पदेऽन्यस्मिन्ननपेक्षरवः श्रुतिः' अर्थाद् अभिधातुं प्रकृत्यर्थेन सहान्वयमनुभावयितुं पदान्तरविषयाकाङ्क्षाशून्यो रवः श्रुतिरिति वदन्ति। तेषां मते श्रवणमात्रेणार्थमनुभावयन्ती श्रुतिः कथ्यते। श्रुतयश्च कारकविभक्तयः। उपपदविभक्तयस्तु सहार्थतृतीयादयः सहादिसापेक्षा इति ता न श्रुतयः। एतन्मूलकमेव 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति वचनम्। श्रुतिर्यथा— 'व्रीहीनवहन्ति' इति। अत्र द्वितीयाश्रवणमात्रेण व्रीहीणामवहननक्रियायां विनियोगोऽवगम्यते। 'मासं गुडधानाः', 'क्रोशं कुटिला नदी' इत्यादौ द्वितीया (उपपदविभक्तिः) न श्रुतिः, अन्तर्भूतक्रियासापेक्षत्वात्। अत्र बुद्धिस्था व्याप्तिरूपाऽन्तर्भूतक्रियेत्यर्थः।

२. अत एव श्रुत्यादिप्रमाणषट्कस्य शास्त्रीयत्वापेक्षया लौकिकत्वमेवेति मामकीनः पक्षः।

व्यवहारद्वयं व्यवधायकम्। अतो लिङ्गविनियोगः स्वभावतो विलम्बेन भविष्यति। श्रुतिविनियोगपक्षे तु मन्त्रपदानामर्थज्ञानादेव विनियोगो भवति। तत्र मध्यवर्त्तिनो व्यापारस्य कल्पना आवश्यकी न। इत्थं लिङ्गात् श्रुतिः प्रबला। अतः श्रुत्यैव लिङ्गस्य बाधः।

लिङ्गं वाक्यादिभ्यो बलवत्। तेषां न साक्षाद् विनियोजकत्वम्, किन्तु लिङ्गं श्रुतिं च कल्पयित्वा। न चासमर्थस्य श्रुतिं कल्पयित्वा विनियोगकल्पना सम्भवतीति सामर्थ्यस्यापि कल्प्यत्वेनोपजीव्यत्वात् तैर्यावत् सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्यते, तावत् क्लृप्तेन सामर्थ्येन श्रुतिं कल्पयित्वा विनियोगः क्रियत इति तस्य प्राबल्यम्, किन्तु श्रुतेरपेक्षया तस्य निर्बलत्वम्, श्रुतेः पूर्वोपस्थित्या। 'पूर्वोपस्थितिः परोपस्थितिं बाधते' इति लोकन्यायः[1]। श्रुतिं प्रति लिङ्गस्य कल्पनया वाक्यं व्यवहितं जायते। लिङ्गं श्रुतिं प्रति व्यवहितं न। अतो लिङ्गं वाक्यात् प्रबलमिति भावः।

वाक्यं प्रकरणाद् बलीयः। प्रकरणं हि न साक्षाद् विनियोजकम्। तद्धि आकाङ्क्षारूपम्। उभयाकाङ्क्षा (परस्पराकाङ्क्षा) प्रकरणम्। न चाकाङ्क्षा स्वयं प्रमाणम्। आकाङ्क्षारूपं प्रकरणं वाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रमाणम्। एवञ्च यावत् प्रकरणं वाक्यं कल्पयित्वा विनियोजकं भवति, तावद् वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकं भविष्यतीति प्रकरणाद् वाक्यं बलीयः।

अयमभिप्रायः— प्रकरणे पदानामन्वयरूपस्य वाक्यस्य कल्पना। तेन वाक्येनार्थप्रकाशनसामर्थ्यरूपस्य लिङ्गस्य कल्पना, लिङ्गेन च विनियोगबोधकश्रुतेः कल्पना। इत्थं प्रकरणश्रुत्योर्मध्ये कल्पनात्रयस्य व्यवधानम्। वाक्यं श्रूयमाणमेव। तत्र केवलं लिङ्गस्य श्रुतेश्च कल्पना करणीया भवति। अतः पूर्वोपस्थित्या प्रकरणाद् वाक्यं बलवदिति भावः। एवमन्यत्रापि पूर्वपूर्वबलीयस्त्वं बोध्यम्।

तद्यथा— श्रुतिलिङ्गयोर्विरोधे लिङ्गस्य दुर्बलत्वम्, लिङ्गवाक्ययोर्विरोधे वाक्यस्य दुर्बलत्वम्, वाक्यप्रकरणयोर्विरोधे प्रकरणस्य दुर्बलत्वम्, प्रकरण-स्थानयोर्विरोधे स्थानस्य दुर्बलत्वम्, स्थानसमाख्ययोर्विरोधे समाख्याया दुर्बलत्वं बोध्यम्। तथा च श्रुत्या लिङ्गस्य बाधः, लिङ्गेन वाक्यस्य, वाक्येन प्रकरणस्य, प्रकरणेन स्थानस्य, स्थानेन समाख्याया बाध इति। बाधे चात्र पूर्वस्मात् परस्य विलम्बेनार्थोपस्थापकत्वं कारणम्।

---

१. अत एव श्रुत्यादिप्रमाणषट्कस्य शास्त्रीयत्वापेक्षया लौकिकत्वमेवेति मामकीनः पक्षः।

**तदयं निष्कर्षः**

श्रुतिर्निरपेक्षत्वाद् विनियोगे सर्वतो बलवती। लिङ्गं तु विनियोगे एकान्तरितत्वात् श्रुत्यपेक्षया दुर्बलम्। किन्तु द्व्यन्तरितवाक्याद् बलवत्। वाक्यन्तु त्र्यन्तरितप्रकरणाद् बलवत्। प्रकरणन्तु चतुरन्तरितस्थानाद् बलवत्। स्थानन्तु पञ्चान्तरितसमाख्यातो बलवत्। समाख्या तु पञ्चान्तरितत्वात् सर्वतो दुर्बलेति। उक्तञ्च—

'एकद्वित्रिचतुष्पञ्चवस्त्वन्तरमकारितम्।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते।।
बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।
मध्यमानां च बाध्यत्वं बाधकत्वव्यपेक्षया'।।

श्रुत्यादीनां सङ्क्षिप्तरूपाणि—

'अभिधातुं पदेऽन्यस्मिन्निरपेक्षरवः श्रुतिः।
सर्वत्रावगता [१]शक्तिर्लिङ्गमित्यभिधीयते।।
संहत्यार्थं[२] ब्रुवद् वृन्दं पदानां वाक्यमुच्यते।
[३]प्रधानवाक्यस्याङ्गोक्त्याकाङ्क्षा प्रकरणं स्मृतम्।।
स्थानं समानदेशत्वं समाख्या[४] यौगिको रवः।।

(परमानन्दचक्रवर्त्तिभट्टाचार्यकृतकाव्यप्रकाशविस्तारिकाटीकातः)

एतच्छ्रुत्यादिप्रमाणषट्कसहकृतेन विनियोगविधिना समिदादिभिरुपकृतानि 'दर्शपूर्णमासाभ्यां यजेत' इत्येवं सिद्धरूपाणि[५] क्रियारूपाणि[६] चाङ्गानि विनियोज्यन्ते।

---

१. शक्तिः = सामर्थ्यम्।

२. संहत्य = विशेष्यविशेषणभावत्वं प्राप्य।

३. प्रधानवाक्यस्य = दर्शपूर्णमासाभ्यां यजेतेत्यस्येत्यर्थः।

४. समाख्या = योगेनावयवशक्त्यार्थं प्रतिपादयतीति यौगिको रवः (शब्दः) समाख्या।

५. सिद्धरूपाणि = जातिद्रव्यसंख्यादीनि। तत्र पशुत्वादि जातिः, व्रीह्यादि द्रव्यम्, एकत्वादि संख्या चेति सिद्धरूपाण्यङ्गानि। एतानि इष्टप्रयोजनानि सन्ति।

६. क्रियारूपाणि च द्विविधानि–गुणकर्माणि प्रधानकर्माणि च। तत्र गुणकर्माणि अवघात-प्रोक्षणादीनि। प्रधानकर्माणि च प्रयाजादीनि सन्ति।

सर्वमेतत् माधवीये जैमिनिन्यायमालाविस्तरे भिक्षुरामेश्वरकृतायां मीमांसार्थ-सङ्ग्रहकौमुद्याम्, आपदेवकृते मीमांसान्यायप्रकाशे, श्रीकृष्णयज्वकृतायां मीमांसा-परिभाषायाम्, श्रीलौगाक्षिभास्करप्रणीते अर्थसङ्ग्रहे, माणिक्यचन्द्रसूरि-सोमेश्वरभट्ट-विवरणकारगोकुलनाथोपाध्याय-काव्यप्रदीपकारगोविन्दठक्कुर-परमानन्दचक्रवर्त्ति-भट्टाचार्य-झलकीकरवामनाचार्यप्रभृतिभिः कृतासु मम्मटाचार्यरचितकाव्य-प्रकाशस्य टीकासु सङ्केतादर्श-विवरण-प्रदीप-विस्तारिका-बालबोधिन्यादिषु विस्तरतो वर्णितमस्ति।

सर्वशास्त्रीयं सिद्धान्तजातमालोच्य सर्वसमन्वयं कुर्वता, महता पाण्डित्येन स्वं सिद्धान्तं प्रतिष्ठापयता काव्यप्रकाशकारेण मम्मटाचार्येण व्यञ्जनाविरोधिना-मेकदेशिमीमांसकानां दीर्घदीर्घतराभिधाव्यापारवादिनां व्यञ्जनाविरोधिमतानां तेषामेव शास्त्रीयसिद्धान्तेन खण्डनायेदं मीमांसाशास्त्रीयं विनियोगनियामकप्रमाणवाक्यं 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति समुद्धरता प्रोक्तम्— 'यदि च श्रुतेरनन्तरं यावानर्थो लभ्यते, तावति शब्दस्यैवाभिधाव्यापारः[1] ......' इत्यादि। अर्थाद् यदि शब्दश्रुतेरनन्तरोपस्थापितान् सर्वानेवार्थान् प्रति अभिधैव व्यापारः स्यात्, तदा श्रुत्युपस्थापितार्थस्यैव लिङ्गाद्यनुगृहीतार्थानामप्यभिधेयतया सर्वेषां समकालमर्थोपस्थापकत्वप्रसक्त्या अर्थविप्रकर्षाभिधानं मुनेरनुचितं स्यात्[2]। श्रुत्यादिषु षट्सु विनियोगनियामकेषु पूर्वपूर्ववर्त्तिविनियोगनियामकानामपेक्षया उत्तरोत्तरवर्तिविनियोगनियामकानामर्थ-प्रत्यायने विलम्बो जायते। उपस्थितौ विलम्बस्तेषां दुर्बलत्वे हेतुः। स चात्र न सम्भवति, सर्वेषां समकालमेवार्थोपस्थापकत्वादिति भावः।

ध्वन्यालोकलोचनकारेणाभिनवगुप्तेनापि— 'श्रुतिलिङ्गादिप्रमाणषट्कस्य पारदौर्बल्यमित्यादिक्रियाविधातः' इत्याद्युक्तवता संसूचितपूर्वमिदम्[3]।

मीमांसाशास्त्रीयं विनियोगप्रमाणवाक्यमाश्रित्यैकदेशिमीमांसकानामन्विता-भिधानवादिनां व्यञ्जनाविरोधिमतमपाकुर्वता मम्मटेन ध्वन्यालोकलोचनटीकाकारस्या-भिनवगुप्तस्येयमुक्तिरत्राधारत्वेन गृहीताऽस्ति। अभिनवगुप्तेन योऽप्यन्विता-भिधानवादी 'यत्परः शब्दः, स शब्दार्थः' इति हृदये कृत्वा शरवदभिधाव्यापारमेव दीर्घदीर्घतरमिच्छति'...... इत्याद्युपक्रमता एकदेशिमीमांसकानामन्विताभिधानवादिनां

---

१. काव्यप्रकाशः, पञ्चमोल्लासः।

२. काव्यप्रकाशविवरणटीकाकारः गोकुलनाथोपाध्यायः।

३. ध्वन्यालोकलोचनटीका, चौ.सं., पृ. ६५।

व्यञ्जनाविरोधिमतं, तेषामेव सिद्धान्तेनानेन तेषां मतस्य विघातो भवतींति स्पष्टीकृत्य, निराकृतमस्ति।

तात्पर्यमिदं यत् 'यत्परः शब्दः, स शब्दार्थः' इति सिद्धान्तमाश्रित्य, अथवाऽभिधाव्यापारमेव दीर्घदीर्घतरमङ्गीकृत्य शब्दश्रुतेरनन्तरं यावन्तोऽर्थाः प्रतीयन्ते, तावतः सर्वानेवार्थान् प्रति अभिधैव व्यापारः स्वीक्रियते चेत् तर्हि श्रुति-लिङ्गाद्युपस्थापितानां सर्वेषामर्थानामभिधेयतया समकालमेव प्रतीतिप्रसक्त्या अर्थ-विप्रकर्षाभिधानं मीमांसाशास्त्रीयमत्रासङ्गतमिति। अतो व्यञ्जनाविरोधे मीमांसकैराश्रिता उपर्युक्ता सरणिरसमीचीना। व्यञ्जनाविरोधिनस्ते मीमांसकाः स्वं सिद्धान्तमेव सम्यक्तया नावगच्छन्तीति मम्मटस्याभिप्रायः।

'यत्परः शब्दः, स शब्दार्थः' इति तात्पर्यवाचोयुक्तेर्नायमभिप्रायो यद् यो ह्यर्थः प्रधानतया वेद्यः, अथवा तात्पर्यविषयीभूतः, स सर्वोऽप्यर्थः शब्दाभिधेयः (वाच्यः) एवेति।

तात्पर्यवाचोयुक्तेरस्या अयमभिप्रायोऽस्ति यद् यस्य विधेयत्वं तत्रैव तद् वाक्यस्य तात्पर्यम्, यस्मिंश्च तात्पर्यं स एव वाक्यार्थः, तदर्थबोधनायैव तद् वाक्यं प्रयुज्यत इति। अतस्ते मीमांसकास्तात्पर्यवाचोयुक्तेरतात्पर्यज्ञाः सन्ति।

एवमेव यदि अभिधयैव सर्वेषामर्थानामुपस्थितिः स्वीक्रियते तर्हि श्रुत्यादीनां समेषां विनियोगनियामकानां समकालमेवार्थोपस्थापकत्वप्रसक्तिः स्यात्। तथा च सर्वेषामर्थानामभिधेयतया (अभिधाबोध्यतया) समरूपत्वापत्त्या तेषां विलम्बेनाविलम्बेन वाऽर्थोपस्थापकत्वं तथा दुर्बलत्वं प्रबलत्वं वेति कथनमसङ्गतं स्यात्, एवञ्च व्यञ्जनाविरोधिनामेकदेशिमीमांसकानां मते मीमांसाशास्त्रीयस्य श्रुतिलिङ्गादिप्रमाणषट्कस्य पारदौर्बल्यमिति प्रक्रियाविघात इति व्यञ्जनावादिनोऽ-भिनवगुप्तस्य तदनुयायिनो मम्मटस्य चाभिप्राय इति।

●

# आचार्यबच्चूलालोऽवस्थी, तद्यशःप्रतानिनी 'प्रतानिनी' च : एकं समीक्षणम्

**डॉ. मनुलताशर्मा**
संस्कृतविभागाध्यक्षा
आर्यमहिलामहाविद्यालये
वाराणसी

कारयित्री-भावयित्र्युभयविधप्रतिभाप्रकर्षेण प्रद्योतिताः, अधीतविद्या अप्याविद्यिकाः प्राप्ताचार्योपाधयोऽप्यनुपाधयः, वैयाकरणा अपि उपसर्ग-निपातानभिज्ञाः, स्वाभिज्ञा अपि निःस्वाः, ऋजवोऽपि वक्रोक्तिचणाः, महाकालोपासका अपि कालकलनाविचक्षणाः, सुसङ्गा अप्यसङ्गाः, मृदवोऽपि कठोराः, पुराणविदोऽप्यभिनवरचनानिपुणाः, साहित्यशास्त्रज्ञा अपि जुगुप्सा-भयानकानभिज्ञाः साम्प्रतं भगवतो महाकालस्य नगर्यामुज्जयिन्यां कालिदासा-कादम्यामाचार्यकुलाधिष्ठातृपदमलङ्कुर्वाणा ज्ञानोपाह्वा आचार्यबच्चूलालाऽवस्थिनो विंशशताब्दीभवेषु संस्कृतविद्वन्मूर्द्धन्येषु प्रमुखतः सङ्ख्याताः सन्ति। शैक्षणिक-विस्तरेण शास्त्रीयानुसन्धानेन साहितीसुधासंवलितेन मानसेन संयुक्ता आचार्यवर्य्याः चतुरस्रेण पाण्डित्येन मण्डिताः सन्ति। एषां प्रतिभाप्रकर्षः साहित्ये व्याकरणे दर्शने च दृश्यते। सुकोमलसाहित्यशास्त्रस्य प्राणभूतस्य ध्वनेरारोहावरोहसम्मापने एतेषां सूक्ष्मेक्षिका यथा प्रसरति, तथैव व्याकरणदर्शनादिरुक्षतर्ककर्कशशास्त्राणा-मप्यवगाहने आपातालगभीरनिमज्जनप्रवृत्तिरपि भवत्सु स्पष्टं परिलक्ष्यते। विविधै-र्भावैर्भाविता विविधाभी रीतिभिः सङ्घटिता गुणैरुपस्कृता विभिन्नैरलङ्कारैरलङ्कृता अभिनवचिन्तनसरोरुहैः सुसज्जिता सुमेधसामेषां सरस्वती विदुषां मनांस्यानन्दसरस्वति सुतरां मज्जयति।

स्वर्गापवर्गहेतुभूतस्य समेषां प्राणिनां परमप्रमोदास्पदस्य भारतस्य सर्वोत्तरे उत्तरप्रदेशे देवतात्मनो गिरिराजस्योपान्तभूमौ मानसरोवरान्निस्सरन्त्या घर्घरध्वनिना

ध्वनितदिगन्तरायाः सरय्वास्तटेऽपगतमले, बह्वृचानामावासस्थले, साम्प्रतं 'बहराइच' इत्यभिधे मण्डले 'फरुहाघट्टे' ग्रामे १९७५ तमे वैक्रमाब्दे श्रावणमासे शुक्लपक्षे द्वितीयायां तिथौ श्रीमतां बदरीनाथाऽवस्थिनां धर्मपत्नी इमान् प्रासोष्ट। दशवर्षदेशीयानामेषामावासस्थानं कूलङ्कषया घर्घरया महाप्लावने निगीर्णम्। ततः सीतापुरजनपदे शुजातपुरग्रामे एषां पूर्वजाः न्यूषुः। तत्रैवैषामधीतिः प्रारब्धा। प्रारम्भिकी शिक्षा उर्दूभाषायां जाता, पुनः १९३३ तमे खिस्ताब्दे वसन्तपञ्चम्यां वागीश्वरीजयन्त्यां सुरभारत्याः समाराधने तत्परा अभूवन्। १९३६ तमे खिस्ताब्दे प्रथमां परीक्षामुत्तीर्याऽनवरताध्ययने रता इमे १९४७ तमे खिस्ताब्दे नव्यव्याकरणविषये प्रथमश्रेण्यामाचार्योपाधिं लब्धवन्तः। तदनन्तरं ज्ञान-गाम्भीर्यमवाप्तुं लक्ष्मणपुरविश्वविद्यालयतो दर्शनशास्त्रिपरीक्षां साहित्याचार्यपरीक्षाञ्च प्रथमश्रेण्यामुत्तीर्य साहित्यविषये सर्वतोऽधिकानङ्कानवाप्य विश्वविद्यालये प्रथमं स्थानमवापुः।

शास्त्रिपरीक्षामुत्तीर्य इमे कर्णपुरस्थे श्रीबलदेवसहायसंस्कृतमहाविद्यालये १९४३-४४ सत्रतः १९४६-४७ सत्रं यावदध्यापितवन्तः। अनन्तरं वर्षद्वयं लखीमपुर-खीरीस्थे श्रीसनातनधर्मसंस्कृतमहाविद्यालये छात्रानध्यापयामासुः। ततः सागरविश्वविद्यालये हिन्दीसाहित्यं भाषाविज्ञानं संस्कृतपालिप्राकृतादिविषयानपि अध्यापितवन्तः।

पुनरजायताऽध्ययनक्रमः। उत्तरप्रदेशीयमाध्यमिकशिक्षापरिषदः हाईस्कूल-इण्टरमीडिएटपरीक्षे उत्तीर्य १९५३ तमे खिस्ताब्दे आगरा-विश्वविद्यालयतः संस्कृतविषये एम.ए. परीक्षामुदतरन्, लब्धवन्तश्च तस्मादेव विश्वविद्यालयात् १९६३ तमे खिस्ताब्दे 'हिन्दीक्रियापदानां भाषाशास्त्रीयमध्ययनम्' इति विषये पी-एच.डी. इत्युपाधिम्। पुनः सागरविश्वविद्यालयतः 'ध्वनिसिद्धान्तस्तथा तुलनीयं साहित्यचिन्तनम्' इति विषयं सम्यगनुसन्धाय डी. लिट्. इत्युपाधिं प्रापुः।

विविधविद्याविद्योतितान्तःकरणानां सरस्वतीसपर्यासमर्पितमानसानां विद्याकल्पमहीरुहाणां गुरुजनानां सान्निध्ये एषामध्ययनं पूर्णतामवाप। एतेषु प्रमुखा आसन्— वन्दनीया श्रीवेदनाथमिश्राः, सर्वविद्याधुरीणाः श्रीमहावीरझामहोदयाः, पदविदां युक्तिविदां वरिष्ठाः श्रीचन्द्रशेखरशास्त्रिणः, अज्ञानतिमिरौघाणां भास्कराः श्रीघूटरझामहाभागाः। दर्शनशास्त्रोदधौ प्रगाढावगाहनं तु प्रतिभाऽऽकराणां पण्डित-श्रीघूटरझा-श्रीमहावीरझामहाभागानां परमानुकम्पया सम्पन्नमभूत्। तदनु वाग्मितामिमे

लेभिरे। विद्यागुरूणामन्यतमयोरनयोरकारणकरुणयोः करुणावशादेव भारतीयदर्शनबृहत्कोशं निर्मातुं क्षमा अभवन्।

**कृतित्वम्**

आचार्यवर्याणां रचनाशालित्वमप्यद्भुतं गहनं प्रशस्यं परिष्कृतञ्चास्ति। एभिर्देववाण्यां हिन्दीभाषायाञ्च बहवो ग्रन्था गुम्फिताः। तेषु केचन प्रकाशिता अपरे प्रकाशनाधीनाश्च सन्ति। तत्र राष्ट्रभाषायाम्—

काव्य में रहस्यवाद, काव्याङ्गदीपिका, ध्वनिसिद्धान्त तथा तुलनीय साहित्यचिन्तन, भारतीय काव्यसमीक्षा में ध्वनिसिद्धान्त, वैदिक स्त्रीसमाज, तुलसीशब्दकोश, हिन्दी व्युत्पत्तिकोश— एते ग्रन्थाः सन्ति। संस्कृते च— शिवमहिम्नः स्तोत्रस्य हरसिद्धिटीका, भारतीयदर्शनेषु कर्मवादः, भारतीयदर्शनेषु प्रामाण्यवादः, ख्यातिवादविमर्शः, पाणिनीयशिक्षायास्त्रिनेत्रभाष्यम् (प्राकाशनाऽधीनः), भारतीयदर्शनबृहत्कोशः, (प्रकाशनाऽधीनः), साम्प्रतमात्मवादम् ईश्वरवादञ्च लिखन्त आसते। पारेशतं संस्कृतरचना विविधपत्रपत्रिकासु प्रकाशिताः सन्ति। एतदतिरिक्तं 'प्रतानिनी' एतेषां विशिष्टा पद्यकाव्यरचनारूपेण समालोचनाजगति विलसति।

**व्यक्तित्वम्**

आचार्याऽवस्थीनां व्यक्तित्वं गभीरशास्त्रतत्त्वावगाहनस्याऽध्यात्मचिन्तनस्य विनेयानां विदुषाञ्च मार्गदर्शनस्य विहितकर्मविधानस्य काव्यरचनानुष्ठानस्य च पर्यायभूतमस्ति। एषां स्वरूपं स्वभावश्च यथा निराडम्बरः, प्रखरः, निर्भीकश्चास्ति, साधनाऽपि तद्वद् गभीरा, प्रौढा परिष्कृता च परिलसति। प्रतानिन्या भूमिकाथामभिराज-डॉ. राजेन्द्रमिश्रवर्यैरेषां व्यक्तित्वस्य सुष्ठु शब्दाङ्कनं कृतमस्ति—

'भारतीयार्षपरम्पराया भास्वरप्रतीकभूतः, अथ च प्राक्तनाचार्यकुलस्याधिष्ठातारः, विनीतानां नेदिष्ठाः, वैतण्डिकानां दविष्ठाः, प्रतिभापरायणानां पटिष्ठाः, स्थिरप्रज्ञानां स्थेष्ठाः, मृदुहृदयानां म्रदिष्ठाः, श्रेयोमार्गावलम्बिनां श्रेष्ठाः, प्रियजनानां प्रेष्ठाः, विपश्चितां परिवृढाः, गुरुजनानां गरिष्ठाः, दीर्घायुषां द्राघिष्ठाः, मतिमतां सम्मताः, मेधाविनां धुर्याः, काव्यकाराणाञ्च वरिष्ठा अस्मद्गुरुचरणाः सत्यमेव युगस्याऽप्रतिमगौरवहेतवः।'

एषां व्यक्तित्वस्य पर्यालोचनानन्तरमिदमेव वक्तुं शक्यते यत् स्वच्छवृत्तयः, निरस्ततमस्ततयः, सन्तोषाम्भोनिधयः, असत्सिद्धान्ताशुशुक्षणयः, लोभार्णववडवानलाः, सिद्धान्तरत्नानां निकषोपलाः, मोहविटपिनां दावानलाः,

सत्पथानां दर्शकाः, तृष्णालताप्रालेयाः, काव्यशास्त्रविनोदरसिकाः, विविधविद्योपदेशकाः, काव्ये कविं, विद्यायां गीष्पतिं स्पर्धमाना इमे सतां प्रेयांसः स्थिरसिद्धान्तिनां स्थेयांसः, बुद्धिमतां वरीयांसः, गुरुजनेषु गरीयांसः, ज्ञानवृद्धेषु वर्षीयांसः, सदाचारेषु द्रढीयांसः, प्रकृत्या साधीयांसः, प्रवचने पटीयांसः, विद्याविदः, महर्षिकल्पाः सन्ति।

**पाण्डित्यम्**

व्याकरणे साहित्ये दर्शने च कृतभूरिपरिश्रमाणामेषां मीमांसादिशास्त्रान्तरेषु न्यायादिनयेषु च सर्वत्राऽव्याहता प्रज्ञा प्रसरति, व्यनक्ति चैषां कविता तत्तच्छास्त्रीयं गभीरं पाण्डित्यम्। वस्तुतो बहुश्रुततां विना विदग्धता नोपैति, विदग्धतां विना च कविता न प्रसरति, अत एव शास्त्रेषु भृष्टाः कवयो भवन्तीति सिद्धान्तः वस्तुतः कवीनां न केवलं सहृदयमनोरञ्जनमात्रं कृत्यमपि तु सुकुमारमतीन् विनेयान् काव्यरसास्वादेनाऽभिमुखीकृत्य शास्त्रीयस्य दुरधिगमस्य ज्ञानस्योपदेश एव परमं कृत्यम्; अत एवैषां कविता तत्तद्विषयकं पाण्डित्यमपि प्रकाशयति। तथा हि दर्शनेऽद्वैतदर्शनस्य, विशिष्टाद्वैतदर्शनस्य, द्वैतदर्शनस्य चाऽभिज्ञतां व्यनक्ति कमनीयकलाकौशलं तथा हि आत्मसाक्षात्कारे जाते सति परमचैतन्यं निर्मलज्योतिरेव शिष्यते, दृश्यं सर्वं तत्रैव लीनं भवति, 'ब्रह्म सत्यं जगन्मिथ्या' इत्यादिदार्शनिकसिद्धान्तानां निरूपणमेषां दर्शननदीनदीष्णतां प्रकाशयति—

हन्त सर्वे प्रदीपा गता निर्वृतिं
यत्क्षणे त्वं रहस्येव साक्षात्कृतः।
किं विशिष्येत शिष्येत का प्रार्थना
दृश्यमात्रस्य दृग्वर्तनान्निर्गमे।।
रूपमास्थातुमित्थन्तया न क्षमे[१]।।

एवम्— 'अम्बायाः सुतवदनचुम्बा विजयते' इत्यत्रैकस्मिन् पद्ये प्रतिलयविवर्त-संवर्तादीनां शब्दानां प्रयोगः, अम्बायाः 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रत्यभिसंविशन्तीति तद्वै जिज्ञासस्व, तद्ब्रह्मेति'[२] इत्युपनिषत्सिद्धान्तमनुसृत्य वर्णनं कवेर्दर्शनवैबुधीं ख्याति।

१. अद्वयस्योपलम्भः-९; २. तैत्तिरीयोपनिषद्-३।१।

उपादाने मूले त्वयि जगदिदं जन्म लभते
त्वयि स्थित्वा काले त्वयि विलयमेति प्रतिलयात्।
त्रिदेवप्रख्यानं यदुपलभते शक्तिशबलं
तदद्वैतं मात्रीभवति महितं तत्त्वममृतम्।।[1]

विरञ्चिर्वैराजं रचयतु विवर्तेन भुवनं
चतुर्बाहुर्बाढं वृढयतु दृढं पोषयतु तत्।
क्षणात् संवर्तेन त्रिपुरमथनः संहरतु च
त्रयः क्रोडाक्रीडे तव जननि चेक्रीड पृथुकाः।।[2]

एवं 'पतिर्जायां प्रविशति' इत्युपनिषत्सिद्धान्तस्य निरूपणं कवेर्दर्शन-बहुज्ञतां विशिनष्टि—

पतिप्राणे मातः क इव महिमानं तव नु यात्
पतिं स्वान्तःसारैः सह चिदणुनांशेन बिभृषे।
नवीकर्तुं कार्तस्वरमिव शरीरं प्रकुरुषे
परिष्कर्तुं कर्तुं जगति कृतकृत्यं विनयसे।।[3]

मीमांसाप्रतिपादितयागात् स्वर्गो भवति, स्वर्गकामो यजेतेत्यादि-सिद्धान्तस्य तथा प्राणायामप्रत्याहारप्रतिपादकयोगशास्त्रस्य चाभिज्ञताया निदर्शनार्थमेकमेव पद्यमवलोकनीयम्—

ध्यायन्ति ब्रह्म केचिन्निरवधिपरमं तत्परा मोक्षमाणाः
प्राणायामैरुपासाप्रणिहितमनसः केऽपि कैवल्यभाजः।
अन्ये यागैर्यजन्ते श्रुतिविहितहितज्ञातयः स्वर्गकामाः
पाथेयं मातरेकं मम मयि कृपणे तावकीना कृपैव।।[4]

एवमधोवर्णिते श्लोके मीमांसकसम्मतस्यानुपलब्धिप्रमाणस्य प्रतिपादनं कवेर्मीमांसावबोधशालित्वं परिशीलयति—

---

१. अम्बायाः सुतवदनचुम्बा विजयते, ११।
२. तदेव–१२।
३. तदेव–१।
४. अम्बिकां भावयामः–७।

अद्रक्ष्यतैष गगने यदि चाभविष्य-
न्नास्त्यंशुमाननुपलब्धिरिह प्रमाणम्।
शून्यं बहिर्भवति कोटर एव लोको
लोकस्त्रिलोककलनां कुरुते मुधैव।।[१]

इत्थं वाग्दैवतमिति नाम्नि रचनायाम्—

शब्दः संस्कृत एव तत्त्वपरमो गङ्गारयः शाश्वतः
सङ्गम्यामृतसागरे विहरते यो निष्कले ब्रह्मणि।
मूर्तिं मन्त्रमयीमवाप्य विमलां ज्योतिर्मयीं छान्दसीं
कैवल्यं भजते स्तुतः सुकृतिभिः संस्थाय वाग्योगवित्।।[२]

इत्यत्र जैनबौद्धदर्शनयोरपि निर्देशः।

एवं 'स्मार्तो विधिस्तु पथि शूद्रसमानचर्या'[३] इत्यत्र स्मृतिशास्त्रस्य, 'धर्मस्य किं निगमनं यदि नो शरीरम्'[४] इत्यत्राऽऽयुर्वेदसिद्धान्तस्य, 'भोक्ता भवन् भवति कर्मविकर्मकर्ता'[५] इत्यत्र गीताया निष्कामकर्मयोगस्य, 'नप्तुर्मुखं समुपवीक्ष्य कृतार्थभावादाचार्य आश्रममममंस्त वरं तृतीयम्'[६] इत्यत्र धर्मशास्त्रस्य, 'शारदा सारदाऽस्तु' इत्यत्र परापश्यन्तीमध्यमादीनां प्रतिपादनं[७] कवेस्तन्त्रार्णव-परिशीलनपाटवं सर्वतन्त्रस्वतन्त्रतां बहुमुखीं प्रतिभां बहुश्रुतताञ्च व्यनक्ति।

१. उलूकलपितम्–८।

२. वाग्दैवतम्–२।

३. स्मार्तो विधिस्तु पथि शूद्रसमानचर्या शूद्रोऽपि तत्र नहि पात्रबहिष्कृतो यः।
विप्रो विपत्परिगतोऽपि यदीह कुर्याच्चाण्डालवन्मृतपवच्च विधिं न जाने।।
(अगतिकगतिकम्–८९)

४. धर्मस्य किं निगमनं यदि नो शरीरं नान्नादृते किमपि धारयते शरीरम्।
ब्रह्म स्वयं प्रथमतोऽन्नमयं विजज्ञे शारीरजीव इह जीवति तत्प्रपूर्त्या।। (तदेव–९७)

५. भोक्ता भवन् भवति कर्मविकर्मकर्ता कर्ता न चेद् भजतु को ननु भोक्तृभावम्।
बीजाङ्कुराविव परस्परभावभाजौ भावाविमौ तनुलतां विततां विधिज्ञः।। (तदेव–९८)

६. नप्तुर्मुखं समुपवीक्ष्य कृतार्थभावादाचार्य आश्रममममंस्त वरं तृतीयम्।
श्रान्तः सुषुप्तमिव दान्त इवात्मबोधं जिज्ञासुरर्थमिव सत्प्रमितेः प्रमेयम्।। (तदेव–४९)

७. पश्यन्त्या वीणया या प्रणयति धिषणां शब्दतत्त्वैकसत्त्वा-
मर्थाभेदेऽपि भेदं प्रकटयति पदे मध्यमा नादगम्या।
हृत्तन्त्रस्पन्दपद्या विहरति वदने वैखरी व्याहरन्ती
सा सत्ता चित्स्वरूपा मम मनसि रसोल्लासकल्याऽवकल्यात्।। (शारदा सारदास्तु–३)

दार्शनिकानां मते जीवानां तिस्रोऽवस्थाः-जाग्रत्-स्वप्न-सुषुप्त्याख्या भवन्ति। तत्र जाग्रदवस्थायामिन्द्रियाणि बहिर्मुखानि भवन्ति। तानि च विषयान् धावन्ति। विविधसङ्कल्पविकल्पव्यग्रतया चेतसः चाञ्चल्यादन्तःकरणावच्छिन्नायाश्चितेः प्रत्यगात्मनोऽनुभूतिर्न जायते। स्वप्नावस्थायाञ्च बाह्येन्द्रियाणि यद्यपि सुप्तानि, तथापि मनो जागर्ति तद् विविधान् स्वाप्निकपदार्थान् निर्माया<u></u>ऽऽत्मानं भय-सुखादिषु विविधेषु भावेषु निमज्जयति। तत्रापि जीवो विश्रान्तिं न लभते; परं गाढनिद्रायां सुषुप्तौ मनोऽपि पुरीततनाड्यां विलीयते चेतसश्चाञ्चल्यान्निवृत्तिरपि जायते। तत्राऽयं जीवात्मा स्वस्वरूपे निरवधिसुखमनुभवन् विश्रान्तो भवति, किमपि मायिकं पदार्थं न वेत्ति। तत्र याऽऽनन्दानुभूतिः, सा ब्रह्मानुभूतिरेव साक्षान्मुक्तिरूपाऽस्ति। परं तत्रापि अज्ञानवृत्तिरस्त्येव; यतो हि व्युत्थानकाले सुखमहमस्वाप्सम्, न किञ्चिदवेदिषमिति स्मृतिर्भवति। अतः सुषुप्तिकालिकं सुखमपि सामिमुक्तिरेव; तस्या अपि प्राप्तिर्निद्रामाहात्म्येनैव जायते, अतो निद्रायाः प्रशंसा पुराणादिष्वपि दृश्यते। तथा हि—

विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम्।
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः।।

सा एव निद्रा आचार्यवर्यैर्निद्रानाम्नि कवितायां वर्णिता—

निद्राविस्रम्भनिष्ठा निभृतमभिमतोद्यानमाप्यायमानं
सन्धानं सामिमुक्तेरुपहितचितिनश्चेतसः सन्निधानम्।
आनन्दाधानमेकं विकृतिविरहितं निर्विकल्पं प्रधानं
निध्यानं ध्येयशून्यं निरवधिमहिमब्रह्मभूयावधानम्।।[१]

इत्थं रचनासु नामधातूनां प्रयोगोऽल्पप्रयुक्तस्य माकिः, मा किमित्याद्यव्ययस्य प्रयोगो व्यवहारे स्वल्पप्रयुक्तधातूनाञ्च प्रयोगोऽस्य पाणिनीये परिनिष्ठिततां द्योतयन्ति। केचन श्लोका दर्शनीयाः—

पयोमिषेण ते सुरां पिबन्ति मा वोचः।
सुरासमन्वितं पयः पिबन्ति मा वोचः।।
ऋतं चरन्ति येऽपि तेषु दण्ड आपात्यः।
अतश्च सत्यवादिनो जयन्ति मा वोचः।।[२]

---

१. निद्रा-१; २. मा वोचः-१,४।

सुराधान्यां भृतं क्षीरं सुरापैरत्र को दोषः।
कदाचित् कर्पटे कौशेयतन्तुर्यूयते मा किम्।।
पटस्यूतोऽयमातानो वितानैरूयते मा किम्।।
विपश्चितां सदस्यानां सदा नापश्चिमां मन्ये।
सतां पद्भिः स्पृशद्भिर्जह्नुकन्या पूयते मा किम्।।[१]

सम्मतानां सतामद्य सम्मानना
सव्यलीकोपचारैर्निकारायते।
चाटुवाचा स्तुतिर्वज्रपातायते
मल्लिकामालिका नागहारायते।।[२]

सङ्कटं चेदलर्कैस्तथाशीविषैः
कौतुकागारकं किं न कारायते।।[३]

वासनानन्ततन्तून् प्रसोष्यन् क्षणे
जीवकोशो मुहुः कोशकारायते।।[४]

सर्वभूतेषु भूतात्मबुद्धिः सतां
सत्त्वसारायते शीलसारायते।।[५]

मदीये पङ्कलिप्ते दर्पणे ते निर्मलं रूपम्।
कथङ्कारं परिज्ञेयं कथं कृत्वा च निध्येयम्।।
चतुर्दिग्दावदाहैः पादपानीक्षे समिन्धानान्।
प्रतप्तायामनन्तायां क्व गच्छेयं क्व तिष्ठेयम्।।
स्थिते विद्युत्कलापाभे त्वदीये चाकचिक्येऽस्मिन्।
निलीयन्ते समे देवा हविः कस्मै प्रयच्छेयम्।।[६]

---

१. मा किम्-९-१०;
२. नागहारायते-१।
३. तदेव-२;
४. तदेव-९।
५. तदेव-१०;
६. किमुन्नेयम्-५,६,९।

एवं कुतस्त्यः, कुतः, कः, क्वचित् केचित्, क्वचित् क्वचित्, मा वोचः, भूयः, किं कृते, कस्य कृते, कश्चित्, कदाचित्, कथं कथा कच्चित्, कर्हिचिदित्यादिनानाविधाल्पप्रयुक्तान् प्रयोगानधिकृत्यैभिर्बहवः श्लोका गजलगीतयश्च रचिताः। कानिचिदुदाहरणानि दर्शनीयानि—

सतां सम्मतेभ्यो न रोचे कदाचित्।
अलीकव्रतेभ्यो न रोचे कदाचित्।।
पुरस्कारलाभार्थमाकारितः स्याम्।
परं पण्डितेभ्यो न रोचे कदाचित्।।[१]

पुरा सापाङ्गभङ्गं स्वाङ्गमाजोगुप्यते कश्चित्।
पुनः स्मेराननं भ्रूभ्रामणैश्चोकुप्यते कश्चित्।।[२]

स्वरूपं दृष्टवन्तो दर्पणे ज्ञातुं न कल्पन्ते।
ध्वनावन्यस्ततोऽन्यादृक् प्रतिध्वाने कुतस्त्यस्त्वम्।।[३]

असत्यारण्यविभ्रान्ते निरर्थत्वं गते सार्थे।
ग्रहं सत्यापयन् सत्यानुसन्धाने कुतस्त्यस्त्वम्।।[४]

परिक्रीतैः श्रमैर्धन्या समृध्यन्ति क्वचित् केचित्।
विना तत्त्वावबोधेनापि सिध्यन्ति क्वचित् केचित्।।[५]

रजोलिप्तान् ब्रुवन्त्यस्मान् स्वयं पङ्कावलिप्ता ये।
नदीष्णाः कर्मनाशायां विशुध्यन्ति क्वचित् केचित्।।[६]

उच्चैः पदं श्रयन्ति न जानन्ति ते दयाम्।
दाहोदयादयांसि गलन्ति क्वचित् क्वचित्।।[७]

यद्यप्युपाश्रयन्ति दशास्यस्य दासताम्।
आयस्य रामनाम जपन्ति क्वचित् क्वचित्।।[८]

---

१. कदाचित्–१-२;
२. कश्चित्–१।
३-४. कुतस्त्यस्त्वम्–६-७;
५-६. क्वचित् केचित्–१,४।
७. क्वचित् क्वचित्–५;
८. तदेव–६।

भूमी न बन्धुरास्ति न वा पिच्छिला शिला:।
बालाश्चतुष्पथेऽपि पतन्ति क्वचित् क्वचित्।।[१]

क्रय्याणि यौवनानि कुलीनानि साम्प्रतम्।
वाराङ्गना: समीक्ष्य शपन्ति क्वचित् क्वचित्।।[२]

यद्यपि यङन्त-यङ्लुगन्तादीनां प्रयोग: श्रुतिकटुदोषदुष्टतया काव्ये निषिद्ध:, तथापि कविरयमतीव सरसं मधुरं तथा प्रयुङ्क्ते यथा दोषकदर्थना व्यर्थतामुपैति। यथा एतद्दृशा यातनानाम्नी रचना अवलोकनीया—

यातना यातनामेव सोषूयते।
चेतना चेतनामेव दोदूयते।।

जागरं जासयेत् स्वप्नमाभासयेत्।
सा परा देवता केव तोष्टूयते।।

पावनी भावनेयं पुरोभागिन:।
दिव्यभावेन किं तर्हि नोनूयते।।

पल्लवालिङ्गितं लूनपत्रं यथा।
नापि योयूयते नो वियोयूयते।।[३]

एवं 'मनोराज्यम्, निह्नूयते' आदिशीर्षकेण रचिता अपि रचना: समवेक्षणीया: सन्ति। तद्यथा—

प्रेम यत्र प्रगीतानि जेगीयते यत्र सौख्यानि सर्वोऽपि जेगीयते।
तत्र सौदामनीदामसन्दानिता मे मति: स्रस्तवृत्तेव बेभीयते।।
(मनोराज्यम्–५)

इत्थं कोऽयम्, त एव ते, भूय:, यथा तथा, यदा कदा— इत्यादिशीर्षकै रचितासु रचनास्वपि कवेरद्भुतशब्दविन्याससौष्ठवं निश्चितरूपेण प्रतिभाति। यथा—

येषां न वेषशक्तिरुदारा न पेषणी।
पिष्टस्य पेषणाय यतन्ते त एव ते।। (त एव ते, ६)

---

१. क्वचित् क्वचित्–१६; २. तदेव–(२)१०।
३. यातना–१,३,४,७।

पथा प्रदर्शितेन येन केन येन केनचित्।
पदानि पश्यता पदं विचीयते यथा तथा। (यथा तथा-९)

एवमन्यान्यप्युदाहरणानि समवेक्षणीयानि सन्ति।

**प्रतानिनी**

आचार्यवर्याणां कारयित्रीप्रतिभाया विशिष्टा परिचायिकाऽस्त्येषां यशः-प्रतानस्य प्रतानिनी 'प्रतानिनी' १९९६ तमे खिस्ताब्दे इलाहाबादस्थाद् वैजयन्तप्रकाशनतोऽभिराज-डॉ.राजेन्द्रमिश्रमहाभागानां सम्पादने प्रकाशिता प्रतानिन्याचार्याणामवस्थीनां वैदुष्यं सरसकविहृदयत्वं काव्यकलानैपुण्यञ्च निश्चितरूपेण प्रतनोति। अत्रोपनिबद्धा एषां ललिता कविता पदविन्यासमात्रेण श्रोतृणां मनांस्याकर्षयति मज्जयति तानानन्दसुधासमुद्रेऽर्थसुधापानेन।

पञ्चप्रतानात्मिकेयं प्रतानिनी— १. स्तबकप्रतानः, २. अन्योक्तिप्रतानः, ३. गजलगीतिप्रतानः, ४. विरागप्रतानः, ५. प्रकीर्णप्रतानश्चेति। पञ्चप्रतानैरेकोन-त्रिंशदुत्तरशतमितैः शीर्षकैर्मण्डितेयं 'प्रतानिनी' मुक्तककाव्यरूपा भारत्या मौक्तिकमणिरिव विद्योततेतराम्। शोधपत्रेऽस्मिन् आचार्याणामवस्थीनां जीवनव्यक्तित्वकृतित्वादीनाञ्च तथा तेषां यशःप्रतानिन्याः प्रतानिन्या विश्लेषणं कृतमस्ति।

***१. स्तबकप्रतानः***

स्तबकप्रतानः प्रतानिन्याः प्रथमः प्रतानो वर्तते। तत्र चतुर्दशशीर्षकै रचितानि भक्तिभावमयानि काव्यानि सहृदयानां हृदयमाकर्षन्ति। तत्राऽवाङ्मनसगोचरस्य सर्वरूपस्याऽरूपस्य, सर्वोपाधिविनिर्मुक्तस्य सोपाधिकस्य ब्रह्मणः स्वरूपं कथङ्कारं कोऽपि निर्धारयितुं क्षमत इति भावनां कविः 'रूपमास्थातु-मित्थं तया न क्षमे' इत्यनेन रूपेण व्यनक्ति—

त्वं विभुस्त्वं प्रभुस्त्वं प्रतीतः परः
किन्तु केयं पराग्भावना वञ्चना।
यत्र भूमा त्वदीयो न निर्विश्यते
जागतेस्वेव कामेषु बाढं रमे।।
रूपमास्थातुमित्थन्तया न क्षमे।।[1]

---

१. अद्वयस्योपलम्भः-५-९।

भगवतः साक्षात्कारे जाते सति तद्दिव्यज्योतिषि सर्वाण्यपि ज्योतींषि तिरोभवन्ति, भवन्ति च सर्वाण्यपि दृश्यानि दृष्टिपथात् तिरोहितानि। अस्यां स्थितौ न किमपि प्रार्थनीयमवशिष्यत इति ब्रह्मणः साक्षात्कारस्थितेः प्रकाशनं कियता सौन्दर्येण कृतं कविना—

हन्त सर्वे प्रदीपा गता निर्वृतिं
यत्क्षणे त्वं रहस्येव साक्षात्कृतः।
किं विशिष्येत शिष्येत का प्रार्थना
दृश्यमात्रस्य दृग्वर्तनान्निर्गमे।।[1]
रूपमास्थातुमित्थन्तया न क्षमे।।

'भूयात् स एकः क्षणः' इति समाख्यायां कवितायां भक्तिभावनासमुल्लसितं परिनिष्ठितं चिन्तनं लक्ष्यते यत्राराध्यचिन्तनमेव सुकृतदुष्कृतयोर्निस्तारणम्, श्रोतव्यस्य श्रवणम्, द्रष्टव्यस्य दर्शनम्, प्राप्तव्यस्य प्राप्तिः, चेतसः समाधानञ्चास्ति—

निह्नोतुं सुकृतं मुनिव्रतमते होतुं शिवे दुष्कृतं
श्रोतुं सच्चरितानि शीलमहतां स्तोतुं परं सर्वगम्।
सन्धातुं करणानि चेतसि समाधातुं च चेतश्चलं
कृष्णेत्यक्षरयुग्मकं वचसि मे नित्यं समासीदतु।।[2]

स्वाभीष्टस्य विविधानि रूपाण्याराधकं प्रीणयन्ति। तथा हि वात्सल्यरसाप्लावितो भक्तिभावाह्लादितः कविरकलितविभूतिसमुद्भवं कमपि विलक्षणं क्षणं कामयमानः करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तं स्वेष्टं श्रीकृष्णं चिन्तयन् कवते—

श्रीकृष्णः शयने शिशुः किलकिलारावेण यस्मिन् क्षणे
पाणौ पादमवाप्तवानधरयोर्धातुं समुद्यच्छति।
स्मायं स्मायमलं परिक्षिपति वा पारिप्लवे लोचने
कालातीतविभूतिसूतिशरणं भूयात् स एकः क्षणः।।[3]

---

१. अद्वयस्योपलम्भः-९; २. भूयात् स एकः क्षणः-१।
३. तदेव-२।

'गोपीविटः पातु नः' इति शीर्षके बहुविधगुणगणसञ्चिता भगवतो लोकोत्तरालीला लोककल्याणाय कल्पत इति भावं विलक्षणया विच्छित्या प्रस्तुवन् कविः— दण्डनीयं दण्डयितुं कलां विधातुं मनोहराया लीलाया लोकेषु गानं कारयितुं कालिन्दीह्रदं निर्विषं विधातुं कालियमूर्धसु नृत्यन् व्रजपतिः सतां कल्याणं कुरुतादित्याशास्ते—

दण्ड्यं दण्डयितुं कलां कलयितुं लोकेषु लेलायितां
लीलां गापयितुं च कल्यकलनां श्रीलां कलौ पावनीम्।
नेतुं निर्विषतां सुपानसलिलं कालिन्दिकाया ह्रदं
नृत्यन् कालियमूर्धसु व्रजपतिर्भूयात् सतां भूतये।।[१]

'अम्बायाः सुतवदनचुम्बा विजयते' इत्येषामपरा भक्तिभावमयी सरसा रचनाऽस्ति, यत्र भगवत्या जगज्जनन्या विशदं गुणगानं माहात्म्यवर्णनञ्च कृतमस्ति। सर्वेशायाः सर्वस्वरूपतया वर्णनं कुर्वन् कविः कवते, जननाज्जायमाने जन्तौ एवविधं किमपि नास्ति यत् त्वं नासि। रक्तरसास्थिमांसमज्जामेदसां सङ्घाते चिद्विशिष्टे शरीरे यत् किमपि तत् सर्वं त्वमेवाऽसि—

रसस्त्वं त्वं रक्तं पिशितमथ मेदोऽस्थि च शिरा
धमन्यो मज्जा त्वं बलमपि मनश्चेन्द्रियगणः।
अमीषां सङ्घातश्चिदवकलितः षोडशकलो
न तत् किञ्चिज्जन्तौ जननि घटते यन्न भवसि।।[२]

उज्जयिनीशं महाकालं प्रार्थयन् उज्जयिनीवासिनोऽवस्थिनः प्रपत्तिरूपमात्मनिवेदनं कुर्वन्तः स्तुवन्ति—

क्लेशाः सन्ति परं न सन्ति नियते चित्ते यदा राजसे
सन्नप्येष निकाय एति विलयं व्याप्तौ परब्रह्मणः।
संसारार्णवमुत्तरीतुमलति त्वत्पादपोतं श्रितो
रथ्येयं प्रथिता पृथग्जनपथात् पथ्या पृथग् दूरतः।।[३]

इत्थं काव्यकाननमिदं विदग्धजनमनोहारि वर्तते, खलानां खेलायै नात्रावकाशो लक्ष्यते।

---

१. गोपीविटः पातु वः-३; २. अम्बायाः सुतवदनचुम्बा विजयते-९।
३. महाकालः प्रसीदतु-९।

**२. अन्योक्तिप्रतानः**

प्राचीनकालादेषाऽन्योक्तिः काव्यस्याऽतीवरमणीया परिष्कृता च विधाऽस्ति। अस्यां नानाविधान् पदार्थान् प्राणिनो वस्तूनि चाभिलक्ष्य विविधानां भाषाणामभिव्यञ्जनं भवति। प्रतानिन्या अन्योक्तिप्रताने सहृदयहृदयाभिरामा अन्योक्तय उपनिबद्धाः सन्ति, अत्युत्कृष्टा रचना, विशिष्टा विच्छित्तिरभिनवा दृष्टिः सर्वत्र परिलक्ष्यते। अप्रस्तुतविधानार्थं सञ्चिताः प्रतीकाः प्राचीनप्रतीकापेक्षयाऽभिनवाः सन्ति, तेभ्योऽभिव्यक्ता भावाः सचेतसामुद्बोधकाः कृत्याकृत्यनिर्णायकाश्च सन्ति। तत्रान्योक्तिपञ्चके लालाटिकानां द्विजिह्वानां चाटुकाराणां स्वार्थसाधनलालसानां वृत्तिर्ग्रामेचराणां शुनां समाना भवतीति चित्रितम्।

पुच्छोत्तोलनमुद्धतं परिसरे तूर्णं बलिष्ठेक्षणाद्
भीत्या भित्तिमुपेत्य कण्ठकलहो व्यावृत्तदन्तच्छदम्।
नक्तं तस्करसख्यमेव दिवसे सभ्ये जने बुक्कनं
गुण्या वृत्तिरियं निसर्गनिपुणा ग्रामेचराणां शुनाम्।।[१]

'निरस्तपादपे देशे एरण्डोऽपि द्रुमायते' इत्युक्तिं गतार्थयन्तो गते सति विद्वज्जने, सज्जने साम्प्रतं प्राप्ताधिकारा लघिष्ठा अपि विद्वन्मन्या उत्फुल्लगल्लाः सर्वत्र स्वाधिपत्यमालपन्ते, भावोऽयं समीचीनया पद्धत्या व्यञ्जितः पद्येऽस्मिन्—

विच्छायो हिमपातशातितदलस्तीरे तरूणां गणः
सौरभ्येण समं बत व्यपगतः सारः सरोजन्मनाम्।
अद्याच्छाद्य जलाशयश्रियमियं दुर्दान्तसन्तानिनी-
फुल्लद्गल्लदलद्दरित्रकुसुमा व्याजृम्भते कुम्भिका।।[२]

उलूकलपिते 'न तत्र सूर्यो भाति न चन्द्रतारकमि'त्युपनिषत्सिद्धान्तं भाट्टानां प्राभाकराणाञ्च— 'ज्ञानानां स्वतः प्रामाण्यं परतो वे'ति शास्त्रार्थं कवमानैरेभिः संलपितं यत् स्वमनोराज्यकल्पनायां विलीनाः स्वानेव प्रमाणयन्तः, तत्त्वावबोधक-वाक्यान्यप्यन्यथा भावयन्तो निरर्थकचिन्तायामात्मानं कदर्थयन्तो मूढा मृत्युमुखमुपयान्ति—

---

१. अन्योक्तिपञ्चकम्-४; २. तदेव-२।

अन्धं तमो यदवयन्ति स सन् प्रकाशो
यच्च प्रकाश इति सन्तमसं तदेव।
जागर्ति यत्र जगती स तमिस्रलोको
जागर्मि यत्र नियतः स परः प्रकाशः।।[१]

स्वाभिमुखमन्यानगणयन्तो बलोन्मत्ताः कदाचिदतिमात्रबलेष्वपि चपलतां विदधति तदान्धकोऽन्धकारातिमिवाक्रमन् आशु विनश्यतीति, एकदन्तवृत्ते साधु चित्रितमवलोक्यते। पारतन्त्र्यकाले परतन्त्रतानिगडबन्धनत्रोटनाय स्वातन्त्र्यावाप्तये च भारतीयैर्यूनां बलवतां बुद्धिमताञ्च सङ्घनिर्माणस्य सत्याग्रहान्दोलनस्योपदेशस्य तत्प्रभावस्य चातिमनोरमं चित्रणं परिलक्ष्यते मुक्ताश्वके।

स्वाधीनानां निरस्तसमस्ततमस्ततीनां जीवन्मुक्तानां निस्त्रैगुण्ये पथि विचरतां स्थितिरपि 'बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः' इति भागवते प्रोक्तं दार्शनिकसिद्धान्तमनुसृत्य वनगवीव्याजेन साधु सिद्धान्तिता—

बन्धो मोक्ष इति प्रवादलपितं बन्धः क्व मोक्षः कुतो
निर्बन्धा ह्यकुतोभया वनगवीवृन्देन चञ्चूर्यते।
आपीनैकधना स्वपुच्छचमरा शृङ्गायुधा सर्वदा
सस्यं भक्ष्यमिति व्रतं प्रतनुते रक्षन्तु ये रक्षिणः।।[२]

को दोहः क्व च दोहकः क्व ममता गेहस्य कः पालको
राज्यं कस्य च कस्य वा जनपदः सर्वस्य सर्वंसहा।
इत्येवं कृतनिश्चया वनगवी गोचारकान् धुन्वती
स्वेच्छाचारपरायणा स्वकटकेनाटाट्यते खर्वटे।।[३]

शुकवृत्तेऽपि दार्शनिकचिन्तनं सरलतयोपन्यस्तमिति विम्रष्टुं शक्यते। नियतिनियन्त्रितेऽस्मिन् संसारे कर्मपरवशः संसरन् संसारी स्वमजानन् मायाजालबद्धो दुःखमनुभवन् कदाऽपि शर्म न लभते। कदाचिदीशकृपया सद्गुरोरुपदेशात् 'तत्त्वमसि' इत्यादि महावाक्यार्थबोधात्. सहसैव दुःखजालं

---

१. उलूकलपितम्–६; २. वनगवी–२।
३. तदेव–५।

जर्जरीकृत्याऽहन्तां ममताञ्च विधूय परमसुखमनुभवन्नपरिमितभावेन स्वच्छन्दं विजहरीतीति।

'श्येन उवाच' इत्यस्यां रचनायां श्येनस्य परिदेवनमस्ति यद् मां जना हिंस्रवृत्तिरिति क्षिपन्ति; परं स्ववृत्तिमाच्छाद्य ये वञ्चका लुण्ठका दस्यवो वञ्चनां विधाय विपणिप्रधानान् निरीहान् वञ्चयन्ति लुण्ठन्ति, तेषां धनानि गृह्णन्ति, हिंस्रया धनसञ्चयं कुर्वन्ति, ते कुकृत्यं कुर्वाणा अपि जनैः साधुशीला कथ्यन्ते, तर्हि 'यावद् भ्रियेत जठरं तावत् सत्त्वं हि देहिनामि'ति सिद्धान्तं मन्वाना वयं कथं निन्द्याः ?—

श्येनोऽहमस्मि बहुचर्चितहिंस्रवृत्तिः
किं हिंसनं कतिविधं च न जातु जाने।
जाने परं यदुदरम्भरयो मनुष्या
गूढं चरन्ति तदिह प्रकटं चरामि।।
वित्तार्जनाय निपुणा विपणिप्रधाना
हिंसन्ति लुब्धमनुजा मनुजान् निरीहान्।
यावद् भ्रियेत जठरं मम तावदेषा
हिंसैव चेत् कथमसूयति सूरिवर्गः।।[१]

### ३. गजलगीतिप्रतानः

प्रायो विपश्चितो गजलशब्दस्य 'गलज्जलिका' इत्यनुवदन्ते; परमुन्मत्तो गजः = सहृदयानां मनः; तं लाति = आदत्ते = वशीकरोतीति 'गजल' इत्यन्वाख्यानेऽपि न काऽपि विप्रतिपत्तिर्लक्ष्यते। इत्थं सहृदयानां मनःकर्षिका 'गजल' इति शब्देन वक्तुं शक्यते। प्रायो गजलगीतिः प्रणयनिवेदनाय, सरसहृदयचित्रणाय, प्रणयिन्याश्चित्ताकर्षणाय, मनोराज्यकल्पनायै, स्वचित्ताव-सादनिरूपणाय, लोकरीतेर्लेखनाय, सामाजिकस्थितिचित्रणाय, प्रौढ्या स्वाभि-प्रकाशप्रकाशनाय चाव्याहतप्रसरा भवति। उर्दू-फारसीभाषोपवने विहरणशीला इमे संस्कृतभाषायामपि गजलानां निर्माणे विच्छित्तिं सृजन्ति। प्रतानिन्यास्तृतीयः प्रतानो गजलगीतिरूपेणोपन्यस्तोऽतीव मधुरः, सरसः, सहृदयहृदये कामिनीकटाक्ष इवाऽऽनन्दोल्लासस्य वाहकोऽस्ति। प्रतानोऽयमेषां विपुलं

---

१. श्येन उवाच–१, ३।

यशोवितानं तनुते। प्रतानेऽस्मिन् षट्षष्टिशीर्षकैर्विविधा भावाभिव्यञ्जिका गजलगीतय: सङ्गृहीता: सन्ति। कानिचिद् निदर्शनानि समीक्षणीयानि सन्ति—

'इतस्तानस्ततो वानम्' कवेरेतादृशी रचनाऽस्ति; यत्र नानाविधानां तेषां भावानां चित्रणं वर्तते, यत्र काऽपि समा शृङ्खला किमपि तारतम्यं न प्रतिभाति। यथा यत्र व्रणस्तत्रैव लेपनं चिकित्सायै कल्पतेऽन्यथा मोघतामेति, अपि च यादृशो व्याधिस्तादृशमौषधं नैरुज्याय; नान्यथा, उचितस्थाने उचितस्य विनियोग एव फलाय कल्पते, इत्यादिभावानां चित्रणं समीचीनं वर्त्तते—

मनुष्यस्यान्तरो व्याधिर्बहिर्भैषज्यविज्ञानम्।
पट: किं तन्तुभि: सिध्येदितस्तानस्ततो वानम्।।
प्रतिष्ठां प्रापिता देवालयेऽस्मिन् खण्डिता व्यक्ति:।
इमे तस्या: समर्चाभि: समीहन्ते फलाधानम्।।[1]

एवं सभायां सन्न्यास:, आपणे ब्रह्मविद्योपदेश:, पिच्छिलायां भूमौ निपानम्, जागरणे स्वप्नदर्शनं व्यर्थमेव भवति—

समज्यायां परिव्रज्या निषद्यायां परा विद्या।
निपात्यायां निपानं जागरायां स्वप्ननिध्यानम्।।[2]

फारसीपद्धत्या रदीफकाफियाविधिना गीतिनिर्माणे विचक्षणानामेषामलं कौशलं फलति। तन्निदर्शनम् 'उद्भ्रमे' विलोक्यते यत्राऽसङ्गते: साम्राज्यं कियद् व्यापीति चित्रितम्—

सर्वतो व्याप्य कुहेलाद्य तथेयं प्रथते।
उद्गतस्यापि दिनेशस्य महो नोदयते।।[3]

गृहद्वारि स्थित: घूत्कोऽपि किं, कुत:, कुत्र, कथं करणीयमित्येव प्रश्नयते—

एष घूत्कस्तु गृहद्वारि निमीलावहित:।
किं कुत: कुत्र कथं कार्यमिति प्रश्नयते।।[4]

---

१. इतस्तानस्ततो वानम्–१,५; २. तदेव–७।
३-४. उद्भ्रम: ९,१०।

अस्माकं शास्त्रेषु वर्णिता ये आदर्शभूता आचारास्ते तत्रैव तिष्ठन्तु; परमिदानीं दुराचारा भ्रष्टाचारा हिंसादय मुखं व्यादायाऽभिमुखमाक्रमन्ते, इति भावोऽभिव्यक्तो मनोहारितयाऽत्र—

कालिका भित्तितटोत्कीर्णवपुः किं कुरुताम्।
रक्तबीजस्तु सबीजोऽयमथो आह्वयते।।[१]

'क एते' इत्यत्र छलनापराणां तुलादण्डवद् निम्नोन्नतस्थिते रक्तबीजवत् छलनापरारुचेः, कल्पद्रुमाणां प्रसूनानि विहाय शल्यतल्पं वरीतुं प्रवृत्तीनां चित्रण-मस्ति यत् कवेरनुभवजन्यं तैक्ष्ण्यं सुतरां प्रदर्शयति—

नमन्तः सहैवोन्नमन्तः क एते।
तुलादण्डचारं चरन्तः क एते।।
विहाय प्रसूनानि कल्पद्रुमाणाम्।
मुदा शल्यतल्पं वृणन्तः क एते।
स्वयं न्यायपीठे प्रभुत्वं गृहीत्वा।
परस्वे स्वतां निर्णयन्तः क एते।।
परेषां कृते वारुणीं वर्जयन्तः।
सुराभाजनं शोषयन्तः क एते।।[२]

'को नाम जानीते' एषामपरा ललिता भावाभिव्यञ्जिका रचनाऽस्ति, यत्र जीवनस्य ते ते भावा अङ्किता यत्र गता बुद्धिरपि मूकायते। यथार्थतां परित्यज्य आडम्बरे रतानां, तथ्यहीनानाम्, अथ प्रक्षालनायोद्यतानामप्यघार्थं भगीरथप्रयत्न-शालिनाम् इतस्ततो व्यस्तानां व्यर्थोपाये प्रवृत्तानामुपेयभ्रष्टानां चित्रणमत्र सुचारुरूपेण कृतम्—

रथी मत्तः प्रमत्तः सारथिर्दूरं द्रुताः सैन्याः।
सपत्नैर्विस्वगाक्रान्तं रथं को नाम जानीते।।
घनच्छन्नं नभो गाढा तमिस्रा पिच्छिला भूमिः।
अलक्ष्यं तत्र धावन् कापथं को नाम जानीते।।

---

१. उद्भ्रमः-८; २. क एते-१,५,९,१०।

अघं प्रक्षालयन्ति स्नानपूजापाननिध्यानैः।
प्रयासं तत्कृते भागीरथं को नाम जानीते।।[१]

क्वचित् क्वचिदिति नाम्नी कविता जीवनस्य क्वाचित्कीनां घटनानां सरसं चित्रणं करोति—

उच्चैः पदं श्रयन्ति न जानन्ति ते दयाम्।
दाहोदयादयांसि गलन्ति क्वचित् क्वचित्।।

यद्यप्युपाश्रयन्ति दशास्यस्य दासताम्।
आयस्य रामनाम जपन्ति क्वचित् क्वचित्।।

भूमिर्न बन्धुरास्ति न वा पिच्छिला शिला।
बालाश्चतुष्पथेऽपि पतन्ति क्वचित् क्वचित्।।[२]

'किं ब्रूयाम्' इति शीर्षकेण रचितायां रचनायां तादृशीनां स्थितीनां वर्णनं यद्वशाद् मुखात् झटिति निस्सरति— किं ब्रूयामिति। कानिचिद् निदर्शनानि द्रष्टव्यानि—

सभायां पक्षविशेषस्य ग्रहणं भारते भागवते च निषिद्धं वर्तते। यतो हि 'अब्रुवन् विब्रुवन् वाऽपि नरः किल्विषमश्नुते' इति भागवतवचनात् सिद्धान्तविरुद्धं वदन् अनर्गलं श्रुत्वा मौनं वा समाचरन् जनः पापभाग्भवति। एतादृश्यां स्थित्यां यदि वाग्मिनोऽपि एवं कुर्युस्तदा किं ब्रूयामिति साधूट्टङ्कितं वर्तते—

सभायां वाग्मिनो वाचंयमाश्चेत् सन्ति किं ब्रूयाम्।
विवादे फल्गुवादाश्चेद् बलाद् वल्गन्ति किं ब्रूयाम्।।[३]

यद्यपि शास्त्रेषूक्तं वर्तते—

अवश्यंभाविभावानां प्रतीकारो भवेद् यदि।
तदा दुःखैर्न युज्येरन् नलरामयुधिष्ठिराः।।[४]

इति, तथाऽप्युपस्थितस्य गतिश्चिन्तनीयैव, अकर्मण्यता न श्रेयस्करीति प्रतिकारो विधेयः, तथाऽपि यदि जना न कुर्वीरन् तदा किं ब्रूयाम्—

---

१. को नाम जानीते-३,४,७;
२. क्वचित् क्वचित्-५,६,१६।
३. किं ब्रूयाम्-१;
४. तदेव-२।

अवश्यंभाविभावानां प्रतीकारा न विद्येरन्।
प्रतीकारस्तु कर्तव्यो न चेत् कुर्वन्ति किं ब्रूयाम्।।[१]

इत्थं यस्याङ्के शिर आधाय निश्चिन्तः सन् जनो गाढं स्वपिति, स एव यदि शिरश्छिन्द्यात् तदाऽयं लोकः कं शरणं यायादिति भागवतोक्तिः साधु वर्णिता—

यमेवास्थाय सद्यः प्रस्थितः सङ्गृह्य सर्वस्वम्।
हितव्याजः स चेन्मां निर्जने जङ्घन्ति किं ब्रूयाम्।।[२]

विविधानां विपरीतकार्याणां वर्णनं तद्धेतुविषये मौनावलम्बनं 'कस्य लीलेयम्'त्यत्र दरीदृश्यते। साम्प्रतं मूर्खाणां, क्षुद्राणां, स्वल्पप्रभाप्रभासितानां, परधनपरदाररतानां, नीतिरीतिविहीनानां प्राबल्यं दृश्यते, ज्ञानप्रभाप्रभासितानां, सद्धर्मिणां, गुणिनां, सन्नीतिविदां चाभावो दृष्टिपथमायाति। एतच्चित्रणं समवलोकनीयम्—

खरास्तारं विरेमन्ते न जाने कस्य लीलेयम्।
हया आकर्ण्य लज्जन्ते न जाने कस्य लीलेयम्।।

अहन्यस्मिन्नुदितास्तारका बाढं विलोक्यन्ते।
प्रभा भानोर्न भासन्ते न जाने कस्य लीलेयम्।।

सखे दूरं जयाशा रामचन्द्रस्याद्य सेनायाम्।
उलूका मण्डलायन्ते न जाने कस्य लीलेयम्।।

कुतो ज्ञानावकाशः कुत्र वा ज्ञानस्य संलापः।
यदज्ञानानि जृम्भन्ते न जाने कस्य लीलेयम्।।[३]

क्वचिन्नतानां नीतिः, क्वचिद् दुर्विनीतानां दुर्नीतिः, उभेऽपि समानरूपेण लोकतन्त्रे सुसज्जेऽवलोक्यते। नेतारोऽभिनेतारः संवृत्ताः, किमधिकं नेत्रभिनेतृभावयोः व्यतिहारो दृश्यते—

नतानां नीतयो दुर्नीतयोऽमूर्दुर्विनीतानाम्।
समाहारेण सज्जन्ते न जाने कस्य लीलेयम्।।

अयं नेताभिनेतासौ विनेयोऽयं विनेतैषः।
व्यतीहारेण वर्धन्ते न जाने कस्य लीलेयम्।।[४]

---

१. किं ब्रूयाम्–३; २. तदेव–४।
३. कस्य लीलेयम्–१,२,९,१३; ३. तदेव–५,७।

'कल्पन्ते' इत्यत्र कवेः कल्पनापथमागता नानाविधकार्यकल्पकाः कवितायामवतरन्ति। अत्र गेहेशूराणां, गेहेनर्दिनां धर्मध्वजानां, वृत्त्यर्थं मुष्टीमुष्टि कुर्वतां नेतृणां चित्रणमस्ति, यस्य मूलस्वरोऽस्ति— स्वभावो दुरतिक्रमः। इयमेव भावना 'कल्पेरन्, कश्चित्, कस्य कृते' इत्यादिष्वपि चित्रिता वर्तते—

कदर्याः सर्व एव स्वे गृहे शौर्याय कल्पन्ते।
क्वचिद् धर्मध्वजा देवालये धर्माय कल्पन्ते।।
खलानां तीर्थिनां सङ्गात् स्वभावा न प्रहीयन्ते।
न काका मानसे वासान्मरालत्वाय कल्पन्ते।।
इदानीं लोकसभ्याः सभ्यतां लत्ताहतां कृत्वा।
सभासन्दीषु मुष्टीमुष्टि सङ्ग्रामाय कल्पन्ते।।
जराजीर्णः कुटुम्बी लुण्ठितः स्याद् यस्तु सर्वस्वम्।
तटस्थाः सान्त्वना वाचो न तद्धैर्याय कल्पन्ते।।[1]

ईर्ष्याकरीषाग्निदह्यमानहृदयेभ्यः स्पर्धासमेधिताऽमर्षेभ्यो यः शल्य-वेधोऽनुभूतः कविना; सोऽनुभवः 'कदाचित्'-नाम्नि कवितायां प्रस्तुतः—

सतां सम्मतेभ्यो न रोचे कदाचित्।
अलीकव्रतेभ्यो न रोचे कदाचित्।।
पुरस्कारलाभार्थमाकारितः स्याम्।
परं पण्डितेभ्यो न रोचे कदाचित्।।
गुणग्राहकाः के न वा के न जाने।
अनुग्राहकेभ्यो न रोचे कदाचित्।।[2]

एवं 'बन्धो' इति नाम्नि रचनायां संसारस्य विरुद्धो व्यवहारो वर्णितो यथाऽत्र अमृतोपमा पदार्था दुष्टैर्विषाक्ताः क्रियन्ते, परपीडनायाऽऽसनेषु कण्टकानि निक्षिप्यन्ते, परध्वंसनाय कूटनीतिः प्रयुज्यते, इत्थं जनानामुत्सादनायैव प्रवर्तितो दुष्टानां व्यवहारोऽत्र मूलस्वरो वर्तते—

---

१. कल्पन्ते-१,२,३,५; २. कदाचित्-१,२,६।

भुजङ्गेनेह मृद्वीका विषैर्व्याधार्यते बन्धो।
सशल्यो विष्टरः प्राग्वंशके प्रस्तार्यते बन्धो।।

हिमानीवाम्बुजे कक्षे कृशानुज्वालमालेव।
विधौ भूमेव लोके कूटनीतिः सार्यते बन्धो।।

मुदा हार्देन यज्ज्ञानेन सङ्कल्पांशुकं स्यूतम्।
अविश्वासेन केनापि क्षणात् तद् दार्यते बन्धो।।[१]

'यदा कदा'-शीर्षके रुचिरतया विविधानामयुक्तघटनानां सम्भावना व्यक्ती-कृताऽस्ति—

किं चित्रमर्पयन्ति विद्यात्तान् यदि द्विषः।
मित्राण्यरुन्तुदानि तुदन्ते यदा कदा।।

काकाः कदर्थयन्ति कलालापमित्यतः।
मौनं पिका भजन्ति वसन्ते यदा कदा।।

लोकाश्च लोकतन्त्रे नृपालाश्च सर्वथा।
मार्जारमूषिकत्वमयन्ते यदा कदा।।[२]

गजलगीतिप्रताने सङ्गृहीताः काचन गीतयः कवेः शृङ्गारभावभावितां मनोभावनां सरसहृदयताञ्च सुतरामभिव्यञ्जयन्ति। अनया दृशा मुग्धा मानिनी, क्व यातास्ते, परम्परां सूते, अनुनयः, कथं कथा, मनः कुतो विलीयत इत्याद्या रचनाः समवलोकनीयाः सन्ति। तत्र 'मुग्धा मानिनी' सर्वप्रथमं समवेक्षणीया। अत्र मुग्धानायिकायाः सुचारु स्वाभाविकञ्च चित्रणं कृतमस्ति, या प्रियतमं स्वैराचारतो निषेधयन्ती यदा न न इति द्विरुक्तिं करोति, तदा प्रियतमः स्वीकृतिं मन्यते। यथा प्रथमनकारस्य निषेधोऽर्थः, द्वितीयस्य निषेधस्य निषेधः, अर्थात् स्वीकार इति। तया प्रदत्तः कटाक्षप्रहारः, कोपोपहारः, पादप्रहारः, मौनावधार इति सर्वे उपहारा रमणीयाः प्रतिभान्ति—

द्विरुक्तः सम्भ्रमं तन्वीत नम्रास्ये नकारस्ते।
जनं स्वीकारपक्षे पातयत्येष प्रकारस्ते।।

---

१. बन्धो-१,३,१३; २. यदा कदा-३,५,८।

स्मितानां रश्मिभिर्बद्धे मुधां मुग्धे कटाक्षाणाम्।
भ्रुवोर्भङ्गेन साचीभूतनेत्राभ्यां प्रहारस्ते।।
तनुः सिन्दूररेखा केशपाशे रक्तिमापाङ्गे।
ललाटे कुङ्कुमाङ्कः कोपने कोपोपहारस्ते।।
प्रणीपातावधिं भावं निराहुः प्राक्तना: सत्यम्।
पटे सर्वाङ्गलीनाया कुतः पादोपचारस्ते।।[1]

'मनः कुतो विलीयते' इत्यत्र निर्गुणिनां दृशा प्रकीर्णा भावच्छटा दृश्यते, यत्र स्वाभीष्टस्य चित्रणं प्रियतमारूपेण कृतमस्ति—

विलोकयामि चक्षुषा मनः कुतो विलीयते।
तवोदये रविप्रभा निशीथिनीव शीयते।।
किमेतदैन्द्रजालिक त्वया विचित्रमर्पितम्।
न हातुमेव शक्यते न वा ग्रहीतुमीयते।।
यथा यथाभिभावनाय यत्यते तथा तथा।
तव प्रभासुरा छविः पुरः पुरः प्रतीयते।।[2]

'परम्परां सूते' इत्यत्र विप्रयोगस्य मनोहारिचित्रणं वर्तते। प्रेमपदार्थं निरूपयन्तः कवयः प्रेम्णो विविधान् भावान् व्यञ्जयन्ति। तत्स्वरूपं चित्रयन्तः पृच्छन्ति, यस्य स्मरणं मर्म निकृन्तति, कण्टकमालां सृजति, दुर्भरया शृङ्खलया चेतो बध्नाति, यं मनोव्याधिं वैद्योऽपि न वेत्ति, यश्च मनोहरां वेदनां तनोति, यो वह्निर्निरन्तरं दहति, कदाऽपि निर्वृतिं नैति, यस्मिन् प्रियागमनं चञ्चच्चन्द्रिकां सूते, किमयमेव प्रेमा?

मर्मतक्षां स्मृतिः परां सूते।
शल्यमालां दुरुद्धरां सूते।।
प्रेमनामा सखे भवेत् कोऽर्थः।
शृङ्खलां योऽत्र दुर्भरां सूते।।

---

१. मुग्धा मानिनी–१-४; २. मनः कुतो विलीयते–१-३।

वैद्य किं वेत्थ तं मनोव्याधिम्।
वेदनां यो मनोहरां सूते।।
निर्वृतिं नैति कृष्णवर्माऽयम्।
दावदाहं ततस्तरां सूते।।
आगमस्ते निशीथपर्यङ्के।
चन्द्रिकां चञ्चदम्बरां सूते।।[१]

अन्ते स्वात्मानं सम्बोधयन्तः कथयन्ति—

मा गृधश्चञ्चरीक पुष्पेऽस्मिन्।
यत्परागोऽक्षिशर्करां सूते।।[२]

इत्थं यथा यथा विमृश्यते तथा तथा रसं स्त्रवन्त्य एषां गीतयः सहृदयान् मादयन्ति, वाग्विन्यासो हृदयं झटिति प्रविशन् सचेतसां चेतो हरति शिरश्च घूर्णयति।

### ४. *विरागप्रतानः*

तुरीयेऽस्मिन् विरागप्रतानेऽगतिकानां गतिरुट्टङ्किता वर्तते। खण्डकाव्यञ्चेदम्। कस्यचिद् भवदत्तनाम्नो विदुषो वैराग्यकथया प्रथितोऽयं प्रतानः। संसारस्य सर्वा अपि रीतयः, नीतयः, सदाचारपद्धतयः सर्वदैवैकरूपा न भवन्ति। देश-काल-स्थित्यादीनामनुशीलनानन्तरं तासां निर्धारणं भवति। मानवस्य नियतिर्विचारगम्या न भवतीति दूनमनसां बोधायेयं कथा रचिता। श्रुतिस्मृतिविशारदो माध्यन्दिन-व्रततत्परः, सदाचारी भवदत्तः सपत्नीकः चर्मण्वत्यास्तटे उटजेऽवात्सीत्। तस्य पतिप्राणा धर्मपत्नी, अधीतवेदविद्यः पुत्रः, सवत्सा कपिलैव पारिवारिका आसन्। आहिताग्निः स धनार्जनादविरतो जीवननिर्वाहायाऽध्ययनयाजनादिभिर्यथा-लाभसन्तुष्टः सुखं न्यवसत्। तस्य कश्चन सतीर्थ्यः सखा शिप्रातटे माघमासे यागं चिकीर्षुस्तमुज्जयिन्यामाजुहाव। स गृहिणीमामन्त्र्य तया दत्तं पाथेयं गृहीत्वा प्रतस्थे। झटिति गन्तुमना मार्गं विसृज्योन्मार्गेण प्रतस्थे।

दिग्भ्रान्तः सन् गहने बुद्धिविकलो बभूव। सायं शिप्रामनु गवां सरणिं दृष्टवान्। क्वचिद् ग्रामो भवेदित्याशया क्वचन मन्दं क्वचन द्रुतं चरन्तौ तच्चरणौ

---

१. परम्परां सूते-१,२,४,५,७;   २. तदेव-१०।

उच्चावचस्थलेषु परिक्षतावभूताम्। पुनः पुनः खिन्नोऽपि भयाक्रान्तमना धावन् दीनो विचचार। कुत्राऽपि वसतिं नावाप। शीतकिरण उदियाय। फेरवो रुदन्त उलूकाश्च घूत्कुर्वन्तोऽतिविभीषिकां वितेने। तथाप्यशरणो व्रजन् दूरतो वह्निज्वालां ददर्श। तां प्रति प्रतस्थे। प्रालेयवातेन नीहारवर्षणेन चार्द्रवासा स यथा यथोपसर्पति, तथा तथा वह्निर्दूरमिव प्रयाति। परमाशया गच्छन् स यावदुपैति तावद् ज्वलन्तीं चितां ददर्श। अतीवभीतो भीतिप्रदे श्मशाने शीतार्त्तश्चितावह्निना शीतापहारं चकार। श्मशाने बहुविधां प्रेतलीलां पश्यन् विस्मृतो भूत्वा सत्यानृतयोर्मिथुनं साक्षाच्चकार। व्याकुलः सन् क्षणं नेत्रे निमील्य प्राणायामं विधाय पुनः स्वस्थोऽभूत्। वटवृक्षं दृष्ट्वा प्रणम्य तत्रोपविष्टः पुनः सायंसन्ध्यादिकृत्यलीनः श्मशाने स्थितोऽप्यात्मानं पूतमेव मेने। यतो हि—

भद्रश्रियो भवति भद्रतया श्रिया वा
मुक्तिः श्मशानपतितस्य न गन्धहानिः।
स्वीकृत्य चापि विकृतिं प्रकृतेः स्वरूपं
नापैति संस्कृतिगुणश्च तथा द्विजस्य।।[१]

ततः क्षुधार्तः सन् शङ्खालुकं चिताग्निकणेन पाचयित्वा बुभुजे, विचारोऽपि कृतः—

किं वास्ति चारु किमचारु च कुत्र काले
शिष्टान् प्रमाणयति लोक इति प्रसिद्धम्।
ज्ञात्वाप्यमेध्यपचनं किमसाध्यरोगा
विप्रा न मांसलशुनौषधमाहरन्ति।।[२]

अनन्तरं स स्वयं वक्ता स्वयमेव श्रोता सम्पन्नः—

चेदेकलो भवति तर्हि जनः स साक्षी
भोक्ता स एव खलु वक्ति शृणोति चैकः।
मायावृतोऽपि भगवान् स विमाय एतद्
विश्वं विमाय हि वशी विवशत्वमेति।।[३]

---

१. विरागप्रतानः-७६; २. तदेव-८०।
३. तदेव-८२।

भूतार्थतापि विफला किल भूतपूर्वे
यद् वर्तमानमनुरुध्य न मानमेति।
क्षीरे कदम्बुपतिते क इव प्रयासः
कीरे करादपगते हि वृथानुतापः।।[१]

इत्यादि चिन्तयन् निद्रापरवशः स सुष्वाप।

प्रातः रविकिरणसन्तप्तः, उत्थाय चितात उल्मुकं गृहीत्वा तत्र तृणादिभिर्वह्निं प्रज्वाल्य स्नात्वा वस्त्रं परिशोष्य सन्ध्यादिकं सम्पाद्य स्तोत्रं पठन् महाकालनगरीं ददर्श। ततः सिद्धवटं प्राप्य प्रणम्य; कालीं भैरवञ्च प्रणम्य महाकालमन्दिरं प्राप्य भगवन्तं कालेश्वरमस्तौत्। अनन्तरं गृहं प्रति प्रतितिष्ठासुः मार्गे स्वमित्रं ददर्श, तावदेव शिष्यो दृष्टिपथं समागतः। स शिष्यगृहमुपेयाय। शिष्यः तमर्घ्यादिभिः सम्पूज्य भोजयित्वा विगतश्रमं विधायासेवत। अनन्तरं शकटेन तं गृहं प्रापयत्। कतिचिद्दिनं गुरुकुलमुषित्वा गृहं यियासुः शिष्यो गुरुदक्षिणामध्ययनकाले दातुं मनसि स्थितामप्रदत्तां प्रत्यपादयत। सवत्सं धेनुद्वयं वृषभौ शकटं कृषेरनुगुणं क्षेत्रञ्च प्रदाय स्वगृहं गतवान्।

ब्राह्मणोऽपि सुखं निवसन् पौत्रोत्पत्त्या हृष्टस्तत्र संस्कारान् विधाय पुत्रे गुरुकुलस्य भारं निधाय गृहस्थकृत्यं परिसमाप्य पत्न्या सह सिद्धवटस्य मूलं प्राप्य तपश्चचार। अनेन वृत्तान्तेन कविरुपदिशति यन् मानवो यथालाभसन्तुष्टः, लोभविवर्जितः, स्वकर्मतत्परो देशकालानुसारं यथासम्भवं स्वधर्मं पालयत् स्वतो लब्धेन जीवनं यापयन् विषयव्यावृत्तः सन्, अक्लिष्टः सन्, प्रारब्धं भुञ्जानः सुखं विहरेत्। यद्यपि भवदत्तः षट्कर्मा ब्राह्मण आसीत्, तथापि नियतिवशाद् याजनार्थं गच्छन् दिग्भ्रान्तः सन् श्मशानं प्रपेदे, शीतातुरः सन् चिताऽनलेन शीतापनोदं कृतवान्, क्षुधातुरः सन् शङ्खालुकं चितावह्निना पाचयित्वा बुभुजे, तत्रैव निदद्रौ। प्रातः चितात उल्मुकद्वयं गृहीत्वा वह्निं प्रज्वाल्य स्नानसन्ध्यादिकृत्यमपि तत्रानुष्ठितवान्। जानन्नपि देशस्योपकरणस्य चामेध्यतामशरणः सन् तं सिषेवे, परञ्च देशकालानुसारं यथासम्भवं तामेव व्यवस्थां साधु मेने, प्रायश्चित्तार्थं शुद्धेन मनसा महाकालं तुष्टाव। अत्रोपदेशस्य मूलस्वरो विद्यते—

सा मानवस्य नियतिर्न विचारगम्या
या स्वैरचारनिरतापि चलाचलापि।
भ्रान्तेव पालितगवी सुपथि प्रपन्ना
स्वस्वामिनं प्रति ससम्भ्रममभ्युपैति।।[२]

१. विरागप्रतानः-८५; २. तदेव-१४१।

परं नियतिवशाद् दुरवस्थागतोऽपि मनसि हीनतां न समाश्रयेत्। यतो हि—

स्पर्शं करैरुपनयन् मलदूषितानां
किं प्रत्यवायमुपयाति सहस्त्ररश्मिः।।[१]

अपि च—

सन्तः क्रियासु विहितास्वपि यज्ञियानां
नात्मानमर्घरहितासु कदर्थयन्ति।
वर्षोदकेन सरसीषु रजस्वलासु
प्राध्वं दृशं न रमयन्ति हि राजहंसाः।।[२]

भाविनो भावा अवश्यं भवन्तीति सिद्धान्ताद् यद् घटितं तद् दैवविलसित-मग्रेऽपि यद् दैवेन समीहितं तदवश्यं समेष्यति, यथा कालवशादेव सायं सहस्त्र-करोऽपि भानुरस्तमुपैति; परं प्रातःकाले नवेन ज्योतिषा सह समुदेति, अत एवादृष्टं भुञ्जानो मानवः स्वात्मबलं न त्यजेत्, नवोत्साहेन निम्नतरस्थितिस्वपि स्वजीवनसरणिं यापयेत्—

तस्माद् यदत्र घटितं तददृष्टयोगाद्
यच्चाग्रतो व्यवसितं मयि तत् समेयात्।
भूयो भवान् स्वभवनं व्रजिता सशिष्यः
प्रातर्यथारुणयुतो गगनं विवस्वान्।।[३]

अन्तेऽशरणानां शरणम्, गतीनां गन्तव्यम्, अगतिकानां गतिः, लोक-शङ्करः शङ्करः सर्वेषां कल्याणमुपनयत्विति मङ्गलाशंसया विरागप्रतानस्य पूर्तिर्भवति—

अगतिकगतिकानां लक्ष्यभूमिर्यतीनां
शरणमशरणानां गम्यबिन्दुर्गतीनाम्।
जयति विनयजय्योऽसौ वसन्नुज्जयिन्या-
मुपनयतु च नित्यं मङ्गलं दूषणारिः।।[४]

---

१. विरागप्रतानः-१२८; २. तदेव-१३१।
३. तदेव-१३३; ४. तदेव-१५३।

**५. *प्रकीर्णप्रतान:***

पञ्चम: प्रकीर्णप्रतानो वर्तते यत्र सप्तत्रिंशता शीर्षकैर्निबद्धा: कविता: सुधीजनमनांसि समाकर्षयन्ति, कान्तासम्मितरीत्या कृत्याकृत्य-प्रवृत्तिनिवृत्त्युपदेशञ्च कुर्वन्ति। तथा हि सर्वप्रथममार्याछन्दसि गुम्फितम् 'आर्यावन्तिकम्' दर्शनीयम्। अत्र चिन्तामणि-गणेश-हरसिद्धि-महाकाल-अगस्त्येश्वर-शिप्राभि: समलङ्कृताया विक्रमादित्यकीर्तिपताकाया उज्जयिन्या मनोहरं वर्णनं वर्तते। अन्यासु विविधासु रचनासु क्वचिन् नर्मदानिरूपणम् क्वचिद् वेत्रवतीवैशिष्ट्यम्, क्वचित् शिप्राया: समलङ्करणम्, क्वचिद् विभातस्वगतम्, क्वचिद् वसन्तसुषमाङ्कनं कृतमस्ति। एतदतिरिक्तं काश्चन अन्या विविधवर्णनात्मिका रचना अपि अत्रोपनिबद्धा: कवे-वैशिष्ट्यं प्रकटयन्ति। 'क्व कालिदासस्य जगाम भारती' इत्यत्र महाकवे रसप्रवणत्वं वर्णयन् कवि: साम्प्रतिकीं स्थितिं तुलयन् कथयति— साम्प्रतं कवीनां वाणीषु सा रसप्रवणता न दृश्यते, नैव कालिदासस्य युगं वर्तते, न वा तादृशा राजान:, न सा सभ्यता, न सा मर्यादा, यद्वर्णितं कालिदासेन—

दिलीपता लोकहितप्रतारिणी
सुदक्षिणा हन्त करप्रसारिणी।
वसिष्ठताऽनर्गललाभलुण्ठना
क्व नन्दिनीवृत्तिरवैतु निर्वृतिम्।।
गता सदालम्बननिर्मला रति-
र्मृतश्च लावण्यचमत्कृतं मन:।
कवेत किं साधननिर्धन: कवि:
स्वदेत कस्मै रसिकाय किं वच:।।[१]

'गीर्वाणवाणी'-नाम्न्यां रचनायां संस्कृताया वाचोऽनल्पं महत्त्वं प्रतिपाद्य; तस्या: प्रचाराय प्रसाराय च प्रेरणा प्रदत्ता वर्तते कविना—

न संस्कृतिस्तावदुपस्कृता भवे-
न्न सभ्यताऽध:पतिता समुद्धृता।
धृता भवेन्नापि परिष्कृता मति:
कृता भवेन्नेष्टतरा निजोन्नति:।।[२]

---

१. क्व कालिदासस्य जगाम भारती–२-३।
२. गीर्वाणवाणी–३।

'स्वतन्त्रता स्वदते' इत्यत्र साम्प्रतिकस्वतन्त्रताया स्वरूपचित्रणं कुर्वन् कविः प्रश्नयते—

परतन्त्रतैव किमियं स्वतन्त्रताया दधाति परिधानम्।
आङ्ग्लभण्डैः प्रदत्ता काचित् किमुताङ्गली गणिका।।[१]

इदानीन्तनीं स्थितिमवेक्ष्य चिन्तितः कविर्भवानिनामिकायां रचनायां स्वकीयामरुन्तुदां चिन्तां व्यनक्ति, उपालभते च भवानीम्, मातः! पुरा जगत्त्रासकार उन्मार्गगामी एकाकी रक्तबीज एवासीत्, स तु त्वया हतः; परमिदानीं सहस्रशो रक्तबीजा ग्रामे ग्रामे पथि पथि च विचरन्तो जनतारक्तशोषणं कुर्वन्ति। एवमेको दशाननो रामेण व्यापादितः, साम्प्रतं सङ्ख्यातीता रावणा जनान् बाधयन्तो लुण्ठन्ति, तदर्थं त्वया किं क्रियते—

अष्टाभिर्बाहुदण्डैर्हलमुसलधनुःसायकांश्चापशूले
घण्टां सन्धारयन्ती भ्रुकुटिविकटिता चण्डिका चित्रितास्ते।
भित्तौ काली पिबन्ती रुधिरमपि कृतालेखना चेत् ततः किं?
ग्रामे ग्रामे भ्रमन्तः पथि पथि बहुला रक्तबीजा वसन्ति।।[२]

प्रतानिन्याः समग्रविश्लेषणेन कवेः कवनस्य विविधाः पक्षा अक्षिपथमवतरन्ति। ते विंशशताब्द्यास्तेषु कविष्वन्यतमाः सन्ति, ये लोकजीवनस्य याथार्थ्यचित्रणमेव यथार्थतः कवित्वं मन्यन्ते; परमेषां कवित्वे यथार्थस्य रुक्षतैव नाऽपि तु लालित्येन साकं पाण्डित्यम्, आह्लादजनकतया सह भावगाम्भीर्यम्, गूढदार्शनिकसिद्धान्तप्रतिपादनेन सह जीवनदृष्टीनां दर्शनम्, भावुकभक्तस्य मनोदशाचित्रणेन सह प्रेमातुरप्रणयिनां प्रणयदशाऽङ्कनं वर्तते। तत्र न केवलं कल्पनायाः कल्लोलोऽपि तु वस्तुस्थितीनां विश्लेषणमस्ति। अस्मिन्नेव क्रमे समाजस्य कुरीतयः, कुनीतयः, कदाचाराः, भ्रष्टाचाराः, विषमता, विरूपता, विसङ्गतयः कवेर्वाक्शराणां लेखनीप्रहाराणाञ्च लक्ष्या अभूवन्। कानिचिद् निदर्शनानि प्रस्तूयन्ते—

रोगार्तां श्रेयसीं प्रेयसीमभिलक्ष्य 'क्व यातास्ते' इति शीर्षकेण रचितायां रचनायां स्वकीया हृदयोद्गता भावनाऽतिमधुरतयोद्भाविता कविना—

---

१. स्वतन्त्रता स्वदते-२; २. भवानि-१।

दृशोरावर्जका: कल्याणि सम्भारा: क्व यातास्ते।
हृदि स्फूर्जां वितन्वाना अलङ्कारा: क्व यातास्ते।।
शिरो वक्षोजयोराधाय मे केशेषु साकूतम्।
स्मितैर्विद्योतमाना अङ्गुलीचारा क्व यातास्ते।।
निमेषोन्मेषलीला नेत्रयोर्दन्तच्छदे स्पन्द:।
निचोले वेपथु: सर्वे वशीकारा क्व यातास्ते।।[१]

एवमेव 'कथं कथा' एषामपरा हृदयाह्लादिनी रचनाऽस्ति यत्राऽसम्भविनमर्थं सम्भविनं कथङ्कारं क्रियेत? प्राप्तकालस्योल्लङ्घनं कथं वा सम्भवेद्? इत्यस्य भावस्याङ्कनमतिसुन्दरतया कृतमस्ति—

पिका मौनं भजेरन् मासि वासन्ते कथङ्कारम्।
शर: शाकुन्तल: सिध्येन्न दुष्यन्ते कथङ्कारम्।।
नतापाङ्गैर्विदग्धानां मुहुश्चेतांसि दुन्वन्त:।
इमे सौन्दर्यसम्भारा न दूयन्ते कथङ्कारम्।।
भ्रुवोर्भङ्गभ्रमाद् भूम्ना निषेधा: सम्प्रतीयेरन्।
कपोलप्रान्तसङ्केता निगूह्यन्ते कथङ्कारम्।।
सहेला हावभावा विभ्रमा इन्द्रायुधायन्ते।
निराकाराश्चमत्कारा न सह्यन्ते कथङ्कारम्।।
निशीथेषु प्रतीताश्वासिन: स्मेरं समालापा:।
स्मृता विध्यन्ति नि:श्वासा निरुध्यन्ते कथङ्कारम्।।[२]

न केवलं प्रणयभावानामङ्कने परं वस्तूनां सम्यक् स्वरूपविश्लेषणे तेषां सरसस्वाभाविकचित्रणेऽपि कवीनां काम्या सरस्वती एषामुपरि वरदा वर्तते। एतन्निदर्शनमपि द्रष्टव्यम्। साम्प्रतं स्वस्वार्थपूरणैकलालसानां नेतृणां कालप्रतीक्षारतानां सपत्नानामराजकतां तन्वतां दुर्जनानां प्राधान्यम्, उदासीनानां सामाजिकानां, तेषां बोधनाय प्रयत्ननिरपेक्षाणां जनानाञ्चातिहृद्यं चित्रणं कृतं 'प्रतीक्षन्ते' इति शीर्षके, यदाचार्यवर्याणां भावाभिव्यञ्जनसामर्थ्यं सुतरां व्यनक्ति—

---

१. क्व यातास्ते–१,५,७; २. कथं कथा–१,३,४,५,७।

सपत्नाः सव्यलीकं निष्क्रियाः कालं प्रतीक्षन्ते।
यथा क्रीडाप्रवीणाः कन्दुकोच्छालं प्रतीक्षन्ते।।

भयं ये तन्वते नक्तं घटाटोपैः सनिर्घातैः।
घनेभ्यस्तेभ्य एते हन्त कीलालं प्रतीक्षन्ते।।

प्रतिक्षेत्रं विजेतारः प्रतिग्रामं च नेतारः।
अराजत्वं महीं नेतुं महीपालं प्रतीक्षन्ते।।

अथो लोप्त्रेण जीवन्तो विपुष्टा मूषका एते।
मिथो जन्यं वितन्वाना बिले व्यालं प्रतीक्षन्ते।।[१]

साम्प्रतं नेतारो भोगलिप्ता दुराचाररता लोकतन्त्रमार्गे कण्टकजालं क्षिपन्तोऽन्यद् वदन्तोऽन्यथा कुर्वन्तः स्वार्थमेव परमं मन्त्रं मन्यमानाः सन्ति, एतस्य यथार्थचित्रणं नेतृस्तवे दृश्यते—

दिल्लीबल्लभपाणिपल्लवतले विश्रम्य पाटच्चरा-
श्चीराणि प्रसभं हरन्ति वनितावर्गस्य दुःशासनाः।
स्वेच्छाचारपरा यभन्ति रभसादालिङ्ग्य वाराङ्गना
दुःशीला परिशीलयन्ति विविधान् भोगानिमे भोगिनः।।

लालालिप्तमुखोऽवलिप्तनयनः श्मश्रूत्कटः कौटिको
वक्षो हन्ति विसार्य बाहुयुगलं गर्जन् विपक्षं प्रति।
रोषं पोषमुपानयन् कृतजयोद्घोषं समुज्जृम्भते
नेता भ्रूकुटिकुण्ठको घटयते शार्दूलविक्रीडितम्।।[२]

आचार्यवर्य्याणां मनसि कवनार्थं ये भावा आगच्छन्ति, ते शीर्षकमात्रेणैव कवीनां विदग्धतां सूक्ष्मनिरीक्षणचातुरीञ्चाभिव्यञ्जयन्ति। मरणं शरणम्, लोकायतिकी शवनीतिः, बुद्धिः स्वयं दूतिका, स्वतन्त्रता स्वदते— इत्याद्या रचना एतद्दृशा समवेक्षणीयाः सन्ति। कानिचिद् निदर्शनानि प्रस्तूयन्ते—

लोके लोकानामेतादृश्यपि स्थितिरायाति, यत्र जनो मरणं कामयते। मरणं शरणमित्यत्र एतासामेव स्थितीनां चित्रणमस्ति या असमाधेया विषमा दुष्कराश्च

---

१. प्रतीक्षन्ते-१,२,४,५; २. नेतृस्तवः १,९।

भवन्ति। एकः श्लोको दर्शनीयो यत्र वध्वास्तथाविधं चरित्रं दृष्ट्वा क्षुब्धा श्वश्रूर्मरणं कामयते—

ईषत्क्रीडनकान् सगालिवदनं निर्भर्त्सयन्तीं शिशून्
क्रोशन्तीं स्वरसात् स्वभावसरले पत्यावनागस्यपि।
सोरस्ताडमुदस्य शीर्षवसनं पात्राणि निर्भञ्जतीं
पश्यन्ती विवशा स्नुषां स्वमरणं श्वश्रूर्यमं याचते।।[१]

एवं वध्वा कृता यन्मरणयाचना, साऽपि प्रेक्षणीया—

विक्रीयाभरणानि निर्वृतमनाः सार्थान्वितः कुर्दते
सद्यः क्रुध्यति माधवीविरहितः क्षीबः पिबन् गर्जति।
गेही खेलपरान् निगृह्य पृथुकान् घाताय सन्नह्यते
मृत्यो मेऽद्य विलम्बसे कुत इति ब्रूते सवाष्पं वधूः।।[२]

बुद्धिर्विनाशाय विकासाय च कल्पते। सा उभयत्र सन्मार्गे कुमार्गे च प्रेरयति। तत्र स्वच्छन्दाचारशीलानुपहसन्नुपदिशति बुद्धिः स्वयं दूतिका भवति। तत्रैकं पद्यमवेक्षणीयम्—

चन्द्रो यो द्विजराज ओषधिपतिः शीतामृतांशुर्विधुः
सोऽसौ चेन्मृगलाञ्छनो निगदितः किं लाञ्छनेभ्यो भयम्।
पापादङ्ग जुगुप्ससे पठितिनां मा दुर्मतिं शिश्रियः
पुण्यं रोचत एव पापखचितं किं नीरजं नीरजः।।[३]

कवेर्कल्पना अप्यभिरामाश्चित्ताकर्षिका निष्प्रतिबन्धाश्च विहरन्ति। तथा हि वसन्तवर्णने भ्रमराचितं पुष्पितं कुसुमशिखरं मेघखण्डे सौदामनीव्यतिकर इव पश्यन् कविर्दूर्वाञ्चिते स्थले पतितमधूकपुष्पे स्वर्बालानां परिणयकालिकीं सज्जां कल्पते—

पीतापीडो भ्रमरकलभैराचितो मञ्जरीणां
सौदामन्या व्यतिकर इवालक्ष्यते मेघसंस्थः।
दूर्वातल्पे कलितकुसुमाः सारकल्पा मधूकाः
स्वर्बालानां परिणयमहं निर्जने सञ्जयन्ति।।[४]

---

१. मरणं शरणम्–३; २. तदेव–२।
३. बुद्धिः स्वयं दूतिका–९; ४. वसन्तः–६।

एवं वसन्ते बालानां मनसि प्रबुद्धं वसन्तमित्रं मन्मथं मनोजं तत्प्रभावञ्च साधु वर्णयन् कविः स्वकल्पनावैशिष्ट्यं व्यनक्ति—

कस्मान्नेत्रे तरलतरले विक्षिपेते कटाक्षान्
प्रायः पाणिश्चलति कुतुकादुत्तरीयाय कस्मात्।
गात्रे कस्मात् पुलकमिलितो वेपथुर्नर्नृतीति
व्यग्रं किञ्चित् स्फुरति हृदये ज्ञातुमीष्टे न बाला।।[1]

न केवलं शृङ्गारस्य सुमधुरभावानां निरूपणे एषां सरसता समुच्छलत्यपि तु स्वाराध्यसमाराधने सर्वतोभावेन स्वात्मनिवेदने भावुकभक्तस्य हृदयचित्रणेऽप्येषोद्दामकल्लोलं कलयति। एतद्दृशा 'अम्बिकां भावयामः' दर्शनीयाऽस्ति यत्र कवेर्लोकोत्तरा भावना परिलक्षिता भवति। कविराशास्ते कदाचिदुज्जयिन्यां प्राणत्यागो भवेत्, शिप्रातीरे देहदाहो घटेत, कश्चित् शिवसपर्यार्थं चिताभस्म चिन्वीत, तद्भस्म महाकालस्य विभूतिर्भवेत्, तदा मातः! तद्गात्रालिङ्गितायास्तव शरीरे मसीलेपनं तद्भस्म किं न स्यादिति कीदृशी उदात्तभावना परिलक्ष्यते कवेः—

प्राणत्यागः कथञ्चिद् भगवति मम चेदुज्जयिन्यां घटेत
शिप्राया जातु तीरे किमपि चितचिताभस्म चिन्वीत कश्चित्।
सौभाग्यान्मे परस्तात् तदपि यदि महाकालभूतित्वमीयात्
तद्गात्रालिङ्गितायां त्वयि मृदितमसीलेपनं स्यान्न वा किम्।।[2]

तत्रैवाऽकरुणकरुणालयायाः पुत्रवत्सलायाः स्ववत्सेऽनायासेन जायमानायाः स्वाभाविक्याः कृपाया अवलम्बनं समीहमानः कविर्विकलो भूत्वा प्रार्थयते— केचन मोक्षमाणा परमं ब्रह्म ध्यायन्ति, केचन कैवल्यभाजो योगिनः प्राणायामैरुपासतेऽन्ये मीमांसकाः स्वर्गकामा यागैर्यजन्ते; परं मातः! सर्वविधहीनस्य मम तु पाथेयं तावकीना कृपैव वर्तते—

ध्यायन्ति ब्रह्म केचिन्निरवधिपरमं तत्परा मोक्षमाणाः
प्राणायामैरुपासाप्रणिहितमनसः केऽपि कैवल्यभाजः।
अन्ये यागैर्यजन्ते श्रुतिविहितहितज्ञप्तयः स्वर्गकामाः
पाथेयं मातरेकं मम मयि कृपणे तावकीना कृपैव।।[3]

१. वसन्तः-१६; २. अम्बिकां भावयामः-४; ३. तदेव-७।

एवं माधुर्यभावोच्छलद्भक्तिभावधाराऽऽराधयति सहृदयान् 'गोपीविटः पातु वः' इति समाख्यायां रचनायाम्। यथा विटः कामपि स्वकीयां कमनीयां कामिनीं प्रति व्यवहरति, तथैव गोपीविटोऽपि स्वदर्शनेन मुग्धायाः कस्याश्चिद् गोपिकाया हृदयं प्रविश्य चातुर्यात् तस्या मनश्चोरयन् पृच्छति, भामिनि! तव को व्याधिर्नाडिकां स्पृशति, मनोगतिं ज्ञातुं हृदि करं कृत्वा कचांश्चामृशन् स्वेच्छां सम्पादयन् मुग्धायां दयां कुर्वन्निव प्रतीयते। एवंविधो गोपीविटो व्याख्याताश्रोतॄंश्च पातु—

पश्यन्त्या हृदयं निविश्य सहसा धोरन् मनश्चोरयन्
को व्याधिस्तव भामिनीति सहसं पृच्छन् स्पृशन् नाडिकाम्।
जिज्ञासुर्मनसो गतिं हृदि करं कृत्वा कचानामृशन्
मुग्धायां दयितो दयामिव दधद् गोपीविटः पातु वः।।[१]

गजलगीतिषु विविधा मनोहारिणो भावा यत्र तत्र विकीर्णाः सन्ति। 'किमुन्नेयम्'-नाम्नि गजलगीत्यां कवेर्लालित्यं सन्दर्शनीयमस्ति—

तवोदीता स्मृतिर्विस्मारयन्ती विश्वसर्वस्वम्।
उपादेयं न किञ्चिद् विद्यते किञ्चिन्न वा हेयम्।।
तदानीमन्धकारश्चक्षुषी रुन्धान एवाभूत्।
इदानीं तावके चञ्चच्चमत्कारे किमुन्नेयम्।।
मदीये पङ्कलिप्ते दर्पणे ते निर्मलं रूपम्।
कथङ्कारं परिज्ञेयं कथं कृत्वा च निध्येयम्।।
पलं सौदामनीमाया ततः क्व वा घनच्छाया।
अदृश्यस्ते स्मितद्योतः कुतश्चित्तं समाधेयम्।।[२]

इमे सरसरीत्या सहृदयान् सामाजिकान् स्वाभिमुखीकृत्य स्वाभिप्रायं प्रकटयन्ति। निदर्शनार्थं 'बाले' इति नाम्नी रचना समवेक्षणीया; यत्र नार्यस्ताभिः परिस्थितिभिः सावधानाः कृताः सन्ति, याः सामान्येन शुभ्राः प्रतिभान्ति परं वस्तुतः कलुषा भवन्ति। सर्वे सम्बन्धाः, सर्वे जनाः, सर्वाः परिस्थितयः, सर्वे

---

१. गोपीविटः पातु वः–४; २. किमुन्नेयम्–३-६।

व्यवहाराः समाना न भवन्ति। बाहीकया दृशा समाना अपि, अन्ततो विपरीता भवन्तीति जगतो विचित्रा स्थितिरतीवमनोहारिरीत्या वर्णिताऽस्ति—

न सर्वे देवराः सौमित्रिभावैर्निर्भरा बाले।
विरूपाक्षा न वा सर्वे निकायाः शङ्करा बाले।।
दृशा बाहीकया कामारिमन्तःकाममर्चन्तः।
अमी रामाभिनेतारो न किं नक्तञ्चरा बाले।।
कुबेराणां गृहेषु श्रौतकर्माणि प्रकीर्यन्ते।
सतां वासाय नेयं कल्पते विश्वम्भरा बाले।।
अपाङ्गव्याहृतेरर्थं न ये निश्चेतुमीहन्ते।
न ते प्रेमाकरा रूपस्य ते पाटच्चरा बाले।।[१]

'निराधारः स किं कान्ते' इत्यत्र प्रश्नव्याजेन वैपरीत्यसम्बन्धेन कैमुतिकन्यायेन वा ये सिद्धान्ताः स्थापिताः, ते सर्वथाऽवलोकनीयाः, विवेचनीयाः—

समासत्तिः परा यस्मिन् न शृङ्गारः स किं कान्ते।
रसेनापूरितो यः स्यान्न शृङ्गारः स किं कान्ते।।
उदारा कौमुदी कान्तं वयो वासन्तमुद्यानम्।
न यस्मात् कामितं साध्येत सम्भारः स किं कान्ते।।
भृतः स्यादम्भसाम्भोजैर्वृतश्चोपस्कृतो हंसैः।
पिपासा चेन्न शाम्येत तर्हि कासारः स किं कान्ते।।
मृजा वासो वचो भूषाङ्गरागोऽपाङ्गविक्षेपः।
न लीयन्ते विकारा यत्र संस्कारः स किं कान्ते।।[२]

'लोकायतिकी शवनीतिः' इत्यत्र लोकायतिकानां नीतिर्या वेदशास्त्र-परायणैर्निन्दिता खण्डिता च, सैषा साम्प्रतं सर्वत्र राराज्यत इति सम्यक् चित्रितं वर्तते। तथा हि वर्त्तमानकालकृते कीदृशो व्यवहारो भवेत्, कानि च कार्याणि समाचरणीयानीत्यस्य निर्देशः सुष्ठुतया कृतोऽस्ति। तद्यथा—

---

१. बाले–१,४; २. निराधारः स किं कान्ते–१,३,४,६।

नीतिः का धनसञ्चयो ह्यविनयः कः सुव्रतेभ्यः क्षमा
प्रीतिः का स्वशरीरसौष्ठवमथो किं सौमनस्यं स्वता।
सौजन्यं किमपास्तवृत्तशमनं किं दौहृदं सौहृदं
के दीनाश्च परार्थमुद्यमभृतो लोकस्य सोऽयं विधिः।।[१]

एवं 'विभातस्वागते' पारतन्त्र्यकाले स्वातन्त्र्यस्य नवप्रभातस्य कृतं स्वागतमतीवमनोमोदमावहति—

सुषमापरिपूरितवसुधातलकोकिलकलकूजितसुधापात
अतिपेचकलोचनबलघातककृतबहुलनैशतिमिरापघात।
हृत्कुमुदावलिकलिकाविकास ते सुस्वागतमहरुपोद्घात
नूतन! निर्मल! नवयुग! विभात।।[२]

एषां रचनासु ललितपदविन्यासो भावानाञ्च सुमधुरसामञ्जस्यं दृग्गोचरीभवति। शब्दशास्त्रपरिनिष्णाततया ते शब्दसम्पत्तिसमृद्धाः सन्ति। अभिनवप्रयोगे निपुणानामेषां कवनेऽप्रयुक्तादयो दोषा दोषाय न कल्पन्ते, कवेरुद्देश्यप्रतिबन्धकाभावात्। शब्दशास्त्राधिकारिणां कवीनां काव्यनिर्माणे शब्दसौष्ठवमनुप्रासयमकादिमाधुर्यं पदे पदे समुल्लसत्येव, एतत्सिद्धान्तस्य निदर्शनमवस्थिमहाशायनां काव्यमप्यस्ति। तथा हि—

(क) कौलीनादपि कैतवादपि कलिप्रालेयजाड्यादपि।[३]

(ख) नृत्तं ते वितरीतरीतु तरणं श्वःश्रेयसं शाश्वतम्।[४]

(ग) अधर्मधर्मपादपीतशीतभीतिभासुरा।
सुरावनी वनी धरा सुरावनी विराजते।।[५]

(घ) कदा कलिः कदा कृतं वचो दधाति विस्तरम्।
कलिः समत्सरं मनः कृतं मनो विमत्सरम्।।[६]

(ङ) अपि प्राणन्ति ते प्राणन्तु येषां प्राणनं प्रेयः।
विनैव प्रीणनं जीवातवे किं नाम जीवेयम्।।[७]

---

१. लोकायतिकी शवनीतिः–७; २. विभातस्वागतम्।
३. महाकालः प्रसीदतु–३; ४. तदेव–४।
५. हिममाला शिखरिणी–६; ६. कदा कलिः कदा कृतम्–१।
७. किमुन्नयेम्–२।

अन्त्यानुप्रासस्तु कवीनामेषां काव्यसर्वस्वमस्तीति निःसन्दिग्धं वक्तुं शक्यते। प्रायः सर्वा रचना एतस्यालङ्कारस्य माधुर्येन मोदावहाः सन्ति। गजलगीतीनां संरचनासु एतस्यास्वादनं सम्यग्रूपेण भवति। कानिचिद् निदर्शनानि दर्शनीयानि—

सदा दैवानि साधूनां सदाशां नानुरुध्यन्ते।
क्षणेन क्षारकाः क्षारैरुदासेकैर्निरुध्यन्ते।।
अये सौभाग्यशीले मा विधाः संशीलनं सौधे।
तव ज्योत्स्नाभिराकल्पाः सपत्नीनां विरुध्यन्ते।।[१]

**उपसंहारः**

इत्थं समग्रकाव्यपर्यालोचनया समासतो निरूपयितुं शक्यते यदाधुनिकान् नूतनान् विषयानादायाभिनवभावाभिव्यञ्जने भावानुरूपच्छन्दोविन्यासे चैषां प्रतिभा परं प्रगल्भते। गजलगीतीनां तत्तत्स्वरश्रुत्यादिविशिष्टा रचनाऽनुप्रासघना भावकानां हृदयं स्पृशति। प्रत्यग्रभावानुरूपशब्दविन्यासपेशला कविता कवयितुः काव्यनिर्माणकौशलं व्यनक्ति, सर्वान् सहृदयान् आवर्जयति च।

साम्प्रतिकयुगस्य विडम्बना, कर्तव्यहीनता, स्वार्थलोलुपता, रक्षकभक्षकता, व्याहारे व्यवहारे च महान्तरता, विविधा असङ्गतयः, भारतीयसंस्कृतेः संस्कृतस्य च घोरोपेक्षा, भारतीयसंस्कृतिमूलस्य संस्कृतस्योन्नयनसरणिः, नूतनाऽप्रस्तुत-विधानमित्यादि सर्वे विषया अस्य वाचां सरणिमागताः कवेरपूर्वां प्रतिभां प्रतिभासयन्ति। न केवलमाधुनिकविषयेऽपि तु शास्त्रीयसिद्धान्तनिष्पादने, दार्शनिकचिन्तनचित्रणे, सनातनसिद्धान्तसमर्थने, धर्मस्य स्वरूपनिर्धारणे तस्य महनीयमहत्त्वाधाने सर्वत्राऽस्य कवित्वशक्तिर्मुखरा दृश्यते। न केवलं रूक्षविषयेऽपि तु प्रणयिनोर्मनोभावाङ्कनेऽतिसरसा सरस्वती प्रवहति। इत्थं रस-भाव-राग-वैराग्यादिविविधमार्गैः प्रवहन्ती काव्यधाराऽस्य त्रिपथगां विस्माययति, समीपस्थां शिप्रां च व्रीडयतीति।

●

१. हा दैवम्-१,५।

# रसविमर्शः

**डॉ. प्यारेलालपाण्डेयः**
अनुसन्धान-अधिकारी
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

भारतीयकाव्यप्रसङ्गे रसस्य सर्वातिशायिमहत्त्वं गीयते। परिणतप्रज्ञानां कवीनां प्रवृत्ती रसेनैव परिचालिता भवति, रस एव पर्यवसिता भवति। भरतमुनिः सर्वानुभवसम्मतपाकरसस्य दृष्टान्तेन रसास्वादं विश्लेषयति। स एव आस्वाद्य-सामग्रीं रस इति कथयति। अभिनवस्तेन सम्मतिं दत्वापि आस्वादनात्मानमनुभवं रस इति निगदति। मम्मटस्त्वास्वाद्यास्वादयोर्भेदं समाप्तं चकार। साहित्यशास्त्रिणोऽप्यन्ततस्तमेव स्वीकुर्वन्ति—प्रतीतिपरमार्थं काव्यमिति।

कतिपयविचारकाणां धारणाऽस्ति यत् काव्यशास्त्रस्योद्भवो नाट्यशास्त्र एव निहितः, अन्ये च रसस्य स्वतन्त्रोद्भवं विकासं च मन्वते। मदीया तु सर्वं पर्यालोच्य, शास्त्रकारान् पूर्णतो निभाल्य च इयमेव सती मतिरस्ति यद् द्वावपि शास्त्रे पृथक् पृथग्रूपेण विकसितौ भवतः। अत एवानन्दवर्द्धनो भिन्नयोर्द्वयोः समन्वयं करोति। भवतु नाम, प्रस्थानस्य भिन्नत्वम्, परन्तु भारतीयजीवन-दर्शनानुसारं द्वयोरपि गन्तव्यमेकमेवास्ति। स्वरूपविमर्श एवं मन्तव्यः—चिदाह्लादमयः स्वरूपविमर्शः। स्वसंवेद्याखण्डरसस्य प्रसङ्गो दर्शनशास्त्रे भक्तिशास्त्रे चायाति, आगमे रचनायाः सन्दर्भ आयाति। शैवदर्शने शिवो जगन्नाट्यरसिक इति कथ्यते, क्वचिच्च कलाश्लाघ्य इति स्तूयते। यथोक्तम्—

> निरुपादानसम्भारमभित्तावेव तन्वते।
> जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने।।

शिवसूत्रे आत्माभिनयं भाव इति चर्चाया विषयः। स्वभाव एव रसरूपे परिणमति। सच्चित् कलाकारः शिवः स्वानन्दपूर्णं चमत्कारं सृष्टौ प्रवाहयति।

उत्पलदेवस्य स्तोत्रावल्या व्याख्यायां कथितमस्ति-

'आनन्दोच्छलिता शक्तिः सृजत्यात्मानमात्मना'।

काव्यचिन्तनस्य क्षेत्रे, नाट्यस्य क्षेत्रं भवेद् आधारभूतस्य काव्यस्य वा क्षेत्रं भवेत्—सर्वत्रैवास्माकं स्वस्थप्रयोजनं रस एवास्ति। रसशास्त्रे सहृदयावधारणायाः स्थानमतीवमहनीयमस्ति। तत्रैव हृदयसंवादस्य रसनिष्पत्तौ सहृदयस्य, हृदयसंवादस्य च स्थानं वरेण्यमस्ति। प्रस्तुतविषयस्य विवेचनात् पूर्वं रसस्यार्थविकासस्य निरूपणमावश्यकमस्ति सामान्यव्यवहारे रसस्य अर्थचतुष्टये प्रयोगो भवति— १. पदार्थरसः-अम्लः, तिक्तः, कषायादयश्च, २. आयुर्वेदरसः, ३. साहित्यरसः, ४. मोक्षोऽथवा भक्तिरसः।

एतेषु रसनेन्द्रियविषयस्य नाम रसोऽस्ति, तत्त्वदृष्ट्या रसस्तन्मात्राऽस्ति।

येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्।
एतेनैव विजानाति किमत्र परिशिष्यते, एतद्वैतत्।।

(कठोपनिषदि–४।३)

शान्त आत्मा तु तन्मात्राद्भिन्नो भवति—

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।
(कठोपनिषदि–३।१५)

पारमार्थिकार्थे रसः सर्वरसोऽस्ति। रसस्याध्यात्मिकोऽर्थ इत्थं स्पष्टोऽस्ति— 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति।'

इत्थं क्रमाज्ज्ञायते यद् वैदिकयुग एव रसशब्दस्य प्रयोगो वाण्यामथवा शब्दार्थयोः प्रारब्ध आसीत्। एतदूर्ध्वं रामायणकालो महाभारतकालश्चायाति। रामायणस्य बालकाण्डे चतुर्थसर्गे रसस्य प्रयोगो मिलति। केचन पाश्चात्यास्तदनुगामिनो भारतीयाश्च बालकाण्डं प्रक्षिप्तं मन्यन्ते। महाभारतेऽपि सन्देहास्पदमेव वार्ता प्रचलति। यद्यपि महाभारते भूरिश्रवसः पत्नी मृतपत्युर्विच्छिन्नं हस्तं दृष्ट्वा रोदिति—

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्युरुजघनस्पर्शी नीवीविश्रंसनः करः।। (महाभारतम्)

इदमुदाहरणं काव्यशास्त्रे बहुवारं दत्तमस्ति।

अत्र हि करुणरसस्य शृङ्गाररसोऽङ्गम्; परन्तु वात्स्यायनस्य कामसूत्रे जयमङ्गलाटीकया सहिते रसशब्दस्य प्रयोगो रतौ, कामशक्तौ च बभूव। इत्थं निर्धार्यते यद् रसस्य शास्त्रीयार्थस्य विकासो रामायणमहाभारतयुगादारभ्य कामसूत्रयुगेऽभवत्।

नाट्यशास्त्रानुसारेणैव पुष्कलरूपेण वेदादेव रसस्योद्भवो बभूव। उक्तं हि—

जग्राह पाठ्यं ऋग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदाद् अभिनयान् रसानाथर्वणादपि। (नाट्यशास्त्रम्–१।१७)

आनन्दवर्द्धनाचार्यैः रसध्वनेः स्थापनाय आदिकवेः प्रमाणं प्रस्तुतम्—

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।। (ध्वन्यालोके–५)

शोकश्लोकयोः समीकरणस्य श्रेयः कालिदासस्यास्ति—

'श्लोकत्वमापद्यत यस्य शोकः'। (रघुवंशः–१४।७०)

इदं निश्चप्रचमस्ति यद् भरतमुनेः पूर्वं रसपरम्परा पूर्णरूपेण विद्यमानाऽऽसीत्। इदमपि विश्वस्तमस्ति यद् रससिद्धान्तस्य सम्पूर्णं प्रतिपादनं भरतमुनेर्नाट्यशास्त्र एवाभवत्। ध्वनेः प्रसार आनन्दवर्द्धन-कालादारभ्य मम्मटपर्यन्तोऽभवत्। यद्यपि मूलतो ध्वनेः स्थापना रसाद् भिन्नरूपेऽभवत्; किन्तु व्यवहारे ध्वनी रसश्चाभिन्नोऽभूत्। ध्वनिवादिन एवं रसस्योत्कर्षं सर्वाधिकमकुर्वन्। आनन्दवर्द्धनो महता संरम्भेण प्रातिभशक्त्या, विलक्षणप्रज्ञाप्रभया च ध्वनेः स्थापनां कृतवान्। तत्र रसध्वनेः प्रधानमाकर्षणमासीत्। रसविवेचनं स्वतन्त्ररूपेणायं नाकरोत् प्रत्युत असंलक्ष्यक्रमव्यङ्ग्यरूपमेव कृतवान्। अयं महानुभावः काव्यस्यात्मतत्त्वं ध्वनिमेव स्वीचकार।

रसविषये मम्मटः सर्वेषामग्रणीर्वर्तते। स्वग्रन्थस्य मङ्गलश्लोके, काव्यप्रयोजने च स रसं प्रति स्वोत्कटानुरागमदर्शयत्। हेमचन्द्रो विद्याधरश्च प्रायः मम्मटमेवानुससार। अस्य वर्गस्यान्तिमः किन्तु समर्थ आचार्यः पण्डितराजो जगन्नाथ आस्ते। पण्डितराजः काव्यरसस्यानन्दमयतायाः प्रमाणे श्रुतिमुद्धृत्य रसमात्मानन्दस्वरूपतुल्यमघोषयत्—

'अस्त्यत्रापि रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति इत्यादिश्रुतिः' (रसगङ्गाधरः, प्रथमाननम्)। इत्थमेव स ध्वनेः पञ्चभेदेषु रसध्वनिं

सर्वेभ्यः प्रामाणिकं मत्वा; रसं रसध्वनेरात्मानं स्वीचकार। जयदेवोऽप्पयदीक्षितश्च रसविषयेऽनुदारौ न वर्तेते।

**रसवादिन आचार्याः**

आलोच्यकाले रसवादस्य प्रतिपादकः प्रथमग्रन्थोऽग्निपुराणमस्ति। अग्निपुराणे रसमाहात्म्यमसन्दिग्धमस्ति। 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।' इति अग्निपुराणकारो रसं काव्यजीवितं मन्यते। रसवादस्य द्वितीयो ग्रन्थो रामचन्द्रगुणचन्द्रस्य नाट्यदर्पणोऽस्ति।

शारदातनयस्य भावप्रकाशने रसं प्रति प्रबलाग्रहो विद्यते। अयं महाप्रभवः प्रबलो रसवादी अस्ति। अस्य काश्मीरशैवदर्शने प्रभूता आस्था वर्तते। अयं महानुभावो भट्टनायकेनाधिकः प्रभावितो वर्तते; परन्तु चतुर्दशशताब्द्या विश्वनाथकविराजो रसस्य माहात्म्यं सुविशदं वर्णयामास। अत एव काव्यलक्षणे स केवलं रसमेव प्रत्यतिष्ठिपत्। भानुदत्तस्य रसतरङ्गिणी रसमञ्जरी च द्वे अपि ग्रन्थरत्ने रसशास्त्रस्यैव विद्येते। इत्थं दृश्यते यद् रससिद्धान्त एतावान् व्यापकोऽस्ति यदस्य मानववादि आधारो वर्तमानसमये भविष्यद्युगे च मानकरूपेण सारवच्च विद्यमानः पूर्ववदेव स्थास्यति।

**रसनिष्पत्तिः**

भरतो मूलतो रसस्वरूपस्य व्याख्यानं नाकरोदपि तु रसनिष्पत्तेरेव व्याख्यानमकरोत्।

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः"।

भरतो रसनिष्पत्तेर्व्याख्यामित्थं कृतवान्— यथा हि नानाव्यञ्जनौषधिद्रव्य-संयोगाद्रसनिष्पत्तिर्भवति, यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनैरोषधिभिश्च रसा निर्वर्त्यन्ते, तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्तीति। भरतस्योपर्युक्तमौलिकसूत्ररूपव्याख्यानं परवर्त्तिकाले अनेकधाऽभवत्। व्याख्यानकर्तृषु प्रथमं नाम भट्टलोल्लटस्यायाति। भट्टलोल्लटस्य किमपि पुस्तकं न मिलति, केवलमभिनवगुप्तस्य विवेचने भट्टलोल्लटस्यापि मतस्य चर्चा विद्यते। सङ्क्षेपेणेयं चर्चाऽस्ति–अभिनवभारत्यामिति। तथा हि तेन स्थाय्येव विभावानुभावादिभिरुपचितो रसः। स्थायी तु अनुपचितः। स च रस उभयोरपि। मुख्यया वृत्त्या रामादावनुकार्ये; अनुकर्त्तरि च नटे रामादिरूपतानुसन्धानबलात्।

ध्वन्यालोकलोचने चाभिनवो लोल्लटमतं दर्शयति। तथा हि पूर्वावस्थायां यः स्थायी, स एव व्यभिचारिसम्पातादिना प्राप्तपरिपोषोऽनुकार्यगत एव रसः। नाट्ये तु प्रयुज्यमानत्वान्नाट्यरस इति केचित्। आचार्यमम्मट्टः स्पष्टरूपेण लोल्लटमतं प्रतिपादयति— "विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणै रत्यादिको भावो जनितः; अनुभावैः कटाक्षभुजक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः, व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये, तद्रूपतानुसन्धानान्नर्त्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लटप्रभृतयः। (का.प्र., चतुर्थ उल्लासः)।

भट्टलोल्लटो भरतमुनेरेवार्थं कृतवान्। लोल्लटो यथार्थवादी वस्तुपरक आसीत्, आत्मवादी व्यक्तिपरको नासीत्। मम्मटस्य संशोधनं परवर्त्यात्मवादि-रसकल्पनायाः परिणामः; परन्तु मम्मटो विवादास्पदमपि विषयं स्पष्टं करोति। भरत इव लोल्लटोऽपि मानयति यत् स्थायीभाव एव विभावानुभावादिभी रसे परिणमति।

**भट्टलोल्लटमतस्य शक्तिः**

१. भरतसूत्रस्य व्याख्यासु लोल्लटमतमेव मूलस्य सन्निकटे वर्तते। २. रसोऽनुकार्यगत इत्यस्याभिप्रायोऽस्ति यत् काव्यस्य नाट्यसौन्दर्यस्य च प्रत्यक्षः सम्बन्धो मूलपात्रस्य भावेन सह वर्तते। लोल्लटस्य मतं सर्वथोपेक्षणीयं नास्ति। ३. रसस्य तत्तद्व्याख्यायाः सूत्रपातोऽस्मादेव भवति। ४. अभिनेतृद्वारा रसानुभूतेर्घोषणा एकं नव्यं कलात्मकसौष्ठवं समुत्पादयति।

**लोल्लटमतस्य सीमा**

अभिनवभारत्यां शङ्कुको भट्टलोल्लटस्य अष्टौ दोषान् प्रदर्शयति; परन्तु ते न दोषाः, यतो हि स्थायिभाव एव रसरूपे परिणमति। अयं सिद्धान्तस्तु प्रारम्भादेव मान्य आसीत्। भट्टलोल्लटस्य दुर्बलमङ्गमिदमस्ति यदनुकार्यगतो रस इति। अत्र हि स मूलपात्रस्य कविनिबद्धपात्रस्य वा भेदं न स्पष्टं कृतवान्। अस्माद् दोषादन्योऽपि दोष उत्पद्यते यद् रसस्थितिः प्रत्यक्षेन्द्रियभावाभिन्ना सुखदुःखात्मिका भवति। लोल्लटस्य दार्शनिकपृष्ठभूमेश्चर्चा भवति; परन्तु सर्वं विवादास्पदमस्ति। कश्चिदेनं पूर्वमीमांसकः कथयति, कश्चिद् उत्तरमीमांसक इति कथयति, कश्चिच्च शैवदर्शनानुयायीति कथयति।

भरतसूत्रस्यान्यो व्याख्याकारः शङ्कुको मन्यते। अस्यापि मतस्य चर्चा, अभिनवगुप्तस्य साहित्ये मिलति; परन्तु काव्यप्रकाशकारः श्रीमम्मटः सर्वं तथ्यं

सङ्कलितं कृत्वा शङ्कुकमतं प्रकाशयति। तथा हि— राम एवायम्, अयमेव राम इति, न रामोऽयमित्युत्तरकालिके बाधे रामोऽयमिति, रामः स्याद् वा न वाऽयमिति, रामसदृशोऽयमिति च सम्यग् मिथ्या-संशय-सादृश्य-प्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे संयोगवियोगादि-काव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथानभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः संयोगाद् गम्यगमकभावरूपात्, अनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेना-नुमीयमानविलक्षणः, स्थायित्वेन सम्भाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति (का.प्र., चतुर्थ उल्लासे)।

शङ्कुकविवेचनं नाट्यकलादृष्ट्या उपयोगि वर्तते। शङ्कुकमते इदमपि स्पष्टं भवति यदनुकार्य इत्यनेन काव्यनिबद्धरामादेर्बोधो भवति, ऐतिसाहिकरामादेर्न भवति बोध इति। ऐतिहासिकरामादिस्तु कवेरनुकार्यः। नटानुकार्यस्तु कविनिबद्ध-रामादिरस्ति। शङ्कुकः सम्यग् मिथ्या-संशय-सादृश्यादिविलक्षणया चित्रतुरगन्यायेन नाट्यप्रतीतिरस्तीति स्वीकरोति, या प्रतीतिरुपयुक्ता वर्तते।

शङ्कुकमते रसाधारोऽनुकर्ताऽस्ति। निष्पत्तेरर्थोऽनुकृतिरस्ति, यतो हि स्थायि-भावोऽनुकृतो भूत्वैव रसरूपे निष्पन्नो भवति। प्रेक्षको विभावादिद्वारा रसस्यानुमानं करोति, अतस्तद्दृष्ट्या रसस्यानुमितिर्भवति। निष्कर्षतः शङ्कुकदृष्ट्या नटस्थितिः प्रधाना भवति; अतो मुख्यतो रसस्यानुकृतिर्भवति। अनुमितिस्तु अस्य मतस्य गौणोऽर्थो भवति। अभिनवस्य गुरुर्भट्टतौतः शङ्कुकस्यानुकरणं खण्डयति च।

भरतमतेऽपि रसानुकरणवादस्य न कोऽपि सङ्केतो मिलति। आचार्यमम्मटोऽवश्यमेव सहृदयदृष्ट्या विचारं कुर्वन् रसस्यानुमितिं कथयति।

**शङ्कुकमतस्य सीमा**

शङ्कुकमते प्रधानदोषो विद्यते यत् स रसस्यानुकरणं करोति। शङ्कुकस्य द्वितीयो दोषोऽनुमानस्य कल्पनाऽस्ति। लिङ्गैर्लिङ्गिज्ञानं परोक्षप्रक्रियाऽस्ति, रसस्तु प्रत्यक्षप्रक्रियाऽस्ति, अतः परोक्षप्रक्रियानुमानमपि रसोद्बोधाय समीचीनं नास्ति।

तृतीयो दोषः शङ्कुकमते वर्तते यद् रसे अभिनयतत्त्वं प्रधानं भवति काव्यतत्वं गौणो भवति। अस्मन्मते काव्यं विद्यास्ति, अभिनयस्तु उपविद्यास्ति, इदमपि विचारणीयम्।

शङ्कुकमते शक्तयस्सन्ति— शङ्कुको लोल्लटस्य अनुकार्यमतं स्पष्टं कृतवान्। स काव्ये निबद्धस्य रामादेर्बोधं करोति अनुकार्याय। शङ्कुकः कलाप्रतीतिं

स्थापयति, अयमपि वरीयान् पक्ष उपस्थाप्यते। शङ्कुकः सामाजिकस्यापि महत्त्वं मनुते। शङ्कुकः प्रथमं दार्शनिकदृष्टिं प्रस्तौति, अनुमानदृष्टिस्तु न्यायदर्शनस्य वरीयसी दृष्टिरस्ति।

**भट्टनायकः**

अभिनवगुप्तपादाचार्योऽभिनवभारत्यां ध्वन्यालोकलोचने च भट्टनायकस्य रसविमर्शं प्रतिपादयति। आचार्यमम्मटोऽपि सारनिरूपणपद्धत्या सम्यग् निरूपणं भट्टनायकस्य कृतवान्। आचार्यमम्मटस्य दृष्टिरित्थमस्ति— ''न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते, नाभिव्यज्यते; अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते'। (का.प्र., चतुर्थ उल्लासः)।

भट्टनायको निषेधपक्षं विधिपक्षं द्वयमपि निरूपयति। स रसप्रतीति-मुत्पत्तिमभिव्यक्तिञ्च खण्डयति। स लोल्लटमतं खण्डयति, सहैव स ध्वन्यालोककारस्य ध्वनिं व्यञ्जनां च खण्डयति। भट्टनायकः स्वविधिपक्षे व्यापारत्रितयं पुरस्तात् करोति— अभिधा भावकत्वं भोजकत्वञ्चेति व्यापारत्रितयम्। भट्टनायकस्य स्थापना मौलिकी, विचारयोग्या अभिनवा च वर्तते। एभिः व्यापारैः सः काव्यजगति कालव्यापिनीं समस्यां समादधाति। साधारणीकरणस्य सर्वेभ्यः प्राक् प्रतिपादनं तस्य मौलिकं महद् योगदानमस्ति।

रसास्वादस्य स्वरूपं सः स्वतात्त्विकव्याख्यया प्रथममेव सम्यग् निदर्शयामास। रसास्वादः काव्यानन्दो वा चित्तस्यात्मनि विश्रान्तेर्नामास्ति। इयं विश्रान्तिः सत्त्वगुणस्योद्रेकावस्थायां भवति। यदा रजोगुणतमोगुणयोः शमनं तु भवति; परन्तु सर्वथा अभावो न भवति। अत इयं विश्रान्तिरात्मविश्रान्तेर्हीना भवति। अतो ब्रह्मानन्दसविधा प्रतीतिरस्ति, पूर्णा ब्रह्मानन्दप्रतीतिर्नास्ति। अनया रीत्या भट्टनायक एव ब्रह्मास्वादस्य रसास्वादस्य स्वरूपनिर्णयं प्रथममकरोत्। रसस्यात्मानन्दरूपताया निर्भ्रान्तविवेचनं भट्टनायक एवादौ कृतवान्। साधारणीकरणसिद्धान्तद्वारा करुणादेरानन्दरूपताया अत्यन्तप्रामाणिकरीत्या स एवाकरोत् प्रतिपालनम्।

साधारणीकरणस्य सम्यग् विनियोगं कृत्वा विश्वसमीक्षाशास्त्रे समापतितां बहुकालिकीं द्वन्द्वात्मिकां समस्यां सम्यग्रीत्या भट्टनायक एव समादधौ। इत्थं

रसशास्त्रे भट्टनायकस्य निष्प्रतिद्वन्द्वं सामर्थ्यमस्ति। भट्टनायकमते अभावा दोषा अपि विद्यन्ते। तथा हि भट्टनायको रसस्यास्वाद्यास्वादरूपं भेदं कृतवान्, रसस्य रसभोगस्यापि भेदं कृतवान्; परन्तु अभिनवगुप्तः केवलं रसमास्वादरूपमेव घोषयति। अधुना तु भारतीयसमीक्षाशास्त्रे तस्य मतमेव निर्विवादमस्ति; परन्तु भट्टनायकमतं विवादास्पदमस्ति। भट्टनायको रसस्य प्रतीतिं भुक्तिं च मिथ्याभेदरूपेण स्थापयतीदमपि न युक्तिसहम्। भुक्तिरपि प्रतीतिरेवास्ति।

भट्टनायको भुक्तेस्स्वरूपव्याख्यां करोति। परन्तु भुक्तेः स्वरूपं तात्त्विकं नास्तीत्यभिनवगुप्तः कथयति। भट्टनायकः सत्त्वोद्रेकं तु प्राधान्येन स्वीकरोति; परन्तु रजोगुणतमोगुणयोरभावं न स्वीकरोति। अतो रसानन्दे द्रुतेर्विस्तारस्य विकासस्य च स्थितिर्विद्यते, अत एवाभिनव आक्षिपति यत् कवित्वेनेयता अनेकाः प्रवृत्तयो भवितुमर्हन्ति। भावकत्वभोजकत्वयोः कल्पनायाः शास्त्रीयं प्रमाणं नास्ति, एतयोः कार्यं केवलं व्यञ्जनयैव सेत्स्यति।

**अभिनवसिद्धान्तः**

माननीय आचार्याभिनवः कथयति यदस्माभिः पूर्ववर्त्तिनामाचार्याणां खण्डनं न कृतमेवं केवलं विवेकानुसारं संशोधनं कृतम्, कथयति च— 'पूर्वं प्रतिष्ठापितयोजनासु मूलप्रतिष्ठाफलमामनन्ति'। अभिनवभारत्यां विशेषरूपेण ध्वन्यालोकलोचने च सः स्वमतं सिद्धान्तयति। लोचने च व्यञ्जनाया निरूपणेन तस्य सिद्धान्तः सर्वथाभिनवं रूपं धारयति।

अभिनवमतं सर्वथा निरपेक्षरीत्या मान्यरीत्या चाचार्यमम्मटः स्थापयति। तथा हि— 'लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्वादलौकिकविभावादिशब्द-व्यवहार्यैर्ममैवैते, शत्रोरेवैते, तटस्थस्यैवैते, न ममैवैते, न तटस्थस्यैवैते, न शत्रोरेवैते इति सम्बन्धविशेष स्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मकतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमित-प्रमातृभावोन्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादि-जीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत् सर्वमेव तिरोदधद् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः'। (का.प्र., चतुर्थ उल्लासे)

अभिनवमते— १. सर्वथा आस्वाद एव निर्विघ्नप्रतीत्या ग्राह्यो भाव एव रसः। २. रसप्रतीतौ सहृदयस्यात्मैव पुरस्ताद् भवति, आत्मैव रसप्रतीतिं करोति; परन्तु प्रतीतिर्व्यक्तिगता न भवति। ३. साधारणीकरणं व्यष्टिधरातल एव न भवति, समष्टिधरातलेऽपि भवति, आत्मतत्त्वस्याद्वैततायाः कारणात् सर्वे सामाजिका भावस्य समानरूपेण प्रतीतिं कुर्वन्ति, येन साधारणीकरणमत्यन्तं पुष्टं भवति। अभिनवगुप्तः श्रीतन्त्रालोकेऽस्य समष्टिगतरसानुभूतेरतीवसुन्दरं विवेचनं कृतवान्। ४. स्थायीभावः प्रत्येकं सहृदयानां चित्ते संस्काररूपेण विद्यमानोऽस्ति, अतः सर्वे सामाजिका रसास्वादं कुर्वन्ति। अभिनवस्याधारभूतं दर्शनं शैवं दर्शनमस्ति।

**शक्तिः**

अभिनव एव प्रथममेकान्तेन रसस्य सहृदयनिष्ठरूपस्य प्रतिष्ठां कृतवान्। भट्टनायकमतेऽपि रसो भोग्य आसीत्, अतो वस्तुनिष्ठस्वरूपं तिरोहितं नासीत्।

अद्वैतसिद्धान्तस्यात्मानन्दरूपेण सहैवानन्दवर्द्धनस्य व्यञ्जनावादस्य सहजं समन्वयमभिनवगुप्त एवाकरोत्, येन समन्वयेन च रसानुभूतेरभिव्यक्तेश्च संश्लिष्टं सिद्धान्तं प्रतिपादयामास। समष्टिगतरसस्य कल्पनाऽपि अभिनवगुप्तस्यैव अस्ति। मूलतोऽभिनवो व्यक्तिवादी अस्ति; परन्तु रसचक्रस्य पूर्णतां सामूहिक-रसचेतनायामेवाकरोत्।

सामाजिककलानुभूतेः स्थापनामधुना साम्यवादः करोति; परन्तु पूर्वमेवाभिनवः स्वरूपेणैतस्या पूर्वव्याख्यानं कृतवान्। अभिनवः स्वपाण्डित्येन भरतमतं छादयामास। भरतमतस्य पुनराख्यानमपि वक्तुं शक्यते इदम्।

अभिनवसिद्धान्ते रसव्याख्यानं पूर्णत आत्मपरकं बभूव, येन सम्पूर्णं बलं सहृदयतायां पतति। अतः काव्यास्वादे रस एवालौकिकतायाः प्रभाव एतावान् भवति, येनाधुनिका विरता भवन्ति। अभिनवस्य प्रतिभा तु बलीयसी अस्ति; परन्तु शैली निबिडाऽस्ति येन सामान्यतथ्यानामवहेलना भवति। अन्येऽपि आचार्या रसस्थितिं सहृदयगतां स्वीकुर्वन्ति, व्यञ्जनां न मानयन्ति। धनञ्जयो धनिको महिमभट्टश्चैतादृशा एव विद्वांसः सन्ति।

आचार्यमम्मटस्य सिद्धान्त एतादृशो मान्योऽभवद् येनाभिनवस्यापि मतं क्वचित् तिरोहितं जातम्, स शैवाद्वैतमतं निरस्याद्वैतवेदान्तं शाङ्करमेव स्वीचकार। पण्डितराजजगन्नाथोऽपि तथैवाकरोत्। आचार्यविश्वनाथोऽभिनवमतमेव मानयामास—

विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।
रसतामेति रत्यादिः स्थायीभावः सचेतसाम्।।
(सा.द., तृतीयपरिच्छेदः)

परन्तु व्यक्त इत्यस्यार्थं सः परिणतिमकरोद् दुग्धेन दधि इव, न तु दीपेन घट इवेति। तदुक्तं लोचनकारैः— "रसाः प्रतीयन्ते इति त्वोदनं पचतीति व्यवहारवत्"।

**विश्वनाथस्य रसस्वरूपवर्णनम्**

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।।
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः।। (सा.द., तृतीयपरिच्छेदः)

स्थाने स्थाने विश्वनाथो भट्टनायकस्य शब्दावलीं स्वीकरोति। पण्डितराजस्य जगन्नाथस्य रसनिरूपणेऽपूर्वव्यक्तित्वमस्ति। अभिनवं मम्मटं च सः स्वीकरोति; परन्तु कथयति यद् भग्नावरणाचिद्विशिष्टो रत्यादिः स्थायिभावो रस इति। पण्डितराजः शाङ्कराद्वैतवेदान्तं स्वीकरोति। कथयति च— काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनाव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायामनन्तरं च सहृदयतोल्लासितस्य भावनाविशेषस्य दोषस्य महिम्ना कल्पितदुष्यन्तत्वावच्छिन्ने स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यशकुन्तलाविषयकरत्यादिरेव रसः। (रसगङ्गाधरः प्रथमाननम्)

पण्डितराजस्य सर्वं पूर्ववद् अभिनवमम्मटादिवदेवास्ति; परन्तु सः प्रमातुः चित्ते भावानारूपदोषस्योद्भावनां करोति, येन प्रमातुरात्मा कल्पित दुष्यन्तत्वेनाच्छादितो भवति, येनाश्रयेण सह तस्य तादात्म्यं भवति।

**साधारणीकरणम्**

यद्यपि विदुषां मतविवेचने पुष्कलरूपेण साधारणीकरणस्य विवेचनं जातम्, परन्तु इदं मतमतीव रससिद्धान्ते ज्यायोऽस्ति। अतः पुनर्वच्मि यद्यपि साधारणीकरणस्यालोको भरतस्य नाट्यशास्त्रे एवं मिलति। यथा हि— एभ्यश्च सामान्यगुणयोगेन रसा निष्पाद्यन्ते; परन्तु समुचितप्रतिपादनं भट्टनायक एव करोति।

विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानो रसः सत्त्वोद्रेक-प्रकाशनानन्दमयसंविद् विश्रान्तिसतत्त्वेन भोगेन भुज्यते।

अनेन लभ्यते यत् साधारणीकरणं विभावादेर्भवति। साधारणीकरणमेव भावकस्य व्यापारस्य प्राणभूतमस्ति। अभिनवो भट्टनायकमतं संशोधयामास। यथा हि— आश्रयस्यालम्बनस्य साधारणीकरणेन स्थायीभाव एव देशकालादेर्बन्धनाद् भुक्तो भवति। स्थायीभाव एव सर्वप्रकारस्य व्यक्तिसंसर्गाद् मुक्तो भवति। इदं साधारणीकरणं परिमितं न भवति; प्रत्युत व्यापकं भवति। अनादिसंस्कारेण चित्रितचित्तानां समेषां सामाजिकानामेकात्मिकैव वासना भवति। अतः सर्वे प्रतीतिं कुर्वन्ति। स्थायिभावस्यापि साधारणीकरणं भवति। स्थायिभावस्य साधारणीकरणादेव व्यक्तिसंसर्गस्य भुक्तिर्भवति, येन सुखदुःखात्मिका भावना लुप्ता भवति। साधारणीकरणं वैयक्तिकं न भवति, प्रत्युत सामूहिकं भवति।

विश्वनाथः पूर्वोक्तमेवोरीकरोति—

साधारण्येन रत्यादिरपि तद्वत् प्रतीयते।
परस्य न परस्येति न ममेति ममेति च।
तदास्वादे विभावादेः परिच्छेदो न विद्यते।।

(सा.द., तृतीयः परिच्छेदः)

किन्तु स आश्रयेण सह प्रमातुरभेदस्य तादात्म्यस्य वाधिकं महत्त्वं प्रस्तौति—

व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः।
तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः।।
प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते।
उत्साहादिसमुद्बोधः साधारण्याभिमानतः।।
नृणामपि समुद्रादिलङ्घनादौ न दुष्यति।।

(सा.द., तृतीयःपरिच्छेदः)

पण्डितराजोऽपि नव्यन्यायालोके आश्रयेण सह तादात्म्यस्य कथनं कृतवान्; परन्तु सन्दर्भेऽस्मिन् स दोषस्य प्रयोगं शुद्धं मनुते। साधारणीकरणस्य शक्तिः किञ्चित्करैव चेत् सर्वेषु भवति, अन्यथा जीवनस्य स्थितिरेव न स्यात्; परन्तु साधारणीकरणस्य विशेषशक्तिस्तस्मिन्नेव भविष्यति, यस्य भावशक्तिर्विशेषरूपेण समृद्धा भवेत्, अनुभूतिरपि जागृता स्यादिति।

उपर्युक्तं सर्वं विवेचनं सुप्रसिद्धं सुपरिचितं पारम्परिकमस्ति। अधुना वैदिकवाङ्मयं पुरस्कृत्य रसस्य समष्टिगतं वाङ्मयमधिकृत्य तस्य सर्वङ्कषं प्रकृति-मानवव्याप्तं समञ्जसं सहभागिरूपं सहृदयहृदयसंवादिप्रमुखं नवीनालोकदीप्तं विवेच्यते किञ्चित्।

ऋग्वेदस्य बृहस्पतिसूक्ते वाचो रचना सख्यभावस्य ज्ञानाय अतीवावश्यकी वरीवर्त्ति। साधारणीकरणस्य मूले सख्यभावस्य अर्थात् सहभागित्वस्यावधारणा वर्तते। वेदे तात्त्विकं रूपमावृतं कठिनं च वर्तते, वेदस्य भाषाऽपि निबिडाऽस्ति। वेदाः पुराणानि समुद्र इवावगाहने दुर्गमाः सन्ति, एतयोर्दुर्गमत्वं परिकल्प्यैवागमानां साहित्यरसानां भक्तिरसानाञ्च वर्णनं निगममूलकमेवानुसृत्य सहृदयमात्रसहं सुगमसरण्या साहित्यं सर्जयामासुः साहित्यकारा वाल्मीकिकालिदासादयः। अत एव विश्वकविस्तुलसीदासो भाषायां मानसे कथयति— 'वेद पुराण उदधि घन साधू' अर्थाद् वेदाः पुराणानि सामान्यजनेभ्य उदधेरिव अपेयानि दुरवबोधानि सन्ति, अतस्तेषामध्ययनाय तात्त्विकरहस्याविष्करणायैव वेदादीनां घनरूपेणापेयमपि जलं गृहीत्वा पेयं सर्वग्राह्यं मनोज्ञं कृत्वा साहित्यिकाः साधवः साहित्योपज्ञं कृतवन्तः।

अत एव— 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि' (ऋ.सं. १०।७१)। अर्थात् साहित्यरसज्ञाः सखायः सन्ति। सख्येन सहभागित्वं क्रियते तैः।

साहित्यनिष्णातैरपि रसे साधारणीकरणस्य, सहृदयस्य हृदयसंवादस्य परिकल्पनं कृतम्। समाजे समेषां मानवानां प्राणिनां प्रकृतीनाञ्च सहभागित्वायैव साहित्यस्य महती आवश्यकताऽस्ति। न केवलं साहित्यस्य निरपेक्षज्ञानाय परिकल्पनमित्थमेवान्यस्मिन् सूक्ते उक्तम्—

समानी व आकूतिः समानं हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति।। (अथर्ववेदः–६।६४)

संस्कृते समम्, समानम्, सह, साकम् एतेषां सहित एवार्थः। अत्र न केवलं स्वस्मै, अस्तित्ववतः सहितस्य भावः कथञ्चिद् द्योत्यते; अपि त्वन्तरात्मनः सख्यस्य समष्टिरूपस्य विश्वात्मनश्च साहचर्यमपेक्षते। अत्र सख्यस्य सहभागितैवार्थः। अत एव कविकुलगुरुः कालिदासो जगन्मातुः सीतायाः प्राणेभ्योऽपि गरीयस्या अपवादभयात् कृतं निष्कासनं वर्णयन् कथयति, सीताया दुःखं न केवलं व्यक्तिगतदुःखम्, तद्दुःखं तु जानपदिकं दुःखम्, विश्वात्मकं दुःखम्, यद् मानवेन सहभागिता सम्पूर्णायाः प्रकृतेरस्ति।

नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद् रुदितं वनेऽपि।।
(रघुवंशः-१४।६९)

इत्थमेव सीताया हरणे विकलो रामो लतावीरुधं मृगीणाञ्च सहभागित्वं विजयानन्तरं पुष्पकविमानारूढः संवेदनया सीतां कथयति—

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन् माम्।
व्यापारयन्तो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि।।
(रघुवंशः-१३।२५)

सहृदयता कालिदासशब्दे पर्युत्सुकीभवनमस्ति, यद् दुःखसंवेदनायैव भवति। सहृदयमात्रे प्रकृतौ च भवति। मानवप्रकृत्योः सख्यम्, कौटुम्बिकत्वम्, सहभागित्वम्,, परस्परं तत्सुखसुखित्वं, सुतरां भवति, अत एव भवभूतिः कथयति यत् सहृदयता तच्चैतन्यमस्ति, यद् दुःखसंवेदनायैव भवति, सहृदयमात्रे भवति। "दुःखसंवेदनायैव रामे चैतन्यमागतम्"।

इत्थं रसशास्त्रस्य केवलं शास्त्रावगमायैवापेक्षा न भवति; अपि तु साहित्यस्य रसस्य च फलितार्थजीवनमूल्यं मानवानां समेषां प्राणिनां प्रकृतीनाञ्च सहभागित्वाय, सख्याय, बन्धुत्वाय, परस्परं तत्सुखसुखित्वायैव शोभते। तज्जीवनमूल्यं नितरां प्राचीनकाले निर्दिष्टं भवदधुनापि भवति। उत्तरोत्तरं सनातनराष्ट्रियजीवनमूल्यं रसात्मकं कालिदासादिसाहित्ये, अधुनातनेऽपि च भविष्यति, अस्माकं दिशो निर्देशायेति शम्।

●

# राष्ट्रियः कविः कालिदासः

**श्रीनरेन्द्रकुमारपाण्डेयः**
साहित्यविभागाध्यक्षः
श्रीसनातनभैरवशङ्करब्रह्म(संयुक्त)संस्कृतमहाविद्यालये
मीरजापुरम्

❀ ❀ ❀

कालिदासः स्वसाहित्ये सांस्कृतिकचेतनां दर्शयन् स्वराष्ट्रस्यान्तर्बहिश्च राष्ट्रियक्रियाकलापं व्यापकरूपेण प्रदर्शयामास। एतस्य राष्ट्रियसंव्यूहनमेतादृशं सङ्कल्पितमस्ति, यस्मिन् भारतस्य ऋषीणाम्, सताम्, कलाकर्तॄणां विचारान् समीचीनतया राष्ट्रियप्रतिबिम्बेन समाहितान् कारयामास कविकुलगुरुः कालिदासः।

भारतस्य यावत् सौन्दर्यमस्ति, पशुधरातलादूर्ध्वं चित्रितमस्ति। तत्र राष्ट्रिया नियतिरस्ति। यद्यद् भारते ललितं भुवनमोहनमस्ति, तत्सर्वं राष्ट्रियपरिवेशेन महाकविः स्वनिसर्गभारत्या संरूपयामास। कश्चित् कविः प्रस्तौति—

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासाः।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव।।

इदं कथनं यथा कवेर्व्यापककविकर्मसु समीचीनमस्ति, तथैव राष्ट्रिय-सहजमानकस्य चित्रणेऽपि सत्यमस्ति।

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः।।

(कुमारसम्भवम्–१।१)

अस्मिन् श्लोकेऽस्माकं हिमालयः पृथिव्या मानदण्डोऽस्ति। अनेन कथनेन कविना पुरस्कृतं यत् पूर्वापरौ तोयनिधी वगाह्य मानदण्डो हिमालयः सुतरां व्यापकं राष्ट्रियवैशिष्ट्यं भारतस्य धारयति। 'पितुः प्रदेशास्तव देवभूमयः' इति कथनेन न केवलं देवभूमेर्वाच्यार्थः प्रतिभाति; प्रत्युत प्रयोजनवत्या वाचा प्रतिभाति यत् कालिदासो भारतीयराष्ट्रस्य परमोदात्तरूपं निरूपयति।

रघुवंशस्यारम्भे कविर्भारतस्य राष्ट्रियमानकमेव सञ्चिनोति—

आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्।
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।।
यथाऽपराधदण्डानां यथाकालप्रबोधिनाम्।
त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्।।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्।

(रघुवंशमहाकाव्यं प्रथमसर्गः)

उक्तश्लोकेषु यद्यद् वैशिष्ट्यं निरूपितं तत्तद् राष्ट्रियतासम्पन्नो देश एव कर्त्तुं प्रभुरस्ति।

कालिदाससमये भारते बाह्यजातयोऽप्यागताः; परन्तु सर्वा भारतीयसमाजे मिलित्वा एकीकृता बभूवुः। एतादृशी पाचनशक्तिः स्वतन्त्रराष्ट्र एव भवति। कालिदासो विवेकवान् चिन्तकः कविरासीत्, अतः सर्वा जातीः स्वकीया बहिर्भूताश्च सम्मेल्य केवलं भारतीयरूपमेव निर्दिष्टवान् कविः। तेषु जनेषु न कोऽपि उच्चावचभावो भेदभावश्चासीत्। यथा भागवतमहापुराणे कथितम्—

किरातहूणान्ध्रपुलिन्दपुक्कसा आभीरकङ्का यवनाः खसादयः।
येनैव पापा यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः।।

इत्यत्र भागवतीये समाचारे विदेशिनोऽपि मिलित्वा भागवता बभूवुः। इत्थमेव कालिदाससमये वैदेशिका अपि मिलित्वा भारतराष्ट्रिया जाताः।

भारतवर्षे वैदेशिकानामनेकाचाराणां नृत्यगीतोत्सवानामादानमपि जातम्, परन्तु अस्माकं महान् कविर्वैदेशिकसांस्कृतिकरूपं स्वप्रातिभकृत्या मोहनं शोभञ्च राष्ट्रियसन्दर्भे प्रयोजितवान्। कालिदासः स्वसमये शास्त्रं पुराणमुपनिषदादिकञ्च सम्यगधीत्य रामायणमहाभारतयोः वस्तुतश्च, भावपञ्चामृतमिवैकीकृत्य अद्भुतं नव्यं राष्ट्रियरूपं निरूपितवान्। अस्य साहित्ये राष्ट्रियरूपे सुकुमारतया सह सुशीलतायाः, मानसिकमृदुतया सह चारित्रिकदृढतायाः, अपारवैभवेन सह विपुलवैराग्यस्य, सौन्दर्येण सह धर्मस्य विलक्षणमणिकाञ्चनयोगो दृश्यते। पार्वत्या यथा काञ्चननिभं सौन्दर्यं कविः चित्रितवान्, तथा न क्वापि दृश्यते।

योगिराड् अरविन्दो लिखति यत् कालिदासेन काव्यसृष्टेः स्वरूपं रूप- रस- घ्राण-स्पर्श-स्वाद-कल्पनानाञ्च आनन्दस्य तन्तुप्रतितन्तुभ्यां व्यरचि। कालिदासो

नैतिकतामपि रसमयीं व्यधात्। कालिदासस्य राष्ट्रियरूपायने क्वचिदपि दौर्बल्यं नास्ति।

कुमारसम्भवे, शाकुन्तले च महाकविरनाहूतां रूपासक्तिं भस्मसाद् अकरोत्। इत्थं स भारतीयमनीषायाः सुचिन्तितं तत्त्ववादं भुवनमोहनरूपं व्यधात्। सङ्क्षेपेणेदं दृश्यते यद् अस्माकं महाकविर्भारतवर्षस्यान्तरात्मने वाग्वैभवं प्रादात्। इत्थमिदमपि सूच्यते यत् कालिदासो वस्तुतो भारतस्य राष्ट्रियकविरस्ति। तस्य साहित्ये भारतवर्षस्य यत् किमपि सर्वोत्तममस्ति, तदेव स्वतःशुचिना पवित्रतया च ध्वन्यते। कालिदासात् पूर्वं कालिदासस्य समये च भारतवर्षं नव्यया राष्ट्रियतया च परिपूर्णमासीत्।

अस्माकं कविः सर्वं सारस्वतवैभवं, यद् भूमसाहित्यञ्च स्वसमये उपबृंहितमकरोत्, तत्सर्वं सम्पूर्णभारतस्य हृदयवैभवं बुद्धिवैभवं सङ्कलितेतिहासवैभवं च स्वसाहित्ये परिष्कृतरूपेण समग्रहीत्। उपनिषदो ज्ञानमार्गादद्वैतसाधनं सम्यग् गृहीतवान्। रामायणात् मानवीयादर्शं स्वसाहित्ये गृहीतवान्। महाभारताद् बौद्धिकचारित्र्यं गृहीत्वा साहित्यपटले निबबन्ध। धर्मसूत्रात् स्मृतेश्च स्वाचारसंहितां विनियोजितवान्। पुराणेभ्यो बृहत्तरमानवीयमूल्यानि, रूपकं च गृहीत्वा व्यवहार्यरूपेण नवीनरूपेण प्रस्तुतवान्। भरतमुनेर्नाटकीय-सन्दर्भमादर्शयामास। इत्थं राष्ट्रसमृद्धये सर्वं सर्वङ्कषं जीवनमूल्यं प्रत्यपादयत् सः।

भारतस्यैतिहासिकं, भौगोलिकं, राजनीतिकजीवनदर्शनं तु सः स्वसाहित्ये समाजहारैव, इतोऽपि महार्घं जीवनदर्शनं भारतान्तरात्मानं सम्मूर्त्तयामास, येन तस्य कान्तासम्मितसाहित्ये राष्ट्रियतायाः भारतमूलिकायाः सन्दर्भः प्रत्यक्षसरण्या, अन्तरात्मसरण्या च सम्यक् सुविचार्य कृतोऽस्ति।

राष्ट्रस्य सम्यग्बोधाय शब्दब्रह्मणः शरणमावश्यकम्, तथा हि राष्ट्रशब्दः 'राजृ'-दीप्तौ धातोर्व्युत्पन्नः। राज इत्यस्यार्थः शोभितो दीप्तो भवति, न शासनमर्थः। अस्माकं वेदे पृथ्वी, भूमिः, मही इत्यासामुल्लेखो महता स्नेहेन कृतः। मातृत्वस्य धारणाऽपि कृता तासु, नैव पितृत्वस्य धारणा कृता। यतो हि माता रचयति धारयति च। सा सर्वेषां माताऽस्ति। मनुष्याणां माताऽस्ति। वनस्पतीनां, पशूनां, पक्षिणामथ च सर्वासां प्रकृतीनां च माताऽस्ति। अथर्ववेदस्य पृथ्वीसूक्ते व्यापकभावस्य निदर्शनमस्ति। इतिहासवेत्तार इमं सूक्तं राष्ट्रभावनाया उद्गमकारकं स्वीकुर्वन्ति। राष्ट्रस्य परिकल्पना सुघटितैक्येन भवति। शुक्लयजुर्वेदे

राष्ट्रस्यावाप्तये आहुतिरपि दत्ताऽस्ति। राष्ट्रकामनायाः कृते यज्ञे राष्ट्रियतायाः प्राप्त्यै याचनाऽपि कृताऽस्ति। कालिदाससाहित्ये उपर्युक्तपटलं सुविचार्यैव राष्ट्रियभावस्य वर्णनं कृतमस्ति। मातृरूपाया भूमेः, भारत्या वाचः, मातृत्वमूलायाः स्त्रियास्तथा च वैदिकावधारणानामेव पल्लवनं भारतवर्षमस्ति।

शाकुन्तले कविर्वर्णयति यत् शकुन्तला कन्यावस्थायामेव मातृत्वस्य परिपोषणस्याचरणं करोति। सा तपोवनस्यैकबृहत्कुटुम्बस्य दायित्वेन सम्भरिताऽऽसीत्। दुष्यन्तेन सह प्रणयात् पूर्वमाश्रमस्य वृक्षान् सिञ्चति, घटसिञ्चनेन मातृस्तनदुग्धदानेनेव वात्सल्यमाचरति। वृक्षाणां पल्लवं न त्रोटयति प्रियमण्डना सत्यपि। वृक्षान् पुत्रस्नेहं ददाति। निरन्तरं रक्षति च वृक्षान्। लघु बृहद् वा वृक्षकान् सिञ्चयित्वैव जलं गृह्णाति। कालिदासस्य पार्वत्यपि यदा विश्वमूर्तिं शिवं प्राप्तुं तपस्यति, तदा तपस एकाङ्गमिदमप्यस्ति यद् घटस्तनेन सा वृक्षान् स्तन्यपानं कारयति—

> अतन्द्रिता सा स्वयमेव वृक्षकान् घटस्तनप्रस्रवणैर्व्यवर्धयत्।
> गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति।।
>
> (कुमारसम्भवम्, ५।१४)

आरण्यकं धान्यं बीजं च पुत्रस्नेहेन सा हरिण्या मुखे, हरिणशिशूनां मुखे च ददाति। स्नेहसम्भरिता सा हरिणनयनाभ्यां स्वनयनयोरायामं मापयति—

> आरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः।
> यथा तदीयैर्नयनैः कुतूहलात् पुरः सखीनाममिमीत लोचने।।
>
> (कुमारसम्भवम्, ५।१५)

भारतप्रकृतिः संस्कृतसाहित्ये विशेषतया कालिदासकाव्ये एतादृशी सम्मिलिताऽस्ति यद् यदि प्रकृतिं पृथग्भूतां कुर्यामस्तदा मनुष्योऽपूर्णो भवति। प्रकृत्या सहैव भारतस्य राष्ट्रियता चरितार्था भवति। वाल्मीकेराश्रमे सीतां त्यक्त्वा यदा लक्ष्मणोऽवशः सन् याति, तदा सीता परमविद्रुता भूत्वा भृशं रोदिति, तया सह सम्पूर्णं वनं रोदिति। कालिदासः कथयति—

> नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः।
> तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद् रुदितं वनेऽपि।।
>
> (रघुवंशमहाकाव्यम्, १४।६९)

इयं भारतराष्ट्रस्य प्रकृत्या सह साहचर्यं, समभागित्वं चैतन्यमैक्यभावना चास्ति। इत्थमेव प्रकृतेर्भयावहभावनाऽपि मानवीयचेतनाया अभिन्नमङ्गम्। महाकविः सम्पूर्णतायामेव राष्ट्रियसौन्दर्यं पश्यति, अत एव स मातृभावस्य सर्वेभ्योऽधिकां प्रतिष्ठां मनुते। पूर्वमेवोक्तं मया यत् कालिदासस्य नायिका प्रेयसीमात्रं नास्ति, प्रेयस्याः पूर्वमेव पार्श्वस्थायाः प्रकृतेः सा माताऽस्ति। तस्यां वात्सल्यमस्ति। प्रकृतिभ्यो मानवेभ्यश्च सममेव मातृत्वं ददती भारतीया नारी अखण्डराष्ट्रत्वं स्वाचरणेनैवाविकलरूपेण व्यञ्जयति। भारतभावस्य अथ च भारतराष्ट्रस्याभिव्यक्तिः कालिदासे प्रकृतिमानवयोः सहभावमाध्यमेनैवाभूत्।

राष्ट्रभाषाया हिन्द्या लेखक आचार्यशुक्लो मेघदूतं पठित्वा कालिदासं भारतस्य सर्वश्रेष्ठो राष्ट्रकविरिति उक्तवान्। अस्मिन् कथने स मेघदूतप्रसङ्गमुदाहृतवान्, यत्र हि कालिदासो मेघयात्रामार्गं परिवर्त्य राष्ट्रियभावाय प्रसङ्गमुद्भावयति—

त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः।
सद्यः सीरोत्कषणसुरभिक्षेत्रमारुह्य मालं
किञ्चित् पश्चाद् व्रज लघुगतिर्भूय एवोत्तरेण।।

(मेघदूतम्, पूर्वमेघः)

कृषकवध्वो मेघं प्रशंसन्ति कृतज्ञतां च प्रदर्शयन्ति यदस्माकं कृषिफलं त्वदधीनमस्ति। ताः प्रीतिस्निग्धभावं सहजस्वदृष्ट्या ददति च। मेघश्च कृतज्ञतां श्रुत्वा कृतज्ञतारसं भावुकतया पिबति। एतच्चित्रणं कालिदासो राष्ट्रियभावस्य कृषिप्रधानदेशस्य भावं सम्यग् आधाय करोति।

राजा दुष्यन्तः शकुन्तलाया वियोगात् पीडितोऽपि स्वकर्तव्यं प्रजारञ्जनमूलकं न विस्मरति, न्यायधर्माभ्यां सह स राज्यकार्ये, प्रजाध्याने च संलग्न आसीत्। अयं राष्ट्रियभावः कियत् श्लाघनीयमस्ति। पुत्रहीनानां बन्धुरहितानां प्रजानां राजा दुष्यन्त एव पुत्रो बन्धुश्च।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पाताद् ऋते तासां दुष्यन्त इति घुष्यताम्।।

(अभिज्ञानशाकुन्तलम्, ६।२५)

भरतवाक्येऽपि कालिदासः प्रकृतिं सरिच्छैलद्रुमादीन् वन्यप्राणिनश्च न विस्मरति, प्रकृतिस्वरूपां जनतां च न विस्मरति, भारतवर्षस्य मूलं सारस्वतवैभवं वेदं च न विस्मरति, न विस्मरति चोपासनाम्।

प्रवर्त्ततां प्रकृतिहिताय पार्थिवः सरस्वती श्रुतिमहती महीयताम्।
ममापि च क्षपयतु नीललोहितः पुनर्भवं परिगतशक्तिरात्मभूः।।
(अभिज्ञानशाकुन्तलम्, सप्तमोऽङ्कः, भरतवाक्यम्)

अहो धन्यं कालिदासस्य साहित्यं यत्र भारतस्य व्यापको राष्ट्रियभावः परिप्लुतो वर्तते।

इत्थं कालिदासो निरन्तरं राष्ट्रियभावधारायाः सङ्कीर्तनं करोति। अस्मै राष्ट्रियचिन्तनाय सः स्वदेशस्य चिन्मयरूपमपि क्वचित् क्वचित् स्मरति। रघोर्विजये स बृहत्तरभारतमपि स्मरति। पर्यालोच्यते यत् कविकुलगुरू राष्ट्रियचिन्तने स्वदेशस्य प्राणवद् आत्मवत् शाश्वतस्वरूपं च प्रकटयति। भारतभावस्याभिव्यक्ती राष्ट्रकविनैव कर्तुं युज्यते। प्रकृतिमनुष्ययोरोतप्रोतभावं निगदितुं राष्ट्रकविः कालिदास एव क्षमते। शाकुन्तले आकाशविमानाद् यदा मातलिः पृथिव्याम् अवतरति, तदा दुष्यन्तः स्वदेशप्रकृतिं मुहुर्मुहुरुच्छलितो भूत्वा पश्यति। मातलिरपि रमणीयां भारतभूमिं धन्यो भूत्वा पश्यति।

त्रिवेण्याः सङ्गमे कालिदासो यां शोभां पश्यति, तत्र क्वचिद् गंगा मुक्ताया मालारूपे, क्वचिद् हंसपक्षरूपे, क्वचित् चन्दनचर्चारूपे दृश्यते, क्वचित् शरदभ्ररेखारूपे, क्वचिद् भस्माङ्गरागसहिते शिवस्य देहयष्टिरूपे दृश्यते, क्वचित् प्रभालेपिभिरिन्द्रनीलैरित्यादिना दृश्यते। इदं सर्वं राष्ट्रस्य मूर्तिमान् विग्रहः।

कुमारसम्भवस्य ब्रह्मस्तुतिः, रघुवंशस्य विष्णुस्तुतिश्च उपनिषदां सारावलिरस्ति। इयं स्तुतिर्भारतीयराष्ट्रस्य तत्त्वचिन्तनमस्ति। निष्कर्षतः सूच्यते यदस्माकं महाकविर्भारतान्तरात्मानं राष्ट्रियस्वारस्येनाभ्यव्यञ्जयत्। कालिदासस्य साहित्ये यत्र यत्र राष्ट्रियता लभ्यते, तत्र तत्र स पूर्णनिष्णातो भूत्वा स्वसम्पूर्णमणुपरमाणुभ्यामात्मानं समर्पयतीति दिक्।

●

# विशाखदत्तस्य नाट्यघटनानुशीलनम्

**डॉ. ददन-उपाध्यायः**
सहायकसम्पादकः, प्रकाशनविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀ ❀ ❀

मुद्राराक्षसं नाम नाटकं संस्कृतनाट्यकाव्ये मूर्धन्यतमं शिखामणिरिव प्रकाशमानं दरीदृश्यते। नाटकस्यास्य रचयिता महाकविर्विशाखदत्तश्चासीत्। स च महाराजपदवीविभूषितो सामन्तस्य बटेश्वरदत्तस्य पौत्रो महाराजपृथुभास्करदत्तस्य पुत्रश्चासीत्। यतो हि नाटकस्य प्रस्तावनायां सूत्रधारमुखेन स्वपरिचयं प्रस्तौति— 'आज्ञापितोऽस्मि परिषदा यथाद्य त्वया सामन्तबटेश्वरदत्तपौत्रस्य महाराजपदभाक् पृथुसूनोः कवेर्विशाखदत्तस्य कृतिरभिनवं मुद्राराक्षसं नाम नाटकं नाटयितव्यमिति'[१]। अस्य नाटककारस्य विषये विशेषतो विवेचनं निबन्धगौरवभयान्न प्रस्तूयत इह नाटकसमीक्षैव सहृदयमनोरञ्जनाय स्वात्मतोषाय च।

## नाटकस्य नामकरणम्

'नाम कार्यं नाटकस्य गर्भितार्थप्रकाशनम्'[२] इति। साहित्यदर्पणवचनानुसारेण गर्भितार्थप्रकाशकं नाटकस्य नाम कार्यम्। यथा नाटककारैः क्रियते। महाकवेः कालिदासस्याभिज्ञानशाकुन्तलम्, भवभूतेरुत्तररामचरितम्, शूद्रकस्य मृच्छकटिकम्। तथैव मुद्राराक्षसमिति गर्भार्थप्रकाशकमेव। मुद्रया गृहीतो राक्षसो यत्रेति तद् मुद्राराक्षसम्। मुद्रयैव चाणक्येन राक्षसोऽत्र निगृह्यते। तस्मान्नामकरणमस्य सार्थकमेव विद्योतते।

## कथावस्तुमूलम्

मुद्राराक्षसनाटकस्यास्य कथावस्तु मूलरूपेण श्रीमद्भागवतमहापुराणे, विष्णुपुराणे चावलोक्यते, किन्तु नैतादृशं किञ्चिद्भिन्नतया प्रसिद्धम्। महाकविना

---

१. मुद्राराक्षसम्, पृ. ६, तृतीयश्लोकस्य प्राक्।

२. साहित्यदर्पणः ६।१४२ उ.।

विशाखदत्तेन सा कथा मूलतः परिगृह्य स्वकल्पनाशक्त्या लोकप्रसिद्ध्या च संस्कृत्य स्वनाट्यानुरूपेण परिणमिता। मुद्राराक्षसस्य कथा बृहत्कथातः परिगृहीतेति दशरूपककारस्याभिमतम्। तद्यथा—

'बृहत्कथामूलं मुद्राराक्षसम्'।

'चाणक्यनाम्ना तेनाथ शकटाख्यगृहे रहः।

कृत्यां विधाय सहसा सपुत्रो निहतो नृपः।।

योगनन्दे यशःशेषे पूर्वनन्दसुतस्ततः।

चन्द्रगुप्तः कृतो राजा चाणक्येन महौजसा।।

इति बृहत्कथायां सूचितम्'[१]।

**सङ्क्षेपेणास्य कथा**

आसीद् मगधेषु कश्चिच्चाणक्यः चणकार्यपुत्रो विष्णुगुप्तापरनामातिकोपनः कुरूपो ब्राह्मणः। स च सामदानादिनीतिषु वेदत्रय्याञ्च कुशाग्रबुद्धिरूपेण पारङ्गतस्तक्षशिलागुरुकुले चाधीतविद्यः सर्वव्यवहारकुशलोऽपि राजनीतिविद्यायां सन्धिविग्रहशास्त्रे च कृतभूरिपरिश्रमो मगधदेशमाजगाम। तस्मिन् काले नन्दवंशीयधननन्दोऽजितेन्द्रियो दुर्विनीतः शासनं चकार। एकदा चाणक्यः श्राद्धकर्मण्याहूतेषु ब्राह्मणेषु उच्चासनमधिरुह्यावस्थितः। तं तथा कुरूपं विप्रं दृष्ट्वा नन्दो भृशं चुकोप। स च तस्य शिखामाकृष्य सभातो बहिर्निष्कासितवान्। स्वभावतः कोपनश्चाणक्यः समापतितापमानधर्षणासहिष्णुः क्रुद्धः सन् प्रमुक्तशिखस्तत्रैव प्रतिजानाति यावन्नन्दवंशं समूलं नोत्पाटयेयं तावत् शिखाबन्धनं न कुर्यामिति। एवं प्रतिज्ञाय दृढप्रतिज्ञोऽसौ कदाचिद् मौर्यवंशीयेन वृषल्यां नन्दाज्जातेन चन्द्रगुप्तेन सङ्गतः। मेधाविनं चन्द्रगुप्तं तं समुत्साहवन्तं दृष्ट्वा स्वबुद्धिविभवेनाकलितसैन्यबलेन स चन्द्रगुप्तमग्रे विधाय नन्दं समूलं विनाशितवान्। मगधे चन्द्रगुप्तं सिंहासनाधिष्ठितं चकार महामतिश्चाणक्यः।

तत्रासीद् नन्दवंशपरम्परायां विनीतो निपुणमतिः सर्वशास्त्रविशारदो राजनीतिशास्त्रदक्षः राक्षसो नाम ब्राह्मणः प्रधानसचिवः। स च नन्दवंशहितपरायणो विनष्टे नन्दे, शत्रोः प्रतिकारं चिकीर्षुः चन्द्रगुप्तचाणक्याभ्यां तदनुयायिवर्गाच्च कृतवैरः पर्वतेश्वरपुत्रं मलयकेतुं पुरस्कृत्य तमेव सिंहासनाधिरूढं चिकीर्षुः चन्द्रगुप्तविनाशनतत्परस्तादृशातिप्रयत्नशीलश्चासीत्। यद्यपि चाणक्यः प्रतिपक्ष-

१. दशरूपकः, प्र.प्र.।

भूतस्तथापि राक्षसस्य गुणगणाकृष्टचेतास्तमेव केनापि प्रकारेण चन्द्रगुप्तस्य मन्त्रिपदे नियोक्तुमैच्छत्। चन्द्रगुप्तोऽपि योग्यमन्त्रिणं विना सुशासकस्य प्रजाशासनं न सम्भवतीति विचार्य तादृशं विश्वस्तं प्रभुभक्तिपरायणं सचिवसकलगुणमण्डितं राक्षसमवगम्य बुद्ध्यैव तं निगृहीतुकामोऽध्यवस्यत्। राक्षसो न च बलेन न धनेन नान्येनोपायेन वशीकर्तुं शक्येत ऋते बुद्धिबलात्। बुद्धिमान् चाणक्यः स्वबुद्धिकौशलेनास्मिन् नाटके राक्षसं वशीकृत्य चन्द्रगुप्तस्य प्रधानसचिवस्य पदे नियोजितवान्। स्वयञ्च चाणक्यः तपःकर्तुमगच्छदिति सङ्क्षेपतः कथास्य नाटकस्य।

नाटकेऽस्मिन् राक्षसनामानं मन्त्रिणं वशीकर्त्तुमेव सर्वे व्यापाराश्चाणक्यकृता दर्शिताः सन्ति। कुटिलमतिश्चाणक्यः कपटपूर्णव्यवहारेण कूटनीतिज्ञः कूटव्यवहारेण च कथं राक्षसं वशीकरोति कथञ्चोत्तरोत्तरं साफल्यमगच्छदिति कौतुकेन परिपूर्णं नाटकमतिरुचिकरं दर्शनीयञ्चास्ति। नाटककारो महाकविर्विशाखदत्तोऽपि कथामेतां सूक्ष्मेक्षिकया बुद्ध्या निरीक्ष्य नियोज्य च स्वकीयां राजनीतिदक्षतां प्रमाणितवान्।

## मुद्राराक्षसस्य नाटकीयवैशिष्ट्यम्

महाकविश्रीविशाखदत्तप्रणीतं सप्ताङ्कविभक्तं पञ्चसन्धिसमन्वितमतिकौतुकपूर्णं सामाजिकहृदयावर्जकं नाटकमिदमस्ति। नाटकस्य लक्षणमुक्तं साहित्यदर्पणे विश्वनाथेन—

नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम्।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः।।
सुखदुःखसमुद्भूतिनानारससमन्वितम्।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः।।
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः।।
एक एव भवेदङ्गी शृङ्गारो वीर एव वा।
अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः[१]।।

मुद्राराक्षसं नाम नाटकं विशुद्धराजनीतिपूर्णमस्ति। नाटकेऽस्मिन् माधुर्यस्य सौन्दर्यस्य चाभावो दृश्यते। करुणशृङ्गाररसौ न दृष्टिगोचरतां प्राप्येते। यद्यपि

१. साहित्यदर्पणः, ६।७-१०।

सप्तमाङ्के चन्दनदासस्य पत्नी किञ्चित्कालं यावद् रङ्गमञ्चोपरि दृष्टिपथे पथिकायते, तथापि तस्याः कस्याञ्चिदपि चेष्टायां शृङ्गारस्याभावो न भवति। प्रसङ्गेऽस्मिन् नाटककारस्य स्पष्टोक्तिरस्ति, यत् स्वीयान् प्राणान् विभवान् कुलं कलत्रादिकञ्च रक्षितुमिच्छन्तस्तत् कष्टदायकं राज्ञः अपथ्यं सुदूरेण परित्यजत। यतो हि—

भवति पुरुषस्य व्याधिर्मरणं वा सेवितेऽपथ्ये।
राजापथ्ये पुनः सेविते सकलमपि कुलं म्रियते[1]।।

एकस्य राजनीतिज्ञस्य सर्वं पुत्रकलत्रादिकं भाररूपमेव भवति। नाटकमिदं वीररसप्रधानमस्ति।

नाटकस्यास्य नायको यद्यपि न शास्त्रसम्मतः, तथापि चन्द्रगुप्त एव धीरोदात्तनायकः, तदर्थमेव चाणक्यस्य सर्वे प्रयत्ना भवन्ति। धीरोदात्तनायकस्य लक्षणमुक्तं साहित्यदर्पणे—

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः[2]।।

केचिच्चाणक्यमेव नेतारं मन्यन्ते, तस्यैवात्र प्राधान्यात्। वस्तुतश्चन्द्रगुप्त एवास्य नाटकस्य नेता। यद्यपि चन्द्रगुप्तः प्रख्यातवंशो राजर्षिर्नास्ति, तथापि राजा विक्रमशाली दयादाक्षिण्यादिगुणयुक्तो विद्याविनयसम्पन्नश्चास्ति। यथा नायकस्य लक्षणमुक्तं तथा सर्वं सङ्घटते चन्द्रगुप्ते। तत्र नायकस्य लक्षणमवलोकयन्तु साहित्यदर्पणात्—

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता[3]।।

यद्यपि तस्य तृतीयाङ्के किञ्चित्सप्तमाङ्क एव प्रसङ्ग आगतो न तु प्रत्यङ्कं तथापि नाटकेऽस्मिन् स एव नेता। अस्तु चाणक्यो वा नायकस्तथापि प्रख्यातवंशो राजर्षिर्नेतेति शास्त्रीयसिद्धान्तपरित्यागो भवत्येव। एवं नायकविषये विशाखदत्तेन न शास्त्रीयसिद्धान्तः पाल्यमानो दृश्यते।

नाटकमिदमन्येभ्यो नितान्तं भिन्नं विशिष्टस्थानं स्वात्मनो भजते। न ह्यत्र प्रकृते रमणीयवर्णनम्, न च हास्यविलासप्रमोदानां वर्णनम्, न च नायिकाया

---

१. मुद्राराक्षसम्, ७।२; २. साहित्यदर्पणः, ३।३२।
३. तदेव, ३।३०।

विदूषकस्य वा क्वचित् स्थितिरवलोक्यते। न च विष्कम्भक एव अन्तिमयोरङ्कयोः प्रवेशकौ दृश्येते।

प्रकृतिवर्णनन्तु तृतीयाङ्के किञ्चित् कौमुदीमहोत्सवप्रसङ्गे कृतमस्ति। महाराजनीतिकूटनीतिज्ञाता महाकविः सर्वं हास्यविनोदादिकमनिवेश्यापि मुद्राराक्षसं विशुद्धघटनाप्रधानमुत्तरोत्तरौत्सुक्यविनोदवर्धकं सुरुचिपूर्णं काव्यमिदं विरच्यातुलं यशो लेभे नास्त्यत्र सन्देहः। एषा नवैव रीतिर्नाट्यस्य प्रकल्पिता महाकविना विशाखदत्तेन।

अस्मिन् नाटके पात्राणां चरित्रं विशिष्टतां भजते। कथावस्तूनां योजना तु सर्वातिशायिनीं महत्तां बिभर्ति। नूनं महाकविना विशाखदत्तेन स्वस्वभावानुसारं कथावस्तु प्रसिद्धमादाय स्वप्रतिभया किञ्चित्परिकल्प्य संशोध्य चाद्भुतं सर्वजनग्राह्यं नाटकमिदं चक्रे। तस्य एतदेकमेव कृतिरत्नं दिगन्तव्यापिकीर्तये। 'दैवमविद्वांसः प्रमाणयन्ति, विद्वांसोऽपि अविकत्थना भवन्ती'त्यादयः[१] सूक्तयः स्थाने प्रयुक्ता अनुपमां शोभां भजन्ते। पौरुषकर्त्तव्यः स एव दैवेन दत्तहस्तावलम्बः कार्यसिद्ध्यै प्रभवतीति नाटकेनानेन शिक्षयन् कविर्जयति।

## घटनानामुपयोगिता

अथेदानीं मुद्राराक्षसे समागतानामाकस्मिकघटनानामुपयोगिताया विवेचनं प्रस्तूयते। यथा पूर्वमेवोक्तं यद् नाटकमिदं घटनाप्रधानमस्ति। घटनाप्रधानतयैव सामाजिकानां मनो रमतेऽत्रातीव गीतवादित्रलास्यहास्यादिना विनापि। कौतूहलञ्चोत्पद्यते राक्षसचाणक्ययोर्मध्ये कस्य जय इति। चाणक्यस्य कूटनीतिः, राक्षसस्य च सहृदयतापरित्यागो गुणवत्ता धैर्यं स्वामिभक्तिश्च, चन्दनदासस्य महान् परित्यागः, गुप्तचराणाञ्च कार्यप्रणाली मलयकेतोश्च मूर्खता असमीक्ष्यकारिता चैष सर्वः सामाजिकानां हृदये अद्भुतः कोऽपि भावः प्रभवति। राक्षसगुणलुब्धस्य तन्मन्त्रित्वं प्रार्थयमानस्य महामतेश्चाणक्यस्य नीतयस्तस्य च राक्षसलाभे राक्षसं प्रति सौहार्दपूर्णवचनानि सर्वमेतद् नाटकस्य विशेषतां प्रतिपादयति। तत्र कासाञ्चिदाकस्मिकघटनानामनुशीलनं विधीयते सहृदयजनमनोरञ्जनाय।

## हस्ते गृहीतयमपटस्य चरस्य प्रवेशः

प्रसङ्गोऽयं प्रथमाङ्के समागतः। प्रस्तावनाया अन्ते सूत्रधारे निष्क्रान्ते चाणक्यः प्रविश्य राक्षसनिग्रहाय स्वकृतप्रयत्नान् स्वयमेव विज्ञापयति। यमपटहस्तः चरः चाणक्येनैव गुप्तसूचनासङ्कलनाय पुरा प्रेषितो विदितवृत्तान्तः

१. मुद्राराक्षसम् - ३।२८ श्लोकानन्तरम्, पृ. १९०।

समागच्छति। यमपटश्च कश्चित् प्राणिविपाकनरकलोकचित्रप्रदर्शनाय पटविशेषः, तमेव प्रदर्श्य तद्व्याजेन स चरो भ्राम्यन् नगरे गुप्तरूपेण सूचनामाकलयति, किमर्थमस्य प्रसङ्गस्य योजना? तत्रोच्यते— प्रसङ्गस्यास्य महानुपयोगः। चरः पाटलिपुत्रस्य वृत्तान्तं निवेदयति चाणक्यसमीपे। तदनुसारं चाणक्यस्याग्रिमोद्योगो दृश्यते। चरश्च चाणक्यस्य विश्वासपात्रं सुपरीक्षितो विचित्रवाग् बुद्धिमान् गूढमतिश्चास्ति। स एव कथयति श्लेषेण शिष्यम्—

कमलानां मनोहराणामपि रूपाद्विसंवदति शीलम्।
सम्पूर्णमण्डलेऽपि यानि चन्द्रे विरुद्धानि[१]।।

मनोहराकृतेरपि राक्षसपक्षपातिनो जनस्याव्यवस्थितराज्ये चन्द्रगुप्ते विरुद्धाचरणं सूचितमनेन। 'न ह्याकृतिर्विजहाति सुसदृशं वृत्तम्' इति नायं सिद्धान्तः सार्वदेशिकः।

इदं श्लिष्टं काव्यं श्रुत्वा चाणक्यः झटित्यवगच्छति चन्द्रगुप्तादपरक्तान् जनान् जानात्ययमिति पुनश्चरः प्रविश्य चन्द्रगुप्तविरक्तानां राक्षसे बद्धमतीनां त्रयाणां विज्ञानं कारयति। प्रथमो जीवसिद्धिः क्षपणकः। द्वितीयो राक्षसस्य प्रियवयस्यः शकटदासः, तृतीयश्च तस्यैव परमसुहृत् चन्दनदासो येन राक्षसकलत्रं न्यासीकृतम्। तदनन्तरं चाणक्यो निर्धारयति यद् जीवसिद्धिस्तु ममैव प्रणिधिः। शकटदासचन्दनदासौ प्रतिविधेयाविति। चरश्च चन्दनदासगृहात् प्राप्तां राक्षसमुद्रिकां सर्ववृत्तान्तनिवेदनपूर्वकमर्पयति।

अनयैव मुद्रिकया चाणक्येन राक्षसो गृहीत इति। तस्मादेव नाटकस्यास्य नाम मुद्राराक्षसमिति प्राभवत्। तदुत्तरमेव चाणक्यस्य विशेषप्रयत्नाः प्रभवन्ति। न च चरस्यासूचितप्रवेशः चाणक्येनैव सूचितः, प्रयुक्ताश्च स्वपक्षपरपक्षयोरनुरक्तापरक्तजनजिज्ञासया नानाव्यञ्जनाः प्रणिधयः[२]। तस्माच्चराद् ज्ञात्वा नीतिज्ञः चाणक्यो मुद्रामवलम्ब्य च राक्षसं गृहीतमेव मन्यते। किञ्च एषा घटना 'कथमसौ राक्षसः साचिव्यग्रहणेन वृषलस्य सानुग्रहः स्यादि''ति बीजे[३] उक्षिप्ते सूचिते च सर्वप्रयत्ने चाणक्येनैव कथार्थाविच्छेदा या बिन्दुरूपा[४] प्रवर्तिता; अन्यथा

१. मुद्राराक्षसम्, १।१९।
२. मुद्राराक्षसम्।
३. अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति।
फलस्य प्रथमो हेतुर्बीजं तदभिधीयते।। (सा.द. ६।६५-६६)
४. अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्। (सा.द. ६।६६)

मुखसन्धौ[1] आरम्भः चाणक्यस्य बाधितः स्यात्। चरागमनघटनया ज्ञात-वृत्तान्तश्चाणक्यः चन्दनदासं शकटदासं च प्रतिविधातुं प्रारभत। चाणक्यः शिष्येण मसीपात्रादिकमानाय्य पत्रं लिखति। तत्रैव चन्द्रगुप्तसन्देशवाहिन्याः शाणोत्तराया आगमनरूपा एकान्या घटना प्रकृतारम्भसहायिनी योजिता महाकविना विशाखदत्तेन। एतयोरुभयोः घटनयोः सञ्जातयोर्नाटकीयतत्त्वं फलाय विविधरूपेण प्रारब्धं करोति कविः।

**मलयकेतुप्रेषितालङ्कारप्रसङ्गः**

द्वितीयाङ्के राक्षसे सम्पूर्णं स्वकृतोद्योगं विचिन्तयति स्वामिनं नन्दं भक्त्या स्मरति मध्य एव मलयकेतुप्रेषितः कञ्चुकी प्रविशति तत्प्रदत्ताभूषणसहितः। प्रविशन्नेव स्वजरामालक्ष्य कथयति ममेयं वृद्धावस्था मयि स्थितकामवासनां नाशितवती धर्मञ्च प्रतिष्ठापितवती किन्तु धनलोभात् क्रियमाणा मलयकेतुसेवा जरास्थापितधर्मबुद्धिं जेतुं वाञ्छति न च जयति। यथा चाणक्यनीत्या विनाशितो नन्दः स्थापितश्च चन्द्रगुप्तो राज्ये राक्षस इदानीं मलयकेतुसमाश्रितः जिगीषति, न तु जेतुं शक्नोति। तत्र श्लोको यथा—

कामं नन्दमिव प्रमथ्य जरया चाणक्यनीत्या यथा
धर्मो मौर्य इव क्रमेण नगरे नीतः प्रतिष्ठां मयि।
तं सम्प्रत्यपचीयमानमनु मे लब्धान्तरं सेवया
लोभो राक्षसवज्जयाय यतते जेतुं न शक्नोति च[2]।।

अनेनैव वाक्येन कविः राक्षसप्रयोगस्य वैयर्थ्यं सूचयति। राक्षसश्च चन्द्रगुप्तं विनाशयितुं बहु चेष्टते, किन्तु दैवमेव तत्प्रतिकूलं भवति, अत एव स्थाने स्थाने तेन कृता उद्योगा व्यर्था भवन्ति। न खलु चाणक्यनीत्या राक्षसो निगृहीतोऽपि तु दैवेनापि, किं वा दैवेनैवेति स्फुटमत्रोपलभ्यते। स्वयमेव राक्षसो वक्ति—

इष्टात्मजः सपदि सान्वय एव देवः
शार्दूलपोतमिव यं परिपोष्य नष्टः।
तस्यैव बुद्धिविशिखेन भिनद्मि मर्म
वर्मीभवेद्यदि न दैवमदृश्यरूपम्[3]।।

---

१. यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम्।। (सा.द. ६।७६)

२. मुद्राराक्षसम्, २।९।

३. तदेव, २।८।

कञ्चुकी प्रविश्य कुमारेण मलयकेतुना प्रदत्तमाभरणं राक्षसाय प्रयच्छति सन्दिशति च कुमाराग्रहम्— चिरात् प्रभृत्यार्यः परित्यक्तोचितशरीरसंस्कार इति पीड्यते मे हृदयम्। यद्यपि सहसा स्वामिगुणा न शक्यन्ते विस्मर्तुं तथापि मद्विज्ञापनां मानयितुमर्हति आर्यः। (इत्याभरणानि प्रदर्श्य) इमान्याभरणानि कुमारेण स्वशरीरादवतार्य प्रेषितानि धारयितुमर्हत्यार्यः[१]।

राक्षसश्च परमप्रीतः सन्दिशति—विज्ञाप्यतामस्मद्वचनात्कुमारः। विस्मृता एव भवद्गुणपक्षपातेन स्वामिगुणाः। किन्तु—

न तावन्निर्वीर्यैः परपरिभवाक्रान्तिकृपणै-
र्वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनाम्।
न यावन्निःशेषक्षपितरिपुचक्रस्य निहितं
सुगाङ्गे हेमाङ्कं नृवर तव सिंहासनमिदम्[२]।।

अथ साधुवादं प्रदत्तवता कञ्चुकिना कृताग्रह धारयति राक्षस आभरणानि।

एषा घटना कविना किमर्थं योजितेति विचार्यते। अस्या घटनाया अपि महानुपयोगः। तदेवाभरणं राक्षसः सिद्धार्थकाय शकटदासं वध्यस्थानात् प्रमोच्यानीतवते प्रददाति प्रीतः पारितोषिकरूपेण। तदेवालङ्कारं लेखेन सह सिद्धार्थकः चाणक्यस्य गुप्तमन्त्रणानुसारं प्राप्ते काले षष्ठाङ्के कुसुमपुरं चन्द्रगुप्तसविधं प्रयाति। धृतश्च मलयकेतुना पृष्टः सर्वं राक्षसं प्रति दोषमारोपयति। तल्लेखार्थसङ्गत्यर्थं पूर्वमेव महाकविना प्रदत्तमलङ्करणं कुमारेण राक्षसस्य समीपं प्रापयति। अग्रे च लेखे स्पष्टीभवति 'मया किञ्चिल्लेखस्याशून्यार्थं प्रेष्यते' इति। सिद्धार्थकसमीपात् तदलङ्कारं विलोक्य मलयकेतुः प्रत्यभिजानाति तदेवेदमाभरणं यन्मया अमात्याय धारणार्थं प्रेषितमिति। ततो लेखविषयेऽपि राक्षसेनैव शकटदासेन लेखयित्वा लेखः चन्द्रगुप्तेन साकं सन्धातुं लेखितो यतोऽलङ्कारोऽपि प्रदत्त एव।

एवञ्च तस्य हृदये राक्षसं प्रति अपरागो जागर्ति, त्यजति च दोषमारोप्य राक्षसम्। अत एषापि घटना राक्षसस्य निग्रहे सहायिकैवास्ति; किन्तु आभरणप्रेषणं तदस्वीकृत्य धारणञ्च न चाणक्यप्रेरितमेतत् तु दैवादेवाकस्मिकं घटितम्। दैवादेव एतदेवाभरणं पारितोषिकरूपेण राक्षसः सिद्धार्थकाय प्रयच्छति। एतदेव दैवकृतोद्योगः कौटिल्यप्रयत्नं पोषयति। यद्यपि अलङ्कारं विनापि लेख एव

---

१. मुद्राराक्षसम्, अं. २, पृ. ८८; २. तदेव, २।१०।

पर्याप्तः कुमारापरागाय, तथापि आभूषणसहितलेखदर्शने दृढो विश्वासो जायते कुमारस्य। अन्यथा धूर्तलेख एष इति मत्वा लेखार्थमुपेक्षेत। आभूषणं विलोक्य यदि धूर्तलेखितो मिथ्यालेखोऽयं स्यात् तर्हि मद्दत्ताभरणं कथमस्य पार्श्वे स्यात्। इत्येवं विश्वासदार्ढ्याभूषणप्रदानरूपैषा घटना समायोजिता राजनीतिदक्षेण विशाखदत्तेन।

किञ्च आभूषणप्रदानेन कुमारस्य राक्षसं प्रति दृढनिष्ठा व्यज्यते। 'न तावन्निर्वीर्यैः' (मु. २।१०) इति वचनं कथयतो राक्षसस्यापि कुमारं सिंहासनस्थं कर्त्तुं पाटलिपुत्रेऽतीव दृढता कृतारम्भता चाभिव्यज्यते स्फुटमेव। कुमारस्यादरेणान्यैश्च गुणै राक्षसो नन्दस्य गुणान् विस्मर्तुमपि प्रभवति। अतोऽनेन प्रसङ्गेन कुमारपक्षे राक्षसस्य कृतोद्योगस्य दृढता सन्नद्धता च परिलक्ष्यते। मलयकेतोश्चात्यौदार्यगुणः प्रशस्तो भवतीति।

द्वितीयाङ्क एवाहितुण्डिकविराधगुप्तप्रवेशरूपा घटनापि महोपयोगिनी। अनया घटनया ज्ञायते यद् राक्षसद्वारा चन्द्रगुप्तविनाशाय कियन्तः प्रयोगाः कृताः। परमसूक्ष्मबुद्धिना कूटनीतिनिपुणेन शत्रुकृतसर्वप्रयत्नप्रतिकारपरायणेन राजरक्षाद्यप्रमत्तेन दृढप्रतिज्ञेन चाणक्येन कथं राक्षसस्य सर्वे प्रयत्ना विफलीकृताः? अत्रापि केचित्प्रयत्ना चाणक्येन विफलीकृताः, केचिच्च दैवेनेति स्फुटमेवालक्ष्यते। राक्षसप्रयुक्तविषकन्या चन्द्रगुप्ताय चाणक्येन पर्वतेश्वरे सा योजिता, सापि दैवकृतैव। तोरणपातनेन चन्द्रगुप्तवधस्य योजनापि दैवेनैव पर्वतके दैवयोगाद् गतार्था। एवमालोचनेन ज्ञायते यत् सर्वे राक्षसप्रयत्नाश्चाणक्यादप्यधिकं दैवेनैव विफलीकृताः। कथयति चाणक्यः—'सखे! पश्य दैवसम्पदं दुरात्मनश्चन्द्रगुप्त-हतकस्य' कुतः?—

> कन्या तस्य वधाय या विषमयी गूढं प्रयुक्ता मया
> दैवात्पर्वतकस्तया स निहतो यस्तस्य राज्यार्द्धहृत्।
> ये शस्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिता
> मौर्यस्यैव फलन्ति पश्य विविधश्रेयांसि मन्त्रीतयः[1]।।

एवमाहितुण्डिकप्रसङ्गेन राक्षसकृतोद्योगस्य तद्वैफल्यस्य च सर्वा सूचना प्राप्यते। किञ्च तथापि जनोत्तमो राक्षसो न प्रयत्नं जहाति। सत्यमेवोक्तं तत्रैव—प्रारब्धमपरित्याज्यमेव। पश्य—

१. मुद्राराक्षसम्, २।१६।

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति[१]।।

चाणक्यकृतोद्योगा अपि विराधगुप्तेन वर्णिताः। जीवसिद्धिः पर्वतकघातकत्वेन नगरान्निष्कासनरूपां सूचनां ददाति, येन राक्षसं स्वमित्रमेव दृढं मन्यते प्रशंसति च राक्षसः चाणक्यबुद्धिम्— "साधु कौटिल्य!

परिहृतमयशः पातितमस्मासु च घातितोऽर्धराज्यहरः।
एकमपि नीतिबीजं बहुफलतामेति यस्य तव"[२]।।

विराधगुप्तादेव शकटदासशूलारोपणवृत्तान्तं चन्दनदासस्य सपुत्रकलत्रस्य बन्धनागारे निक्षेपणवृत्तान्तं च श्रुत्वा राक्षसो विप्रियरूपमहादुःखसागरे निमग्नो भवति। राक्षसायावगमार्थमेवायं प्रसङ्गोऽत्र योजितः। एवमेव शकटदासागमन-प्रसङ्गोऽलङ्कारत्रयविक्रयप्रसङ्गश्च द्वितीयाङ्के नियोजितौ महाकविना।

### तृतीयाङ्कनिवेशस्यावश्यकता

नाटकस्यास्य तृतीयाङ्के चाणक्यचन्द्रगुप्तयोः कृतककलहमात्रं प्रदर्शितम्। तत्तु अन्यसूचनावत् चाणक्यमुखेनान्येन वा कविरेतदपि सूचयेत्। विराधगुप्तश्च द्वितीयाङ्के सूचयत्येव राक्षसम्। चाणक्यचन्द्रगुप्तविरोधस्तु रिपुभिरवगत एव।

यद्यपि शक्यत इत्थं वक्तुं तथापि तादृशो विरोधोऽप्रत्यक्षः कदाचिद् विकल्प्यते, संशयीत वा। प्रत्यक्षे च विरोधे दृढमेव राक्षसप्रतिनिधयो निश्चिन्वन्ति सत्यमेवोभयोर्विरोधो जातः। विरोधस्य सत्यतां स्वचरेभ्यो विज्ञायैव राक्षसः प्रसन्नो भूत्वा मलयकेतुं युद्धाय सज्जीकरोति।

अस्मिन्नङ्के चन्द्रगुप्तस्य प्रवेशात् तत्संवादाच्च तस्य चरित्रं बलं वीर्यं राजानुकूलस्वभावो मतिर्बुद्ध्यादिकं सर्वं प्रकाशितं भवति। नायकस्य च तस्याङ्के प्रवेशो युक्तः। अथापि चाणक्यो नायकस्तथापि यदर्थं तस्यारम्भः स कीदृशो किं गुणको राजेति जागर्ति जिज्ञासा सामाजिकानाम्। अतश्चन्द्रगुप्तस्य रङ्गमञ्चे प्रवेशो युक्ततरः। किञ्च चाणक्यारम्भयुक्तस्य बीजस्य यत् फलं तस्य स्वामी अधिकारी

---

१. मुद्राराक्षसम्, २।१७; २. तदेव, २।१९।

चन्द्रगुप्त एव न चाणक्यः। अत एव स एवास्य नाटकस्य नायकः। तादृशस्य फलस्वाम्यभाजः चन्द्रगुप्तस्य चाणक्यराक्षसाभ्यामुभाभ्यामनुगृहीतस्य चन्द्र-सूर्याभ्यामिव लोकस्येव दर्शनमवश्यं कर्त्तव्यं सामाजिकैः। फलस्वामिनं नाटकमध्ये क्वाप्यनवतार्य्यान्ते प्रदर्शनमनुचितमिति मत्वा महाकविना नाट्यशास्त्रविशारदेन तृतीयाङ्को योजितः।

किञ्चोभयस्य विरोधस्य सूचनीयतया योजने चाणक्यचन्द्रगुप्तयोः संवादगत-राजनीतिप्रसङ्गागतज्ञानानि कौमुदीमहोत्सवोपयुक्तदेशकालवर्णनानि चन्द्रगुप्तस्य श्रीभक्तिमहौदार्य-शील-स्वभावगुरुभक्त्यादिवर्णनं दुर्लभं स्यात्। राक्षसकृत-वैतालिकप्रयोगोऽपि अस्मिन्नेवाङ्के समायोजितः, यद्विज्ञाय चाणक्यस्य प्रतापाग्निरधिकं प्रज्वलति। चन्द्रगुप्तेन कृतामात्यस्य राक्षसस्य प्रशंसाऽस्मिन्नङ्के चमत्कारिण्यस्ति। अवलोकयन्तु तावत्— 'तेन खलु महात्मना—

लब्धायां पुरि यावदिच्छमुषितं कृत्वा पदं नो गले<br>
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः।<br>
अत्यर्थं विपुलैः स्वनीतिविभवैः सम्मोहमापादिता<br>
विश्वासेष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः'[१]।।

अत्राङ्के चाणक्येन कृतक एव स्वमन्त्रिपदस्य त्यागः कृतः, यद्विज्ञाय राक्षसः स्वोद्योगं करोतीति कथयति चाणक्य एव राक्षसाशयम्—

चाणक्यतश्चलितभक्तिमहं सुखेन<br>
जेष्यामि मौर्यमिति सम्प्रति यः प्रयुक्तः।<br>
भेदः किलैष भवतां सकलः स एव<br>
सम्पत्स्यते शठ तवैव हि दूषणाय[२]।।

**राक्षसमलयकेत्वोः समागमः**

चतुर्थाङ्के कुमारो मलयकेतुः राक्षसं द्रष्टुं भागुरायणेन तन्मित्रभूतेन गुप्तचाणक्यप्रणिधिना सह प्रयाति। तत्र करभकेण कुसुमपुरवृत्तान्तावेदिना वार्तालापव्यग्रं राक्षसमाकर्ण्य भागुरायणेन साकं बहिरेव स्थित्वा सर्वं कर्णगोचरी-करोति। तत्रैव भागुरायणो लब्धावकाशः कुमारं मलयकेतुं राक्षसाद् भेदयति।

---

१. मुद्राराक्षसम्, ३।२६; २. तदेव, ३।३१।

प्रसङ्गोऽयं राक्षसस्योद्योगसिद्ध्यर्थमेव योजितः। किञ्च राक्षसाश्रितमलयकेतोः चरित्रमपि घटनयानयैव स्पष्टीभवति यत् सः शङ्कालुप्रवृत्तिरस्ति।

चतुर्थाङ्के जीवसिद्धिक्षपणकस्य प्रसङ्गोऽवलोक्यते। चाणक्यस्य प्रथमाङ्कगतसूचनया ज्ञायते यच्चाणक्यसहाध्यायीन्दुशर्मा कृतक्षपणकवेशो राक्षससख्यमुपगमितः पुरैव तेन महत् कार्यं करणीयमिति। चतुर्थाङ्के उद्योगाय निष्क्रान्ते मलयकेतौ राक्षसः प्रयाणमुहूर्त्तं जिज्ञासया सांवत्सरिकमाकारयति। तस्मिन्नेव समये जीवसिद्धिः क्षपणकः स्वस्यामङ्गलवेशेन राक्षसोद्योगं वैफल्यमिव सूचयन् रङ्गमञ्चे प्रविशति। राक्षसेन मुहूर्त्तं पृष्टः क्षपणकः कथयति। राक्षसेन मुहूर्ते विकल्पिते कुपितो किञ्चिदमङ्गलमुक्त्वा निष्क्रामति।

जीवसिद्धिक्षपणको मलयकेतुं प्रति राक्षसविरोधमहाबीजं वपति। तस्य वाक्यश्रवणादेव राक्षसं स्वपितृघातिनं मन्यते कुमारो मलयकेतुः। जीवसिद्धिरपि महान् बुद्धिमान् मलयकेतुमेव द्वेष्टि न राक्षसम्। तं चन्द्रगुप्तस्यामात्यपदे प्रतिष्ठापयितुं प्रवृत्तो भवति। किं वा सर्व एव भागुरायणप्रभृतयश्चाणक्यप्रणिधयो मलयकेतुमेव राक्षसाद् वियोज्य निग्राहयितुमिच्छन्ति, न च राक्षसं किञ्चिदपकर्तुं वाञ्छन्ति। जीवसिद्धिश्च राक्षसेन मुहूर्त्तं पृष्टो युक्तमेव श्लेषेण कथयति—

अस्ताभिमुखे सूर्ये उदिते सम्पूर्णमण्डले चन्द्रे।<br>
गमनं बुधस्य लग्ने उदितास्तमिते च केतौ[१]।।

सम्पूर्णराजमण्डलैः सह उदिते चन्द्रगुप्ते सूर्य इव विद्यमाने बुधस्य चाणक्यस्य च संयोगे मलयकेतोः, उदितास्तमिते च तव राक्षसस्य गमनं युक्तमेवामात्यपदलाभेनेति श्लेषार्थः। अतो महाकविना जीवसिद्धिप्रसङ्गं संयोज्य बीजं फलोन्मुखाय कर्तुं प्रयतत इति स्पष्टं प्रतिभाति।

पञ्चमाङ्के लेखमलङ्कारपेटिकां मुद्राञ्चादाय सिद्धार्थकस्य प्रवेशो भवति। अनेन प्रयोगेण राक्षसस्योपरि मलयकेतुपितृघातित्वमारोपयति। येन मलयकेतुस्तस्मादपरक्तः क्रोधघृणाप्रतिशोधवशात् कदापि पुनर्न संश्लिष्यते। प्रयोगश्च चाणक्यस्यानुकूलदेशकालमुप्तबीजमेव फलति। अस्मिन् प्रसङ्गे नाटककारः सिद्धार्थकं जीवसिद्धिं भागुरायणं कुमारञ्च एकत्रकृत्य लेखस्य रहस्योद्‌घाटनं कर्त्तुं वाञ्छति[२] गर्भसन्धिनिबन्धनेच्छया।

---

१. मुद्राराक्षसम्, ४।१९।

२. फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन।<br>
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः।। (सा.द. ६।७८)

षष्ठाङ्के प्रवेशके परिसमाप्ते रज्जुहस्तः पुरुषो बन्धनेन स्वात्मानं व्यापादयितुं प्रवर्तिष्यमाणः चाणक्यप्रहितः प्रविशति। प्रविशन्नेव चाणक्यनीतिं प्रशंसति—

'षड्गुणसंयोगदृढा उपायपरिपाटीघटितपाशमुखी।
चाणक्यनीतिरज्जू रिपुसंयमनोद्यता जयति'।।

एष स प्रदेश आर्यचाणक्यायोदुम्बरेण कथितो यत्र मया आर्यचाणक्याज्ञप्त्या अमात्यराक्षसः प्रेक्षितव्यः। (विलोक्य) कथमेष खल्वमात्यराक्षसः कृतशीर्षावगुण्ठन इत एवागच्छति। तद्यावदेभिर्जीर्णोद्यानपादपैरन्तरितशरीरः प्रेक्षे कुत्रासनपरिग्रहं करोतीति[१]।

एष प्रयोगोऽपि चाणक्यस्यैव। लेखादिप्रयोगेण मलयकेतुर्निगृहीतः, राक्षसश्च तस्मान्निष्कासितः। उदुम्बरेण चरेण वस्तुतः चाणक्यगुप्तचरेणापाततो राक्षसविश्वासभाजनेनानुगतो राक्षसो मलयकेतुकुमाराधिक्षिप्तश्चन्दनदासमोचनाय पाटलिपुत्रं जीर्णोद्यानं गच्छति। एतच्च चाणक्येन प्रथममेव तर्कितम्, तदर्थमेव चन्दनदासो गृहीतः। इदानीं मलयकेतौ निगृहीते तत्सैन्ये च विद्राविते राक्षसनिग्रहभूतं बीजमवशिष्टम्। स राक्षसः कथं चन्दनदासवधेन सूचितः स्यात्? तद्मोक्षाय च प्रवर्तेत वध्यस्थानं च कथं गच्छेत्? कथं च नान्यं राजानं कञ्चित् सन्धाय चन्द्रगुप्तविनाशाय यतेतेत्येतत् सर्वमालोच्य परमबुद्धिमान् चाणक्यो राक्षससमीपे स्वगुप्तचरं प्रेषयति। स एव गले रज्जुं बध्वात्मानं व्यापादयितुमारभते राक्षससमक्षं जीर्णोद्याने। राक्षसेन पृष्टे मित्रचन्दनदासव्यसनादेवेदं क्रियते। एवं क्रमेण चन्दनदासस्य वधार्थं वध्यस्थानानयनपर्यन्तं सर्वं वृत्तान्तं श्रावयति। राक्षसो मित्रं शस्त्रव्यापारेण मोचयामीति निश्चिनोति। पुरुषश्च शस्त्रप्रयोगेणानिष्टमाशङ्क्य पूर्वघटनां श्रावयित्वा राक्षसस्य शस्त्रव्यापारं वारयति। अगत्या राक्षसः चन्दनदासं मोचयितुं वध्यस्थानमात्मार्पणेनापि गच्छति। एवं फलागमसमीपं क्रमते तावच्चाणक्यप्रयोगः। नाटककारस्यापि[२] नियताप्तिसहितविमर्शसन्धिमतिक्रम्य[३] निर्वहणसन्धिं[४] क्रमते नाट्यरचनाप्रयोगः। आत्मानं मित्रव्यसनकारणं निन्दन् नन्दं प्रशंसन् चाणक्यनीतेश्च दुर्बोधतां विचिन्तयन् राक्षसः शरणागतवत्सलं चन्दनदासं मम कार्यादेव प्राप्तप्राणसङ्कटं मोचयितुं गच्छति। कथयति च—

१. मुद्राराक्षसम् - ६।४, ततोऽग्रे च।
२. अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता। (सा.द. ६।७३)
३. यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः।। (तदेव - ६।७९-८०)
४. बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत्।। (तदेव - ६।८०-८१)

यदि च शकटो नीतः शत्रोर्मतेन ममान्तिकं
किमिति निहतस्तेन क्रोधावेशाद्वधाधिकृतो जनः।
अथ च कृतकं तादृक्कष्टं कथं नु विभावयेद्
इति मम मतिस्तर्कारूढा न पश्यति निश्चयम्[1]।।

एवं विचिन्त्य निश्चिनोति— नायं शस्त्रप्रयोगकालः। यतो हि—

नायं निस्त्रिंशकालः प्रथममिह कृते घातकानां विघाते
नीतिः कालान्तरेण प्रकटयति फलं किं तया कार्यमत्र।
औदासीन्यं न युक्तं प्रियसुहृदि गते मत्कृते चातिघोरां
व्यापत्तिं ज्ञातमस्य स्वतनुमहमिमां निष्क्रयं कल्पयामि[2]।।

इत्थं स्वतनुप्रदानेन प्रियसुहृच्चन्दनदासस्य विमोक्षणाय निश्चित्य पुरुषेण यथापूर्वनिर्दिष्टं वध्यस्थानं गच्छति राक्षसः। एतदर्थमेषा घटना राक्षसस्य निग्रहार्थमुपयुक्तदेशकालसंयोजनाय नाटककारेण विशाखदत्तेन समायोजितेति मन्ये।

नाटकस्यान्तिमेऽङ्के मलयकेतुनिग्रहसूचना तस्योपरि राक्षसकृतानुग्रहश्च प्रदर्शितौ। राक्षसं निगृह्य मुदितश्चाणक्यो निरभिमानस्तं प्रशंसन् अमात्यपदं ग्राहयति। तद्यथा चाणक्यः कथयति— 'किं बहुना, एष सङ्क्षेपतः कथयामि—

भृत्या भद्रभटादयः स च तथा लेखः स सिद्धार्थक-
स्तच्चालङ्करणत्रयं स भवतो मित्रं भदन्तः किल।
जीर्णोद्यानगतः स चापि पुरुषः क्लेशः स च श्रेष्ठिनः
सर्वं मे वृषलस्य वीर भवता संयोगमिच्छोर्नयः'[3]।।

सर्वासां घटनानां मुख्यं प्रयोजनं राक्षसनिग्रहमेव, यस्मिन् कूटनीतिज्ञः परमबुद्धिमान् चाणक्यः सफलीभूतः। एवं नाट्यशास्त्रदृष्ट्याऽपि राक्षसेनामात्यपदग्रहणेन फलागमो[4] भवति।

एवं नाटककारेण नीतिविशारदेन महाकविना विशाखदत्तेन पूर्वनियोजितघटनया सह दैवादाकस्मिकानां घटनानां समायोजनं कृत्वा कार्यव्यापाराणामेकतां समयान्वितिं सुव्यवस्थितघटनाचक्रं व्यवस्थाप्य सफला नाट्यकृतिरियं साहित्यगगनाङ्गणे चन्द्रकौमुदीरिव प्रकाशितेति शम्।

●

---

१. मुद्राराक्षसम्, ६।२०; २. तदेव, ६।२१; ३. तदेव, ७।९।
४. सावस्था फलयोगः स्याद्यः समग्रफलोदयः। (सा.द. ६।७३)

# 'अलङ्कारकौस्तुभे' खण्डनत्वेन समागतानाम् अलङ्काराणां समीक्षा

**डॉ. नागेशचन्द्रपाण्डेयः**
९/१०, सेनानीबिहारः
दहिलामऊ, प्रतापगढ़नगरम्

❀ ❀ ❀

आचार्यविश्वेश्वरपण्डितविरचितालङ्कारकौस्तुभे कारिकावृत्त्युदाहरणानि सन्ति। ग्रन्थस्यास्य टीकापि महाकविना विश्वेश्वरेण स्वयमेव लिखिता[१]। अत्र एकषष्ट्यलङ्कारा विलसन्ति। यथा—

उपमानन्वय उक्तः स्यादुपमेयोपमोत्प्रेक्षाः।
सन्देहरूपकापह्नुतयः श्लेषः समासोक्तिः।।१।।
प्रोक्ता निदर्शनाप्रस्तुतप्रशंसा त्वतिशयोक्तिः।
प्रतिवस्तूपमया सह दृष्टान्तो दीपतुल्ययोगित्वे।।२।।
व्यतिरेकश्चाक्षेपो विभावनाप्यथ विशेषोक्तिः।
तदनु यथासंख्यार्थान्तरविन्यासौ विरोधभावोक्ती।।३।।
व्याजस्तुतिः सहोक्तिर्विनोक्तिपरिवृत्तिभाविकान्यपि च।
अथ काव्यलिङ्गपर्यायोक्तोदात्ताः समुच्चयस्तद्वत्।।४।।
पर्यायोऽप्यनुमानं परिकरकितवोक्तिपरिसंख्याः।
कारणमालान्योन्योत्तरसूक्ष्मं सार इत्यसङ्गत्या।।५।।

---

१. वाग्देवतां द्विरदवक्त्रमपि प्रणम्य लक्ष्मीधरस्य विदुषश्चरणावुपास्य।
भावानलङ्करणकौस्तुभगुम्फितान्स्वान्विश्वेश्वरो विवरितुं यतते समासात्।।
(अलङ्कारकौस्तुभे मङ्गलाचरणम्)

ससमाधी समविषमावधिकाख्यं प्रत्यनीकमीलितवत्।
एकावलिस्मृतिभ्रमप्रतीपसामान्यवान्विशेषश्च।।६।।
तदतद्गुणवान्स्याद् व्याघातः सृष्टिसङ्करौ चेति।
कथ्यन्त एकषष्टिर्विद्वत्प्रवरैरलङ्काराः।।७।।

अलङ्काराश्चैते मम्मटाचार्येणापि निरूपिताः[१]।

जयदेवाप्पयदीक्षितपण्डितराजजगन्नाथादिभिराचार्यैर्निरूपितानामलङ्काराणां यत्र तत्र खण्डनमन्तर्भावो वास्य ग्रन्थस्य महद्वैशिष्ट्यम्। पूर्वाचार्यैर्वर्णितानामलङ्काराणां समासत्वेन निरूपणाय विश्वेश्वरपण्डितेन स्तुत्यः प्रयासः कृतः। एतदर्थमनेन महाभागेन पञ्चविंशत्यलङ्काराणां खण्डनमन्तर्भावो वा कृतः। प्रस्तुतनिबन्धे अकारादिक्रमेण खण्डनत्वेन समागतानामलङ्काराणां विवेचनं प्रस्तूयते—

**१. अनुगुणम्**

आचार्यविश्वेश्वरपण्डितेनालङ्कारप्रदीपेऽस्यालङ्कारस्य सोदाहरणनिरूपणं कृतम्। अलङ्कारकौस्तुभे च जयदेवप्रोक्तमनुगुणालङ्कारलक्षणं समुद्धृत्य खण्डितम्। आचार्यजयदेवमतेन यत्रान्यदीयवस्तुसान्निध्येन वर्ण्यमानवस्तुनि पदार्थे वा स्वस्यैव गुणस्याभिवृद्धिर्भवति, तत्रानुगुणाख्योऽलङ्कारो विलसति। यथा—

'नीलोत्पलानि दधते कटाक्षैरतिनीलताम्'।

उक्तश्लोके नायिकाकटाक्षबिम्बपातेन नीलोत्पलेषु नीलत्वाख्यो गुणोऽभिवर्धते। अस्मिन् सन्दर्भे विश्वेश्वरस्य कथनमस्ति यत् तद्गुणालङ्कारेऽपि यथान्यदीयवस्तुगुणग्रहणं भवति, तथैवानुगुणालङ्कारेऽपि। अतोऽनुगुणालङ्कारस्यान्तर्भावस्तद्गुणालङ्कारे उचितः[२]।

---

१. अन्यैरुदीरितमलङ्करणान्तरं यत्
काव्यप्रकाशकथितं तदनुप्रवेशात्। (अलङ्कारकौस्तभे, पृ. ४१९)

२. तेन यच्चन्द्रालोके—
'प्राक्सिद्धि(द्ध)स्वगुणोत्कर्षोऽनुगुणः परसन्निधेः।
नीलोत्पलानि दधते कटाक्षैरतिनीलताम्'।।
अनुगुणाख्यमलङ्कारन्तरामुक्तम्, तन्निराकृतं भवति। तत्राप्युत्पलीयनीलगुण एवान्तर्भावसम्भवात्। तिरोधेयगुणनिष्ठात्यन्ताभावप्रतियोगिगुणत्वसाक्षाद्व्याप्यजात्यवच्छिन्नत्वविवक्षयैवालङ्कारान्तरत्वेनानुगुणस्य तैर्लिखितत्वात्तथा विवक्षायां तु प्रयोजनाभावेनैक्यमेव स्वीकार्यमिति युक्तम्। (अलङ्कारकौस्तुभे, पृ. ४०४)

बालबोधिनीटीकाकारोऽपि विश्वेश्वरपण्डितमतेन तुष्ट इति प्रतीयते[१]।

## २. अल्पम्

आचार्यविश्वेश्वरपण्डितेनाप्पयदीक्षितकृताल्पालङ्कारखण्डनमपि कृतम्। आचार्यदीक्षितमतानुसारेण सूक्ष्माधेयापेक्षयाऽऽधारस्य सूक्ष्मतायामल्पाख्योऽलङ्कारो भवति। यथा—

'मणिमालोर्मिका तेऽद्य करे जपवटायते'।

अत्र मणिमालामयी ऊर्मिकाङ्गुलीमितत्वादतिसूक्ष्मा, सापि विरहिण्याः करे कङ्कणवत् प्रवेशिता तस्मिन् जपमालावल्लम्बते, इत्युक्त्या ततोऽपि करस्य विरहकार्श्यादतिसूक्ष्मता दर्शिता। एतेनेदृशे विषयेऽल्पं नाम पृथगलङ्कारो नोचितः। अयं त्वधिकालङ्कारस्य भेदः स्वीकर्तुं शक्यते। अतोऽस्यान्तर्भावोऽधिकालङ्कार एव भवितुमर्हति[२]। बालबोधिनीकारस्याप्ययमेव विचारः[३]। यद्यप्यलङ्कारप्रदीपे विश्वेश्वरपण्डितेनाप्यस्यालङ्कारस्य विवेचनं कृतम्; किन्तु सोऽत्र दीक्षितमतेन प्रभावितोऽस्ति[४]।

---

१. 'नीलोत्पलानि दधते कटाक्षैरतिनीलताम्' इति। एतेनात्र, अनुगुणनामा पृथगलङ्कार इत्यपास्तम्, इत्युद्द्योतः, इति तद्‌गुणः। (बालबोधिन्याम्, पृ. ७४६)

२. यत्तु—
'अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता।
मणिमालोर्मिका तेऽद्य करे जपवटायते।।
अत्राङ्गुलीयकस्य सूक्ष्मपरिमाणत्वेऽपि तदपेक्षया करस्य सूक्ष्मत्वं वर्णितमित्यल्पाख्यमलङ्कारान्तरमिति, तच्चिन्त्यम्। आधारापेक्षया आधेयस्य महत्त्वकल्पनरूपाधिक्यभेद एव पर्यवसानात्।। (अलङ्कारकौस्तुभे, पृ. ३८०)

३. अत्र सूत्रे महत्त्वशब्देन महत्परिमाणमतिशयश्च तेन यत्र सूक्ष्मत्वातिशयवतः, आधाराद् आधेयाद्वा तदन्यतरस्यातिसूक्ष्मत्वं वर्ण्यते तत्राप्ययमलङ्कारः। यथा 'मणिमालोर्मिका तेऽद्य करे जपवटायते' इति। अत्र मणिमालामयी, ऊर्मिका, अङ्गुलीमितत्वादतिसूक्ष्मा, सापि विरहिण्याः करे कङ्कणवत्प्रवेशिता तस्मिन् जपमालावत् लम्बते, इत्युक्त्या ततोऽपि करस्य विरहकार्श्यादतिसूक्ष्मता दर्शिता। एतेनेदृशे विषयेऽल्पं नाम पृथगलङ्कार इति कुवलयानन्दोक्तम् अपास्तमित्युद्द्योते स्पष्टम्। (बालबोधिनी, पृ.७२५)

४. सूक्ष्मादप्याधाराधेयस्य सूक्ष्मत्वकथनमल्पम्। सूत्रम्-९४। (अलङ्कारप्रदीपे, पृ. ६६)

### ३. असम्भवः

आचार्यजयदेवेनासम्भाव्यवस्तुवर्णनेऽसम्भवनामालङ्कारः स्वीकृतः। यथा—

'असम्भवोऽर्थनिष्पत्तावसम्भाव्यत्ववर्णनम्।
को वेद गोपशिशुकः शैलमुत्पाटयिष्यति'।।

(चन्द्रालोके-५।७५)

उपर्युक्तश्लोके शिशुना शैलोत्पाटनरूपासम्भवकार्यवर्णनत्वादसम्भवोऽलङ्कारो वर्तते। उपर्युक्तस्थले भट्टवामनाचार्येण विरोधपरिपोषकत्वादस्यान्तर्भावो विरोधालङ्कारे कृतः[१]। विश्वेश्वरपण्डितेन सम्बन्धस्यानुपपत्तावस्यान्तर्भावो विषमालङ्कारे कृतः[२]।

मम मत्या विरोधालङ्कारेऽननुरूपसङ्घटनात्मकविषमालङ्कारे वास्यालङ्कारस्यान्तर्भावः समीचीनं न प्रतीयते; यतो हि विरोधस्य विषमस्य वा स्वीकारे कस्यापि चमत्कारस्य सृष्टिर्न भवति। अतोऽसम्भवाख्यः स्वतन्त्रालङ्कारो भवितुमर्हति।

### ४. आनुकूल्यम्

आचार्यविश्वेश्वरपण्डितेनालङ्कारप्रदीपे प्रतिकूलवस्तुनोऽनुकूलताया-मानुकूल्यालङ्कारः स्वीकृतः[३]। लक्षणमिदमाचार्यविश्वनाथेन प्रभावितम्। तथाप्ययं महानुभावो विश्वनाथकृतपरिभाषां समुद्धृत्य तस्य खण्डनं कृतवान्[४]। पर्यायोक्त्यलङ्कारे प्रकारान्तरेण प्रस्तुतकार्यस्याभिव्यक्तिर्भवति। आनुकूल्यालङ्कारेऽपि

---

१. एतेन 'असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम्' इत्यसम्भवालङ्कारोऽत्रेति परास्तम्, तदुक्तेर्विरोधपरिपोषकत्वादिति प्रदीपोद्द्योतयोः स्पष्टम्। (बालबोधिन्याम्, पृ. ६६८)

२. एतेन—
'असम्भवोऽर्थनिष्पतेरसम्भाव्य(त्व)वर्णनम्।
को वेद गोपशिशुकः शैलमुत्पाटयेदिति'।।
इत्यसम्भवस्यालङ्कारान्तरत्वमपास्तम्।। (अलङ्कारकौस्तुभे, पृ. ३७४)

३. आनुकूल्यपर्य्यवसायिप्रातिकूल्यमनुकूलम्।। (अलङ्कारप्रदीपे, पृ. ४९)

४. यत्तु—
'आनुकूल्यप्रातिकूल्यमानुकूल्यानुबन्धि चेत्'
इति दर्पणादौ आनुकूल्यमलङ्कारान्तरमुक्तम्, तदत्रैवान्तर्भावादुपेक्ष्यम्।
(अलङ्कारकौस्तुभे, पृ. ३४५)

प्रतिकूलवर्णनेनानुकूलवर्णनेनानुकूलस्याभिव्यञ्जना भवति, अतोऽस्यान्तर्भावः पर्यायोक्तावसङ्गतो न प्रतीयते[१]।

## ५. उन्मीलितम्

आचार्यविश्वेश्वरपण्डितेन भट्टवामनाचार्येण चोन्मीलितमलङ्कारः पृथक्त्वेन न स्वीकृतः। उन्मीलितालङ्कारे उपमानोपमेययोरतिसादृश्यात् भेदप्रतीतौ काठिन्यमापतति। तथापि कारणवैशिष्ट्याद् भेदज्ञानं जायते। अतो निमीलितवस्तुन उन्मीलनं भवति[२]। तथापि बालबोधिनीकारेण विश्वेश्वरपण्डितेन चास्यान्तर्भावो निमीलितालङ्कारे कृतः[३]।

## ६. उल्लेखः

आचार्यविश्वेश्वरपण्डितेनालङ्कारप्रदीपे उल्लेखालङ्कारस्य निरूपणं कृतम्[४]। किन्त्वलङ्कारकौस्तुभे दीक्षितकृतोल्लेखालङ्कारस्य खण्डनमपि कृतम्। दीक्षितमतानुसारेण यत्रैकवस्तुनस्तत्तद्धर्मयोगरूपनिमित्तभेदेनानेकधोल्लेखो भवति, तत्रोल्लेखालङ्कारो भवति। विश्वेश्वरपण्डितस्तु विशेषोक्त्यलङ्कारत उल्लेखालङ्कारस्य पृथक्सत्तास्वीकारपक्षे नास्ति[५]। वामनझलकीकरमहोदयेनाप्यस्यालङ्कार-स्यान्तर्भावोऽतिशयोक्त्यलङ्कारे कृतः[६]।

---

१. अलङ्कारकौस्तुभे, पृ.३४१।

२. कुवलयानन्दः।

३. (क) अत्राहुरुद्द्योतकाराः—'स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनो लिङ्गैरतिसाम्यात्। भिन्नत्वेनागृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणानुमापकत्वं मीलितम्। एवं च 'हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते' इत्यादावपि इदमेव (मीलितमेव) शीतेन तज्ज्ञानेऽपि यशःसाधारणलिङ्गैः श्वैत्यादिभिस्तदनुमानाभावात् शीतेन जानते, इत्यनेनापि मीलनस्यैव दार्ढ्यं न त्वन्येनेति प्रतीतेः। एतेनात्रोन्मीलितं पृथगलङ्कार इति (कुवलयानन्दोक्तम्) अपास्तम्'। इति। (बालबोधिन्याम्, पृ. ७२८)

(ख) एतेन मीलितसामान्योभयप्रतिद्वन्द्विभूतमुन्मीलितविशेषात्मकं दीक्षितालङ्कारद्वयं प्रत्याख्यातम्। (अलङ्कारकौस्तुभे, पृ. ३९४)

४. एकस्यानेकसमवेताभिन्नप्रकारकज्ञानविषयत्ववर्णनमुल्लेखः।। (अलङ्कारप्रदीपे, पृ. २८)

५. इत्यत्रोल्लेखालङ्कारपार्थक्यं दीक्षितोक्तं चिन्त्यमिति न्यायपञ्चाननादयः।

(अलङ्कारकौस्तुभे, पृ. २८२)

६. एतेनेदृशेषु विषयेषु, उल्लेखालङ्कारोऽयमतिरिक्त इति केषाञ्चिदुक्तिः परास्ता।

(बालबोधिन्याम्, पृ. ६३१)

## ७. निमीलितम्

विषयप्रतिपादनं कुर्वता पण्डितराजेन भणितं यद् यस्मिन् वर्ण्यमानविषये बहुसादृश्याद् भेदप्रतीतिर्न ज्ञायते, तत्र मीलितालङ्कारो भवति। मीलितालङ्कारेऽनुमापकचिह्नैरभेदप्रतीतिर्भवति। पण्डितराजेन मीलितालङ्कारस्य लक्षणं सङ्ग्रहश्लोके इत्थं कृतम्—

भेदाग्रहेण लिङ्गानां लिङ्गैः प्रत्यक्षवस्तुनः।
अप्रकाशो ह्यनध्यक्षवस्तुनस्तन्निमीलितम्।। (रसगङ्गाधरे, पृ. ६९४)

अर्थात् स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनो लिङ्गैरतिसाम्याभिन्नत्वेनागृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणानुमापकत्वं मीलितम्।

मीलितसामान्ययोरयमेव भेदः—यत्र तिरोधायकधर्मविशेष्यको बोधस्तत्र मीलितम्। यत्र सादृश्यधर्माश्रयको बोधस्तत्र सामान्यमिति विभागः।

पण्डितराजजगन्नाथकृतपरिभाषाया वैशिष्ट्यम्—

(क) पदार्थद्वये लिङ्गानां साम्यम्।

(ख) स्फुटप्रतीयमानवस्तुनो लिङ्गे धर्मे वान्यवस्तुनः सम्मेलनेनाभेदप्रतीतिः।

(ग) उभयपदार्थयोर्मध्ये प्रबलपदार्थस्य धर्मः स्फुटतया प्रतीयते। तयोश्चिह्नेषु धर्मेषु च महत् साम्यं वर्तते।

(घ) विलीनपदार्थे गौणवस्तुनः सम्मेलनेन गौणवस्तुनोऽस्तित्वं विलुप्यते। अतो गौणवस्तुनोऽनुमानमपि न भवति। पण्डितराजमहोदयेन न्यायशैलीमङ्गीकृत्य विषयप्रतिपादनं कृत्वा स्वकीयस्वतन्त्रविचारस्य परिचयो दत्तः। यद्यप्यस्य महोदयस्य परिभाषापि प्रकारान्तरेण मम्मटकृतपरिभाषामनुकरोति; तथापि 'मक्षिकास्थाने माक्षिकापातः' न वर्तते। अयं महानुभावो वस्तुद्वयस्य लिङ्गानां स्पष्टप्रतीतावप्यतिसाम्यादभेदप्रतीतौ मीलितं स्वीकरोति। अयं विचारो मीलितालङ्कारस्य स्वरूपविचारे महत्त्वपूर्णः।

अलङ्कारचन्द्रिकाकारमते मीलितालङ्कारविकासस्वरूपक्रमे मतद्वयस्य[१] प्रतीतिर्भवति—

---

१. स्वरूपतो ज्ञायमाने सादृश्यादभेदाग्रहणं मीलितमित्यङ्गीकारे प्रथमः पक्षः। सादृश्यादभेदाग्रहणमित्येतावन्मात्रमीलितलक्षणाङ्गीकारे द्वितीय इति भावः।
(अलङ्कारचन्द्रिकायाम्, पृ. १६५)

१. द्वयोः पदार्थयोः स्वरूपज्ञानेऽपि सादृश्यादभेदप्रतीतिः।

२. केवलं सादृश्याद् भेदप्रतीतिस्थगनम्।

आचार्यविश्वेश्वरपण्डितेन पण्डितराजजगन्नाथकृतमीलितालङ्कारलक्षणस्य सङ्ग्रहश्लोके आपत्तिः कृता। अस्मिन् सन्दर्भे विश्वेश्वरपण्डितस्य कथनमस्ति, यत्— चाक्षुषविषयाद् व्यतिरिक्तेऽपि विषये यत्राप्रत्यक्षवस्तुनो लिङ्गैरनुमानं क्रियते, तत्र लिङ्गेष्वतिसादृश्यादभेदप्रतीतित्वाद् मीलितालङ्कारो भवति। अत एतद्वक्तुं शक्यते— यत्र तिरोधायकधर्मविशेष्यको बोधस्तत्र मीलितम्, यत्र तादृशधर्माश्रयको बोधस्तत्र सामान्यम्[1]।

अयमाशयः— यत्र वस्तुद्वयपरस्परसम्मेलनेन वस्तुधर्मस्तिरोहितो भवति, तत्र मीलितालङ्कारः। यत्र च तिरोधानसादृश्यकारणादेकात्मताप्रतीतिः, तत्र सामान्यम्। इत्थं ज्ञायते यत् सामान्यालङ्कारे सादृश्यस्य स्थितिरपरिहार्या।

### ८. निश्चयः

आचार्यविश्वेश्वरपण्डितेनालङ्कारप्रदीपे निश्चयालङ्कारस्य निरूपणं कृतम्; किन्त्वलङ्कारकौस्तुभे साहित्यदर्पणकारमतमुद्धृत्य खण्डनं कृतम्। दर्पणकारमते यत्रोपमानं निषिध्योपमेयं स्थाप्यते, तत्र निश्चयालङ्कारो भवति[2]। उदाहरणम्—

'वदनमिदं न सरोजं नेत्रे नेन्दीवरे एते।
इह सविधे मुग्धदृशो मधुकर मुदा न परिभ्राम्य'।।

उपर्युक्तश्लोके निश्चयान्तसन्देहः स्वीकर्तुं न शक्यते, यतो हि तत्र संशयस्य निश्चयस्य वा सामानाधिकरण्येन प्रतीतिर्भवति। भ्रान्तिमतोऽलङ्कारस्य तत्र स्थितिर्न सम्भवति, यतो ह्यत्र भ्रमरे भ्रान्तिरुत्पद्यते, नायके तु निश्चयात्मकं ज्ञानम्। संशयोक्तिः स्वीकर्तुं न शक्यते, यतो हि संशये समकोटिकज्ञानस्योदयो भवति। यद्यपि मुखे कमलस्य भ्रान्तिर्भ्रमरेणानुभूयते, अतोऽत्र भ्रान्तिमानलङ्कारः स्वीकर्तुं शक्यते; किन्तु चमत्काराभावे विश्वेश्वरपण्डितेन भ्रान्तिमानलङ्कारो न स्वीक्रियते। मुखस्य निर्धारणं कमलरूपेण न वर्तते, अतो रूपकध्वनिरपि नास्ति। प्रस्तुतार्थस्य निषेधाभावेऽपह्नुतिरपि नास्ति। अतोऽयं प्राचीनैरालङ्कारिकैर्निरूपितेभ्योऽलङ्कारेभ्यो

---

१. अलङ्कारकौस्तुभे, पृ. ३९८।

२. अप्रकृतनिषेधविशिष्टप्रकृतस्थापनं निश्चयः।। (अलङ्कारप्रदीपे, पृ. १७)

भिन्नः[१]। विश्वेश्वरपण्डितेन केन रूपेण निश्चयालङ्कारः स्वीकृतः, अस्य चर्चाऽलङ्कारकौस्तुभे न वर्तते।

## ९. परिकराङ्कुरः

आचार्यविश्वेश्वरपण्डितेनालङ्कारप्रदीपेऽस्य निरूपणं कृतम्[२]; किन्त्वलङ्कार-कौस्तुभेऽस्य खण्डनमपि कृतम्। विश्वेश्वरपण्डितमतेऽयं परिकराङ्कुरालङ्कारः परिकरान्न भिन्नः। अतः परिकरे एव तस्यान्तर्भावसम्भवः[३]।

---

१. साहित्यदर्पणकारास्तु—
'अन्यं निषिध्य प्रकृतस्थापनं निश्चयः पुनः।'
आरोप्यमाणं निषिध्य प्रकृतस्योपमेयस्य स्थापनं निश्चयालङ्कारः।।
यथा—
'वदनमिदं न सरोजं नेत्रे नेन्दीवरे एते।
इह सविधे मुग्धदृशो मधुकर मुदा न परिभ्राम्य।।
यथा वा—
हृदि विषलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि।।
न ह्ययं निश्चयान्तः सन्देहः। तत्र संशयनिश्चययोः सामानाधिकरण्यात्। इह तु भ्रमरादेर्भ्रान्ति-र्नायिकादेर्निश्चय इति वैयधिकरण्यात्। अथ कथञ्चिदेव संशयनिश्चययोः सामानाधिकरण्यं विवक्षितम्। तथा च भ्रमरनिष्ठसंशयज्ञानान्नायकेऽपि सन्देहोऽस्त्येव, ज्ञानज्ञानस्य बाधकं विना तज्ज्ञानविषयविषयकत्वनियमादिति चेत्, न, तथापि चात्र भ्रमरादेरपि सन्देहः। समकोटिकज्ञानस्यैव संशयत्वात्। अत्र च तथात्वे मुखसमीपगमनादिवर्णनानुपपत्तेः। तर्हि भ्रान्तिमानेवास्त्विति चेत्, न, भ्रमरादेर्भ्रान्तिसत्त्वेऽपि इह चमत्कारानाधायकतयान-लङ्कारत्वात्। तादृशनायकोक्तेरेव चमत्कारकत्वात्। भ्रमरभ्रान्त्यादेरविवक्षायामपि नायिका-प्रतीत्यर्थमपि एतादृशोक्तिसम्भवाच्च। न च रूपकध्वनिः, मुखस्य कमलत्वेनानिर्धारणात्। नाप्यपह्नुतिः प्रस्तुतस्य निषेधाभावात्। अतः पृथगेवायं चिरन्तनोक्तालङ्कारेभ्य इत्याहुः। (अलङ्कारकौस्तुभे, पृ.२३९-४०)

२. विशेष्यस्य साभिप्रायकत्वं परिकराङ्कुरः।। सूत्रम्—६३।। (अलङ्कारप्रदीपे, प. ५३)

३. विशेष्यस्य साभिप्रायत्वे परिकराङ्कुरः। यथा—
नरसिंह महीपाल कीर्तिस्त्रिपथगा तव।
न कस्य भवति श्लाघ्या पुनाना भुवनत्रयम्।।
अत्र भुवनत्रयपावनोपपत्त्यर्थं त्रिपथगापदं साभिप्रायमिति। तन्न। परिकर एवान्तर्भावसम्भवात्। त्रिपथगापदस्य हि गङ्गाविशेष्यकमार्गत्रयगामित्वप्रकारकबोधत्वं कार्यतावच्छेदकम्। तत्र विशेषणीभूतमार्गत्रयगामित्वांशस्यैव प्रकृतोपकारकत्वात्।
(अलङ्कारकौस्तुभे, पृ. ३५५-३५६)

यथाङ्कुरो वृक्षाद् भिन्नो न भवति, तथैव परिकराङ्कुरोऽपि परिकरालङ्काराद् भिन्नो न वर्तते[1]। बालबोधिनीकारेणापि परिकराङ्कुरस्यान्तर्भावः परिकरे कृतः[2]।

## १०. परिणामः

अलङ्कारप्रदीपेऽस्यापि निरूपणं वर्तते[3]; किन्त्वाचार्यविश्वेश्वरपण्डितेनालङ्कारकौस्तुभेऽप्पयदीक्षितमतमुद्धृत्य खण्डनं विधाय न्यायपञ्चाननमतानुसारेणोपमालङ्कारमध्येऽयं स्वीकृतः[4]।

## ११. पूर्वरूपम्

आचार्यविश्वेश्वरपण्डितेनालङ्कारप्रदीपेऽस्य परिगणनं कृतम्[5]। लक्षणमुदाहरणमपि दत्तम्, किन्त्वलङ्कारकौस्तुभेऽस्यान्तर्भावस्तद्गुणालङ्कारे कृतः[6]। अस्मात् पूर्ववर्त्याचार्यपण्डितराजजगन्नाथेन तद्गुणालङ्कारेऽस्यान्तर्भावः स्वीकृतः[7]।

---

१. वृक्षात्तदङ्कुर इवायं परिकरान्नातिरिच्यते। (उद्धृतं साहित्यदर्पणे, पृ. ७५)

२. एतेन साभिप्राये विशेष्ये परिकराङ्कुरनामा भिन्नोऽलङ्कार इत्यपास्तमित्युद्द्योते स्पष्टम्। सुधासागरकारास्तु विशेष्यांशस्य साभिप्रायत्वे परिकराङ्कुरः स्वीकृतो जयदेवादिभिः, न चासौ प्रामाणिकः, तत्रापि विशेषणांशस्यैव साभिप्रायत्वाद् निर्धर्मकस्य विशेष्यांशमात्रस्य स्वप्नेऽपि साभिप्रायत्वासम्भवात्, अत एव खण्डितोऽस्माभिः कुवलयानन्दखण्डने, इत्याहुः। (बालबोधिन्याम्, पृ. ६९९)

३. आरोप्यस्यारोपविषयतादात्म्यापत्त्या प्रकृतोपयोगः परिणामः।। सूत्रम् - २।। (अलङ्कारप्रदीपः, पृ. ६)

४. यत्तु—

'परिणामः क्रियार्थश्चेद्विषयी विषयात्मना।<br>प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा'।।

अत्र परिणामालङ्कारः पृथगेव। तथा हि वीक्षणे चक्षुष एव करणत्वं न त्वब्जस्येति निर्बाधम्। दृगब्जेत्यत्र रूपकस्वीकारे चाब्जप्राधान्याद्वीक्षणानुपपत्तिः। न चोपमैवास्त्विति वाच्यम्, प्रसन्नत्वरूपसामान्यधर्मप्रयोगस्य बाधकत्वात्। तस्मादब्जस्य दृगात्मना परिणामेन प्रकृतोपयोगादलङ्कारान्तरमेवेति।

तत्र न्यायपञ्चाननादयः—उपमैवेयं भवितुमर्हति। न च प्रसन्नत्वरूपधर्मप्रयोगस्तद्बाधकः, तदतिरिक्तरमणीयत्वादिधर्मनिमित्तकसादृश्यस्य विवक्षितत्वात्। उपमानिमित्तधर्मप्रयोग एवोपमितसमासनिषेधस्य 'भाष्याब्धिः क्वातिगम्भीरः' इत्याद्यनुरोधेन स्वीकारादित्याहुः। (अलङ्कारकौस्तुभे, पृ. १६०-१६१)

५. पुनः स्वगुणप्राप्तिस्तादृश्येव पूर्वरूपम्।।८३।। (अलङ्कारप्रदीपे, पृ. ६३)

६. इति पूर्वरूपाख्यमलङ्का(रान्त)रमपास्तम्, तद्गुणद्वयरूपत्वात्। (अलङ्कारकौस्तुभे, पृ. ४०४)

७. (क) इमं केचित् पूर्वरूपमामनन्ति। (रसगङ्गाधरे, पृ. ८१२)

(ख) चन्द्रालोकसुधा—सिद्धसेन दिवाकर, पृ. १५९।

आचार्यमम्मटेन रुय्यकेन च पृथग्रूपेण पूर्वरूपालङ्कारो न स्वीकृतः। (द्रष्टव्यम्— डॉ. भोलानाथ व्यासः, कुवलयानन्दम्, पृ. २३६ टिप्पणी)। एतत् कथनमैतिहासिकदृष्ट्या दोषपूर्णमस्ति। मम्मटस्य रुय्यकस्य वा काले पूर्वरूपालङ्कारस्य समस्या नासीत्। समर्थनस्य विरोधस्य वा प्रश्नो नोदेति, काव्यप्रकाशेऽलङ्कारसर्वस्वे चास्मिन् विषये कोऽपि सङ्केतो न प्राप्यते। पूर्वरूपालङ्कारविधायकोऽस्त्याचार्यजयदेवप्रथमः, यस्यानुगमनमप्पय्यदीक्षितेन कृतम्। पण्डितराज-गोविन्दठक्कुरनागेशभट्टप्रभृतीनां विदुषां समये पूर्वरूपकालङ्कारस्य लक्षणस्या-विर्भावः सञ्जातः। अतस्तैर्महात्मभिर्द्वितीयतद्गुणालङ्कारेऽस्य समावेशः कृतः[१]।

## १२. प्रस्तुताङ्कुरः

आचार्यविश्वेश्वरपण्डितेनालङ्कारप्रदीपे प्रस्तुताङ्कुरस्य सोदाहरणं विवेचनं कृतम्। तस्य परिभाषा जयदेवेन दीक्षितेन च प्रभाविता[२]। विश्वेश्वरपण्डितेन दीक्षितकृतमस्य खण्डनं विधायाप्रस्तुतप्रशंसायामस्यालङ्कारस्यान्तर्भावः कृतः[३]।

## १३. प्रहर्षणम्

इष्टाधिकलाभे प्रहर्षणालङ्कारो भवति, इत्यलङ्कारप्रदीपे विद्वद्वरेण विश्वेश्वरपण्डितेन लक्षणं कृतम्[४]; किन्त्वलङ्कारकौस्तुभे स्वयमेव तस्य खण्डनं कृतम्।

---

१. तदेव, पृ. १६०।

२. प्रस्तुतवृत्तान्तेन प्रस्तुतप्रतीतिः प्रस्तुतालङ्कारः।। सूत्रम् - २०।। (अलङ्कारप्रदीपे, पृ. २३)

३. यदप्युक्तम्—

'प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः।
किं भृङ्ग सत्यां मालत्यां केतकीकण्टकेच्छया'।।

अत्र वाच्यव्यङ्ग्यवृत्तान्तयोर्द्वयोरपि प्रकृतत्वेन समाप्तोक्त्यप्रस्तुतप्रशंसाभ्यामतिरिक्तत्वस्य स्फुटत्वात्। प्रस्तुतनिष्ठव्यञ्जकतानिरूपितव्यङ्ग्यताशाल्यप्रस्तुतकत्वेऽप्रस्तुतनिष्ठव्यञ्जकता-निरूपितव्यङ्ग्यताशालिप्रस्तुतकत्वे च तदुभयोपगमात्। अत्र हि प्रियेण सह विहरन्त्या उक्तो भृङ्गोऽपि प्रकृत एव। न च भृङ्गसम्बोधनानुपपत्त्या प्रियमात्राभिप्रायेणैवेयमुक्तिरिति वाच्यम्, अचेतनेऽप्यामन्त्रणदर्शनेन तदविरोधात्। एवं च प्रस्तुतेन वाच्येन भृङ्गोपालम्भेन पत्न्याः कुलवध्वाः सौन्दर्यादिगुणशालिन्याः सत्त्वे क्रूरजनपरिवृतायां सर्वस्वापहरणसङ्कल्पदुरासदायां कण्टकाकुलकेतकीकल्पायां वेश्यायां समागमेन किमित्युपालम्भो द्योत्यते।

(अलङ्कारकौस्तुभे, पृ. २७५)

४. इष्टादधिकलाभः प्रहर्षणम्।। सूत्रम् - ९०।। (अलङ्कारप्रदीपे, पृ. ६५)

बालबोधिनीकारो विश्वेश्वरपण्डितश्चोभावस्यालङ्कारस्यान्तर्भावं समाध्यलङ्कारे कृतवन्तौ[१]।

## १४. प्राढौक्तिः

आचार्यविश्वेश्वरपण्डिनालङ्कारप्रदीपे बालावबोधनार्थं प्रौढोक्त्यलङ्कारो निरूपितः[२]; किन्त्वलङ्कारकौस्तुभेऽस्यान्तर्भावोऽतिशयोक्त्यलङ्कारे कृतः[३]। बालबोधिनीकारोऽप्यसम्बन्धे सम्बन्धरूपातिशयोक्तावन्तर्भावः कृतः[४]।

## १५. मिथ्याध्यवसितिः

अलङ्कारप्रदीपे अस्यालङ्कारस्य निरूपणं विश्वेश्वरपण्डितेन कृतम्[५]; किन्त्वलङ्कारकौस्तुभे दीक्षितकृतलक्षणस्य खण्डनं कृत्वाऽस्याप्यन्तर्भावोऽतिशयोक्त्यलङ्कारे कृतः[६]। बालबोधिनीकारस्यायमेव विचारः[७]।

---

१. (क) अत्र 'कारणान्तरयोगतः' इत्युपलक्षणम्। तेनाकस्मादीप्सितार्थलाभस्य वाञ्छितसिद्ध्यर्थयत्नात्तदधिकलाभस्य, उपायसिद्ध्यर्थयत्नात्साक्षात्फललाभवर्णनस्य च समाधित्वमेव सौकर्यस्य, अनायासेन सिद्ध्यादिरूपस्येवाकस्मिकत्वादिरूपस्यापि ग्रहात्। एतेन, ईदृशे विषये प्रहर्षणं भिन्नोऽलङ्कार इत्यपास्तम्। (बालबोधिन्याम्, पृ. ७१७)

(ख) एतेन प्रहर्षणमलङ्कारान्तरमपास्तम्। एवं हि तत्। साक्षात्तदुद्देश्यकयत्नमन्तरेणाप्यभीष्टार्थलाभः प्रहर्षणम्। तत्त्रिविधम्। अकस्मादभीप्सितार्थस्य लाभे, तत्सिद्ध्यर्थं यत्ने क्रियमाणे ततोऽप्यधिकवस्तुनो लाभे, उपायार्थप्रवृत्त्या फललाभे च।

(अलङ्कारकौस्तुभे, पृ. ३७०)

२. उत्कर्षानुपपादनेऽप्युत्कर्षहेतुत्वकथनं प्रौढोक्तिः।। सूत्रम् - २४।। (अलङ्कारप्रदीपे, पृ. २६)

३. यच्च— "प्रौढोक्तिरुत्कर्षहेतौ तद्धेतुत्वप्रकल्पने।
कचाः कलिन्दजातीरतमालस्तोममेचकाः।।

अत्र यमुनाप्ररूढत्वस्य तमालानां श्यामताहेतुत्वं नास्ति, निमित्तकारणगुणानां कार्यगुणाजनकत्वात्, तथापि श्यामलतातिशयकथनात्प्रौढोक्तिरलङ्कारान्तरमिति, तदपि न। तत्रापि यदि यमुनातीरप्ररोहणेन तमालानां नीलत्वातिशयः स्यात् तदा केशानां श्यामतोपमा स्यादित्यत्रैव तात्पर्यात्।। (अलङ्कारकौस्तुभे, पृ. २८४)

४. एवम् उत्कर्षहेतौ तद्धेतुत्वकल्पनारूपा प्रौढोक्तिरसम्बन्धे सम्बन्धरूपातिशयोक्त्या गतार्था।
(बालबोधिन्याम्, पृ. ७०३)

५. कस्यचिदर्थस्य मिथ्यात्वसिद्धये मिथ्याभूतार्थान्तरोपकल्पनं मिथ्याध्यवसितिः।। सूत्रम् -२३।।
(अलङ्कारप्रदीपे, पृ. २६)

६. इति सम्भावनमिथ्याध्यवसित्योः पृथगलङ्कारत्वमपास्तम्। (अलङ्कारकौस्तुभे, पृ. २८३)

७. मिथ्याध्यवसितिर्वेश्यां वशयेत् खस्रजं वहन्। इति मिथ्याध्यवसितिरसम्बन्धे सम्बन्धातिशयोक्त्या गतार्थेति दिगित्युद्द्योते स्पष्टम्। (बालबोधिनी, पृ. ७०३)

## १६. युक्तिः

आचार्यविश्वेश्वरपण्डितमतेन क्रियया रहस्यगोपनं युक्तिर्नामालङ्कारः कथ्यते[१]। अलङ्कारकौस्तुभेऽस्य खण्डनं विधाय व्याजोक्त्यलङ्कारेणास्य भिन्नता प्रतिपादिता विश्वेश्वरपण्डितेन। व्याजोक्तौ वचसा गोपनं भवति। युक्त्यलङ्कारे क्रियायामेवानयोर्भेदः[२]।

आचार्यवामनझलकीकरेणापि व्याजोक्त्याऽस्यालङ्कारस्य भिन्नता स्वीकृता[३]।

मम मत्या व्याजोक्त्यलङ्कारवद्युक्त्यलङ्कारेऽपि गोपनतत्त्वस्य साम्यं परिलक्ष्यते। अतो युक्तिर्नामालङ्कारो व्याजोक्तितो न भिन्नः।

## १७. ललितम्

आचार्यविश्वेश्वरपण्डितेनाप्पयदीक्षितकृतलक्षणमुद्धृत्य तस्य खण्डनं कृतम्। अप्पयदीक्षितमतेन वर्णनीयविषये उपस्थितेऽपि तद्वर्णनमकृत्वैव प्रतिबिम्बभूतस्य वस्तुनो यत्र वर्णनं क्रियते, तत्र ललितालङ्कारः। उदाहरणम्—

'प्रस्तुते वर्ण्यवाक्यार्थे प्रतिबिम्बस्य वर्णनम्।
ललितं निर्गते नीरे सेतुमेषा चिकीर्षति'।।

अयमाशयः— जले निर्गते सेतुनिर्माणं व्यर्थम्। इत्यनेन व्यज्यते यत् काचिन्नायिका सखीं प्रति कथयति यद् अन्यमहिलासक्ते नायके तदानयनार्थं श्रमो व्यर्थ इति।

उपर्युक्तस्थलेऽप्रस्तुतप्रशंसालङ्कारोऽपि न सम्भवति, धार्मिकत्वाच्च समासोक्त्यलङ्कारोऽपि न सम्भवति। तत्र प्रस्तुतवृत्तान्ते वर्ण्यमानेऽप्रस्तुतवृत्तान्तस्य

---

१. तादृशी क्रियायुक्तिः।। सूत्रम् - ५३।
(तादृशी = रहस्याप्रकाशप्रतिबन्धिकेत्यर्थः)— अलङ्कारप्रदीपे, पृ. ५३।

२. अत्र तु युक्तिरलङ्कारः। व्याजोक्तौ वचसा गोपनम्, इह तु क्रियया, इति द्वयोर्भेद इति, तत्र। व्याजोक्तिलक्षणस्योभयसाधारण्यात्। तत्रोक्तिनिवेशस्य गौरवपराहतत्वात्। अन्यथा प्रकारान्तरेण गोपनस्थलेऽलङ्कारान्तरप्रसङ्गात्। तत्राप्युक्तक्रियान्यत्वनिवेशस्य सुवचत्वादिति दिक्। (अलङ्कारकौस्तुभे, पृ. ३५८)

३. 'युक्तिः परातिसन्धानं क्रियया मर्मगुप्तये' इति युक्तिनामात्रालङ्कार इत्यपास्तम्।
(बालबोधिन्याम्, पृ. ७०३)

प्रतीतिः। निदर्शनालङ्कारोऽपि न सम्भवति। यतो हि तत्र प्रस्तुताप्रस्तुतवृत्तान्त-योरैक्यसमारोपो भवति। अतो ललिताख्योऽलङ्कारोऽलङ्कारान्तरमेव[1]।

बालबोधिनीकारमतेनोक्तस्थले निदर्शनालङ्कारो विद्यते[2]। अलङ्कारप्रदीपे त्वस्य लक्षणं विश्वेश्वरपण्डितेन कृतम्, तल्लक्ष्णं तु दीक्षितेन प्रभावितम्[3]।

## १८. लेशः

आचार्यविश्वेश्वरपण्डितेन दोषगुणयोर्गुणदोषत्वप्रकल्पने लेशालङ्कारः स्वीकृतः। अस्य मते यत्र दोषस्य गुणरूपे गुणस्य वा दोषरूपे वर्णनं भवति, तत्र लेशाख्योऽलङ्कारः[4]। विश्वेश्वरपण्डितेनायमलङ्कारो विरोधमूलकालङ्कारमध्ये परिगणितः। अस्यान्तर्भावो व्याघातालङ्कारे कृतः। दीक्षितमतं समुद्धृत्य तेन भणितं यत्—

'अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु।
शुक! पञ्जरबन्धस्ते मधुराणां गिरां फलम्'।।

उक्तवाक्ये शुकनिष्ठवक्तृत्वगुणस्य स्वाच्छन्द्यविरोधित्वेन दोषत्वं तद्भिन्न-पक्षनिष्ठवक्तृत्वाभावदोषस्य स्वच्छन्दानुकूलत्वेन गुणत्वं कल्पितम्।

---

१. अत्र केचित्—ललितमप्यलङ्कारान्तरमेव। यत्र प्रकृतवाक्यार्थमनुपन्यस्य तत्प्रतिबिम्बभूत-वाक्यार्थान्तरमात्रमुपन्यस्यते, यथा—
'प्रस्तुते वर्ण्यवाक्यार्थे प्रतिबिम्बस्य वर्णनम्।
ललितं निर्गते नीरे सेतुमेषा चिकीर्षति'।।
अत्र ललितमिति लक्ष्योक्तिः। पूर्वार्धं लक्षणम्। निर्गत इत्याद्युदाहरणम्। इयं हि दाक्षिण्यादुपागते नायके प्रतिनिवृत्य नायिकान्तरासक्ते सति तदानयनाय प्रेषयितुकामां नायिकां प्रति सख्या उक्तिः। तर्हि इहापि प्रस्तुतधर्मिगतत्वेन वर्ण्यमानादप्रस्तुतवृत्तान्तात्तद्गतत्वेन प्रकृतवाक्यार्थप्रतीतिरूपविच्छित्तिविशेषसद्भावादलङ्कारान्तरमेव कल्पयितुमुचितमिति सर्वा-लङ्कारविलक्षणमिदं ललितमिति। (अलङ्कारकौस्तुभे, पृ. २६६-२६७)

२. 'नितरां निर्गते नीरे सेतुमेषा चिकीर्षति' इत्यादौ किञ्चिद्दाक्षिण्यसमागततत्कालोपेक्षितप्रति-निवृत्तनायिकान्तरासक्तनायकानयनार्थं सखीं प्रेषयितुकामां नायिकामुद्दिश्य सख्या वचनेऽपि आर्थी निदर्शनैव। एतेनात्र ललितालङ्कारः, वर्णनीयवाक्यार्थमनुक्त्वैव वर्ण्ये धर्मिणि तत्सरूपस्य कस्यचिदप्रस्तुतवाक्यार्थस्य वर्णनरूपः, इति (कुवलयानन्दे, अप्पयदीक्षितोक्तम्) अपास्तम्। (बालबोधिन्याम्, पृ. ६१५)

३. प्रकृतमनुपन्यस्य तत्स्थानीयवाक्यार्थान्तरोपन्यासो ललितम्।। सूत्रम् - १८।
(अलङ्कारप्रदीपे, पृ. २१)

४. दोषगुणयोर्गुणदोषत्वकल्पनं लेशः।। सूत्रम् - १०२। (अलङ्कारप्रदीपे, पृ. ७०)

यत्र मधुरवाक्प्रयोगेण शुकस्य पञ्जरे बन्धनं भवति, तत्र मधुरवागभावेऽन्ये पक्षिणः स्वातन्त्र्येण विचरन्ति, अतोऽत्र विरुद्धकार्यस्यानर्थहेतुताभिमता, अस्मात् कारणादत्र व्याघातालङ्कारः[१]।

बालबोधिनीकारमतेनोपर्युक्तस्थले विशेषनामकालङ्कारोऽस्ति[२]।

## १९. विकस्वरः

आचार्यविश्वेश्वरपण्डितमतेन यत्र विशेषस्य सामान्येन समर्थनं विधीयते, पुनस्तस्य पुष्ट्यर्थं तृतीयवाक्ये विशेषस्य वर्णनं क्रियते, तत्र विकस्वरोऽलङ्कारो भवति[३]।

पण्डितराजजगन्नाथ—विश्वेश्वरपण्डित-बालबोधिनीकारप्रभृतयो विद्वांसोऽमुमलङ्कारमर्थान्तरन्यासतः पृथग् न स्वीकुर्वन्ति[४]।

---

१. एतेन लेशो निरस्तः। एवं हि स परैरुक्तः—
'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम्'।
अत्र चिरप्रोषितपुत्रदर्शनोत्सुकस्य पितुरप्रस्तुतप्रशंसारूपे वाक्ये शुकनिष्ठवक्तृत्वगुणस्य स्वाच्छन्द्यविरोधित्वेन दोषत्वं तद्भिन्नपक्षिनिष्ठवक्तृत्वाभावदोषस्य च स्वाच्छन्द्यानुकूलत्वेन गुणत्वं कल्पितम्। न चात्र व्याजस्तुतिरिति वाच्यम्। शुकस्य निन्दाव्याजेन प्रशंसायां तदन्येषां स्तुतिव्याजेन निन्दायां वा प्रकृते तात्पर्यविरहस्य स्पष्टत्वात्। तत्राप्यपकारहेतुत्वेनाभिमताद्वक्तृत्वादुक्तस्वाच्छन्द्यप्रतिबन्धकरूपविरुद्धकार्यस्यानर्थहेतुत्वाभिमत-कार्योत्पत्तेश्चाभिधानाद् व्याघात एवान्तर्भावात्। एवमुदाहरणान्तरेऽपि योज्यम्।
(अलङ्कारकौस्तुभे, पृ. ४०७-४०८)

२. एतेनेदृशे विषये लेशनामा पृथगलङ्कार इत्यपास्तम्। (बालबोधिन्याम्, पृ. ७४१)

३. विशेषसमर्थकस्य सामान्यस्य विशेषान्तरेण समर्थनं विकस्वरः।। सूत्रम् - ३८।
(अलङ्कारप्रदीपे, पृ. ४०)

४. (क) 'अर्थान्तरन्यासस्य तस्य चार्थान्तरन्यासप्रभेदयोश्च संसृष्टेष्वेवोदाहरणानां त्वदुक्तानां गतार्थत्वे नवीनालङ्कारस्वीकारानौचित्यात्। अन्यथोपमादिप्रभेदानामनुग्राह्यानुग्राहकतया सन्निवेशितेऽप्यलङ्कारान्तरकल्पनापत्तेः।
(रसगङ्गाधरे, पृ. ७५३, चन्द्रालोकसुधा, सिद्धसेनदिवाकरः, पृ. ९४)

(ख) यत्तु वदन्ति— 'यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः।
स न जज्ञे (जिग्ये) महान्तो हि दुर्जयाः सागरा इव'।।
अत्र विशेषसमर्थनाय सामान्योपन्यासेऽपि पुनः सामान्यसमर्थनाय विशेषोपन्यास इति विकस्वरोऽलङ्कारान्तरम्। (अलङ्कारकौस्तुभे, पृ. ३२०)

(ग) एतेन 'यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः' यथा— अनन्तेति, इति विकस्वरालङ्कारोऽयं पृथगित्यपास्तमित्युद्द्योते स्पष्टम्।। इत्यर्थान्तरन्यासः।।२२।।
(बालबोधिन्याम्, पृ. ६६३)

## २०. विचित्रम्

आचार्यविश्वेश्वरपण्डितमते इष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टप्रतिकूलाचरणं विचित्राख्योऽलङ्कारो भवति[1]; किन्त्वलङ्कारकौस्तुभेऽस्यालङ्कारस्य विषमालङ्कारादभेदिता प्रतिपादिता[2]। बालबोधिनीकारस्याप्ययमेव विचारः[3]।

## २१. वितर्कः

विश्वेश्वरपण्डितमते संशयोत्तरमनिर्णयेऽपि क्रियमाण ऊहो वितर्काख्योऽलङ्कारः[4]। अयं महानुभावोऽलङ्कारकौस्तुभेऽस्यान्तर्भावं[5] सन्देहालङ्कारे कृतवान्।

---

१. इष्टार्थविरुद्धे प्रयत्नो विचित्रम्।। सूत्रम् - ११०। (अलङ्कारप्रदीपे, पृ. ७५)

२. एतेनैव— इष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टप्रतिकूलार्थाचरणं विचित्रालङ्कारः। यथा—

बन्धोन्मुक्त्यै खलु मखमुखान्कुर्वते कर्मपाशा-
नन्तः शान्त्यै मुनिशतमतानल्पचिन्तां भजन्ति।
तीर्थे मज्जन्त्यशुभजलधेः पारमारोढुकामाः
सर्वं प्रामादिकमिह भवभ्रान्तिभाजां नराणाम्।।

इत्यपि परास्तम्। उन्मुक्तिपाशयोः कार्यकारणभावानुपपत्तिसत्त्वात्।।

(अलङ्कारकौस्तुभे, पृ. ३७४)

३. एवमिष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टविपरीतयत्नाचरणमपि विषममेव, यथा— 'नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम्' (इति। अत्र) वाच्यप्रतीतिवेलायां योगवैषम्यप्रतीतेः। एतेनात्र विचित्रालङ्कारः पृथगित्यपास्तमित्याहुः। इति विषमम्।।४७।।

(बालबोधिन्याम्, पृ. ७२३)

४. संशयोत्तरमनिर्णये ऊहो वितर्कः।। सूत्रम् - ९। (अलङ्कारप्रदीपः, पृ. १०)

५. केचित्तु— वितर्कालङ्कारमप्यतिरिक्तं वदन्ति। संशयोत्तरमनिर्णये ऊहो वितर्कः। नुशब्दादिश्च तद्व्यञ्जक इति। अत्राहुः—वितर्कहेतुत्वेन संशयस्यावश्यमङ्गीकार्यतया संशय एवालङ्कारः। न च संशये सति ब्रह्मा यदि निर्माता स्यान्निर्माणसामग्रीमान् स्यादिति तर्कस्यापाद्यं निर्माणसामग्रीमत्त्वं 'वेदाभ्यासजडः' इत्यादिना निषिध्यत इति पृथगिति वाच्यम्। सर्वस्रष्टृब्रह्मसत्त्वे कथमेतन्निर्मातृत्वं तत्र नास्तीत्याशङ्कामपनेतुं 'वेदाभ्यासजडः' इत्याद्युक्तेः। एवम् 'अयं मार्तण्डः किम्' इत्यादावपि यद्ययं मार्तण्डः स्यादिति तर्कापाद्यं 'समतुरगत्वं स खलु इत्यादिना' न निषिध्यते; किन्तु मार्तण्डत्वादिप्रकारकसन्देहे सति कथं कृशानुत्वादिप्रकारकसंशय इति मार्तण्डत्वप्रकारकसंशयनिवृत्त्यर्थमेव तदिति।

(अलङ्कारकौस्तुभे, पृ. २००)

बालबोधिनीकारोऽपि संशयादलङ्कारादभिन्नत्वेन स्वीकरोति, यतो हि सन्देहादेव वितर्कालङ्कारोत्कर्षसिद्धिर्भवति[१]।

## २२. विशेषः

आचार्यविश्वेश्वरपण्डितेनालङ्कारप्रदीपे आधारं विनाऽप्याधेयस्योपस्थितौ विशेषाख्योऽलङ्कारः स्वीकृतः[२]; किन्त्वलङ्कारकौस्तुभेऽस्यान्तर्भावः सामान्ये कृतः[३]। बालबोधिनीकारमतेनाप्ययमलङ्कारः सामान्यालङ्कार एवान्तर्भवितुमर्हति[४]।

## २३. विषादः

विश्वेश्वरपण्डितेनालङ्कारप्रदीपे विरुद्धार्थस्य सम्प्राप्तौ विषादालङ्कारः स्वीकृतः[५]; किन्त्वलङ्कारकौस्तुभेऽननुरूपसङ्घटनावर्णनविषयत्वाद् विषमालङ्कारादभिन्नत्वं प्रतिपादितम्[६]।

---

१. केचित्तु— 'अस्याः सर्गविधौ' इत्यत्र वितर्कालङ्कारः, वितर्कश्च संशयोत्तरमनिर्णये ऊहः, तद्व्यञ्जकश्च। स चेत्थम्— चन्द्रान्यो यदि निर्माता स्यात्कान्तिप्रदो न स्यादित्याद्याकारः, अत एव ब्रह्मा यदि निर्माता स्यात्, निर्माणसामग्रीमान् स्यादिति संशयोत्तरवर्तितर्कस्यापाद्यं 'वेदाभ्यासजडः' इत्यादिना निषिध्यत इति, तन्न। वितर्ककारणत्वेन त्वयापि अत्र संशयाङ्गीकारेण तस्यैवालङ्कारत्वात् सतोऽपि वितर्कस्य वर्णनीयोत्कर्षानाधायकत्वेनालङ्कारत्वाभावाच्च सन्देहेनैव तस्या उत्कर्षसिद्धेः। (बालबोधिन्याम्, पृ. ५९२)

२. आधारं विनापि वृत्तिर्विशेषः।। सूत्रम् - ९९। (अलङ्कारप्रदीपे, पृ. ६८)

३. एतेन मीलितसामान्योभयप्रतिद्वन्द्विभूतमुन्मीलितविशेषात्मकं दीक्षितालङ्कारद्वयं प्रत्याख्यातम्। (अलङ्कारकौस्तुभे, पृ. ३९४)

४. एतेनेदृशे विषये विशेषालङ्कारः पृथगित्यपास्तम्। इत्युद्द्योतः। इति सामान्यम्। (बालबोधिन्याम्, पृ. ७४१)

५. विरुद्धप्राप्तिर्विषादनम्।। सूत्रम् - ९१। (अलङ्कारप्रदीपे, पृ. ६५)

६. यत्तु—अभीष्टार्थविरुद्धलाभो विषादालङ्कारः। यथा—

तत्तद्व्यापृतिमग्नमानसतया मत्ते निवृत्ते सदा
चञ्चूकोटिविपाटितार्गल इतो यास्याम्यहं पञ्जरात्।
इत्थं कीरवरे मनोरथमयं पीयूषमास्वादय-
त्यन्तः सम्प्रविवेश वारणकराकारः फणिग्रामणीः।।

न ह्यत्र विषमसम्भवः। इष्टार्थकारणप्रयोगाभावात्। इष्टार्थप्रयुक्तकारणेन। सहोत्पाद्योत्पादकभावलक्षणसंसर्गाननुरूपत्वस्य तच्छरीरत्वादिति, तच्चिन्त्यम्। मोक्षरूपेष्टकारणस्येच्छाया इहापि प्रयोगात्। अथेच्छायाः प्रयोगेऽपि अनिष्टं न तज्जन्यमिति चेत्, किं तत्। इष्टसाधनत्वेन निश्चितात्कारणादनिष्टकार्योत्पत्तिरिति विषमस्वभावाभाव इति चेत्, कुतः? इष्टप्राप्त्यभावविशिष्टानिष्टप्राप्तेरेव तत्स्वरूपत्वात्। अनिष्टे इष्टार्थप्रयुक्तकारण-

बालबोधिनीटीकाकारोऽपि विषादालङ्कारं विषमादभिन्नं स्वीकरोति[१]।

## २४. सम्भावना

आचार्यविश्वेश्वरपण्डितेनालङ्कारकौस्तुभे सम्भावनालङ्कारस्यान्तर्भावोऽतिशयोक्त्यलङ्कारे कृतः, पृथक्त्वेन न स्वीकृतः[२]। बालबोधिनीकारमते सम्भवप्रमाणात् सम्भावनाऽलङ्कारोऽभिन्नः[३]।

## २५. हेतुः

अस्यालङ्कारस्य सङ्केतो भामहकृतकाव्यालङ्कारे प्राप्यते; किन्त्वाचार्यभामहेन हेत्वाख्योऽलङ्कारोऽलङ्काररूपेण न स्वीकृतः। अस्मिन् सन्दर्भे भामहस्य कथनमस्ति यदत्रालङ्कारे वक्रोक्तेरभावोऽतो हेतुश्च सूक्ष्मो लेशोऽथ नालङ्कारतया मतः[४]।

आचार्यभामहेनोपेक्षितो हेत्वाख्योऽलङ्कारो आचार्यदण्डिना वाचामुत्तमभूषणत्वेन स्वीकृतः। उदाहरणरूपे च भामहोदाहृतश्लोक एव निवेशितः[५]।

---

जन्यत्वविशेषणे प्रयोजनाभावात्। त्वया च विषादनालङ्कारपार्थक्यदुराग्रहेणैव तस्य दत्तत्वात्। तस्मादिष्टार्थमुद्यतस्य तत्प्राप्त्यभावसहितानिष्टप्राप्तिरेव विषमभेदस्य शरीरम्।
(अलङ्कारकौस्तुभे, पृ. ३७७-३७८)

१. एवमिष्यमाणविरुद्धार्थप्राप्तिरपि विषममेव तादृशेच्छया तादृशार्थलाभयोगस्य विषमत्वात्। एतेनेदृशस्थले विषादनामालङ्कार इत्यपास्तम्। (अलङ्कारकौस्तुभे, पृ. २८३)

२. इति सम्भावनमिथ्याध्यवसित्योः पृथगलङ्कारत्वमपास्तम्।

३. सम्भवः स्यादलङ्कारः प्रमाणत्वं प्रयाति यः। (यः सम्भवः प्रमाणत्वं प्रकृतार्थनिर्णायकत्वं प्रयाति, स सम्भवो नामालङ्कारः स्यात्)। (बालबोधिन्याम्, पृ. ७५१)

४. हेतुश्च सूक्ष्मो लेशोऽथ नालङ्कारतया मतः।
समुदायाभिधानस्य वक्रोक्त्यनभिधानतः।।
सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ।।
गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।
इत्येवमादि किं काव्यं वार्तमेनां प्रचक्षते।। (काव्यालङ्कारे - २।८५-८७)

५. हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम्।
कारकज्ञापकौ हेतू तौ चानेकविधौ यथा।।
गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।
इतीदमपि साध्वेव कालावस्थानिवेदने।। (काव्यादर्शे - २।२३५,२४४)

आचार्यरुद्रटश्च हेतुमता सह हेतोरभिन्नविधानत्वे हेत्वलङ्कारः स्वीकृतः। अत्र कार्यकारणयोरभेदप्रतीतिरेवालङ्कारताया बीजम्[1]।

भोजविश्वनाथाप्पय्यदीक्षिताचार्यैः कृतं लक्षणं रुद्रटकृतलक्षणेन प्रभावितम्[2]। आचार्यविश्वेश्वरपण्डितो विश्वनाथस्य परिभाषामुद्धृत्य तस्याः खण्डनं कृतवान्। विश्वेश्वरपण्डितस्तु हेतुहेतुमतोरभेदसम्बन्धत्वादभेदाध्यवसायमूलकातिशयोक्त्यलङ्कारेऽस्यान्तर्भावं कृतवान्[3]।

अलङ्कारकौस्तुभे खण्डनत्वेन समागतानामलङ्काराणां कुत्रान्तर्भावो भवति, तेषां स्पष्टीकरणार्थं क्रमशो नामोल्लेखः क्रियते। एषु केषाञ्चिदलङ्काराणां खण्डनं बालबोधिन्यामपि वर्तते, तेषां विवरणं प्रस्तूयते—

| क्र. सं. | अलङ्कारनामानि | अलङ्कारकौस्तुभे अन्तर्भावः | अ. कौ. पृष्ठ-सं. | बालबोधिन्याम् अन्तर्भावः | बा. बो. पृष्ट-सं. |
|---|---|---|---|---|---|
| १. | अनुगुणम् | तद्गुणे | ४०४ | तद्गुणे | ७४६ |
| २. | अल्पम् | अधिके | ३८० | अधिके | ७२५ |
| ३. | असम्भवः | विषमे | ३७४ | विषमे | ६६८ |
| ४. | आनुकूल्यम् | पर्य्यायोक्तौ | ३४५ | — | — |
| ५. | उन्मीलितम् | मीलिते | ३९४ | मीलिते | ७२८ |
| ६. | उल्लेखः | अतिशयोक्तौ | २८२ | अतिशयोक्तौ | ६३१ |
| ७. | निमीलितम् | मीलिते | ३९८ | — | — |
| ८. | निश्चयः | — | २३९ | — | — |
| ९. | परिकराङ्कुरः | परिकरे | ३५५ | परिकरे | ६९९ |

१. हेतुमता सह हेतोरभिधानमभेदकृद्भवेद्यत्र।
सोऽलङ्कारो हेतुः स्यादन्येभ्यः पृथग्भूतः।। (काव्यालङ्कारे-७।८२)

२. क्रियायाः कारणं हेतुः कारको ज्ञापकश्च सः।
अभावश्चित्रहेतुश्च चतुर्विध इहेष्यते।। (सरस्वतीकण्ठाभरणे-३।१२)
अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह।। (साहित्यदर्पणे-१०।६३)
हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते।
हेतुहेतुमतोरैक्यं हेतुं केचित् प्रचक्षते।। (कुवलयानन्दे-१६७-६८)
कारकज्ञापकौ हेतू तौ चानेकविधौ यथा।। (काव्यादर्शे-२।२३५)

३. एवं च—
'अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह।' इति साहित्यदर्पणोक्तहेत्वलङ्कारस्यात्रैवान्तर्भाव इति नातिरिक्तत्वशङ्काऽपि। तस्माद्भेदसत्त्वेऽप्यभेदाध्यवसायस्य सर्वस्याप्यन्यत्र निवेशो बोध्यः। द्वितीयभेदेऽप्यन्यत्वं यथाकथञ्चित्तत्प्रतीतिमात्रेण। (अलङ्कारकौस्तुभे, पृ. २८१)

| | | | | | |
|---|---|---|---|---|---|
| १०. | परिणामः | उपमायाम् | १६० | रूपके | ६०६ |
| ११. | पूर्वरूपता | तद्गुणे | ४०४ | तद्गुणे | ७४६ |
| १२. | प्रस्तुताङ्कुरः | अप्रस्तुतप्रशंसायाम् | २७५ | समासोक्तौ | ६२८ |
| १३. | प्रहर्षणम् | समाधौ | ३७० | समाधौ | ७१७ |
| १४. | प्रौढोक्तिः | असम्बन्धे सम्बन्ध-रूपातिशयोक्तौ | २८४ | असम्बन्धे सम्बन्ध-रूपातिशयोक्तौ | ७०३ |
| १५. | मिथ्याध्यवसितिः | अतिशयोक्तौ | २८३ | अतिशयोक्तौ | ७०३ |
| १६. | युक्तिः | व्याजोक्तौ | ३५८ | व्याजोक्तौ | ७०३ |
| १७. | ललितम् | — | २६६ | निदर्शने | ६१५ |
| १८. | लेशः | व्याघाते | ४०७ | विशेषे | ७४१ |
| १९. | विकस्वरः | अर्थान्तरन्यासे | ३२० | अर्थान्तरन्यासे | ६६३ |
| २०. | विचित्रम् | विषमे | ३७४ | विषमे | ७२३ |
| २१. | वितर्कः | सन्देहे | २०० | सन्देहे | ५९२ |
| २२. | विशेषः | सामान्ये | ३९४ | सामान्ये | ७४१ |
| २३. | विषादः | विषमे | ३७७ | विषमे | ७२३ |
| २४. | सम्भावनम् | अतिशयोक्तौ | २८३ | सम्भवप्रमाणे | ७५१ |
| २५. | हेतुः | अभेदाध्यवसाय-मूलकातिशयोक्तौ | २८१ | शुद्धसाध्यावसानायाम् | ७०६ |

प्रस्तुतनिबन्धसर्वेक्षणेन सिद्ध्यति यदाचार्यविश्वेश्वरेण ये ये अलङ्कारा अलङ्कारकौस्तुभे खण्डिताः, प्रायस्ते सर्वेऽप्यलङ्कारप्रदीपे बालावबोधनार्थाय निरूपिताः, अतो वक्तुं शक्यते यत् तस्य मते एतेषां खण्डनत्वेन समागतानामलङ्काराणां प्रतिपादनमभीष्टं नासीत्।

आचार्यविश्वेश्वरपण्डितेनालङ्कारप्रदीपस्य रचनाऽलङ्कारकौस्तुभग्रन्थात् पूर्वं कृता। अलङ्कारप्रदीपरचनाया उद्देश्यं बालावबोधनमलङ्कारविषयकज्ञानञ्चाऽऽसीत्; किन्त्वलङ्कारकौस्तुभस्योद्देश्यं प्रवर्धमानालङ्कारप्रवृत्तिसमासकरणमासीत्। निबन्धे येऽलङ्कारा निरूपिताः, अलङ्कारान्तरे तेषामन्तर्भावोऽपि दर्शितः। यदीमेऽलङ्काराः स्वतन्त्ररूपेण स्वीकृता भवेयुः, तदाऽलङ्कारगौरवप्रसङ्गोपस्थितिर्भविष्यति। यतो हि— 'वाग्विकल्पानामानन्त्यात्' इति वचनाज्ज्ञायते यदनन्ता हि वाग्विकल्पाः, तदत्र नियतसंख्यायामेवालङ्कारपरिगणनं कर्तुं न शक्यते। अयमेव मदीयो विश्वास इति।

●



राजकीयसंस्कृतमहाविद्यालयस्य स्वनामधन्याः
प्राचार्याः डॉ. आर.टी.एच. ग्रिफिथमहाशयाः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

श्रुतम् मे गोपाय

# पौराणिकी सुषमा

आब्रह्माण्डसमस्तलोकपटलीभोगोद्भवत्प्राणिनां
कार्याकार्यमशेषवस्तु नितरां संवर्ण्यते हेलया ।
या सर्गप्रतिसर्गवंशविषयान् पञ्चाप्यतीत्य स्वयं
विख्याता दशलक्षणेति सुषमा पौराणिकी वर्धताम् ।।

# पुराणेषु तन्त्रालोकः

**प्रो. गङ्गाधरपण्डा**
आचार्योऽध्यक्षश्च, पुराणेतिहासविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

❀ ❀ ❀

'तनु विस्तारे' धातोः औणादिके ष्ट्रन्प्रत्यये सति तन्त्रशब्दो निष्पद्यते। कामिकागमवचनानुसारं तन्त्रशब्दस्य व्याख्या वर्तते—

तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान्।
त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते।।

महाभारते न्यायधर्मशास्त्रयोगदर्शनानां कृते तन्त्रशब्दो व्यवह्रियते[1]। तन्त्रस्यापरा संज्ञा आगम उच्यते। देवतानां स्वरूपगुणानुसारं यज्ञे मन्त्राणां प्रयोगो भवति। अयं प्रयोगो मुख्यतः पञ्चाङ्गेषु विभज्यते, तानि भवन्ति—पटल-पद्धति-कवच-सहस्रनाम-स्तोत्राणि। वाराहीतन्त्रे आगमस्य परिभाषा इत्थं प्रदर्शिता—

सृष्टिश्च प्रलयश्चैव देवतानां यथार्चनम्।
साधनं चैव सर्वेषां पुरश्चरणमेव च।।
षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः।
सप्तभिर्लक्षणैर्युक्तमागमं तद्विदुर्बुधाः।।

तन्त्रस्य लक्षणं व्युत्पत्तिं च कृत्वा यदि पुराणशब्दस्य लक्षणं व्युत्पत्तिश्च क्रियेते, तदानीं द्वयोर्मध्ये साम्यं वैषम्यं च ज्ञातुं शक्यते।

पुरा भवं पुराणम्। पुराशब्दे ट्युप्रत्यये सति पुरातनमिति शब्दो निष्पद्यते। पुरा नवं भवतीति पुराणम्। पुराणेषु पुराणशब्दस्य व्याख्या बहुत्र लभ्यते। यथा—

यस्मात्पुरा ह्यनक्तीदं पुराणं तेन वै श्रुतम्।। (वायु॰ १।२०३)

---

१. न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः।
यतयो योगतन्त्रेषु यान् स्तुवन्ति द्विजातयः।।

पुरा परम्परां वष्टि पुराणं तेन तत् स्मृतम्।। (पद्म० ५।२।५३)

पुराणे वेदार्था उपबृंहिता वर्तन्ते। अस्यायमारम्भो महाभारतकालादेव सञ्जातः[१]। विभिन्नपुराणेषु यत्र कुत्रचित् सामान्यपरिवर्तनपूर्वकं श्लोकोऽयं प्रशस्तिं भजते। यत्—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।

विभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति।।

उपबृंहणस्यार्थो भवति तथ्यानां विस्तारः, बृंहधातोर्मुख्यार्थोऽस्ति वर्धनम्। अर्थात् पुराणमाध्यमेन वैदिककथानां विस्तारो विषयवस्तुनश्च वर्धनं भवति। इत्थं सूत्ररूपेण प्रतिपादितवैदिकविषयाणामुपाख्यानानां च विस्तृतवर्णनं पुराणे वर्तते। प्रसिद्धोपाख्यानेषु हरिश्चन्द्र-शुनःशेप-नाचिकेत-अहल्येन्द्रोपाख्यानानि प्रामुख्यं भजन्ते।

एवं प्रकारेण पुराणतन्त्रयोर्लक्षणव्युत्पत्तीनां तुलनात्मकाध्ययनेन ज्ञायते यत् परस्परं बहु साम्यं वर्तते। केवलं भेदो नाम्ना एव दृश्यते, न विषवस्तुनि।

**पुराणानां प्रमुखविषयेषु तन्त्रालोकः**

तान्त्रिकग्रन्थानामनुशीलनेनैवं ज्ञायते यत् तन्त्रं द्विविधम्— वेदानुमोदितं वेदाननुमोदितञ्च। कथनस्यास्य समर्थने कुल्लूकभट्टानां मतं भवति—श्रुतिश्च द्विविधा—वैदिकी तान्त्रिकी च। वैष्णवागमेषु पाञ्चरात्र-वैखानसागमप्रमुखेषु पाशुपतागमेषु चानेके सिद्धान्ता वेदानुमोदिताः। यथोक्तं महिम्नः स्तोत्रे—

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति।

प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।। (महिम्नः स्तोत्रम्, श्लो० ७)

पाञ्चरात्रं वैष्णवमतमागमशास्त्रं भवति। अस्य पञ्चाङ्गानि सन्ति। तानि— अभिगमन-उपादान-इज्या-स्वाध्यायभूतानि। अत्रापि भगवतः पञ्चस्वरूपाणि (पर-व्यूह-विभव-अन्तर्यामी-अर्चाऽऽचाराः) वर्णितानि। पाशुपततन्त्रेषु पञ्चमन्त्र-मूर्तिशिवस्य तत्त्वमेव वर्णितम्। एतदुभयविधतन्त्रपुराणेषु सर्वत्र वर्णितमस्ति। अस्य कानिचन प्रमाणानि प्रदीयन्ते—

अग्निपुराणे षट्कर्मणां शान्ति-वशीकरण-स्तम्भन-विद्वेष-उच्चाटन-मारणानां सुविशदं वर्णनं लभ्यते[१]। तन्त्रस्यालोको देवीभागवते अधिकतया

१. पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाः प्रकाशिताः। (महा. १।१।८६)

१. शान्तिवश्यस्तम्भनादिविद्वेषोच्चाटने ततः।
मारणान्तानि शंसन्ति षट्कर्माणि मनीषिणः।। (अग्नि. १३८।१४४)

प्रतिभाति। अस्य पुराणानुसारं शिवस्य दक्षिणमुखाद् भैरवागम उत्पन्नः। चतुःषष्टिभैरवागमानामुत्पत्तिरत्र सूचिता वर्तते[१]। अस्य पुराणस्य समग्रं वातावरणं तन्त्रमयमस्ति। पुराणेऽस्मिन् विभिन्नशक्तिपीठानां वर्णनं साङ्गोपाङ्गं लभ्यते[२]। कोलापुरे महालक्ष्मीपीठं तुलजापुरे देवी-हिङ्गुलायाः, विन्ध्याचले च देवी-विन्ध्यवासिन्या एतेषु स्थानेषु प्रामुख्यं भजन्ते। तन्त्रोपपादितं षट्चक्रस्य निरूपणमत्र पुङ्खानुपुङ्खतया लभ्यते[३]। एवं प्रकारेण देव्यास्तान्त्रिकानुष्ठानमस्य पुराणस्य मुख्यविषयवस्तु वर्तते।

देवीभागवतपुराणानन्तरं कूर्मपुराणमस्माकं तान्त्रिकपर्यालोचनार्थं दृष्टिपथारूढं भवति। श्राद्धप्रकरणे नीलकषायवस्त्रधारणं पञ्चगव्यस्य प्राशनं च सर्वं तन्त्रानुमोदितमत्र सविस्तरं वर्णितम्। पुराणेऽस्मिन् पञ्चदेवानां पञ्चायतनपूजापद्धतेः पुष्टिः सञ्जाता।

पुराण-तन्त्रवाङ्मयस्यालोडनेन निम्नलिखितसाम्यं पुरतो भाति—

१. त्रिविधा सन्ध्या। २. त्रिविधं तर्पणम्।

३. त्रिविधोपचारः। ४. त्रिविधसुगन्धिः।

५. त्रिविधकटुः। ६. त्रिविधं फलम्।

७. त्रिविधो गुणः। ८. त्रिविधा देवाः (पृथिवी-अन्तरिक्ष-द्युस्थानीयाः)।

९. त्रिविधो मखः[४]। १०. त्रिविधं पुराणम्।

११. त्रिविधा नाडी। १२. त्रिविधा सृष्टिः (प्राकृत-वैकृत-प्राकृतवैकृताख्या)।

तान्त्रिकोपासनायां जपस्य महत्त्वमधिकं वरीवर्ति।

जपात्तुष्यन्ति देवाश्च जपात्सिध्यन्ति साधकाः।<br>
तस्मात् सर्वप्रयत्नेन जपनिष्ठापरो भवेत्।।

पुराणे जपस्यान्तर्भावो नवधाभक्तौ कर्तुं शक्यते। परम्परानुसारं नवधा-भक्तिर्यथा—

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।<br>
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।

---

२. देवीभागवते, १२।११।९२; ३. तत्रैव, ७।३८।

४. तत्रैव, ७।३५।

५. वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः।<br>
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत्।। (भाग.)

शाक्ततन्त्रे प्रतिपादितसप्तविधाचारेषु वामाचारोऽन्यतमः। पञ्चमकारस्य गूढसाधनाऽत्र वर्णिता। रुद्रयामलतन्त्रेऽपि उपासनेयं स्फुटं वर्णिता, परवर्तिकालेषु समालोचकैरस्य प्रतीकात्मकोऽर्थः स्वीकृतः। प्रतीकात्मकार्था इत्थं विभिन्नपुराणेषु प्रतिपादिताः।

मद्यम्— सोमधारा क्षरेद् या तु ब्रह्मरन्ध्राद् वरानने।
पीत्वानन्दमयस्तां यः स एव मद्यसाधकः।।

मांसम्— मशब्दाद् रसना ज्ञेया तदंशान् रसनप्रिये।
सदा यो भक्षयेद् देवि स एव मांससाधकः।।

मत्स्यम्— गङ्गायमुनयोर्मध्ये मत्स्यौ द्वौ चरतः सदा।
तौ मत्स्यौ भक्षयेद् यस्तु स भवेन्मत्स्यसाधकः।।

मुद्रा— सहस्त्रारे महापद्मे कर्णिका मुद्रिता चरेत्।
आत्मा तत्रैव देवेशि केवलः पारदोपमः।।
यस्य ज्ञानोदयस्तत्र मुद्रासाधक उच्यते।।

मैथुनम्— मैथुनं परमं तत्त्वं सृष्टिस्थित्यन्तकारणम्।
मैथुनाज्जायते सिद्धिर्ब्रह्मज्ञानं सुदुर्लभम्।।
रेफस्तु कुङ्कुमाभासं कुण्डमध्येऽवस्थितम्।
मकारश्च बिन्दुरूपो महायोनौ स्थितः प्रिये।।
'अ'कारहंसमारुह्य एकता च यदा भवेत्।
तदा जातं महानन्दं ब्रह्मज्ञानं सुदुर्लभम्।।

**उपसंहारः**

सनातनपरम्परानुसारं निगमात्परमागमस्य स्थानं भवति। आगमेषु सर्वत्र पुराणानां प्रामाण्यं वर्तते। कुत्रचिद् वैमत्यमपि दृश्यते। परन्तु प्रतीकात्मकदृष्ट्या यदि परस्परविरोधिमतानामध्ययनं क्रियते, तर्हि सर्वं शास्त्रसम्मतं भवितुमर्हति। सत्ययुगे श्रुतेः, त्रेतायां स्मृतेः, द्वापरे पुराणस्य, कलियुगे चागमशास्त्रस्य प्रामाण्यं स्वीकृतमस्ति। अत्र पुराणं तन्त्रात् पूर्ववर्तित्वात् पुराणप्रामाण्यमागमेषु गृह्यते। कुलार्णवतन्त्रं युक्तिमिमां समर्थयति।

कृते श्रुत्युक्त आचारस्त्रेतायां स्मृतिसम्भवः।
द्वापरे तु पुराणोक्तः कलावागमसम्मतः।।

●

# श्रीमद्भागवताभिमतं प्रमाणसामान्यलक्षणं प्रमाणप्रयोजनञ्च

**डॉ. विन्ध्येश्वरीप्रसादमिश्रो विनयः**

वरिष्ठप्राध्यापकः

उज्जयिनीस्थ-विक्रमविश्वविद्यालयस्य

संस्कृतप्राध्ययनकेन्द्रे (स्नातकोत्तरसंस्कृतविभागे)

❀ ❀ ❀

यस्मिन्सर्वमिदं सत्यमसत्यमपि भासते।

तमद्वैतमखण्डार्थं प्रत्यग्बोधमयं नुमः।।१।।

प्रमाऽप्रमा प्रमाणञ्च प्रमेयं प्रमितिस्तथा।

यदाश्रित्य विराजन्ते चैतन्यं तदुपास्महे।।२।।

'मानाधीना मेयसिद्धिः' इति न्यायेन प्रमाणादृते न शक्यसम्भवा तत्तद्दर्शनानां प्रयोजनसङ्गतिस्तस्यास्तत्त्वाधिगमपरत्वादिति सर्वत्र शास्त्रप्रबन्धेषु प्रमाणमीमांसाया महत्त्वमसन्दिग्धमेव, यथाऽऽह तत्रभवान् वात्स्यायनः—

'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्। प्रमाणमन्तरेण नार्थप्रतिपत्तिः, नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यमिति'[१]। ननु प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसाफल्यम्, प्रवृत्तिसाफल्यानन्तरञ्च प्रमाणतोऽर्थप्रतिपत्तिरित्यन्योन्याश्रयादुभयमप्यसिद्धं स्यात्? तस्मात्प्रवृत्तेः प्रमाणतोऽर्थप्रतिपत्तेश्च पूर्वापरीभावो न तर्कसम्मत इति चेत्, न, बीजाङ्कुरवद् व्यवहारस्यानादितया प्रामाणिकत्वेन दोषाभावादित्यवधेयम्।

मानान्मेयसिद्धिरित्यत्र सिद्धिर्हि प्रतीतिर्न तूत्पत्तिः, तथा च प्रमाणं हि न किञ्चिद् वस्तु समुत्पादयति नवीनम्; अपि तु पूर्वसिद्धानामेव वस्तुजातानामिदमीदृशमित्याकारकं बोधं जनयति। तथा सति मेयाधीना मानसिद्धिरिति न

---

१. न्यायभाष्ये-१।१ उपक्रमः।

वक्तुमुचितम्, प्रमेयात्प्रमाणज्ञप्त्यशक्यत्वादिति समञ्जसम्। इदमेव समर्थयन्नाह सांख्यकारिकाकृच्छ्रीमदीश्वरकृष्णः— 'प्रमेयसिद्धिः प्रमाणाद्धि'[१] इति।

ब्रह्मरूपपारमार्थिकसत्तामात्रावलम्बिनां वेदान्तिनां मतेऽपि व्यावहारिक-दशायामेतन्न विरुध्यते, तत्र परमार्थतः प्रमाणावच्छिन्नप्रमेयावच्छिन्नचैतन्ययोरभेदेऽपि व्यवहारे वृत्त्यवच्छिन्नचैतन्यरूपप्रमाणादेवार्थावगतिरिति सर्वत्र प्रमेयनिरूपणात्प्रागेव प्रमाणानां प्रतिपादनं परीक्षणञ्च समीचीनम्।

श्रीमद्भागवतमष्टादशमहापुराणेष्वन्यतमं सदपि विशिष्टं शास्त्रं 'शुकशास्त्रम्', 'सर्ववेदान्तसारम्' इत्यादिभिर्विशेषणैर्बहुधा व्यपदिष्टमभियुक्तैर्यथा—

श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम्[२]।
मेनिरे भगवद्रूपं शास्त्रं भागवतं कलौ[३]।।
ज्ञानयज्ञं करिष्यामि शुकशास्त्रकथोज्ज्वलम्[४]।
महिमा शुकशास्त्रस्य वक्तव्यो वेदपारगैः[५]।।

इति श्रीपद्मपुराणे।

श्रीमद्भागवतं शास्त्रं यत्र भागवतैर्यदा[६]।
श्रीमद्भागवतं शास्त्रं नित्यं यैः परिसेवितम्[७]।।

इति स्कन्दपुराणे च।

स्वयं श्रीमद्भागवतेऽपि—

सर्ववेदान्तसारं यद् ब्रह्मात्मैकत्वलक्षणम्।
वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम्[८]।।

इत्यादिभिस्तथ्यमिदं प्रत्यपादि भगवता कृष्णद्वैपायनव्यासमहर्षिणा। अस्माभिस्तु, श्रीमद्भागवतं वेदान्तदर्शनस्य विशिष्टं प्रस्थानमित्यङ्गीक्रियते, तत्र तत्र लेखजातेषु सोपपत्तिं प्रतिपाद्यते।

यद्यपि श्रीमद्भागवतं प्रमेयप्रधानं, सत्तत्त्वप्रतिपादनपरं भगवल्लीलाकथा-रसमधुररसमपूर्वं शास्त्रं तथाप्यत्र प्रमेयप्रमाणादीनां तल्लक्षणस्वरूपप्रयोजनादी-

---

१. सांख्यकारिका–४;
२. पद्मपुराणोक्तभागवतमाहात्म्ये–१।११।
३. तत्रैव–१।२०;
४. तत्रैव–३।१।
५. तत्रैव–३।२;
६. स्कन्दपुराणोक्तभागवतमाहात्म्ये–३।१२।
७. तत्रैव–३।१५;
८. श्रीमद्भागवते–१२।१३।१२।

नाञ्च स्पष्टं प्रतिपादनमद्वैतवेदान्तानुगुणं किञ्चिद्वैशिष्ट्यमवगाहमानञ्चोपलभ्यते, दिङ्मात्रं तद्यथा—

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्[१]।

प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा[२]।

ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम्[३]।

इति नैकेष्वन्येषु प्रबन्धेषु विस्तरशो विवृतमस्माभिः। अत्र तु श्रीमद्भागवताभिमतं प्रमाणसामान्यलक्षणं प्रमाणप्रयोजनञ्च विव्रियेते। तत्र प्रथमं सङ्क्षेपेण विविधवादिसम्मतानि प्रमाणलक्षणानि, यथा— चार्वाकैः प्रमाणसामान्यलक्षणं नोक्तम्। सुगतमतानुयायिनां मते तु— 'अविसंवादिज्ञानं प्रमाणम्'[४] इति।

दिगम्बरास्त्वत्र— 'स्वपरव्यवसायिज्ञानं प्रमाणमित्याहु'[५]। नैय्यायिकानां सिद्धान्ते— 'प्रमाकरणं प्रमाणम्'[६] इति। सांख्यदर्शने— 'प्रमीयतेऽनेनेति निर्वचनात् प्रमां प्रति करणत्वं गम्यते'[७] इति श्रीवाचस्पतिमिश्रवचनेन प्रायस्तार्किकवदेव लक्षणं सङ्घटते।

योगानुशासनेऽपि— अनधिगतपौरुषेयो बोधः 'व्यवहारहेतुः प्रमा तत्करणं प्रमाणम्'[८] इति।

भाट्टास्तु— 'कारणदोषबाधकज्ञानरहितमगृहीतग्राहिज्ञानं प्रमाणम्'[९]।

प्राभाकरमते— 'अनुभूतिः प्रमाणम्'[१०] इति शालिकनाथमिश्रस्य प्रतिपत्तिः। अद्वैतवेदान्तिनामभ्युपगमे प्रमाणलक्षणं द्विधा तत्त्वातत्त्ववेदनपरत्वात्। प्रत्यक्षादीनि सर्वाण्यतत्त्वावेदकानि, तत्त्वावेदनपराणि च वेदान्तोपलक्षितानि श्रुतिवाक्यानि 'तत्त्वमस्या'दीनि। औपचारिकं प्रमाणसामान्यलक्षणन्तु यथाऽऽह वेदान्तपरिभाषाकृद्धर्मराजाध्वरीन्द्रः—

---

१. श्रीमद्भागवते-११।१९।१७;
२. तत्रैव-११।२८।९।
३. तत्रैव-११।२८।१८;
४. द्र. प्रमाणवार्त्तिकस्य प्रथमपरिच्छेदः।
५. द्र. प्रमाणनयतत्त्वालोकालङ्कारे-१।२;
६. तर्कभाषा (प्रमाणलक्षणप्रसङ्गे)।
७. सांख्यकारिका-४, इत्यत्र सांख्यतत्त्वकौमुदी।
८. योगसूत्रे-१।७ इत्यस्य व्याख्यायां तत्त्ववैशारदी।
९. श्लोकवार्तिके औत्पत्तिकसूत्रव्याख्याने-११ तमस्य श्लोकस्य व्याख्याने पार्थसारथिमिश्रः।
१०. प्रकरणपञ्चिकायाममृतकलाख्यपञ्चमे प्रकरणे प्रथमपद्यम्।

'तत्र प्रमाकरणं प्रमाणम्। तत्र स्मृतिव्यावृत्तं प्रमात्वमनधिगताबाधित-विषयज्ञानत्वम्। स्मृतिसाधारणं त्वबाधितविषयज्ञानत्वम्'[१] इति।

विशिष्टाद्वैतवादिनामपि लक्षणं तु पूर्ववदेव; किन्त्वत्र प्रमालक्षणस्यास्ति वैशिष्ट्यम्, यथा हि—

'प्रमाकरणं प्रमाणम्। यथावस्थितव्यवहारानुगुणज्ञानं प्रमा'[२] इति श्रीनिवास-दासः। द्वैतिनां श्रीमध्वाचार्याणां सिद्धान्ते च— 'यथार्थं प्रमाणम्'[३]। शुद्धाद्वैत-सम्प्रदायपुरस्कर्त्तारः श्रीवल्लभाचार्यास्तु— 'तत् स्वतःसिद्धप्रमाणभावं प्रमाणम्'[४] इत्युद्भावयाञ्चक्रुः। पुरुषोत्तममहानुभावेन चैतत्— 'प्रमाणशब्दो भावव्युत्पन्नो रूढो वाऽबाधितज्ञाने वर्तते बाधयोग्यव्यतिरिक्ते च करणव्युत्पत्तिस्तु तादृशज्ञानकरणे'[५] इति विवृतम्।

अधुना, श्रीमद्भागवताभिमतं प्रमाणलक्षणमाविष्क्रियते। शुकशास्त्रेऽपि पारमार्थिकव्यावहारिकप्रातिभासिकसंज्ञकानां तिसृणां सत्तानामस्ति स्वीकारः। परमार्थतोऽद्वयं ब्रह्मैव सत् तदेवात्र ब्रह्मेति परमात्मेति भगवानिति[६] चाधिकारिणामधिकारभेदाद्रुचिभेदाद् वा व्यपदिष्टमतो न लौकिकानां प्रमाणादीना-मत्रापि सङ्गतिरित्याह भगवान् ग्रन्थकृदेव—

एष स्वयंज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः।
एकोऽद्वितीयो वचसां विरामे येनेषिता वागसवश्चरन्ति[७]।। इति।

अत्र भावार्थदीपिकाकृच्छ्रीधराचार्याः—

'अप्रमेय इति ज्ञानलक्षणातिशयाधानेन संस्कारं (वारयति)'[८] इति।

तस्मादत्रापि प्रमाणप्रमेयादिव्यवहारो व्यावहारिक एव, वस्तुतो भगवानेवात्र प्रमाणपदार्थस्तद्विशिष्टार्थश्चेत्येवमेवाशयं प्राचीकशन्निमाः शुकशास्त्रपङ्क्तयः—

---

१. वेदान्तपरिभाषा (प्रत्यक्षपरिच्छेदे)।

२. यतीन्द्रमतदीपिकायां प्रथमावतारे।

३. श्रीमध्वविरचिते दशप्रकरणाख्यसन्दर्भस्य प्रमाणप्रकरणे सूत्रम्।

४. तत्त्वार्थदीपनिबन्धे।

५. प्रस्थानरत्नाकरे, पृ. १।

६. श्रीमद्भागवते-१।२।११।

७. तत्रैव ११।२८।३५; ८. तत्रैव भावार्थदीपिका।

'यत्प्रमाणं जनार्दनः'[१] इति। 'परं प्रमाणं भगवाननन्तः'[२] इति च।

वस्तुतोऽसौ प्रमाणानामपि मूलम्, यथोक्तं तत्रैव—

'नमः प्रमाणमूलाय कवये शास्त्रयोनये'[३]। इति।

भगवत एतत्प्रमाणमूलत्वं श्रीधरवल्लभ-वीरराघव-विजयध्वजतीर्थ-शुकदेव-जीवगोस्वामि-विश्वनाथचक्रवर्ति-बलदेवविद्याभूषण-वंशीधर-गङ्गासहाय-गोपालानन्दमुनिप्रभृतयष्टीकाकृतो बहुधा व्याचख्युः। अत्र समासेन चक्षुरादीन्द्रियाणि वृत्तिजनकतयौपचारिकाणि, वेदास्तत्सारसर्वस्वं श्रीमद्भागवतञ्च सत्तत्त्वबोधकतया मुख्यप्रमाणमिति समेषां टीकाकर्तॄणां हार्दमनुमीयते। वयं तु ब्रूमः —

न न्यरूपि यद्यपि स्पष्टं कण्ठतो मुनिनाऽमुना।
शुकतातेन शास्त्रेऽस्मिन् प्रमाणस्याथ लक्षणम्।।
तथापि ग्रन्थनिर्मन्थप्रक्रियोत्थं प्रकल्प्यते।
मूलानुसारि तट्टीकाकृद्भिरप्यनुमोदितम्।।

तदित्थम्—

'सदसतोः सदसद्रूपेण ज्ञापकं प्रमाणम्'।

इति लक्षणमाविष्कर्तुं शक्यते।

अयमाशयः— 'तद्वति तत्प्रकारकं ज्ञानं प्रमा'। यथा— रजतत्ववति रजते रजतप्रकारकं ज्ञानम्, प्रकृते वस्तुरूपब्रह्मणि वस्तुरूपत्वज्ञानम्। एतदेव सतः सद्रूपेण ज्ञानम्। तथैव, अतद्वत्यतत्प्रकारकं ज्ञानमपि प्रमैव, यथाऽरजतत्ववति शुक्तिकादौ पूर्वमिदं रजतमित्याकारकभ्रमज्ञानमुत्पन्नम्, पश्चादाप्तवाक्येन स्वयं तदभ्युपगमेन वा तन्निरस्तमथ भ्रमभङ्गे 'नेदं रजतमियं शुक्तिकेति' बोधो यथार्थपरत्वेन प्रमैव। दार्ष्टान्तिके, अवस्तुभूते प्रपञ्चे पूर्वं मोहवशादेतदेव सत्यमित्यङ्गीकृते श्रुत्यादिवाक्यबोधमहिम्ना परस्तात्, 'त्वय्यद्वितीये भगवन्नयं भ्रमः'[४], 'मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि'[५], 'नानात्वभ्रममात्मनि'[६], 'संसृतिर्न तु वास्तवी'[७] इत्यादिरूपेण नैतत्सत्यमिति यज्ज्ञानमुत्पद्यते, तस्यापि

१. श्रीमद्भागवते-४।२।३१; २. तत्रैव-३।२२।२०।
३. तत्रैव-१०।१६।४४; ४. तत्रैव-१०।५९।३०।
५. तत्रैव-११।४।२५; ६. तत्रैव-११।११।२१।
७. तत्रैव-११।११।२।

प्रमात्वं वक्तुमुचितमेव, एतदेव असतोऽसद्रूपेण ज्ञानम्। इत्थमत्र प्रमात्वं द्विविधं सतः सज्ज्ञानमसतश्चासज्ज्ञानमिति, एतयोरुभयोर्यत्करणं साधकतममन्तःकरण-वृत्तिरूपं चक्षुरादीन्द्रियरूपञ्च तदुभयमपि यथायथं प्रमाणभेदेषूपयुज्यमानत्वाद् भागवते प्रमाणमिति निसृष्टार्थः। एतदेव कारिकामुखेनाभिदध्महे, यथा—

'प्रमा सदसतोर्ज्ञानं सदसद्रूपकञ्च यत्।
प्रमाणञ्च तदुद्भासवृत्तिरिन्द्रियमेव च'।।

श्रीमद्भागवते आदावन्ते च 'सत्यं परं धीमहि'[१] इति वाक्ययोजनया पुराणर्षिणा स्वनिबन्धस्य सत्परत्वमभिदधता त्रिसर्गस्य वास्तविकत्वं निराकारि। सत्तत्त्वव्याकृतिश्च तत्रैव—

आदावन्ते च मध्ये च सृज्यात्सृज्यं यदन्वियात्।
पुनस्तत्प्रतिसङ्क्रामे यच्छिष्येत तदेव सत्[२]।।

यदुपादाय पूर्वस्तु भावो विकुरुतेऽपरम्।
आदिरन्तो यदा तस्य तत्सत्यमभिधीयते[३]।।

अपि च—

विज्ञानमेतत्त्रियवस्थमङ्ग गुणत्रयं कारणकार्यकर्तृ।
समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम्[४]।। इति।

तथैवासद्वस्तुनः—

नैतद्वस्तुतया पश्येद् दृश्यमानं विनश्यति।
असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात्।।

यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम्।
सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत्[५]।।

इति रूपेण, 'अमूलमेतद् बहुरूपरूपितम्'[६]। 'आद्यन्तवदवस्तु यत्'[७] इत्यादिरूपेण च बहुधा निर्वचनं निरूपणञ्चात्र व्यतानीद् भागवतकारो भगवान्।

---

१. श्रीमद्भागवते – १।१।१ तथा १२।१३।१९।
२. तत्रैव – ११।१९।१६;
३. तत्रैव – ११।२४।१८।
४. तत्रैव – ११।२८।२०;
५. तत्रैव – ११।१८।२६-२७।
६. तत्रैव – ११।२८।१७;
७. तत्रैव – १२।४।२३।

ननु सदसतोः सदसद्रूपं द्विविधं ज्ञानं प्रमेत्यपार्थं तयोरेकतरेणापि ज्ञानेन वस्तुसिद्धिशक्यत्वादिति यदुच्येत, तन्न, भ्रमपाशपरिग्रहीतेभ्य एव विजिज्ञासुभ्यः, प्रमाणपदार्थापेक्षमाणत्वात्पूर्वं 'नेदं दृश्यमानमनुभूयमानं सदिति' विरागोत्पत्त्य-नन्तरमेव 'ब्रह्मैव सदि'त्यनुभवस्य सार्थक्यादेतदेव समञ्जसम्।

अयमभिप्रायः—यथा मृगमरीचिकायां जलमिति भ्रान्तभावनया धावमानं प्रति, प्रंथमं न तत्र जलमलं तवैतच्छ्रमेणेत्यात्मकमसतो जलस्यासज्ज्ञापनमावश्यकं तदृते तत्र दूरे हरितद्रुमशाद्वलश्यामले निभृतनिकुञ्जान्तर्वर्तिनि तदस्ति, तदुद्दिश्यैव गमनाय प्रयतितव्यं त्वयेति हितचिन्तकस्यापि सुहृदः सतः सद्रूपज्ञापनोद्बोधोऽपि व्यर्थतामापद्येत, 'अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदि'ति न्यायेन सर्वस्यापि प्रत्यक्षीक्रियमाणेऽनतिदूरस्थित एवार्थे प्रवृत्तिमत्वात्, तथैव 'जगदिदं सत्स्वरूपम्, अत्रत्या स्वजनसम्बन्धिनो मे सुखं दास्यन्तीति प्रपञ्चपरिगतात्मन्यज्ञानिनि प्रमातरि यावत्—

कुटुम्बेषु न सज्जेत न प्रमाद्येत् कुटुम्ब्यपि।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत्।।

पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गमः।
अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा[१]।।

इत्यात्मकोऽसद्रूपजगत्सम्बन्धानामसद्रूपत्वं नोपपाद्येत, तावत्—

'अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः'[२]। इति,

मामेव सर्वभूतेषु बहिरन्तरपावृतम्।
ईक्षेतात्मनि चात्मानं यथा खममलाशयः[३]।।

सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया।
परिपश्यन्नुपरमेत् सर्वतो मुक्तसंशयः[४]।।

इत्याकारकश्च ब्रह्मसद्विज्ञानको बोधः कथं व्यवस्थाप्येत? अत एव—

'आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह'[५]।

---

१. श्रीमद्भागवते – ११।१७।५२-५३; २. तत्रैव – ११।१६।९।
३. तत्रैव – ११।२९।१२; ४. तत्रैव – ११.२९।१८।
५. तत्रैव – ११।२८।९।

तस्मादिदं जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्।
त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्यदपि यत्सदिवावभाति[१] ।।

तस्मादसदभिध्यानं यथा स्वप्नमनोरथम्।
हित्वा मयि समाधत्स्व मनोमद्भावभावितम्[२] ।।

सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत्[३] ।

प्रभृतिभिः शुकशास्त्रवचनैः प्रथममसज्ज्ञानं तदनु सज्ज्ञानमित्येव प्रमाशरीरमस्मिन् राद्धान्तेऽभ्युपेतमवगम्यते। अद्वैतवेदान्तेऽपि, अध्यारोपाज्ञान-पूर्वकमेवापवादः प्रसज्येतेति न मूलसिद्धान्तव्याकोपस्तद्यथा मूले, तस्य श्रीधरकृतटीकायाञ्च निर्णीतम्—

अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः।
असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं किमु यन्ति सन्तः[४] ।।

इति दशमस्कन्धस्थपद्यव्याख्यायामाहुः श्रीश्रीधरस्वामिवर्याः—

'ननु सतो ज्ञानेनालं किमसतोऽपवादेनेत्याशङ्क्य अध्यस्तापवादं विनाऽधिष्ठानत्वं न ज्ञायत इति सतां व्यवहारेणाह— अन्तर्भवेऽनन्तेति। अन्ति समीपे असन्तमप्यहिमन्तरेण तन्निषेधं विनेत्यर्थः, सन्तं गुणं, रज्जुं सन्तः किमु यन्ति जानन्ति? अन्ति सन्तमिति गुणमिति वा न जानन्तीत्यर्थः। तस्मादात्मात्मतयैव ज्ञानान्मुक्तिरिति भावः'[५]। एवमन्यत्रापि विवृतमाचार्यैः—

'अतः स्वस्य ब्रह्मत्वभावनया विषयाणाञ्च मिथ्यात्वानुसन्धानेन सर्वतो निर्विद्य भगवन्तं भजतो भवत्येव परिपूर्णस्वरूपावस्थानमिति'[६]। ननु, भवदुक्तलक्षणे, सतोऽसतश्च द्वन्द्वे, समबलत्वेनाभ्युगमात्—

---

१. श्रीमद्भागवते-१०।१४।२२; २. तत्रैव-११।१४।२८।
३. तत्रैव-११।१८।२७; ४. तत्रैव-१०।१४।२८।
५. तत्रैव-१०।१४।२८ इत्यत्र भावार्थदीपिका।
६. तत्रैव-११।१३।२५ इत्यत्र भावार्थदीपिका।

अहमेवासमेवाग्रे नान्यद् यत् सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्[१]।।

इति चतु:श्लोकिभागवतोक्तमूलमत एवापद्येत दुर्निरोधो विरोध इति चेत्केचिदाचक्षीरन्, तदप्युपपत्तिवैकल्यान्नेश्महे सम्प्रधारयितुम्, तत्रैव—

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः[२]।।

इति प्रातिभासिक्यां सत्तायामसतो भावाभावत्वप्रतीतिगम्यत्वयोश्च स्वीकाराद्यथा विशदीकृतं स्वामिपादैः—

'ऋतेऽर्थं विनाऽपि वास्तवमर्थं यद्यतः किमप्यनिरुक्तमात्मन्यधिष्ठाने प्रतीयेत, सदपि च न प्रतीयेत तदात्मनो मम मायां विद्यात्। यथाऽऽभासो द्विचन्द्रादिरित्यर्थं विना प्रतीतौ दृष्टान्तः, यथा तम इति सतोऽप्रतीतौ। तमो राहुर्यथा ग्रहमण्डले स्थितोऽपि न दृश्यते तथा'[३]। अन्यत्रापि शुकशास्त्रे—

यदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः।
प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः।।
यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः।
दृश्यत्तेऽसन्नपि द्रष्टुरात्मनो नात्मनो गुणः[४]।।

अपि च,

अविद्यमानोऽप्यवभासते यो[५] ......।
तस्माद् युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत्।
आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे[६]।।

इत्यादौ भगवन्माययोपात्तविग्रहमसद्रूपं जगद् मुमुक्षोरन्तरायत्वेन व्यवहारतः स्वीकृतमेवेति न स्वकृतलक्षणस्थपदार्थानुपपत्तिमुत्पश्यामो वयम्।

ननु 'ज्ञापकं प्रमाण'मित्यपि न सङ्घाघटीति तर्कदृशा, विशेष्यपदाभावाल्लक्षणवाक्यस्य साकाङ्क्षत्वात्, वृत्तिः प्रमाणमिन्द्रियं वेति संशीतिसम्पाताच्चेति विपक्षकक्षीयो यदि कश्चिदुत्कुर्वीत तदपि न क्षोदक्षममाकलयामः,

---

१. श्रीमद्भागवते २।९।३२; २. तत्रैव–२।९।३३।
३. तत्रैव भावार्थदीपिका; ४. तत्रैव–३।७।१०,११।
५. तत्रैव–११।२८।२२; ६. तत्रैव–११।७।९।

श्रीमद्भागवते तत्त्वज्ञानरूपप्रमायाः करणत्वेन यथाधिकारं यथावसरं विवेकज्ञानस्य भगवदनुरागरूपाया भक्तेश्च स्वीकरणात्तद्यथा—

तमस्मिन्प्रत्यगात्मानं धिया योगप्रवृत्तया।
भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत्[१]।।
ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च।।
निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः।
उपलभ्यात्मनाऽऽत्मानं चक्षुषेवार्कमात्मदृक्[२]।।
तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम्।
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा।
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम्[३]।।
तस्मादसदभिध्यानं यथा स्वप्नमनोरथम्।
हित्वा मयि समाधत्स्व मनो मद्भावभावितम्[४]।। इति।

वस्तुत उभयोर्मध्ये मिथः पोष्यपोषकभावाद् भक्तौ ज्ञाने चोभयत्र ब्रह्माकाराकारिता चित्तवृत्तिरेव प्रमाणत्वेनाध्यवसीयते, पोष्यपोषकभावश्चापि तत्रैव—

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या
चेतोमलानि विधमेद् गुणकर्मजानि।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं
साक्षाद् यथाऽमलदृशोः सवितृप्रकाशः[५]।। इति।

तस्माद् वृत्तेरेव मुख्यप्रमाणता, इन्द्रियादेस्तु वृत्तिजनकत्वादौपचारिकीति प्रागवादिष्म, तदित्थं वृत्तिः प्रमाणमिन्द्रियं वेति संशीतिसम्पातोऽप्यपाकृतः।

अथ श्रीमद्भागवतप्रस्थाने किंप्रयोजनिका प्रमाणवृत्तिरित्याकाङ्क्षायामवादीत् स्वयं पुराणकृन्महर्षिरेव—

प्रमाणेष्वनवस्थानाद् विकल्पात्स विरज्यते[६]। इति।

---

१. श्रीमद्भागवते–३।२६।७२; २. तत्रैव–३।२७।९-१०।
३. तत्रैव–३।२७।२१-२३; ४. तत्रैव–११।१४।२७।
५. तत्रैव–११।३।४०। ६. तत्रैव–११।१९।१७।

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः।
नश्वरं गृह्यमाणञ्च विद्धि मायामनोमयम्[१]।।

अत्रेदमाकूतम्—

'ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः।
कथं चरन्ति श्रुतयः साक्षात्सदसतः परे'[२]।।

'सदसतः परं त्वमथ यदेष्ववशेषमृतम्'[३]। 'तर्हि न सन्न चासदुभयम्'[४] 'ब्रह्मैव भाति सदसच्च तयोः परं यत्'[५]। इत्येवमादिषु वचनेषु ब्रह्मणो भगवतः श्रीकृष्णपरमात्मनो वा सदसदगम्यत्वमथ चाप्रमेयत्वमसकृन्निरधारि वेदान्तदृशैव भागवतकारेणापि। एवं श्रीधरस्वामिभिरपि—

'न हि सर्वस्वरूपेण स्वतो भासमानस्य ब्रह्मणः स्वसिद्धौ प्रमाणापेक्षेति'[६] वदद्भिरेतदेवाभिप्रेयते, तथापि सद्विज्ञानादेकस्मिन्नेवात्मरूपे ब्रह्मण्यनुरागात्मिकाया भक्तेरुपपाद्यत्वादसद्रूपस्य च प्रपञ्चस्य याथात्म्यबोधात्ततो वैराग्योपजनकत्वाच्च प्रमाणवृत्तेः सार्थक्यं न निह्नोतुं शक्यते।

वस्तुतोऽर्थतत्त्वप्रतिपत्तिकरणस्य प्रमाणपदार्थस्यैव विच्छित्तिः प्रमाणप्रमेयप्रमातृप्रमितिरूपा चतुर्धा। एतस्यां चतूरूपायामेवार्थतत्त्वं परिसमाप्यते। अर्थतत्त्वमपि सर्वत्राऽस्मत्प्रमाणलक्षणपरिगृहीतमेव, 'सतः सद्भावोऽसतश्चासद्भावः' इति श्रीमद्भागवतमतं सर्वतन्त्राविरुद्धमित्याशुशुक्षणेरौष्ण्यवन्न केनचिदपि निराकर्त्तुं शक्यते, तद्यथा स्वभाष्यारम्भ एव प्रास्तावि न्यायभाष्यकृता श्रीवात्स्यायनेन—

'किं पुनस्तत्त्वं? सतश्च सद्भावोऽसतश्चासद्भावः। सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति। असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति[७]' इति।

एवञ्च,

'तदेव सतः प्रकाशकं प्रमाणमसदपि प्रकाशयतीति'[८]।

एवं श्रीमद्भागवतदर्शनसम्मते प्रमाणलक्षणप्रयोजनेऽत्र निरूपिते तत्तद्विदां विनोदायेति दिक्।

●

---

१. श्रीमद्भागवते-११।७।७; २. तत्रैव-१०।८७।१।
३. तत्रैव-१०।८७।१७; ४. तत्रैव-१०।८७।२४।
५. तत्रैव-११।३।३७;
६. श्रीमद्भागवते (११।३।३७ इत्यत्र) भावार्थदीपिका।
७. न्यायसूत्रभाष्येऽनुबन्धचतुष्टयप्रकरणे; ८. तत्रैव।

# सांस्कृतिकी सुषमा

श्रीमद्भारतवर्षभूमिविलसत्पारम्परीमालिका-
सत्पुष्पस्तबकोद्गतातिसुरभिप्रोल्लासबद्धादरा ।
आतुङ्गाच्छिखराद् हिमालयगिरेरादक्षिणाम्भोनिधे-
रैक्यं सांस्कृतिकी करोति सुषमा साऽऽपूर्वतोऽपूर्वतः ॥

# भारतीया संस्कृतिः का ? कथञ्च साऽवलोकनीया ?

**प्रो. राधेश्यामधरद्विवेदी**
आचार्योऽध्यक्षश्च
तुलनात्मक-धर्मदर्शन-विभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

❀ ❀ ❀

भारते भवा संस्कृतिर्भारतीया संस्कृतिः। सा च सम्पूर्वककृधातोः क्तिन्-प्रत्ययेन सह निष्पाद्यते। संस्कृतिश्चित्तभ्रममपहरति, चित्तमधिकृत्य निर्मिता भावधारा भवति। सा चेयं विश्ववारा यजुर्वेदे— 'सा संस्कृतिर्विश्ववारा' इति पदेनोक्ता[१]। ऐतरेयब्राह्मणे—'आत्मसंस्कृतिर्वाव शिल्पानि—एतैर्यजमान आत्मानं संस्कुरुते इति[२]। अतः संस्कृतौ मानवमनोऽनुरूपं मानवजीवनस्य कलाया व्यक्तित्वस्य च विकासः क्रियते। अस्यां लोको मानवबुद्धेराध्यात्मिकभावनायाः सौन्दर्यभावनाया धर्मशीलयोश्चापि विस्तारं करोति। इयं संस्कृतिर्भारते कथं वैशिष्ट्यमाप्तवती? इति सम्प्रति विचार्यते।

सम्प्रति भारतमेकस्मिन् शासने यथाधिराजते किं तथैव पूर्वमप्यासीन्न वेति विचारणीयम्। पुनश्च यथा विश्ववारा भारतीया संस्कृतिः, सा किं वैदिकी आहोस्वित् श्रमणरूपाऽपि, अथवा उभयरूपेति। तत्रैव किञ्चिद् विचारयामः।

वेदे भारतस्य स्वरूपमधिकृत्य प्रोक्तम्—

यस्यैते हिमवन्तो महित्वा, यस्य समुद्रं रसया सहाहुः।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम[३]।।

अत्र विराड्रूपस्य परमेश्वरस्य आधिभौतिकं स्वरूपं मन्त्रे लिखितमस्ति, तद्भारतमधिकरोति। महाभारते तु हिमालयादारभ्य समुद्रपर्यन्तं क्षेत्रं भारतमिति

१. संस्कृतिशब्दो यजुर्वेदे-४।७; २. ऐतरेयब्राह्मणे-६२।५।१।
३. यजुर्वेदे-३५।१२।

स्थितम्[१]। तथैव कुमारसम्भवे[२] महाकविना कालिदासेनापि भारतस्य स्वरूपमुट्टङ्कितं, किन्त्वेतस्मिन् स्वरूपे उत्तरदक्षिणयोर्भारतस्य रूपमेवोल्लिखितमस्ति। पश्चिमोत्तरयोश्च स्वरूपं सप्तसिन्धुप्रदेशस्य[३] विवरणावसरे दत्तं तथैव पूर्वोत्तरयोश्च चित्रणं नेपालस्य काञ्चनाद्रेः ब्रह्मपुत्रस्य च सङ्गम इति कृत्वा[४] दत्तम्, योगतन्त्रे विवृतम्। इत्थं भारतमेकराष्ट्रमिवावर्तत इति निश्चप्रचम्। महाभारते चाप्येतस्य विषये प्रोक्तम्—

अत्र ते कीर्तयिष्यामि वर्षं भारत! भारतम्।
प्रियमिन्द्रस्य देवस्य मनोर्वैवश्वतस्य च।।

पृथोस्तु राजन्! वैन्यस्य तथेक्ष्वाकोर्महात्मनः।
ययातेरम्बरीषस्य मान्धातुर्नहुषस्य च।।

तथैव मुचुकुन्दस्य शिवेरौशीनरस्य च।
ऋषभस्य तथैलस्य नृगस्य नृपतेस्तथा।।

कुशिकस्य च दुर्धर्ष! गाधेश्चैव महात्मनः।
सोमकस्य च दुर्धर्ष! दिलीपस्य तथैव च।।

सर्वेषां चैव राजेन्द्र! प्रियं भारत! भारतम्।
इदं तु भारतं वर्षं यत्र वर्तामहे वयम्।।
पूर्वं प्रवर्तितं पुण्यं तत्सर्वं श्रुतवानसि[५]।।

इत्थं भारतमेकं पुण्यमयं समग्रं क्षेत्रमासीत्, यत्रोक्तराजानो राज्यं कृतवन्तः। न केवलमेतदस्माकं भारतीयसाहित्येषु निगदितं प्रत्युतैतस्य स्वरूपं तु भारतस्य सांस्कृतिकेतिहासे हरिदत्तवेदालङ्कारेणापि दत्तम्। यथा[६]—

सुवर्णद्वीपे भारतीयसंस्कृतेः सर्वतोऽधिकोऽवशेषो जावायामुपलभ्यते। अत्र मुख्यतया तानाश्रित्याष्टमशतकात् पञ्चदशशतकं यावद् मलयद्वीपावलेर्भारतीयधर्म-साहित्यसामाजिकावस्थाराजनीतिकव्यवस्थाकालानां परिचयो दीयते।.... जावाद्वीपस्य राजनीतिकेन्द्रं मध्यजावा तथा पश्चात्पूर्वजावाऽभूत्। संस्कृतिरेतेषु स्थानेषु अधिकं विकसिताऽभूत्। अष्टमे नवमे च शतके मध्यजावाद्वीपे हिन्दूबौद्धधर्मयोर्विलक्षणौ

१. भारतीय संस्कृति-गोपालशास्त्री, पृ. १।
२. कुमारसम्भवम्-१।१।
३. जैनधर्म का इतिहास, पृ. ७-८, पं. कैलाशचन्द्रशास्त्री कृत।
४. यो.त. अरुणाचल १९४७७२ By—D.T.P.R.A.P. Sillong. A.P.।
५. महाभारतम्, भी. ९ वी.अ.।
६. भारतस्य सांस्कृतिकेतिहासः, पृ. २१६।

जागरोत्साहौ दृश्येते। तौ सम्भवतो नवीनानामावासकानां शैलेन्द्राणां कारणादास्ताम्। पञ्चदशशतकं यावदत्रार्यावर्तस्य संस्कृतिः पुष्पिता विकसिता च।

सम्प्रति यथा बहुविधा संस्कृतिर्भारते राजते तथैव प्राचीने कालेऽपि आसीत्। अद्यारक्षणव्यवस्थया जनानां ध्यानं देशस्य विभिन्नसांस्कृतिकाञ्चलेषु याति। यथा जनजातयः काः? अनुसूचितजनजातयश्च काः? अल्पविकसिताश्च का जातयः? पूर्णविकसिताश्च काः? इति प्रश्ने समायाते जना जानन्ति यज्जनजातयः ताः कथ्यन्ते या अरण्यपर्वतगिरिकन्दरासु निवसन्ति। सम्प्रत्यपि मानवीयचिन्तनाद् वञ्चिता भवन्त्यो निगूढा एव जीवन्ति। अतस्तासां विकासः कार्य इति कृत्वा ताभ्य आरक्षणं दीयते। एताश्च सन्ति गणिता महाभारतरामायणादौ यथा—

किरातास्तीक्ष्णचण्डाश्च हिमाभाः प्रियदर्शनाः।
एतेषामाश्रमाः सर्वैर्विचेयाः काननौकसः।।
गिरिभिस्तेऽवगम्यन्ते पवनप्लवनेन च।
प्राग्ज्योतिषंश्च नृपतिर्भगदत्तो महाशयः।।
स तु सर्वैः सह म्लेच्छैः सागरानुपवासिभिः।
पर्वतीयाश्च राजानस्तथा चैव बृहद्बलः[१]।।

इत्थं भारतीयराष्ट्रस्य सीम्नस्तदुपरि निवसन्त्यो जनजातयस्तासां परम्परागत-रीतिनीतिव्यवस्था च सम्प्रत्यपि अरुणाचलप्रदेश-मेघालय-नागालैण्ड-मिजोरम-त्रिपुरा-असम-सिक्किम-लाहुल-स्पीति-जंस्कर-करगिल-लेहप्रभृतिक्षेत्राणामालोकने-नैव ज्ञातुं शक्यते। एतासां भाषा भिन्ना भिन्नाः, किन्तु ताः संस्कृतेन अनुप्राणिताः सन्ति, एतासां पूजापद्धतिर्भिन्ना भिन्ना, किन्तु ता अपि मध्यक्षेत्रीयपूजापद्धत्या अनुप्राणिता दृश्यन्ते। यथा हि आपातानीजनजातौ लेखकेनानेन मिथुनपूजावसरे भारतीयपरम्पराया बलिपूजाप्रकारः स्वयमेव दृष्टः।

यथा प्रत्यन्तपर्वतारण्येषु वसतां जनानां पार्थक्ये सत्यपि भारतीयसंस्कृति-प्रभावादैक्यमवलोक्यते, तथैव मध्यभारतीयक्षेत्रेष्वपि विभिन्नसांस्कृतिकधारायां स्वरूपमुपलभ्यते; किन्तु तासामप्यैक्यं वर्तत एव। प्राचीनभारते इदमैक्यं संस्कृत-पालि-प्राकृतभाषामाध्यमेन दृश्यते। यथा वैदिकजीवनं संस्कृतेनानुबद्धं, बौद्धजीवनं पालिभाषया पश्चाच्च संस्कृतेन, जैनजीवनं प्राकृतभाषया पश्चाच्च संस्कृते-नाप्यनुकृतम्। एतेन ज्ञायते यत् संस्कृतयो भिन्न-भिन्नभाषामाध्यमेन उत्थिता अपि मूलसंस्कृतेः भाषाविचारादीनामुत्कृष्टतां प्राप्य तदनुकरणे प्रवृत्ता अभूवन्निति।

---

१. लोकप्रज्ञा-पृ. ७४ तथा रामायणे, कि.का. २९।

आचार्यनरेन्द्रदेवेन प्रोक्तम्— 'संस्कृति चित्तधर्म की खेती है[१]'। एतेन ज्ञायते यत् संस्कृतौ मानवविचारस्य मनोवैज्ञानिकचिन्तनस्य च प्रभाव आपतत्येव। तस्मादेव विचारभेदेऽपि आदर्शे एकानुगतास्ता दृश्यन्ते। वैदिका यदा यज्ञादिकर्मकाण्डेषु समापतिताः सन्तो बल्यादिविधानेन स्वर्गकामनां आदर्शरूपेण स्वीकृतवन्तस्तदा बौद्धा बलिकृतनैर्घृण्येन विमुखा निर्वाणाभिमुखं जीवनदर्शनं स्थापितवन्तः। तस्मादेव भारते वैदिकसंस्कृतिविचारेभ्यः पृथग्भूताः श्रमणसंस्कृति-विचारा उद्भूताः, यत्र चिन्तनेऽपि महत्पार्थक्यमवलोक्यते। तद्यथा— वैदिकेषु ईश्वरवादः, आत्मवादः, नित्यत्ववादः, अवयविवादः, वेदवादः, यज्ञवादश्च प्राधान्यं प्राप्तवन्तस्तथा श्रमणेषु अनीश्वरवादः, अनात्मवादः, क्षणभङ्गवादः, स्कन्धवादः, अवेदवादश्च यतिजीवने प्राधान्यमुपगताः। अत्र उभयोर्धारयोः पार्थक्यं विचारमाश्रित्य वर्तते। तस्मादेवाचार्यनरेन्द्रदेवस्य कथनं यत् संस्कृतिश्चित्तधर्मस्य कृषिरिति साधु प्रतिभाति। किन्तु कृषिरियमेकादर्शानुरूपा पृथक् पृथगिति विवेचनीया।

साम्प्रतिकसाम्प्रदायिकाः केचन डॉ.टी.आर.वी.मूर्तिसदृशाः[२] विद्वांसोऽपि तेषु पार्थक्यमामनन्ति; किन्तु मम विचारे तु तथा पार्थक्यं नास्ति यथा सम्प्रत्यपि तदेव राजनीतिविद्भिः क्रियते। कामं भवतु नाम वेदमाश्रित्य पार्थक्यम्, किन्तु भारतीये जीवने विमुक्तिरेव काम्यते। सा च सर्वैर्वैदिकैरवैदिकैश्च काम्यते। तर्हि लक्ष्यैकतायां यदि पक्षविभिन्नता लभ्यते तर्हि तत्रास्माभिर्विचारणीयम्, किमत्र कारणमस्ति? नित्यात्मवादेन परिवारं प्रति मोहदृष्टिः प्रसरति, पुनश्च पुत्रपौत्रादीन् प्रति तथैव सा प्रबलायते, जगति तत्तत्त्वस्य नित्यत्वभावयुतत्वादिति। तस्मादेव भगवद्भिर्बुद्धैस्त-दपवाद्य तत्स्थाने अनात्मभावः प्रस्थापितः। अनात्मवादभावसंबलितेन जीवनेन पारिवारिकभावना विलुप्ता जायते, तथा च क्षणिकत्वदृष्ट्या रागादिलोपश्चापततीति। अतः क्षणिकत्वप्रयुक्तं जीवनं श्रेष्ठमिति मत्वा बुद्धेन नित्यात्मवादः प्रत्याख्यातः कथितश्च। यथा—

सत्कायदृष्टिप्रभवानशेषान् क्लेशांश्च दोषांश्च धिया विपश्यन्।
आत्मानमस्या विषयं च ज्ञात्वा योगी करोत्यात्मनिषेधमेव[३] ।।

एतया सत्कायदृष्ट्या लोको जडीकृत इव तदानीं भवन् यज्ञादिमुखेन स्वर्गं कामयमान आसीत्। तस्मादेव बुद्धेन तद्वारयितुमेको नूतनः पन्था आविष्कृतः। फलत एतस्य वैराग्यमूलकस्य श्रमणधाराप्रयुक्तविचारस्य तदानीन्तन-सांस्कृतिकवैशिष्ट्यमवलोक्य इयं धारा परं पारं गता। तस्मादेवेयं तिब्बतं गत्वा बोन्धर्ममतिलङ्घ्य जापाने सिन्तोधर्ममतिलङ्घ्य, चीने ताओधर्मञ्चातिलङ्घ्य बौद्धधर्मं प्रसारितवती। किं बहुना, एतस्याः प्रभावाद् बर्मादेशे, स्यामदेशे,

१. आचार्य नरेन्द्रदेव—संस्कृति।
२. Central Philosophy of Buddhism, p. 10; ३. मध्यमकावतारः।

काम्बुजे, श्रीलंकायाम्, अफगानिस्तानेऽपि बौद्धधर्मस्य प्रभावः प्रसृतः। किन्तु भारते इयं धारा विरलीकृता इव दृश्यते। तस्मादेव साम्प्रतिका राजनीतिकुशलाः समामनन्ति यदत्र ब्राह्मणवादस्य प्रभावेण एवमभूदिति, येनेयं दूरदेशे प्रभूतप्रभावोत्पादिका, स्वदेशे विलुप्ता, इत्थमाशङ्क्य ते नानाविधान्, सन्देहानिदानीमारोपयन्ति; किन्तु भारतीयचिन्तनस्य यद्रहस्यं वर्तते तन्नैवावगच्छन्ति। तस्मादिह तत्स्फुटीक्रियते—

आत्मानात्मनोरस्तित्वेन न किमपि वैशिष्ट्यमवाप्यते। वैशिष्ट्यं तु तद्दृष्ट्यवगमनेन गम्यते। भारते नूनं पूर्वं स्वर्ग एव परमं पुरुषार्थरूपेणाभवत्; किन्तु श्रमणधारायाः समागमनकाल एव झटिति यज्ञस्य अपारमार्थ्यं परिकल्प्य मोक्षस्य धारणा प्रस्थापिता ऋषिभिः। तस्मादेव उपनिषत्सु प्रोच्यते—

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति[१]।।

अत आत्मदृष्ट्या यद्धो स्वीयान् जनान् प्रति मोहदृष्टिमाप्नोति, सत्कायदृष्टिस्तमपवारयति। उपनिषदस्तथा च रागहीनामहङ्काररहितां विशुद्धामात्मस्वरूपाकाङ्क्षां चिन्तयन्त्योऽभिदधुः—

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्।।
तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।
येनाक्षरं परमं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्[२]।।

आत्मविद्यैव ब्रह्मविद्या, तत्र व्यक्तेः परिधिमपवार्य असीमितरूपां तां भावयितुमुपदिशति गुरुः। कथमियं सीमिता सत्कायदृष्टिरसीमिता भवति, तद्रहस्यमुदाहरणमुखेन दीयते— यदा प्रजातन्त्रं समागतं तदा सवर्णानामेव तत्र प्रामुख्यमभवत्। यदि ते प्रजातन्त्रात्मिकां दृष्टिं परित्यज्य अन्यां काञ्चिद्दृष्टिं स्वीकृतवन्तः स्युः, तदा समग्रप्रजाया विकासाय दृष्टिर्विलुप्ता भवेत्; किन्तु प्रजातन्त्रात्मकदृष्ट्या यथा स्वस्य कल्याणं काम्यते, तथैव परस्यापि कल्याणं कर्तुं चेष्टा तथा च गृहे, समाजे, राष्ट्रेष्वपि भवति, तस्मादेव विश्वसङ्घटनानि निर्मीयन्ते। तद्यथोक्तं पञ्चतन्त्रस्य मित्रलाभे[३]—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्।।

---

१. मुण्डकोपनिषद्-१२: २. मुण्डकोपनिषद्-१६।१७: ३. मित्रलाभः (हितोपदेशः)।

अत्र आत्मभावनिगडितमानवस्य दृष्टिर्न केवलं स्वस्मिन्नेवाधिवसति, प्रत्युत कुले, ग्रामे, जनपदे, राष्ट्रे, विश्वस्मिन् ब्रह्मणि चाधिजायते, अध्यासस्य औत्कृष्ट्याधानबलेन। तस्मादेव स्वार्थं परित्यज्य मानवो लोकहितार्थं यतते, अतो गीतायामात्मनः स्वरूपं प्रतिपाद्य लोकसङ्ग्रहभावेन कार्यकरणाय प्रेरणा प्रदत्ता भगवता श्रीकृष्णेन[1]।

मन्ये लोकसङ्ग्रहभाव एव बुद्धानां बोधिचित्तभावेऽपि भवति। तस्मादेव बोधिसत्त्वः स्वसमाधिमुक्तिं निरस्य लोकहितं किं वा सर्वे जनाः पशुपक्षिणो विमुक्ता यावन् न स्युस्तावत्कालं स्वीयामधिमुक्तिं न ग्रहीतुमेव प्रतिज्ञां करोति। अतो हीनयानाद् महायानं विशिष्यते। तथैव अनात्मवादे स्वाभाविकी दृष्टिर्न जायते पामराणाम्; किन्तु अध्यात्मबोधाद् आत्मनो विश्वात्मस्थापने परिवारस्य क्रमेबृद्धि-र्जायत एव। तस्माद् अनात्मवादं त्यक्त्वा वैदिका आत्मवादेन सर्वाधिमुक्तिं ग्रहीतुं यतवन्तः। किञ्च आत्मवादानात्मवादयोरेकत्र सामञ्जस्यं विभाव्य तयोरैक्यं साधितवन्तः। अनात्मवादेऽपि अनस्तित्वाधारितास्तित्वेन सर्वेषां हितं क्रियते, आत्मवादेनापि स्वास्तित्वस्य सर्वास्तित्वे परिणमने सर्वात्महितं क्रियते, इत्थमुभयत्र दृष्ट्याग्रहलोप एव अपेक्षितः। यदि आग्रहः स्यात् तदा शून्यतादृष्टिरप्यफलवती स्यात्। तदुक्तं यथा—

शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः।
येषां च शून्यतादृष्टिस्तानसाध्यान् बभाषिरे[2]।।

इत्थमुभयोर्मध्ये नैवास्ति भेद इति सिध्यति। अत्रेदं कदाचित् कश्चिद् वक्ति यदनात्मवादेन विश्वात्मदृष्टिः झटिति विकसति, किन्तु आत्मवादेन सा नैवायातीति. तत्रैवेदमपि आरोप्यते यद् अनात्मवादोऽमनोवैज्ञानिकः, आत्मवादश्च मनोवैज्ञानिको भावः। तस्मात् परिष्कारभूतेन आत्मवादेन मोक्षाधिगमो भविष्यतीति। अत. आत्मवाद एव वरः। न चैवं यदि न स्यात्तदा निर्वाणाधिगमाभिलाषिणो निर्वाणस्य शून्यतायां शान्त्यामधिगतायां कथं तत्र सुखं प्राप्तुं प्रयतितवन्तः? इति। तस्मादेव प्रोक्तम्—

स एवानास्त्रवो धातुरचिन्त्यः कुशलो ध्रुवः।
सुखो विमुक्तिकायोऽसौ धर्माख्योऽयं महामुने[3]।।

किञ्च बौद्धतन्त्रेष्वपि बुद्धस्वरूपमानन्दात्मकं हि क्रमेण जातम्। तस्मादेवोक्तम्—

---

१. गीता, चतुर्थोऽध्यायः; २. मध्यमकशास्त्रम्; ३. विज्ञप्तिमामतासिद्धिः-३०।

त्रैलोक्याचारमुक्तं गगनसमगतं सर्वभावस्वभावं
बुद्धं शान्तं विविक्तं परमशिवमयं योगिनामेव गम्यम्।
दुर्बोधं दुर्विचारं स्वपरहिततमं व्यापिनं निर्निमित्तं
वन्दे कायं जिनानां सुखमसमसमं निर्विकल्पैकमूर्तिम्[३]।।

केचनाहुः—आत्मभावस्वीकरणे आत्मदृष्टेर्नाशेऽपि स्वस्य भावाकाङ्क्षा अधिवसत्येव, तस्माद् नदीनां सागरे लये समुपजातेऽपि सागरतां प्राप्य स्वास्तित्वबोधाय आचार्यः कथयति—

सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः।।

अत एवात्मभावस्य सर्वदा विलोपाभावजनितेच्छाऽपि जनान् लोकाकाङ्क्षातो वारयति। तस्मादात्मनाशोऽनात्मवादो वा प्राप्तव्यः, तत्र कारणानि भवन्ति जातिवर्णाश्रमादिव्यवस्थानां सहजानुराग इति। किन्तु भारते तु आश्रमवर्णानुरोधेन जीवनं यापयन्तो जना अन्ते मुक्त्यर्थं संन्यासित्वं लभन्ते, तस्मात् शनैः शनैरुपभोगेन सह विमुक्तिर्जायत इति। अत एव भारते बुद्धोपदेशे सत्यपि तस्य मनोवैज्ञानिकविधेरभावाद्, आत्मभावविधेश्च सहजत्वाद्, आत्मवाद एव स्वीकृतः। अन्येषु देशेषु आत्मवादस्य दर्शनस्याभावाद् बुद्धानां भगवतामुपदेशानां वैशिष्ट्याच्च तत्र तत्स्वीकृतं जातमिति वक्तुं शक्यते। न ह्यनेन काचित् शाश्वतिकी धारणा स्वार्थनिष्ठेति कल्पनीया। शाश्वतबोधकपुनर्जन्मनो विचारेणास्यापि संयुक्तत्वात्। एकदेशीयोत्पन्नविचारसाम्याद् दृष्टिविगलनगत-वैशिष्ट्यात् कथमपि एतयोः श्रमणब्राह्मणधारयोर्मध्ये ऐक्यं भवत्येव।

सम्प्रत्येकाऽपरा संस्कृतिरपि भारते विराजते। सा तु विदेशजा पुनर्जन्म-विषये तर्काप्रतिष्ठिता सती कतिभिर्भावैः सह सनातनसंस्कृत्यनुकूलाऽपि सर्वै-रात्मीयेति वक्तुमशक्या प्रतिभाति। सा च आङ्ग्लयवनेति संस्कृतिरूपेण प्रसिद्धा ईश्वरवचननिगूढा, शाश्वतवादेनालङ्कृता, नित्यविमुक्त्यधिगता, जन्मत आरभ्य मोक्षं यावत् संस्कारव्यवस्थासंयुता, सनातनजनेषु मध्ये कतिपयदलितवर्गैरनुसृता, धार्मिकदृष्ट्या सर्वानपि जगत्यवस्थितान् स्वात्मनि अधिवासयितुं व्यग्रा, कथमपि भारतीयदृष्ट्या पूरितप्रबला संस्कृतिः सम्प्रति आचार-विचार-जनसंख्या-कर्मकाण्डादिना दिनानुदिनं वृद्धिमनुप्राप्ता, जोनगाल्टुंगविचारेण[१] वैदिकसंस्कृतितः साम्यं बिभ्रती विराजते। भारते शिक्षायां प्रपाठ्यमानेन भारोपीयविचारेणापि साम्यं

---

३. सेकोद्देशटीका पृ. ५८ बड़ौदा।

१. जोन गाल्टुंग के व्याख्यान-गुजरातविद्यापीठ, अमहमदाबाद-१९८४।

भजन्ती राजते। तस्या जनसङ्कुलपरिवारेण भारतस्य सनातनी संस्कृतिरपि जनतन्त्रविचारेणाप्लाविता इव दिनानुदिनं समस्यापरिपूता जायते। तर्हि कथं सा आत्मीयभावेन तद्बोधकविचारेण अङ्गीकृता भवेत्? इति प्रश्नः सदा उत्पद्यते। तदर्थं केचन प्रस्तावाः प्रस्तूयन्ते भवतां विपश्चितां विचारणाय!

केचन ब्रुवन्ति संस्कृतभाषाप्रधानेयं संस्कृतिर्भारोपीयपरिवारस्य भाषात्वेन आर्यभावसंबलिता विराजते। तेनास्या महत्त्वमन्याभ्यो भारोपीयभाषाभ्योऽधिकतरं भवत्येव। प्राच्यार्यसङ्केतानुविधायिगुणानामप्यत्र सामञ्जस्यं राजते। आर्योद्भावकगुणेषु केचन ईश्वरवादितां व्यक्तिवादितां सामान्यावबोधकताम् आत्मवादिताम् अमरत्व-वादितां च मन्यन्ते। एते गुणाः संस्कृताश्रितसंस्कृतावपि दृश्यन्ते। प्राच्योद्भावकगुणेषु अनीश्वरवादितां संघातवादितां क्षणास्तित्ववादिताम् अनात्मवादितां मृत्युपर्यन्त-स्थायितां च मन्यन्ते। एते च श्रमणेषु राजन्ते। या संस्कृतयो ग्रन्थप्रामाण्य-वादिन्यस्तासु ज्यूदाइज्म-ख्रीस्तीय-इस्लामानुयायिनो भवन्ति, वैदिका अपि वेदप्रामाण्यवादिनः। इत्थं पूर्वोक्तार्यसंस्कृतिगुणान्विता वैदिकी संस्कृतिः कदाचित् सेमेटिक-संस्कृतावन्तर्भवति। यच्च कथमपि भारतीयैर्न स्वीकर्तुं शक्यते। किञ्च वेदप्रामाण्येनैव सह स्वीयोपदेष्टृवचनप्रामाण्यस्य बुद्ध्याधारिततर्कप्रवणतानिष्ठ-प्रामाणिकतामङ्गीकुर्वाणाः श्रमणा एव प्राच्या उच्यन्ते, येषां सम्बन्धः चीनीय-कन्फ्यूसस-ताओ-सिन्तो-वोन्प्रभृतिभिः सह जायते। इत्थं संस्कृत्यबोधक-विचारतत्त्वविश्लेषणे महान् प्रत्यूहः सम्प्रति दृश्यते। तस्मादेव सात्मीकरणन्यायः सदा उत्थाप्यते; किन्त्वयं प्रकारः केन रूपेण विधेय इति साधुरूपेण नेदानीं यावदवगतः। संस्कृतयः सन्तजनैः, विचारकैः, दिव्यावतारभूतैरपि परिष्क्रियन्ते। तस्मादेव परिष्कारक्रमस्य स्वरूपं विविच्य सात्मीकरणभावनायाः स्वरूपमपि विवेचयितुमुपक्रमते समाजः।

भारते यदा इस्लामस्य आक्रमणमभूत्तदा तत्तदनुसारं संस्कृतिरपि निर्मिताऽ-भवत्; किन्तु तत्र सन्तजनानां संस्कृतिर्न सर्वैः स्वीकृता, तथापि कैश्चिदनुयायि-भिरनुगृहीता भवत्येव, तत्र च काश्चन प्रबला भवन्त्यः सनातनसंस्कृतिभागतोऽ-धिकतरां श्रेष्ठतां प्राप्तुं समन्वयविधां प्राप्तवन्त्यः, काश्चित् तु प्रतिरोधकविधिना ततोऽपि प्रबलसैन्यस्वरूपतामाप्नुवन्। केचन सन्तजना भक्तिसाम्यं दृष्ट्वा तारतम्यं विहितवन्तः। इत्थं केचन साम्प्रतिके काले राष्ट्रैक्यं वीक्ष्य समायोजनपरं स्वरूपं स्थापयामासुः। समन्वयकारकसन्तजनेषु मध्येवाराणसि सद्गुरुकबीरः, सिन्धप्रान्ते निजानन्दः, पञ्चनदे गुरुनानकदेवः, साम्प्रतिके काले महात्मागाँधी च आयान्ति। एवमेव जननायकसन्तगुरुषु मध्ये महाराष्ट्रे तुकारामः, केरले नारायणो गुरुः, तमिलनाडौ पेरियारः, बङ्गप्रान्ते प्रभुपादः, विहारे सहजानन्दश्चाभूवन्। सूफीजनेषु च ख्वाजामुदीनचिस्ती, अब्दुलकादीरः, मुहम्मदगोसः, वहाउद्दीन-जकारिया च

विख्याताः सन्ति। आंग्लसन्तपरम्परापरायणासु मैडम ब्लोवोत्स्की-मैडमकामा-मदरटेरेसा-प्रभृतयो विराजन्ते। एतेषु प्रवर्तितमतवादेषु समन्वयस्य विधा दत्ता विद्यते। किन्तु सा नैव दर्शनाधारिता अपि त्वेकत्राधिवासाय संश्लेषणमूला।

पूर्वोक्तप्राच्यार्यसंस्कृतिसंवाहकगुणानां विश्लेषणेन आयाति यद् भारते सनातनसंस्कृतौ कसाप्युपरि स्वप्रभावस्थापनाक्रमणप्रयोगार्हता नास्ति। यद्यस्ति तर्हि स समन्वयस्यैव विधिः, तत्रापि वैदिकधर्मे तु तदपि नास्ति, तत्र तु ये जना यत्र समुत्पन्नास्तत्रैव धर्मं पालयिष्यन्तीति, न त्वन्यत्र गमिष्यन्ति, न वान्यान् स्वधर्मे ईषदपि परिवर्तयिष्यन्तीति। तस्मादेवोक्तम्—

सर्वं सर्वत्र सर्वेण क्रियमाणं च पूजयेत्।
स्वधर्मे यत्र रागस्ते कामं धर्मो विधीयताम्।।

इत्थं परम्परागतजीवनचर्यानुसारेण वसन्तो भारतीयाः स्वयं स्वतन्त्राः अन्यांश्च स्वतन्त्रान् मन्यन्ते; किन्तु देशस्य विभाजनेन यो हि विषादमयो भावः सम्प्रदायान्तरेषु उत्पन्नः, तेन देशस्य एकस्मिन् वर्गे तीव्रा जुगुप्सा विद्यते। यतो हि देशविभाजनानन्तरं पाकिस्तानस्य व्यवहारेण केचन कटुतामनुभूतवन्तः। अतः भारते आक्रामकसम्प्रदायस्य सदस्यानवलोक्य कुप्यन्ति; किन्तु ये भारतात् साम्प्रदायिकतामारुह्य पाकिस्तानं गतास्तेऽपि तत्रस्थाञ्चलिकभावेन मोहान्धरता इति कथ्यन्ते। इत्थं धर्ममधिकृत्य गतवतां जनानामितो भ्रष्टस्ततो हत इति स्थिती राजते। अस्यां दशायां यथा आत्मानात्मवादयोः परिहारः झटिति समयसापेक्ष-मार्गेण सुसंस्कारेण साध्वाचरणेन सह तात्त्विकावबोधेन क्रियते तथैव मम देशीयः, परदेशीय इति भावो यत्राधिरोहति तत्रापि मानवीयसन्दर्भेण वैरभावस्यापनयनं कर्तव्यमिति सामान्यतः प्रतिभाति। देशस्यापि सीमितासीमितक्षेत्रव्यापित्वाद् मानवभावविचारनिर्मितत्वाच्च अत्रापि आत्मानात्मनोरिव स्वपरदेशभावं निरस्य सकलस्य विभेदजातस्य समापनमेव कर्तव्यमास्ते। अत्र केचन व्यवस्थाबलान्नैव तत्स्वीकुर्वन्तीति, तस्मादुदितेयं समस्या भवति, वैरभावं च प्रक्रमतेः किन्त्वयं भावो नैव फलप्रद इति मत्वा धम्मपदे प्रोक्तम्—

नहि वेरेन वेराणि सम्मन्तीध कदाचन।
अवेरेन च सम्मन्ति एस धम्मो सनन्तनो।।

देशकालयोः परस्परापेक्षत्वाद्, भावस्यापि व्यक्तिविचारनिष्ठत्वात्, तत्र परिवर्तनमपेक्षत एव। बौद्धेषु तु सर्वस्य वस्तुनो निःस्वभावत्वात् स्वभावतारागाद् विराग एव जायते। वैदिकेषु च सर्वस्यात्मस्वरूपत्वात् कुतो वैरभावता इति। किन्त्वियं हि दार्शनिकविचाराद् समराश्रिता दृष्टिः, स्वभावे इयं यावन्नायाति तावद् विभाजनकृतकटुता नैवापयाति। तस्माद् वारं वारं जीवनाद् वैरभावं निष्कास्य

आत्मख्यापनं कर्तव्यमेव, तदैव आत्मनो व्यापकत्वदृष्टिः साधिता भविष्यति। एतत्सम्बन्धे रन्तिदेवेन साधूक्तम्—

न त्वहं कामये राज्यं न स्वर्गं न पुनर्भवम्।
कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्।।

सम्प्रति इयमेवास्ति भारतीयानां परीक्षादृष्टिः। इयमेवास्ति भारतीयानां सहिष्णुतादृष्टिः। किमेते स्वसंस्कृतौ धर्मे च विश्वसन्ति, आहोस्वित् केवलं सुभाषितं ब्रुवते। अत्र केचनाक्षिपन्ति—व्यवहारे आदर्शे सर्वैः समं भाव्यम्, किन्तु इदमपि दृश्यते यत् स्वहितचिन्तने त एव स्वार्थत्यागं कुर्वते, ये स्वार्थान्धप्रवणभावेन अज्ञानवन्तो न सन्ति, तर्हि कामं ते कुर्युः पुत्राधिकोत्पादनेन धर्मपरिवर्तनेन जनसंख्यावृद्धिम्, तथापि तेषां सञ्ज्ञानं, तेषां संसारप्रपञ्चनाशं कर्तुं प्रेरयिष्यत्येव। अन्यथा यदा संसारे त एव कथमपि अवशिष्टाः स्युः, तदा तु तेषामपि समस्या आगमिष्यत्येव। तस्माज्ज्ञानी खलु शीघ्रमेव संसाराधायकदोषान् परिवर्ज्य मोक्षाधायककार्ये मनः समानयतीति भावमुखेन लोकदुःखमपहर्तुं कर्म कुर्यादिति।

पुनश्चात्र वैदिकेषु अधिकतरो भार आयाति, यतो हि ते विश्लेषण-प्रकारेणैकत्रार्यसंस्कृतौ आयान्ति, अपरत्र सेमेटिकधर्मगुणानुसृता भवन्ति। एकत्र भारतोत्पन्नतया क्षणिकवादात् स्वमनात्मरूपं परिभावयन्ति, अन्यत्र विश्वात्मस्वरूपं विभाव्य वसुधैव कुटुम्बं विभावयन्ति। सन्दर्भेऽस्मिन् भागवतस्य पद्यं स्मरन्तो वयं भूतभावनं विश्वनाथं प्रार्थयामहे यत् ते लोकहिताय स्वीयानुशंसां सदा कुर्युरिति—

प्रायेण देवमुनयो स्वविमुक्तकामा
मौनं चरन्ति विजने न परार्थनिष्ठाः।
नैतान् विहाय कृपणान् विमुमुक्षुरेको
नान्यत्त्वदन्यशरणं भ्रयतोऽनुपश्ये।।

अत आर्यप्राच्यधर्मयोः संवेदकगुणयोः प्राधान्याद् वैदिकधर्मस्य मानव-कल्याणभावनायां सेतुरूपता जायते। तस्मादेव तैः सर्वं प्राच्यं प्रतीच्यं भौतिक-माध्यात्मिकञ्च संसारजातं परीक्ष्य पूर्वतः पश्चिमानुगो मार्गोपदेशः करणीयः, येन भारतस्य महिमा वर्धेत।

संस्कृतिविधायकसूत्रेण बहुविश्लेषणीयं भवति तोलनीयञ्चास्ति, किन्तु समेषां कृतेऽवकाशो नास्ति। मया केवलमत्र वैचारिकी दृष्टिः स्थापिता, येन संस्कृतिभेदेऽपि द्वेषभावो नैव प्रवर्धेत। एतां दृष्टिमनुसृत्य यदि भारतीयसंस्कृतेर्विविधता परीक्षिता स्यात्तदा नूनमेव लोकहितं भवेत्, परस्परं सौहार्दञ्चोपतिष्ठेदिति शम्।

●



ऐतिहासिकं तत्स्थानं यत्र ग्रिफिथमहाशयेन वाल्मीकीयं रामायणम् आङ्ग्लपद्यात्मनाऽनूदितम्

# वाल्मीकिरामायणे षोडश संस्कृतिसन्देशाः

**डॉ. जानकीप्रसादद्विवेदः**
उपाचार्योऽध्यक्षश्च, संस्कृतविभागे
के.उ.ति. शिक्षासंस्थानम्
सारनाथः, वाराणसी

❀ ❀ ❀

सम् + कृ + क्तिन् = संस्कृतिः। प्रशस्ता (सर्वोत्तमा) उपलब्धिरभिव्यक्तिश्च संस्कृतिपदेनाभिधातुं शक्यते। एतेन तस्याः सम्बन्धो मानवस्य शरीरेण, प्राणेन, मनसा, बुद्ध्या चावश्यमेवास्तीत्यवगम्यते। सर्वोत्तमाया उपलब्धेरभिव्यक्तेश्चाधारो भवति श्रुतिस्मृतिपुराणादिवाङ्मयमेव। तत्र कृता विधिनिषेधादिनिर्देशाः सम्यक् चेष्टारूपेणाङ्गीक्रियन्ते। सङ्क्षेपतो यस्य तत्त्वस्य माध्यमेन मानवता आधि-भौतिकीम्, आधिदैविकीम्, आध्यात्मिकीं च वैशिष्ट्यसन्ततिं सम्प्राप्नोति, तदेव तत्त्वं संस्कृतिपदवाच्यं भवति। भारतीया संस्कृतिराचारविचारप्रधाना परिलक्ष्यते। विशुद्धैराचारैर्विशुद्धा विचाराः प्रादुर्भवन्ति, ये संस्कृतिसम्पोषणे सहायकाः सन्ति।

दोषादिशोधनक्षमा सा क्रियाऽपि संस्कृतिशब्देन वक्तुं शक्यते, या केनचित् स्थूलपदार्थेन सूक्ष्मतत्त्वाधिगमायाधिक्रियते। एतेन मानवतायाः संस्कारिका क्रिया भवति संस्कृतिः। वस्तुत एतादृशी भारतीयसंस्कृतिर्मानवसंस्कृतिरूपेण विकासं प्राप्तवती। एतस्याः संस्कृतेः समुद्भावका वैदिका ऋषय आसन्, यैर्धर्मस्य वेदमन्त्राणां च साक्षात्कारः कृतः। साक्षात्कृतधर्ममन्त्राणामृषीणां सकाशाद् उपदेशपरम्परया श्रुतर्षिभिर्निधिः स सम्प्राप्तः। श्रुतर्षयः समस्तं ब्राह्मणारण्यकवाङ्मयं प्रकाशितवन्तः। तृतीयकोटिकाः परवर्तिन ऋषयो व्याकरणादिवेदाङ्गानां प्रवर्तका अभूवन्।

ये हि मन्त्रद्रष्टारः ऋषय आसंस्तैः कर्मज्ञानयोराधानं कृतम्। श्रुतर्षिभिर्वैदिकधर्मो बहुजनबोधगम्यः प्रकल्पितः। तदीया संस्कृतिर्यज्ञसंस्थारूपेण प्रकाशिता बभूव। तत उपनिषदां विचारप्रधाना तर्कपद्धतिर्मोक्षपुरुषार्थस्य नवीनं

मार्गमुद्घाटितवती। अस्याश्चरमपरिणतिर्दर्शनशास्त्राणां विविधशाखारूपेण प्रतिफलिता सञ्जाता। पुराणसंस्कृतिर्वेदानां समन्वितसंस्कृतिमुच्चतमविकासशिखरे सम्प्रापितवती। स्मृतिसंस्कृतिर्नीतिनिर्धारणं कृतवती।

लोकप्रियेष्वादर्शाख्यानोपाख्यानेष्वाश्रितमुदात्तचरितानां राजपुरुषादीनां जीवनादर्शं काव्यमयकलेवरे संयोज्य महर्षिवाल्मीकिना रामायणस्य कृष्णद्वैपायनव्यासेन च महाभारतस्य रचनया परम्परानुगतसांस्कृतिकधारा युगानुरूपा प्रवर्तिता। अनयोर्ग्रन्थयोर्धर्मस्य मर्यादायाश्च लोकमङ्गलकारी सन्देशः सन्निहितः। जैनबौद्धधर्मयोरपि भारतीयसंस्कृतेरुन्नयनेऽविस्मरणीयमासीत् किञ्चिदवदानम्। एवं समग्राया एव भारतीयसंस्कृतेर्व्यापकतत्त्वमस्ति— सत्यं शिवं सुन्दरं चेति। दर्शनेषु सत्यस्वरूपम्, नीतिशास्त्रे शिवस्वरूपम्, कलाक्षेत्रे च सुन्दरस्वरूपं दृश्यते। एषां त्रयाणां मूलतत्त्वानां समाहार एव संस्कृतिः, यया मानवताया हितं कल्याणं चानवरतं प्रवर्तते।

मुख्यतः संस्कृतेराधार आचारः, सभ्यतायाश्चाधारो विचारः। आचारैः संस्कृतेर्विचारैश्च सभ्यताया उद्‌गमोऽभूत्। ज्ञानस्य यत् कोटिद्वयमुपलभ्यते— अनुभवजन्यं बुद्धिजन्यं च, तत्रानुभवजन्यं ज्ञानं संस्कृतेः, बुद्धिजन्यं च ज्ञानं सभ्यताया आधारो वरीवर्ति। एतेनानुभवजन्यज्ञानस्य नित्यत्वात् संस्कृतिर्नित्या, बुद्धिजन्यज्ञानस्य च परिवर्तनशीलत्वात् सभ्यताऽपि परिवर्तनशीला भवति। संस्कृतिर्जनसमुदायेन सम्बद्धा, सभ्यता च व्यक्तिसम्बद्धाऽवभासते। समष्टिधिया आचारो बहिरङ्गरूपेण विचारश्चान्तरङ्गरूपेण संस्कृतिसमुद्‌भावाय प्रभवति।

भारतीयसंस्कृतेरेकमपरमपि वैशिष्ट्यमाभाति— 'समन्वयात्मिकी दृष्टिः'। अस्या मूलकारणं धर्मः स्वीक्रियते। धर्मः संस्कृतेरुन्नयने मानवसमाजस्य मार्गदर्शनमकरोत्। धर्मस्तन्मर्यादानुशासनतत्त्वं वर्तते यत् समस्तमेव ब्रह्माण्डं नियन्त्रितुं शक्नोति। अयमेव धर्मो भारतीयसंस्कृतेः प्रेरणास्रोतो वर्तते। संस्कृतेरलौकिकपक्षो धर्मः, लौकिकपक्षश्च वर्तते कर्म। दर्शनेषु धर्मोऽभ्युदयनिःश्रेयससाधकः सङ्गृह्यते। प्रशस्तकर्मपरायणो जन आर्यपदवाच्यः, हीनकर्मपरायणश्चानार्योऽभिधीयते। एवमुद्देशतः संस्कृतेर्बलवत् सम्प्रेरकं तत्त्वं भवति—उदात्तं चरित्रम्। चारित्रिकश्रेष्ठताया उपादानानि सन्ति—नैतिकता, शीलम्, सदाचारः, मर्यादा चेति। वाल्मीकीयरामायणस्य मूलाधारो यो हि धर्मस्तस्यापि दशसु लक्षणेषु सत्यस्य पालनं प्रधानं दृश्यते। अत्र संस्कृतिसंदेशसंवाहकाः केचन पक्षाः सङ्क्षेपेण प्रस्तूयन्ते—

## १. सच्चारित्र्यचिन्ता शौच-इन्द्रियनिग्रह-दम-सत्यादिलक्षणात्मिका

२. महर्षिवाल्मीकिस्तपःस्वाध्यायनिरतं देवर्षिनारदं प्रति शील-वीर्य-सत्यवाक्य-सामर्थ्य-द्युति-अनसूयादिषोडशगुणसम्पन्नपुरुषस्यास्तित्वमपृच्छत्। तत्र चारित्र्यसम्पन्नता प्रधाना आसीत्। यतो हि लोकेऽस्मिन् वीर्यवन्तो धर्मज्ञाः, कृतज्ञाः, विद्वांसः, समर्थाः, द्युतिमन्तश्च बहवो मानवा वसन्ति, परं तेषां चरित्रमुदात्तमन्यैरनुकरणीयं च प्रायेण नैवोपलभ्यते, चरित्रपक्षेण विपन्ना एवावलोक्यन्ते ते।

अत्रेदमवश्यं ध्यातव्यं यत् शीलादिस्वभावसमुपेताः सन्त एव पुरुषाश्चरित्रवन्तो भवितुमर्हन्ति—'सन्तश्चारित्रभूषणाः' (वा.रा. ६।१०५।४२)। एतेन शीलादिकमेव प्रथममर्जनीयं भवति चारित्र्याधानाय। वाल्मीकिना स्वप्रश्ने षोडश एव गुणाः संख्याता आसन्, परं नारदो नियतात्मवत्ता—वाग्मितादिकान् ऊनसप्तति संख्यकान् गुणान् सङ्कीर्त्य तैः सर्वैरेव समुपेतमिक्ष्वाकुवंशप्रसूतं श्रीरामं तथाविधमुद्घोषयति—

'इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः'। (वा.रा.१।१।८)

## २. ब्रह्मबलाधिगमचिन्ता विद्यालक्षणात्मिका

विश्वामित्रो नाम राजर्षिरासीत् प्रजापतेर्ब्रह्मणः पुत्रस्य कुशस्य प्रपौत्रः, कुशनाभस्य पौत्रः, गाधेश्च पुत्रः। स कदाचिदक्षौहिणीसेनासमावृतोऽपरं ब्रह्मलोकमिव वसिष्ठाश्रममुपजगाम। तत्र वसिष्ठस्यातिथ्येन परमप्रीतो विश्वामित्रः शबलां कामधेनुमयाचत, परमेतेन वसिष्ठः सम्मतो नाभूत्। सेनादिबलगर्वितो विश्वामित्रो यदा बलपूर्वकं तां नेतुं प्रारभत, तदा सा शबला ब्रह्मर्षिमेवं निवेदयति—ब्रह्मबलस्य दिव्यगुणसम्पन्नत्वाद् ब्राह्मणा एव सर्वथा भवन्ति बलवत्तराः—

'ब्रह्मन् ब्रह्मबलं दिव्यं क्षत्राच्च बलवत्तरम्'। (वा.रा. १।५४।१४)

अनन्तरं शबलोत्पादितवीराणां प्रभावेण वसिष्ठस्य हुङ्कारेण च सेनादेर्विनाशः सञ्जातः। महादेवमाराध्य दिव्यास्त्रसम्पन्नो विश्वामित्रः पुनस्तदर्थं तत्र सम्प्राप्तः। 'पश्य ब्रह्मबलं दिव्यं मम क्षत्रियपांसन' (वा.रा. १।५६।४) इति वसिष्ठोद्घोषमविगणयन् विश्वामित्रः पुनरपि पराजितः, किञ्च तत्प्रयुक्तं ब्रह्मास्त्रमपि रौद्ररूपधारिणा वसिष्ठेन ग्रस्तम्। तदा स विनिःश्वसन्नेवमङ्गीकरोति— 'धिग् बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्' (वा.रा. १।५६।२३)।

एवं सर्वथा निर्वेदमापन्नो ब्रह्मर्षित्वाधिगमाय कृतसङ्कल्पः स महोग्रं तप आस्थाय सफलमनोरथः सञ्जातः।

## ३. दैवपुरुषकारयोर्बलाबलपरीक्षायाश्चिन्ता धीलक्षणात्मिका

रामायणे, महाभारते, श्रीमद्भागवतेऽन्यत्रापि च विषयेऽस्मिन् विदुषां काचिद् विचारसरणिः प्रवर्तृते। यद्यप्यनयोर्मध्ये दैवस्यैव बलवत्तरत्वं सर्वेषामभिमतम्, तथापि समर्था जनाः पुरुषार्थेन दैवं परिभावयितुं चेष्टन्त एव। रामायणानुसार-मयोध्याधिपतिस्त्रिशङ्कुर्यदा शापेन ग्रस्तः संश्चण्डालतामुपगतस्तदा सः सशरीरमेव स्वर्गलोकमारोढुकामो विश्वामित्रमुपजगाम पुरुषार्थबलेन दैवस्य तिरस्काराय तं सर्वविधं समर्थं मन्यमानः। किञ्च परमार्तभावमापन्नः स एवं वदति—

नान्यां गतिं गमिष्यामि नान्यच्छरणमस्ति मे।
दैवं पुरुषकारेण निवर्तयितुमर्हसि।। (वा.रा. १।५८।२४)

राजर्षिविश्वामित्रेण सशरीरं त्रिशङ्कोः स्वर्गसम्प्रेषणं ब्रह्मर्षिपदोपलब्धिं च संसाध्य दर्शितमेतद् यत् 'सत्यपि दैवस्य बलवत्त्वे समर्थास्तं प्रबाधन्ते' इति।

एकदा लङ्कायुद्धे रामलक्ष्मणौ मेघनादस्य नागपाशेन निबद्धौ। ततः प्रथमं प्रतिबुध्य श्रीरामः शरतल्पे शयानं लक्ष्मणं वीक्षमाणो विप्रियमनुभवति। तेन वियुक्तः स सर्वमेव जगतीतलं शून्यं मनुते। साम्प्रतमहं पुरुषार्थेन दैवं प्रबाधितुं नैव शक्नोमीति विलपन् स युद्धभूमेर्निवर्तनाय सुग्रीवादीन् सर्वान् सम्प्रार्थयते—

'न चातिक्रमितुं शक्यं दैवं सुग्रीव! मानुषैः' (वा.रा. ६।४९।२८) इति।

राक्षसाधिपतौ रावणे निहते सति विलपन्त्यस्तदीयाः पत्न्योऽपि मन्दोदरीप्रभृतयो दैवगतिमनिवर्तनीयां वदन्ति—

नैवार्थेन न कामेन विक्रमेण न चाज्ञया।
शक्या दैवगतिर्लोके निवर्तयितुमुद्यता।। (वा.रा. ६।११२।२५)

लङ्काविजयानन्तरं सीतासमीपमुपस्थाय रामदूतो हनुमान् सीतां सम्प्रार्थयते पूर्वं सन्त्रासजननपरायणानां राक्षसीनां वधाय, परं प्राप्तं सर्वमेव विप्रियं भाग्यदोषेण दैवगत्या वा विचिन्त्य सीता हनुमन्तं ततो निवर्तयति—

भाग्यवैषम्यदोषेण पुरस्ताद् दुष्कृतेन च।
मयैतत् प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते।। (वा.रा. ६।११७।४)

लङ्काविजयस्य सम्प्राप्तौ सत्यामुपस्थितां सीतां प्रति रामो वदति—रावणेन यत् त्वदीयं हरणं कृतं स दैवसम्पादितो दोष आसीत्। मया स्वकीय-पौरुषबलादद्य स तिरस्कृतः—

या त्वं विरहिता नीता चलचित्तेन रक्षसा।
दैवसम्पादितो दोषो मानुषेण मया जितः।।

(वा.रा. ६।११५।३८)

श्रीरामनिर्देशाल्लक्ष्मणो महर्षिवाल्मीकेराश्रमेऽन्तर्वत्नीं सीतां परित्यक्तवान्। तदनन्तरं व्यथितं तं वीक्ष्य सुमन्त्रो दुरतिक्रमणीयस्य दैवप्रभावस्य रहस्यमेव-माविष्करोति—

यद्यप्यहं नरेन्द्रेण रहस्यं श्रावितं पुरा।
तथाप्युदाहरिष्यामि दैवं हि दुरतिक्रमम्।। इति।

(वा.रा. ७।५०।१८)

## ४. श्रियो मूलस्यानिर्वेदादेश्चिन्ता धृति-इन्द्रियनिग्रहादिलक्षणा

चिन्तेयं बहुत्र रामलक्ष्मणसंवादे, अङ्गदवानरवीरसंवादे, आकाशचारिभिरुदीरिते प्रशंसावचने, हनुमता विचारसरणिप्रवर्तने, सीताहनुमत्संवादे, लक्ष्मणसुग्रीवसंवादे, रामसुग्रीवसंवादे, रामविभीषणसंवादे च परिलक्ष्यते। तद्यथा— सीतया शून्यमाश्रमं वीक्ष्य रामो विषीदन् भृशं विललाप। लक्ष्मणस्तदा तं सान्त्वयन् शोकपरित्यागायोत्साहसमाश्रयणाय च श्रीरामं प्रार्थयते। स एवमपि वदति यद् आवाभ्यां पूर्वं नयो विनयः शीलं साम च समाश्रयणीयम्, एभिर्यदि सीता नोपलभ्यते, तदैव शरसम्प्रयोगादिकमाचरणीयम्। स बहुधा शोकसंत्यागाय अनिर्वेदोत्साहधैर्यपौरुषधृतिबुद्धिसमाश्रयणायानुनयमाचरति—

...........मा च शोके मनः कृथाः।।
शोकं विसृज्याद्य धृतिं भजस्व सोत्साहता चास्तु विमार्गणेऽस्याः।।
शीलेन साम्ना विनयेन सीतां नयेन न प्राप्स्यसि चेन्नरेन्द्र।
ततः समुत्सारय हेमपुङ्खैर्महेन्द्रवज्रप्रतिमैः शरौघैः।।
बुद्ध्या युक्ता महाप्राज्ञा विजानन्ति शुभाशुभे।।
उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु।
उत्साहमात्रमाश्रित्य प्रतिलप्स्याम जानकीम्।।
विमृशंश्च स्वया बुद्ध्या धृतिमान्नावसीदति।।
तं शोकं त्यज राजेन्द्र! धैर्यमाश्रय केवलम्।।

(वा.रा. ३।६१।१८; ६३।१९; ६५।१६; ६६।१५; ४।१।१२२; ७।९,१३)।

सुग्रीवादेशमनुसरन्तोऽङ्गदजाम्बवद्हनुमदादयो वीरा दक्षिणस्यां दिशि सीतामन्विष्टवन्तः। तदीयप्रवृत्तेरप्राप्तौ युवराजोऽङ्गदः सर्वांस्तान् सम्प्रेरयति अनिर्वेददाक्ष्यादिकमवलम्ब्य सीतान्वेषणाय—

अनिर्वेदं च दाक्ष्यं च मनसश्चापराजयम्।
कार्यसिद्धिकराण्याहुस्तस्मादेतद् ब्रवीम्यहम्।। (वा.रा. ४।४९।६)

समुद्रोल्लङ्घनावसरे सिंहिकावधानन्तरं धृत्यादिमन्तं हनुमन्तमाकाशचारीणि भूतानि प्रशंसमानानि एवमुक्तवन्ति—

यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव।
धृतिर्दृष्टिर्मतिर्दाक्ष्यं स कर्मसु न सीदति।। (वा.रा. ५।१।१९०)

हनुमाल्लङ्कां प्रविश्य महता यत्नेन रावणभवनेषु सीतामन्वैच्छत्। तदीयाधिगमाभावे स तत्रैव प्रायश्चित्तमनुष्ठातुमिच्छति, परमन्तेऽनिर्वेदेन श्रियः सुखस्य चोपलब्धिं मन्यमानो भूयो विचयायोद्यतो भवति—

अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम्।
भूयस्तत्र विचेष्यामि न यत्र विचयः कृतः।।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः।
करोति सफलं जन्तोः कर्म यच्च करोति सः।।
(वा.रा. ५।१२।१०-११)

सीता श्रीरामस्योत्साहपौरुषसत्त्वानृशंस्यकृतज्ञताविक्रमप्रभावान् गुणान् संस्मरन्ती सती आशंसते यद् रामो मामवश्यं सम्प्राप्स्यतीति।
(द्र.-वा.रा. ५।३७।१४-१५)

वानरवीरैर्मधुभक्षणस्य वृत्तं दधिमुखमुखादाकर्ण्य हनुमति प्रतिष्ठितानि मतिव्यवसायवीर्यश्रुतानि संस्मरन् कार्यसिद्धिं सम्भावयते।
(द्र.-वा.रा. ५।६३।१९-२०)

सीतासन्देशमाकर्ण्य परमोत्साहसम्भृतोऽपि श्रीरामः समुद्रपारगमनस्य दुरूहतामाकलयन्नैराश्यं भेजे। परं सुग्रीवो रामं तदीयान् शौण्डीर्य-सत्त्व-मति-शास्त्रवित्त्व-पाण्डित्यादीन् गुणान् स्मारयति, प्रार्थयते च शोक-प्राकृतबुद्धि-परिवर्जनाय। (द्र.-वा.रा. ६।२।४,६,१५-१६)

लङ्कायुद्धे एकदा मेघनादो वानरान् वञ्चयितुकामो मायामयीं सीतां निशातेनासिना हनुमत्समक्षं जघान। अनेन वृत्तेन रामोऽपि मूर्च्छितोऽभूत्। तदानीं विभीषणस्तत्रोपस्थाय राममनुरुणद्धि मिथ्यासन्तापाश्रयस्य शोकस्य शत्रु-हर्षविवर्धिन्याश्च चिन्तायाः परित्यागाय उद्यमहर्षयोरुपसेवनाय च—

उद्यमः क्रियतां वीर! हर्षः समुपसेव्यताम्।
प्राप्तव्या यदि ते सीता हन्तव्याश्च निशाचराः।। (वा.रा. ६।८५।९)

## ५. अपराधपरीक्षणचिन्ता क्षमालक्षणात्मिका

रामायणे कथाद्वयप्रसङ्गे मन्यते यत् सर्वे जनाः कमप्यपराधमवश्यमेवाचरन्तीति। तस्मादार्यजनैः सर्वेषु कारुण्यमाचरणीयम्। माल्यवतः पृष्ठे लक्ष्मणेन सह निवसन् रामो विचारयति यदिदानीं शरत्कालः समारब्धस्तेन सुहृदा सुग्रीवेण सीतान्वेषणाय यत्नवता भाव्यम्, यतो हि स मया पूर्वमेव कृतार्थतामानीतो बालिवध-राज्यसम्प्रदानकारणात्। परं स कृतघ्न आभाति, अद्यावधि तथाविधसन्देशप्रदानाद्यभावात्। कुपितो रामस्तेनैव बाणेन सुग्रीवमपि हन्तुं विचारयति येन पूर्वं बाली यमपुरीं प्रापितः। तदीयसन्देशमादायानुजो लक्ष्मणः किष्किन्धां प्रविश्य सुग्रीवं पश्यति। भयेन सन्त्रस्तः सुग्रीवः कृतज्ञतामाविष्कुर्वन् सीतान्वेषणं प्रतिजानीते। स प्रार्थयते यद् यदि मया प्रणयवशाद् विश्वासाद् वा किञ्चिद् विपरीतमाचरितं भवेत् तर्हि तत् क्षन्तव्यम्, यतो हि अहं तव सेवकोऽस्मि, अपि चेह लोके ईदृशः पुरुषः को वर्तते यः कमप्यपराधं नाचरति—

यदि किञ्चिदतिक्रान्तं विश्वासात् प्रणयेन वा।
प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति।। (वा.रा. ४।३६।११)

राक्षसीवधप्रार्थनावचनं हनुमतो निशम्य सीता वदति— महाबाहो! मैवं वद। मया दैवयोगादेतत् सर्वं प्रतीपं प्राप्तमतो मर्षयामि। इदानीमहं व्याघ्रसमीपे केनचिद् ऋक्षेण गीतं श्लोकद्वयं स्मरामि, तदनुसारं कोऽपि पुरुषः स्वकृतानामेव कर्मणां फलं भुङ्क्ते, नान्येषां पापकर्मणां फलभाक् स भवति। अत एव चरित्रभूषणैः सद्भिरार्यजनैर्न केवलं शुभाचारपरायणेषु, किञ्च वधार्हेष्वपि पुरुषेषु कारुण्यमनुष्ठेयम्। अत्र च कारणं तदेवानुस्यूतं स्मर्यते यत् पुरुषः क्वचिदवश्यमपराध्यत्येवेति—

न परः पापमादत्ते परेषां पापकर्मणाम्।
समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः।।

पापानां वा शुभानां वा वधार्हाणामथापि वा।
कार्यं कारुण्यमार्येण न कश्चिन्नापराध्यति।।
(वा.रा. ६।११५।४२-४३)

## ६. पुत्रकर्तव्यपरायणताचिन्ता सत्यलक्षणात्मिका

भारतीयपरम्परायां मातापित्राचार्यातिथयो देववदुपास्या भवन्ति, तेषु तुष्टेषु सत्सु कामाः सिध्यन्ति। श्रीरामः पितरं प्रत्यक्षदेवतां मन्यमानस्तस्य प्रियसम्पादनाय प्रयतते। स राज्याभिषेकप्रसङ्गे सुमन्त्रेण समाहूतः कैकेयीभवनं प्रविशति, तत्र पितुर्दशरथस्य कञ्चित् शारीरं मानसं वा सन्तापं सम्भावितवान्। स तदीयादेश-परिपालनमन्तरा स्वकीयैः कार्यैस्तदाराधनमन्तरा च मुहूर्तमात्रमपि जीवितुं नेच्छति—

अतोषयन् महाराजमकुर्वन् वा पितुर्वचः।
मुहूर्तमपि नेच्छेयं जीवितुं कुपिते नृपे ।। (वा.रा. २।१८।१५)

कैकेयीमुखात् पितरं धर्मसङ्कटापन्नं परिज्ञाय स तस्य कामप्याज्ञां पालयितुं प्रतिजानीते। तदीय एष उद्घोष आसीत्— 'वह्नौ प्रपतनम्, हालाहलविषभक्षणम्, समुद्रे निमज्जनं वा भवेत्' अहं सर्वमेव सम्पादयिष्यामि—

अहं हि वचनाद् राज्ञः पतेयमपि पावके।
भक्षयेयं विषं तीक्ष्णं पतेयमपि चार्णवे।। (वा.रा. २।१८।२८)

स पितृशुश्रूषातस्तदाज्ञापरिपालनाद् वाऽधिकं कमपि धर्मं नैव मनुते। एतस्मादेव हेतोः स मातुः कौशल्याया अप्यादेशं नैवाङ्गीकरोति, न चापि 'सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते' (मनु. २।१४५) इति मनुवचनमपि समाद्रियते। उदाहरणत्रितयं प्रस्तुवन् स पितुरेवाज्ञां श्रेयस्करीं साधयति। प्रथमोदाहरणानुसारं कण्डुनामकेन केनचिद् विदुषा पितुरादेशमनुपालयता वने गौर्निहता। द्वितीयोदाहरणेऽश्वमेधीयाश्वहरणानन्तरं तदुपलब्धये सगरेण स्वकीयाः षष्टिसहस्रसंख्याकाः पुत्रा भूमिखननाय समादिष्टाः। ते तथा कुर्वन्तो महर्षिकपिलक्रोधाग्निना भस्मसादभूवन्। तृतीयोदाहरणेनावगम्यते यत् पित्रा जमदग्निना यदा परशुराम आदिष्टस्तदीयमातू रेणुकायाः शिरश्छेदनाय, तदा मातुः शिरश्छेदनेन स पितरं परितोषयामास। (द्र.-वा.रा. २।२१।३१-३३) स पितृनियोगाचरणं सनातनं धर्मं मनुते। सुग्रीवमुद्दिश्य स्वयमुक्तमासीद् रामेण यद् मादृशाः पितुः पुत्राः सर्वे नैव भवन्तीत्यादि।

### ७. भ्रातृकर्तव्यपरायणताचिन्ता धृतिलक्षणात्मिका

'राम-भरत-लक्ष्मण-शत्रुघ्न' इति चतुर्णां दशरथपुत्राणां परस्परं परमा प्रीतिर्भ्रातृत्वं चासीत्। तत्र लक्ष्मणो राममेव सर्वस्वं मन्यमानस्तं शत्रुघ्नश्च भरतं सेवते। भरतः पित्रा दशरथेन सम्प्रदत्तमपि समृद्धं राज्यमार्यरामप्रीत्या नैवाङ्गीचकार। स वसिष्ठादिभिः सह चित्रकूटमुपेत्य श्रीराममयोध्यां प्रत्यागमनाय प्रार्थयामास। एतस्माद् रामः सुग्रीवमभिभाषते यद् भ्रातरं प्रति प्रीतिमन्तोऽन्ये भ्रातरो नैव दृश्यन्ते भरतमन्तरा—

'न सर्वे भ्रातरस्तात! भवन्ति भरतोपमाः'। (वा.रा. ६।१८।१५) इति।

रामो वदति यदहं न केवलं दशरथेनादिष्टः सन्, अथ च स्वयमेव प्रीतिपूर्वकं भरताय राज्यमिष्टान् प्राणान्, धनानि, सीतां चापि समर्पयितुं शक्नोमि। लक्ष्मणो नैव वनवासाय समादिष्ट आसीत्, तथापि स भ्रातृप्रेमवशाद् रामेण सह वनं जगाम, कष्टबाहुल्यं चाङ्गीचकार। रामवचनानुसारेण सीतासमा नारी मर्त्यलोके सम्प्राप्तुं शक्यते परं भ्रातृसेवापरायणो लक्ष्मणसमः कश्चिदन्यो भ्राता नैवोपलब्धुं शक्यते—

शक्या सीतासमा नारी मर्त्यलोके विचिन्वता।
न लक्ष्मणसमो भ्राता सचिवः साम्परायिकः।। (वा.रा. ६।४९।६)

लक्ष्मणमुद्दिश्य रामस्त्वेवमपि मनुते यत् कलत्रबान्धवादिकं सर्वत्रैवोपलभ्यते, परं स देशः कश्चिद् विरल एवाभाति, यत्र सहोदरो भ्राता वसेत्। लक्ष्मणो रामपत्नीं सीतां मातरमङ्गीकरोति, तस्मात् स पादाभूषणमन्तरा कर्ण-भुजाद्याभूषणमपि नैव जानीते तदीयम्। (द्र.-वा.रा. ४।६।२१-२२)

लवणासुरवधाय सम्प्रेरितः श्रीरामस्तदर्थं भरतादीन् विज्ञापयति। परं शत्रुघ्नः सम्प्रार्थयते यदार्येण भरतेन लक्ष्मणेन च चतुर्दशवर्षपर्यन्तं महान्ति कष्टानि सोढानि, तस्मादहमेवादेष्टव्य एतत्कार्यार्थम्। अनन्तरं राघवानुमतः स मधुपुरं गत्वा लवणासुरं निहत्य तत्र राज्यं प्रतिष्ठापितवान्। (द्र.-वा.रा. ७।६२।१२-१७)

### ८. पतिशुश्रूषाचिन्ता इन्द्रियनिग्रहाक्रोधलक्षणात्मिका

स्त्री पत्युरात्मा भवति, अत एव तस्याः कृते यज्ञव्रतादिधर्माचरणं नैव पृथक्त्वेन निर्दिष्टम्। सा पतिं देवं गुरुं च मत्वा व्यवहरति। पतिरेव परमाश्रयो भवति स्त्रियाः। तादृश आश्रयोऽन्यः कश्चिदपि मातापित्रादिर्नास्ति। पतिहीना नारी सुखेन जीवितुं नैव प्रभवति। पिता जलसङ्कल्पपुरस्सरं कन्यां पत्नीरूपेण यस्मै

प्रयच्छति, तेन सा जन्मान्तरेऽपि पत्नीत्वेनोपलभ्यते। एतत् सर्वं रामः कौशल्यां प्रति, ब्राह्मणपत्नी त्रिजटनामानं पतिं प्रत्युक्तवती—

जीवन्त्या हि स्त्रिया भर्ता दैवतं प्रभुरेव च।।
इह प्रेत्य च नारीणां पतिरेको गतिः सदा।।
.................भर्ता हि परदैवतम्।।
.................स्त्रीणां भर्ता हि दैवतम्।।
(वा.रा. २।२४।२१; २९।७,१६; ३२।३१)

कटुवचनैर्दशरथावमानपरायणां कैकेयीमर्थमन्त्री सुमन्त्रो भृशं निन्दति, वदति च यत् कोटिसंख्यकपुत्रापेक्षयापि स्त्रिया भर्तृविषयिणी इच्छा विशिष्टा भवति। अतस्त्वया दशरथो नावमन्तव्यः। वनगमनाय कृतमतिं सीतां समवेक्ष्य कौशल्या तां प्रशंसन्ती वदति— 'नारीणामेष स्वभावो दृश्यते यत् ताः पूर्वं सेविताः सम्मानिताः सत्योऽपि पश्चाद् आपत्सु पतितं पतिं परित्यजन्ति। परं शीलसत्यादौ प्रतिष्ठिता साध्वी नारी पतिमेवैकं परमं पवित्रं हितं च मनुते' इत्यादि।

सीतासङ्कल्पानुसारं यथा तन्त्रीविरहिता वीणा वादयितुं न शक्यते, अपि च यथा चक्रहीनो रथः कथमपि गमनाय न प्रभवति, तथैव शतपुत्रापि नारी पतिहीना सती सुखं नोपलभते—

नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः।
नापतिः सुखमेधेत या स्यादपि शतात्मजा।। (वा.रा. २।३९।२९)

एवमपि सीता मनुते यत् पिता, माता, भ्राता, सुतश्चापि स्त्रियै धनवस्त्रादिकं ददाति, तथापि तदीयं दानं परिमितमेव भवति, भर्ता तु अपरिमितं ददाति। तस्मात् कापि साध्वी स्त्री भर्तारं दैवतं मन्यमाना पतिमवश्यमेव पूजयति—

मितं ददाति हि पिता मितं भ्राता मितं सुतः।
अमितस्य तु दातारं भर्तारं का नु पूजयेत्।।
(वा.रा.२।३९।३०-३१)

**९. स्त्रीक्रोधानुसारम् आचरणाभावचिन्ता अक्रोधलक्षणात्मिका**

स्त्रीषु चाञ्चल्यातिशयवशाद् बालिरावणप्रभृतिराजवर्गेण प्रायेण राजनीतिविषयकं तदीयं वचनं नैवाङ्गीकृतम्। वनगमनाय कृतमतिः सीता रामं

सम्भाषते यद् यदि भवान् मां वनं नेतुं नेच्छति तर्हि अहं विषपानेन जलनिमज्जनेनाग्निदाहेन वात्मानं नाशयिष्यामि। परमिदं सर्वं तदीयं वचनमासीत् क्रोधावेशपुरस्सरम्, तस्माद् रामो नैवाद्रियते तत्। क्रोधाभिभूता कैकेयी रामस्य वनवासं याचितवती। इदं विज्ञाय लक्ष्मणः कौशल्यां प्रति स्वाभिप्रायमाविष्करोति— अमर्षवशीभूतत्वान्मर्यादामतिक्रान्तायाः स्त्रियाः कैकेय्या वचनं प्रमाणीकृत्य राज्यलक्ष्मीं विहाय राघवस्य वनगमनमुचितं नैव प्रतिभातीत्यादि।

मारीचवधानन्तरं सीता लक्ष्मणं रामसमीपगमनाय प्रेरयति। तदा लक्ष्मणो रामस्यातिशयं बलं तत्र तदीयं विश्वासं च मन्वानः सीतां समाश्वासयति। परं यदा सीता सङ्कुपिता सती लक्ष्मणं भरतेन प्रहितं प्रच्छन्नं चौरमुद्घोषयति, तदा व्यथितमानसः स रामसमीपं प्रयाति। रामो लक्ष्मणस्य कार्यमिदं नाभिनन्दति, वदति च यत् त्वं मां राक्षसविनाशे समर्थं जानन्नपि कुपिताया मैथिल्या परुषवचनेन ममादेशमुल्लङ्घितवान् सीतां च यत् परित्यक्तवान्, तत् सर्वमनुचितमेव त्वयाऽऽचरितम्—

अनेन क्रोधवाक्येन मैथिल्या निर्गतो भवान्।।
न हि ते परितुष्यामि त्यक्त्वा यदसि मैथिलीम्।
क्रुद्धायाः परुषं श्रुत्वा स्त्रिया यत् त्वमिहागतः।।
(वा.रा. ३।२९।२२-२४)

## १०. वाग्वैभवव्यवहारचिन्ता धीविद्यादिलक्षणात्मिका

भारतीयसंस्कृतेरयमुद्घोषो वाग्व्यवहारविषये सुपरिचित एवास्ते यत् 'सत्यं ब्रूयात् प्रियं ब्रूयात्' इत्यादि। सत्यं प्रियं च वचनं सर्व एव श्रोतुमभिलषन्ति, प्रशंसन्ति, तदनुरूपं व्यवहरन्ति चापि। यद्यपि हितं मनोहारि च वचो दुर्लभमेवाभाति, तथापि शिक्षाव्याकरणादिशास्त्राध्येतॄणां वाचि लक्ष्मीः संवसति। साधुप्रयुक्ता सती तादृशी वाक् कामधेनुवत् सर्वान् कामान् सम्पादयति। यथोक्तम्—

गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति।। (काव्यादर्शः)

अत एव वाग्मिनो विद्वांस उपदिशन्ति— 'वितर गिरमुदारां येन मूकाः पिकाः स्युः' इति। ये जना मितं सारं च ब्रुवन्ति, ते वाग्मिनः, येऽल्पमपि वृत्तं पुनः पुनरतिशयेन वा वदन्ति ते वावदूकाः, ये च पुनः कुत्सितं बहु भाषन्ते, ते वाचालाः, वाचाटा वा भवन्ति। एतेषु वाग्ग्मिनः प्रशस्यन्ते।

सीतासमीपं सम्प्राप्तो हनुमान् स्वकार्यसम्पत्तये एवं विचारयति—मयात्र मानुषीभाषया व्यवहर्तव्यम्, आभिजात्यसंस्कृतभाषया वेत्यादि। यदा सीतान्वेषणपरौ रामलक्ष्मणौ ऋष्यमूकपर्वतोपवने जग्मतुः, तदा सुग्रीवसम्प्रेषितो हनुमान् भिक्षुरूपमास्थाय सर्वं तत्त्वं परिज्ञातवान्। विज्ञाय च लक्ष्मणमभाषत स यद् वानरेन्द्रः सुग्रीवो युवाभ्यां सह सख्यमिच्छति, तस्मात् स नूनमनुग्राह्यो भवद्भ्याम्। सुग्रीवदूतस्य हनुमतो हृदयहर्षिणीं निर्दोषां वाचमाकर्ण्य रामस्तामतितरां प्रशंसते। स लक्ष्मणमाह—अनेन न केवलम् ऋग्यजुःसामवेदा एवाधीताः, किञ्च कृत्स्नं व्याकरणमपि परिशीलितम्, येनायं कमप्यपशब्दं नोच्चारयामास। मध्यमस्वरेण स्वरसंस्कारसम्पन्नामिमां वाचमाकर्ण्य मनो मे नितरां प्रीणाति। एतादृश्या वाचः प्रभावेण असिहस्तोऽपि शत्रुः कश्चित् सुप्रीतः सन् वैरविरतो भवेदेव—

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहु व्याहरताऽनेन न किञ्चिदपशब्दितम्।।
अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया।
कस्य नाराध्यते चित्तमुद्यतासेररेरपि।। (वा.रा. ४।३।२९,३३)

**११. सन्नतिसंव्यवहारचिन्ता धीविद्यालक्षणात्मिका**

विद्याध्ययनेन विनयाधिगमस्तदीयव्यवहारेण चाभ्युदयः संसूच्यते। हनुमतो मुखात् सीताप्रवृत्तिं परिज्ञाय हर्षमुपागता वानरवीरा युवराजाङ्गदाज्ञया मधुवनस्य फलानि भक्षितवन्तः। अङ्गदो वानरान् प्राह—

'अहं युवराजः सन्नपि साम्प्रतं भवदधीन एवास्मि, तस्माद् यथा यूयं वदिष्यथ तथैवाहमाचरिष्यामि, युष्मान् नैवादेष्टुं प्रभवामि, न चापि बलाद् धर्षयितुमिच्छामि। भवद्भिर्यद् दुष्करं कर्मानुष्ठितम्, तदाधारेण भवतां किमपि विप्रियं कर्तुं नोत्सहे' इत्यादि। सर्वे वानरवीरा भाषितेनानेन प्रीतिमापन्ना वदन्ति— 'ये हि ऐश्वर्यसम्पन्ना राजानो भवन्ति ते आत्मानमेव सर्वस्वं मन्यमाना यदृच्छयैव किञ्चिद् व्यवहरन्ति तत् प्रियमप्रियं हितमहितं वा भवेदित्यत्र नास्ति विचारस्तेषाम्। भवान् युवराजः सन् किमप्याज्ञापयितुं प्रभवेत्। परमिदानीं भवताऽस्मान् प्रति या सन्नतिः (विनयशीलता) प्रदर्शिता, सा भविष्यत्काले आसन्नां शुभयोग्यतां (अभ्युदयं) सूचयति—

एवं वक्ष्यति को राजन् प्रभुः सन् वानरर्षभ।
ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते।।

तव चेदं सुसदृशं वाक्यं नान्यस्य कस्यचित्।
सन्नतिर्हि तवाख्याति भविष्यच्छुभयोग्यताम्।।
(वा.रा. ५।६४।१९-२०)

## १२. तिर्यग्योनिष्वपि धर्माचरणचिन्ता धृतिक्षमालक्षणात्मिका

विरला एव महाजना निष्प्रयोजनेन प्राणिनां रक्षणमाचरन्ति, तत्रापि च केचिदेवैतादृशाः सन्ति ये प्राणिरक्षणपराः सन्तः स्वकीयान् प्राणानपि परित्यजन्ति। गृध्रराजजटायुरासीत् सम्पातिनामकस्य गृध्रराजस्यानुजः। एकदा तावुभावपि सूर्यमण्डलसमीपं जग्मतुः, तत्र सम्पातेः पक्षद्वयं दग्धमभूत्। गृध्रपक्षिणां पितृपैतामहं राज्यमधिजगाम जटायुः। मारीचेन स्वर्णमृगवेषमास्थायाश्रमाद् रामोऽपनीतः। सीतारक्षणे नियुक्तो लक्ष्मणोऽपि मर्मवचनं निशम्य रामसमीपं गतः। तदाऽवसरं सम्प्राप्य रावणो भिक्षुवेषमाधाय सीतां जहार। सीता विवशा सती स्वस्य परित्राणाय विविधं विललाप, त्रातारं च आहूतवती। दण्डकारण्ये तदीयं करुणं वच आकर्ण्य जटायुः परित्राणाय तत्रागच्छत्। कुत्सिते कृत्ये ग्रस्तं रावणं भृशं निनिन्द, सीतां परित्यक्तुं च प्रार्थितवान्। परं रावणस्तदीयां प्रार्थनां नैव जग्राह। तदानीं जटायू रावणं चञ्चुप्रहारैर्विरथीकृत्य सीतां ततोऽन्यत्र निनाय। तेन सङ्क्रुद्धो रावणस्तीक्ष्णेनासिधारेण तदीयपक्षयुगलं चिच्छेद।

एवं जटायुं मरणप्रायं विधाय सीतामादाय च रावण आकाशमार्गेण लङ्कां प्रविवेश। जटायुर्नितान्तं व्यथितः सन्नपि रामदर्शनाय प्राणान् परिरक्षति। लक्ष्मणेन सह रामो यदा तत्समीपमाजगाम, तदानीं स रामं परिचिनोति, सीताहरणविषयिणीं वार्तां च श्रावयति। कथावसाने च रामस्याङ्के शिरोधरामाधाय प्राणाञ्जहौ। रामस्तदीयेन कृत्येनातितरामाश्चर्यचकितः प्रसन्नश्च सञ्जातः। लक्ष्मणमादिश्य काष्ठभारेण चितां निर्माय रामस्तं पक्षिराजं ददाह। रामेणोक्तं यदयं पिता दशरथ इव पूजनीय आसीत्। यतो हि मत्प्रियार्थमयं प्राचीनं गृध्रराज्यं विहाय सीतारक्षणे तत्परः सन् स्वप्राणपरित्यागं चकार। एतेन धर्मचारिणः शूराः शरणागतस्य परिरक्षणे दत्तमानसा न केवलं मनुष्येषु किञ्च तिर्यग्योनिष्वपि समुपलभ्यन्ते। किं बहुना सीताहरणेन तादृशं दुःखमधुना मया नानुभूयते यथा गृध्रराजस्य विनाशेन—

मम हेतोरयं प्राणान् मुमोच पतगेश्वरः।।
सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः।
शूराः शरण्याः सौमित्रे! तिर्यग्योनिगतेष्वपि।।
(वा.रा. ३।६८।२३-२४)

दोहावलीनामके ग्रन्थे दोहाषट्केन (२२२-२२७) गोस्वामी तुलसीदासो जटायुसदृशं प्रशस्तं मृत्युं नान्यस्य कस्यचित् प्राणिनो मनुते—

मुए, मरत, मरिहैं सकल घरी-पहर के बीच।
लही न काहू आज लौं गीधराज सी मीच।। (दोहा २२४)

## १३. सनातनधर्मसंरक्षणचिन्ता सर्वाङ्गीणधर्मलक्षणात्मिका

पुरुषार्थचतुष्टये धर्मः प्राथम्येन परिगण्यते। धर्मार्थकामाः समानरूपेणैव संसेव्या इति निर्दिशति महाभारतकारः। अस्य तत्त्वं गुहायां निहितं मन्यते। वर्ण-योनि-कुल-आपदादिभेदेन धर्मा बहुविधा उपदिश्यन्ते, परं केचिद् धर्माः सर्वेषामेव कृते हितसाधकाः सन्तीति ते सनातनधर्मा आख्यायन्ते। यथा सत्यस्य प्रियस्य च वचनस्य व्यवहारो मनुस्मृतिकारेण सनातनधर्मरूपेणाभिमतः—

सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम्।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः।। (मनु. ४।१३८)

वाल्मीकिरामायणे पञ्चसु कथासु सनातनधर्मस्य चर्चा समुपलभ्यते। तद्यथा—

१. वनवासप्रतिज्ञानन्तरं श्रीरामः कैकेयीं प्रार्थयते यद् राज्याभिषिक्तो भरतः प्रजापालनपरः पितृशुश्रूषापरश्च यथा भवेत् तथा त्वया प्रयतनीयम्। यतो हि कार्यद्वयमेतत् सनातनधर्मरूपमङ्गीक्रियते—

भरतः पालयेद् राज्यं शुश्रूषेच्च पितुर्यथा।
तथा भवत्या कर्तव्यं स हि धर्मः सनातनः।। (वा.रा. २।१९।२६)

२. वनगमनकाले श्रीरामः कौशल्या-सुमित्रा-राम-सीता-लक्ष्मणानां पितुर्नियोगेऽवस्थितिमेव सनातनधर्मं मनुते—

त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया।
पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः।। (वा.रा. २।२१।४९)

३. मातुः कौशल्याया वनगमनप्रस्तावं रामो नाङ्गीकरोति। स कौशल्यां प्रार्थयते पितुर्दशरथस्य शुश्रूषायै—

यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः।
शुश्रूषा क्रियतां तावत् स हि धर्मः सनातनः।।
(वा.रा. २।२४।१३)

४. रामः सीतां सान्त्वयन् ब्रूते यदहं नैव स्वेच्छया वनं गच्छामि, किञ्च पितृशासनसम्माननरूपं सनातनधर्मं परिपालयितुमेव—

स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः।

तथा वर्तितुमिच्छामि स हि धर्मः सनातनः।। (वा.रा. २।३०।३८)

५. समुद्रोल्लङ्घनावसरे समुद्रेण सम्प्रेरितो मैनाकपर्वतो हनुमन्तं सम्मानयितुमिच्छति। स आह यत् पूर्वं समुद्रः सगरपुत्रैः संवर्धित आसीत्। तस्यैवोपकारस्य प्रत्युपकारकामनयाऽसौ समुद्रो मन्माध्यमेन रामकार्यपरायणं श्रीमन्तमर्चितुमुद्यतोऽस्ति, यतो हि प्रत्युपकाराचरणं सनातनधर्मः स्वीक्रियते—

स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः।

कृते च प्रतिकर्तव्यमेष धर्मः सनातनः।। (वा.रा. ५।१।१०६)

## १४. शरणागतसंरक्षणचिन्ता धीधृतिविद्यालक्षणात्मिका

विभीषणोऽग्रजं रावणं भूयो भूयः प्रार्थयते मैथिल्याः सम्प्रदानाय, परं गर्वितो रावणस्तथा कर्तुं नेच्छति, अपि च सङ्क्रुद्धः सन् दुर्वचोभिः प्रताडयन् स तं राज्यान्निष्काशयामास। आर्तो विभीषणो रामस्य शरणं जगाम, तदीयां शरणागतिसम्प्रार्थनामाकर्ण्य रामः सुग्रीवादिभिः सह सम्मन्त्रयते। सुग्रीवादयो वानरवीरा विभीषणस्य ग्रहणं समीचीनं नैव मन्यन्ते। तदा रामो महर्षिकण्डुवचनं संस्मारयंस्तच्च यथार्थं विधातुकामः सर्वानधिकारिण एवं ब्रूते—बद्धाञ्जलिपुटो भूत्वा दैन्यं दर्शयन् यः शरणागतिं याचते, स भवति नूनं सङ्ग्राह्यः। यो हि भयाद् मोहात् कामाद् वापि तथा नैवाचरति, तस्य सुकृतमादायारक्षितः सन् स पुरुषस्ततो गच्छति। एवं प्रपन्नानामरक्षणकार्यमस्वर्ग्यमयशस्यं बलवीर्यविनाशनं च भवति। ततो रामाभिमतेन सर्वैर्विभीषणः समादरपुरस्सरमानीतः सङ्गृहीतश्च—

आर्तो वा यदि वा दृप्तः परेषां शरणं गतः।

अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना।।

(वा.रा. ६।१८।२८)।

## १५. बन्धुसद्भावचिन्ता धीक्षमाक्रोधास्तेयलक्षणात्मिका

बहवो भवन्ति बन्धवो हितचिन्तकाः, परं पुत्रस्य यथार्थबन्धुः कः स्यादित्यत्र मतभेदः कश्चित् प्रवर्तते। बालिवधानन्तरं तारा विलपन्ती सती आत्मानमात्मजमङ्गदं वाऽप्यसहायं मनुते। तदानीं हनुमांस्तां सान्त्वयन्नेवमाह यदिदानीं बालिनोऽन्तिमः

संस्कार:, अङ्गदस्य च राज्याभिषेकस्त्वया कर्तव्य:। राज्यसिंहासनासीनमङ्गदं वीक्ष्य सुखं शान्तिं च प्राप्स्यसि। परं तारा नेदमभिमतमङ्गीकरोति। तदनुसारेण पुत्रस्य यथार्थो बन्धु: (हितचिन्तक:) यथोचितव्यवस्थापकश्च पितैव भवति, न तु माता—

न ह्येषा बुद्धिरास्थेया हनूमन्नङ्गदं प्रति।
पितैव बन्धु: पुत्रस्य न माता हरिसत्तम!।। (वा.रा. ४।२१।१५)

## १६. भद्रप्राप्तिचिन्ता धृति-दम-धीलक्षणात्मिका

अनिर्वेदादिसमाश्रयणानन्तरमपि कृतेनान्वेषणेन लङ्कायां हनुमान् यदा सीतां नोपलभते, तदा नैराश्यमावहन् स रामसमीपं प्रतियातुं नेच्छति। स एवं चिन्तयति यन्मद्गमनेनानर्थपरम्परा सम्भाव्यते, अगमनेन च सीतासम्प्राप्तिविषये आशावन्तौ भूत्वा रामलक्ष्मणौ जीवनं धारयेतां नाम, अपि च वानरा जीवन्त: स्यु:। अहमत्रैव वानप्रस्थाश्रमे निवसन् भगवन्तं शिवमाराधयिष्यामि। परमन्ते स स्वीयप्राणनाशे दोषबाहुल्यमाकलयति। प्राणनाशेन सह प्राणिन: कथापि परिसमाप्ता भवति। एवं धैर्यमुत्साहं चावलम्ब्य यदा स सीतामन्विच्छति, तदा शिंशपावृक्षमूलमुपाश्रितां तां विपन्नावस्थापन्नां पश्यति। तदीयाभिमतानुसारेण जीवनमाश्रित्यैव कश्चिद् भद्रमानन्दं च सम्प्राप्तुमर्हति, अपि च यो जीवति स शतवर्षानन्तरमपि आनन्दमनुभवति—

विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम्।
तस्मात् प्राणान् धरिष्यामि ध्रुवो जीवति सङ्गम:।।
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दो नरं वर्षशतादपि।।
(वा.रा. ५।१३।४५; ३४।६; ६।१२९।२)

लङ्काविजयानन्तरं श्रीरामोऽयोध्यामागच्छतीति वृत्तं हनुमतो मुखादाकर्ण्य नन्दिग्रामे वसन् भरतोऽपीदमेव तथ्यमुक्तवान् रामागमनजनितं परमानन्दमनुभवन्।

●




छात्रसंघभवनसमक्षं राराज्यमानाऽमरहुतात्मनः
श्रीचन्द्रशेखर-आजादस्य मूर्तिः

# हिन्दूसमाजे संस्काराणां प्रयोजनं महत्त्वञ्च

**डॉ. ओङ्कारनाथतिवारी**
प्राचार्य:,
पटनास्थराजकीयसंस्कृतमहाविद्यालयस्य
बिहारप्रदेश:

❀ ❀ ❀

लक्ष्मीनारायणौ ध्यात्वा विष्वक्सेनगुरुं तथा।
हिन्दूसंस्कारतथ्यस्य लोकनं क्रियते मया।।

सम्पूर्वककृञ्धातोर्घञ्प्रत्यये कृते सति वृद्ध्यादिकार्येषु निष्पन्नेषु संस्कारशब्दो निष्पद्यते। प्रयोगो ह्येतस्यानेकार्थेषु क्रियते। मीमांसका यज्ञाङ्गभूतपुरोडाशादेर्विधिवच्छुद्धौ संस्कारशब्दस्याशयं मन्यन्ते[१]। अद्वैतवादिनो वेदान्तिनो जीवे शारीरिकक्रियाणां मिथ्यारोपमेव संस्कारं मन्यन्ते[२]। नैयायिका भावव्यक्तीकरणार्थमात्मव्यञ्जिकां शक्तिमेव संस्कारं मन्यन्ते, यत्परिगणनं वैशेषिकदर्शने चतुर्विंशतिगुणानामन्तर्गतं कृतमास्ते। संस्कृतसाहित्ये संस्कारशब्दस्य प्रयोग: शिक्षा-संस्कृति-प्रशिक्षण[३]-सौजन्यपूर्णता[४]-व्याकरणशुद्धि-संस्करण-परिष्करण[५]-शोभाभूषण[६]प्रभावस्वरूप-स्वभाव-क्रियाछाया[७]-स्मरणशक्ति-स्मरणशक्तौ समागतप्रभाव[८]-शुद्धिक्रिया-धार्मिकविधिविधाना[९]भिषेकविचारभावनाधारणाकार्य-परिणाम-क्रिया-विशेषताद्यर्थेषु कृतो वर्तते[१०]।

---

१. प्रोक्षणादिजन्यसंस्कारो यज्ञाङ्गपुरोडाशेष्विति द्रव्यधर्म:।
(वाचस्पत्ये, ५, पृ. ५१८८)

२. स्नानाचमनादिजन्या: संस्कारा देहे उत्पद्यमानानि तदभिधानानि जीवे कल्प्यन्ते। (तत्रैव)

३. निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक्। (रघुवंशम्, ३।३५)

४. संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च। (कुमारसम्भवम्, १।२८)

५. प्रयुक्तसंस्कार इवाधिकं बभौ। (रघुवंशम्, ३।१८)

६. स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते। (शाकुन्तलम्, ७।३३)

७. यन्नवे भाजने लग्न: संस्कारो नान्यथा भवेत्। (हितोपदेश:, १।८)

८. संस्कारजन्यं ज्ञानं स्मृति:। (तर्कसङ्ग्रह:)

९. कार्य: शरीरसंस्कार: पावन: प्रेत्य चेह च। (म.स्मृ., २।२६)

१०. फलानुमेया: प्रारम्भा: संस्कारा: प्राक्तना इव। (रघुवंशम् १।२०)

एवं प्रकारेणायं स्पष्ट एवास्ते यत्संस्कारशब्देन सह विलक्षणार्थानां योगोऽभिजातः। यश्च संस्कारशब्दस्य दीर्घेतिहासक्रमे एतेन संयुक्तोऽभवत्। एतदभिप्रायः शुद्धे धार्मिकक्रियासु तथा व्यक्तेर्दैहिकमानसिकबौद्धिकपरिष्कारार्थं करिष्यमाणेष्वनुष्ठानेष्वस्ति। येनायं समाजस्य पूर्णविकसितः सदस्यो भवेत्। किन्तु हिन्दूसंस्कारेषु अनेके प्रारम्भिकविचाराः, धार्मिकविधिविधानानि, तत्सहवर्तिनियमा अनुष्ठानविषयाश्च समाविष्टाः सन्ति। यदुद्देश्यं केवलमौपचारिक-दैहिकसंस्कार एव न वर्ततेऽपि तु संस्कार्यस्य व्यक्तिविशेषस्य व्यक्तित्वपरिष्करणं व्यक्तित्वशुद्धिः पूर्णताऽप्यस्ति। साधारणतो ज्ञानमिदं जायते स्म, यद् विधिपूर्वकसंस्कारानुष्ठानेन संस्कृतव्यक्तौ वैलक्षण्यानामवर्णनीयानां सद्गुणानां प्रादुर्भावो जायते[१]। अतः संस्कारशब्दस्य प्रयोगो भवति स्मैतत्सामूहिकार्थेष्विति।

हिन्दूसंस्कारवत्प्राचीनसंस्थानां प्रयोजनमहत्त्वगवेषणामार्गे बहूनि काठिन्यानि सन्ति। सर्वप्रथमं ताः परिस्थितयो यत्र तासां प्रादुर्भाव आसीत्, युगानां गर्भेषु प्रच्छन्ना अभवन्। तथा ताः परितो लोकप्रचलितान्धविश्वासानां पाशवत्परिस्तरण-मभवत्। तत्सुदूरवर्तमाने समस्यायां दृष्टिपातं कर्त्तुं तथ्यानां गभीरज्ञानसंयुक्ता सुनियोजिता कल्पना अपेक्षिताऽस्ति। अन्यतः, जातीयभावना अतीतस्य देदीप्यमानपार्श्वदेशे ध्यानं प्रददाति। तथा चैवं प्रकारेण समीक्षात्मिका दृष्टिराच्छन्ना जायते। या दृष्टिः कस्मैचिदप्यनुसन्धानकार्यायात्यन्तावश्यकी विद्यते; किन्त्वत्रापि साम्प्रतिकमस्तिष्कस्य पूर्वाग्रहिणीभ्यो धारणाभ्यो महत्काठिन्यं समुत्पन्नं भवति। साधारणत इदं ज्ञायते यत् प्राचीनकालस्य प्रत्येकं परम्परा अन्धविश्वासपूर्णाः सन्ति। कठिनानुशासनं ज्ञातुं तत्र धैर्यं नास्ति। या धीरता प्राचीनधर्मस्यैका महत्त्वपूर्णा विशेषतासीत्। प्राचीनसंस्कृतेर्विद्यार्थिन एकत एकमात्रश्रद्धातस्तथान्यतः पार्श्वादतिसन्देहवादिन्या मनोवृत्तेरात्मरक्षणमावश्यकम्। तेन छात्रेणातीतं प्रति समुचितादरेण तथा विकासस्य विभिन्नस्तरैश्चलतो मानवस्य स्वभावं प्रति पूर्णसहानुभूतिपूर्वकं संस्काराणामध्ययनं कर्त्तव्यम्।

स्थूलबुद्ध्या संस्कारप्रयोजनं वर्गद्वये विभक्तं कर्तुं क्षमोऽस्मि। प्रथमो वर्गो निर्मलविश्वासेन तथा कृत्रिमसहजमानसिकस्वच्छतयोद्दिष्टोऽस्ति। द्वितीयवर्गः कर्मकाण्डीयः सांस्कृतिकश्च वर्तते। एतदुद्भवः सामाजिकविकासादुन्नतेर्नियामिकाया-श्चेतनशक्तेः कारणाज्जायते। यदा मनुष्याः प्राकृतिकाधारेष्वेव विकासस्य प्रयत्नं कुर्वन्ति। पुरोहितो जनसाधारणस्य ज्ञानशक्तेरदूरवर्ति भवन्नपि जनसाधारण-

१. आत्मशरीरान्यतरनिष्ठो विहितक्रियाजन्योऽतिशयविशेषः संस्कारः। (वी.मि.सं.भा. १ पृ. १३२)

स्यापेक्षयोच्चस्तरे अवश्यमेवासीत्। अस्मात् कारणात् सामाजिकप्रथामधिकांशरूपेण परिष्कृतवान्। उभयात्मकः संस्कारः प्राचीनकालादेव समानान्तररूपेण व्यवहृतो भवन्नस्ति, तथाऽद्यापि स द्विविधः संस्कारो हिन्दूधर्मे प्रचलितोऽस्ति।

## लोकप्रियप्रयोजनम्

लोकप्रियप्रयोजनविचारकालेऽस्माभिर्ध्यातव्यमिदं यत्संसारस्यान्यदेशवद् हिन्दूनामपि विश्वास आसीद् यत्ते परित एतादृशातिमानुषप्रभावैरावृताः सन्ति, ये सुकर्म कुकर्म वा कर्तुं शक्तिं रक्षन्ति स्म। तेषामियं धारणाऽऽसीद् यदुक्तप्रभावाः जीवनस्य कस्मिंश्चिदपि महत्त्वपूर्णावसरे हस्तक्षेपं कुर्वन्ति। अतस्तेऽमङ्गल-जनकप्रभावाणां निराकरणाय तथा हितकरप्रभावाणां प्राप्त्यै प्रयत्नं कुर्वन्त आसन्, येन जनाः किमपि बाह्यविघ्नं विना स्वविकासमभिवृद्धिञ्च कर्तुं समर्था भवेयुः, तथा देवशक्त्या दिव्यशक्त्या च सामयिकनिर्देशं सहायताञ्चाप्नुयुः। संस्काराणामने-काङ्गमूलेऽयमेव विश्वासस्तिष्ठन्नस्ति।

## अशुभप्रभावाणां प्रतीकारः

अवाञ्छितप्रभावान् निराकर्तुं हिन्दूजनाः स्वसंस्कारान्तर्गतानामनेक-साधनानामवलम्बनं कृतवन्तः। तत्र प्राथमिकं स्थानमाराधनस्यासीत्। अस्यां भूतानां पिशाचानां तथान्याशुभशक्तीनां स्तुतिः कृतासीत्। तस्मै तेभ्यस्ताभ्यश्च बलिदानं ददति स्म, येन ते भूतादयो बलिना तृप्ता भूत्वा किमपि क्षतिप्रदानं विनैव स्वस्थानपरावर्तनं कुर्युः। गृहस्थाः स्वबालकान् पत्नीश्च रक्षितुं चिन्तिताः सन्त आसन्। तथा भूतपिशाचानां निवृत्तिरेव स्वकर्तव्यतां जानन्ति स्म। स्त्रीणां गर्भधारणकाले, शिशुजन्मसमये, शैशवाद्यवस्थाकाल एवंभूतां प्रार्थनां कुर्वन्ते स्म। यदि रोगवाही भूतः शिशुमाक्रमति तदा शिशुपिता कथयति— 'शिशुषु आक्रमणकारिन् कूर्कूर! सुकूर्कूर! शिशुं मुञ्च। हे सीसर! त्वां प्रत्यादरं प्रकटयामि' इत्यादिकम्[१]। भूतादिषु भ्रमोत्पादनात्मको द्वितीयोपाय आसीत्। यदा कदा आराधना अनावश्यकीति ज्ञातासीदथवा सप्रयोजनापि दूरे परिरक्षितासीत्। यथा मुण्डनावसरे कर्तितकेशान् गोमयपिण्डेन सह मेलयित्वा गोष्ठे गर्तगतान् कुरुते स्माथवा नद्यां तत्प्रक्षेपणमाचरति स्म (गृहस्थः)। येन कोऽपि भूतः पिशाचो वा मुण्डितबालकं प्रति चमत्कारिप्रयोगं न कुर्य्यात्[२]। भ्रमोत्पादनक्रिया

१. पा.गृ.सू. १।१६।२०, आ.गृ.सू. १।१५, गो.गृ.सू. २।७।१७। पारस्करगृह्यसूत्रे गदाधरः कथयति—"ततस्तुष्ट तुष्ट एनं एनं कुमारं मुञ्चय"।

२. अनुगुप्तमेतं सकेशं गोमयपिण्डं निधाय गोष्ठे पल्वलमुदकान्ते वा। (पा.गृ.सू. २।१।२०)

अन्त्येष्टिकृत्यैरपि प्रमाणिता भवति। भ्रमोत्पादनायासन्ने मृत्यौ मृत्योः प्राग् मरणासन्नस्य प्रतिकृतिदाहं कुर्वते स्म[१]। एतन्मूलेऽयमुद्देश्यो निहित आसीद् यद्यदा मरणासन्नस्य शरीरमाक्रमेत्तदा तथाकथितमृतस्य कारणेन भ्रम आपतेत्। किन्तु यदाराधनं भ्रमोत्पादिका क्रियाप्येतद्द्वयमपर्याप्तमभवत्, तदा तृतीयक्रान्ति-कारिचरणोत्थापनमभवत्। अशुभशक्तेः स्पष्टतया दूरं गमनाय तद्भर्त्सनां विधत्ते स्म तथा प्रत्यक्षरूपेण तस्मिन्नाक्रमणमाचरति स्म। जातकर्मसंस्कारकाले शिशोः पिता कथयति— 'शण्ड! मर्क उपवीर! शौण्डिकेय! उलूखल! मलिम्लुच! द्रोणास! च्यवन! यूयं सर्वेऽत्रतोऽदृश्यो भवत स्वाहा[२]' गृहस्थोऽशुभप्रभाव-निवारणाय देवीं देवतां स्तौति स्म। चतुर्थीकर्मावसरे पतिर्नवविवाहितायाः पत्न्या अशुभतत्त्वनिवारणोद्देश्येनाग्निं वायुं सूर्यं चन्द्रं गन्धर्वञ्चावाहयति स्म[३]। किन्तु स कदाचिज्जलेनानलेन स्वयं कथिताशुभशक्तीरातङ्किताः कृत्वा (ताः) दूरं प्रक्षिपति स्म।

एतत्प्रयोजनसिद्ध्यै (लोकः) अन्यमप्युपायं कार्यमानयति स्म। जलस्योपयोगं सामान्येन प्रत्येकं संस्कारविधौ करोति स्म। प्रयुक्तजलमिदं दैहिकाशौचं क्षालयति तथा भूतपिशाचराक्षसेभ्यः त्रायते स्म। शतपथब्राह्मणं[४] जलं राक्षसानां नाशकमूचे। अवाञ्छितां शक्तिं ह्यातङ्कितां कर्तुमन्त्येष्टिसमये शब्दं कुर्वन्नास्ते स्म। जातुचिद् व्यक्तिविशेषः स्वयमेव निजदृढतां बालञ्चोदघोषयत्। स्वमार्गे समागमिष्यमाणस्य कस्याप्यमङ्गलस्य सम्भावनया सह योद्धुमात्मानमस्त्र-शस्त्रसुसज्जितं कुरुते स्म। यथा विद्यार्थी दण्डमबिभ्रत् तथैव[५]। स वटुर्धृतं दण्डं कदापि त्यक्तुं नाशक्नोत्, तथा दण्डं स्वपार्श्वे रक्षितुं सदैवापेक्षां कृतवान्। विद्यार्थिजीवनसमाप्त्यवसरे समुपस्थिते समावर्तनसंस्कारावसरे तत्पूर्वदण्डं विहाय पुनः वेणुदण्डं बिभर्ति स्म दृढतरम्[६]। इदं स्पष्टतया प्रोक्तं यत् पशुभ्यो मानवशत्रुभ्यो रक्षायै नैव दण्डोपयोगिता, अपि तु राक्षसेभ्यः पिशाचेभ्यश्च त्राणार्थं दण्डः सूपयोगी भवति[७]। दण्डस्य सवेगान्दोलितकरणमपि सर्वाशुभप्रभाव-

---

१. कौ.सू. ४८।५४ तथाऽग्रे ५९ तथा क्रमशः।

२. पा.गृ.सू. १।१६।१९, आप. गृ.सू. १।१५।

३. अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा। इत्यादि। (पा.गृ.सू. १।११।२।१-५)

४. आपो हि वै रक्षोघ्नी। (शत. ब्राह्मणे)

५. आ.गृ.सू. १।१९।१०, पा.गृ.सू. २।५।१६।

६. वैष्णवं दण्डमादत्ते। (पा.गृ.सू. २।६।२६)

७. विश्वाभ्यो मानाष्ट्राभ्यपरिपाहि सर्वत इति। (पा.गृ.सू. २।६।२६)

दूरीकरणस्यैकोपायोऽस्ति। सीमन्तोन्नयनसंस्कारावसरे एतदुद्देश्येनैव केशवेशो जायते[१]। स्वार्थपरताया वशीभूतो भूत्वाऽसौ मानव एता अमङ्गलशक्तीः स्वस्मात् पृथक्कृत्यान्यव्यक्तिविशेषाणामुपरि सङ्क्रमितकरणार्थं प्रायतत। यथा—वध्वा सन्धारितं वैवाहिकवस्त्रं ब्राह्मणाय ददाति स्म। यतो हि तानि वस्त्राणि वधूघातकानि मन्यन्ते स्म। भवतु नाम, विषयेऽस्मिन् धारणेयं लोकानामासीद् यद् ब्राह्मणा एतावन्तः सशक्ताः सन्ति यदशुभशक्तयस्तेषु न कुर्वन्त्याक्रमणम्। वैवाहिकवस्त्राणि गोशालायां वृक्षोपरि वा स्थापितानि जायन्ते स्म[२]।

## अभीष्टप्रभावाणामाकर्षणम्

यथा शुभेतरप्रभावेभ्यस्त्राणाय प्रायतन्त लोकास्तथैव कस्यापि संस्कारस्यावसरे संस्कार्यव्यक्तेर्हिताय तदभीष्टप्रभावानामामन्त्रितानाकृष्टांश्च कुर्वन्ति स्म। हिन्दूनामेवं विश्वास आसीद् यज्जीवनस्य सर्वे समयाः केनचिद्देवेनाधिष्ठिता विद्यन्ते। अतः प्रत्येकावसरेषु संस्कार्यव्यक्तये वरं दातुमाशीर्वादञ्च दातुं तद्देवताया उद्बोधनं कुर्वते स्म। गर्भाधानकाले प्रधानदेवता विष्णुरासीत्। विवाहसमये प्रजापतिस्तथोपनयनसमये बृहस्पत्यादिप्रधानदेव आसीत्। किन्तु ते जना हिन्दू-संज्ञकाः केवलदेवतास्वेवाश्रिता नासन्, अपि तु स्वयं विविधोपायैरात्मसाहाय्यं कुर्वन्ति स्म। अत्र साम्यरक्षकपदार्थानां दिशि सङ्केतस्य महत्त्वपूर्णस्थानमासीत्। ते शुभवस्तूनां स्पर्शेन मङ्गलमयपरिणामस्याशां विदधति स्म। सीमन्तोन्नयनसंस्कार-काले उदुम्बरवृक्षस्य शाखास्पर्शं पत्न्या ग्रीवया कारयन्ति स्म[३]। विश्वासोऽयमासीद् यदुदुम्बरशाखास्पर्शेन नार्यामुर्वरता (सन्ततिप्रजननस्य क्षमता) ह्यागच्छति। शिला-रोहणेन दृढता आयातीति प्रतीतिरासीत्। अतो ब्रह्मचारिणे वध्वै च तद्विधानञ्चक्रे[४]। हृदयस्पर्श आचार्यब्रह्मचारिणोः पत्नीपत्योश्च मध्ये ऐक्यसामञ्जस्यस्थापनायैकः सुनिश्चितोपाय आसीत्[५]।

श्वासो जीवनस्य प्रतीकरूपे मान्य आसीत्। अतः पिता नवजात-शिशौ तच्छ्वासप्रश्वासं दृढीकर्तुं वारत्रयं त्रिःकृत्वो वा फूत्कारयति

---

१. आप.गृ.सू. १४, द्र.गृ.सू. २।२।

२. अ.वे. १४।२।४८-५०; कौ.सू. ७६।१, ७९।२४।

३. औदुम्बरेण त्रिवृतमाबध्नाति—अयमूर्ज्जावतो वृक्षः उज्जीर्वफलिनी भव।
(पा.गृ.सू. १।१५।४।६, गौ.गृ.सू. २।७।१)

४. उपनयन-विवाहसंस्कारप्रकरणे।

५. तत्रैव।

स्म[१]। पुत्रप्राप्त्यै मात्रा दधिमिश्रितद्विदलद्वयभक्षणं तथा धान्यैः सार्द्धमेकं यवबीजभक्षणं परमावश्यकमासीत्[२]। तत्र कारणं स्पष्टमस्ति। पुत्रार्थिनी माता यद्वस्तु जग्राह, तद्वस्तु पुरुषस्य प्रतीक आसीत्। अतस्तद्गर्भे पौरुषं सहकृतं कर्तुमाशां चक्रे। सन्तति(पुत्र)प्रजननाय पत्न्या दक्षघ्राणच्छिद्रे दूरव्यापिमूलवतो विशालवटवृक्षस्य रसक्षेपं कुरुते स्म[३]। समञ्जनेन स्नेहप्रेमोत्पत्तेर्धारणासीत्। विवाहसंस्कारावसरे यदा वरः समस्तदेवानां जलादिकानां च दम्पतिहृदये ऐक्यस्य प्रेम्णश्च प्रादुर्भावकरणार्थं प्रार्थनां कुर्वन्नासीत्, तदा वधूपिता तयोः समञ्जनं करोति स्म। धारणेयमासीद् यत् कुरूपाणामशुभदृश्यानां निवारणेन तथा पवित्र-व्यक्तिसम्बन्धत्यागेन पवित्रता सुरक्षिता भवति। स्नातिकाया शुभदायकपूर्वाक्षरशिष्ट-शब्दोच्चारणं तथा दूषितविचारान् मस्तिष्कमानयनमपि निषिद्धमासीत्। स गर्भिणीं विजन्यां नकुलं सकुलं कपालं भगालञ्चोचे[४]। यदा कदाऽभीष्टवस्तुप्राप्त्यै नाटकीय-प्रथयाऽपि काञ्चिद्वार्तां व्यवहरति स्म पृच्छति स्म वा। सीमन्तोन्नयनसंस्कारावसरे पत्नीं तण्डुलराशिं द्रष्टुं कथयति यदा यत् पतिस्तां पृच्छति स्म सन्तानपशुसौभाग्यदीर्घायुष्येषु किन्त्वत्र राशौ पश्यसि[५]।

**संस्काराणां भौतिकोद्देश्यत्वम्**

संस्काराणां भौतिकोद्देश्यत्वमासीत्— धनधान्यपशुसन्तानदीर्घजीवन-सम्पत्समृद्धिबुद्धिप्राप्तिरिति। संस्कारा गृह्यकृत्या आसन्। तथा तदनुष्ठानसमये गार्हस्थ्यजीवनायावश्यकसर्ववस्तूनां भावनां देवान् स्वाभाविकतया याचयते स्म। हिन्दूनां प्रतीतिरासीद् यदाराधनया प्रार्थनया च देवा आराधकानां हार्दिकाकाङ्क्षां जानन्ति तथा पशुसन्तानशारीरिकसौन्दर्यतीव्रबुद्धीनां रूपे आकाङ्क्षां पूरयन्ति। एतद्भौतिकोद्देश्यानां प्रारम्भिकन्यस्तशिला सुदृढा वर्तते। तथाद्यापि स जन-साधारणानां भौतिकाकाङ्क्षाणां प्रश्रयमदात्। स एतत्परिष्करणाय तथा गृहस्थानां कृते तदौचित्यसिद्धकरणाय प्रायतत।

---

१. जातकर्मसंस्कारावसरे।

२. द्र.गृ.सू. २।२।२३, आ.गृ.सू. १।१३।२।

३. पा.गृ.सू. १।१४।३।

४. अथैनौ समञ्जयति— समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ। सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ। (पा.गृ.सू. १।४।१५, गौ.गृ.सू. २।१।१८)

५. गर्भिणीं विजन्येति ब्रूयात्। सकुलमिति नकुलम्। भगालमिति कपालम्।
(पा.गृ.सू. २।७।११-१३, आ.गृ.सू. ३।९।६)

**आत्माभिव्यक्तेर्माध्यमः**

किन्तु गृहस्थः सदा भयभीतो नासीत्, तथा स देवतानां व्यावसायिकाभ्यर्थ्यपि नाभवत्। स जीवनस्य विभिन्नघटनात्मककारणैर्भविष्यमाण-हर्षानन्ददुःखविशेषानपि प्रकटयितुं संस्कारानुष्ठानमाचरति स्म। सन्तानसुख-प्राप्तिर्लोभप्रदानात्मकं वस्त्वासीत्। अतः पुत्रजन्मावसरे पितुर्हृदयेऽसीमानन्दानुभूतिः स्वभावसिद्धा आसीत्। विवाहो मानवजीवनस्य कृते महत्तरोत्सवस्यावसर आसीदस्ति च। शिशोः प्रगतिशीलजीवनस्य प्रतिचरणं परिवारं सन्तोषहर्षाभ्यां पूर्णतो बिभर्ति स्म। मृत्युः शोकस्यावसर आसीत्, यः परितः करुणाया दृश्यमुपस्थापयति स्म। सः स्वहर्षस्य भावान् सज्जीक्रियायां सङ्गीते भोजनकर्मणि तथोपहाराणां रूपे व्यञ्जयति तथा मरणं गतस्य शोकाभिव्यक्तितदन्त्येष्टिकृत्ये भवति स्म।

**सांस्कृतिकप्रयोजनम्**

संस्काराणां लोकप्रियप्रयोजनं स्वीकुर्वन्तो हि लेखकोत्तमास्तथा विधिनिर्मातारस्तस्मिन्नुच्चतरधर्मस्य पवित्रतायाः समावेशं कर्त्तुं प्रयतितवन्तः। मनुः कथयति यद् गार्भहोमैर्जातकर्मसंस्कारेण चूडाकर्मसंस्कारेणाथ च मौञ्जीबन्धन-संस्कारेण द्विजानां गर्भसम्बन्धिनो बीजसम्बन्धिनश्च दोषा दूरं गच्छन्ति[१]। तस्येदमपि कथनमस्ति यद् द्विजातिभिर्गर्भाधानादिशारीरिकसंस्कारा वैदिककर्मभिस्साकं कर्त्तव्याः। ये चेहलोके परलोके च पवित्रयन्ति[२]। याज्ञवल्क्योऽपि विचारस्यास्यैव पुष्टिं कुरुते[३]। लोकानामासीद्विश्वासो यद् बीजं गर्भाधानञ्च वर्ततेऽपवित्रमशुद्धञ्च। संस्कारेणैवैतन्मलात् पापाद्वात्मानं विमोचयन्ति जनाः[४]। आत्मनो निवासाय शरीरमुपयुक्तमाध्यमं कर्तुं सम्पूर्णशरीरसंस्कारानप्यावश्यकान् मन्यन्ते स्म। मन्वनुसारं स्वाध्यायैः व्रतधर्मेण होमेन देवर्षितर्पणेन यज्ञेन सन्तानोत्पत्त्या तथेज्यया पञ्चमहायज्ञानुष्ठानेन शरीरमिदं ब्रह्मप्राप्तियोग्यं भवति[५]। अयमपि सिद्धान्तः प्रचलित आसीद् यज्जननकाले सर्वा व्यक्तिः शूद्रो भवति। अतः पूर्णविकसितार्यो भवितुं

१. गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते।। (म.स्मृ. २।२७)

२. वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च।। (म.स्मृ. २।२६)

३. याज्ञ. स्मृ. १।१६।

४. बीजगर्भसमुद्भवैनोनिबर्हणो जातकर्मादिजन्यः। (वी.मि.,सं.भा. १, पृ. १३२)

५. स्वाध्यायेन जपैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।। (म. स्मृ. २।२८)

तत्संस्कारकरणं परिमार्जनञ्चावश्यकं जायते। धर्मशास्त्रे उक्तमस्ति यज्जन्मना सर्वः शूद्रो भवति। उपनयनसंस्कारेणासौ द्विजः कथ्यते। वेदाध्ययनेन विप्रत्वं लभते, तथा ब्रह्मणः साक्षात्कारेण तस्मिन् ब्राह्मणस्थितिर्जायते[१]।

सामाजिकविशेषाधिकारस्तथाधिकारोऽपि संस्कारैः सार्द्धं सम्बद्ध आसीत्। उपनयनसंस्कारः समाजे सामाजिकधार्मिकसाहित्ये च प्रवेशार्थं प्रवेशपत्रमिवास्ते[२]। छात्रजीवनस्य समाप्तौ गृहस्थाश्रमप्रवेशाय समावर्तनसंस्कारस्यानुष्ठानमावश्यकमासीत्। वैदिकमन्त्रैः कृतोपनयनेन विवाहसंस्कारेण च सर्वप्रकारकयज्ञानुष्ठानकरणस्य समाजे स्वोन्नयनस्य चाधिकारप्राप्तिर्भवति स्म।

संस्काराणामन्यत्प्रयोजनमासीत्स्वर्गप्राप्तिर्मोक्षलाभश्च[३]। यदा दीर्घसत्राणां परम्परा व्यपगताऽभवत् तदा मात्रदेवाराधनं तथा सामान्ययजनमेव स्वर्गप्राप्तेरमोघसाधनत्वमलभत[४]। संस्कारा अपि ये पूर्वं गृह्यकृत्या आसन्, तेऽपि गतवन्तोऽत्यधिकमहत्त्वम्[५]। हारीतमतानुसारेण ब्राह्मसंस्कारैः संस्कृतो व्यक्तिः ऋषिस्थितिं लब्ध्वा ऋषिरिव भवति तथा ऋषेः सामीप्ये निवसति। एवं दैवसंस्कारैः संस्कृतो व्यक्तिस्तु देवस्थितिं प्राप्नोति। यतो हि मोक्षो जीवनस्य चरमोद्देश्यतां रक्षतीति मानितम्। अतः संस्कारा अपि मोक्षप्राप्तेः साधनभूता इति सर्वैरेव ज्ञातम्। शङ्खः स्वाभिमतं प्रकटयति यत् संस्कार-संस्कृतोऽष्टात्मगुणैर्युक्तो व्यक्तिर्ब्रह्मलोकं गत्वा ब्रह्मलोकं ब्रह्मपदमाप्नोति। यतः कदापि पुनर्मृत्युलोके मा परावर्तेत[६]।

**नैतिकप्रयोजनम्**

कालक्रमेण संस्काराणां भौतिकस्वरूपेण नैतिकपार्श्वः प्रस्फुटितोऽभवत्। चत्वारिंशत्संस्काराणां परिगणनानन्तरं गौतमोऽष्टानां गुणानामुल्लेखमुपस्थापयति। ते गुणा एते सन्ति— दया, क्षमा, अनसूया, शौचः, शमः, उचितव्यवहारः,

---

१. जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते। इत्यादि।

२. अशूद्राणामदुष्टकर्मणामुपनयनम्। (आप.ध.सू. १।१।१६)

३. न हि कर्मभिरेव केवलैर्ब्रह्मत्वप्राप्तिः। प्रज्ञानकर्मसमुच्चयात् किल मोक्षः। एतैस्तु संस्कृत आत्मनोपासनास्वधिक्रियते। (म.स्मृ. २।२८ उपरि मेधातिथिः)

४. स्वर्गकामो यजेत। (पूर्वमीमांसा)

५. वी.मि., सं.भा. १ पृ. १३९ तः उद्धृतः।

६. संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः। नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्राह्मलौकिकः। ब्राह्मं पदमवाप्नोति यस्मात्र च्यवते पुनः।। (वी.मि., सं.भा.१, पृ.१४२ तः उद्धृतः)

निरीहता, निर्लोभता च[१]। सोऽग्रे समीरयति यद् व्यक्तिविशेषः कश्चित् चत्वारिंशत्संस्काराणामनुष्ठानं कृतवान् किन्तु तस्मिन् यदि उक्तगुणा विद्यमाना न सन्ति, तदासौ ब्रह्मणः सान्निध्यं न प्राप्तुमर्हति। यथा यो व्यक्तिः केवलं कतिपयानामेव संस्काराणामनुष्ठानं कृतवान्, तथा योऽष्टगुणैः सुशोभितो वर्तते स वैकुण्ठे ब्रह्मणः सान्निध्यं प्राप्नोति[२]।

किन्तु संस्काराणां स्वस्मिन्नोद्देश्यं कदापि मन्यते स्म। तेन पुष्पितः फलितो भूत्वा नैतिकसद्गुणानां रूपे परिपक्वो भवितुमपेक्षां चक्रे। संस्काराणां जीवनस्य प्रत्येकसोपानाय व्यवहारस्य नियमो निर्धारितो बभूव। यथा— गर्भिणीधर्मः, अनुपनीतधर्मः, ब्रह्मचारिधर्मः, स्नातकधर्मादिः[३]। तस्मिन्ननेका वार्ता धार्मिका-स्तथान्धविश्वासपूर्णाः सन्त्यसंशयमिदम्। किन्तु व्यक्तेर्नैतिकविकासस्य प्रयत्नोऽपि प्रत्यक्षमस्ति संस्कारैरेव। संस्काराणां स्वरूपमिदं निश्चयेन संस्कारैः प्राप्यमाण-वैयक्तिकहितानामपेक्षयोच्चतरनैतिकप्रगतिं सूचयति।

### व्यक्तित्वनिर्माणं विकासश्च

हिन्दूनां प्राचीनधार्मिककृत्येभ्यः संस्कारेभ्यश्च यस्य सांस्कृतिकप्रयोजनस्य समुद्भवोऽभवत्, स आसीद् व्यक्तित्वस्य निर्माणं तथा विकासः। अङ्गिरा चित्रकर्मणा संस्काराणां तुलनां कुर्वन् प्रणिगदति यद् येन प्रकारेण चित्रकर्मणि साफल्यमवाप्तुं विविधरञ्जनविशेषाः अपेक्षिता भवन्ति, तेनैव प्रकारेण ब्राह्मण्यधर्मः चरित्रनिर्माणमपि विभिन्नसंस्कारैर्जायते[४]। हिन्दूसमाजशास्त्रिणो जनस्य सहजगत्या विकासार्थं परित्यागापेक्षया विवेकपूर्वकं वैयक्तिकचारित्र्यनिर्माण-स्यावश्यकतामनुभूतवन्तः। तथास्य प्रयोजनस्य सिद्ध्यै समाजे पूर्वत एव प्रचलतां संस्काराणामुपयोगं कृतवन्तः।

संस्कारा जीवनस्य प्रतिभागं व्याप्ताः सन्ति। नैतावदेव, संस्कारद्वारा मृत्योः पश्चाद् व्यक्तिमात्मसिद्धान्तेन प्रभावितुं प्रयासमपि कुरुते। एते संस्कारा एवंरूपेण व्यवस्थिता कृतवन्तो यज्जीवनस्यारम्भत एव व्यक्तिस्तत्प्रभावमागच्छति। संस्काराः मार्गदर्शनस्य कार्यं कृतवन्तः। ये आयुष्यवृद्ध्या सहैव व्यक्तिजीवनमेकां निर्दिष्टां

१. गौ.ध.सू. २४।
२. वी.मि., सं. ८।२५।
३. गर्भिणीधर्माः, ब्रह्मचारिधर्माः, स्नातकधर्मादिः।
४. चित्रकर्म यथाऽनेकै रङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकम्।।
(वी.मि., सं.भा. १, पृ. १३९ तः उद्धृतः)

दिशमानयन्ति। फलत एकेनार्येणानुशासितजीवनव्यतीतकरणमावश्यकमासीत्। तथा तच्छक्तिः सुनियोजिता सोद्देश्यधारायां प्रवहमाना भवति स्म। एवं प्रकारेण गर्भाधानसंस्कारं तस्मिन्समये कुर्वन्ति स्म, यस्मिन् काले दम्पतिः शारीरिकदृष्ट्या पूर्णतः स्वस्थस्तथा मिथो हार्दिकीं वार्तां जानाति स्म। अथ च द्वयोरपि सन्तानप्राप्तेर्वेगवतीच्छा विद्यमाना भवति स्म। तस्मिन्नवसरे द्वयोः सम्पूर्णविवेका गर्भाधानकर्मणि केन्द्रिता भवन्ति स्म, तथा होमेन समयानुकूलवैदिकमन्त्रोच्चारणेन शुद्धं हितकरं वातावरणं प्रास्तौत। स्त्री यदा गर्भधारणं कृतवती, तदा तां दूषितेभ्यः शारीरिकमानसिकप्रभावेभ्योऽरक्षत्, तथानुशासितामकरोत्, यद् यस्य प्रकाशसौन्दर्यं गर्भस्थशिशोरुपर्यापतेत्[1]।

बालकस्य जाते जनने आयुष्यकृत्यानां प्रज्ञाजननकृत्यानामप्यनुष्ठानं कृतं भवति। नवजातशिशवे अश्मावत्सुदृढीभवितुमाशीर्वादं ददाति स्म[2]। शैशवे प्रत्येकावसरे आशापूर्णजीवनस्य प्रतीकभूतमानन्दोत्सवं रचयति स्म। तथैवं रूपेण शिशुविकासस्योपयुक्तवातावरणं प्रस्तुतोऽभवत्। चूडाकरणस्य मुण्डनसंस्कारस्य वा पश्चाद् यदा शिशुर्बालकत्वमगमत्, तदा ग्रन्थं विनैव तस्याध्ययनस्य विद्यालयस्य च कठिननियन्त्रण एव तत्कर्त्तव्यपरिचयं तथोत्तरदायित्वपरिचयमपि तं कारयति स्म। उपनयनसंस्कारस्तथा शिक्षासंस्कारस्तस्मै एतादृशसांस्कृतिकधमनयन्त्रस्य कार्यं सम्पादयन्नासीद् यस्मिन् यन्त्रविशेषे बालकस्येच्छा द्रवीभूताः संकृत्याभीष्ट-निर्माणयन्त्रेऽपातयत्। अनन्तरमनुशासितं किन्तु प्रगतिशीलं परिष्कृतञ्च जीवनं यापयितुं तमुद्यतीकरणमकार्षीत्। समावर्तनानन्तरं व्यक्तिः गार्हस्थ्यजीवने प्रविशति स्म। विवाहस्य व्यवस्थेयं मानवसभ्यताया विकसितस्वरूपमासीत्। एवं पाणिग्रहणसंस्कारो विवाहितदम्पतेर्भाविजीवनस्य मार्गदर्शनार्थं करिष्यमाण-धर्मोपदेश आसीत्।

गृहस्थाय यद्-यद् विविधयज्ञव्रतानां विधानं कृतमासीत्, तत्प्रयोजनं स्वार्थपरतां दूरीकृत्य तस्मै अनुभवकरणाय प्रेरणादानमासीद् यदसौ सम्पूर्णसमाजस्यैकाङ्गो वर्तते। पूर्ववर्तिसंस्काराणां मानसिकप्रभावेण व्यक्तये मृत्युसंघर्षकरणं सहजतामुपैति स्म, तथानेन जीवनस्यान्यपार्श्वयात्रायां तं सान्त्वनां सहायतां याति स्म। असंशयं, संस्कारेषु एवंविधिविधानमस्ति यस्योपयोगिता विश्वासमात्रेऽवलम्बितास्ति। किन्तु संस्काराणां मूले निहितसांस्कृतिकोद्देश्यस्य

१. मत्स्यपुराणे, वीरमित्रोदयः, भा. १, पृ. १८० तः उद्धृतः।
२. आप. गृ.सू. १४, पा.गृ.सू. १।१६, जै.गृ. सू. १।८।

माध्यमेन व्यक्तौ पतिष्यमाणप्रभावं कोऽप्यस्वीकर्तुं नासमर्थः। यद्यपि कस्याञ्चित्पूर्ण-वैज्ञानिकविचारणायां वा सुव्यवस्थितयोजनायां तद्गणना न भवेत्।

संस्काराणामनिवार्यकरणे हिन्दूसमाजशास्त्रिणामुद्देश्यं संस्कृतिदृष्ट्या चरित्र-दृष्ट्या च समाजस्यैकरूपविकासकरणं तथा तं समानादर्शेनानुप्राणितकरणमासीत्। एतस्मिन् प्रयासे ते बहुदूरं फलवन्त आसन्। हिन्दूः स्वव्यापकपृष्ठभूमिकया सह एका विशिष्टसांस्कृतिकजातिर्विद्यते। अनेका विदेशिजातयो हिन्दूसम्पर्के आगतवत्यस्ता हिन्दूसांस्कृतिकजातीः स्वव्यापकसंस्कृत्या प्रभाविता अकरोत्, तथा स्वस्मिन्नन्तर्लीनं कृतवती। अद्यापि हिन्दुत्वमेकराष्ट्ररूपे जीवितमस्ति।

## आध्यात्मिकमहत्त्वम्

आध्यात्मिकता हिन्दुत्वस्य प्रमुखविशेषता वर्तते। एवं हिन्दूधर्मस्य प्रतियुगं तया घनिष्ठरूपेण सम्बद्धमस्ति। हिन्दूनामेतत्सामान्यदृष्टिकोणः संस्कारानपि अध्यात्मसाधनारूपे परिणतानकरोत्। संस्काराणामाध्यात्मिकमहत्त्वस्य व्याख्या-करणं तथा लिपिबद्धकरणञ्च महत्कठिनकार्यमस्ति। अयन्तु तेषामनुभवो ये संस्कारैः संस्कृता अभवन्। हिन्दूनां कृते प्रत्यक्षाङ्गोपाङ्गानामपेक्षया तेषामधिकतर-महत्त्वमस्ति। तेषां विचारे ते संस्काराः संस्कार्यव्यक्तेरान्तरिकतत्त्वानां तथाध्यात्मिकतत्त्वानां बाह्यप्रतीका आसन्। तेषां दृष्टिः संस्काराणां बाह्यविधिविधानतो बहुदूरं विलसति, तथा ते ह्येतादृशमनुभवन्ति यत् किमप्यदृश्यवस्तु तेषां समस्तव्यक्तित्वं पवित्रयति। एवंरूपेण संस्कारा हिन्दूनां कृते सजीवधार्मिकानुभवा आसन्, न बाह्योपचारमात्रम्।

संस्कारा जीवनस्यात्मवादिनीनां भौतिकीनाञ्च धारणानामाभ्यन्तरे मध्य-मार्गस्य कार्यं कुर्वते स्म। पूर्वमतानुयायिनः (आत्मवादिमतानुयायिनः) आत्मनोऽर्चां तथा शरीरावहेलनां कुर्वन्ति। ते पञ्चतत्त्वमयसंसारस्य सारविहीनवस्तुशरीरमिति मन्यन्ते[१]। अपरञ्च भौतिकवादिनः शरीरात्परं किमपि वस्तुविशेषं नावलोकयन्ति। तेषां दृष्टौ शरीराद्भिन्नवस्त्वन्यत् किमपि परत्वेन नायाति। ते विशिष्टजीवन-स्याध्यात्मिकीं चर्चां नाङ्गीकुर्वन्ति। फलतस्ते आत्मशान्त्या परमानन्देन च वञ्चिता भवन्ति[२]। प्रथमतः शरीरमनुपेक्षणीयं बहुमूल्यवद्वस्तुकरणमन्यतो दिशः शरीरपरिष्कृतकरणं संस्काराणां महनीयं कार्यमासीद् येन पवित्रमार्गेण तदात्मनः सुन्दरं पवित्रञ्च मन्दिरं भवेत्तथाध्यात्मिकविकासस्योचितमाध्यमोऽपि स्यात्।

---

१. जैनमतावलम्बिनः, बौद्धास्तथा नव्यवेदान्तिनः।

२. चार्वाकास्तथा वाममार्गिणः।

संस्काराः प्रकारेणैकेनाध्यात्मिकशिक्षायाः क्रमिकसोपानानां कार्यं कुर्वन्ति। संस्कारसंस्कृतो व्यक्तिरकार्षीदनुभवमिमं यत्सम्पूर्णं जीवनं वास्तविक-संस्कारमयमस्ति। तथा सर्वा दैहिकक्रिया आध्यात्मिकध्येयेनानुप्राणिताः सन्ति। अयमेवैको मार्ग आसीद् येन क्रियाशीलसंसारिकजीवनस्य समन्वय-माध्यात्मिकतत्त्वैः स्थापितं कुर्वन्ति स्म। जीवनस्यैतत्पद्धतौ शरीरं देहकार्यञ्च बाधकं न वर्तते, पूर्णताप्राप्तौ सहायकं भवितुमर्हति। एतत्संस्काराणामनुष्ठानेन हिन्दूनां सामान्यजीवनं यदन्यथा काले काले भविष्यमाणानुष्ठानैर्विना पूर्णतो भौतिकं भवति स्म। एको विशालसंस्कार एव जातः। एवंरूपेण हिन्दूनामयं विश्वास आसीद् यत् सविधिसंस्काराणामनुष्ठानैस्ते दैहिकबन्धनान्मुक्ता भूत्वा मृत्युसागरस्य पारं गमिष्यन्ति। यजुर्वेदानुसारं यो व्यक्तिः विद्याविद्ये जानाति, स अविद्यातो मृत्युं पारयित्वा विद्ययाऽमरत्वं प्राप्नोति[१]।

**संस्काराणां विभिन्नावस्थाः**

स्वैतत्प्रयोजनात्मकारणैर्हिन्दूसंस्कारा हिन्दूनां जीवनस्यानिवार्याङ्गत्वं गता आसन्। तथा हिन्दवः संस्कारभाषायामशोचन्तो व्यवहरन्ति स्म। स्वसर्जनकाले संस्कारा जीवनं प्रति याथार्थ्यं लब्धवन्तः। ते समृद्धयः सजीवसंस्थाश्चासन्[२]। प्रत्येकवैदिकपरिवाराः संस्काराणामनुष्ठानं स्व-स्वपद्धत्या कुर्वन्त आसन्। यदा संस्कारान् नियमितान् व्यवस्थितांश्च .कृतवन्तस्तदा वैदिकाधारे तेषां वर्गीकरणमपि सम्पादितवन्तः। अवसरेऽस्मिन् सर्जनकालः परिसमाप्तिं गच्छन्नासीत्। प्रत्येक-वार्ताया अन्तिमरूपेण निश्चितं कर्तुं सप्रयासा बभूवुः। संस्काराणां विभिन्नविवेचनसम्बन्धे विवादविकल्पयोः प्राप्तिर्जायते। सूक्ष्मतमां वार्तां सुनिश्चितां कृतवन्तस्तथाधुना तदुल्लङ्घनं न वाञ्छनीयम्। अधुनापि परिवर्तनं संस्कारे सम्भव-मासीत्। हिन्दूमस्तिष्का नेदानीन्तना इव निष्क्रिया बभूवुः। सम्प्रत्येव हिन्दूनां धार्मिकजीवनस्य तृतीयो युगः समायातः। तेषां हृदये धारणाः प्रविष्टा बभूवुर्यद्धिन्दूनां शक्तिह्रासोऽभवत्। ते कस्यापि नव्यवस्तुनो रचनां कर्तुं नार्हन्ति। तेषां कार्यञ्च प्राचीनानां सङ्कलनं संरक्षणमात्रञ्चास्ति। संस्काराणां विषये लघुदीर्घभेदमपि पापं मेनिरे। तेऽनुभवं चक्रिरे यत् संस्कारेषु न्यूनाधिकपरिवर्त्तनमपि कर्तुं नार्हन्ति न प्राचीनमहर्षिभिरविहितशब्दोच्चारणेऽपि समर्था भवन्ति। अन्यापि

---

१. विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते।।

(यजु. ४०।११)

२. अनेनैव कारणेन संस्काराणां सम्बन्धे गृह्यसूत्रे विभेदो दृश्यते।

विषमा समस्या तदानीं समुत्पन्ना यदा मन्त्राणां विधिविधानानाञ्च भाषा बोधगम्या नाभवत्। अयं स युग आसीद् यदा संस्काराणां सत्यात्मा प्रायशो लुप्त आसीत्। तदन्धानुयायिनां कृते तद्ध्वंसावशेष एवावशिष्टमासीत्। अधुना देश-कालस्य विशिष्टावश्यकतानुरूपान् संस्कारान् व्यवस्थितान् परिष्कृतांश्च कर्तुमसमर्थत्वं गताः। एवंरूपेण संस्काराः सम्प्रति निष्प्रयोजना निर्जीवाश्चाभवन्।

आधुनिके युगे नवजागरणसमये संस्काराणां पुनरुत्थानस्य परिष्कारस्य च सुधारकसंस्थाः प्रयत्नं कृतवत्यः। अस्यां दिशायां सनातनधर्मसभायाः, आर्यसमाजस्य, ब्राह्मसमाजादेरपि नामोल्लेख्यमस्तीति।

●

# भारतीयजनजीवने संस्कृतसंस्कारयो-स्सार्वजनीना स्थितिः

**डॉ. व्यासमिश्रः**
अध्यक्षः, धर्मशास्त्रविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

तत्र संस्कृतभाषा भारतस्यैको महत्तमशेवधिनिधिरस्ति। सभ्यताया उषः-कालादारभ्येयमस्माकं जातीयजनजीवनेऽपरिमितं प्रभावं समुद्युङ्क्ते। सशक्तस्वरेणेदं वक्तुं पार्यते यदिदानीमपि संस्कृतं ग्रीकापेक्षया लैटिनापेक्षया च जनजीवनेऽधिकं जीवातुरस्ति।

अस्माकं वेदानामुपनिषदां रामायणमहाभारतयोः, गीतायाः, भागवतस्य चाभारतं परिस्पन्दनं विद्यते। अस्माकं देवालयेषु तीर्थेषु चोपासनाविधिः संस्कृतमनुरुद्ध्यैव विश्वस्मिन् भारते प्रचलति। वेदमूलकं समग्रं धार्मिकं सांस्कृतिकं च कृत्यजातं तु संस्कृते प्रवर्तत एव। जैनानां भूयांसो ग्रन्था संस्कृत एवोपनिबद्धाः। यदा पाल्याः प्राकृतस्य च भाषासारस्यमवसितं जातम्, तदा बौद्धा अपि संस्कृत एव स्वग्रन्थरत्नानि व्यरचयन्। ज्योतिषशास्त्रायुर्वेदशास्त्रञ्चाधुनापि भारतीयान् सुभगतामारोग्यतां च नयतः, तदेव शास्त्रद्वयं सम्माननीयां जीवनवृत्तिमपि निर्वोढुं प्रभु.। रामायणकाले महाभारतकाले च संस्कृतं साधारणजनजीवनेऽपि वाग्व्यवहारं सञ्चालयति स्म। अलीकमेतद् यत् संस्कृतभाषा केवलं ग्रन्थे, पठनपाठने च वर्तमानाऽऽसीत्, महाप्राणवान् मारुतिः अशोकवाटिकायां सीतया सार्द्धं वार्तायै बहु विविच्य संस्कृतमेव निश्चिनोति— 'वाचं चोदाहरिष्यामि मानुषीमिहं संस्कृताम्'। ईसवीतः सप्तशतकपूर्वं यास्को वैदिकसंस्कृतेतरमस्माकं ललितसंस्कृतवाङ्मयं शिवेतरक्षतिं साधयति, सामान्यजने विद्वद्वर्गे च व्यवहारपरिज्ञानं संशोधयति, कान्तासम्मितोपदेशं सृजति, सामाजिके

स्वप्रकाशानन्दसंविद्विश्रान्तिञ्चोत्पादयतीति नास्ति संशयलेशावकाशः। संस्कृतां भाषेति समाख्यां ददौ येन सूच्यते यत् लौकिकं संस्कृतं तदापि जनभाषासीत्। अधीतिबोधाचरणप्रचारणैः संस्कृतं सर्वेषु वर्णेषु पुरा प्रचारमाससाद, न केवलं ब्राह्मणेषु ब्राह्मीभूतासीत्। पातञ्जलमहाभाष्ये सूतशब्दव्युत्पत्तिविषये सूतवैयाकरणयोर्विवादं निर्दिशति सूतो वैयाकरणं निर्भर्त्सयन्नाह— 'प्राप्तिज्ञो देवानां प्रियः, न त्विष्टिज्ञः, इष्यते एतद्रूपम्'-(महाभाष्ये २।४।५६)। विश्वसंस्कृतेराधारशिला संस्कृतवाङ्मय एव सुचिरेति निश्चप्रचम्। ज्ञानविज्ञानकलासंस्कृतदर्शनकामशास्त्रार्थशास्त्रसूक्तिनीतिराजनीतिनानापुराणनिगमागमादिकविषये यावद्विपुलं वाङ्मयं संस्कृते सन्तनुते, तावन्न कस्यामपि भाषायाम्।

भारोपीयपरिवारे संस्कृतभाषैव भाषाविज्ञानं विपुलयति। भाषाविज्ञानमूलिकां सर्वामपि आवश्यकतां संस्कृतमेव सम्पूरयति। अत एव विंटरनित्समहानुभावः संस्कृभाषाया भाषाविज्ञानस्यापूर्वां भूमिकां स्वीकरोति। यदि सम्पूर्णभारते भावात्मकमैक्यमखण्डं राष्ट्रं च सापेक्षमस्ति, सर्वतो भयावहं भेदवादं च उच्छेत्तुमपरिहार्यमस्ति तदा संस्कृतमन्तरा नान्यो मार्गः।

अस्माकं षोडशसंस्काराणाममूल्यं निधानं संस्कृत एवोपनिबद्धमस्ति। संस्काराः कस्मिंश्चिदपि वस्तुन्युत्कर्षाधायकाः शोभाधायका माङ्गल्यसाधकाश्चेति कस्याविदितं विद्याविद्योतितान्तःकरणस्य सचेतसो मानवस्य। एतैश्च षोडशसंख्याकैः संस्कारैः संस्कृता मानवा षोडशकलत्वं प्राप्य स्वाभिख्यां चरितार्थयन्ति। बीजसंस्काराभ्यां जातोत्पत्तिकत्वादेव मानवा द्विजा इति कथ्यन्ते। अत एव द्वाभ्यां जायत इति व्युत्पत्तिर्भवति।

संस्कारा एव भारतीयां संस्कृतिमन्याभ्यः संस्कृतिभ्यो विशदयन्ति। संस्काराणां प्रभावेणैव मृत्पिण्डमयो मनुष्यो अनर्घो प्राणात्मसंवलितो मणिरिव भास्वरायते। अत एवोक्तं मनुना—

> गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।
> बैजिकं गार्भिकं वैनो द्विजानामपमृज्यते।।
> स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।
> महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।।

भारतीये धर्मशास्त्रे बहुविधचिन्तने च क्वापि साभिनिवेशं वैषम्यं नास्ति। 'धर्मस्य तत्त्वं निहितं गुहायामि'ति तत्त्वं पुरस्कृत्य विविच्यताम्। न क्वापि

शास्त्रकाराणामुच्चावचात्मिका विषया दृष्टिर्मानवीयसमाजाभ्यन्तरे विद्यते। उक्तं च मनुना—

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्।। (मनु. २।६६)

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः। अत एवानन्तकोटिब्रह्माण्डनायकेन श्रीकृष्णचन्द्रेणोक्तं गीतायाम्—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।

वेदेऽप्युक्तम्—

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रोऽजायत।।

परमप्रह्मणः सर्वाण्यङ्गानि समानानि— तेभ्य उत्पन्नाः सर्वे मानवा अपि समाना एव। भारतीयदर्शने च सर्वे जीवाः सनातना एव। अत एव भगवान् सन्देहलेशावकाशमपि परिहरन्नाह— 'ममैवांशो जीवलोके जीवभूतः सनातनः'। समाजसंव्यूहनायैव सर्ववर्णानां योग्यतां कर्तव्यञ्चापि निर्णीतमासीदिति समाजशास्त्रिणः कथयन्ति। संस्कारैरात्मानं योग्यं विधातुं मानवः स्वशरीरं शोधयति। सर्वेषां वर्णानां संस्कार्यत्वं विद्यते। ब्राह्मणक्षत्रियविशां समन्त्रकं संस्कार्यत्वम्[1], स्त्रीशूद्राणाञ्चामन्त्रकं संस्कार्यत्वम्। संस्काररत्नमालायामुक्तम् यथोक्तं— 'शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः'।।

स्त्रीणां वैवाहिको विधिः समन्त्रक एव भवति, न चात्र संशयारूढो भवेत् कश्चिद् यदमन्त्रकत्वात् स्त्रीशूद्रसंस्काराणाम्। तेषां शरीरादिशुद्धिर्नास्ति, अत्र शास्त्रमेव प्रमाणम्। एतेषां शास्त्रमन्त्रकमेव संस्कारमभिधत्ते येन साफल्यमपि भवति। असति विशेषानुशासने 'एवमेनः शमं याति बीजगर्भसमुद्भवम्' इति याज्ञवल्क्यवचनमपि प्रमाणमस्ति।

यद्यपि मनुना 'बैजिकं मार्मिकं चैनो द्विजानामपमृज्यते' इति द्विजानामुक्तम्; परन्त्वद्विजानामिति पदमुपलक्षणमस्ति, अतो द्विजपदं स्त्रीशूद्रादीनामपि

---

१. उक्तं च मनुना— अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्।।
वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।। (मनु. २।६६)

सूचकमस्तीति शास्त्रकाराः कथयन्ति[१]। अतः समन्त्रकस्तु संस्कारोऽमन्त्रको वा फलं तु यथाशास्त्रं सर्वेषामपि भवत्येव।

स्वाश्रयस्य प्रागुद्भूतावस्थासमानावस्थान्तरोत्पादकोऽतीन्द्रियो धर्मः संस्कार इति शास्त्रनिष्णाताः कथयन्ति। योगिनां दृष्टौ न केवलं मानससङ्कल्पेन विचारेण वा संस्कारा उत्पद्यन्ते, अपि तु देहेन्द्रिय-मनोबुद्ध्यहङ्कारादीनामपि समेषां सङ्घर्षेण चेष्टाभिः व्यापारेण वा संस्कारा उत्पद्यन्ते, संस्कारेण आत्मा अन्तःकरणं वा शुद्ध्यति। अत एव संस्कारेषूत्तमनिकृष्टसंस्काराणां गणना भवति। षोडशसंस्कारैरष्टचत्वारिंशत्संस्कारैर्वा आत्मानं विशोधयेद् अन्तःकरणं वा विशोधयेत्। अत एवोक्तम्— यस्यैते अष्टचत्वारिंशत् संस्कारा भवन्ति, स ब्राह्मणः सायुज्यं सालोक्यं प्राप्नोति। अत एव सम्यक् संस्कारमेव संस्कृतिं कथयेत्। सम इत्यस्यावृत्तिं विधाय सम्यक् संस्कार एव संस्कृतिरिति जानीयात्।

संस्कारसंख्याविषये विदुषां नैकमतमस्ति— आश्वलायनगृह्यसूत्रे एकादश-संस्काराः कथिताः। पारस्करगृह्यसूत्रे त्रयोदशसंस्कारा वर्णिताः। वैखानस-गृह्यसूत्रेऽष्टादशसंस्काराः कथिताः। गौतमधर्मसूत्रे चत्वारिंशत् संस्कारा निर्दिष्टाः।

समुपसर्गविशिष्टात् कृधातोर्घञ्प्रत्यये सति 'सम्परिभ्यां करोतौ भूषणे', 'समवाये चे'ति पाणिनिव्याकरणबलेन सुडागमे सति संस्कारशब्दो निष्पद्यते। उक्तसूत्रद्वयप्रामाण्याद् यद्यपि भूषणं समवाय इति द्वावर्थौ पाणिनिसम्मतौ, तथापि 'संस्कृतं भक्षा' इति पाणिनिनैवोक्तत्वाद् भूषणसमवायाभ्यां भिन्नोऽप्यर्थो लभ्यते। काशिकावृत्तौ तु संस्कारशब्दस्योत्कर्षाधानो गुणाधान इति शब्दार्थः कृतः। काव्यग्रन्थेऽपि संस्कारशब्दस्य शिष्टानुमोदिता अर्था उपलभ्यन्ते। धर्मशास्त्रे तु संस्कारशब्दस्य शुद्धिरेवार्थो गृहीतः।

मनुस्मृतावुक्तम्—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च।

मीमांसाशास्त्रे तु संस्कारः कर्मजन्यो विशेषः संस्कार्यो वस्तुनिष्ठः।

---

१. शास्त्रदृष्ट्यैव संस्काराणां महत्त्वमिति शास्त्रमेव स्त्रीशूद्रादीनाम् अमन्त्रकं संस्कार्यत्वम् उद्घोषयति, अतः 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' इति नयेन सर्वेषां वर्णानां यथाशास्त्रं संस्काराणां महत्त्वं निर्विवादमस्ति।

प्रकृतमनुसरामः— येन धर्मशास्त्रानुमोदित एवार्थोऽस्माभिरुरीक्रियते। यद्यपि संस्काराणां बह्व्यः संख्याः निरूपिताः विभिन्नेषु गृह्यसूत्रेषु परस्परं विभिन्नाः संख्याः कथिताः; परन्तु एतेषां मध्ये षोडशैव संस्काराः सर्वत्र प्रसिद्धा व्यवहारपथमायान्ति[१]।

त इमे षोडशसंस्काराः—१. गर्भाधानम्, २. पुंसवनम्, ३. सीमन्तोन्नयनम्, ४. जातकर्म, ५. नामकरणम्, ६. निष्क्रमणम्, ७. अन्नप्राशनम्, ८. चूणाकरणम्, ९. कर्णवेधः, १०. विद्यारम्भः, ११. उपनयनम्, १२. वेदारम्भः, १३. केशान्तः, १४. समावर्तनम्, १५. विवाहः, १६. अन्त्येष्टिः।

**गर्भाधानसंस्कारः**

पितृणामृणापकरणाय पुत्रोत्पादनमावश्यकमिति। ऋग्वेदे स्पष्टमेव सहवासचर्चा समुपलभ्यते। अथर्ववेदेऽपि गर्भाधानविषयकः प्रसङ्गो विद्यते। परन्तु गृह्यसूत्राणां काले तु गर्भाधानादिसंस्कारस्य स्पष्टमेव स्वरूपं विद्यते। ऋतुकालश्च षोडशरात्रय एव, तासु रात्रिषु युग्मायामयुग्मायां रात्रौ—इति सर्वं विशदं सङ्कीर्तितम्। अस्मिन् विषये ऋतावेव गन्तव्यमिति परिसंख्यात्वेन निश्चितम्। केचन परिसंख्यां विहाय नियममेव स्वीकुर्वन्ति। गर्भाधानविषये शास्त्रे तिथयो निश्चिताः शुभदिनान्यपि निश्चितानि नक्षत्राणि चापि।

**पुंसवनम्**

गर्भाधानानन्तरकालिकं कर्म पुंसवनं कथ्यते[२]। ऋग्वेदेऽथर्ववेदे च पुंसवनस्य निर्देशो मिलति। विभिन्नासु स्मृतिषु अन्यान्यधर्मशास्त्रग्रन्थेषु पुंसवनस्य विधिविधानं वर्णितम्। जिज्ञासुना तत्र तत एव विशदं ज्ञातव्यमिति।

**सीमन्तोन्नयनम्**

सीमन्तस्योन्नयनं यत्र संस्कारे क्रियते, तत् सीमन्तोन्नयनम्[३]। सामवेदेऽस्य संस्कारस्य शिशोर्दीर्घायुष्करत्वमुक्तम्। गृह्यसूत्रे तु बहुविविच्योक्तं विषयेऽस्मिन्।

---

१. जातुकर्ण्यस्तु षोडशसंस्कारानाचष्टे। हारीतेनापि षोडशसंस्कारा ब्राह्मसंस्कारा उक्ताः।

२. पुंस्वरूपापादकः संस्कारविशेषः पुंसवनमिति।

३. प्रथमे गर्भे राक्षस्यः पिशाचिन्यश्च गर्भिण्या रुधिरं पातुमाक्रमन्ते ताभ्यस्त्राणार्थमयं संस्कारः क्रियते।

**जातकर्म**

जातस्य कर्म संस्कारो जातकर्म इत्युच्यते; परन्तु समापतितामापत्तिं दृष्ट्वा जाते कर्म इति व्युत्पत्तिरेव गरीयसी। याज्ञवल्क्यस्मृतौ मिताक्षरायाम्— 'यद्वा एते आ इते आगते गर्भकोशाज्जाते कुमारे जातकर्म' इत्युपन्यस्तम्। अयं संस्कारः सुखप्रसवार्थं क्रियते। अयं संस्कारः प्राङ् नाभिकर्त्तनात् क्रियत इति बहवः धर्मनिर्णायकाः कथयन्ति। अस्मिन् कर्मणि मन्त्रपूर्वकं हिरण्यमधुसर्पिषां प्राशनं मुख्यं कृत्यमस्ति। शिशोः कर्णे दीर्घायुष्यमूलकमन्त्राणां जपोऽपि क्रियते।

**नामकरणम्**

सर्वोऽपि व्यवहारो नाम्नैव प्रचलति, अतो नामकरणं व्यवहारनिर्वाहार्थमेव। प्रथमतः शतपथब्राह्मणे 'तस्मात्पुत्रस्य जातस्य नाम कुर्यादि'त्युक्तम्। कतमस्मिन्नहनि नामकरणं क्रियते? अत्र नैकमतमस्ति—

नामधेयं दशम्यान्तु द्वादश्यां वास्य कारयेत्।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते।। (मनुस्मृतिः-२।३०)

एतदतिरिक्तदिनान्यपि शास्त्रे कथितानि प्रयोगपारिजातानुसारिबृहस्पति-कथितानि सन्ति। दशमद्वादशयोर्ब्राह्मणस्य षोडशे क्षत्रियस्य विंशतौ वैश्यस्य द्वाविंशे च शूद्रस्य नामकर्म कर्तव्यमिति। अन्येऽपि विवेकवाक्यानि तत्र तत्र कथितानि—

१. घोषवदाद्यन्तरन्तःस्थमभिनिष्ठानान्तं द्व्यक्षरं वा। (आश्व.गृ.)

२. कृतं कुर्यान्न तद्धितम्। (पा.गृ.)
कृतं कुर्यान्न तद्धितम्। (पस्पशाह्निकम्)
परन्तु घोषवदाद्यपि न नियतम्।

**निष्क्रमणम्**

इदं च कर्म शिशोरायुर्विवर्द्धनम्। निष्क्रमणेन सूर्यदर्शनं चन्द्रदर्शनं कार्यमिति। निष्क्रमणे शुक्लपक्षः शुभः। प्रशस्तानि दिनानि नक्षत्राणि च शास्त्रे कथितानि।

**अन्नप्राशनम्**

अन्नस्य प्राशनं यस्मिन् कर्मणि तत्। जन्मतः षष्ठे, अष्टमे, दशमे, द्वादशे वा मासि अन्नप्राशनं विधेयम्।

अस्मिन् कृत्ये आभ्युदयिकं श्राद्धं तदनन्तरं प्राशनं प्रथमं मन्त्रेण परस्ताच्च पञ्चकृत्वस्तूष्णीमेव कार्यम्; परन्त्वस्मिन् कर्मणि स्वकुलाचार एव प्रमाणमिति।

**चूडाकरणम्**

चूडा शिखा तदर्थं कर्म चूडाकरणम्। अस्यैव नामान्तरं चौलमिति। इदं कर्म वैदिकयुगेऽपि प्रसिद्धमिति मन्यते, अथर्ववेदे, यजुर्वेदे च सम्यग् वर्णितम्। गृह्यसूत्रे स्मृतौ चायं संस्कारः साङ्गोपाङ्गो निरूपितः। इदं कर्म प्रथमे, तृतीये वा वर्षे कार्यमिति मनुः। कुलाचारानुसारमपि एतत् क्रियते।

एतत् कर्म शिखाधारणायैव प्रशस्तमस्ति। सर्वैर्वर्णैर्धार्यते शिखा। अयं संस्कारो धर्मशास्त्रानुसारं चिकित्साशास्त्रानुसारम् आर्यहिन्दुजातेः गौरवास्पदराष्ट्रिय-प्रतीकत्वेन च बहु सम्मतं सर्वैर्विवेकशालिभिः स्वीक्रियते। अतः शिखायुक्त एव भवेदार्यः।

**कर्णवेधः**

कर्णवेधस्य चर्चा अथर्ववेदसूक्ते दृश्यते, नान्यत्र क्वचिदप्यस्य चर्चास्ति स्मृतिग्रन्थमन्तरा। श्रुतिमूलकत्वात् स्मृतीनाम्, स्मृतौ च कर्णवेधवर्णनेति, अयं संस्कारः प्रशस्त एव। जन्मतः षष्ठे सप्तमे वा मासे शुक्ले पक्षे शिशो-र्मिष्टान्नभोजनानन्तरं कर्णवेधं कुर्यात्। अयमपि संस्कारः सार्ववर्णिक एवास्ति।

**अक्षरारम्भः (विद्यारम्भः)**

अयं संस्कारो नातिप्राचीनः, गृह्यसूत्रेष्वपि संस्कारस्यास्य नास्ति चर्चा; परन्तु कतिचिद् निबन्धग्रन्थेषु निर्णयसिन्धु-स्मृतिचन्द्रिकादिषु स्पष्टं सङ्कीर्तनमस्य विद्यते।

अयं संस्कारः शिशोर्जन्मतः पञ्चमे वर्षे कार्यः। विष्णुशयनात् पूर्वमेव समाचरणीयोऽयं संस्कारः। अयं संस्कारः शूद्रस्य स्त्रियाश्चाप्यमन्त्रकः कार्यः।

**उपनयनम्**

उपनयनकर्मणैव ब्राह्मणक्षत्रियवैश्या द्विजा इति कथ्यन्ते। अस्मिन्नेव कर्मणि द्विजेभ्यो सावित्रीदीक्षा दीयते।

उपनयनं वैदिकयुगादेव महनीयं प्रशस्तं च कर्मास्ति, आचार्यस्योपसमीपे आचार्यस्य उप = समीपे, नयनम् = उप नयनम्। मूलतः शिक्षैवोपनयनस्य परमं प्रयोजनमासीत्। यथोक्तम्—

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्यं च सन्ध्योपासनमेव च।।

इदं चोपनयनं वर्णत्रयाणामेव न तु शूद्रस्य।

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।

इति महाभारतेऽप्युक्तम्। स्त्रीणां तु विवाहमेवोपनयनं स्वीकुर्वन्ति धर्मशास्त्रकाराः; परन्तु कालान्तरे ब्रह्मवादिन्यो स्त्रियोऽभूवन् तासामुपनयनविधानं स्वीकृतम्। कूर्मपुराणेऽप्युक्तम्—

पुराकल्पे हि नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनं च वेदानां सावित्रीवाचनं तथा।।

इदमत्रावधेयम्— यथा स्त्रीणां कृते पुरोपनयनाधिकारो नासीत्। अन्येषामपि विवाहातिरिक्तसंस्काराणाममन्त्रकमेवाधिकार आसीत्, परन्तु कल्पान्तरे ब्रह्मवादिनीषु उपनयनाधिकारः प्राप्यते। विचारणीयमेतद् यत् शास्त्रेऽपि विशेषपरिस्थितौ परिवर्तनं कृतमृषिभिः। इत्थमेव भारते समग्रभारतीयहिन्दुजातौ समरसक्रियाव्यवहाराय वैषम्योच्छेदनाय च परस्परं राष्ट्रियबन्धुत्वस्य प्राशस्त्याय संस्काराणां समन्त्रकं व्यवस्था समेषां वर्णानां कृते यदि करणीया स्यात् तदाऽतीवसमीचीना स्याद् व्यवस्थेति[1]। शास्त्रनिष्णाता विद्वांसोऽत्र प्रमाणम्।

**वेदारम्भः**

वेदारम्भशब्देन स्पष्ट एव भवत्यस्यार्थः—

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
सङ्कल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते।।

इत्याचार्यः शिष्यं वेदाध्यापनं कारयति। वेदारम्भेण गुरुशिष्ययोः परम्परा प्रशस्यते। वेदोऽस्माकं शेवधिः श्रेयश्च। वेदः शब्दज्योतिः, तज्ज्योतिः सर्वेभ्यो हिन्दुभ्यः सम्मिलेदिति जनानामाकाङ्क्षा सम्प्रति बलवती दृश्यते समाजे। यदि सर्वे असूयका न भवेयुः, द्रोहिणो न भवेयुः, संयता भवेयुश्चेद् वेदविद्याऽपि सर्वैः प्राप्येति विचारो बहुलीक्रियते सम्प्रति।

---

१. भूयांसो जना कथयन्ति। तर्काश्रिता विवेकबुद्धिः सुपठितानामपि मनः प्रेरयति, यत् संस्कारेषु श्रद्धास्पदत्वं तदैवायास्यति सर्वेषु वर्णेषु यदा अभिन्नत्वं संस्काराणां स्यादिति।

**केशान्तः**

केशान्तस्यैव गोदानमित्यपि नामान्तरमस्ति, इदं च कर्म समावर्तनात्पूर्वमेव कर्तव्यमिति। अस्याङ्गभूतं गोदानमन्यदानञ्चेति।

**समावर्तनम्**

समावर्तनं नाम गुरुकुलादधीत्य गुरोराज्ञया स्वगृहागमनमिति। समावर्तनं गुरवे दक्षिणां दत्वैव कार्यम्। विद्यास्नातको भवत्यनेन समावर्तनकर्मणा। स्नातकस्य परमप्रतिष्ठास्पदत्वमस्ति।

**विवाहः**

समावर्त्तनोत्तरकालिकोऽयं संस्कारः। अयं संस्कारः सर्वेभ्योऽधिकां प्रख्यां प्राप्नोति सम्प्रत्यप्यन्येभ्यः संस्कारेभ्यः। विवाहानन्तरमेवान्येषामपि संस्काराणामवसर आयाति। विवाहोऽतिमहत्त्वपूर्णः संस्कारः। 'अपत्नीकोऽयज्ञियो वै पुरुषः' अपत्नीकस्य कर्मण्यनधिकारः। विवाहसंस्कारविषये बहु शास्त्रीयं विवेचनं लभ्यते— सर्वसुलभमपि विवाहपरिज्ञानमिति। अतो नेह प्रतन्यते।

**अन्त्येष्टिः**

मर्त्यानां मरणं ध्रुवम्। परन्तु षाट्कौशिकं शरीरं महदपवित्रभूतमत अत आवश्यकं यद् मृतशरीरस्यापि संस्कारेण शुद्धिः स्यादिति। अन्यच्च मृत-शरीरसम्बन्धिनः आत्मनः परलोकसाधनमपि पाञ्चभौतिकशरीरान्त्येष्टिकर्म। मृतसंस्कारेण जीवोऽमुं लोकं जयतीति शास्त्रे कथितम्। अतः 'गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः' इति धिया साधुकर्तव्यबुद्ध्याऽन्त्येष्टिसंस्कारोऽपि यथाशास्त्रं विधेयः।

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति श्रुत्युक्तपथा भारतीय-जनजीवने संस्कारस्यातीवप्रतिष्ठा वरीवर्ति— किमधिकं विज्ञेषु। अतः समासेनैव जनजीवने संस्कृतस्य संस्कारस्य च महत्त्वमदर्शि मया। शास्त्रं मणिकाञ्चन-समवेतत्वमियात् लोकजीवनेनेति ध्यायं ध्यायं संस्कृतस्य संस्कारस्य च समानमानत्वं प्रविशेत्सर्वेषु वर्णेषु सर्वासु स्त्रीषु चेति पुनः पुनः निवेदयतेऽयं जनो विद्यावदातनिर्मलशेमुषीकेषु विद्वत्सु।

# विवाह-व्यवस्था-विमर्शः

**श्रीवाचस्पतिकुमारपाठकः**
अनुसन्धाता
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

❀ ❀ ❀

विवाहादेव सत्सृष्टिः सत्सृष्ट्यैव जगत्त्रयम्।
चतुर्वर्गफलावाप्तिस्तस्मात्परिणयः शुभः।।

आह्लादोल्लासविलासपूरितेऽस्मिन् भुवने यत्र यत्र दृष्टिः स्थिरीभवति, तत्र तत्र प्रकृतिपुरुषयोर्वैषम्यशून्यः सङ्गमो महत्तमं सौन्दर्यं संसाधयते। वारिवाहेषु सौदामिनी, सागरेषु सरितः, वृक्षेषु लतिकाः, पुष्पपङ्क्तिषु भ्रमराः प्रमाणीकुर्वन्ति यदीश्वरस्येयं साकारकल्पना संयोगजन्यसुखस्पन्दिनी अतीवरमणीया परमपुनीता च विद्यते। सूक्ष्मातिसूक्ष्मं स्थूलातिस्थूलं सर्वं खल्विदं प्रकृतिपुरुषयोः साम्राज्यान्तगर्तं प्रतिभासते।

**आधारशिला**

'एकोऽहं बहु स्याम्' इति कामनाबीजेन संसृष्टेयं सृष्टिः स्त्री-पुरुषयोरेकत्वे-नैव प्रवर्तते। यतो हि मूलं कारणं सृष्ट्या ईश्वरस्य बहुत्वकामना विद्यते, अत एव तस्यैवांशभूतः सोऽयं वा जीवो विवाहमाध्यमेन प्रक्रियामिमामग्रेसारयति। स्त्री-पुरुषयोरन्योन्यपूरकत्वेन स्त्रियः पुरुषस्य, पुरुषस्य स्त्रियः कामना सर्वथा स्वाभाविकी प्रकृतिप्रदत्ता च विद्यते। परस्परं साहाय्येनैव पुरुषार्थचतुष्टयानां सिद्धिर्भवति, अत एवोक्तम्— 'विवाहादेव सत्सृष्टिरिति'।

भारतीया संस्कृतिः कदापि भोगेच्छां विलासैश्वर्यकामनां वा दोषावहां न मन्यते, किन्तु मानवः पशुः असुरो वा मा भूयादित्येतदर्थमेकां व्यवस्थां निर्माति, या हि पूर्णतो नीतियुता विद्यते। अस्यैव निदर्शनमस्ति 'तेन त्यक्तेन भुञ्जीथाः मा

गृध: कस्यस्विद्धनम्'[१]। अर्थाद् अनैतिकतां कर्महीनताञ्च परित्यज्य संयमपूर्वकं भोगमाचर। अत एव पुरुषार्थेषु कामार्थयोरपि स्थानं विद्यते।

पुरा सर्वथा भोगस्य परित्यागं कुर्वाणा निवृत्तिमार्गमनुसरन्त विश्वामित्र-पराशरादय: पूर्णतया सत्त्वपूतेऽपि पर्यावरणे च्युता:, का कथा पुनरद्य दूषिते वातावरणे, विषाक्ते पर्यावरणे, उर्वरकयुते आहारे, तमोमये विहारे, भ्रष्टे च समाजे यथाकथञ्चिज्जीवतां मनुष्याणाम्। अतोऽद्यत्वे प्रवृत्तिमार्गमेवानुशीलनीयं सर्वै:, येन यज्ञाधिकारो जायेत, अन्यथा तैत्तिरीयब्राह्मणानुसारम्— 'अयज्ञियो वा एष योऽपत्नीक: स्यात्'।

श्रुतिस्मृतिसूत्रशास्त्रैश्च मानवजीवनस्याभ्युत्त्थानाय एकैतादृशी सरणी प्रस्तूयते, यया मानवो भौतिकविकासमाध्यमेनाध्यात्मिकं चरमोत्कर्षं संसाधयते। 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' अस्यायमेवाभिप्रायोऽस्ति। अत एव मनुस्मृतौ जीवनपद्धतिरियं प्रतिपादिता—

प्रथममायुषो भागं वसित्वाद्यगुरो: कुले।
द्वितीयमायुषो भागं कृतदारो गृहे वसेत्[२]।।

एवं तृतीयं भागं वनेषु, चतुर्थञ्च सङ्गान् परित्यज्य संन्यासमाचरेत्। इत्थं यो भागशो जीवनं यापयति, तस्य कृते फलश्रुतिरपि तत्रैव प्रोक्ता—

अनेन विधिना यो हि आश्रमानुपसेवते।
स सर्वलोकान्निर्जित्य ब्रह्मलोकाय कल्पते[३]।।

भारतीयताया: प्रतिपादकेषु धर्मशास्त्रेषु विवाहो महायज्ञानुष्ठानं विद्यते। अस्यैकैकाऽपि क्रिया गम्भीरं महत्तमं परमोदात्तमत्यावश्यकञ्च भावं प्रतीकमाध्यमेन प्रकाशयति। येन दम्पती विवाहस्य प्रयोजनं वैवाहिकजीवनशैल्या निर्देशं प्राप्नुत:। तस्य फलस्वरूपं जीवने स्थैर्यं सुखं साहचर्यमुभयो: सम्बन्धे प्रगाढता चायाति। वर्तमानकाले विवाहस्तु प्रवर्तते; किन्तु शास्त्रोक्तवचनानामनुशीलनाभावे द्वि-त्रिवर्षाभ्यान्तर एव सम्बन्धो विच्छिद्यते, जीवनञ्च सुखशान्तिविहीनं कलहायितं भवति। अद्यापि यदि धर्मशास्त्रेषूक्तं यथायथं परिपाल्यते चेत् लोकस्याननं किमप्यद्भुतं वैलक्षण्यमाप्नुयात्।

---

१. ईशावास्योपनिषद् – १; २. मनुस्मृति: – ४।१।
३. संस्कारमयूख:, पृ. ६४।

विवाहेन देव ऋणाद् यज्ञानुष्ठानैः, पितृ-ऋणात् सन्ततिभिर्मुक्तिः प्राप्यते। पितरस्तृप्ता भवन्ति, नित्यनैमित्तिकयज्ञानुष्ठानैर्देवास्तृप्यन्ते। अथ च सम्पूर्णं भूतं सर्वे चाश्रमा गृहस्थाश्रिता भवन्ति। उक्तञ्च मनुस्मृतौ—

यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः।। (३।७७)

पुरुषार्थत्रयाणां सिद्धिरपि विवाहं विना न सम्भाव्यत इत्युक्तम्—

'पत्नी धर्मार्थकामानां कारणं प्रवरं स्मृतम्'[१]। नैतावदेव, ये हि विवाहमतिरिच्य केवलं मुक्तये यतन्ते,ते महान्धकारे पतन्तीत्युक्तमीशोपनिषदि—

ततो भूय इव ते तमो य उ विद्यायां रताः।।१२।।

एतस्मात् सर्वेषां मानवानां कृते विवाह आवश्यकस्तस्य च सर्वथा, साफल्याय शास्त्रोक्तनिर्देशः परमावश्यकः।

**विवाहप्रकाशः**

देशकालपरिस्थित्यनुसारं समये समये विवाहस्यानेके प्रकाराः प्रचलिताः। धर्मशास्त्रेषु प्राशस्त्याप्राशस्त्यविचारपुरस्सरमष्टौ प्रकाराः समुद्धृताः। तेभ्यो भिन्नः मन्ये नान्यः प्रकारः सम्भाव्यते दरिद्रतया परिस्थितिवशाच्च विनिमयविवाहः सेवाविवाहो वाऽद्यत्वेऽपि प्रचलति, तेषां कापि ऐच्छिकी प्रथा नास्ति, अत एव एतादृशानां प्रकारेषु गणना न भवति। विवाहस्येमेऽष्टौ भेदाः—

ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथासुरः।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः[२]।।

एषूपरितनाश्चत्वारः प्रशस्ताः, अधस्तनाश्चाप्रशस्ता मन्यन्ते। आरोहक्रमेण सर्वप्रथमं पैशाचविवाहः समायाति,तस्यैवं मनुस्मृतौ निरुक्तिः—

पैशाचः—

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति।
स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः।। (३।२४)

---

१. (अपरार्के) याज्ञवल्क्यस्मृतिः, १।५१।

२. मनुस्मृतिः - ३।२१।

राक्षसः—

हत्त्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्।
प्रसह्य कन्यां हरतो राक्षसो विधिरुच्यते।। (३।३३)

गान्धर्वः—

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्वस्स तु विज्ञेयो मैथुन्यः कामसम्भवः।। (३।३२)

आसुरः—

ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते।। (३।३१)

प्राजापत्यः—

सहोभौ चरतां धर्मानिति वाचानुभाष्य च।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः।। (३।३०)

आर्षः—

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते।। (३।२९)

दैवः—

दक्षिणासु दीयमानास्वन्तर्वेदि यदृत्विजे स दैवः[१]।

ब्राह्मः—

आच्छाद्य चार्चयित्वा च श्रुतिशीलवते स्वयम्।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः।। (३।२७)

**औचित्यविचारः**

धर्मशास्त्रोक्तविवाहप्रक्रिया पूर्णतो गम्भीरा दायित्वपूर्णा स्थायित्वसम्पन्ना चास्ति। प्राक्कालेऽद्यत्वे वाऽप्रशस्तविवाहप्रकारेषु कस्यापि सामाजिकी स्वीकृतिर्नास्ति न चासीत्। यतो हि हठात् कामावेशाद् धनलोभाच्च कृतो विवाहो यथावत् सामञ्जस्याभावात् समाजस्यासहयोगभावनया समुत्पन्नाभिर्विषमपरिस्थितिभिश्च विच्छिद्यते तथा सम्पूर्णतो वैवाहिकसुखमप्युपभोक्तुं न पारयति। विशेषप्रयोजनमभिलक्ष्य

१. बौधायनगृह्यसूत्रम्, १।२।२०।

जाताः विवाहास्तत् प्रयोजनन्तु पूरयन्ति, किन्तु मूलतो वैवाहिकमुद्देश्यं न यथावत् पूरयितुं क्षमन्ते। यथा राजनीतिमुद्दिश्य राक्षसविवाहः क्षत्रियेषु प्रचलित आसीत्। एवमेव कामपूर्तिमभिलक्ष्य गान्धर्वविवाहः संस्कृत-काव्येषु नाटकेषु च बहुशः प्रतिपादितः; किन्तु वर्तमानकालेऽस्य कुपरिणाम एव दृष्टिपथमायाति। आसुरे विवाहे कन्यायै यद्धनं प्रदीयते, मन्ये सा एव प्रथा विपरिणम्याद्यत्वे दीयमान-यौतुकरूपेण प्रचलति। विवाहप्रसङ्गे यथा कथञ्चिदपि धनस्यादानं प्रदानं वा उदात्तचिन्तनधाराभिर्न स्वीक्रियते तथा च दम्पत्योः परस्परं निर्मलश्रद्धाविश्वासो नोत्पद्यते, अत एव प्रशस्तेऽपि आर्षे विवाहे यज्ञाय दीयमानं धनं मनुना निन्दितम्—

'अल्पोऽप्येवं महान् वाऽपि विक्रयस्तावदेव सः'। (३।५३)

विवाहे वराय कन्याया दानं भवति, तस्य च महत् पुण्यं कल्प्यते, तत्र च न कश्चित् पणबन्धो न वा विनिमयो दानप्रसङ्गादुपयुज्यते। अत एव प्रशस्त-विवाहप्रकारेष्वपि समयबन्धनात् प्राजापत्यः, गोमिथुनदानाद् आर्षः, तथा दक्षिणास्थानापन्नायाः कन्यायाः प्रदानाद् दैवश्चादर्शविवाहरूपेण न स्वीक्रियते। एवं सति ऋग्वेदे समुद्धृतः सोमसूर्ययोर्ब्राह्मविवाह एवादर्शरूपेण प्रतिष्ठितः। तस्यैवानुशीलनं ब्रह्मलोकसमवाप्तये भवति। धर्मशास्त्रेष्वपि ब्राह्मविवाहो बहुधा प्रशंसितः समर्थितः समादृतश्च। प्रकारेऽस्मिन् कुत्रापि शारीरिकशक्तेः कामावेशस्य लोभस्य वा स्थानं नास्ति तथा च भारतीयसंस्कृत्यनुसारं सर्वत्र धार्मिकभावनायाः शालीनतायाः सामाजिकतायाश्च समादरो विद्यते।

वर्तमानकालेऽस्य विकृतं स्वरूपं दृष्टिपथमायाति। दक्षिणारूपेण दीयमानं धनं यौतुकरूपेण कन्यापक्षतो हठाद् गृह्यते। अनेनास्यादर्शस्वरूपं क्षीणतां गतमिति महत् खेदावहम्। यदि यौतुकापेक्षां विहाय वधूं लक्ष्मीं मत्वा विवाहोऽनुष्ठीयते चेत् सर्वेष्वपि परिवारेषु शान्तिसौख्यसौहार्दनामाविर्भावः स्यात्। विवाहस्यास्य मूलरूपेण प्राणबिन्दुरादर्शिताऽपि सुरक्षिता तिष्ठेत्।

अथ च विवाहस्य यः कोऽपि प्रकारः स्वीक्रियेत तत्र धार्मिकानुष्ठानं विवाहपद्धतेरनुशीलनं परमावश्यकं भवति। उक्तञ्च वीरमित्रोदये—

गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः।
कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः[१]।।

---

१. भागः २, पृ. ८६०।

विधिं विना कन्याया भार्यात्वं वरस्य च पतित्वमेव न स्यादिति प्रोक्तं याज्ञवल्क्यस्मृतौ—

'पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे'।। (१।७६)

एतेनानुमातुं शक्यते यत् शास्त्रकाराणां मतेन समागमानन्तरमपि कन्यायाः कन्यात्वं तावन्न नश्यति, यावत् पद्धतेरनुष्ठानेन तस्याः संस्कारो न स्यात्। उक्तञ्चापि—

'बलादपहृता कन्या यदि मन्त्रैर्न संस्कृता।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा'[१]।।

एतेनेदं सिद्ध्यति यद् ये बलात्कृतां कन्यां हीनां विवाहायोग्याञ्च मन्यन्ते, ते सर्वथाऽनुचितं कुर्वन्ति तथा चेदृशानां धारणेयं शास्त्रोल्लङ्घनं स्वजातिनाशमेव करोति। मुस्लिमकाले यैर्हिन्दूभिर्यवनैरपहृताः कन्या दुराग्रहवशान्न स्वीकृतास्ते शास्त्रवचनोल्लङ्घनेन सह जातौ कुठाराघातमेव चक्रुः। अतोऽद्य बलात् प्रमादाद्वा जातेऽपि समागमे कन्या हृदयेन स्वीकरणीया उद्वोढव्याश्च यदि ताः परपुरुष-गमनशीला न स्युश्चेत्। अत्रैवेदमपि सिद्ध्यति यद् ये न्यायालयेषु माल्यार्पणमात्रेणैव वैवाहिकीं क्रियां पूर्णां मन्यन्ते, तेऽपि सर्वथाऽनुचितं कुर्वन्ति। उन्मत्ततया जातस्यास्य विवाहस्य कुपरिणाममपि दृष्टिपथमायात्येव। वैवाहिककर्मकाण्डेषु एतावद् बलं कथमासीदिति निरूपयिष्यमाणं विद्यतेऽग्रे।

**वैवाहिकी पृष्ठभूमिः**

वर्तमानकाले यदा स्त्रीपुरुषयोः सम्बन्धः केवलं कामपिपासाशान्तये मन्यते, यदा शरीरं केवलं भोगाय कल्प्यते, यदा संस्कारा अन्धविश्वासिनां प्रथा उच्यन्ते, यदा पतिपत्न्योः सम्बन्धो विच्छेदश्च सामान्या घटना भवति, यदा वैवाहिकजीवने अनिश्चयता, अस्तव्यस्तता, परस्परमविश्वासश्च तिष्ठति, यदा सन्ततयो माता-पितृस्नेहेन ममत्वेन च विहीना भवन्ति, पित्रोर्विद्यमानेऽपि, यदा स्त्रीपुरुषयोः सम्बन्धस्य विच्छेदस्य च निर्णयो न्यायालये संविधानद्वारा विधीयते, यदा च परस्परं दायित्वबोधस्य सहिष्णुतायाः सामञ्जस्यस्याभावस्तथाभिमानस्य सङ्कीर्णभावनायाः कूटव्यवहारस्याक्रोशस्य च प्राचुर्यं विद्यते, तदानीं धर्मशास्त्रोक्त-विवाहस्योपयोगितानिरूपणं सर्वथा प्रासङ्गिकं महत्त्वपूर्णं परमावश्यकञ्च विद्यते, येन समाजो मार्गनिर्धारणं कुर्यात्।

---

१. वीरमित्रोदयः, भागः२, पृ. ८६०।

शास्त्रोक्त-विवाहपद्धतिः प्रतीकमाध्यमेन वर-वध्वोर्हृदये दायित्वबोधं जनयति। वाग्दानादारभ्य मण्डपोत्त्थापनपर्यन्तं प्रयुक्ता मन्त्राः कर्तव्यबोधकाः, सामञ्जस्यसंस्थापकाः, उभयोर्महत्त्वस्मारकाः, धर्मपथप्रेरकाश्च सन्ति। नैतावदेव मन्त्रेषु काप्यनुकूलफलदायिनी अलौकिकी शक्तिर्विराजते, यया जीवनं मर्यादितं सुखावहं समुन्नतिशीलञ्च जायते। शास्त्रेषु विवाहस्यैकैकस्यापि अङ्गस्य सूक्ष्मतया विचारं विधाय निष्कर्षा विधयश्च प्रतिपादिताः सन्ति, यस्य दाम्पत्यजीवने महान् प्रभावो दृश्यते। तत्रादौ विवाहात् पूर्वं यत् परीक्ष्यं निर्धार्यञ्च भवति अभिभावकैः, तत् प्रतिपादितमृषिभिः।

**वयोविचारः**

ऋग्वेदानुसारं सूर्याया विवाहस्तदाऽभवद् यदा सा पतिं कामयमानासीत्। विवाहविषये जानन्त्येव कन्या पतिं कामयते, सा च ऋतुमती भवति, यतः ऋतुदर्शनानन्तरमेव कामपूर्तये पतिकामना जायते। अत एव ऋतुदर्शनात् पूर्वमुत वा ततो वर्षत्रयाभ्यन्तरमेव विवाहस्य कालो निर्धार्यते। वसिष्ठधर्मसूत्रानुसारम्—

'कुमारी ऋतुमती त्रीणि वर्षाण्युदीक्षेत।
उर्ध्वन्तु कालादेतस्माद् विन्देत सदृशं पतिम्'।।

प्रायशः समेषां शास्त्रकाराणामत्र सहमतिर्विद्यते।

वरश्च प्रथमायुषो भागं गुरुकुलेऽधीत्य अर्थात् पञ्चविंशतिवर्षीयो गृहस्थाश्रमं प्रवेष्टुकामः स्यात्। इदं निर्धारणं स्वास्थ्यविज्ञानसम्मतं विवाहाय च सर्वोत्तमं विद्यते। सुश्रुतवचनानुसारं 'पञ्चविंशतिवर्षान्न्यूनः वरः अप्राप्तषोडशवर्षीयया सह सम्पृक्तो भवति चेत् प्रजननक्षमताया ह्रासस्तथा जायमानाः सन्ततयोऽल्पायुषो दुर्बलाश्च भवन्ति'। अथैतदाधुनिकविज्ञानेनापि सिद्धं विद्यते। अद्यत्वे परिपाल्यतेऽपि।

**वर-वध्वोर्योग्यता**

धर्मशास्त्रेषु विस्तारेण वर-वध्वोर्योग्यताविचारः कृतो विद्यते। वरो ब्रह्मचारी विद्वान् कुलशीलसम्पन्नश्चेतव्यः। कन्यायाः सर्वतः सौन्दर्यं कुलं शीलञ्च परीक्षणीयमिति। यथा मनुः—

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्।
तनुलोमकेशवदनां मृद्वङ्गीमुद्वहेत् स्त्रियम्।। (३।१०)

विशेषतो वरस्य विद्वत्त्वं पौरुषः कुलमाचारः कन्यायाश्च रूपं स्त्र्युचित-सौम्यलक्षणं प्रजननक्षमताशीलञ्च परीक्ष्यते।

अद्यत्वे केवलं वरस्यायराशिः कन्याया रूपमेव परीक्ष्यते, येन कदाचिद् महती विसङ्गतिर्जायते। आश्चर्यकरमेतद् यज्जनास्तुच्छवस्तुक्रयणसमये निर्माण-कालस्य, विकृतिकालस्य सर्वविधं परीक्षणं कुर्वन्ति; किन्तु विवाहसमये वर-वध्वो-र्योग्यताविचारन्न कुर्वन्ति, येन वैवाहिकं सुखं नश्यति।

**सवर्णासगोत्रीय-ज्योतिषशास्त्रीयश्च विचारः**

वर्तमानकाले आधुनिकेषु सवर्णासगोत्रीयपरीक्षाविषये महान् विवादो दृश्यते, किन्तु शास्त्रकाराणामत्र स्पष्टनिरुक्तिर्विद्यते। गीतायां युद्धस्य कुपरिणामं गणयन् अर्जुनो वदति—

'स्त्रीसु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः'।

अथ च—

सङ्करो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः।।

वस्तुतो वर्णव्युत्क्रमे संस्कृतिसभ्यताचारविचारव्युत्क्रमो भवति, येन स्वभावस्य वैषम्यं जायते, तेन च उभयोर्मध्ये सम्यक्तया सामाञ्जस्यं न तिष्ठति। सन्ततिष्वपि नकारात्मकः प्रभावो भवति। प्रायशस्ताः कुबुद्धय उच्छृङ्खलाश्च जायन्ते। शास्त्रकाराणां वर्णसाङ्कर्यं कदाप्यभिमतं नासीत्, यतो हि एतेन कुलगणना न सम्भाव्यते कुलधर्माणां परिपालनं कुलगौरवस्य प्रतिष्ठापि च न भवितुमर्हति। एतस्मादुक्तं मनुना—

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्।। (३।१५)

न केवलं भारतवर्षेऽपि तु विश्वस्य सभ्याऽसभ्यबर्बरेष्वपि जातिषु सगोत्रीया कन्या सर्वथा परिवर्ज्यते। यत्र जातिर्नास्ति, तत्र धार्मिकचिह्नद्वारा गोत्रनिर्णयो भवति। शास्त्रेष्वपि महान् विरोधो विद्यते। अस्य बहूनि कारणानि सन्ति। स्वजनविवाहेन यौनस्वेच्छाचारिता पशुवद् भविष्यति तथा संस्कृतिसभ्यतायाः सर्वथाऽभावः स्थास्यति। एतेन पौरुषं क्षीणतां गमिष्यति तथा प्राधान्येन प्राणिशास्त्रीयं पतनं भविष्यति। आधुनिकानामपि प्राणिशास्त्रीयाणां मतमस्ति यद्— अन्तः प्रजननेन वंशस्य द्वितीये तृतीये वा क्रमे मानवीयाकृतिर्विकारं लभते तथा प्रजननशक्तेः शारीरिकसंरचनायाश्च महती क्षतिः जायते। अत एव वैज्ञानिकोन्नतेः प्रौढावस्थायां पारस्करोऽवोचत्—

परिणीय सगोत्रान्तु समानप्रवरां तथा।
त्यागं कुर्याद्द्विजस्तस्यास्ततश्चान्द्रायणं चरेत्।। (४।८)

विवाहनिर्धारणक्रमे तृतीयं सुचिन्त्यं तत्त्वमस्ति ज्योतिषशास्त्रीयं यत्र ग्रहमैत्री-नाडी-गण-वर्णादयः परीक्ष्यन्ते। एतेषु स्थूलं किमपि तथ्यं नास्ति येनास्योपयोगिता विविच्येत, किन्त्वस्ति कोऽपि सूक्ष्मः प्रभावः, यो हि सर्वथा सफलोऽतो बहु प्रचलितो विद्यते। ऋषि-महर्षीणां तपश्चर्यया निष्पन्नमतिसूक्ष्मं विलक्षणं ग्रहनक्षत्राणां प्राणिशास्त्रीयं प्रभावं विवेचयद् वैज्ञानिकं किन्तु रहस्यपूर्णं शास्त्रमिदं स्वनियमानुसारं यत् किमपि भणति, तत् सर्वं यथायथं घटत इति महदाश्चर्यकरं समेषां कृते। अतो विवाहकाले सावर्ण्यासगोत्रीय-परीक्षणेन सह एतदपि अवश्यमेव परीक्षणीयम्। अत्रैवास्माकं हितमस्ति।

**शास्त्रोक्तपद्धतेरुपयोगिता**

'वहनम् = वाहः, विशिष्टो वाहः = विवाहः, इति व्युत्पत्त्या ज्ञायते यत् परिणयद्वारा दम्पती किमपि वहतः, स च विशिष्टो भवति। वाहेऽस्मिन् पति-पत्नी धर्मार्थकामसाधनाय परस्परं दायित्वं वहतः, तद्धि सृष्टिप्रक्रियायाः कल्याणाय भवति। अत एव विवाहो जीवनस्य एकोऽत्यन्तं महत्त्वपूर्णः क्रमो विद्यते, यत्र सर्वविधिना सम्बन्धं निभाल्य वंशपरम्परायाः संवर्धनं धर्माचरणञ्च कर्तव्यं भवति, येन मानवो लौकिकं पारलौकिकञ्चोभयं संसाधयेत्। विवाहपद्धतिरत्र सङ्केतमाध्यमेन पथप्रदर्शनं करोति। विवाहः परितः अग्निं प्रज्वाल्य तत आत्मनः सुरक्षायाः प्रक्रिया विद्यते। शास्त्रं सुरक्षाया गूढानुपायान् मन्त्रसङ्केतैर्विवाह-कर्मकाण्डैश्च निर्दिशति।

विवाहपद्धतिर्विविधेषु शास्त्रेषु विविधा विद्यते, किन्तु मन्त्राः प्रयोगाश्च समाना एव भवन्ति। विवाहे द्वयोः संस्कारो भवति, अतोऽयं संस्कारेषु श्रेष्ठतमो महत्त्वपूर्णश्च विद्यते। एतस्मादेवात्र लोकप्रथानामाविर्भावोऽपि स्वभाविक एव। ताः प्रथा अपि सम्यक् पालनीया इति शास्त्रकाराणामेकस्वरेणादेशोऽस्ति। आश्वलायन-गृह्यसूत्रानुसारम्— 'अथ खलु उच्चावचा जनपदधर्माः ग्रामधर्माश्च तान् विवाहे प्रतीयात्'। एवं वैवाहिक-क्रियाणामेका दीर्घा शृङ्खला आबद्धा भवति। तास्ववद्यत्वेऽपि सर्वा महत्त्वपूर्णास्तथापि काश्चनात्यन्तं प्रासङ्गिका उदाहरणाय विविच्यन्ते, यासां गाम्भीर्यमुपादेयतामुदात्तताञ्च न कोऽप्युपेक्षितुं शक्नोति।

अथ विवाहविधेर्वाग्दानेनारम्भो भवति, यस्य तात्पर्यं विद्यते विवाहस्य मौखिकी स्वीकृतिः। कन्यायाः पितुः शिरसि विवाहायोजनस्य महान् भारो भवति,

वाग्दानेन सः सर्वं समायोजयितुं मानसिकीं व्यावहारिकीञ्च सन्नद्धतां विदधाति। कन्या वरं पतिरूपेण स्वीकर्तुं पितृगृहं परित्यज्य पतिगृहं प्रयातुं मनसा सन्नद्धतां विदधाति तथा विवाहविषये स्त्रीसमुदाये चर्चयित्वा हास्योल्लासेन सह पत्न्या भूमिकामवगच्छति।

गणपतिपूजनेन सह वैवाहिककार्यक्रमाणां शुभारम्भो जायते। ततो हरिद्रालेपनं मृदाहरणं गीतगानेन सह सोल्लासं विधीयते। अनेन प्रतीयते यत् पद्धतिरेषा गम्भीरा सत्यपि मानवानामुत्सवभावनां सर्वथा पुरस्करोति तथा गम्भीरमप्यभिप्रायं सानन्दं हृदये निदधाति। भारतीयपरम्परायां सङ्कल्पस्य मानसिकं परमं महत्त्वं विद्यते। गणपतिपूजनस्येदं गम्भीरं तात्पर्यं विद्यते यत् कन्यापक्षीयाः कन्यादानं कर्तुं, वरपक्षीयाश्च परकीयां वधूरूपेण स्वीकर्तुं प्रस्तुताः सन्तीति।

**सर्वोत्कृष्टतायाः सङ्कल्पना**

वरो महता समारम्भेण परिजनैः सह पाणिग्रहणाय समायाति। वीरमित्रोदये तूक्तम्—

कृतकौतुकबन्धश्च मित्रबान्धवसंयुतः।
यानं यथार्थमारुह्य यातव्यञ्च वधूगृहम्।।

अत्रापि उल्लासभावना समादृता। मधु पृथिव्याः सर्वोत्तमो रसस्तस्य प्रस्तुतिर्यदि कस्यचित् सत्काराय विधीयते चेत् सः सर्वोत्कृष्टो मन्यते। अयमेवाशयो मधुपर्कविधेर्भवति। वरो वदति— "वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्य्यः, इमं तमभितिष्ठामि, यो मां कश्चाभिदासति"[१]। तथा च मधुपर्कं स्वीकुर्वन्— 'यन्मधुनो मधव्यं परमं रूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽशानि'[२]। एवञ्च अङ्गानि स्पृष्ट्वा— '.....बाह्वोर्मे बलमस्तु, ऊर्वोर्मे ओजोऽस्तु, अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु'[३]। समासतो वरः प्रथमं स्वसर्वोत्कृष्टत्वं प्रतिपादयति, ततो मधुना सर्वोत्कृष्टोपभोगं कामयते, तेन च विभिन्नेष्वङ्गेषु बलौजसोरुत्कृष्टतायाश्च सङ्कल्पनां विधत्ते, येन वैवाहिकजीवनं चरमोत्कर्षयुतं स्यात्।

एतेनेदमपि सिद्ध्यति यद् भारतीया संस्कृतिर्दीनतां हीनताञ्च कदापि न सहते तथा सर्वदा सर्वोत्कृष्टतां कामयते। सर्वेषां नियामिका प्रकृतिः, जलं तस्याः

---

१. पारस्करगृह्यसूत्रम्, १।३।९। २. तदेव, १।३।११। ३. तदेव, १।३।१५।

प्रतिनिधिः, स च प्रवाहशालि, तस्माच्चार्घ्यजलाद् वरः तेजः ओजः सर्वप्रियत्वं प्रजानामधिपतित्वं समीहते, यतो हि वेत्ति स जलवत् प्रवाहशालित्वेनैव जीवने मधुप्राप्तिर्भवति (चरन्वै मधु विन्दति)। हीनोऽपि वरः प्रक्रियामिमां स्वसत्कारं कामनाञ्च निशम्य सर्वोत्कृष्टत्वाय योगं विधास्यति। पद्धतेरेषा सर्वोत्कृष्टत्वभावना।

**विवाहः प्रकृतेः समादरः**

धर्मशास्त्रोक्तविवाहो जीवनस्य पृष्ठभूमिरिति कन्यादानावसरे समीक्षणावसरे च प्रयुक्तैर्मन्त्रैः स्पष्टं प्रतीयते। पिता ईश्वरं देवान् प्रकृतिञ्च साक्षीकृत्य— 'तुभ्यं विप्र मया दत्ता पुत्रपौत्रविवर्धिनी'[१] इति वदति, एतेन च 'त्वद्दानान्मोक्षमाप्नुयाम्' इति कामयते। स्पष्टं भवति यत् कन्यादानं सृष्टिप्रक्रियाया विस्ताराय भवति, सा च पूर्णतो नैसर्गिकी प्रक्रिया, तथा च मोक्षकामना प्रकृतेर्महान् समादरो विद्यते। पुनः 'द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु'[२] मन्त्रेणानेन दम्पत्योर्विराट् प्रकृतेरङ्गत्वं सिद्ध्यति, तस्याः कन्यादानेन पिता पोषणं विदधाति, अथ मोक्षकामना उचिता एव। ततः पिता कल्याणभावनया प्रतिबन्धकमेकमुत्थाप्य जीवनप्रक्रियामुद्बोधयति— 'धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयम्'[३] अर्थात् साहचर्यपूर्णे जीवनेऽर्थकामौ धर्माय स्यातामिति धर्मं प्रथममुच्चार्य निर्दिशति, वरश्च त्रिधा 'नातिचरामि' इति स्वीकरोति।

ततो एकान्तं निशम्य वरो ब्रूते— 'यदेषि मनसा दूरं दिशोऽनुपवमानो वा। हिरण्यपर्णो वैकर्णः स त्वा मन्मनसा कृणोतु'। वायुवद् दूरदिशि भ्रमन् मनस्ते वायुरेव मयि स्थिरं करोत्विति निसर्गतः प्रार्थना विद्यते। एवं सर्वत्र प्रकृतेः समादरः, ततश्च कामना विद्यते, यतो हि प्रकृतिः प्राणिनां माताऽस्ति। प्राणी तत उत्पद्य, तस्यामेव लीयते। परिणामो विकारश्च सर्वं प्रकृत्याः प्रभावेणैव भवति।

एवमेकं विलक्षणं प्रकृत्याः प्रभावविवेचनं प्राणिवैज्ञानिकं रहस्यं समीक्षणावसरे ऋग्वेदे समुद्घाट्यते, येन स्त्री-पुरुषयोः स्वाभाविकं भेदं तथा तयोरुद्वाहः सर्वथा प्राकृतिक इति प्रकाशितं भवति। वरः प्रयुनक्ति—

सोमस्य जाया त्वं गन्धर्वस्ते परः पतिः।
तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः।।

परवर्तिनि काले विद्वद्भिरस्य व्याख्या कृता, येन सिद्ध्यति यद् यथार्थतः शारीरिक-मानसिक-संरचनादृष्ट्या स्त्रियः संसर्गेण दोषावहाः पुरुषैः सर्वथा भिन्ना

---

१-३. पारस्करगृह्यसूत्रम्, १।४।१४-१६।

अबलाश्च भवन्ति। ताः कामं हिमालयमधिरोहेयुः, अन्तरिक्षं विजित्य चन्द्रमसो यात्रां कुर्युः; किन्तु तासां स्त्रीत्वं सन्ततिजन्यत्वञ्च तास्वेव तिष्ठति, न पुरुषेषु। स्त्रीणां पुरुषान् प्रति अपेक्षाभावस्य सौन्दर्येणाकर्षणक्षमतायाः प्रजननशक्तेश्च विकासः प्रकृतित एव जायते, यस्य कारणं मन्त्रेणानेन समुद्घाट्यते। सर्वप्रथमं मनसोऽधिष्ठाता सोमदेवः स्त्रीस्वभावानुकूलं मनो रचयति, येन ता लज्जावत्यः सौन्दर्याकाङ्क्षिण्योऽपेक्षावत्यश्च भवन्ति। ततो गन्धर्वः शृङ्गारस्याधिष्ठाता तासां शृङ्गारं विधत्ते। अपेक्षापूर्तिसाधनीभूतं लज्जायाश्च कारणीभूतमुत्तेजनाङ्गं सौन्दर्य-शालिपुरुषाणामाकर्षकञ्च निर्माति। पुनरग्निरूष्माया अधिष्ठातृदेवः स्त्रीसु सङ्क्रमणेन सन्तानोत्पत्तिक्षमतां विकासयति। अत्र प्रमाणमपि विद्यते— 'वसन्ति अग्नयो यस्मिन् कालेऽसौ = वसन्तः'। एतस्माद् ऋतावस्मिन् सर्वत्र पञ्चाग्नीनां प्रवाहो भवति, येन प्रकृतिस्वरूपे नावीन्यं नौत्यमायाति, प्राणिषु च अन्तर्हितोष्मणः प्रभावेण मादकता अतिशय्य तिष्ठति। एतस्मात्सत्यमिदं सोऽग्निरेव स्त्रीषु यौवनकाले ऋतुधर्मं गर्भधारणक्षमताञ्चादधाति। अत एव स्त्रियः संरचनादृष्ट्या स्त्रियो भवन्त्येव। एतत् सर्वं सृष्टिप्रक्रियाया विकासाय प्रकृतितो भवति, तस्माद् विवाहद्वारा कन्यायाः पिता प्रकृतेरभिलाषायाः समादरं विदधाति। एतस्मादेव च विवाहे अग्नेः साक्षित्वमग्निप्रदक्षिणा च परमावश्यकं भवति, येन वरोऽग्नितः कन्यां प्राप्य वंशवृद्धिं कामयेत।

ये च समानतायाश्चर्चां कुर्वन्ति, ते तथ्यमिदं न जानन्ति, उत वा ज्ञात्वाऽपि उपेक्षन्ते, किन्त्वस्य सूक्ष्मः परिणामः समाजस्याहितकरमेव विद्यते।

**कायद्वये एकात्मस्थापना**

निसर्गतः स्त्री-पुरुषयोः सिद्धं संयोगं धर्मशास्त्रं प्रक्रियाभिर्विविधाभिरित्थं द्रढयति, येन द्वयोः शरीरयोरेकात्मनः साम्राज्यं स्यात्। स च आत्मा शरीरद्वयेन धर्माचरणं सृष्टिप्रक्रियां सञ्चालयेत्। एकात्मत्वस्थापनायै विवाहस्य विविधेषु स्थलेषु प्रयासोऽनुष्ठीयते।

***समञ्जनम्***

वधूं वस्त्रोपहारैरलङ्कृत्य वरः समञ्जनमन्त्रं पठति—

> समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ।
> सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ[२]।।

---

१. ऋग्वेदः, १०।८५।४०।    २. पारस्करगृह्यसूत्रम्, १।४।१७।

प्राकृतिकोऽयं सम्बन्धः, अतः सर्वे प्रकृतिप्रतिनिधयो ये मानवानां पालनं संवर्धनं कुर्वन्ति, ते हृदयस्थितानामुभयोरात्मनोर्मनसो भावानाञ्च समञ्जनं कुर्वन्तु। एतादृशी भेदशून्यता परिकल्प्यते शास्त्रकारैः।

### *पाणिग्रहणम्*

कन्याया दक्षिणपाणिं स्वदक्षिणे पाणौ गृहीत्वा वरो वदति—

अमोहमस्मि सा त्वं सा त्वमस्यमोऽहम्।
सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम्[१]।।

आवयोः सम्बन्धः सर्वथा प्रकृतिसिद्धः, यतो हि त्वं ऋक् सामाहं त्वं पृथिवी चेत् द्यौरहम्, एतस्माद् आगच्छ 'तावेव विवहावहै' विवाहं करवावः— आत्मनः संयोगं करवाव इति।

### *अश्मारोहणम्*

प्रस्तरं स्थिरतायाः शक्तेश्च प्रतीकं भवति। जीवने केवलमेकवारं पतिः पत्न्याः पादं स्पृशति, तदपि कन्याया मनः स्वस्मिन् स्थिरीकर्तुं दृढीकर्तुम्, वक्ति च— 'आरोहेममश्मानमश्मेव त्वं स्थिरा भव'[२]। अर्थात् त्वं विपत्स्वपि विचलिता मा भव, स्थिरा तिष्ठ, चरणौ स्पृष्ट्वा प्रार्थये।

### *हृदयस्पर्शः*

'मम व्रते ते हृदयं दधामि, मम चित्तमनुचित्तं तेऽस्तु'[३]। हृदयं स्पृष्ट्वा वरः प्रतिजानीते यत् स्वसङ्कल्पेषु तव हार्दिकभावनानां समादरं विधास्यामि, कदापि त्वदिच्छाविपरीतं निर्णयं न ग्रहीष्यामि, अथ त्वं मच्चित्तानुगामिनी भव। मम निर्णयः तव निर्णयोऽस्तु, सर्वत्रैकमत्यं हार्दिकञ्च साहचर्यं स्यादावयोः।

### *ध्रुवदर्शनम्*

अनन्तनक्षत्रसमानास्वपि विपत्सु त्वं ध्रुववन् मयि स्थिरा भव। तदुच्यते वरेण— 'ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि'[४]। ध्रुववत्ते हृदयं मयि वरे स्याद् इत्येदर्थं वाजिनीवतीं सरस्वतीमपि प्रार्थयते।

---

१. हिरण्यकेशिगृह्यसूत्रम्, १।६।२१।
२. शाङ्ख्यायनगृह्यसूत्रम्, १।८।१९।
३. पारस्करगृह्यसूत्रम्, १।८।८।
४. तदेव, १।८।१९।

**स्थालीपाकः**

सर्वत्र एकपात्रभोजनं दोषावहं भवति, किन्तु नात्र, यतो हि विदितमेतत् समेषां यद् अन्नेनैव त्वगस्थिमांसमनसादीनां सृजनं भवति, तथैव च मनो भवति यादृशमन्नं भुज्यते। अत्र कन्याया मनस्त्वगादयश्च वरानुकूलाः स्युरित्येतदर्थं शास्त्रैरनुमतिः प्रदीयते। वक्ति च वरः— 'प्राणैस्ते प्राणान् सन्दधामि अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचम्'[१]।

विवाहस्येमे विधयो न केवलं मानसिकमात्मिकं वा ऐक्यं विदधति; अपि तु स्थूलं शारीरमपि सम्बन्धं संस्थाप्य सर्वथा भेदमुन्मूलयन्ति येन द्वयोः काययोरात्मा एकीभूतः स्यात्। एकस्य चेष्टितं द्वितीयस्य आशयावबोधाय पर्याप्तं स्यात्। परस्परमेतादृशी सहानुभूतिः स्यात्, येन भ्रमस्य सन्देहस्य क्वाप्यवकाश एव न लभ्येत। अहो विलक्षणेयं शास्त्रकाराणामेकात्मसंस्थापना।

**सर्वविधैश्वर्योन्नतिकामना**

यदा यदा मानवो देवाननुपतिष्ठते, तदा तदा स्वकामनामुपस्थापयति। उक्तञ्चापि— '.....यज्ञेन कल्पताम्' इति। तर्हि विवाहसदृशेन महायोजनेन कथं न स्यात्। वस्तुतोऽस्य कारणं सृष्ट्या बीजभूता ईश्वरस्य बहुत्वकामनैव विद्यते, अतो भारतीया संस्कृतिः सर्वदा नैतिकं विकासैश्वर्यसमुन्नतिसाधनं शिक्षयति। विवाहे एकात्मत्वस्थापनानन्तरं सर्वैश्वर्यसर्वविधसमुन्नतिकामना विधीयते। लाजाहोमावसरे लाजानामाहुतिं कन्या ददाति कामयते च— 'आयुष्मानस्तु में पतिरेधन्तां मम ज्ञातयः स्वाहा'[२], तथा च— 'इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव'[३]। एवमायुर्वृद्धिसमृद्धयश्च कन्यायाः प्रातिनिध्यं कुर्वता वरेण अभिलष्यन्ते। एवमेव जपहोमानन्तरं पुरोहितः स्त्री-कुमारयोः कृते प्रार्थयति—

'चैरञ्जीव्यं महातेजश्चित्ताद्याश्च दिवौकसः।
प्रयच्छन्तु करे वाञ्छामुभयोः स्त्रीकुमारयोः'[४]।।

**सप्तपदी**

कामनाप्रसङ्गे सप्तपदिविधेर्बहुमहत्त्वमस्ति। उक्तञ्च— 'पतित्वं सप्तमे पदे'। पतित्वमप्येतत् कामनैका विद्यते, या सप्तमे पदे काम्यते। विधावस्मिन् वर एकैकं

---

१. पारस्करगृह्यसूत्रम्, १।११।५; २. तदेव, १।६।१।
३. तदेव, १।६।२; ४. तदेव, १।६।४।

पदं कन्याया निधाप्य एकैकां कामनां कामयते। यथा 'एकमिषे विष्णुस्त्वा नयतु' इति ऐश्वर्याय प्रथमं पदम्। एवमूर्जसे द्वितीयं, भूत्यै तृतीयं, सुखेभ्यः चतुर्थं, पशुभ्यः पञ्चमम्, ऋतुभ्यः षष्ठं पदं निधाप्य— 'सखे सप्तपदा भव सा मामनुव्रता भव'[१] इति सप्तमे पदे वरः कामयते। सर्वैश्वर्यैः सह पत्नी पतिं प्रीणीयात् तथा जीवने तस्याः प्रत्येकं पदं पत्युः समुन्नत्यै स्यादित्याशास्ते पतिः।

अथ सर्वविधैश्वर्येण सह महायज्ञेऽस्मिन् सर्वतो रक्षाया आरोग्यस्यापि कामना विधीयते। स्थालीपाकावसरे कन्याया अभिषेकं कुर्वन् वरो बहु चातुर्येण स्वरक्षां शत्रुनाशञ्च कामयते— 'या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूः, जारघ्नी तत एनां करोमि। सा जीर्य्य त्वं मया सह'[२]। तव पत्यादिघातिनीं तनूमुपपतिघातिनीं करोमि। त्वञ्च मया सह वृद्धा भव। एवमुपपतेर्नाशं तथा दीर्घायुष्ट्वसम्पन्नं दाम्पत्यजीवनं कामयते।

धर्मशास्त्रोक्तेऽस्मिन् विवाहे सूक्ष्मातिसूक्ष्ममप्युयोगितत्त्वं शास्त्रं न परित्यजति। शास्त्रस्य प्रमुखोद्देश्यं दम्पत्योरेकात्मकतास्थापनं, परिणामतः समुन्नतिः ऐश्वर्यं सङ्कष्टै रक्षाऽपि च स्वत एव सम्पद्यते।

**उपसंहारः**

धर्मशास्त्रोक्तविवाह एको दायित्वपूर्णः संस्कारो विद्यते, येन भुक्तिः, मुक्तिश्चोभयं सिद्ध्यतः। भौतिकता मानवानां स्वाभाविको गुणो विद्यते, विवाहस्तस्य नैतिकमनुमतिपत्रं विद्यते, यत्रात्मसंयमस्य त्यागस्य समुन्नतेश्च शिक्षा प्रदीयते। चतुर्थीकर्मपर्यन्तं यद्धि त्रिरात्रव्रतमाचर्य्यते तथाखण्डगार्हस्पत्याग्न्याधानं विधीयते, तस्यायमेवाशयो वर्तते। विवाहस्याचारा मन्त्रा दायित्वोद्बोधकाः संस्कारकाश्च भवन्ति। एतत् सर्वं धर्माचरणायानुष्ठीयते, अत एव पत्नी धर्मपत्नीति कथ्यते, न तु कामपत्नी। शास्त्रकारा विवाहप्रक्रियां मानवस्वभावमभिलक्ष्य सर्वतः कल्याणमुद्दिश्य प्रतिपादयामासुः। तेषां बुद्धिर्दृष्टिश्च तपःपूता सूक्ष्मा त्रैकालिकी चासीत्। अतस्तत्र युक्तताविचारस्तादृशीमवस्थां योग्यतामतिसूक्ष्मबुद्धिञ्च प्राप्यैव सम्भाव्यते। अथापि यावद् दृष्टिर्बुद्धिश्चास्माकं गच्छति, तावत्सर्वं युक्तियुक्तं सार्थकञ्च प्रतीयते। एतस्माद् यत्र सन्देहो जायते तदपि स्वबुद्धेर्लघुतां निशम्य शास्त्रं परिपालनीयम्।

---

१. पारस्करगृह्यसूत्रम्, १।८।१। २. पारस्करगृह्यसूत्रम्, १।११।७।

एकदा कश्चिद् भारतीयो विद्वान् विदेशं गतवान्, तत्रत्याः स्त्रियो विदुषो भार्याम् 'एष ते कतमः पति'रिति पप्रच्छुः। विस्मिता सा भारतीया उत्तरं दत्तवती— 'अयमेवैको मे जन्मजन्मान्तरीयः पति'रिति। अद्यत्वे न्यायालयेषु माल्यं परिधाप्य लघुना समारोहेण विवाहः सम्पद्यते, पुनः कञ्चित् कालं भोगविलासौ विधाय न्यायालय एव सम्बन्धविच्छेदो विधीयते, यथा विवाहो बालानां क्रीडा स्यात्, किमेतेन लभ्यते, केवलं कलहायितं नरकायितञ्जीवनम्, यस्योद्देश्यं कामोपभोगपूर्तिः, या केवलमपूरणीया मृगतृष्णा विद्यते। शास्त्रविरोधस्य परिणाममद्य देशे विदेशे च सर्वत्र पश्यामः।

एतस्मादेतादृशी जीवनशैली स्वीकरणीया, यस्यां भौतिकताया आध्यात्मिकतायाश्च समावेशः स्यात्। धर्मशास्त्रोक्तविवाहे उभयोः सर्वथा समादरो विद्यते, अत एव प्राचीनकालेऽद्यापि विवाहोऽसौ सफलः सार्थकश्च विद्यते।

इमे गृहा मयोभुव ऊर्जस्वन्तः पयस्वन्तः।
पूर्णावामस्य तिष्ठन्तस्ते नो जानन्तु जानतः।।

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
श्रुतम् मे गोपाय

# प्राकीर्णिकी सुषमा

या तत्तद्विषयामृतोत्सवमहो सम्पादयत्यादराद्
या वैविध्यविधानबद्धविभवा सर्वं समासादयेत् ।
विद्यां तामियतीं करोति न कदाचित्सर्वसङ्ख्यावतां
प्रौढानां पुरतः प्रभाति सुषमा प्राकीर्णिकी सन्ततम् ।।

# लोकमातुस्त्रिपथगायाः स्वरूपम्

**आचार्यश्रीकुबेरनाथशुक्लः**
कुलपतिचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

एकदा गङ्गायास्तीरे श्रीरामचन्द्रो महर्षिं विश्वामित्रं पप्रच्छ— 'भगवन्! अहं ज्ञातुमिच्छामि यद् गङ्गायाः प्रभवः कथं जातः? कथं सा त्रिपथगा? कथं च सा नद-नदीपतिं गता'?

विश्वामित्र उवाच— 'राम! हिमवतो मेनकायां कन्याद्वयं जातम्, यद् भुवि रूपेणाप्रतिममासीत्। ज्येष्ठायाः कन्याया नाम गङ्गाऽऽसीत्कनिष्ठायाश्चोमा। देवा देवकार्यचिकीर्षया हिमवन्तं त्रिपथगां लोकपावनीं गङ्गां वरयामासुः। हिमवांश्च धर्मेण तनयां लोकहितकाम्यया सहर्षं ददौ। ततो देवास्तामादाय कृतार्था देवलोकं गताः'[१]।

## गङ्गायां देवानां सेनापतिः समुत्पन्नः

देवासुरसङ्ग्रामे देवानां विजयो यथा भवेदेतदर्थं देवानां सेनापतिरपेक्षितो यो हि लोकोत्तरपराक्रमेण, शौर्येण, कौशलेन चासुराञ्जेतुं समर्थो भवेत्। भगवतः शङ्करस्य देव्यां पार्वत्यां समुत्पन्नः सुत एवैतत्कार्यं कर्तुं शक्नोतीति देवानां मतम्। कथञ्चैतत् सिद्ध्येदिति देवानां महती समस्याऽऽसीत्। ब्रह्मप्रभृति-देवानां प्रार्थनया शङ्करो भगवान् स्वीकृतिं ददौ। कालातिक्रमं विलोक्य देवा भृशं चिन्तिता भगवन्तं शङ्करमार्तभावेन न्यवेदयन्। भगवता देवकार्यं कृतं परन्तु शाङ्करं तेजो धारयितुं कोऽपि समर्थो नासीत्। अन्ते चेयमाकाशगङ्गा देवानां सेनापतिं जनयिष्यतीति विभाव्य देवाः पुत्रार्थमग्निदेवं नियोजयामासुः। पावको गङ्गामभ्येत्य देवि! देवकार्याय गर्भं धारयेत्युवाच। गङ्गायां समुत्सृष्टं तत्तेजो गर्भरूपेण परिणतम्; परन्तु गङ्गादेव्यपि तदुद्धृतमसह्यं तेजो धारयितुमशक्ताऽभवदिति हैमवते पादेऽसौ गर्भः

१. वाल्मीकिरामायणे, बालकाण्डे, पञ्चत्रिंशे सर्गे।

सन्निवेशितः। स च कालान्तरे कृत्तिकाभिः स्तन्यपानेन संवर्धितः कार्तिकेयरूपेण देवानां सेनापतिर्जगति प्रथितः[१]।

**गङ्गावतरणभूमिका**

अयोध्याधिपतिः शूरो धर्मात्मा सगरो नाम। तस्य द्वे भार्ये केशिनी सुमतिश्चास्ताम्। केशिन्यामसमञ्ज इति नामको राजकुमारः, सुमत्यां च षष्टि-सहस्राणि पुत्राः समुत्पेदिरे। असमञ्जस्य पुत्रोऽशुमान् महाबलो धर्मात्मा च जातः। राजा सगरोऽश्वमेधयज्ञं कर्तुं समुद्यतः। अश्वस्य रक्षणाय दृढधन्वा महारथोंऽ-शुमान्नियुक्तः। वासवो राक्षसीं तनुमास्थाय यज्ञियमश्वमपाहरत्। महाराजस्य सगरस्याज्ञयाऽश्वं मार्गमाणाः षष्टिसहस्रं सागरा वज्रसमैर्नखैः शूलैर्हलैश्च पृथिवीं बिभिदुः। ते रोषात्कृत्स्नां महीमभ्यखनन्। अन्ते च पाताले ते वासुदेवं कपिलं ददृशुः। तस्य देवस्याविदूरतश्चरन्तमश्वमपि व्यलोकयन्। प्रहर्षमतुलं प्राप्तास्ते क्रोधपर्याकुलेक्षणाः खनित्रलाङ्गलधरा नानावृक्षशिलाधरा अश्वहारिणं तिष्ठ तिष्ठेति ब्रुवन्तोऽभ्यधावन्। महात्मा कपिलोऽपि रोषाविष्टो हुङ्कारमात्रेण तान् सर्वानपि सगरात्मजान् भस्मीकृतवान्।

दुःखशोकजनकमेतं वृत्तान्तं निशम्य राजा सगरो नप्तारमंशुमन्त-मब्रवीत्— 'त्वं सर्वथा योग्योऽसि। शस्त्रास्त्रं गृहीत्वा पितॄणां गतिं जानीहि, विधेयं च कुरु'।

राज्ञाऽऽज्ञप्तोऽसौ तत्र जगाम यत्रास्य पितरो भस्मीभूता आसन्। परमार्त्तोऽसौ भृशं चुक्रोश, यज्ञियमश्वं च चरन्तं तत्र ददर्श। स जलक्रियां कर्तुकामो जलाशयं नापश्यत्। दृष्टिं प्रसार्य स मातुलं गरुडमपश्यत्। वैनतेयश्च तमाश्वास्योवाच— 'पुरुषव्याघ्र! मा शुचः। साधारणं जलं दातुं नार्हसि। इमे महात्मना कपिलेन दग्धाः। हिमवतो ज्येष्ठा सुता गङ्गा यद्यत्रागच्छेद् भस्मीकृतानेतांश्चाप्लावयेत्तदा तव पितरः स्वर्गलोकं गमिष्यन्ति। पुत्र! देवलोकाद् गङ्गामानय, गङ्गावतरणाय प्रयत्नः क्रियताम्। अश्वं गृहीत्वा गच्छ, येन तव पितामहस्य यज्ञः सम्पद्येत। अंशुमानश्वं गृहीत्वा पितामहस्य यज्ञवाटं गतः सर्वं च यथावृत्तं न्यवेदयत्'।

अंशुमतो घोरसङ्काशं वाक्यं श्रुत्वा राजा सगरो यज्ञं निर्वर्तयामास स्वपुरं च जगाम। गङ्गायाश्चागमे निश्चयं कर्तुमसमर्थश्चिन्तितश्च दिवं गतः[२]।

---

१. वाल्मीकिरामायणे, बालकाण्डे, सप्तत्रिंशे सर्गे।

२. तत्रैव, एकचत्वारिंशे सर्गे।

## भगीरथवरप्रदानम्

नृपे सगरे कालधर्मं गते राजकुमारोंऽशुमान् राज्येऽभिषिक्तः। तस्य पुत्रो दिलीपो लोके विश्रुत आसीत्। राजांऽशुमान् पुत्रे दिलीपे राज्यं समावेश्य गङ्गावतरणाय द्वात्रिंशद्वर्षसहस्राणि नगराजे हिमालये घोरं तपस्तेपेऽन्ते च स्वर्गं लेभे। महाराजो दिलीपः पैतामहानां वधेन भृशं दुःखितो गङ्गावतरणे सफलो नाभवदन्ते च भगीरथं पुत्रं राज्येऽभिषिच्य इन्द्रलोकं गतः।

राजर्षिर्भगीरथोऽनपत्यः प्रजाकामो मन्त्रिषु राज्यमाधाय गोकर्णे गङ्गावतरणाय घोरं तपोऽतिष्ठत्। ऊर्ध्वबाहुः पञ्चतपा जितेन्द्रियो मासाहारः सहस्रं वर्षाणि दारुणं तपश्चचार। तपसा प्रीतो ब्रह्मा प्रजानां पतिर्देवैः सहागत्य तप्यमानं भगीरथमवोचत्— 'भगीरथ! राजेश्वर! तव तपसाऽहं प्रीतः, वरं ब्रूहि'। भगीरथो महाप्राज्ञः कृताञ्जलिरुवाच— 'भगवन्! यदि मे भगवान् प्रीतः, सगरस्यात्मजा मत्तः सलिलमाप्नुयुः। ते च गङ्गाजलस्पर्शात् स्वर्गं गच्छेयुः। मह्यं च सन्ततिर्देया येने-क्ष्वाकुकुलस्य वंशोच्छेदो माऽभूत्। एष मेऽस्तु वरः परः। पितामह उवाच—

'एवं भवतु, भद्रं ते इक्ष्वाकुकुलमव्ययम्।
इयं हैमवती गङ्गा ज्येष्ठा हिमवतः सुता'।।

एनां धारयितुं हरः शङ्करो......नियुज्यताम्। तां धारयितुं हरादन्यं न पश्यामि इत्युक्त्वा पितामहो देवैः सह दिवं गतः[१]।

## गङ्गावतरणम्

देवदेवे ब्रह्मणि दिवं गते भगीरथ ऊर्ध्वबाहुर्निरालम्बो वायुभक्षो निराश्रयः संवत्सरं यावदुमापतिं भगवन्तमाराधयामास। तुष्टः शङ्करो भगवान् राजानमब्रवीत्— 'नरश्रेष्ठ! प्रीतोऽहं तव प्रियं करिष्यामि। शैलराजसुतां शिरसा धारयिष्यामि'। ततो गङ्गा महद्रूपं कृत्वा दुःसहं वेगं चाधायाकाशाच्छिवशिरसि पपात। सा चाचिन्तयत्— 'मम वेगं सोढुं कोऽपि न शक्नोत्यहं शङ्करेण सह पातालं प्रवेक्ष्यामि'। शङ्करो भगवाँस्तस्या अवलेपनं ज्ञात्वा क्रुद्धस्तां तिरोभावयितुं बुद्धिं चक्रे। गङ्गा शङ्करस्य मूर्ध्नि पतिता तस्य जटामण्डलगह्वरे निरुद्धा कथमपि भूमिं गन्तुं न शेके। तत्रैव बहून् संवत्सरान् बभ्राम। भगीरथो नृपः पुनर्घोरं तपस्तेपे, येन शङ्करो भगवान् प्रीतो गङ्गां बिन्दुसरः प्रति विससर्ज। तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे।

---

१. वाल्मीकिरामायणे, बालकाण्डे, द्विचत्वारिंशे सर्गे।

ह्लादिनी, पावनी, नन्दिनीति तिस्रो धाराः प्राचीं दिशं जग्मुः। सुचक्षुः सीता सिन्धुश्चेति तिस्रो धाराः प्रतीचीं दिशम्। अलकनन्दा लोकविश्रुता सप्तमी धारा राजानं भगीरथमन्वगात्। राजा भगीरथो दिव्यं स्पन्दनमास्थितोऽग्रे प्रायात्, गङ्गा च तमनुवव्राज़।

इदमद्भुतं गङ्गावतरणं दृष्ट्वा देवाः, ऋषयः, गन्धर्वाः, सिद्धाः, साध्याश्च स्वर्लोकान्मर्त्यलोकं चकिताः समायाताः। सर्वोऽपि लोको मुदितस्तेन जलेनाभिषेकं कृत्वा विगतक्लमो बभूव। तस्मिन् समये देवाः सर्षिगणा दैत्यदानवराक्षसा गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः सर्वाश्चाप्सरसो भगीरथरथानुगा गङ्गामन्वगमन्। जलचरा मत्स्य-कच्छप-नाग-शिशुमार-नक्रप्रभृतयः सर्वेऽपि प्रीता गङ्गायां सानन्दं विचरन्तो दृष्टिपथमायाताः।

**गङ्गा जाह्नवी सञ्जाता**

यतो भगीरथो राजा ततो गङ्गा यशस्विनी। एवं गङ्गा यजमानस्य महर्षेर्जह्नोर्यज्ञवाटं संप्लावयामास। ततः क्रुद्धो महर्षिरवलेपनं ज्ञात्वा गङ्गायाः सर्वमपि जलमपिबत्। देवा महर्षयस्तपस्विनो महात्मानं जह्नुं पूजयामासुः, गङ्गां च तस्य दुहितृत्वे अनुनयन्ति स्म। ततः प्रीतो महर्षिर्गङ्गां श्रोत्राभ्यामुत्ससर्ज। तस्माद् गङ्गा जह्नुसुता जाह्नवीति चोच्यते।

गङ्गा भगीरथरथानुगाऽग्रे जगाम। अन्ते च सा सरित्प्रवरा सागरं प्राप्ता। भगीरथस्य मनोरथसिद्ध्यर्थं सा रसातलमगच्छत्। राजा भगीरथस्तत्र दीनचेतनः पितामहान् भस्मीभूतानपश्यत्। गङ्गा तं भस्मराशिं स्वीयेन दिव्येन जलेनाप्लावयामास।. फलतश्च भगीरथस्य सर्वेऽपि पितरः स्वर्गं गताः।

**सागरोद्धारः**

सागरोद्धारे सति पितामहो ब्रह्मा तत्राजगाम। राजानां चोवाच—'राजन्! त्वया सगरस्य महात्मनः पुत्राः षष्टिसहस्राणि तारितास्ते च दिवं गताः। यावत्सागरस्य जलं लोके स्थास्यति तावत्ते देववत्स्वर्गे स्थास्यन्ति। इयञ्च गङ्गा तव ज्येष्ठा सुता भागीरथीति नाम्ना लोके प्रथिता भविष्यति। इयं च गङ्गा आकाशगा, रसातलगा, भूमण्डलगा च त्रिपथगा इति नाम्नाऽपि प्रसिद्धा भविष्यति। राजन्! इदानीं सलिलक्रियां कुरु, प्रतिज्ञां च पालय। यच्च गङ्गावतरणं त्वया कृतमेतेन तव दिव्यं यशो लोके प्रसरिष्यति। स्वस्ति तेऽस्तु। अहं स्वं लोकं गमिष्यामि।

त्वमपि सलिलक्रियां कृत्वा स्वं लोकं गच्छ'। इत्युक्त्वा पितामहो देवलोकं गतः। राजा भगीरथोऽपि कृतोदकः शुचिः स्वपुरं ययौ[१]।

एवं महर्षिणा विश्वामित्रेण श्रीरामचन्द्रं प्रति गङ्गायाः सम्भवो विस्तारश्च वर्णितः।

आदिकविना महर्षिवाल्मीकिना शृङ्गवेरपुरे गङ्गाया भव्यं वर्णनं कृतम्, तदत्र पाठकानां कृते उपन्यस्यते—

तत्र त्रिपथगां दिव्यां शिवतोयामशैवलाम्।
ददर्श राघवो गङ्गां पुण्यामृषिनिषेविताम्।।
आश्रमैरविदूरस्थैः श्रीमद्भिः समलङ्कृताम्।
कालेऽप्सरोभिर्हृष्टाभिः सेविताम्भोह्रदां शिवाम्।।
देवदानवगन्धर्वैः किन्नरैरुपशोभिताम्।
नागगन्धर्वपत्नीभिः सेवितां सततं शिवाम्।।
देवाक्रीडशताकीर्णां देवोद्यानशतायुताम्।
देवार्थमाकाशगमां विख्यातां देवपद्मिनीम्।।
जलाघाताट्टहासोग्रां फेननिर्मलहासिनीम्।
क्वचिद्वेणीकृतजलां क्वचिदावर्तशोभिताम्।।
क्वचित्स्तिमितगम्भीरां क्वचिद्वेगजलाकुलाम्।
क्वचिद् गम्भीरनिर्घोषां क्वचिद्भैरवनिःस्वनाम्।।
देवसङ्घाप्लुतजलां निर्मलोत्पलशोभिताम्।
क्वचिदाभोगपुलिनां क्वचिन्निर्मलवालुकाम्।।
हंससारससङ्घुष्टां चक्रवाकोपकूजिताम्।
सदा मत्तैश्च विहगैरभिसंनादितान्तराम्।।
क्वचित्तीररुहैर्वृक्षैर्मालाभिरिव शोभिताम्।
क्वचित्फुल्लोत्पलच्छत्रां क्वचित्पद्मवनाकुलाम्।।

---

१. वाल्मीकिरामायणे, बालकाण्डे, चतुश्चत्वारिंशे सर्गे।

क्वचित्कुमुदषण्डैश्च कुड्मलैरुपशोभिताम्।
नानापुष्परजोध्वस्तां समदामिव च क्वचित्।।

व्यपेतमलसङ्घातां मणिनिर्मलदर्शनाम्।
दिशागजैर्वनगजैर्मत्तैश्च वरवारणैः।।

देवराजोपबाह्यैश्च सन्नादितवनान्तराम्।
प्रमदामिव यत्नेन भूषितां भूषणोत्तमैः।।

फलैः पुष्पैः किसलयैर्वृतां गुल्मैर्द्विजैस्तथा।
शिशुमारैश्च नक्रैश्च भुजङ्गैश्च निषेविताम्।।

विष्णुपादच्युतां दिव्यामपापां पापनाशिनीम्।
तां शङ्करजटाजूटाद् भ्रष्टां सागरतेजसा।।

समुद्रमहिषीं गङ्गां सारसक्रौञ्चनादिताम्।
आससाद महाबाहुः शृङ्गवेरपुरं प्रति[१]।।

**काशीखण्डे गङ्गामाहात्म्यम्**

स्कन्दपुराणस्य काशीखण्डोक्तरीत्या गङ्गास्वरूपविषये—गङ्गा शिवात्मिका जलरूपा भगवतः शङ्करस्य परा मूर्त्तिः। साऽनेकब्रह्माण्डानामाधारभूता परा प्रकृतिः। सा शुद्धविद्यास्वरूपा, त्रिशक्तिमयी, करुणात्मिका, आनन्दामृतरूपा, शुद्धधर्मस्वरूपिणी च। इयं जगतां धात्री, परब्रह्मस्वरूपिणी, विश्वस्य रक्षणाय शिवेन लीलया धार्यते। त्रैलोक्ये यानि तीर्थानि, यानि पुण्यक्षेत्राणि, सर्वत्र ये च धर्माः, सर्वे सदक्षिणा यज्ञाः, सर्वाणि तपांसि, साङ्गा चतुर्विधा श्रुतिः, त्रिदेवा ब्रह्मविष्णुमहेश्वराः, अन्ये देवगणाश्च, सर्वे पुरुषार्थाः, विविधाः शक्तयः, गङ्गायामिमे सर्वे सूक्ष्मरूपेण संस्थिताः सन्ति। यो गङ्गां निषेवते स सर्वतीर्थेषु स्नातः, सर्वेषु क्रतुषु दीक्षितः, चीर्णसर्वव्रतश्चास्ति। स सर्वाणि तपांसि तप्तवान्, सर्वाणि दानानि दत्तवान्, योगस्य सर्वानपि विधीन् प्राप्तवान्। गङ्गास्नायी सर्ववर्णाश्रमेभ्यः, सर्ववेदविद्भ्यः, सर्वशास्त्रार्थपारगेभ्यश्च विशिष्यते। बहुविधैर्मनोवाक्कायजैर्दोषैर्दुष्टोऽपि पुरुषो गङ्गादर्शनमात्रेण पूतो भवतीति। कृते सर्वत्र तीर्थानि, त्रेतायां पुष्करे, द्वापरे, कुरुक्षेत्रे, कलौ च केवलं गङ्गैव तीर्थम्[२]।

१. वाल्मीकिरामायणे, अयोध्याकाण्डे, पञ्चाशत्तमे सर्गे, श्लोकाः १२-२६।
२. स्कन्दपुराणे, काशीखण्डे, सप्तविंशेऽध्याये, श्लोकाः ७-१७।

गङ्गा शिवरूपा, मङ्गलमयी, विष्णुस्वरूपा, ब्रह्मरूपिणी, सर्वदेवस्वरूपिणी, भेषजमूर्त्तिः, सर्वव्याधीनां विनाशाय श्रेष्ठवैद्यरूपा, स्थास्नु-जङ्गम-सम्भूत-विषहन्त्री, संसारविषनाशिनी, जीवनरूपा, आध्यात्मिकाधिदैविकाधिभौतिक-तापत्रयहन्त्री, जीवरूपा, शान्तिपरम्परारक्षिका, शुद्धमूर्त्तिः, प्राणिमात्रसंशुद्धिकारिणी, भुक्तिमुक्ति-प्रदायिनी, कल्याणकर्त्री, भोगोपभोगदायिनी, भोगवती, मन्दाकिनी, स्वर्गदा, त्रैलोक्यभूषा, त्रिपथगा, गङ्गाद्वार-प्रयाग-गङ्गासागरस्था, क्षमावती, दक्षिणाग्नि-गार्हपत्याहवनीयाग्निसंस्था, अलकनन्दा, शिवलिङ्गधारिणी, अमृतस्रोतोरूपा, ब्रह्माण्डश्रेष्ठा, परिपूर्णा, लोकधात्री, विश्वहितकारिणी नन्दिनी (कामधेनुः), भूमिरूपा, निर्मलजला, धर्मरूपिणी, ब्रह्मदिदेवगण-मानवगण-सेविता, तारिणी, पाशजालनिकृन्तनी, भेदरहिता, शान्ता, वरिष्ठा, वरदा, कालरात्रिः, सुखभोक्त्री, सञ्जीविनी, ब्रह्मनिष्ठा, दुरितघ्नी, प्रणतार्त्तिप्रभञ्जिनी, जगन्माता, सर्वापन्निराकर्त्री, मङ्गलरूपिणी, शरणागतदीनार्त्तपरित्राणपरायणा, प्राणिमात्रदुःखहारिणी, नारायणी, निर्लिप्ता, दुर्गासुरहन्त्री, मुक्तिदायिनी चास्ति[१]। यथा विष्णोः सहस्रं नामानि सन्ति, तथैव गङ्गाया अपि सहस्रं नामानि काशीखण्डे एकोनत्रिंशेऽध्याये वर्णितानि।

**गङ्गायाः सप्त स्रोतांसि**

हिमालयस्य पादे महद्दिव्यं बिन्दुसरः प्रतिष्ठितम्। तस्मिन्नेव सरसि शङ्करो भगवान् गङ्गां विससर्ज। ततो गङ्गायाः सप्त स्रोतांसि निर्गतानि। तेषु त्रीणि नलिनी, ह्लादिनी, पावनी प्राचीं दिशं जग्मुः; सीता, चक्षुः, सिन्धुश्च प्रतीचीं दिशं गताः; सप्तमं स्रोतो भगीरथरथानुगं भूत्वा दक्षिणोदधिं प्रविष्टम्। तच्च भागीरथीति नाम्ना लोके प्रथितं बभूव। गङ्गाया इमाः सप्तधारा हिमालयं प्लावयन्ति। तत्र सीता सशैलान् कुकुरान्, रौध्रान्, बर्बरान्, यवनान्, खसान्, पुलिकान्, कुलस्थान्, अङ्गलोकान्, वरांश्च जनपदान् प्लावयित्वा हिमवन्तं च द्विधा कृत्वा दक्षिणोदधिं प्रविष्टा। वीरुमरून्, कालिकान्, शूलिकान्, तुषारान्, बर्बरान्, अङ्गान्, पारदान्, शकान् जनपदान् प्लावयित्वा चक्षुरुदधिं गता। सिन्धुश्च दरदान्, ऊर्जगुण्डान्, गान्धारान्, औरसान्, कुहून्, शिवपौरान्, इन्द्रमरून्, सैन्धवान्, उर्वसान्, वर्वान्, कुप्रश्नान्, भीमरोमकान्, शुनामुखान्, उर्मरुप्रभृतीन् देशान् निषेवते। गङ्गानदी गन्धर्वान्, किन्नरान्, यक्षान्, रक्षोगणान्, विद्याधरान्, कलापग्रामकान्, किम्पुरुषान्नरान्, किरातान्, पुलिकान्, कुरून्, भारतान्, पाञ्चालान्, कौशिकान्,

१. स्कन्दपुराणे, काशीखण्डे, सप्तविंशेऽध्याये, श्लोकाः १-१६।

मत्स्यान्, मागधान्, अङ्गान्, ब्रह्मोत्तरान्, बङ्गान्, ताम्रलिप्तान्, आर्यान् जनपदान् सेवमाना विन्ध्येन प्रतिहता दक्षिणोदधिं प्रविष्टा।

ह्लादिनी पुण्या पूर्वाभिमुखा, उपकान्, निषादान्, धीवरान्, ऋषिकान्, नीलमुखान्, केकरान्, एककर्णान्, किरातान्, कालिन्दगतिकान्, कुशिकान्, स्वर्गभौमकान् जनपदान् देशांश्च प्लावयामास।

नलिनी चापि पूर्वाभिमुखा कुपथान्, इन्द्रद्युम्नसरांसि, खरपथान्, वेत्रशङ्कुपथान्, उज्जातकमरून्, कुशप्रावरणान् प्लावयन्ती इन्द्रद्वीपसमीपे लवणोदधिं प्रविष्टा।

पावनी वेगेन प्राचीमाशां ययौ। तोमरान् प्लावयन्ती समूहकान्, हंसमार्गान्, पूर्वदेशांश्च सेवमाना गिरिं च भित्त्वा कर्णप्रावरणान् प्राप्याऽश्वमुखान् गता। मेरुं पर्वतं सिक्त्वा विद्याधरान् गत्वा सा शैमिमण्डलकोष्ठं महत्सरः प्रविष्टा[१]।

**गङ्गा ब्रह्मणा शप्ता**

इक्ष्वाकुवंशप्रभवो महाभिषश्चक्रवर्ती नृपोत्तम आसीत्। धर्मशीलोऽसौ राजा स्वर्गं जगाम। एकदाऽसौ ब्रह्मलोकं गतः। तत्र सुराः प्रजापतिं सेवितुं समाजग्मुः। गङ्गा महानदी अपि प्रजापतिं सेवितुं तत्र संस्थिता। मारुतस्य प्रचण्डवेगेन तस्या वासः समुद्धूतम्। देवा अधोमुखा नेत्रे निमील्य स्थिताः। राजा महाभिषस्तां निःशङ्कोऽपश्यत्। साऽपि तं प्रेमसंयुक्तं नृपं व्यलोकयत्। तौ प्रेमसंयुक्तौ निर्लज्जौ दृष्ट्वा ब्रह्मा कुपितः शशाप युवां मर्त्यलोकं गच्छतम्।

विमनस्कौ तौ ब्रह्मलोकान्निःसृतौ। महाभिषो हस्तिनापुरे राज्ञः प्रतीपस्य पुत्रः शन्तनुर्बभूव। एतस्मिन्समयेऽष्टौ वसवः स्त्रीसमन्विताः महर्षेर्वसिष्ठस्याश्रमं जग्मुः। तत्र नन्दिनीं गां दृष्ट्वा द्यौनामकस्य वसोर्भार्या पतिं पप्रच्छ— कस्येयं धेनुः? द्यौस्तामाह—वसिष्ठस्य महर्षेरियं धेनुः। यः कोऽपि पुरुषो नारी वा अस्या दुग्धं पिबेत्सोऽयुतायुर्जरारहितो युवा, युवतिर्वा सदा भविष्यति। स्त्रिया प्रेरितो द्यौस्तां धेनुं जहार।

महातपा वसिष्ठ आश्रममागत्य धेनुं नापश्यत्। तदाऽसौ तां मृगयामास। अनुपलब्धौ मुनिर्ध्यानेनापहर्तारमन्यांश्च वसून् शशाप, यत्ते मर्त्यलोके मानवा भवेयुरिति। शापं श्रुत्वा वसवो दुःखिता मुनिमुपचक्रमुः प्रसादयन्तश्च शरणं गताः।

---

१. मत्स्यपुराणे, विंशत्यधिकशततमेऽध्याये, पृष्ठे २८१-२८२।

दयालुर्मुनिस्तानाह— 'अनुसंवत्सरं यूयं शापान्मोक्षमवाप्स्यथ। केवलं गोरपहर्ता मानुषे लोके दीर्घकालं स्थास्यति'। ते पथि गच्छन्तो मार्गे सरिद्वरां गङ्गां ददृशुः। प्रणतास्ते तामूचुः— 'देवि! शप्ता वयं चिन्तयामः कथमस्माकं मर्त्यलोके जन्म भविष्यति? कथं च वयं मानुषीणां जठरे स्थास्यामः? तत्र भवती कृपां कृत्वाऽस्मानुद्धरतु। शन्तनोर्नृपस्य महिषी भूत्वाऽस्माकं जननी भवतु। जाताञ्चास्मान् सद्यो जले निक्षिपतु। एवं शापादस्माकं मोक्षो भविता'। तथेत्युक्ताश्च ते सर्वे स्वर्लोकं जग्मुः।

राजा प्रतीप एकदा सुतं शन्तनुमुवाच— 'पुत्र! यदि वने काऽपि चारुहासिनी सीमन्तिनी त्वामुपयाति, तां मनोरमां भजेथाः। मन्त्रियोगात्तां धर्मपत्नीं कृत्वा त्वं सुखी भविता'। एवमुक्त्वा प्रीतमानसो राजा सुतं शन्तनुं राज्येऽभिषिच्य वनं जगाम।

प्रतीपे राजनि दिवं गते शन्तनुर्मृगयाशीलो बभूव। स कदाचिद् वने घोरे गङ्गातीरे चरन् मृगशावाक्षीं सुन्दरीं चारुभूषणां ददर्श। स पितुर्वचनं सस्मार। इयं रूपयौवनसम्पन्ना सुन्दरी कदाचित् पित्रोक्तैव। राजा तां विलोक्य तृप्तिं नागमत्। साऽपि राजानं महाभिषं मत्वा प्रेमयुक्ता बभूव। किञ्चिन्मन्दस्मितं कृत्वा नृपस्याग्रे तस्थौ। राजा तां वीक्ष्य प्रीतमना मधुरैर्वाक्यैः सान्त्वयन् सुन्दरि! त्वं मे भार्या भवेत्युवाच। गङ्गा तं महाभिषं मन्यमाना पूर्वप्रेमसमायोगाद्राज्ञो वचः श्रुत्वा स्मितपूर्वमिदं वच उवाच— 'नृपश्रेष्ठ! त्वां प्रतीपतनयं शुभं जानामि। का न वाञ्छति त्वत्सदृशं पतिम्। अहं समयेन (वाग्बन्धेन) त्वां पतिं करिष्यामि।

यच्च कुर्यामहं कर्म शुभं वा यदि वाऽशुभम्।
न निषेध्या त्वया राजन्! न वक्तव्यं तथाऽप्रियम्।।

यदा च त्वं मे वचो न करिष्यसि, तदा मुक्त्वा यथेष्टं देशं गमिष्यामि'।

**गङ्गायाः शन्तनुना सह विवाहः**

तथेत्युक्ता सा नृपं पतिं चकार। नृपेण वृता गङ्गा मानुषरूपिणी नृपस्य मन्दिरं जगाम। नृपस्तां समासाद्य शुभे उपवने चिक्रीड। साऽपि भावज्ञा वराङ्गनां तं रमयामास। नृपस्तस्यामासक्तचेता गतान् वर्षान्न बुबुधे।

सा सर्वगुणसम्पन्ना सोऽपि कामविचक्षणः।
रेमाते मन्दिरे दिव्ये रमानारायणाविव।।

एवं कालगते सा गर्भं दधार वसुं पुत्रं च सुषुवे। जातमात्रं सुतं सा वारि चिक्षेप। एवं सप्त पुत्रास्तया वारि क्षिप्ताः। राजा चिन्तयामास किं करोमि? कथं मे वंशः सुरक्षितो भवेत्। अनया पापया सप्त पुत्रा हताः। इममष्टमं वंशरक्षणाय मे देहि। अहं तव पादयोः पतामि। अयं वंशस्त्वया सर्वथा रक्षणीयः। अपुत्रस्य गतिर्नास्तीति वेदविदो वदन्ति। अतोऽहं त्वां प्रार्थये। इत्युक्ताऽपि सा बालं गृहीत्वा गन्तुमुद्यता। तदा कुपितो राजा तामुवाच— 'पापिष्ठे किं करोष्यद्य। त्वं निरयादपि न बिभेषि। पापरता त्वं पापकराणां पुत्री। यथेच्छं गच्छ वा तिष्ठ। पुत्रो मे स्थीयतामिह। पापे! त्वं वंशान्तकरासि। त्वया मे किमपि कर्तव्यं नास्ति'।

नृपे एवं वदति सा शिशुं गृहीत्वा गच्छन्ती कोपादिदं वच ऊचे— 'पुत्रकामा सुतं त्वेनं वनं गता पालयामि। त्वया वचनमन्यथा कृतमतोऽहं गमिष्यामि। मां गङ्गां विजानीहि। अहं देवकार्यार्थमत्रागता आसम्। वसवो महर्षिणा वसिष्ठेन शप्ता मर्त्यलोकं समायाताः। देवि! अस्माकं जननी भवेति तैः प्रार्थिताऽहं ते पत्नी सञ्जाता। मम सम्भवो देवकार्यार्थसिद्ध्यर्थमिति जानीहि। सप्त ते वसवः पुत्रा मुक्ताः शापादृषेः। अयं तव पुत्रश्चिरं जीविष्यति। एनं वसुं देवं मत्वा सुखी भव। गङ्गादत्तमिमं पुत्रं गृहाण। अयं गाङ्गेयो महाबलो भविष्यति। अद्यैनं तत्र नयामि, यत्र त्वं मया वृतः। एनं पालयित्वा यौवनं प्राप्तं दास्यामि। मातृरहितः पुत्रो न जीवति, न च सुखी भवति' इत्युक्त्वा बालं गृहीत्वा गङ्गाऽन्तर्दधे।

दुःखार्त्तो राजा निजमन्दिरे स्थितः सर्वदा भार्याविरहजं दुःखमद्भुतं बालकञ्च चिन्तयन्नासीत्। राजा शन्तनुः काले गच्छति मृगयाङ्गतो गङ्गातीरमनुप्राप्तः। स नदीं स्तोकजलां दृष्ट्वा विस्मितः। कुमारं विशिखान् मुञ्चन्तं सरितस्तटे महाचापमाकृष्य क्रीडन्तं ददर्श। राजा तं वीक्ष्य विस्मितस्तस्याद्भुतं कर्म दृष्ट्वा बाणेषु लघुहस्ततां स्मरसन्निभमप्रतिमरूपं च वीक्ष्य कस्य पुत्रोऽसीति बालं पप्रच्छ। बालोऽसौ किञ्चिदपि नोवाच, अपि तु अन्तर्धानं गतः।

चकितो राजा समाहितो गङ्गामस्तौत्। चारुरूपा गङ्गा दर्शनं ददौ। नृपतिः पप्रच्छ— 'गङ्गे! कोऽयं बालः? क्व गतः? त्वं मामेनं दर्शय'।

गङ्गोवाच— 'अयं तव पुत्रो रक्षितश्चाष्टमो वसुः। अयं गाङ्गेयो महातपास्तव कुलस्य कीर्त्तिकरो भविष्यति। अयमखिलान् वेदान् जानाति, धनुर्वेदे च निष्ठितः। वसिष्ठस्याश्रमे दिव्ये संस्थितस्तव पुत्रः सर्वविद्याविधानज्ञः सर्वार्थकुशलः शुचिः। यद्वेद जामदग्न्योऽसौ तदयं तव पुत्रो वेत्ति। राजेन्द्र! एनं गृहाण, गच्छ सुखी भव'। एवमुक्त्वा पुत्रं नृपाय दत्त्वा गङ्गाऽन्तर्दधे।

ब्रह्मवैवर्त्तपुराणस्य प्रकृतिखण्डे दशमेऽध्याये विस्तृतं गङ्गोपाख्यानं वर्तते, तत्र सारभूतं पापघ्नं पुण्यकारणं विष्णोर्विष्णुपदीस्तोत्रमेकविंशतिश्लोकैर्वर्णितमस्ति। अस्य निबन्धस्योपसंहाररूपेण तदेवाक्षरश उपन्यस्यते। विस्तरभिया गङ्गामाहात्म्यवर्णनं न क्रियते—

शिवसङ्गीतसम्मुग्धश्रीकृष्णाङ्गद्रवोद्भवाम्।
राधाङ्गद्रवसम्भूतां तां गङ्गां प्रणमाम्यहम्।।
यज्जन्मसृष्टेरादौ च गोलोके रासमण्डले।
सन्निधाने शङ्करस्य तां गङ्गां प्रणमाम्यहम्।।
गोपैर्गोपीभिराकीर्णे शुभे राधामहोत्सवे।
कार्त्तिकीपूर्णिमाजातां तां गङ्गां प्रणमाम्यहम्।।
कोटियोजनविस्तीर्णा दैर्घ्ये दशगुणा ततः।
समावृता या गोलोकं तां गङ्गां प्रणमाम्यहम्।।
षष्टिलक्षयोजना या ततो दैर्घ्ये चतुर्गुणा।
समावृता या वैकुण्ठं तां गङ्गां प्रणमाम्यहम्।।
विंशतिलक्षयोजना या ततो दैर्घ्ये चतुर्गुणा।
आवृता ब्रह्मलोकं या तां गङ्गां प्रणमाम्यहम्।।
त्रिंशल्लक्षयोजना या दैर्घ्ये पञ्चगुणा ततः।
आवृता शिवलोकं या तां गङ्गां प्रणमाम्यहम्।।
षड्योजनविस्तीर्णा या दैर्घ्ये दशगुणा स्मृता।
मन्दाकिनी येन्द्रलोकं तां गङ्गां प्रणमाम्यहम्।।
लक्षयोजनविस्तीर्णा दैर्घ्ये सप्तगुणा ततः।
आवृता ध्रुवलोकं या तां गङ्गां प्रणमाम्यहम्।।
लक्षयोजनविस्तीर्णा दैर्घ्ये च षड्गुणा ततः।
आवृता चन्द्रलोकं या तां गङ्गां प्रणमाम्यहम्।।
षष्टिसहस्रयोजना या दैर्घ्ये दशगुणा ततः।
आवृता सूर्यलोकं या तां गङ्गां प्रणमाम्यहम्।।

लक्षयोजनविस्तीर्णा दैर्घ्ये च षड्गुणा ततः।
आवृता सत्यलोकं या तां गङ्गां प्रणमाम्यहम्।।
दशलक्षयोजना या दैर्घ्ये पञ्चगुणा ततः।
आवृता या तपोलोकं तां गङ्गां प्रणमाम्यहम्।।
सहस्रयोजना या च दैर्घ्ये सप्तगुणा ततः।
आवृता जनलोकं या तां गङ्गां प्रणमाम्यहम्।।
सहस्रयोजना या दैर्घ्ये सप्तगुणा ततः।
आवृता या च कैलासं तां गङ्गां प्रणमाम्यहम्।।
पाताले या भोगवती विस्तीर्णा दशयोजना।
ततो दशगुणा दैर्घ्ये तां गङ्गां प्रणमाम्यहम्।।
क्रोशैकमात्रविस्तीर्णा ततः क्षीणा न कुत्रचित्।
क्षितौ चालकनन्दा या तां गङ्गां प्रणमाम्यहम्।।
सत्ये या क्षीरवर्णा च त्रेतायामिन्दुसन्निभा।
द्वापरे चन्दनाभा च तां गङ्गां प्रणमाम्यहम्।।
जलप्रभा कलौ या च नान्यत्र पृथिवीतले।
स्वर्गे च नित्यं क्षीराभा तां गङ्गां प्रणमाम्यहम्।।
यस्याः प्रभावश्चातुलः पुराणे च श्रुतौ श्रुतः।
या पुण्यदा पापहर्त्री तां गङ्गां प्रणमाम्यहम्।।
यत्तोयकणिकास्पर्शः पापिनाञ्च पितामह।
ब्रह्महत्यादिकं पापं कोटिजन्मार्जितं दहेत्।।

इत्यलमतिविस्तरेण।

# गङ्गाज्ञानमहोदधिदीधितिः

**श्रीरमापदचक्रवर्त्ती**
सरस्वतीभवनपुस्तकालये
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀ ❀ ❀

पृथ्वी जलं तेजो वायुराकाश इत्येषा पञ्चरूपात्मिका भौतिकी सृष्टिरुच्यते। तदुत्पत्तौ पृथ्वीजलयोर्मुख्यत्वमस्ति। रसतन्मात्रया जलं परिणतिमुपागतम्। एतस्मिञ्जलात्मके महाभूते सूक्ष्मता मृदुता स्निग्धता गुरुता शुक्लता शीतलता प्रभाववत्ता सन्धानवत्ता रक्षणीयता पवित्रतेति रसतत्त्वानि सर्वदा विद्यमानानि सन्ति।

भारतवर्षे जलमहाभूतस्य सर्वस्वाकारतया गङ्गैव सर्वहितकारिका, अनन्तकालाद् वैदिकानामृषीणां मनीषिणाञ्च ज्ञानमञ्जरी तदीयप्रेरणास्रोत:स्वरूपा समवर्तत।

स योऽपो ब्रह्म उपास्ते आप्नोति सर्वान् कामान्। (छान्दोग्योपनिषद्, ७।१०।२) यश्च सर्वव्यापकस्य जलस्य गुणेषु परिणामेषु च निमित्तरूपं ब्रह्म उपास्ते, स स्वाभिलषितसिद्धिमुपलभते, जले सत्त्वरजसोर्वृद्धिस्तमसश्च न्यूनता भवति। अस्मादेव कारणात्तज्जलं सततं गतिशीलं सद् भूगतवाष्पीयसूक्ष्मरूपतया व्योमचरिष्णु तथा सूक्ष्मातिसूक्ष्मरूपतया शरीरस्य तन्तुषु प्रवहत् प्राणशक्तितत्त्वमित्युच्यते।

इमामेव जलमहाभूतस्वरूपां गङ्गां वैदिकर्षयो ज्ञानमञ्जरीति मत्वा भक्त्याऽऽराध्याविषयीकृत्य तन्निष्ठब्रह्मचेतनाशक्तेरनुभूतिद्वारा ते तपस्विनस्तां मोक्षस्य हेतुरित्यमन्यन्त तथा च वैज्ञानिकास्तां कर्मधाराया: परियोजनकारणत्वेन स्वीचक्रु:। मूलतश्च पृथिवीजलयोरुभयोर्महाभूतयो: प्रत्यक्षदृश्यमानतया तदुभयं ज्ञानविज्ञानात्मकं ब्रह्मेति वेद्यम्। अस्या एव परमात्मसत्ताया मूर्तमूर्तिर्गङ्गाऽस्ति।

संसारेऽस्मिन् सर्वास्वपि नदीषु गङ्गा शीर्षस्थानं दधाति। भारतीया अनादिकालाद् गङ्गाया जलमयीं मूर्तिं भक्तेरुपासनाया ज्ञानस्य कर्मणश्च विषयीकृत्य तत्र देवीत्वमध्यारोप्य स्वकीयकल्याणकारणत्वेन प्राप्तप्रतिष्ठां मन्यन्ते।

गङ्गेयं निरवधिस्वरलहरी अनन्तप्रतिध्वनिर्महाकालसङ्गीतश्रुतिरस्ति। चेतनान्तर्जायमानाव्यक्तनादो यदा समुद्भवति, तदा प्राणानां सम्पूर्णव्योम्नि ब्राह्मज्योतिरुद्‌गच्छति। इयमेवानिर्वचनीयतरलतरकाव्यगन्धा ज्योत्स्ना देदीप्यमाननिरवच्छिन्नसुधाम्बुधारा गङ्गेति संज्ञया सङ्गीयते।

चेतनाविज्ञानानुसारं गङ्गा परा सत्ता पयस्विनी स्वर्गङ्गा देवधुनीत्युच्यते। ऋषिकल्पनया गङ्गेयं चेतनात्मिकाया भुवो नदीति कथ्यते। सेयं गङ्गा त्रिविधरूपेण दैहिकदैविकभौतिक-जाग्रत्स्वप्नसुषुप्ति-मनोबुद्ध्यहङ्कार-सत्यशिवसुन्दरादिस्वरूपा सकलधरातलेषु प्रवहति। यौगिकशब्दाभिधानेन एषा तुरीयावस्था निगद्यते। युद्धस्थले कर्तव्याकर्तव्यनिर्णये भ्रान्तमतिमर्जुनं निजोपदेशामृतपानं कारयता भगवता कृष्णेन प्रोक्तम्—'स्रोतसामस्मि जाह्नवी'ति[१]।

अनया भगवदुक्त्या स्पष्टं प्रतीयते यद् गङ्गा भगवद्रूपैव, तत्र नास्ति कश्चन भेदः। नदीषु देवतात्वारोपः ऋग्वेदे कृतो दृश्यते, यथा—

पूषा विष्णुर्हवनं मे सरस्वती अवन्तु सप्त सिन्धवः।
आपो वातः पर्वतासो वनस्पतिः शृणोति पृथिवी हवम्[२]।।

एवञ्च ऋग्वेद एव सप्तसिन्धूनुद्दिश्य आपो मातरः सप्त इत्युक्त्वा सप्तसिन्धूनां जगन्निर्मातृत्वं प्रतिपादितम्। किञ्च ऋग्वेद एव एतादृशानि पञ्चदशस्थलानि उपलभ्यन्ते, यत्र सप्तसिन्धवः, सप्तनद्यः, सप्तप्रवतः, सप्तसुवत इत्यादयः प्रयोगाः प्राप्यन्ते। आसां सप्तनदीनामभिप्रायः—

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्णया।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया[३]।।

दातुः श्रेष्ठत्वं दर्शयितुं तस्योपमा गङ्गाया उन्नतकूले जायमानेन वृक्षेण सह दीयते। यथा—

अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात्।
उरुः कक्ष्यो न गाङ्ग्यः[४]।।

शिवस्वरोदये तान्त्रिके ग्रन्थे गङ्गा इडा, यमुना पिङ्गला, सरस्वती च सुषुम्णेति निर्दिष्टा। यथा—

---

१. गीता, १०।३१; २. ऋग्वेदः, ८।५४।४।
३. तदेव, १०।७५।५; ४. तदेव, ६।४५।३१।

इडा गङ्गेति विज्ञेया पिङ्गला यमुना नदी।
मध्ये सरस्वती विद्यात् प्रयागादिसमस्तथा।। ३४७।

एवञ्च संस्कृतवाङ्मयस्य सर्वेषु ग्रन्थेषु यथाऽष्टादशपुराणेषूपपुराणेषु रामायणे स्मृतिमीमांसादर्शनेषु ज्योतिषे वेदान्ते काव्येषु कर्मकाण्डधर्मशास्त्रबौद्धधर्मादिग्रन्थेषु सर्वत्र गङ्गाया वैशिष्ट्यं महत्त्वञ्च आचार्यैर्मनीषिभिश्च भूयो वर्णितमुपलभ्यते, अतश्च भगवती गङ्गेयं वस्तुतो लोकमाता विश्वपावनी च प्रतितिष्ठति। अस्या भगवत्या सुरस्रोतस्वत्या आश्रयमालम्ब्य मानवो न केवलां भौतिकोन्नतिं प्रत्युत मानवतामप्युपकर्तुमाध्यात्मिकीमुन्नतिं च विधातुं शक्नोति।

गङ्गा भारतीयानामनादिजीवनधारया सहानुस्यूता प्रवहन्ती चिरतराद् वर्तते। समग्रभूमण्डले प्राचीनयुगे प्रायो नदीविशेषाश्रयणादेव मानवसभ्यताया विकासः समभूत्। अस्मिन्नेव क्रमे भारतस्य वैदिकसभ्यतायाः समुन्नयनं हिमालयस्य गङ्गायाश्च सन्निधानेन समभवत्। अतश्च तदीयविकासस्य स्रोतो गङ्गेति सुतरां वक्तुं शक्यते। भारतदेशे गङ्गाया अनितरसाधारणं वैशिष्ट्यं मनीषिभिर्वैज्ञानिकैरन्यैश्च तद्विद्भिः प्राक्कालादद्यावधि स्वीकृतम्। वस्तुतस्तु वेदो हिमालयो गङ्गा चेति त्रयी भारतभूमेः प्राचीनकालादद्यावधि ज्ञानविकासस्य संस्कृतेः सभ्यतायाश्च दृढतमा सर्वोत्तमा च परिचायिकाऽस्ति।

एतादृश्या भगवत्या गङ्गानद्या आश्रयमालम्ब्यानादिकालात् प्रतियुगं भारतीया मनीषिणः सुकवयो लेखका भक्ताश्च तत् स्वरूपवर्णनं स्तुतिगानं गुणाख्यानं पूजनविधिनिर्वचनमित्यादिनानाविषयकान् ग्रन्थान् प्रणिन्युः। महर्षयो मनीषिणश्च वेदोपनिषत्पुराणेषु गङ्गाया माहात्म्यं कवयश्च कवित्वप्रतिभावैशिष्ट्येन पुराणोक्तकथाख्यायिका आधारीकृत्य काव्यत्वगुणसम्पन्ना अनेका रचनाश्चक्रुः। एवञ्च भक्ता उपासकाः साधकाश्च श्रुतिस्मृतिपुराणानामाधारेण तद्भक्तिं पूजामुपासनां विधाय तद्विषयकान् ग्रन्थान् व्यरचयन्।

भारतीयश्रद्धालुमानवानां द्रढीयानयं विश्वासो यद् विष्णुपादोद्भूताया गङ्गाया माहात्म्यकीर्तनेन तदर्चनेन तद्भक्तिमयकाव्यसाधनामाध्यमेन च विष्णुपदं विष्णुलोकञ्च प्राप्तुं शक्यते।

प्रस्तुतोऽयं 'गङ्गाज्ञानमहोदधिः' इत्याख्यो ग्रन्थोऽद्यावधि न प्रकाशितो गङ्गाविषयकः पाण्डुलिपीनां विविधविषयात्मकसङ्ग्रहोऽस्ति। यश्चैकसहस्रे-स्वीयतोऽष्टादशेस्वीयपर्यन्तं भारतीयविभिन्नलिपिषु लिखितो विद्यते; परन्तु साकल्येन तत्सर्वं देवनागरीलिप्यां विलिख्य संशोध्य च मयाऽत्र प्रस्तुतम्।

अस्मिन् 'गङ्गाज्ञानमहोदधौ' द्विचत्वारिंशदुत्तरैकशतसंख्याकानां पाण्डुलिपीनां सङ्कलनं मया कृतम्। परन्तु सङ्कलनग्रन्थेषु ये ग्रन्था: सर्वाधिकमहत्त्वपूर्णास्तेषां पञ्चत्रिंशत्संख्यकानां ग्रन्थानां समावेशोऽत्र कृतोऽस्ति। सर्वेऽपि पाण्डुग्रन्था: सरस्वतीभवनपुस्तकालयात् सङ्गृहीता: सन्ति। तत: **श्रीलक्ष्मणसोमयाजिना** विरचितमेकं स्तोत्रं गङ्गाविषयकमत्र प्रस्तूयते—

## गङ्गास्तोत्रम्

विचलकलविहङ्गे विष्णुपादाम्बुसङ्गे
तटतरुरतभृङ्गे तीरचञ्चत्कुरङ्गे।
विमलतरतरङ्गे विश्वनाथाञ्चिताङ्गे
सकलकलुषभङ्गे पाहि मां देवि गङ्गे।।१।।

जनेर्दूरे धीरे जननि तव तीरे स्थिरतरं
नरं धन्ये मन्ये हिमशिखरिकन्ये सुनिपुणम्।
असौ वारं वारं जननमृतिभारं परिजहत्
स्वसंसारं सारं भवजलधिपारं हि भजति।।२।।

त्वदुत्सङ्गे गङ्गे विहरणविहङ्गे मयि मिलत्-
कृपापाङ्गे सङ्गे तव वरतरङ्गेण सति मे।
कुत: पापं तापं जनयतु समीपं परिजहत्
परं द्वीपं दीपं तम इव दुरापं व्रजति हि।।३।।

गङ्गे भृङ्गाङ्गनालीविरचितकलसङ्गीतभङ्गीविलग्न-
स्वान्तानन्दानुरूपप्रविततपुलकभ्रान्तिदाल्पाल्पभङ्गे।
अङ्गीकुर्वद्य मां त्वत्सकरुणरुचिरापाङ्गलावण्यगङ्गा-
तुङ्गोर्मिस्नापिताङ्गस्वकपरिजनसङ्घातमध्येऽन्तरङ्गम्।।४।।

अम्ब त्वामनुसन्दधेऽहमनिशं चित्तेन वाचापि ते
स्वर्भूलोकरसातलेषु विततां कीर्तिं स्तुवे पावनि।
गङ्गे तुङ्गतरङ्गसङ्गिहिमवत्पादे पदाब्जं च ते
साष्टाङ्गं प्रणमामि तारय परं मां देवि दु:खार्णवात्।।५।।

गङ्गे मङ्गलदायिभव्यचरिते रिङ्गत्तरङ्गोज्ज्वले
साङ्गो मेऽस्तु मनोरथस्त्वयि सदा स्नानेन पानेन च।
एतावत्तु वृतं मया तव पुनस्तीरे सदा सात्त्विकै-
र्वेदान्तार्थविचारतत्परतरो नेष्ये चिरं वासरान्।।६।।

गङ्गे तावकतीर एव सततं वस्तुं मनो मेऽस्ति चेद्
अस्त्वेवं ननु दिव्यमङ्गलगुणे किं तावता साधितम्।
मातुः स्तन्यमपेक्ष्य भूरिकरुणालापैः परं बालको
रोदिष्यत्यसकृद् ददाति यदि सा सार्थस्तदा तच्छ्रमः।।७।।

अम्बाद्याभिमुखीकृतासि सुचिरं जन्मान्तरेष्वर्जितैः
पुण्यैरन्यसुदुर्लभैस्तव मया प्राप्तं कटाक्षेक्षणम्।
यत्प्राप्यैव शिवः शिवोऽभवदसौ विष्णुश्च विष्णुत्ववान्
ब्रह्मा ब्रह्मपदं जगाम महिमा गङ्गे तवात्यद्भुतः।।८।।

इति जह्नुसुतां जगद्विभूषामभिनन्द्याथ समस्तदेवतास्ताः।
जनुषः फलमद्य जातमित्यालपनं चक्रुरतीव हृष्टभावाः।।९।।
तदनन्तरमेत्य तत्प्रतीरं तुलसीं संददृशुस्त्रिलोकवन्द्याम्।
स्तुतिभिः सह तत्प्रदक्षिणामुचितं प्रभुक्रमणं वितेनिरे ते।।१०।।
पठन् गङ्गाष्टकमिदं **लक्ष्मणाध्वरि**निर्मितम्।
आयुरारोग्यपुत्रार्थं विद्यासिद्धिमवाप्नुयात्।।११।।

●

# आधुनिकचर्याविमर्शः[1]

**डॉ. रामनारायणत्रिपाठी**
बी. १२३२, इन्दिरानगरम्
लखनऊ

❀ ❀ ❀

अत्र पदत्रयं वर्तते, आधुनिकपदं चर्यापदं विमर्शपदमिति। तत्र प्रथमपदं विविच्यते—'अस्मिन् काले' इति विग्रहे 'इदम्'शब्दात् सप्तम्यन्तात् कालवाचिनः स्वार्थे अधुनाप्रत्ययः स्यादित्यर्थात्मकेन 'अधुना' (५।३।१७) सूत्रेण अधुना प्रत्यये कृते तथा 'इदम इशादेशः स्यात् प्राग्दिशीये प्रत्यये', इत्यर्थवता 'इदम इश्' (५।३।३) सूत्रेण इदम इशिति शित्त्वात् सर्वादेशे अनुबन्धलोपे 'इ+अधुना' इति जाते ततो 'यस्येति चे'ति सूत्रेण प्रकृतिमात्रस्येकारस्य लोपे प्रत्ययमात्रशेषे 'अधुना' इति रूपं जातम्, इयदिति रूपवत्। केचन 'अधुना' इति सूत्रेण इदमः अश्भावो धुना च प्रत्यय इति निपातितोऽयं प्रयोग इति वदन्ति। तद्धितश्चासर्वविभक्तिरित्यनेनास्याव्ययत्वम्। अयञ्च 'आधुनिक'शब्दो वर्तमानकालभवस्य बोधकः, सन्निकृष्टार्थप्रकृतिमत्त्वात्, 'तत्र भवः', इत्यर्थे 'कालाट्ठञ्' (४।३।११) इति ठञि।

आधुनिकपदेन वर्तमानकालजातानां ग्रहणम्। साम्प्रतिकः, अधुनातनः, अर्वाचीन इति यावत्। न त्वत्र शङ्क्यं यदेष शब्दः साम्प्रतिकव्यवहारविषयो नूत्नश्च, प्राक्तनेष्वप्यस्योपलब्धित्वात्। तद्यथा पूर्वापरावरेति सूत्रस्य तत्त्वबोधिन्याम्— 'स्वाभिधेयेति। आधुनिकसङ्केतो हि संज्ञा, न तु दिक्षु साऽस्तीति। दिक्षु चिरन्तनः, कुरुषु त्वाधुनिकः सङ्केतः' इत्यत्र तु व्याख्यातृवचनमेव प्रमाणमिति। पुनश्चाग्रे— 'देवगणविशेषे विश्वशब्दस्याधुनिकसङ्केताभावात्' इति च। अस्मिन्नेव सूत्रे— असंज्ञायां किम्? 'उत्तराः कुरवः' इति प्रतीकमादाय बालमनोरमाकृताऽपि— 'पूर्वादिशब्दानां दिक्षु अनादिस्सङ्केत इति न ते संज्ञाशब्दाः। कुरुषु तूत्तरशब्दस्याधुनिकस्सङ्केत इति भवत्ययं संज्ञाशब्द इति मन्वते'

---

१. निबन्धोऽयं विदुषा लेखकेनाचार्यश्रीबदरीनाथशुक्लस्मृतिव्याख्यानमालायां सबहुमानं पठितः।

इति। वैयाकरणभूषणसारे कौण्डभट्टेनापि शक्तिनिर्णयप्रकरणे आधुनिकशब्दस्य बहुषु स्थलेषु प्रयोगो विहितः। तद्यथा— 'न बोधकारणत्वमनादिभूतं शक्तिः, आधुनिकदेवदत्तादिपदे तदभावात्, स चाधुनिके पित्रादेः, गवादौ चेश्वरस्य, न चाधुनिकदेवदत्तादौ सङ्केतज्ञानादेव' इत्यादि।

एवमाधुनिकपदस्य पूर्वशाब्दिकैर्व्यवहारे कृतेऽपि शब्दोऽयं वर्तमानकालजातमेव बोधयति, वर्तमानकालस्तु प्रारब्धापरिसमाप्तिक्रियोपलक्षितः क्रियाश्रयो वा। क्रियापरिच्छेदकः कालोऽस्ति। तथा च हरिः—

'क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका'।

यद्यपि क्रिया अतीन्द्रिया[१], तथापि अवयवशः क्रियायाः, क्रियाफलस्य चावयवशः प्रतीतिविषयद्वारा तज्जनिकायाः क्रियाया अपि प्रतीतिविषयत्वं सम्भवति। तादृशक्रियाश्रयः कालः। कालोऽपि अतीन्द्रियः, किन्तु नेत्रपक्ष्म-स्पन्दनादिद्वारा लवनिमेषत्रुट्यादिकालविशेषाणां प्रतीतिविषयत्वात्। वर्तमान-व्यवहारस्तु लघीयसि द्राघीयसि वोभयत्र दृश्यते। वर्तमानादिकालव्यवस्था तु सर्वत्रैव सापेक्षा ज्ञेया दिग्व्यवस्थावत्। सा त्वपेक्षा कारकक्रियावस्तुव्यवहारपरतन्त्रा। क्वचन कारकापेक्षया क्वचिच्च क्रियावस्तुव्यवहारादीनामपेक्षया कालादीनां व्यवस्था दृश्यते लोके शास्त्रे च। यथा ऐतिहासिका विद्वांसो मन्यन्ते—आदिकाल-मध्यकाल-आधुनिककालभेदान्, तथैषामवधिरपि तैर्निर्धार्यते।

एवमेव हिन्दीभाषाविद इतिवृत्तिज्ञा अपि—आदिकाल-मध्यकाल-आधुनिक-कालभेदान् आमनन्ति, परिभाषन्ते, अवान्तरभेदान् निरूपयन्ति, नामान्तरै-र्निर्दिशन्ति, अवधिञ्चापेक्षन्ते। पाश्चात्यास्तु चतुर्दश्याः शताब्द्याः प्रभृत्येव गृह्णन्त्याधुनिककालम्। एतदग्रे स्फुटीभविष्यति।

यद्यपि आधुनिकशब्दस्यार्थे विषयेऽवधौ च विचारकाणां मतवैविध्यं दृश्यते; किन्त्वहमत्रैषा प्रवर्तमाना शताब्दी विंश्येवेत्युपादाय विमृशामि।

## चर्यापदम्

चर् + यत् + टाप् (चर-गतिभक्षणयोः, अभ्र वभ्र, मभ्र चर-गत्यर्थाः, भ्वा. ५५६,५५७,५५८,५५९, चरतिर्भक्षणेऽपि। चर-संशये चु. १७४६) इत्यस्माद् धातोः 'गदमदचरयमश्चानुपसर्गे' (३।१।१००) सूत्रेण यत्प्रत्यये चरितुं योग्यं चर्यम्, स्त्रीत्वे टापि चर्या। इतस्ततो गमनम्, भ्रमणम्, मार्गः, व्यवहारः,

१. क्रिया नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुमिति परोक्षे लिडिति सूत्रे भाष्यम्।

रीतिः, आचरणविधिः, अभ्यासः, अनुष्ठानम्, पालनम्, प्रथा, भोजनम्, व्रततपः-संस्काराणां नियतानुष्ठानम्, इमेऽर्थाः कोशादिषु गृह्यन्ते चर्यया।

किन्त्वस्मिन्निबन्धे त्वाचरणविधिरेव गृह्यते यश्चरितचारित्रशब्दाभ्या-मभिधीयते। एष एव नैतिकताया आधारस्थली। मानवतायाः पूर्णविकासश्च, तस्मादत्र चरित्रमेवादाय विचार्यते—पुरा चरित्रस्य आधारः समष्टिं प्रति समर्पित आसीत्। समष्टिश्च सम् + अशू व्याप्तौ सङ्घाते च + क्तिन्, निष्पन्नः सम्यग्व्याप्तौ सङ्घाते समस्ततायाञ्च पर्यवस्यति, कर्तरि क्तिचा सङ्घीभूते समस्ते पदार्थे सिध्यति। सङ्घातार्थमादाय वेदान्तसारेऽज्ञानस्यानिर्वचनीयस्य त्रिगुणात्मकस्य ज्ञानविरोधिनो भावरूपस्य समष्टिव्यष्टिरूपभेदद्वयमाकलय्य ईश्वरस्य जीवस्य च स्वरूपं निरूपितम्। व्यापकमर्थमादाय ईश्वर एव समेषां समष्टिः, सर्वत्र व्याप्तत्वात्। तत्कृता सृष्टिरपि समष्टिरूपैव साऽपि व्यापिका एव। महात्मना विद्यारण्येन पञ्चदश्यां प्रोक्तम्—

समष्टिरीशः सर्वेषां स्वात्मतादात्म्यवेदनात्।
तदभावात्तदन्ये तु ज्ञायन्ते व्यष्टिसंज्ञया।।

एतावता सिध्यति यद् ईश्वर एव समष्टिः, स चाव्यक्तः, लोकव्यवहाराय तु व्यक्तस्यावश्यकता। व्यक्तरूपं तस्य शास्त्रमेव[१] यत् साक्षात्कृतपरमेश्वराणां मुनीनामृषीणां चाप्तवाक्यरूपं श्रुतिश्च। तदेव शास्त्रमीश्वरस्य व्यक्तरूपम्, तदेव च शास्त्रानुयायिनां मानवानामाचरणस्य निकषोपलः। तस्माच्छास्त्राद् विपरीतमार्गाश्रयणे व्यक्तिवादे नैसर्गिकतयौद्धत्यं समायाति। अत एव व्यष्टिवादस्य समाधानं समष्टिवादाभ्यन्तर एव कर्तव्यं न तु तस्माद् बहिः।

पुरा कल्पेऽस्मिन् भारते वर्षे शास्त्रसिद्धान्तमेवोररीकृत्य समष्टिहितसाधन-द्वारैव व्यष्टिहितसाधनाभिमानस्यौचित्यं प्राशस्त्यं युक्तत्वं वदन्ति, आचरन्ति स्म पुराविदस्तदनुयायिनो भारतीयाः। किन्तु व्यष्टिहिताभिमानो यदि समष्टिहितं विरुणद्धि तदा हानिं वितनुते, यथा व्यक्तिवादः, जातिवादः, क्षेत्रवाद इत्यादि। एते समष्टिविरोधे सति भाविहानिकारका भवन्ति परिणामे दुःखाकुर्वन्ति। तथैव समष्टिविरुद्धो राष्ट्रवादोऽप्यहितावहः।

समष्टिहितसाधनसहकृतव्यष्टिहिताभिमाने चर्या त्वेवं कार्या—यथा कश्चन ब्राह्मणो भवन्नपि मानवोऽप्यस्ति, मानवः सन्नपि ईश्वरपुत्रः 'अमृतस्य पुत्राः' (ऋ.सं.

---

१. श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते। (बाधूल-स्मृ. १।१८९, पञ्चदशी ६।७९)
श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्। एतत्त्रयोक्तधर्मो नान्यत्र कुत्रचित्।। (गौ.स्मृ. २१)

१०।१३।१) तदंशो जीवोऽप्यस्ति 'ममैवांशो जीवलोके जीवभूतः सनातनः' (गी. १५।७), तथैव तस्यैव परमेश्वरस्य सन्ततित्वात् तदंशत्वाच्च सर्वैः साकं समानताया बन्धुतायाश्च व्यवहारः सम्बन्धश्चाभूताम्, न केवलं मनुष्येषु, अपि तु प्राणिमात्रेषु जडेष्वपि च। समदृष्ट्यैव नीतावुक्तम्—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्[1]।।

कुल-ग्राम-जनपदरूपसमष्ट्यपेक्षया एक-कुल-ग्रामरूपव्यष्टित्यागो विहितोऽत्र नीतिकारेण। आत्मा तु समेषां समष्टिरूपमेव, तस्योदरे सर्वे सन्तिष्ठन्ते 'जगन्ति यस्यां सविकासमासते' (शि.व.१)। अतस्तदर्थं पृथिवीत्यागोऽप्युचितत्वं भजते। लोकेप्येवं प्रक्रियते—

आपदर्थे धनं रक्षेद् दारान् रक्षेद् धनैरपि।
आत्मानं सततं रक्षेद् दारैरपि धनैरपि[2]।।

आत्मैवाङ्गी, अन्यानि सर्वाणि तदङ्गानि। अतोऽङ्गापेक्षयाऽङ्गिन आत्मनो रक्षा विहिता।

समष्टिदृष्ट्यैव गीतोक्तिरियं सङ्गच्छते—

भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्[3]। (३।१३)

भागवतोक्तिश्चापि तामेव दर्शयति—

यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति।। (७।१४।८)

पूर्वं मया निगदितं यत् समष्टिरूपस्येश्वरस्य व्यक्तरूपं शास्त्रमेव, शास्त्रं च धर्मं करणीयत्वेन वदति विशिनष्टि च, धर्मे तु सत्यमतिशेते, तच्च चरित्रे भासते, तत्र अर्थात् चरितुं योग्ये कार्ये शास्त्रमेवाधारः। तदुक्तम्— 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' (गी. १६।२४)। अतः शास्त्रसम्बोधित-सदाचारानुष्ठानमुपास्यम्।

जनेषु व्यवहाराय प्रथमतः सदाचरणं सदाचारः शिष्टाचारो वाऽपेक्ष्यते, 'महाजनो येन गतः स पन्था'। स एवाश्रयणीयः, तस्य विधानं निगमागमेषु

---

१. अत्रात्मशब्दः परमेश्वरपरः, अन्यथा पृथिवीत्यागो नौचित्यं भजेत।
२. अत्राङ्गी समष्टिरङ्गापेक्षया; ३. अत्रात्मशब्दो जीवात्मपरः।

बहुविधं चर्चितम्, महत्तापि प्रदर्शिता, मानवतामूलकत्वञ्च व्यवस्थापितम्। तत्र सत्यस्य मुख्यस्थानम्, 'सत्ये सर्वं प्रतिष्ठितम्' तत्रैवान्येषां क्षमादीनामन्तर्भावः। तदुक्तम्—

नहि सत्यात् परो धर्मो न पापमनृतात् परम्। (महानिर्वाणे—४।७५)
सत्य ँह्येष ब्रह्म। (बृ. ४।१।१)
धर्मात् परतरं नास्ति यो वै धर्म सत्यं वै तत्। (बृ. ४।१।१४)
सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः। (मु. ३।१।६)
समूलो वा एष परिशुष्यति योऽनृतमभिवदति। (प्रश्न. ६।१)
सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्यं वाचः सत्ये प्रतिष्ठा
सत्ये सर्वं प्रतिष्ठितं तस्मात् सत्यं परमं वदन्ति। (म.ना.उ. ७९।१)
सत्यमायतनम्। (केन. ४।८, छा. ६।८।६)
ऋतस्य पन्था प्रेत। (यजु. ७।४५)
ऋतस्य पन्था न तरति दुष्कृतः। (ऋ. ९।७३।६)
सत्यं नाम—मनोवाक्कायकर्मभिः सर्वभूतहितं यथार्थमभिभाषणम्। (शा.उ.)
यद् भूतहितमत्यन्तं तत् सत्यमिति धारणा। (म.भा.)
परहितार्थं वाङ्मनसयोर्यथार्थत्वं सत्यम्।
यथार्थकथनं यच्च सर्वलोकसुखप्रदम्।
तत्सत्यमिति विज्ञेयमसत्यं तद्विपर्ययः।। (प.पु.)
सत्यं ब्रूयात् प्रियं ब्रूयात्, न ब्रूयात् सत्यमप्रियम्।। (मनु.)

सत्याचरणं मनसा वाचा कायेन त्रिधा सम्पद्यते, एतदेव दर्शितम्— 'मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम्'। असत्यप्रलपनं वाचश्छिद्रं यतः सर्वं सञ्चितं सुकृतं क्षरति तेन तेजोविहीनः सन् पुरुषः सर्वत्र पराजयते। ऐतरेये[१] समुपदिष्टम्— वाग्देव्याः स्तनद्वयमेकं सत्यमपरमनृतम्, तत्र सत्यं प्रयोक्तार मवति, अनृतं हन्ति। [२]शतपथे सत्यं तु यज्ञाग्नौ घृताभिषेकरूपं वह्न्युद्दीपनं तेन तेजोऽभिवर्धते श्रेयोऽभिजायते। अनृतञ्च समिद्धतमे यज्ञाग्नौ जलप्रक्षेपः,

---

१. वाचो वाव तौ सत्यानृते स्तनौ। अवत्येनं सत्यं नैतमनृतं हिनस्ति ए एवं वेद। (४।१)

२. यः सत्यं वदति यथा अग्निं समिद्धं तं घृतेनाभिषिञ्चेत्। एवं हैनं स उद्दीपयति तस्य भूयो भूय एव तेजो भवति, श्वः श्वः श्रेयान् भवति। अथ योऽनृतं वदति यथा अग्निं समिद्धं तमुदकेनाभिषिञ्चेत्। (२।२।२।१९)

शान्तिकरणं निर्वापणञ्च। एतस्माद्धेतोः पुरा काले सत्यं त्रातुं प्राणान् जहुः, अविषह्यं कष्टं सेहिरे। यथा— हरिश्चन्द्र-दशरथ-राम-भीष्मादयो राजानः। किं बहुना, गोस्वामिना तु रघुकुलजातानां समेषां राज्ञां सत्यपालकत्वं निरूपितम्—

रघुकुल रीति सदा चलि आई। प्राण जाहि पर वचन न जाई।।

नहि सत्यादृते किञ्चिद् राज्ञां वै सिद्धिकारकम्।
सत्ये हि राजा निरतः प्रेत्य चेह च नन्दति[१]।।

न हि केवलं सत्यं राजन्येवापेक्षितं मतं वा किन्तु ऋषिषु प्रजास्वपि—

ऋषीणामपि राजेन्द्र सत्यमेव परं धनम्।
तथा राज्ञां परं सत्यान्नान्यद् विश्वासकारणम्[२]।।

सत्यं विना राजा कथमपि प्रजासु विश्वासकारणं न भवेत्। अविश्वस्ते राज्ञि प्रजाविप्लवः स्यात्, तस्मात् सिद्धम्— 'धर्मात्मा सत्यवाक् चैव राजा रञ्जयति प्रजाः'। अस्मिन् प्रसङ्गे उपनिषत्कालिकश्वेतकेतोरुक्तिरपि ध्यातव्यैवास्ति— 'महात्मानः! न मे स्तेनो जनपदे न कदर्यो न मद्यपः' इत्यादि।

**सत्येऽत्राभिसन्धिः**

शास्त्रानुसारं तु सत्यमेव धर्मः, अनृतमधर्म इति मान्यतायामपि क्वचन सत्यं हिंसया सम्पृक्तं स्यात्तदाऽधर्मं जनयति, क्वचित्त्वनृतमहिंसां युनक्ति तदा तद् धर्ममयं जायते। यथा स्वसविधे यान्तं गां साधुपुरुषं वाऽन्वेषमाणा गोघातुका दस्यवो वा तत्रोपस्थितं पृच्छन्ति— 'क्व गतो गौः साधुपुरुषो वा'? इति प्रश्ने यथार्थं वदति तदा तस्य सत्यवचनेन हिंसा भवेत्। अतोऽत्र हिंसायुक्तं सत्यवचनमधर्म एव सिध्यति। यद्यनृतवचनेन तत्राहिंसा स्यात् तदानीमनृतवचनमेव ज्यायो धर्ममूलञ्च। न हि तत्र सत्यरक्षणाय मौनं वरम्, मौनेनापि हानिः सम्भाव्येत, यतो हि मौनं स्वीकारलक्षणमिति। अस्यामवस्थायां यदि कश्चित् सत्यवादी जडः सत्यवादिताभिमानाद् गोघातुकान् दस्यून् वा मार्गमवदिष्यत्, तदा तेऽवश्यमेव गां साधुपुरुषं वाऽहनिष्यन्। एवं हत्याभागित्वात् सत्यपि सत्यकथने तस्य नरकगमनं निश्चितमेव।

अस्मिन् विषये द्रष्टव्यस्तावन्महाभारतस्य राजधर्मानुशासनपर्वणो नवाधिकशततमोऽध्यायस्तत्र वैशद्येन विवेचित एष पन्थाः। तत्रत्याः केचन श्लोका

---

१. म.भा., शा.प. ५६।१७;	२. तत्रैव—५६।१८।

उद्ध्रियन्ते वर्णिकया—

भवेत् सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत्।
यथानृतं भवेत् सत्यं सत्यं वाप्यनृतं भवेत्।।५।।
तादृशो बध्यते बालो यत्र सत्यमनिष्ठितम्।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित्।।६।।
अप्यनार्योऽकृतप्रज्ञः पुरुषोऽप्यतिदारुणः।
सुमहत् प्राप्नुयात् पुण्यं वलाकोऽन्धवधादिह।।७।।
किमाश्चर्यं च यन्मूढो धर्मकामोऽप्यधर्मवित्।
सुमहत् प्राप्नुयात् पुण्यं गङ्गायामिव कौशिकः।।८।।

अर्थात् क्वचित् सत्यापेक्षयाऽनृतं वक्तव्यं यत्राहिंसाकारणादनृतं संत्यं भवति, तथा हिंसायोगाच्च सत्यमनृतायते। यत्र च सत्यमहिंसोपकारादिषु न पर्यवस्यति तत्र मूढः सत्यवक्ता बाध्यते। अतोऽनयोर्यथार्थज्ञ एव धर्मवेत्ता।

वास्तविकं तु प्राणिनामभ्युदयापीडनसंरक्षणेभ्य धर्मप्रवचनम्। अतो व्यापकरूपेण यतो प्राणिनमभ्युदयोऽपीडनं संरक्षणं च भवति, स एव धर्मः, तत् सत्यं वाऽनृतं वा। यद्यपि सत्यं शास्त्रविहितं किन्त्वहिंसाविरोधिसत्यम् अग्राह्यमेव। एतद्दृष्ट्यैव कथ्यते यद् हित-मित-प्रिय-सत्यभाषणमेव सत्यं न केवलं सत्यम्।

यत् सत्यं निरपराधानां संरक्षणं कर्तुमसमर्थम्, अपि तु नाशाय कल्पते, न तद् धर्मः। शब्दस्य व्युत्पत्तिर्निरुक्तिश्च धारणं रक्षणमहिंसामभ्युदयञ्च ब्रूतः।

मीमांसकशिरोमणिना भट्टपादेनापि अनर्थसंसृष्टं कर्म हिताय न प्रभवतीत्युक्तम्—

फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते।
केवलप्रीतिहेतुत्वात् तद्धर्म इति कथ्यते।।

एतावता सिध्यति तदेव कर्म प्रशस्तं यदनर्थं न सहते। भीष्मपितामहेनापि शान्तिपर्वणि कथितं यदि मौनेनापि साधुपुरुषाणां रक्षा न सम्भवति, अर्थाद् मौने काचन शङ्कोदेति, तथा तत्र वक्तव्यता आवश्यकी एव, तदानीमनृतमेवोक्त्वा सत्पुरुषा रक्षणीयाः।

येऽन्यायेन जिहीर्षन्तो धनमिच्छन्ति कस्यचित्।
तेभ्यस्तु न तदाख्येयं स धर्म इति निश्चयः।।
अकूजनेन चेन्मोक्षो नावकूजेत् कथञ्चन।
अवश्यं कूजितव्ये वा शङ्केरन् वाप्यकूजनात्।।
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितम्।।

(म.भा., शा.प., १०९।१४-१५)

अनृतशपथादपि दुष्टेभ्य आत्मानं मोचयितुं प्रयतेरन्। दुष्टेभ्यः प्रदत्तं धनमपि दातारं पीडयति।

यः पापैः सह सम्बन्धान्मुच्यते शपथादपि।
न तेभ्योऽपि धनं देयं शक्ये सति कथञ्चन।।
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत्।।

(म.भा., शा.प., १०९।१६-१७)

ममास्त्यत्रैष विमर्शो यद् यः पुरुषः शक्तो दस्युभ्यो गोघातुकेभ्य साधुपुरुषान् गाश्च त्रातुं समर्थोऽस्ति, सोऽवश्यमेव सत्यं वक्तुं सङ्कटकालेऽपि योग्यः। अर्थात् सत्यमुक्त्वा स्वसामर्थ्येन दस्यून् गोघातुकांश्च पराजित्य निहत्य वा साधुपुरुषान् गाश्च रक्षेत्।

अरुन्तुदवाक्परिहारवद् धर्मवर्जितौ अर्थकामौ त्याज्यौ तथा असुखोदर्को लोकविद्वेषयुतो गर्हितो धर्मोऽपि हेय एव स्यात्।

उपरि सत्यस्य तन्मूलकधर्मस्य परिभाषा सर्वहितकरणाय परिभाषिता, या शास्त्रानुमोदिता, यतो हि काऽप्याचारपद्धतिः शास्त्रं निराकर्तुमवहेलितुं चाशक्तैव, किन्तु सक्षोभं वक्तुं विवशामि यदाधुनिकचर्यासमर्थनपरा राष्ट्रं निरादृत्याचरणं निर्धारयितुं वाञ्छन्ति।

सम्प्रति कथयन्ति जना यद् व्यवहारे सर्वे स्वातन्त्र्यमर्हन्ति वाञ्छन्ति च, किन्तु नैतद् रोचते, स्वातन्त्र्यं न परपीडनाय साधु भवति नापि स्वानन्दप्रदायकत्वे सति परेषामहिताय शुभम्, अपि तु तदेव भद्रं यत् स्वमानन्दयत् सत् पराननुकूलयति। अतः स्वैच्छिकस्वातन्त्र्यमार्गः स्वस्मिन् (स्वकीये परस्मिन् परकीये मिथो वैकाकिनि समाजे सभायां राज्ये राष्ट्रे सर्वत्रौद्धत्यमुच्छृङ्खलत्वं वैमनस्यं वैमत्यमसहयोगित्वं वितनुते समाजं विशृङ्खलयति यदृच्छात्वं प्रसारयति। अतः स

एव व्यवहारः प्रशस्तो यः शास्त्रसम्मतो धर्मनियन्त्रितः पारम्पर्यादागतः। अनेनैव स्वस्य समाजस्य देशस्य समृद्धिर्नान्यथा। एष च व्यवहारोऽपेक्ष्यते साधारणेषु जनेषु, अधिकारिषु, नेतृशासकवर्गेषु। नेतारः शासका अधिकारिणश्च स्वाधिकारेऽधिकृताः कर्तव्यं कर्तव्यतया निर्वहन्ति, किन्तु प्रायस्ते सामान्यजनेषु जायन्ते तैरेव पाल्यन्ते तत्संस्कारैः संस्कृताश्च भवन्ति। अतः समेषामेषां मूलं जनतैव, बीजनिष्ठगुणदोषयोरेव प्रसारोऽङ्कुरादिषु वर्तत इति सार्वत्रिको नियमो विहायापवादं क्वचित्। तस्माच्चरितमपेक्षितं प्रथमं जनेष्वेव। इदानीं तु चर्या तत्रैव विघटिता तत एव विकृता सती आमूलचूडं व्याप्नोति कुष्ठवत्। तस्मात् प्रथमं जनतासुधार आवश्यकः।

स च सिध्यति सन्मार्गानयने, सन्मार्गे जनसन्दोहं नेतुं प्रबुद्धाः सुधीजना एव समर्था ये सत्ताया ऐश्वर्याच्च दूरे निवसन्ति, त एव समाजस्य सत्यतया नेतृत्वं कर्तुं शक्नुवन्ति। संसारे यादृशी यावती वा गाढान्धकारता स्यात्, किन्तु तत्र प्रकाशस्तत एव वितरेत्। एनां दृष्टिमेव समन्वेति भगवती गीता—

यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते।। (३।२१)

प्राचीनकाले समाजे ब्राह्मणाः समादृताः सम्मानिताः पूजिता आसन्, यतो हि ते आचारस्य मानदण्डं व्यवस्थापयन्। प्रदर्शितं चैतन्मनुना—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।। (२।२०)

ब्राह्मणाः खलु पुरा न केवलं वचसा शिक्षयन्ते स्म, अपि च कर्मणा, हृदयेन, आत्मना सदाचारात्, नैतिकतां, सदाशयतां, साधुवृत्तीः स्वयं निभाल्य प्रदर्श्य तत्रोन्मुखीकुर्वन्ति स्म जनान्। नैतिकत्वे द्रष्टव्यं शङ्खलिखितयोश्चरितम्। सदाशयतायां विश्वामित्रं प्रति महर्षिवसिष्ठस्य चरितम्। त्यागे लोकत्राणाय दधीचेर्देहत्यागः। प्रायश्चित्ते कुमारिलभट्टस्य, मातृभक्तौ पूज्यपादस्य, एवमेव प्राचीनाः प्राच्या महान्तो विप्राः सत्कार्यमकुर्वन् स्वयं परान् प्रैरयन्।

किन्तु दुर्भाग्यवशादुपेक्षन्तेऽधुना जनाः सिद्धान्तमममुम्, तथाऽऽत्मानमाधुनिकं मन्यमाना जनाः पृथग् एकस्य नवीनस्य समाजस्य निर्माणव्यामोहे मानवजीवनेन साकं क्रीडन्ति।

एवं प्राक्तनीं चर्यां लेशतो निरूप्येदानीमाधुनिकचर्यां दर्शयितुकामः किञ्चिद् प्रयते—आधुनिकचर्या त्वाधुनिकवादनाम्नापि ख्याता। स चाधुनिकवादो

व्यष्टिप्रधानमेव। अत्रापि समष्टिवादस्य या छाया दृश्यते, साऽपि भौतिकवादादेवागता, भौतिकवादे तु चरित्रचर्चैव नास्ति। अस्मिन् काले व्यष्टिहितहेतवे समष्टिहितं भ्राष्ट्रे भृज्जन्ति मानवाः शासकाश्च, मां किं संशयलेशः। व्यष्टिपदेन आत्मा, आत्मीयः, कुटुम्बी, कुलम्, जातिः, क्षेत्रञ्च गृह्यन्ते।

आधुनिकताया इदमपि तात्पर्यं यद् इतिहासप्रवाहे यूरोपदेशे चतुर्दश्यां शताब्द्यां मानववादनाम्ना याः प्रवृत्तयः प्रादुरभवन्, तत्फलरूपतया तत्रत्येषु दर्शन-साहित्य-राजनीत्यादिविषयेषु मनुष्यस्वरूपस्य पूर्णतया परिवर्तनं जातम्। यद् बहुविधवैज्ञानिकान्वेषणैः सबलमभूत्। यत्प्रभावाद् आधुनिकं सामाजिकचिन्तनम्, अर्थव्यवस्था, राजनीतिपद्धतयो व्यकसन्। अद्यतना मानवा आभ्यः स्थितिभ्यो जायमानाः समृद्धीर्लभन्ते। अत एव तदीया चर्चाऽपि एतत्सीमाभ्यन्तरे निर्धारिता विराजते।

अस्यायमाशयः—यन्मानवः केवलं भौतिकैस्तत्त्वैर्निर्मितं यन्त्रमिवाभाति, न हि तस्येश्वरेण, ईश्वरीयसत्तया वा सह कश्चन सम्बन्धोऽस्ति। तस्मात्तस्य जीवनस्य किञ्चित् परमं लक्ष्यं नास्ति, तद्वत् तस्याशयान्तरमपि प्रकृतिः, पृथिवी, तद्वासिनो जीवाः, सर्वे तस्य भोग्या इति। न ह्यत्र कीदृशमपि बन्धनं स्वीकर्तुमावश्यकता विद्यते। सङ्क्षेपेणेयमेवाधुनिकताया विश्वदृष्टिर्वर्तते।

अस्यामाधुनिकविश्वदृष्टौ तु मानवजीवनस्य यत् सर्वोच्चतमं लक्ष्यं पुरुषार्थ-चतुष्टयस्यान्तिमं मोक्षरूपं भगवत्प्राप्तिरूपं वा तद् दूरेऽपास्तम्। अपि चात्र पुराभिमतो जीवनादर्शोऽधुना लक्ष्यत्वेन नावशिष्यते, सम्प्रति तु भोगे सर्वं समाहितम्।

अथ च मनुष्यसमाजयोर्मध्ये यः सम्बन्धोऽपेक्ष्यते, यस्मिंश्च सम्बन्धे नैतिकतोद्भवति, तस्या निकषोपल एवापगतोऽधुना। कारणं त्वत्र साम्प्रतिकसम्बन्धः स्वार्थपरो न तु हार्दो नैष्ठिको वा।

पुराऽऽसीदीश्वरवादः, सृष्टिवादः, सृष्टिं प्रति समर्पणभाव आत्मीयव्यवहारश्च, न केवलं नॄन् प्रति तिरश्चश्च ततोऽपरान् स्थावरान् भूतानि च। अधुनातने युगे प्रचलतो मानवतावादो भौतिकवादश्च यौ प्रकामं प्रकृत्या सह भूरिशो दुर्व्यवहरतः स्म, येन ईतयो भीतयो जायन्ते, पञ्चभूतेषु विषाक्तता पर्यावरणादिदोषाः संहारकशस्त्रास्त्रसन्त्रासश्च। इतः स्वार्थपरायणता, लोलुपता, अपहारिता, लुण्ठनता, जाल्मता, सिद्धान्तहीनता, विश्वासघातता, नृशंसता, आतङ्कवादिता, शोषणता, इत्यादि सर्वम्।

**अपरथापि आधुनिकचर्या विमृश्यते**

वर्तमानयुगे जागर्ति प्रसरति चैष विचारः प्रायः सर्वत्रैव—नास्ति परमेश्वरः, तस्मान्नास्ति भयः, ईश्वरसत्ता कपोलकल्पिता, ईश्वरभक्तिर्मूर्खता, मुक्तिरपि कल्पितैव, भोजने पाने स्पृश्यास्पृश्यनियमो नास्ति, वर्णभेदः कर्मणा, न तु जन्मना, शास्त्रानङ्गीकारे न हानिः, नास्ति अवतारवादः, स्त्रीपुरुषयोः सर्वक्षेत्रेषु समत्वावधारणा, न पातिव्रत्यं न च पत्नीव्रतत्वम्, आज्ञापालनं नावश्यकम्, आदरभावोऽप्यनावश्यको महत्सु, परलोकः, पुनर्जन्म, नरकः, स्वर्गः, पापः, पुण्यमिति सर्वं कल्पितमेव, ब्राह्मणाः स्वार्थसाधनपराः, स्वार्थसाधनायैव ग्रन्थकर्तारः, सवर्णा असवर्णेष्वत्याचारविधायका एव, सर्वेषां नर-नारी-बाल-बालिकानां विचारस्वातन्त्र्यमात्मस्वातन्त्र्यं स्वच्छन्दता चेत्याद्यपेक्षितं सर्वम्, नीतिः स्वतन्त्रा न तत्र धर्माभिनिवेशः, अनृतभाषणे का हानिः, परद्रव्यापहरणे को दोषः, एवमेवानेके कुत्सितविचाराः, मानसिककुत्सितभावनाः सन्ति।

एतद्विचारवशाल्लोक्यन्ते लोके दोषा इमे—वर्णाश्रमजातिविप्लवः, परिवारकुटुम्बविप्लवः, कालुष्यमनोमालिन्यासहिष्णुतावृद्धिः, सेव्यसेवकभावे स्वस्वकीयभावे दौर्मनस्यभावः, अविश्वासनैर्घृण्यमात्सर्यादिपरितापः, तापत्रयाधिराज्यम्, ईश्वरे, धर्मे, शास्त्रेष्वविश्वासः, अकुतोभयत्वम्।

अत्रावधातव्यमिदं यद् विना धर्ममीश्वरनिष्ठाञ्च सम्प्रति भारतीया राजनीतिः सर्वत्र राज्ये राष्ट्रे व्यवहारप्रकरणे परोक्षापरोक्षस्थले चलति, पुरा तु नैवासीदीदृशी तदानीं धर्मसहकृतैव। यतो हि—यथाऽऽत्मशरीरयोर्घनिष्ठः सम्बन्धो वर्तते, तथैव नीतिधर्मयोरप्यस्ति। नीतिः शरीरस्थानीया धर्मश्चात्मस्थानीयः। सैव नीतिर्नीतिर्या धर्मं न व्यभिचरति, अपि तु रक्षति। स एव धर्मो धर्मः, यः स्वस्याधारभूतां नीतिं गोपायति। सा तु नीतिरनीतिरेव या धर्मस्वरूपमेव हन्ति, आक्रामति, च्योतयति वा, तथैव धर्मोऽप्यधर्मो यो नीतिं लोकसंरक्षणस्य विघातिकां भावयति। एतद्दृष्ट्यैवानयोर्द्वयोः समन्वयो भवेत्। अनयोर्नीतिधर्मयोः परस्परमुपकार्योपकारकभावसम्बन्धस्य तथा अन्योन्याश्रितसहजसम्बन्धस्य विस्मरणादेवास्मिन् भारते वर्षे द्वयोरहमहमिका वर्तते। वस्तुतस्तु न केवलं धर्माभिनिविष्टानां धर्म एव धर्मः, नापि नीत्यभिनिविष्टानां नीतिरेव नीतिः; अपि तु वादावुभौ न ययोरन्तः।

अतः सिद्धमेतद् यद् धर्मनिष्ठा राजनीतिरेव प्रशस्ता न तु तद्रहिता। धर्मबलेन निर्बलोऽपि बलवन्तं बाधते— 'अथोऽबलीयान् बलीयांसं समाशंसते धर्मेण, यथा राज्ञा—एवम्' (शत.ब्रा. १४।४।२।२५)। पुरातना हि राजानो मन्विक्ष्वाकुहरिश्चन्द्राम्बरीषप्रभृतयो धर्मनिष्ठराजनीतिभिः पृथिवीं पालयन्तोऽमरा बभूवुः।

चेखिद्यते मनोऽधुना यदुद्घुष्यते नेतृभिर्जनैश्च धर्मोऽन्यः नीतिश्चान्या। न हि नीतौ धर्मस्य समावेशः करणीयः, नापि धर्मे नीतेः।

एतदपि ध्येयम्— यत् प्राच्याः प्रचीना भारतीया धर्मपरा न तथा प्रतीच्याः, ते तु नीतिपराः, अतस्तदनुकरणं भारतीयानां कृते न सुखावहम्।

अपि च सम्प्रति जनेषु शासकेषु नेतृषु च धर्मस्योपेक्षा दृश्यते, नीतिमेवानुसरन्ति ते, स्वेच्छाचारितां च भजन्ते। यदृच्छाचारविहारौ, कर्मस्वातन्त्र्यञ्च न मानवधर्मस्य लक्षणम्, अपि तु पशुधर्मस्यैव। एवमेव छलकपटवञ्चनाप्रभृतय आसुरधर्मा, इति प्रदर्शितं शतपथे (२।४।२)। तस्मात् सिध्यति—आत्मस्वातन्त्र्यं विचारस्वातन्त्र्यञ्च कथमपि स्वतन्त्रताया आधारशिले न भवितुमर्हतः।

इतः परम्, नेतारो हि किमपि सम्प्रति न सिद्धान्तयन्ति न चाचरन्ति। प्रत्यहमवलोक्यत एषां दलपरिवर्तनम्, विरोधपक्षत्वेन सत्कार्येष्वपि विरोधं प्रकटयन्ति, पदलिप्सया परपक्षं समर्थयन्ते सबलीकुर्वन्ति, दलत्रोटनं भङ्गतां च रचयन्ति। विविधान् वादान् पक्षांश्चावलम्ब्य स्वस्वक्षेत्रान् निर्वाचनसमये गत्वा ललनात्मिकैः प्ररोचनायुक्तैः प्रलोभनपदैर्व्याख्यानैर्जनतामतांसि आवर्ज्य तन्मतदानद्वारा निर्वाचिता भूत्वा पदं च लब्ध्वा पुनः स्वोक्तिपालनं न कुर्वन्ति, नापि जनताकष्टं शृण्वन्ति, अपि चापिदधति द्वारम्। सहैव नीतिहीनसत्तां कुर्वन्ति तदर्थं लुभन्ति लुभ्यन्ति च। एषां प्रभावादेव जनतासु आदर्शहीनता गृहीकरोति, कार्याकार्यव्यवस्थितिर्व्यापद्यते। अधिकारिणोऽपि स्वाधिकाराधिकृतकर्तव्यपालने व्यामुह्यन्ति मिषन्ति मिथश्च। कार्यालयेषु नृत्यति उपेक्षोपदाऽकर्मण्यतासाम्राज्यदेवी। विमुखीभवति सर्वत्र स्वभारनिभालनम्।

निष्कर्षरूपेण वयं वक्तुं शक्नुमो यत् समाजस्य बुद्धिवादिनो वर्गाः स्वदायित्वात् पराङ्मुखा जाता अधुना। तदनन्तरं राजनीतिज्ञा अपि तानेवान्वसरन्। सर्वे शिक्षा-संस्कृति-लेखनव्यवसायाः क्रमशो निजपथाद् भ्रष्टाः, तथा च सम्प्रति चलचित्राणि समाचारपत्राण्यपि मानवानां निम्नतमाः प्रवृत्तीरुद्घाटयितुमुद्धर्तुं

प्रवर्तन्ते, एकं द्विकं चापवादान् विहाय किन्तु तेऽपवादा आधिक्येन अकिञ्चित्करा एव सन्ति भवन्ति। सामान्यजनास्तु प्रवृत्तयाऽनया धारयैव प्रभाविता दृश्यन्ते। कुलस्य परिवारस्य च धर्मो भङ्गतामेति यत्र बालका आचारस्य शिक्षां गृह्णन्ति। अत एवास्मात् सङ्कटात् त्रातुं निर्गन्तुं कश्चन स्पष्टमार्गो नेक्ष्यते। सम्भाव्यते, यत् कालस्य प्रभाव ईदृक् स्याद् येन सङ्कटमोचनं भवेत्, शिष्यते च तत्रैको मार्गो यत् कतिपये विद्वांसो धीमन्तो भयावहभविष्यचिन्तिताः स्वाचरणैर्वृत्तिभिश्च समाजाय पथिनिर्देशं कुर्युः। अन्ते स्तौमि महाकालेश्वरं योऽपायात्पापाद् भारतम्।

# वाल्मीकिरामायणे गुम्फिता पर्यावरणचेतना

**डॉ. बालकृष्णशर्मा**
सहायकप्राध्यापकः साहित्यविभागाध्यक्षश्च
शासकीयसंस्कृतमहाविद्यालये, ग्वालियरनगरम्
मध्यप्रदेशः

❀ ❀ ❀

प्रातिभचक्षुष्मतो भगवतो वाल्मीकेरनुभूतिसङ्कुलस्य परिणतिरूपं सुरभारती-काव्यसाहित्यादर्शभूतञ्चादिकाव्यं रामायणं सर्वासां लौकिककाव्यप्रवृत्तीनामस्ति प्रेरणास्पदम्। काव्यमिदं परवर्तिकाव्यानां काव्यकाराणाञ्चोपजीव्यतां गतं नितरां शोभमानमस्ति। अत्राशेषकाव्यवैशिष्ट्यानि सहजतया सरसतया च गुम्फितानि सन्ति। येनेदं सकलकाव्याङ्गानामाकरत्वं निर्वहति। वाल्मीकिरामायणे कथावस्तुनो ललितविन्यासो रसभावयोः सहजाभिव्यञ्जना नायकादिपात्राणामौचित्याञ्चित-चरित्रचित्रणं गुणालङ्कारादीनां काव्याङ्गानामभिरामयोजना सकलवैशिष्ट्यमौलिभूतञ्च निसर्गनटीनयनाभिरामविलासविन्यसनमिति सर्वविधकाव्यसौन्दर्याधायकतत्त्वानां सहृदयहृदयाह्लादकसन्निवेशः समुपलभ्यते। आदिकाव्यमिदं गुणगणविभूषितस्य नरोत्तमस्य रामस्यालौकिकीं गाथान्तु प्रस्तौत्येव, परञ्च मानवजीवनमूल्याधायक-विविधवैशिष्ट्यानां निबन्धनं लोकादर्शप्रदर्शनं मर्यादाभूषितजीवनचित्रणं लोक-व्यवहारनिरूपणं प्रकृतिविभाविभावनं निसर्गचेतनाज्ञापनं महाभूतमहत्ताख्यापनं भूतग्रामप्रेमप्रतिष्ठापनं सकलब्रह्माण्डसमष्टिसम्पोषणञ्चापि विदधाति। वाल्मीकि-रामायणे प्रतिष्ठितेषु वैशिष्ट्येष्वेतेषु केवलं पर्यावरणचेतनामेवाधिकृत्य चर्चा विधास्यते निबन्धेऽस्मिन्।

अस्मान् परितो यदावरणं तदेव पर्यावरणपदेन संज्ञायते। एतानि तत्त्वानि सन्ति वायुजलपृथ्वीतेजोगगनाख्यानि पञ्चमहाभूतानि वनस्पतय ओषधयो जलचरखेचरसरीसृपकीटादयो जन्तवः पालितपशव आरण्यकाः पशवोऽन्यानि च निसर्गजातानि वस्तूनि। एतेषां सर्वेषां समष्टिः पर्यावरणं कथ्यते। संस्कृतसाहित्ये वैदिककालादेव पर्यावरणं प्रति काचिदसामान्या चेतना दृश्यते। एतस्मादेव

कारणात् पर्यावरणोपादानीभूतवनस्पत्योषध्यादिषु वा नदीपर्वतादिषु वा जलवायु-प्रभृतिषु वा तत्तदभिमानिदेवानां सद्भावोऽभ्युपगतः। यथा बादरायणसायणवचनैः प्रमाणितं भवति—

'ओषध्यादिमन्त्रेष्वपि चेतना एव तत्तदभिमानिदेवतास्तेन तेन नाम्ना सम्बोध्यन्ते'[१]।

'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'[२]।

पर्यावरणचेतनाचित्रणस्य परम्परेयमृग्वेदादारभ्याधुनिककालविरचितसाहित्यं यावत्प्रसरति। महर्षिवाल्मीकिविरचितरामायणकाव्ये तु परम्पराया अस्याः पूर्णपरिपाकः प्राप्यते। अस्य काव्यस्योपक्रम एव पर्यावरणचेतनासम्पोषणपरः प्रतिभाति। कलकलनिनादिन्यास्तमसायास्तटे सुखेन विहरतोः क्रौञ्चमिथुन-योरेकस्मिन् नरक्रौञ्चे व्याधेन निहते सति क्रौञ्चीकृतार्त्तनादव्यथितहृदयस्य महर्षेर्वाल्मीकेर्मुखान्निःसृतः शोक एव श्लोकीभावं सम्प्राप्त इति रामायणकाव्योपक्रमः कामप्यलौकिकीं पर्यावरणचेतनां चित्रयति। पर्यावरणचेतनाचमत्कृतहृदयस्य भगवतो वाल्मीकेर्निषादमुद्दिश्य शापवचनमेव रामायणकाव्यबीजत्वेन स्वीक्रियते। तदीदृक्—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्[३]।।

अपि च—

समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा।
सोऽनुव्याहरणाद् भूयः शोकः श्लोकत्वमागतः[४]।।

अद्यत्वे वन्यजीवसंरक्षणविषयिका या चेतना महतायासेन शासनेन सम्प्रसार्यते, तस्याः पूर्णपरिपाको भगवतो वाल्मीकेः शापश्लोके रामायणकाव्योप-क्रमरूपे दृश्यते। एवमेवास्य रामायणमहाकाव्यस्योपसंहारोऽपि सीतादेव्या रसातलप्रवेशवर्णनव्याजेन कामप्यलोकसामान्यां पर्यावरणचेतनां प्रमाणयति। अत्र

---

१. ऋग्वेदभाष्यभूमिकायाम् (डॉ. हरिदत्तशास्त्रिणः संस्करणे), पृ. १९।
२. ब्रह्मसूत्रम्–२।१।५।
३. वाल्मीकिरामायणे, बालकाण्डे–२।१५।
४. तत्रैव, बालकाण्डे–२।४०।

माधवीं देवीं विवरं याचमाना चित्रिता सीता धराविषयिकां चेतनां सहजतया हृदयाह्लादकरूपेण च प्रस्तौति। तद्यथा—

'तथा मे माधवी देवी विवरं दातुमर्हसि'[१]।

एवं रामायणकाव्यमिदं पर्यावरणचेतनासम्पुटितमिव प्रतिभाति। काव्येऽस्मिन् समुपनिबद्धां पर्यावरणचेतनां नैकेषु वर्गेषु पृथक्कृत्य प्रस्तोतुं शक्यते।

तद्यथा— १. महाभूतमधिकृत्य गुम्फिता पर्यावरणचेतना, २. प्राणिजातमधिकृत्य गुम्फिता पर्यावरणचेतना, ३. वनस्पतिजातमोषधिजातञ्चाधिकृत्य गुम्फिता पर्यावरणचेतना, ४. निसर्गघटकजातमधिकृत्य गुम्फिता, ५. पर्यावरणचेतना, शिष्टवस्तुजातमधिकृत्य गुम्फिता पर्यावरणचेतना च। अत्र समासेनैतेषामेकैकशः सोदाहरणं विवेचनं प्रस्तूयते।

## १. महाभूतमधिकृत्य गुम्फिता पर्यावरणचेतना

निखिलनिसर्गसर्गः स्थूलरूपेण पञ्चमहाभूतात्मकोऽस्ति। पञ्चमहाभूतेषु भूमिजलवह्निवायुगगनानां गणना भवति। पर्यावरणघटकेषु पञ्चमहाभूतानामेतेषां विद्यते प्रमुखं स्थानम्। एतावता यदा पर्यावरणचेतनामधिकृत्य चिन्तनं विधीयते, तदा पञ्चमहाभूतानां प्रसङ्गः प्राथम्येनोपस्थितो भवति। वाल्मीकिरामायणविषयेऽपि तथ्यमिदं समीचीनं प्रतिभाति। रामायणीयकथावस्तुनि सीतारामयोर्वृत्तान्त आधिकारिकवृत्तरूपेण स्वीकृतोऽस्ति। 'रामः' पुत्रेष्टियज्ञप्रभावोत्पन्नोऽस्ति 'सीता' च वसुन्धरायाः 'पुत्री'रूपा वर्णिताऽस्ति। 'सीता' इत्यभिधानेऽपि 'हल्या' भूमेस्तात्पर्यं निहितमस्ति। तद्यथा वाल्मीकिरामायणे कथितमस्ति—

अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः।।<br>
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता।<br>
भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा[२]।।

वस्तुतो वाल्मीकिरामायणे 'सीता' वसुधायाः प्रतिनिधिरूपा अस्ति। यथा वीरपुरुषेण भूमिः पराक्रमेण जीयते, तथैव सीता रामेण पराक्रमेण विजिताऽस्ति। यथा वा वसुधायाः शत्रुनृपेण बलाद् हरणं क्रियते, तथैव सीता अपि रावणेन बलाद् हृता। पुनर्यथा शत्रुं विजित्य भूमिं मोचयति नृपः, तथैव रामो रावणं हत्वा सीतां मोचयति। यथा वा लोके भूमिशोधनं क्रियते तथैव रामायणे सीताया अग्निपरिशुद्धिर्वर्णिता वाल्मीकिना। एवं सम्पूर्णरामायणे सीताव्याजेन भूमिविषयिका

---

१. वाल्मीकिरामायणे, उत्तरकाण्डे सप्तनवतितमे सर्गे।

२. तत्रैव, बालकाण्डे–६६।१३-१४।

चेतना एव सम्यग्रूपेणोपनिबद्धा। अत्र सीताया उत्पत्तिर्वसुधातो वर्णिताऽस्ति। एवमेव तस्या विलयोऽपि वसुधायामेव वर्णितः काव्यसमाप्तौ। परिणामतो वक्तुं शक्यते यद् महर्षिवाल्मीकिना सीताव्याजेन रामायणे भूमिविषयिका चेतना समीचीनतया विन्यस्ता। एवमेव स्थूलरूपेणापि धरापर्वतादीनां वर्णनं कुर्वता महर्षिणा वाल्मीकिना भूमिविषयिका स्वकीया चेतना साधु व्यञ्जिता।

रामायणेऽस्मिन् हिमालयचित्रकूटादिपर्वतभागानां विभिन्नभूविभागानाञ्च यथावसरं सूक्ष्मनिरीक्षणसम्भवं वर्णनं लभ्यते, येन महर्षेर्वसुन्धराविषयिका चेतना भृशं विभ्राजते। एवमेव मातृभूमिचेतनाचमत्कृतहृदयो रामः स्वर्णमयलङ्कातो जन्मभूमिरूपिणीमयोध्यां पृथक्कृत्य तां स्वर्गादपि गरीयसीति वचनैर्विशिनष्टि। तद्यथा—

अपि स्वर्णमयी लङ्का न मे लक्ष्मण! रोचते।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।।

भूमिविषयिकया चेतनया तुल्यं रामायणे जलमधिकृत्य विशिष्टचेतना-विन्यासोऽधिगम्यते। रामायणस्य बालकाण्डे गङ्गावतरणोपाख्याने सगरपुत्राणामुद्धरणं गङ्गाजलस्पर्शेनोपनिबद्ध्य प्रकारान्तरेण महर्षिर्जलविषयिकां पर्यावरणचेतनामेव निबध्नाति। निर्मलं पवित्रञ्च जलं भवति सर्वमलापहारि प्राणदायि चेति वर्णयताऽऽदिकविना पर्यावरणचेतना सम्यग् निभालिता। एवमेव सरयूगङ्गाप्रभृतिनदीनां वर्णनावसरे सागरवर्णनावसरे सरोवरप्रपातादीनां वर्णनावसरे च वाल्मीकिर्भूयो भूयो जलतत्त्वस्य सर्गप्रवृत्तिषु महत्त्वं प्रतिपादयति। गङ्गाजलस्पर्शस्य माहात्म्यं वर्णयन्नाह मुनिवरः—

तत्रर्षिगणगन्धर्वा वसुधातलवासिनः।
भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः।।
शापात् प्रपतिता ये च गगनाद् वसुधातलम्।।
कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः।
धूतपापाः पुनस्तेन तोयेनाथ शुभान्विताः।।
पुनराकाशमाविश्य स्वाँल्लोकान् प्रतिपेदिरे[1]।।

---

१. वाल्मीकिरामायणे, बालकाण्डे-४३।२६-२९।

वस्तुतो जलं भवति पृथिव्यां जीवाय प्राणतुल्यं तत्त्वम्, अतो जलस्यालौकिकता पवित्रता पुण्यदातृता च भूयो भूयः समुपवर्णिता महर्षिणाऽऽदिकाव्येऽस्मिन् यथाप्रसङ्गम्। परिणामतः काव्येऽस्मिन् जलमधिकृत्य पर्यावरणचेतनाचित्रणस्य भूयानवसरो दृश्यते। निखिले रामायणे जलस्य दैवी महत्ता निरूपिताऽस्ति। सुलभपवित्रजलानि स्थानानि तीर्थपदवाच्यानि सन्ति। तद्यथा—

अथासाद्य तु कालिन्दीं प्रतिस्रोतः समागताम्।
तस्यास्तीर्थं प्रचरितं प्रकामं प्रेक्ष्य राघवः[1]।।

अस्माकं देशे सर्वाणि तीर्थानि पवित्रनदीजलाभिषिक्तानि सन्ति। अत्र पर्यावरणचेतनैव कारणमस्ति। गङ्गायमुनासरयूनर्मदागोदावरीशिप्राप्रभृतीनां नदीनां तटेषु स्थिता नगर्यः पवित्रजलसुलभताहेतोस्तीर्थपदवीविभूषिताः सन्ति। अनेन जलविषयिका पर्यावरणचेतनैव परिस्फुरति।

भूमिजलाभ्यामिव वायुतत्त्वमपि वाल्मीकिरामायणे पर्यावरणघटकरूपेण चित्रितं सत् तद्विषयिकां चेतनां सूचयति। रामायणस्य कथावस्तुनि वायुतत्त्वस्य प्रतिनिधिभूतोऽस्ति पवनपुत्रो हनुमान्। हनुमता विना न जीवलोकस्य सञ्चार, एतावता कलिकालेऽपि स जीवति, निवसति च पृथिव्याम्। वृत्तान्तेऽस्मिन् गूढा पर्यावरणचेतना निहिताऽस्ति। वाल्मीकिरामायणे हनुमतो जन्मवृत्तवर्णनप्रसङ्गे पवनस्यानिवार्यता जीवलोकाय सम्यग्रूपेण चित्रिता। पवनेन स्वप्रचारे संहृते त्रैलोक्यं काष्ठभूतं जातम्। तद्यथा—

वायुप्रकोपाद् भूतानि निरुच्छ्वासानि सर्वतः।
सन्धिभिर्भिद्यमानैश्च काष्ठभूतानि जज्ञिरे।।
निःस्वाध्यायवषट्कारं निष्क्रियं धर्मवर्जितम्।
वायुप्रकोपात्त्रैलोक्यं निरवस्थमिवाभवत्[2]।।

पुनरग्रे वायोर्महत्त्वं प्रतिपादयन् भूतसर्गेषु तस्यानिवार्यतां समर्थयन् मुनिराह—

अशरीरः शरीरेषु वायुश्चरति पालयन्।
शरीरं हि विना वायुं समतां याति दारुभिः।।

---

१. वाल्मीकिरामायणे, अयोध्याकाण्डे–५५।५।

२. तत्रैवोत्तरकाण्डे–३५।५१-५२।

वायुः प्राणः सुखं वायुर्वायुः सर्वमिदं जगत्।
वायुना सम्परित्यक्तं न सुखं विन्दते जगत्[१]।।

एवं वायुविषयिकां पर्यावरणचेतनां सम्यक्तया चित्रयता महर्षिणा वाल्मीकिना रामायणे पर्यावरणसङ्घटकेषु वायोर्महत्त्वं साधु प्रतिपादितम्। अनेन वर्णनेनाद्यत्वेऽपि वायुप्रदूषणप्रवृत्तिसमुन्मूलनसमस्योपरि विचाराय पवित्रवायु-परिसेवनाय तस्य संरक्षणाय च प्रेरणा प्राप्यतेऽस्माभिः।

पञ्चमहाभूतेषु गगनमपि गण्यते। इदं शब्दगुणकं कथ्यते। ध्वनिप्रदूषणेन गगनमपि प्रदूषितम्भवति। एतस्मादेव कारणाद् मेघादिगर्जनावसरे दूरदर्शनाकाशवाणीशब्दोपादाने बाधा सञ्जायते, यतो हि मेघगर्जनेन ध्वनिप्रदूषणं सञ्जायते, ध्वनिप्रदूषणे च सञ्जाते गगनमपि प्रदूषितं भवति, परिणामतः पर्यावरणचेतनायामाकाशविषयिका चेतना अपि सङ्गृह्यते। युद्धक्षेत्राकाशापेक्षया तपोवनक्षेत्राकाशश्चारुतरो भवति। रामायणे महर्षिणा वाल्मीकिना मधुरगीतजन्य-ध्वनेः प्रभावो युद्धक्षेत्रीयकर्णवधिरकरनादस्य च प्रभावः प्रचुरतया प्रदर्शितौ, द्वयोः प्रभावयोर्भेदोऽपि सम्यग्रूपेण प्रतीयते। तद्यथा लवकुशगीतमभिलक्ष्य कविराह—

अभिगीतमिदं गीतं सर्वगीतिषु कोविदौ।
आयुष्यं पुष्टिजननं सर्वश्रुतिमनोहरम्।।
ह्लादयत् सर्वगात्राणि मनांसि हृदयानि च।
श्रोत्राश्रयसुखं गेयं तद्बभौ जनसंसदि[२]।।

अपरतश्च—

तस्यास्फोटितशब्देन महता चानुनादिना।
पेतुर्विहङ्गा गगनादुच्चैश्चेदमघोषयत्[३]।।

एवं वाल्मीकिरामायणे यथाप्रसङ्गमनेकत्राकाशविषयिकां पर्यावरणचेतनां चित्रयति स भगवान् वाल्मीकिः। अनेनैव प्रकारेण काव्येऽस्मिन् तेजसा संसक्ता पर्यावरणचेतनाऽपि साधु निबद्धाऽस्ति। सूर्यरश्मीनां प्रभावो भूयो भूयो वर्णितोऽत्र। आदित्यप्रसादेनैव रामो रावणं हन्तुं शक्नोतीति प्रतिपादयन् महर्षिः पर्यावरणघटकेषु तेजसो माहात्म्यं स्पष्टं स्वीकरोति। स तेजसोऽधिपतिमभिलक्ष्य

---

१. वाल्मीकिरामायणे, उत्तरकाण्डे–३५।६०-६१।
२. तत्रैव, बालकाण्डे–४।२७-२८, ३४।
३. तत्रैव, सुन्दरकाण्डे–४२।३२।

वक्ति—

नाशयत्येष वै भूतं तमेव सृजति प्रभुः।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः[1]।।

अपि च—

देवाश्च क्रतवश्चैव क्रतूनां फलमेव च।
यानि कृत्यानि लोकेषु सर्वेषु परमप्रभुः[2]।।

इत्थं पर्यावरणसङ्घटने तेजसोऽवदानं तेन विना च पर्यावरणविघटनं सुष्ठुरीत्या सिद्ध्यति। सङ्क्षेपेणात्र पञ्चमहाभूतविषयिका पर्यावरणचेतना वाल्मीकि-रामायणीया स्थालीपुलाकन्यायेन चित्रिताऽस्ति। अद्यत्वे पर्यावरणप्रदूषणनिवारणे पर्यावरणसंरक्षणे च रामायणगतचिन्तनानामनुशीलनं महदुपयोगि च वर्तते।

## २. प्राणिजातमधिकृत्य गुम्फिता पर्यावरणचेतना

रामायणकाव्यमस्ति विविधजीवजन्तूनां हृदयाह्लादकारिवर्णनैः परिपूर्णम्। अत्र क्वचित् खगानां रुतं श्रूयते, क्वचिच्च वन्यजीवानां गर्जनम्। वाल्मीकिरामायणेऽस्मिन् भल्लूकानां घोत्कारः, व्यालानां फूत्कारः, गजानां चीत्कारः, मर्कटानां सम्प्लुतिश्चेति सर्वमेकत्र प्राप्यते। प्लवङ्गमपर्याकुलं रामायणीयं पर्यावरणमिति सर्वविदितं तथ्यम्। अत्र क्वचिद् ऋक्षतरक्षुसिंहशार्दूलवराह-मृगगवयादीनां वन्यजीवानां सूक्ष्मेक्षिकया निरीक्षणं विद्यते। अन्यत्र क्वचिन्नक्रग्राहकूर्मतिमितिमिङ्गिलशङ्खसुक्तिमण्डूकप्रभृतिजलजन्तूनां सूक्ष्मनिरीक्षण-सम्भवं वर्णनं प्राप्यते। एवमेव क्वचित् चक्रवाककारण्डवक्रौञ्चमयूरकोकिल-दात्यूहवायसहंसबलाकाप्रभृतिखगानां मञ्जुलं चित्रणं दृश्यते। पुनरन्यत्र भ्रमरेन्द्रगोपसर्पमशकप्रभृतिकृमिसरीसृपाणां सूक्ष्मनिरीक्षणपरं निबन्धनमस्ति। एभिर्वर्णनै रामायणकाव्ये भगवतो वाल्मीकेः प्राणिजातमधिकृत्य गुम्फिता पर्यावरणचेतना सहृदयचित्तं चमत्कुर्वती मानवनिसर्गयोर्नैसर्गिकसम्बन्धं प्रतिपादयति प्रमाणयति च। अत्र शताधिकपशुपक्षिणां जीवजन्तूनां वा वर्णनं विद्यते। येन कवेः प्राणिविषयिका पर्यावरणचेतना सर्वत्र प्रकटीभवति। वने सीताहरणे जाते अत्र मृगाः स्वचेष्टाभी रामं रावणकृतसीताहरणं ज्ञापयन्ति। तद्यथा—

एवमुक्ता नरेन्द्रेण ते मृगाः सहसोत्थिताः।
दक्षिणाभिमुखाः सर्वे दर्शयन्तो नभस्थलम्।।

---

१. वाल्मीकिरामायणे, युद्धकाण्डे-१०५।२२।

२. तत्रैव, युद्धकाण्डे-१०५।२४।

मैथिली ह्रियमाणा सा दिशं यामभ्यपद्यत।
तेन मार्गेण गच्छन्तो निरीक्षन्ते नराधिपम्[१]।।

अपि च—

येन मार्गं च भूमिं च निरीक्षन्ते स्म ते मृगाः।
पुनर्नदन्तो गच्छन्ति लक्ष्मणेनोपलक्षिताः।।
दर्शयन्ति क्षितिं चैव दक्षिणां च दिशं मृगाः।
साधु गच्छावहे देव दिशमेतां च नैर्ऋतीम्[२]।।

एवमेव रामायणेऽस्मिन् रावणात् सीतां मोचयितुं प्रयतमानो दृश्यते पक्षी गृध्रः। रामो वानराणां साहाय्येन सीतामन्वेष्टुं रावणं जेतुं च प्रयतमानोऽवलोक्यते। लक्ष्मणस्य सञ्जीवनाय सञ्जीवनीमानेतुं प्रयतमानो दृश्यते वानरपुङ्गवो हनुमान्।

इत्थं रामायणीयं निखिलं कथावस्तु जीवचेतनाचित्रणपरं प्रतिभाति। रामस्य वनगमनसमये चित्रिता जीवजन्तुग्रहनक्षत्रमेघमालादिशावायुचन्द्रसूर्यादीनां स्थितिर्जीवविषयिकां पर्यावरणचेतनां ग्रहनक्षत्रादिविषयिकां चेतनाञ्च रुचिरतया प्रस्तौति। तद्यथा—

व्यसृजन् कवलान् नागा गावो वत्सान् न पाययन्।
पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत[३]।।

अनेन प्रकारेण रामायणे चित्रिता प्राणिजातमधिकृत्य पर्यावरणचेतना मानवजीवने जीवजन्तूनां योगदानं प्रदर्शयन्ती लोके भूतजातं प्रति संवेदनाञ्चोद्भावयन्ती जीवजगति समन्वयं स्थापयति।

### ३. वनस्पतिजातमोषधिजातञ्चाधिकृत्य गुम्फिता चेतना

वाल्मीकिरामायणे विविधवनस्पतीनामोषधीनाञ्चानेकत्र यथाप्रसङ्गं सूक्ष्मनिरीक्षणसापेक्षं वर्णनं विद्यते। एतेषां वर्णनानामनुशीलनेन रामायणीया वनस्पतिचेतना वैशद्येन प्रकटीभवति। काव्येऽस्मिन् विविधौषधीनां लतानां पादपानां फलानां पुष्पाणां मूलानाञ्च विशदवर्णनं महर्षिवाल्मीकेर्वनस्पत्यौषधिसम्बद्धां पर्यावरणचेतनां प्रमाणयति। आदिकाव्यनाम्ना ख्यातं रामायणकाव्यमिदमश्वत्थवट-

---

१. वाल्मीकिरामायणे, अरण्यकाण्डे–६४।१७-१९।
२. तत्रैव–६४।१९-२०, २२; ३. तत्रैव, अयोध्याकाण्डे–४१।१०।

खदिरपलाशप्लक्षपारिभद्रकशमीप्रभृतिप्रदूषणनिरोधकानां वृक्षाणां वर्णनं पुनः पुनः करोति। एवमेवाङ्कोलाम्रामलककदलीजम्बूदाडिमधन्वननागवृक्षनारिकेलनीपपनसप्रियालबदरीबिल्वार्जुनमुचुकुन्दरञ्जकलकुचवरणहिन्तालप्रभृतिवृक्षाणां फलैः प्रसिद्धानामुल्लेखमनेकशः करोति।

अनेनैव प्रकारेण महर्षी रामायणकाव्ये असनकोविदारचिरिबिल्वतमालतालतिनिशतिन्दूकतिमिरतिलकधवनक्तमालनागवृक्षपर्णासपुन्नागवेत्रभव्यमधूकशाल्मलिशिंशपासरलसालसिन्दुवारप्रभृतिवृक्षाणां दारुदायिनां वर्णनं प्रस्तौति। वृक्षाणां वर्णनेन सहैवारविन्दोत्पलकदम्बकरवीरकर्णिकारकिंशुककुन्दकुमुदकुरवककेतकीचम्पकचूर्णकनीलाशोकपद्मकपाटलवकुलबन्धुजीवमल्लिकालोध्रशिरीषसप्तपर्णकाशप्रभृतिपुष्पपादपानां वर्णनं प्रस्तौति। पुष्पतरूणामुल्लेखेन सहैव लतानामतियुक्तकवानीरमालतीवञ्जुलप्रियङ्गुवासन्तीप्रभृतीनामपि निबन्धनं करोति महर्षिः। छायावृक्षाणामशोकप्रभृतीनां वर्णनेन साकं वाल्मीकिः करीरखर्जूरवेणुप्रभृतिकण्टकितवृक्षाणामपि वर्णनं करोति। सुगन्धदायिनामगुरुकर्पूरकाश्मीरचन्दनसौगन्धिकादितरूणामपि वर्णनं प्राप्यते रामायणकाव्ये।

एवमेवारिष्टेङ्गुदीकरञ्जोद्दालककुरण्टपिप्पलीप्रभृतितरूणामोषधिदायिनां समुल्लेखं करोति महर्षिवाल्मीकिः। अन्नदायिनां यवगोधूमशालिनीवारादीनामपि वर्णनं विद्यतेऽस्मिन् महाकाव्ये। इन्द्रजिता प्रयुक्ते ब्रह्मास्त्रे रामायणस्य युद्धकाण्डे हनुमता दिव्यौषधिपर्वतानयनवर्णनप्रसङ्गे महर्षिवाल्मीकिरोषधीनां माहात्म्यं प्रतिपादयति, येन रामायणीया वनस्पत्यौषधिविषयिका पर्यावरणचेतना रुचिरतया प्रकटीभवति। पुष्पफलछायादायिनां तरूणां वर्णनं कुर्वन् महर्षिः चित्रकूटवर्णनप्रसङ्गे वक्ति—

आम्रजम्ब्वसनैर्लोध्रैः प्रियालैः पनसैर्धवैः।
अङ्कोलभव्यतिनिशैर्बिल्वतिन्दुकवेणुभिः।।
काश्मर्यारिष्टवरणैर्मधूकैस्तिलकैरपि।
बदर्यामलकैर्नीपैर्वेत्रधन्वनबीजकैः।।
पुष्पवद्भिः फलोपेतैश्छायावद्भिर्मनोरमैः।
एवमादिभिराकीर्णः श्रियं पुष्यत्ययं गिरिः[१]।।

---

१. वाल्मीकिरामायणे-२।९४।८-१०।

एवमेव पञ्चवटीप्रदेशं वर्णयन् महर्षिर्विविधवृक्षलतापुष्पादीनां वर्णनं प्रस्तौति। तद्यथा—

सालैस्तालैस्तमालैश्च खर्जूरैः पनसैर्द्रुमैः।
नीवारैस्तिनिशैश्चैव पुन्नागैश्चोपशोभिताः।।
चूतैरशोकैस्तिलकैः केतकैरपि चम्पकैः।
पुष्पगुल्मलतोपेतैस्तैस्तैस्तरुभिरावृताः।।
स्यन्दनैश्चन्दनैर्नीपैः पर्णासैर्लकुचैरपि।
धवाश्वकर्णखदिरैः शमीकिंशुकपाटलैः[१]।।

एवमेव वाल्मीकिरामायणे अरण्यकाण्डस्यैकादशसर्गे[२] त्रिसप्ततितमे सर्गे[३] पञ्चसप्ततितमे सर्गे[४] च, किष्किन्धाकाण्डस्य प्रथमसर्गे[५] सप्तविंशतितमे सर्गे[६] च, युद्धकाण्डस्य चतुर्थे सर्गेऽपि[७] विविधवनस्पतीनां वर्णनं प्राप्यते।

एभिर्वर्णनैर्वाल्मीकेर्वनस्पत्योषधिविषयिका पर्यावरणचेतना साधु प्रकटीभवति। ओषध्यानयनायागते हनुमति हिमालयपर्वतस्थाः सर्वा ओषधयोऽदृश्या जाता इति वर्णयन् महर्षिरोषधीनां काञ्चिदलौकिकीं चेतनां चित्रयति। तद्यथा—

महौषध्यस्ततः सर्वास्तस्मिन् पर्वतसत्तमे।
विज्ञायार्थिनमायान्तं ततो जग्मुरदर्शनम्[८]।।

रामप्रत्यावर्तनकामनया ससैन्यपरिवारे भरते आगते भरद्वाजमुनिकृतदिव्यसत्कारप्रसङ्गे महर्षिवाल्मीकिर्बिल्वविभीतकाश्वत्थसरलतालतिलकादिवनस्पतीनां चेतनां वर्णयन्नाह—

बिल्वा मार्दङ्गिका आसन् शम्याग्राहा विभीतकाः।
अश्वत्था नर्तकाश्चासन् भरद्वाजस्य तेजसा।।
ततः सरलतालाश्च तिलकाः सतमालकाः।
प्रहृष्टास्तत्र सम्पेतुः कुब्जा भूत्वाथ वामनाः।।

---

१. वाल्मीकिरामायणे–३।१५।१६-१८;
२. तत्रैव–३।११।७४-७६।
३. तत्रैव–३।७३।३-५;
४. तत्रैव–३।७५।२३-२४।
५. तत्रैव–४।१।७६-८३;
६. तत्रैव–४।२७।१७-१९।
७. तत्रैव–६।४।७८-८१;
८. तत्रैव–६।७४।६४।

शिंशपाऽऽमलकीजम्बूर्याश्चान्याः कानने लताः।
मालतीमल्लिंकाजातिर्याश्चान्याः कानने लताः।।
प्रमदाविग्रहं कृत्वा भरद्वाजाश्रमेऽवसन्[1]।।

एवं प्रकारेण रामायणे गुम्फिता वनस्पत्योषधिविषयिका चेतना समासेन स्थालीपुलाकन्यायेन चात्र निरूपिता।

## ४. निसर्गघटकजातमधिकृत्य गुम्फिता पर्यावरणचेतना

सकलेयं स्थूला सृष्टिर्निसर्गघटकै रजनीदिवसान्धकारप्रकाशप्रातः-सन्ध्यामध्याह्नरात्रिवसन्तग्रीष्मवर्षाशरद्हेमन्तशिशिरघर्मतुषारसीकरनगरग्राममार्गाश्रम-कान्तारप्रभृतिभिः सङ्कुलिताऽस्ति। वाल्मीकिरामायणे एतेषां सृष्टिकारकाणां यथावसरं मञ्जुलनिबन्धनं कृतमस्ति। एतेषु निबन्धनेषु महर्षेर्वाल्मीकेर्निसर्गघटकजातमधिकृत्य स्फुरिता पर्यावरणचेतना प्रसारं लभते। क्वचिन्महर्षिर्वर्षावैभवमभिव्यञ्जयति, क्वचिद्धेमन्तप्रसारं निरूपयति। एकत्र स दिवसमुखवर्णनं प्रस्तौत्यन्यत्र प्रदोषकालं चित्रयति। क्वचित् शर्वरीचन्द्रयोर्वर्णनं विद्यते, क्वचिच्च दिनदिनकरयोर्वर्णनं निबद्धमस्ति। एवं प्रकारेण रामायणकाव्यमिदं निसर्गचेतनाचित्रितं शोभमानमस्ति नितराम्। किष्किन्धाकाण्डस्याष्टाविंशतितमे सर्गे निबद्धं वर्षावैभवं कवेः सूक्ष्मनिरीक्षणशक्तिं प्रमाणयत् तस्य पर्यावरणचेतनां निरूपयति। तद्यथा—

स्वनैर्घनानां प्लवगाः प्रबुद्धा विहाय निद्रां चिरसन्निरुद्धाम्।
अनेकरूपाकृतिवर्णनादा नवाम्बुधाराभिहता नदन्ति[2]।।

एवमेव निखिलोऽयं सर्गो वर्षाणां जीवन्तवर्णनं प्रस्तौति। सूर्यास्तस्य वर्णनकारिपद्यमिदं काञ्चिदसामान्यां पर्यावरणचेतनां चित्रयति। तद्यथा—

विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः[3]।।

एवं समासेन महर्षेः प्रकृतिघटकैः सम्बद्धा पर्यावरणचेतनाऽत्र प्रस्तुता।

## अवर्गीकृतवस्तुजातमधिकृत्य गुम्फिता पर्यावरणचेतना

वाल्मीकिरामायणे निबद्धेषु पर्यावरणचेतनापोषकेषु वृत्तेषु पञ्चमहा-भूतप्राणिवनस्पत्योषधिनिसर्गसम्बद्धानि वृत्तानि प्रधानानि सन्ति। एतेषां

१. वाल्मीकिरामायणे, अयोध्याकाण्डे–९१।४९-५१।
२. तत्रैव–४।२८।३८; ३. तत्रैव–३।२८।५२।

प्राचुर्येणोपनिबन्धनं कृतं महर्षिणा वाल्मीकिना। एभिः सहैवान्यान्यपि कानिचिद् वृत्तानि रामायणे विन्यस्तानि सन्ति, यैरादिकवेः पर्यावरणचेतना परिस्फुरति। यथा मणिरत्नधातूनां वर्णनं कृषिकार्यवर्णनं धान्यवर्णनं स्थापत्यवर्णनं परम्परारीतिकविसमयादीनां वर्णनं देशानां वर्णनं खाद्यवस्तूनां वर्णनं च। एतेषु वर्णनेषु कवेः सूक्ष्मेक्षिकाप्रवृत्तिः काञ्चिदसामान्यां पर्यावरणचेतनां चित्रयति।

अद्यत्वे सर्वेषु क्षेत्रेषु विकृतिः सञ्जाताऽस्ति, परिणामत एतेषां वर्णनानामस्ति महानुपयोगो लोककल्याणाय। वाल्मीकिरामायणे उपरतस्य दशरथस्य शरीरं तैलद्रौण्यां सुरक्षितं क्रियते[१]। वर्णनेऽस्मिन् पर्यावरणचेतना निगूढाऽस्ति। एवमेव दशरथजटायुरावणशवदाहप्रसङ्गेषु कवेः पर्यावरणचेतना विशदीभवति। समासेन रामायणे विन्यस्तायाः पर्यावरणचेतनाया विवेचनमेतेषु वर्ण्यविभागेषु कृतमत्र। विवेचनमिदं स्थालीपुलाकन्यायेनोपलक्षणरूपेण वा प्रस्तुतम्, एतावता विषयेऽस्मिन् गवेषणायै भूयांसि कार्याण्यवशिष्टानि सन्ति।

वस्तुतो वाल्मीकिरामायणमस्ति परमप्राचीनकाव्यम्। तस्मिन् समये मानवनिसर्गयोर्घनिष्ठसम्बन्ध आसीत्। मानवो निसर्गक्रोडे विचरन् परमानन्दानुभवं करोति स्म, प्रकृतिश्च मानवं जीवजातं वाऽऽनन्दयन्ती प्रहृष्टा आसीत्। अद्यत्वे स्थितिर्विपरीता सञ्जाताऽस्ति। येन नैकाः समस्याः प्रादुरभवन्। एतासां समस्यानां समाधानाय रामायणीया पर्यावरणचेतना साधु परिशीलनीया, जीवने च विनियोजनीयेति शम्।

●

---

१. वाल्मीकिरामायणे–२।६६।१४।

